प्राच्यभारतीग्रन्थमाला—२९
*Prācyabhāratīgranthamālā—29*

# का शि का

## सप्तमो भागः

डॉ० जयशङ्कर लाल त्रिपाठी

*Prācyabhāratīgranthamālā—29*

# KĀŚIKĀ

**(A COMMENTARY ON PĀṆINI'S GRAMMAR)**

of

VĀMANA & JAYĀDITYA

with

NYĀSA or KĀŚIKĀ-VIVARAṆAPAÑJIKĀ

of

JINENDRABUDDHI

and

PADAMAÑJARĪ

of

HARADATTA MIŚRA

with

BHĀVABODHINĪ

Hindi Exposition by Dr. JAYA SHANKAR LAL TRIPATHI

*Critically Edited by* :

**Dr. Jaya Shankar Lal Tripathi**

Vyākaraṇācārya (Goldmedallist), M. A., Ph, D., D. Litt.,

Reader

Department of Sanskrit, Faculty of Arts,
Banaras Hindu University

*Foreword by*

**Prof. Bishwanath Bhattacharya**

*Mayūrabhañja Professor & Head, Department of Sanskrit,*
*Banaras Hindu University*

Volume VII

[Adhyāya 6.1-2]

TARA BOOK AGENCY

VARANASI

1990

प्राच्यभारतीग्रन्थमाला—२९

श्रीमद्वामन-जयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# का शि का

श्रीमज्जिनेन्द्रबुद्धिविरचितया 'न्यास'परपर्यायकाशिकाविवरणपञ्जिकाख्यया

विद्वद्वरश्रीहरदत्तमिश्रविरचित-'पदमञ्जरी'-समाख्यया च व्याख्यया सहिता

डॉ० जयशङ्करलालत्रिपाठिविरचितया 'भावबोधिनी' हिन्दीव्याख्यया च विभूषिता

सम्पादको व्याख्याकारश्च

डॉ० जयशङ्कर-लाल-त्रिपाठी

व्याकरणाचार्यः ( लब्धस्वर्णपदकः ), एम० ए०, पी-एच्० डी०, डी० लिट्०

रीडर

संस्कृत-विभागः, कला-संकायः, काशी हिन्दू विश्वविद्यालयः

प्रस्तावकः

डॉ० विश्वनाथ-भट्टाचार्यः

मयूरभञ्ज प्रोफेसर, विभागाध्यक्षः, संस्कृत-विभागः, कला-संकायः

काशी हिन्दू विश्वविद्यालयः

## सप्तमो भागः

( ६.१-२ अध्यायात्मकः )

तारा बुक एजेन्सी

वाराणसी

१९९०

१९९० तमः ख्रिष्टाब्दः ]

[ २०४७ तमो वैक्रमाब्दः

## PUBLISHER'S NOTE

We have the pleasure in presenting the Seventh Volume of Kāśika with Nyāsa and Padamañjarī along with the new Hindi exposition Bhāvabodhinī by Dr. Jaya Shankar Lal Tripathi.

The learned editor of the present edition—Dr. Jaya Shankar Lal Tripathi, Reader in the Department of Sanskrit, Banaras Hindu University has taken great pains and care in editing the text and Hindi exposition. He has provided, in addition to Hindi exposition, critical notes and references which; we are sure, will render this edition more useful and valuable than all the earlier editions.

The whole work shall be completed in eleven volumes as follows :

| *Volume* | *Adhyāya/Pāda* | *to Adhyāya/Pāda* |
|---|---|---|
| I | 1/1 | 1/2 |
| II | 1/3 | 2/2 |
| III | 2/3 | 3/2 |
| IV | 3/3 | 4/1 |
| V | 4/2 | 5/1 |
| VI | 5/2 | 5/4 |
| VII | 6/1 | 6/2 |
| VIII | 6/3 | 7/1 |
| IX | 7/2 | 7/4 |
| X | 8/1 | 8/4 |
| XI | | Indices |

We hope that the present edition shall be appreciated and warmly welcomed by students and scholars alike.

‘वाग्वै पराच्यव्याकृताऽवदत्, तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते’।

—तै० सं० ६.४.७.३

तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते ॥

—भर्तृहरि. १।१३१

# FOREWORD

The present seventh volume of the Kāśikā covers the first two *Pādas* of the sixth chapter of the Aṣṭādhyāyī. I feel happy to present the volume to the world of letters and congratulate the learned editor, Dr. Jaya Shankar Lal Tripathi, my Colleague on the successful completion of nearly three-fourth of the scheme of publication of the Kāśikā along with two commentaries and his own Hindi exposition of the *vṛtti*.

In the foreword of the earlier volume, I drew the attention of the discerning scholars to the salient features of this edition and noted that flawlessly printed text, critical notes and carefully executed comprehensive Hindi rendering were the most laudable achievements of the editor. I am happy to note that Dr. Tripathi has maintained all these distinctions in the present volume as well.

One additional point, however, is noteworthy. The sixth chapter of the Aṣṭādhyāyī deals with accents and as such the Kāśikā quotes a number of vedic words and sentences by way of illustrations. Dr. Tripathi has taken pains to provide accent-marks in all these Vedic illustrations. This has been a desiderative for long. The latest editor of the Kāśikā to use accentuation, to my mind, was Prof. Aryendra Sharma. Dr. Tripathi has revived the right tradition and all Sanskritists would appreciate how painstaking in the process. On this count also, Dr. Tripathi deserves unstinted praise.

"*Ā Paritoṣād viduṣām*" has been the established norm of a scholar's assessment in India and I am sure that Sanskritists, especially those devoted to the study of Paninian Vyākaraṇa will be happy with the present volume. In the end, I would urge the learned editor to complete his ambitious scheme as early as possible.

Let Lord Viśvanātha provide him with the right *adhyavasāya*.

BISHWANATH BHATTACHARYA
*Professor and Head*
*Department of Sanskrit*

*Banaras Hindu University, Varanasi*
*3.4.1990*

'चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥'

(ऋ० १.१६४.४६)

'चत्वारि वाक्परिमिता पदानि ।' चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ॥ 'तानि विदुर्ब्राह्मणा ये मनीषिणः । मनस ईषिणो मनीषिणः । 'गुहा त्रीणि निहिता नेङ्गयन्ति ।' गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते । न निमिषन्तीत्यर्थः ॥ 'तुरीयं वाचो मनुष्या वदन्ति ।' तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः ॥

—महाभाष्ये पस्पशाह्निकम्

कथं मनीषिण एवं विदन्तित्याह—गुहेति । अज्ञानमेव गुहा तस्यामित्यर्थः । 'सुपां सुलुक्०' इति सप्तम्या लुक् । व्याकरणप्रदीपेन तु तानि प्रकाशन्ते ।

—इति प्रदीपे कैय्यटः ।

# सम्पादकीयम्

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्तो जगतो यस्माद् वन्दे तच्छक्तिमत्परम् ॥

अनवरत-तपोनिरतानामधिगत-सकलपदार्थयाथार्थ्यानां संसाधित-शब्दार्थ-सम्बन्धनित्यत्वानां परमात्मनां शाब्दिक-शिरोमणीनां पाणिन्यादीनां महत्त्वं विज्ञमात्रविदितमेव तथापि प्रसङ्गादत्र किञ्चित्प्रतिपादनं नानावश्यकमिति मत्वाऽत्र प्रस्तूयते संक्षेपेण ।

पाणिनीयं व्याकरणं विश्वस्योत्कृष्टतमं वर्तते इत्यत्र तु न कस्यापि पाश्चात्यस्य पौरस्त्यस्य वा विदुषो वैमत्यम् । परन्त्विदमपि सत्यं यन्न पाणिनिः प्रथमो भारतीयो वैयाकरणः । तेन स्वकीयाष्टाध्याय्यामनेक-प्राचीन-शाब्दिकानां प्रत्यक्षतोऽप्रत्यक्षतो वोल्लेखोऽकारि । एतत्तु प्रथमभागे भूमिकायां विस्तरेण प्रतिपादितमतस्तत एवावगन्तव्यम् ।

पाणिनिसूत्राणामतिपरिष्कृतत्वाल्लघुत्वाद्गम्भीरत्वाच्च तत्रार्थ-बोधे काठिन्यमनुभूय स्वयमेव महर्षिपाणिनिना एका वृत्तिर्निरमायि । तस्या वृत्तेर्द्वैविध्यं सिध्यति भाष्यादि-दर्शनेन । तत्रभवता भाष्यकारेणानेकत्रोभयविधव्याख्यानस्योल्लेखः स्पष्टमेव विहितः 'उभयथा चैतत्प्रतिपादितं सूत्रकारेण'' इत्यादिकं कथयता ।

दौर्भाग्यादिदानीं नोपलभ्यते सा पाणिनिवृत्तिः । ''सूत्रार्थप्रधानो ग्रन्थः वृत्तिरि''ति लक्षण-लक्षिता वृत्तिः साम्प्रतं **'काशिका'** एवोपलभ्यते वामनजयादित्याभ्यां विरचिता । तत्र किं समग्रापि उभाभ्यां सहैव सम्मिल्य प्रणीता अथवा पृथक् पृथक् लिखिता, तत्र कियानंशः केन लिखित—इत्यादिकं सर्वं प्रथमभागे एव विचारितम् ।

काशिकाकारेण स्वोद्देश्यं स्ववृत्तेर्वैशिष्ट्यञ्च स्वयमेवोल्लिखितम्—

वृत्तौ भाष्ये तथा धातुनामपारायणादिषु ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसङ्ग्रहः ॥

इष्टयुपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं 'काशिका' नाम ॥ ( काशिका-मङ्गलम् )

एवञ्चास्यां व्याकरणाध्ययनायापेक्षितं सर्वं विवरणमतिसूक्ष्मेक्षिकया प्रस्तुतम् ।

काशिकाया रहस्यावबोधने आचार्य-जिनेन्द्रबुद्धि-पादानां न्यासाख्यं विवरणं हरदत्तमिश्रपादानां पदमञ्जरी चेति व्याख्याद्वयी परमावश्यिकेति मत्वा पूर्वमेकं संस्करणं प्रकाशितमभूत् । तच्च प्रशंसनीयं सदपि न निर्दुष्टमासीदिति तु विद्वांसो जानन्त्येव । पुनश्च तस्यैव 'फोटो आफसेट' द्वारा प्रकाशनं जातम् । तत्र भूमिकायां काश्चनाशुद्धयः परिमार्जिताः । नैतावता अपेक्षितं सिद्धम् ।

किञ्च यथाऽन्येषां शास्त्रीयग्रन्थानां समालोचनात्मकानि संस्करणानि प्रकाशितानि न तथा काशिकाया इति विचिन्त्य महती पीडा मम मनस्यासीत् । यदा हैदराबादीयं आर्येन्द्रशर्मणा निर्दिष्टं प्रकाशितं काशिका-संस्करणं दृष्टिपथमायातं तदा ममापीच्छा जाता यत्कथमेकत्रैव व्याख्याद्वयीं संयोज्य संशोध्य च नवीनं संस्करणं प्रकाश्य विवश्चितां समक्षमुपनेयम् ।

अस्यां दिशि चिन्तयतो मे इयं भावना समुत्पन्ना यत् साम्प्रतं प्रायशश्छात्रा अल्पमतिका न प्रौढं व्याख्यान-मधिगन्तुं शक्ता अतो मया विशदा छात्रहितकारिणी एका हिन्दी व्याख्यापि लेखनीया । तत्रानुवादो भवतु विशिष्टं व्याख्यानं वेति चिन्तायामिदं निर्णीतं यदपेक्षितेन व्याख्यानेन सहानुवादः एव हितकारी भविष्यति छात्राणामिति विचिन्त्य **'भावबोधिनी'** नाम्नी हिन्दी-व्याख्या मया विलिख्यात्र संयोजिता । अस्यां हिन्दीव्याख्यायां प्रक्रियाक्रमायापेक्षिता प्रायः

सकलापि सामग्री विद्यते । विस्तृताऽपि क्वचित् नानपेक्षितविवेचनपरा । गूढाः विषयाः 'विमर्श' इत्यन्तर्गताः स्वतन्त्ररूपेण व्याख्याताः । एतत्तु सामान्यच्छात्राणां जिज्ञासूनाञ्चोभयेषां कृते हितकरं सेत्स्यति ।

इतः पूर्वं षड्भागाः प्रकाशिता अभूवन् । सप्तमोऽयं भागः प्रकाश्यतां नीयते । अस्मिन् भागे विचारितेषु सूत्रेषु स्वराणामेव प्रामुख्यम् । ते च स्वराः पाणिनिना स्वयमेवाधोलिखितसूत्रैः स्पष्टीकृताः :—

( १ ) **उच्चैरुदात्तः** । ( पा० सू० १।२।२९ )

"अजिति वर्त्तते । उदात्तादिशब्दाः स्वरे वर्णधर्मे लोकवेदयोः प्रसिद्धा एव त इह तद्गुणेऽचि परिभाष्यन्ते । उच्चैरुपलभ्यमानो योऽच् स उदात्तसंज्ञो भवति । उच्चैरिति च श्रुतिप्रकर्षो न गृह्यते, उच्चैर्भाषते, उच्चैः पठतीति । किन्तर्हि ? स्थानकृतमुच्चत्वं संज्ञिनो विशेषणम् । ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पाद्यन्ते । तत्र यः समाने स्थाने ऊर्ध्वभागे निष्पन्नोऽच् स उदात्तसंज्ञो भवति, यस्मिन्नुच्चार्यमाणे गात्राणामायामो=निग्रहो भवति । रुक्षता=अस्निग्धता स्वरस्य । संवृतता कण्ठविवरस्य ।" ( काशिका १।२।२९ )

( २ ) **नीचैरनुदात्तः** । ( पा० सू० १।२।३० )

"अजिति वर्तते । नीचैरुपलभ्यमानो योऽच् सोऽनुदात्तसंज्ञो भवति । समाने स्थाने नीचभागे निष्पन्नोऽच् अनुदात्तः । यस्मिन्नुच्चार्यमाणे गात्राणामन्ववसर्गो=मार्दवं भवति, स्वरस्य मृदुता स्निग्धता, कण्ठविवरस्योरुता=महत्ता ।" ( काशिका १।२।३० )

( ३ ) **समाहारः स्वरितः** । ( पा० सू० १।२।३१ )

"अजिति वर्तते । उदात्तानुदात्तस्वरसमाहारो योऽच् स स्वरितसंज्ञो भवति । सामर्थ्याच्चात्र लोकवेदयोः प्रसिद्धौ गुणावेव वर्णधर्मावुदात्तानुदात्तौ गृह्येते, नाचौ । तौ समाह्रियेते यस्मिन्नचि तस्य स्वरित इत्येषा संज्ञा विधीयते ।" ( काशिका १।२।३१ )

पूर्वोक्ते स्वरिते समाहारो निर्दिश्यते । तस्मिन् कियानंशः उदात्तस्य कियांश्चानुदात्तस्येति विवादग्रस्तम् । तत्र पाणिनेः सूत्रम्—

**"तस्यादित उदात्तमर्धह्रस्वम्"** । ( पा० सू० १।२।३२ )

"उदात्तानुदात्तस्वरसमाहारः स्वरित इत्युक्तम् । तत्र न ज्ञायते कस्मिन्नंशे उदात्तः, कस्मिन्ननुदात्तः ? कियान् वा उदात्तः, कियान् वा अनुदात्त इति । तदुभयमनेनाख्यायते । तस्य=स्वरितस्य आदावर्धह्रस्वमुदात्तम् । परिशिष्टमनुदात्तम् । अर्धह्रस्वमिति चार्धमात्रोपलक्ष्यते । ह्रस्वग्रहणमतन्त्रम् । सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेष स्वरविभागः । 'शिक्यम्'—इत्यत्रार्धमात्रादित उदात्ताऽपरार्धमात्राऽनुदात्ता, एकश्रुतिर्वा । 'कन्या' इत्यत्रार्धमात्रादित उदात्ताऽध्यर्धमात्राऽनुदात्ता । 'माणवक ३' माणवक-इत्यत्रार्धमात्राऽदित उदात्तार्धतृतीयमात्रा अनुदात्ता ।" ( काशिका १।२।३२ )

अत्रविषये सिद्धान्तकौमुदीकारो भट्टोजिदीक्षित एवं प्रतिपादयति—

"स्वरितस्यादावर्धमुदात्तं बोध्यम् । उत्तरार्धन्तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा ।" ( उक्तसूत्रे सि० कौ० )

अत्र विषये ऋग्वेदप्रातिशाख्ये एवं दृश्यते—

उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ।
आयामविश्रम्भाक्षेपैस्त उच्यन्ते ॥
अक्षराश्रयाः ।
एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्धमात्रार्धमेव वा ॥
अनुदात्तपरः शेषः स उदात्तश्रुतिः ।

न चेत् ।

उदात्तं वोच्यते किञ्चित् स्वरितं वाक्षरं परम् ।
उदात्तपूर्वं स्वरितमनुदात्तं पदेऽक्षरम् ॥
अतोऽन्यत् स्वरितं स्वारं जात्यमाचक्षते पदे । ( ऋग्वेदप्रातिशाख्यम् ३।१-८ )

स्वरविषये 'एकश्रुतिः' परमोत्कृष्टा । 'एकश्रुति दूरात् सम्बुद्धौ' ( पा० सू० १।२।३३ ) "त्रैस्वर्ये पदानां प्राप्ते दूरात् सम्बुद्धावैकश्रुत्यं भवति । एका श्रुतिर्यस्य तदिदमेकश्रुति । एकश्रुति वाक्यं भवति । दूरात् सम्बोधयति येन वाक्येन तत्सम्बोधनं सम्बुद्धिः । नैकवचनं सम्बुद्धिः । स्वराणामुदात्तादीनामविभागो=भेदतिरोधानमेकश्रुतिः ।" (काशिका १।२।३३)

स्वराणामुच्चारणमतीवदुष्करमिति विचिन्त्यैव विद्वद्भिस्तत्र तत्र पार्थक्येन ज्ञानार्थं चिह्नानि कल्पितानि । एवञ्च यस्मिन् वर्णे किमपि चिह्नं नास्ति तत्रोदात्तस्वरो बोद्धव्यः । यत्र चाधोभागे '—' इत्येवं रेखा रूपेण चिह्नितं तत्रानुदात्तो ज्ञेयः । यत्र च '⊥' इत्येवं रूपेण उपरि रेखाचिह्नं स्यात् तत्र स्वरितस्वरो ज्ञेयः । यथा—'धातोः' । ( ६।१।१६२ ) इति सूत्रे उदाहरणभूते—'गोपायति' इत्यत्र त्रयाणामपि चिह्नानां प्रयोगो दृश्यते ।

एवञ्चेदं स्पष्टं यत् स्वरज्ञानं तेषामुच्चारणञ्चातिकष्टकरम् । अत्र संस्करणे महता प्रयासेन सावधानतया च स्वरचिह्नानि संयोजितानि तथाप्यस्मदज्ञानवशान्मुद्रणदोषाच्च कुत्रचित्त्रुटयोपि विद्यन्त एव । अतोनिर्मत्सरैर्बुधैस्ताः संशोधनीयाः ।

**प्रस्तुत संस्करणस्य केचिद् विशेषाः—**

१. काशिकावृत्तौ निर्दिष्टानामुद्धरणानां तत्तन्मूलग्रन्थेभ्यः संशोधनं विधाय तेषां मूलस्थाननिर्देशपूर्वकं संयोजनम् ।

२. वैदिकोदाहरणानां स्वराङ्कनेन निर्देशः ।

३. न्यासस्य पदमञ्जर्याश्चोपलब्धयोः प्रकाशितपाठयोर्यथामति यथासम्भवं शास्त्रानुकूलं संशोधनम् । अत्राधुनापि संशोधनमपेक्ष्यते ।

४. सम्पूर्णायाः काशिकायाः वृत्तेर्हिन्द्यां विशदं व्याख्यानम् । **'भावबोधिनी'**—हिन्दीव्याख्या छात्राणामुपयोगिनी सेत्स्यतीति विश्वासः ।

५. पाठनिर्धारणे भाष्यस्य प्रामाण्यस्वीकृतिः ।

**संख्यानिर्देशः—**

अत्र सूत्रेषु प्रथमोल्लिखिता –१४२९– सख्या अष्टाध्यायीसूत्रक्रमानुसारिणी । तया सूत्राणामादितः संज्ञा ज्ञायते । सूत्रस्य पश्चात् निर्दिष्टा ॥ १ ॥ संख्या तस्य सूत्रस्य अष्टाध्यायीक्रमागत-पादस्यान्तर्गतसूत्रस्य निश्चितां संख्यां सूचयति । तदनन्तरं कोष्ठके ( १२०२ ) निर्दिष्टा संख्या निर्णयसागरमुद्रणालयतः प्रकाशित-'सिद्धान्तकौमुदी' स्थसूत्रस्य संख्यां द्योतयति । एतेन सामान्यच्छात्राणामनुसन्धानपरायणानाञ्च सौविध्यं भविष्यतीति स्पष्टम् । अत्र विषये पूज्यपादाः स्वर्गीयाः गुरुकल्पाः प्रोफेसर-आर्येन्द्रशर्ममहाभागाः ममोपजीव्यत्वेनाश्रिता इति तान् प्रति कृतज्ञतां प्रकटयामि ।

**आभारनिवेदनम्—**

व्याकरणस्य गाम्भीर्यं दुर्बोधत्वञ्च न कस्माच्चिदपि संस्कृतज्ञात्तिरोहितम् । अतो व्याकरणग्रन्थानां सम्पादनमथ च हिन्दीमाध्यमेन व्याख्यानं साहसमात्रमेव तथापि विलोक्य छात्राणां कष्टम्, विचिन्त्य शास्त्ररक्षणं स्वकर्त्तव्यम्—अस्मिन् विषये यथासम्भवं यथाज्ञानं च किञ्चिद् व्याख्यातम् । तच्च व्याख्यानम् **'भावबोधिनी'** इति हिन्दीव्याख्यारूपेण अत्र समायोजितम् । अनया व्याख्यया यदि स्वल्पमपि साहाय्यं स्याच्छात्राणां तदा मन्ये स्वपरिश्रमस्य साफल्यम् ।

अत्र व्याख्यायां ये प्रमादास्ते तु मदज्ञानविजृम्भिताः, यानि च वैशिष्ट्यानि तानि गुरुचरणप्रसादसमधिगतानि । अतोऽत्र पूज्यानां गुरुपादानां स्मरणं कृतज्ञताप्रकाशनं च परमावश्यकम् । तत्र निखिल-शास्त्र-पारङ्गतेभ्यः सद्यः समधिगत-

शब्दब्रह्मसायुज्येभ्यः श्रीसम्पूर्णानन्द-संस्कृत-विश्वविद्यालये नव्यव्याकरण-विभागाध्यक्षचरेभ्यो गुरुचरणेभ्यः श्रीमन्मुरलीधर-मिश्र-महोदयेभ्यः स्वकृतज्ञतां प्रकटयामि। तत्रैव विभागेऽध्यक्षपदे प्रतिष्ठितेभ्यः विविधशास्त्रनिष्णातेभ्यः पण्डितप्रवरेभ्यः स्वर्गीयेभ्यः श्रीमद्भूपेन्द्रपतित्रिपाठिभ्यः आभारं प्रदर्शयामि। शास्त्रार्थधुरन्धरेभ्यः वाग्देवतावतारेभ्यः श्रीमद्भूपनारायणझा-महोदयेभ्यः, महाभाष्यादिविविधग्रन्थमर्मज्ञेभ्यः श्रीमद्भ्यो देवदत्तशर्मोपाध्यायमहोदयेभ्यश्च स्वश्रद्धासुमनांसि समपर्यामि। साम्प्रतं काश्यां शब्दशास्त्ररक्षातत्परेभ्यः समधिगत-पाणिनीयरहस्येभ्यः श्रीमद्रामप्रसादत्रिपाठिपादेभ्यः पण्डितप्रवरेभ्यः श्रीमत्कालिकाप्रसादशुक्लमहोदयेभ्यश्च स्वहार्दिकीं कृतज्ञतां प्रकटयामि।

काशी-हिन्दू-विश्वविद्यालये कलासंकायान्तर्गते संस्कृत-विभागे अध्यक्षपदे सुदीर्घं प्रतिष्ठितेभ्यः स्वर्गतेभ्यः प्राच्यपाश्चात्त्योभयशास्त्रमर्मज्ञेभ्य श्रीमद्भ्यः डाक्टर-सिद्धेश्वरभट्टाचार्यमहोदयेभ्य अथ च तत्रैव विभाग उपाचार्यपदे प्रतिष्ठितेभ्यः पण्डितप्रवरेभ्यः श्रीमद्भ्यः स्व० कान्तानाथशास्त्रितैलङ्गमहोदयेभ्यश्च स्वहार्दिकीं कृतज्ञतां प्रकटयामि।

काशी-हिन्दू-विश्वविद्यालये कलासंकायान्तर्गते संस्कृत विभागेऽध्यक्षपदमलङ्कुर्वाणाः प्राच्यपाश्चात्योभय-विधविद्या-निष्णाताः सूक्ष्मसमीक्षकाः श्रद्धेयाः प्रोफेसर-विश्वनाथभट्टाचार्यमहोदयाः प्रस्तुतग्रन्थस्य प्रास्ताविकं विलिख्य मामती-वानुगृहीतवन्त इति तेषां हार्दिकं कार्तज्ञ्यं प्रकटयामि।

काशीस्थ-तारा-यन्त्रालयाधिपतीनां परैः प्रकाशयितुमशक्यानां दुर्लभानां प्राचीनानां संस्कृतग्रन्थानां प्रकाशनेऽनुरक्तानां श्रीमद्रमाशङ्कर-पण्ड्या-महोदयानाम्, अथ च, पितृपदानुयायिनां तदुद्देश्यपूर्तिपराणामतिविनतानां श्रीमद्रविप्रकाश-पण्ड्या-महोदयानामाभारो हृदयेनोररीक्रियते अनयोर्महाशययोः सत्प्रयासेनौदार्येण चेदं संस्करणं हृदयावर्जकं सत् सत्वरं विपश्चितां समक्षं समागतमित्येतदर्थं पुनः पुनराभ्यां धन्यवादान् वितरामि। श्रीमत्कृपासिन्धुशर्ममहोदयेभ्योऽपि धन्यवादान् वितरामि यैर्हि प्राग्रूप-( प्रूफ- ) संशोधने महत् साहाय्यमाचरितमिति शम्।

रामनवमी २०४७<br>
ई० ३.४.१९९०<br>
संस्कृतविभागः, कलासंकायः<br>
काशी-हिन्दू-विश्वविद्यालयः, वाराणसी

विदुषामाश्रवः<br>
**—जयशङ्करलाल-त्रिपाठी**

# काशिकायाः सप्तमभागस्य विषयाः

### षष्ठाध्यायस्य द्वितीयः पादः

# भूमिका

विश्व में भारत का गौरव सिद्ध करने में जिन हेतुओं की गणना की जाती है उनमें आचार्य पाणिनि भी हैं। उनकी अनुपम प्रतिभा और अति सूक्ष्म-निरीक्षण शक्ति देखकर पाश्चात्य आलोचक भी मन्त्रमुग्ध हो जाते हैं और उनकी श्रेष्ठता स्वीकार करने के लिए विवश हो जाते हैं। आज से हजारों वर्ष पूर्व (कम से कम ई० पू० ५०० वर्ष) महनीय भारत की पवित्र धरा पर अवतीर्ण होने वाले इस विद्वान् का यश सदैव अक्षुण्ण रहेगा।

यह सत्य है कि पाणिनि से पूर्व भी अनेक वैयाकरण आचार्य हुए थे जिनके नामों का उल्लेख स्वयं पाणिनि की अष्टाध्यायी में मिलता है[1], अनेक विकल्पों से भी अन्य पूर्ववर्ती आचार्यों के मतों का संकेत प्राप्त होता है[2], परन्तु उन पूर्ववर्ती आचार्यों के मतों की समीक्षा करके और अपने समय की प्रायोगिक स्थिति का आकलन करके जिन नियमों (सूत्रों) का निर्माण पाणिनि ने किया, वे आज भी अकाट्य माने जाते हैं।

अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥

पूर्वोक्त सूत्रलक्षण पाणिनीय सूत्रों को लक्ष्य करके ही बनाया गया प्रतीत होता है। पाणिनि के सूत्रों के अक्षर-लाघव के लिए ही समीक्षकों का यह वचन प्रसिद्ध है—"अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः।" इस लाघव के कारण अर्थबोध की क्लिष्टता का अनुभव करके स्वयं पाणिनि को अपने सूत्रों की व्याख्या (वृत्ति) लिखनी पड़ी। अतः वृत्तिग्रन्थों के लेखकों में भी पाणिनि सर्वप्रथम प्रतीत होते हैं। इनकी वृत्ति का संकेत महाभाष्य में स्पष्ट मिलता[3] है।

पदमञ्जरीकार ने 'सूत्रार्थप्रधानो ग्रन्थः वृत्तिः' यह लिखते हुए वृत्तिग्रन्थ में सूत्रार्थ की प्रधानता का निर्देश किया है। पाणिनि के बाद कुणि आदि आचार्यों के वृत्तिग्रन्थ मिलते हैं। परन्तु वामन-जयादित्य इन दोनों विद्वानों की महनीय कृति **काशिका** ही आज सर्वोत्कृष्ट और परम उपादेय मानी जाती है। ऐसे संकेत मिलते है कि वामन और जयादित्य इन दोनों मनीषियों ने स्वतन्त्ररूप से वृत्तियाँ लिखीं थीं। किन्तु कदाचित् दोनों का मिला हुआ रूप ही आज उपलब्ध है। इस विषय की विशेष चर्चा प्रथम भाग की भूमिका में की जा चुकी है। वहीं देखें।

पाणिनीय अष्टाध्यायी का सरल और प्रामाणिक अध्ययन करने के लिये उन्हीं के क्रमानुसार अध्ययन करना श्रेयस्कर है। प्रक्रियाक्रमानुसारी अध्ययन काम चलाऊ होता है। उसमें सूत्रार्थ-विषयक सन्देह का निवारण कठिनता से

---

१. १. काश्यप (पा० सू० १।२।२५)। २. सेनक (पा० सू० ५।४।११२)।
३. आपिशलि (पा० सू० ६।१।१२)। ४. स्फोटायन (पा० सू० ६।१।१२३)।
५. चाक्रवर्मण (पा० सू० ५।१।१०)। ६. भारद्वाज (पा० सू० ७।२।६३)।
७. गार्ग्य (पा० सू० ८।३।२०)। ८. शाकल्य (पा० सू० ८।३।१९)।
९. शाकटायन (पा० सू० ८।४।५०)। १०. गालव (पा० सू० ८।४।६७)।

२. उदीचाम् (पा० सू० ४।१।५३), एकेषाम् (पा० सू० ४।१।१७), आचार्याणाम् (पा० सू० ८।३।१२४), प्राचाम् (पा० सू० ८।३।५)।

३. (क) कथं त्वेतत् सूत्रं पठितव्यम्। किमाकडारादेका संज्ञा, आहोस्वित् प्राक्कडारात् परं कार्यमिति? कुतः पुनरयं सन्देहः? उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः—केचिदाकडारादेका संज्ञेति, केचित् प्राक्कडारात् परं कार्यमिति।"
महाभाष्य १।४।१

(ख) द्वयमपि चैतत्प्रमाणमुभयथासूत्रप्रणयनात्।—काशिका ४।१।११७

होता है। क्योंकि उसमें लक्षण को छोड़कर लक्ष्य की प्रधानता से विवेचन होता है। इसी कारण आज व्याकरण के प्रति लोगों में भय और द्वेष व्याप्त है क्योंकि दीर्घकाल तक अध्ययन करने पर भी अपेक्षित ज्ञान नहीं हो पाता है। यदि अष्टाध्यायी-क्रमानुसार अध्ययन, काशिका को आधार बना कर, किया जाय तो निश्चय ही परम कल्याण होगा। सूत्रों के अर्थनिर्णय में अनुवृत्ति के सिद्धान्त की परम आवश्यकता है। इसका ज्ञान तभी सम्भव है जब अष्टाध्यायी-क्रमानुसारी अध्ययन किया जाय। परन्तु इस क्रम से अध्ययन करने में धैर्य और लगन की आवश्यकता है। सम्पूर्ण अष्टाध्यायी और काशिका आदि के अध्ययन के बाद ही अपेक्षित ज्ञान होता है। इसलिए आज का छात्र इस क्रम की उपेक्षा करके काम चलाऊ ज्ञान प्राप्त करने के लिए सिद्धान्तकौमुदी आदि पढ़ रहे हैं। इससे न उनका भला हो रहा है और न व्याकरणशास्त्र का। अतः अष्टाध्यायी और काशिका आदि का स्वाध्याय करना ही वास्तव में हितकर समझना चाहिए।

पाणिनि ने अपनी अष्टाध्यायी का प्रणयन एक संक्रमण काल में किया था। उस समय में वैदिक भाषा का ह्रास हो रहा था और लौकिक संस्कृत का विकास। अतः ऐसे समय में वैदिक स्वरों का महत्त्व उपेक्षित करना पाणिनि के लिए सम्भव नहीं था और वे ऐसा करना भी नहीं चाहते थे। उन्होंने अपने सूत्रों में स्वरसम्बन्धी सूक्ष्मातिसूक्ष्म विवेचन किया है। प्रस्तुत सप्तम भाग में स्वरसम्बन्धी अनेक विधान किये गये हैं। उन नियमों की उपेक्षा करना अनिष्टघातक होता है। पाणिनीय शिक्षा में यह उल्लेख है—

"मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्या - प्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ (पा० शि० ५२)

आगे चलकर महाभाष्यकार पतञ्जलि ने पस्पशाह्निक में "मन्त्रो हीनः" के स्थान पर "शब्दो हीनः" ऐसा पाठ करके सर्वत्र उच्चारण की महत्ता स्वीकार की है। पाणिनि ने अष्टाध्यायी में उदात्त, अनुदात्त, अनुदात्ततर और स्वरित स्वरों के लक्षण तथा उनके विधायक अनेक सूत्र लिखे हैं। उच्चारण में स्थानकृत उच्चत्व, नीचैस्त्व और समाहार ही इन भेदों का निर्णायक है। उच्चारण-प्रक्रिया अत्यन्त जटिल है। पाणिनीय शिक्षा के निम्न वचन ध्यान देने योग्य हैं—

"उदात्तमाख्याति वृतोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा।
उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव॥ (पा० शि० ४३)
अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम्।
मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति पदशय्या॥
हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति॥ (पा० शि० ४५-४६)

इस दृष्टि से प्रस्तुत सप्तम भाग के सूत्रों का अत्यन्त महत्व हैं। स्वरज्ञान अत्यन्त कठिन होते हुए भी आवश्यक था। इसीलिए स्वरों की रक्षा करने के अनेक उपाय बनाए गये। लिखित रूप में स्वरों की रक्षा का माध्यम रेखा चिह्न बनाया गया। उदात्त में किसी प्रकार की रेखा का प्रयोग नहीं किया जाता है। अतः रेखाचिह्न-रहित वर्ण में उदात्त का उच्चारण करना चाहिए। यदि किसी वर्ण के नीचे लम्बी पड़ी रेखा है तो उसे अनुदात्त और यदि किसी के ऊपर खड़ी रेखा का चिह्न है तो उसे स्वरित समझना चाहिए। इस सम्बन्ध में आगे काशिका के "धातोः" (५।१।१६२) सूत्र का उदाहरण 'गोपायति' देखना चाहिए। इसमें प्रथम और द्वितीय अनुदत्त हैं, तृतीय उदात्त है और चतुर्थ स्वरित है।

सामान्यतः किसी पद में एक उदात्त या स्वरित होता है, शेष अनुदात्त हो जाते हैं और उदात्त के बाद वाला अनुदात्त स्वरित में परिवर्तित हो जाता है। इस विषय में ये सूत्र देखने चाहिए :—

१. अनुदात्तं पदमेकवर्जम्। ६।१।१५८
२. उदात्तादनुदात्तस्य स्वरितः। ८।४।६६
३. धातोः। ६।१।१६२
४. आद्युदात्तश्च। ३।१।३
५. समासस्य। ६।१।२२३
६. बहुव्रीहौ प्रकृत्या पूर्वपदम्। ६।२।१
७. तिङ्ङतिङः। ८।१।२८
८. एकादेश उदात्तेनोदात्तः। ८।२।५

इनमें से षष्ठ अध्याय के प्रथम और द्वितीय पाद के सूत्रों की सोदाहरण व्याख्या इस सप्तम भाग में देखी जा सकती है। अष्टम अध्याय के सूत्रों की व्याख्या काशिका के दशम भाग में देखी जा सकेगी।

काशिकाकार ने केवल महाभाष्य का आश्रयण नहीं किया है। इन्होंने अपने समय प्रचलित परम्परा को भी महत्त्व दिया है। अतएव कुछ ऐसे भी स्थल काशिका में हैं जिन्हें भाष्यानुकूल कहना कठिन है। उदाहरणार्थ—भाष्य में निम्न रूप में सूत्र पठित हैं—

१. इन्द्रे च। ६।१।१२४
२. प्लुतप्रगृह्या अचि नित्यम्। ६।१।१२५

भट्टोजिदीक्षित तथा पदमंजरीकार आदि भी उक्त स्वरूप ही मानते हैं। किन्तु काशिकाकार ने कुछ परिवर्तन कर दिया है—

१. इन्द्रे च नित्यम्। ६।१।१२४
२. प्लुतप्रगृह्या अचि। ६।१।१२५

काशिकाकार ने "न भूताधिकसञ्जीवमद्राश्मकज्जलम्"। ( ६।२।९१ ) सूत्र पर लिखा है "मद्राश्मग्रहणं संघात-विगृहीतार्थम्।" परन्तु ऐसा उल्लेख भाष्यादि में नहीं है। इसीलिए पदमञ्जरीकार को लिखना पड़ा—"अपर आह—मद्राश्मग्रहणं संघातविग्रहीतार्थम् इत्यस्य भाष्येऽदर्शनादनार्षो वृत्तौ पाठः।"

ऊपर दिग्दर्शनमात्र प्रस्तुत किया गया है। ऐसे प्रसङ्गों में काशिकाकार ने अपनी स्वतन्त्र प्रतिभा का उल्लेख किया या अपने समय की परम्परा का अनुवर्तन किया—कहना कठिन है।

## प्रस्तुत संस्करण

काशिका का प्रस्तुत संस्करण एक महती योजना का सप्तम भाग है। इसके पूर्व छः भाग प्रकाशित हो चुके हैं। अब तक के प्रकाशित अन्य संस्करणों की तुलना में इसका महत्त्व विद्वान् ही कह सकते हैं। इसमें मूल काशिका का पाठ संशोधित करने का यथासंभव प्रयास किया गया है। कहीं-कहीं प्रकाशित पाठ का अप्रामाण्य प्रतीत होने पर उसी के साथ कोष्ठक में शुद्ध सम्भावित पाठ रखा गया है।

काशिकावृत्ति का यथार्थ-बोध **न्यास** और **पदमञ्जरी** की सहायता के बिना सम्भव नहीं है। अतः ये दोनों महत्त्वपूर्ण व्याख्यायें इसमें समायोजित की गई हैं।

वर्तमानकालिक छात्रों की कठिनता का अनुभव करके राष्ट्रभाषा हिन्दी में **'भावबोधिनी'** नामक व्याख्या लिखकर समायोजित की गई है। इसमें सामान्य व्याख्या के साथ-साथ गम्भीर स्थलों का रहस्य **'विमर्श'** के अन्तर्गत स्वतन्त्र रूप से

समझाया गया है। विस्तरभिया अनपेक्षित व्याख्यान नहीं किया गया है। इससे छात्र और शोधार्थी दोनों लाभान्वित होंगे, ऐसी आशा है।

प्रत्येक सूत्र के साथ तीन प्रकार से संख्यायें लिखीं गईं हैं। प्रथम संख्या जो सूत्र से पहले लिखी गई है वह अष्टाध्यायी-क्रम में प्रस्तुत सूत्र की संख्या सूचित करती है। उस सूत्र के बाद लिखी गई संख्या उस पाद की सूत्र-क्रमानुसारी संख्या बतलाती हैं। तीसरी संख्या कोष्ठक में है, वह निर्णयसागर प्रेस से प्रकाशित सिद्धान्तकौमुदी के सूत्र की संख्या सूचित करती है। इसलिए जिज्ञासा होने पर सिद्धान्तकौमुदी देखने में सुविधा होगी। उदा०—"२४४१ एकाचो द्वे प्रथमस्य ॥ १ ॥ ( २१७५ )"

गणपाठ में पठित शब्दों का स्वरूप बहुत भ्रष्ट तथा विवादग्रस्त है। सावधानी-पूर्वक संशोधित करके शब्द उद्धृत किये गये हैं। किन्तु अभी उस दिशा में कार्य शेष है।

प्रस्तुत महती योजना के आधार पर यह सप्तम भाग प्रकाशित हो रहा है। इसकी सफलता का श्रेय गुरुचरणों के आशीर्वाद को ही है। जो दोष हैं वे मेरे अज्ञान और प्रमाद के परिणाम हैं। विवेकी अध्येता उनका संशोधन करके मुझे सूचित करने की कृपा करेंगे।

प्रोफेसर विश्वनाथ भट्टाचार्य, अध्यक्ष संस्कृत-विभाग, कलासंकाय, का० हि० वि० वि० वाराणसी, की सत्प्रेरणा और स्नेह का सुपरिणाम यह संस्करण है। प्रोफेसर भट्टाचार्य महोदय ने इसका प्रास्ताविक लिखकर मुझ पर महान् अनुग्रह किया है। अतः उनके प्रति हार्दिक कृतज्ञता व्यक्त करता हूँ।

इस महर्घता के युग में भी दुर्लभ तथा महान् संस्कृतग्रन्थों के प्रकाशन में अग्रणी 'तारा मुद्रणालय' के अधिपति श्रीमान् रमाशंकर पण्ड्या महोदय के प्रति मैं जितनी कृतज्ञता व्यक्त करूँ, कम है। इस प्रसङ्ग में श्रीमान् रविप्रकाश जी पण्ड्या का सहयोग भुला पाना सम्भव नहीं है। वास्तव में इसके शीघ्र और सुन्दर प्रकाशन का सम्पूर्ण श्रेय श्री रविप्रकाश जी को ही है। अतः उन्हें मैं कोटिशः आशीर्वाद देते हुए यह आशा करता हूँ कि वे भी अपने पिता के पदचिह्नों का अनुसरण करते हुए इस देववाणी के दुर्लभ ग्रन्थों के प्रकाशन में पूर्ण मनोयोग से लगे रहेंगे।

किसी ग्रन्थ के शुद्ध और सुन्दर प्रकाशन में प्रूफ संशोधन का अत्यन्त महत्त्व है। इस कष्टसाध्य कार्य को निष्ठापूर्वक सम्पन्न करने के लिये मित्रवर श्री पं० कृपासिन्धु शर्मा ( प्राचार्य, ब्रह्मर्षि बलदेव संस्कृतविद्यालय, लक्ष्मीकुण्ड वाराणसी ) को हार्दिक धन्यवाद देता हूँ।

अपूर्णता मानव का पर्याय है। अतः इस ग्रन्थ में कुछ त्रुटियाँ छूट जाना असम्भव नहीं हैं। विज्ञ जन क्षमा करेंगे।

रामनवमी २०४७<br>
ई० ३.४.१९९०

संस्कृत-विभाग, कलासंकाय<br>
काशी-हिन्दू-विश्व-विद्यालय, वाराणसी

विनीत<br>
—जयशंकरलाल त्रिपाठी

# संकेत-सूची

| | | |
|---|---|---|
| अथर्व | = | अथर्ववेदः |
| अ० वे० | = | ,, |
| आप० श्रौ० | = | आपस्तम्ब-श्रौतसूत्रम् |
| आश्व० श्रौ० | = | आश्वलायन-श्रौतसूत्रम् |
| उ० सू० | = | उणादि-सूत्रम् |
| ऋ० | = | ऋग्वेदः |
| का० वा० | = | कात्यायन-वार्त्तिकम् |
| का० सं० | = | काठक-संहिता |
| कौ० गृ० | = | कौषीतकी-गृह्यसूत्रम् |
| ग० सू० | = | गणसूत्रम् |
| तै० ब्रा० | = | तैत्तिरीय-ब्राह्मणम् |
| तै० सं० | = | तैत्तिरीय-संहिता |
| द० उ० | = | दशपादी-उणादिः |
| धा० पा० | = | धातुपाठः |
| नि० | = | निरुक्तम् |
| पा० शि० | = | पाणिनीय-शिक्षा |
| पा० सू० | = | पाणिनीयसूत्र |
| पै० सं० | = | पैप्पलाद-संहिता |
| फि० सू० | = | फिट् सूत्रम् |
| म० भा० | = | महाभाष्यम् |
| मै० सं० | = | मैत्रायणी संहिता |
| वा० सं० | = | वाजसनेयी-संहिता |
| व्या० प० | = | व्याडिपरिभाषा |
| श० ब्रा० | = | शतपथब्राह्मणम् |
| सी० दे० प० | = | सीरदेवपरिभाषा |

# अथ षष्ठाध्याये प्रथमः पादः

२४४१. एकाचो द्वे प्रथमस्य ॥ १ ॥ ( २१७५ )

**अधिकारोऽयम्। 'एकाचः' इति च, 'द्वे' इति च, 'प्रथमस्य' इति च त्रितयमधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यामः प्राक्सम्प्रसारणविधानात् ( ६।१।१२ ) तत्र, 'एकाचः प्रथमस्य द्वे भवतः' इत्येवं तद्वेदितव्यम्।**

**न्यासः**

**एकाचो द्वे प्रथमस्य** ॥ इह केचित् स्वार्था एव विधयो भवन्ति, न परार्थाः, तद्यथा—'अण्कुटिलिकायाः' इति कुटिलिकाशब्दादण् विधीयमानः स्वार्थो भवति। केचित् पुनः स्वार्थाः, परार्थाश्च, तद्यथा—'पदरुजविशस्पृशो घञ्' इति पदादिभ्यो घञ् विधीयमानः स्वार्थो भवति, स्वरितलिङ्गासङ्गादुत्तरेषु योगेष्वनुवर्त्तमानः परार्थश्च। केचित् पुनः परार्था एवाधिकारा भवन्ति, न स्वार्थाः, यथा—'समर्थानां प्रथमाद्वा' इति; तत् किमयं स्वार्थ एव? अथोभयार्थ एवाधिकारः? उत परार्थ एव? इति सन्देहापनयनाय परार्थतामेवास्य दर्शयितुमाह—**एकाच इति चेत्यादि**। एतद्ग्रहणकं वाक्यम्, अस्य च **इत उत्तरमित्यादि** विवरणम्। सिंहावलोकितन्यायेन पूर्वत्राप्यधिकाराणामनुवृत्तिर्भवति, अतस्तन्निवृत्त्यर्थमित उत्तरमित्युक्तम्। **प्रागिति**। अनेनाधिकाराणामवधिं दर्शयति। इतस्त्ववधेरुत्तरत्रान[1]नुवृत्तिरस्वरितत्वाद् विज्ञेया। कस्य **पुनः** 'एकाचो द्वे भवतः' इत्येवं तद् वेदितव्यम्? इत्यत आह—**वक्ष्यतीत्यादि**। धातोरित्येकाच इत्यनेन समानाधिकरणा षष्ठी स्यात्, व्यधिकरणा

**पदमञ्जरी**

**एकाचो द्वे प्रथमस्य** ॥ इह यद्यपि स्वार्थत्वे सम्भवति पारार्थ्यमयुक्तम्, विधेयकार्यिणोर्द्वयोर्निर्देशात् सम्भवति च स्वार्थत्वम्, तथापि 'लिटि धातोः' इत्यादौ विधेयानिर्देशेन वैयर्थ्यप्रसङ्गान्नायम् 'अण्कुटिलिकायाः' इत्यादिवत्केवलो विधिः; नापि 'शेषे' इत्यादिवल्लक्षणं चाधिकारश्च। तथा हि सति सर्वेषामेव शब्दानां प्रथमस्यैकाचोऽनेन द्विर्वचने सिद्धे 'लिटि धातोः' इत्यादि व्यर्थं स्यात्। धातोर्लिट्येव, लिटि धातोरेव—इति नियमान्न वैयर्थ्यमिति चेत्? न; विधिनियमसम्भवे विधेरेव ज्यायस्त्वात्। अस्य हि पारार्थ्येऽवश्यम्भाविनि सति यथा तेषां विधित्वं तथास्य वर्णनं युक्तमतः परार्थ एवायम्। तत्रापि न परिभाषा—द्विर्वचनं विधीयमानं प्रथमस्यैकाचो वेदितव्यमिति; एवं हि सति 'सर्वस्य द्वे' इत्यत्रैवास्य व्यापार इति तत्रैवैकाचः प्रथमस्येति वाच्यं स्यात्। 'लिटि धातोः' इत्यादिकं च विधेयानिर्देशाद्व्यर्थं स्यात्। अतः पारिशेष्यात्स्वरितत्वाच्चाधिकार एवायमिति निश्चित्याह—**एकाच इति चेति**। अधिकारोऽयमिति वक्तव्ये पृथक् स्वरितत्वप्रदर्शनार्थमेवमुक्तम्। **एतत्त्रितयमिति**। तस्य प्रयोजनम्—यत्र यदपेक्षितं तत्र तस्य सम्बन्धः, यथा—'अजादेर्द्वितीयस्य' इत्यत्र 'एकाचो द्वे' इति, 'उभे अभ्यस्तम्' इत्यत्र 'द्वे' इति, 'लिटि धातो' रित्यादौ सर्वं सम्बध्यते। **इत उत्तरमित्यादि**। अनन्तरोक्तस्यैव विवरणम्। **प्राक् सम्प्रसारणविधानादिति**। तत आरभ्य तु नास्य सम्बन्धः; विधेयान्तर-

**भावबोधिनी**

प्रणम्य परमात्मानमक्षरं शाश्वतं विभुम्।
काशिकाषष्ठमध्यायं व्याख्याति जयशङ्करः ॥

यह अधिकार सूत्र है। 'एकाचः' ( एक अच् वाले समुदाय का ) 'द्वे' ( दो होते हैं, द्वित्व होता है ), और 'प्रथमस्य' (प्रथम का)—इन तीनों की अनुवृत्ति होती है। इस सूत्र से लेकर आगे सम्प्रसारणविधान (पा० सू० ६।१।१२) से पहले तक जो कहा जायगा उसमें—प्रथम एकाच् का द्वित्व होता है—ऐसा समझना चाहिए।

---

१. अयमेवोचितः पाठः, प्रकाशितपाठोऽसङ्गतः।

**वक्ष्यति—'लिटि धातोरनभ्यासस्य' ( ६.१.८ ) इति। तत्र धातोरवयवस्यानभ्यासस्य प्रथमस्यैकाचो द्वे भवतः। जजागार। पपाच। इयाय। आर। 'एकाचः' इति बहुव्रीहिनिर्देशः।**

**न्यासः**

वा; तत्र यद्येषा धातोरेव समानाधिकरणा षष्ठी स्यात्, तदा पचादीनामेव द्विर्वचनं स्यात्, न जागर्त्यादीनाम्, न हि तत्रैकाच इति मन्यमानो नैषैकाच इति समानाधिकरणा षष्ठी—धातोरेकाच इति, अपि त्ववयवयोगा—धातोर्योऽवयव एकाच इति दर्शयितुमाह—**धातोरवयवस्येति**। **जजागारे**त्यत्र जागित्येतद् द्विरुच्यते, **पपाचे**त्यत्र पच्छब्दः; पूर्वत्र 'अचो ञ्णिति' इति वृद्धिः, उत्तरत्र 'अत उपधायाः' इति। **इयायेति**। 'इण् गतौ', 'अचो ञ्णिति' इति वृद्धौ कृतायां 'द्विर्वचनेऽचि' इति स्थानिवद्भावादिकारो द्विरुच्यते, आयादेश, 'अभ्यासस्यासवर्णे' इतीयङ्। **आरेति**। 'ऋ गतौ', ऋ इत्येतस्य द्विर्वचनम्, 'उरत्' इत्यत्त्वम् रपरत्वम्, 'अत आदेः' इति दीर्घः, सवर्णदीर्घत्वञ्च।

एकाच इति तत्पुरुषोऽयं वा स्याद्—एकश्चासावच्चेति एकाच्, बहुव्रीहिर्वा—एकोऽज् यस्येति? तत्र यद्ययं तत्पुरुषः स्यात्, इणादीनामेव द्विरुक्तिः स्यात्—इयाय, आरेत्येवमादौ; पचादीनां तु पपाचेत्यादौ न स्यात्, तेषामज्झल्समुदायात्मकत्वादित्येतन्मनसि कृत्वाऽऽह—**एकाच इति बहुव्रीहिनिर्देशोऽयमिति**। बहुव्रीहिणा

**पदमञ्जरी**

निर्देशात्स्वरिते कृते नाधिकार इति वा व्याख्यानात्।

सामान्येनोक्तमुदाहरणनिष्ठं दर्शयति—**वक्ष्यतीति**। अत्र यदि 'धातोरेकाचः' इति सामानाधिकरण्येन सम्बन्धः स्यात्, पचिप्रभृतीनामेव स्यात्, न जागर्त्यादीनाम्। प्रथमग्रहणं चानर्थकं स्यात्, न ह्येकाचां धातूनां द्वितीयादिरेकाजस्ति। न च प्रथमस्य धातोरिति सम्बन्धः। तथा हि सति धातुपाठे प्रथमपठितस्य भवतेरेव स्यात्, ततश्च भवतिग्रहणमेव कर्तव्यं स्यात्। अथैकाचो धातोः प्रथमस्य वर्णस्येति सम्बन्ध? तदयुक्तम्; सहनिर्दिष्टयोः सामानाधिकरण्यस्य स्वतः प्राप्तस्य त्यागायोगात्। अतो वैयधिकरण्येन सम्बन्ध इत्याह—**धातोरवयवस्येति**। **द्वितीयस्य चेति**। यद्यप्यत्र द्वितीयग्रहणं नास्ति, तथापि 'लिटि धातोः' इत्यत्र त्वधिकृतमस्ति, तस्य चार्थः प्रदर्श्यते इति नासङ्गतं किञ्चित्। **जजागार**—इत्यादीनि मुख्यगौणतया क्रमेणोदाहरणानि।

एकाच इति यद्ययं तत्पुरुषः स्यात्तदा 'धातोः' इत्यनेन सामानाधिकरण्यं चेति? इयाय आरेत्यादावेव स्याद्, वैयधिकरण्ये तु पपाचेत्यादिषु भवदपि द्विर्वचनमजमात्रस्यैव स्यात्, ततश्च 'हलादिः शेषः', 'शर्पूर्वाः खयः', 'लिटचभ्यासस्योभयेषाम्' इत्याद्यनुपपन्नं स्यात्। एकग्रहणं चानर्थकम्, प्रथमस्याच इति विशेषणादेकस्य च धातोरनेकप्रथमाजसम्भवादच इत्येकत्वं वा विवक्षिष्यते, किमेकग्रहणेन? तस्माद् बहुव्रीहिरयम्। तदाह—**एकाच इति बहुव्रीहिनिर्देश इति**। बहुव्रीहिणा विवक्षितस्यार्थस्य प्रतिपादनं बहुव्रीहेर्वा उच्चारणं बहुव्रीहि-

**भावबोधिनी**

आगे कहा जायगा—"लिटि धातोरनभ्यासस्य" (पा० सू० ६।१।८) इसमें धातु के अवयव अनभ्यास (जिसकी अभ्यास संज्ञा नहीं की गई है उस) के प्रथम एकाच् (एक अच् वाले समुदाय) का द्वित्व होता है, दो बार उच्चारण किया जाता है। उदा०—जजागार। पपाच। इयाय। आर। [ इनकी सिद्धि आगे की जायगी। ]

**विमर्श**—कुछ विधियाँ स्वार्थ, कुछ परार्थ और कुछ उभयार्थ होती हैं। प्रस्तुत सूत्र के तीनों पद परार्थ हैं, तीनों की अनुवृत्ति आगे के सूत्रों में होती है। जहाँ जितने की अपेक्षा है वहाँ उतना अनुवृत्त होता है, सम्बद्ध होता है। जैसे 'अजादेर्द्वितीयस्य' इस अग्रिम सूत्र में 'एकाचो द्वे' इन दो पदों का ही सम्बन्ध होता है, 'उभे अभ्यस्तम्' (पा० सू० ६।१।५) में केवल 'द्वे' इतने का और 'लिटि धातोरनभ्यासस्य' (पा० सू० ६।१।८) में सभी तीनों का सम्बन्ध किया जाता है। इस प्रकार यह अधिकार सूत्र है। यह केवल आगे ही सम्बद्ध होता है। परन्तु सम्प्रसारणविधायक सूत्र (पा० सू० ६।१।१२) तक ही यह अनुवृत्त होता है।

**एकोऽच् यस्य सोऽयमेकाच्—इत्यवयवेन विग्रहः ।**

**न्यासः**

विवक्षितस्यार्थस्य निर्देशः = कथनम् । बहुव्रीहेर्निर्देशः = कथनम्, उच्चारणं वा बहुव्रीहिनिर्देशः । कुतः पुनरेतदवसितम्—बहुव्रीहेनिर्देशोऽयमिति । 'हलादिः शेषः', 'शर्पूर्वाः खयः' इत्येवमादिलिङ्गात् । ननु च तत्पुरुषस्यापि लिङ्गमस्ति—'दीर्घ इणः किति' इतीणोऽभ्यासस्य दीर्घविधानम् ? नैतदस्ति; बहुव्रीहावपि ह्यस्मिन् व्यपदेशिवद्भावादिणो द्विर्वचनेऽभ्यासस्य दीर्घविधानमुपपद्यत एव, न तु तत्पुरुषेऽस्मिन् हलादिशेषादिकार्यमुपपद्यते; पचादीनामज्झलसमुदायानां द्विर्वचनानुपपत्तेः । तस्माद् बहुव्रीहेरेव लिङ्गमस्ति, न तत्पुरुषस्येति बहुव्रीहिनिर्देश एवायम् । यद्येवम्; बहुव्रीहेरेवान्यपदार्थप्रधानत्वादुपलक्षणविनिर्मुक्तस्य शुद्धस्यैवान्यपदार्थस्य बहुव्रीहिणाभिधानादचावयवेन य उपलक्षितोऽन्यपदार्थस्तस्यैवानच्कस्य द्विर्वचनं प्राप्नोति, न तूपलक्षणभूतस्यापि । न ह्युपलक्षणं कार्योपयोगि भवति । तथा हि—यथा चित्रगुरानीयतामित्युक्ते यस्य चित्रा गावः सन्ति स एवानीयते, न तूपलक्षणभूता गावोऽपि । अत एव तस्य निरासाय तद्गुणसंविज्ञानोऽयं बहुव्रीहिरिति

**पदमञ्जरी**

निर्देशः । विग्रहप्रदर्शनं विस्पष्टप्रतिपत्त्यर्थम् । यदि बहुव्रीहिनिर्देशस्ततो बहुव्रीहेरन्यपदार्थप्रधानत्वाद्यथा 'चित्रगुरानीयताम्' इत्युक्ते यस्य ता गावः स एवानीयते न चित्रा गावः, तद्वदत्रोपलक्षितं तदुभयपार्श्ववर्त्ति

**भावबोधिनी**

लिटि धातोरनभ्यासस्य प्रथमस्य एकाचो द्वे भवतः—यहाँ 'धातोः' और 'एकाचः' इन दोनों में षष्ठी है । इनका सामानाधिकरण्येन सम्बन्ध मानने पर—एक अच् वाली धातु का—ऐसा अर्थ होगा । फलतः पच् पठ् आदि का द्वित्व होगा, जागृ आदि का नहीं । साथ ही 'प्रथमस्य' की उपयोगिता भी नहीं रहेगी क्योंकि यह सापेक्ष शब्द है । यदि 'प्रथमस्य धातोः एकाचः' ऐसा अर्थ किया जाय तब तो धातुपाठ के प्रथम धातु √ भू का ही द्वित्व हो सकेगा । अतः केवल उसी के लिए सूत्र बनाना था । यदि 'एकाचः धातोः प्रथमस्य वर्णस्य' ऐसा अर्थ करें तो सहनिर्दिष्टों के सामानाधिकरण्य का उच्छेद प्रसक्त होगा । इन तीन दोषों को देखकर यहाँ सामानाधिकरण्य छोड़कर वैयधिकरण्य में षष्ठी माननी चाहिए—धातु के अवयवभूत प्रथम एकाच् का दो बार उच्चारण ( द्वित्व ) होता है ।

जजागार—यह '√ जागृ निद्राक्षये' धातु के लिट् लकार प्रथम पुरुष एकवचन का रूप है—जागृ+लिट्=तिप्=णल्=अ, इसमें जाग् का द्वित्व जाग् जाग् ऋ+अ, प्रथम की अभ्यास संज्ञा और 'हलादिः शेषः' ( पा० सू० ) से अभ्यास का आदि हल् शेष, अन्य का लोप—जा जाग् ऋ+अ । अभ्यास का ह्रस्व—ज जाग्ऋ+अ, 'अचो ञ्णिति' ( पा० सू० ७।२।११५ ) से ऋ की वृद्धि, रपर—ज जाग् आर् अ=जजागार । यह सूत्र का मुख्य उदाहरण है । क्योंकि 'जागृ' में दो अच् होने से प्रथम एकाच् कथन सार्थक है ।

पपाच—√डुपचष् पाके=पच्+लिट्=तिप् णल्=अ । यहाँ 'व्यपदेशिवदेकस्मिन्' परिभाषा से पच् का द्वित्व, हलादिशेष—पपच्+अ, 'अत उपधायाः' ( पा० सू० ७।२।११६ ) से उपधा की वृद्धि ।

इयाय—√इण् गतौ=इ+लिट्=तिप्=णल्=अ, व्यपदेशिवद्भाव मानकर द्वित्व, इ इ+अ, वृद्धि, आय् आदेश—इ आय्+अ । 'अभ्यासस्यासवर्णे' ( पा० सू० ६।४।७९ ) से इ का इयङ् आदेश—इय् आय् अ=इयाय ।

आर—√ऋ गतौ—ऋ+लिट्=तिप्=णल्=अ, व्यपदेशिवद्भाव से द्वित्व ऋ ऋ+अ, 'उरत्' ( पा० सू० ७।४।६६ ) से अभ्यास के ( प्रथम ) ऋ का अ, रपर,—अर् ऋ+अ, हलादिशेष, 'अतः आदेः' सूत्र से अभ्यास का दीर्घ आ ऋ+अ, ऋ का गुण, रपर, आ अर्+अ, सवर्णदीर्घ—आर ।

( अनु० ) एकाचः—यह बहुव्रीहिनिर्देश है । एक अच् है जिसका वह एकाच्—इस अवयव के साथ विग्रह

**तत्र समुदायः समासार्थः । अभ्यन्तरश्च समुदायेऽवयवो भवतीति साच्कस्यैव द्विर्वचनं भवति ।**

**एवं च—पच् इत्यत्र येनैवाचा समुदाय एकाच्, तेनैव तदवयवोऽच्छब्दः पशब्दश्च। तत्र पृथगवयवैकाचो न द्विरुच्यन्ते, किं तर्हि ? समुदायैकाजेव ।**

## न्यासः

दर्शयन्नाह—**तत्रेत्यादि । समुदायः समासार्थ इति** । सह तेनोपलक्षणभूतेनाचावयवेन समुदाय एवान्यपदार्थ इत्यर्थः । **अभ्यन्तरश्चेति** । तदन्तर्भूत इत्यर्थः । चशब्दोऽवधारणे । अभ्यन्तर एवेत्यर्थः । इतिकरणो हेतौ । यस्मात् समुदाये समासार्थेऽवयवोऽभ्यन्तरो भवति, तस्मात् साच्कस्यैव द्विर्वचनं भवति । लोकेऽपि क्वचिदुपलक्षणस्य समासेऽन्तर्भावात् कार्योपयोगित्वं दृष्टमेव, यथा शुक्लवासससमानयेत्युक्ते सहैव शुक्लेन वाससानीयते । पचित्यत्र येनैवाचा समुदाय एकाच् तेनैव तदवयवोऽप्यच्छब्दः पशब्दश्चेति, ततश्चावयवानामपि प्रत्येकं द्विर्वचनं प्राप्नोति । यथा येनैव हस्तेनावयवेन बाहुर्हस्तवान् भवति, तेनैव देवदत्तोऽपि हस्तवान् भवति; तथा पचतौ धातौ येनैवाकारेण पच्छब्दः समुदाय एकाच् तेनैव तदवयवोऽप्यच्छब्दः पशब्दश्चेति । ततश्चावयवानामपि प्रत्येकं द्विर्वचनं प्राप्नोत्येव । द्विर्वचनञ्च कार्यिण एकाचः; सामान्येन निर्देशात् । एवञ्च समुदायस्य तदवयवानाञ्चैकाचां पृथग्द्विर्वचने कृतेऽनिष्टं रूपं स्यात् । अत एतद् द्वेष्यमपाकर्तुमाह—**तत्रेत्यादि** । तेषु समुदायेष्वेकाक्षु मध्ये पृथगवयवैकाचो न द्विरुच्यन्ते । किं तर्हि ? समुदायैकाजेव । अवयवैकाजिति कर्मधारयः । **समुदायैकाजिति** । अयमपि कर्मधारय एव ।

## पदमञ्जरी

व्यञ्जनद्वयमेव द्विरुच्यते, न तूपलक्षणभूतोऽजित्यत आह—**तत्रेति** । भवति वै बहुव्रीहावपि क्वचिद्वर्तिपदार्थस्यापि कार्ययोगः, तद्यथा—शुक्लवासससमानयेति मत्वर्थे बहुव्रीहिः, तत्र यथा दण्डी, विषाणीति संसर्गे मत्वर्थीय उत्पन्ने तस्य द्विष्ठत्वाद् गुणस्यापि कार्ययोगः, तद्वद् बहुव्रीहावपि यत्र संसर्गो वाच्यस्तत्राविरुद्धो गुणस्यापि कार्ययोगः । **अभ्यन्तरश्चेति** । अन्तर्भूत इत्यर्थः । **आभ्यन्तरमिति** पाठे अभ्यन्तरम् = मध्यम्, तत्र भवमाभ्यन्तरम् । **साच्कस्यैव द्विर्वचनं भवतीति** । यथा तत्सन्निहितमवयवान्तरं द्विरुच्यते, तथोपलक्षणीभूतोऽप्यजित्यर्थः । अत्र च ज्ञापकम् 'दीर्घोऽकितः' इत्यादि । चोदयति—**एवं च पचित्यत्रेति । तेनैव तदवयवोच्छब्दः पशब्दश्चेति** । चकारादकारश्च व्यपदेशिवद्भावादेकाजेव, यथैवाङ्गुल्या देवदत्तोऽङ्गुलिमांस्तथा हस्तोऽपि, तद्वदत्रापि । ततश्च सर्वेषामेव तेषां द्विर्वचनप्रसङ्ग इति शेषः । ननु 'अर्थवद्ग्रहणे नानर्थकस्य' इति समुदायस्यैव भविष्यति, नावयवानाम् । नन्वेवं जागर्त्यादीनां न स्यात्, किञ्च यत्र 'शे' इत्यादौ विशिष्टं शब्दस्वरूपं गृह्यते तत्रैवेयं परिभाषा, अत्र तु 'धातोर-वयवस्यैकाचः' इति तटस्थेनोपलक्षणेन जागृ, पच्—इत्येवमादिकं गृह्यते, न तु स्वरूपेणेति नेह तस्याः प्रवृत्तिः ? परिहरति—**तत्रेति** ।

## भावबोधिनी

होता है । इसमें समुदाय समास का अर्थ है—एक अच् वाला समुदाय । और अवयव समुदाय के मध्य ही होता है इस लिये अच्-विशिष्ट का ही द्वित्व होता है । और इस प्रकार 'पच्' इसमें जिस अच् के कारण समुदाय एकाच् होता है उसी अच् के कारण उस समुदाय का अवयव—अच् शब्द, प, शब्द और अ शब्द भी एकाच् है अर्थात् पच् में तीन एकाच् सम्भव हैं । इनमें पृथग् अवयव एकाचों का द्वित्व नहीं कहा जाता है । तो किसका ? समुदाय रूपी एकाच् का ही [ द्वित्व कहा जाता है ] ।

**तथा हि—सकृच्छास्त्रप्रवृत्त्या सावयवः समुदायोऽनुगृह्यते। पपाचेत्यत्र प्रथमत्वं व्यपदेशिवद्भावात्। इयाय, आर—इत्यत्रैकाच्त्वमपि व्यपदेशिवद्भावादेव।**

**न्यासः**

कुतः पुनरयं सामान्याभिधाने विशेषो लभ्यते? इत्यत आह—**तथा हीत्यादि**। यद्यपि समुदायोऽवयवश्चैकाच्, तथापि यस्य द्विर्वचने कृते सर्वेषामनुग्रहो भवति तस्यैव द्विर्वचनं युक्तम्। एवं हि शास्त्रहानिर्न भवति; सर्वेषामेव शास्त्रविहितकार्यस्य निष्पत्तेः। अयमेवानुग्रहो या शास्त्रविहितकार्यस्य निष्पत्तिः। समुदायस्यैव द्विर्वचने कृते सर्वेषामनुग्रहो भवति। यथा वृक्षः प्रचलन् सहावयवैः प्रचलति, तथैकयैव शास्त्रप्रवृत्त्या समुदायो द्विरुच्यमानः सहावयवैर्द्विरुच्यते, न हि विनावयवैः समुदायो द्विर्वक्तुं शक्यते; तस्य तदात्मकत्वात्। अवयवानां तु द्विर्वचनं नेकया प्रवृत्त्या सर्वेषां कर्तुं शक्यते। न तद्द्विरुक्तौ सर्वेषामनुग्रहो भवति। कथम्? सर्वेषां हि तेषामेकाज्व्यपदेश एकोऽजिति साधारणो हेतुः; तत्र यदा येनाचैकोऽवयव एकाजिति व्यपदिश्यते, तदा तेनैव तस्याक्षिप्तत्वान्न शक्यतेऽपर एकाजिति व्यपदेष्टुम्। ततश्चैकस्य द्विर्वचने विधित्सिते तदेदानीं तेनाचा य एकाच् कश्चिदवयवस्तस्यैव द्विर्वचनं स्यात् नेतरस्य; अनच्कत्वात्। अत्रैतत् स्यात्—"'एकाचः' इति सर्वेषां षष्ठ्या निर्दिष्टत्वात् सर्वेषामेव तेषां द्विर्वचनं कर्तव्यम्, न च तद् युगपत् सम्भवति, अत एकस्य तावत् क्रियते। एकस्मिन् कृते पुनः प्रवृत्त्यन्तरेणापरस्यापि करिष्यते" इति? एतच्च न; यस्य ह्यवयवस्य पूर्वं द्विर्वचनं कृतं तेनैव सहाचो द्विरुक्तत्वान्न युज्यते पुनस्तस्यावयवान्तरेण द्विर्वचनं कर्तुम्। अकृतद्विरुक्तस्य हि द्विर्वचनं क्रियते, न द्विरुक्तस्य; अन्यथा ह्यनवस्था स्यात्। 'अनभ्यासस्य' इति वचनाच्चायुक्तमेवैकस्मिन्नवयवे

**पदमञ्जरी**

तेषु समुदायादिष्वेकाक्षु मध्येऽवयवैकाचः प्रथमा न द्विरुच्यन्ते, कुतः? इत्याह—**तथा हीत्यादि**। अयमभिप्रायः—किमेकस्मिन्नेव प्रयोगे युगपच्च सर्वप्रयोगश्चोद्यते? पर्यायेण वा? किं वा प्रयोगभेदेन कस्यचित् क्वचनेति? न तावदाद्य कल्पः, प्रमित्यनुष्ठानयोर्द्वयोरप्यसम्भवात्। तथा हि—एकाच्त्वेन निरूपितं द्विर्वचनं प्रमातव्यम्, न चैकोऽवयवो युगपदनेकावयवत्वेन शक्यो निरूपयितुम्, तत्कथं युगपत्प्रमीयताम्, प्रमितं वा कथमनुष्ठीयताम्? न ह्येकस्मिन्नेकाचि द्विरुच्यमाने तदैवान्य एकाच्छक्यो द्विर्वक्तुम्; वाचः क्रमभावित्वात्। नापि द्वितीयः; 'अनभ्यासस्य' इति प्रतिषेधादनवस्थापाताच्च। तस्मात्प्रयोगभेदेन सर्वप्रसङ्ग इत्येष एव पक्षः सम्भवति। तत्र 'णिजिर् शौचपोषणयोः' (धा० पा० १०९३) इत्यस्य श्लौ यदा निशब्दस्य द्विर्वचनम्, तदा नेनेक्ति, नेनिक्त इत्यत्र न कश्चिद्दोषः। नेनिजति, अनेनिजुः, नेनिजदित्यत्र 'अदभ्यस्तात्', 'सिजभ्यस्तविदिभ्यश्च', 'नाभ्यस्ताच्छतुः' इत्यद्भावजुस्भावनुम्प्रतिषेधा न स्युः; जकारेण व्यवधानात्, इकारस्येच्छब्दस्य च द्विर्वचने रूपमेव न सिध्यतीत्येष एव दोषः? तस्य परिहारः—'शास्त्रहानिप्रसङ्गात्' इति। अवयवे हि द्विरुच्यमानेऽवयवान्तरविषयसमुदायविषयं च शास्त्रं हीयते। ननु शास्त्रेण प्रमितमेव यदि नानुष्ठीयेत, स्याच्छास्त्रहानिः, अत्र तु पर्यायेण प्रतीयत इत्युक्तम्, तच्चानुष्ठितमेव कथं शास्त्रहानिः? अङ्ग तु भवानाचष्टाम्—पशब्दे द्विरुच्यमाने चकारः किमिति न द्विरुच्यते, तदा तद्द्विर्वचनस्याप्रतीतत्वादिति चेत्किमिति न प्रतीयते, तेन सहैकाच्त्वेनानिरूपितत्वादिति चेत्किमिति न निरूप्यते? मौनमत्रोत्तरम्,

**भावबोधिनी**

इसे इस प्रकार समझना चाहिए—एक बार [ द्वित्वविधायक ] शास्त्र की प्रवृत्ति से सावयव ( अवयवों सहित ) समुदाय अनुगृहीत हो जाता है, कार्ययुक्त हो जाता है। [ जैसे—वृक्ष अपनी शाखादि के साथ हिलता हुआ ही हिलता माना जाता है। वैसे ही यहाँ भी समझना चाहिए। ] पपाच—इसमें व्यपदेशिवद्भाव से प्रथमत्व [ मानकर द्वित्व करना चाहिए। अन्यथा 'पच्' यहाँ तो एक ही एकाच् है। अकेले में प्रथम या द्वितीय आदि व्यवहार कैसे होंगे? इसका समाधान 'व्यपदेशिवदेकस्मिन्' परिभाषा करती है। एक में भी मुख्य के समान व्यवहार

न्यासः

द्विरुक्तेऽपरस्य द्विर्वचनं कर्तुम् । अतो नावयवद्विर्वचने सर्वेषामनुग्रहः सम्भवति । तत्र यस्य द्विर्वचनं न सम्भवति तस्य शास्त्रहानिः स्यात् । तदयुक्तमवयवानां प्रत्येकं द्विर्वचनम् ।

अथैषां युगपदवयवानां द्विर्वचनं न सम्भवतीति प्रयोगान्तरे पर्यायेण करिष्यते पूर्वोक्तदोषपरिहारार्थम् ? एवमपि यदा पचेरच्छब्दस्य द्विर्वचनं स्यात्, तदा पपाचेत्येवमादि न सिध्येत् । किञ्च 'णिजिर् शौचपोषणयोः' इत्यस्माल्लट्, झि, शप्, तस्य जुहोत्यादित्वात् श्लुः, 'श्लौ' इति द्विर्वचनम् । तत्र यदि निशब्दमात्रस्य द्विर्वचनं क्रियते तदा 'णिजां त्रयाणाम्' इति गुणः । अत्रेदानीम् 'अदभ्यस्तात्' इत्यदादेश इष्यते—नेनिजतीति रूपं यथा स्यादित्येवमर्थम्, स च न प्राप्नोति; जकारेण व्यवहितत्वात् । न हि जकारस्याभ्यस्तसंज्ञा, किं तर्हि ? निशब्दस्य; द्विरुक्तत्वात्, जकारस्य चाद्विरुक्तत्वात् । अनेनिजुरिति—अत्र लङादेशस्य झेः 'सिजभ्यस्तविदिभ्यश्च' इति जुस् न प्राप्नोति; पूर्वस्मादेव हेतोः । नेनिजदित्यत्र 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधो न स्यात्; अतएव हेतोः । न च शक्यते वक्तुम्—वचनसामर्थ्याद् व्यवधानेऽपि भविष्यतीति; यदा समुदायस्य द्विर्वचनं तदा वचनस्य सावकाशत्वात् । यदा त्विकारसहितस्य जकारस्य द्विर्वचनं तदा नेनिजतीत्यादिकं रूपमेव न स्यात् । तस्मादयुक्तमवयवानां द्विर्वचनम् । अतः समुदाय एव द्विर्वक्तव्यः ।

अथ पपाचेत्यत्र कथं द्विर्वचनम्, यावता 'एकाचो द्वे प्रथमस्य' इत्युच्यते, न चात्रैकाचः प्रथमव्यपदेशोऽस्ति, प्रथमशब्दो ह्यप्रथमापेक्षो भवति, सम्बन्धिशब्दत्वात्; सत्स्वनेकेषु यस्मात् पूर्वो नास्ति स प्रथमः, यः पुनरेक एव नासौ प्रथमव्यपदेशं लभते, एकश्चात्रैकाच् । तेनात्र द्विर्वचनं न स्यात्, जजागारेत्यादावेव

पदमञ्जरी

तस्माद्यस्मिन् प्रयोगे यच्च यावच्च प्रथमैकाच्त्वेन शक्यते निरूपयितुम्, तस्य सर्वस्य द्विर्वचनं प्रमातव्यमनुष्ठातव्यं च; अन्यथा तु क्रियमाणं प्रतीत्यनुष्ठानयोरुभयोरपि शास्त्रहानिमावहति । तस्मात्समुदायस्य द्विर्वचनमिति । न चात्रापि पक्षेऽवयवविषये शास्त्रहानिः; अवयवात्मकत्वात्समुदायस्य, न खल्ववयवानां द्विर्वचनमकृत्वा समुदायः शक्यो द्विर्वक्तुम्, तद्यथा—वृक्षः प्रचलन्सहावयवैः प्रचलति ।

अथ कथं पपाचेति द्विर्वचनम्, यावता धातुरेवायं न धात्ववयवः, नापि प्रथमः, द्वितीयादिषु हि सत्सु यस्मात्पूर्वो नास्ति स प्रथमः ? कथन्तरां चेयायेत्यादौ यत्रैकोऽजस्येति व्यतिरिक्तोऽन्यपदार्थो नास्ति ? तत्राह—**पपाचेत्यत्रेति** । **एकाच्त्वमपीति** । अपिशब्दात्प्रथमत्वमपि, उभयत्रापि धातुं प्रत्यवयवत्वम् । **व्यपदेशिवद्भावादिति** । मुख्य एकाज्व्यपदेशः, अवयवव्यपदेशश्च येषामस्ति ते व्यपदेशिनो जाग्रादिषु जागित्येवमादयः, तेषामिवैषामपि कार्यं भवतीत्यर्थः । न चेदं वचनम्, लौकिकोऽयं न्यायः, लोके हि 'शिलापुत्रकस्य शरीरम्' इति बहिर्वस्तुभेदेऽसत्यपि भेदव्यवहारोऽवस्थाभेदाश्रयो दृश्यते । शिलापुत्रकः क्रीयमाणविक्रीयमाणत्वाद्यवस्थायुक्तो यो दृष्टस्तस्येदं शरीरमिति परिदृश्यमानावस्थाभेदेन व्यपदिश्यते । पपाचेत्यत्रापि पचेरनन्तप्रयोगविषयस्य सम्प्रति प्रयुज्यमानं लिट्परं रूपमवयव इति शक्यं व्यपदेष्टुम्, प्रथमशब्दोऽपि प्रथमगर्भेण हतेत्यादावसतोऽपि द्वितीयादीन् बुद्धया परिकल्प्य मुख्यप्रथमसाधर्म्याद्यथा लोके एकस्मिन्नपि प्रथम इति प्रयुज्यते, तद्वदत्रापि । इयायेत्यत्रापि इतः, यन्ति, आयन्, अगात्, जिगमिषतीत्यनन्तप्रयोगस्थेनैकोऽयमिकार इत्यन्यपदार्थोऽपि कल्पितः । प्रसिद्धयप्रसिद्धिकृतश्च गौणमुख्यविवेकः । एवंविधस्तु व्यवहारो मुख्यादपि प्रसिद्ध इति न गौणत्वदोषः । एवं च कृत्वा—'व्यथो लिटि', 'भवतेरः', लिटयभ्यासस्योभयेषाम्', 'दीर्घ इणः किति' इत्यादिकमुपपद्यते ।

भावबोधिनी

करना चाहिए । ] इसी प्रकार 'इयाय' तथा 'आर' में [ इण्, ऋ धातुयें एक अच् रूप ही हैं इनमें समुदाय का व्यवहार—] एकाच्त्व का व्यवहार भी व्यपदेशिवद्भाव से ही होता है ।

**न्यासः**

स्यात् ? इयाय, आरेत्यत्रापि कथं द्विर्वचनम्, यावतैकाचस्तदुच्यते, न चैकाच्त्वमस्ति, अज्व्यतिरिक्तस्यानच एकाज्व्यपदेशहेतोरभावात् ? इत्यत आह—**पपाचेत्यत्रेत्यादि** । एकसंख्याव्यवच्छिन्नस्वरसम्बन्धहेतुको व्यपदेशः, स यस्यास्ति स व्यपदेशी । जागर्त्यादिषु धातुषु जागित्येवमादिः । 'तेन तुल्यं वर्त्तते इति व्यपदेशिवत्, तस्य भावो व्यपदेशिवद्भावः । एकाच्त्वमपीत्यपिशब्दाद् द्वितीयत्वमपीति । ततोऽनेन जजागारेत्यत्र यथा वास्तवप्रथमत्वे जागृइत्येतस्य प्रथमस्यैकाचो द्विर्वचनं भवति, तथा परमार्थतो सत्यपि प्रथमत्वे प्रथमस्यैकाचो द्विर्वचनं भवति व्यपदेशिवद्भावेन पपाचेत्यत्र पच्छब्दस्य । इयाय, आरेत्यत्राप्यसति वास्तव एकाच्त्वे द्वितीयत्वे च व्यपदेशिवद्भावेन द्विर्वचनं भवति; यथा–अटिटिषतीत्यत्र वस्तुत एवैकाचो द्वितीयस्य टिशब्दस्येति ।

न चैतद् वक्तव्यम्—'यस्मादप्रथमस्यापि पच् इत्येवम्प्रकारस्य व्यपदेशिवद्भावेन द्विर्वचनं भवति' इति । अत्र 'लिट्यभ्यासस्योभयेषाम्' इति वचनं ज्ञापकम्, असत्यपि वास्तव एकाच्त्वे द्वितीयत्वे च पुनर्व्यपदेशिवद्भावेन चेण्प्रभृतीनां द्विर्वचनं भवतीति । अत्राभ्यासस्य दीर्घविधानार्थम् 'दीर्घ इणः किति' इति वचनं ज्ञापकम् । इह 'आ दशभ्यः संख्याः संख्येये वर्त्तन्ते, न तु संख्यानमात्रे' इति द्विशब्दोऽत्र संख्येये वर्त्तते । तच्च संख्येयं शब्दरूपं वा स्याद् ? उच्चारणं वा ? तत्र यदि शब्दरूपं संख्येयं स्यात् तदा 'द्वे' इत्यनेन द्विशब्दरूपे भाव्यमानतया निर्दिश्येते इति । अत एकाच इत्यस्य च स्थाने योगलक्षणः सम्बन्धो भवति अतः 'स्थाने द्विर्वचनम्' इत्येष पक्षो भवति । तदैकाच इति स्थानषष्ठी जायते ।

अथ पुनरुच्चारणं संख्येयं तदा स्थान्यादेशसम्बन्धो न भवति । उच्चारणं नाम शब्दानुगतो धर्मः । यद्यसावादेशो विधीयते तदा निवृत्तिधर्मा स्थानी भवतीति शब्दस्य स्थानिनो निवृत्त्या भवितव्यम्, ततश्चोच्चारणमपि न स्यात्; तस्य तद्धर्मत्वात् । तस्मादुच्चारणे संख्येये स्थाने द्विर्वचनं न सम्भवतीति 'द्विष्प्रयोगो द्विर्वचनम्' इत्येष पक्षो भवतीति । तदैकाच इति 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी, सा

**पदमञ्जरी**

अत 'द्वे' इत्यस्य संख्येयापेक्षायां शब्दानुशासनप्रस्तावाच्छब्दरूपे संख्येये 'षष्ठी स्थानेयोगा' इति वचनादेकाचः प्रथमस्येति स्थानषष्ठ्यां सत्यामेकस्य स्थाने द्वे शब्दरूपे भवत इत्यर्थो भवति, यथा—'अस्तेर्भूः' इत्यादौ, तदा 'स्थाने द्विर्वचनम्' इत्ययं पक्षो भवति । यदा शब्दसम्बन्धिनी उच्चारणे संख्येये क्रियारूपस्य शब्दस्य च स्थान्यादेशसम्बन्धायोगादध्याहृतोच्चारणक्रियापेक्षयैकाच इति कर्मषष्ठी–एकाचो द्वे उच्चारणे भवतः, एकाचं द्विरुच्चारयेदित्यर्थः, तदा 'द्विःप्रयोगो द्विर्वचनम्' इत्ययं पक्षो भवति । तत्राद्ये पक्षे 'स्थानेऽन्तरतमः' इति वचनाच्छब्दतश्चान्तरतमयोर्द्वयोर्विधानाद् यद्यपि ये केचन प्राप्नुत इति दोषानवतारः । चिचीषतीत्यत्र तु 'सन्यङोः' इति षष्ठ्याः स्थापयिष्यमाणत्वाच्चिस् इत्यस्य स्थाने चिस्चिस् इति शब्दान्तर आदेशे सति तत्स्थस्य सकारस्य सन्त्वे प्रमाणाभावात् 'अज्झनगमां सनि' इति दीर्घत्वं न स्यात्; आदेशस्य स्थानिवद्भाव उच्यते नादेशावयवस्य स्थान्यवयववद्भाव इति स्थानिवद्भावेनापि सन्त्वं नास्ति । तस्य तु यत्र सन्मात्रस्य द्विर्वचने स्थानिवद्भावेन सन्त्वं सोऽवकाशः, यथा - इणः सन्, ईषिषतीति ।

ननु शब्दान्तरप्राप्त्या द्विर्वचनमनित्यम्, अप्राप्त्या तु दीर्घत्वमित्युभयोः परत्वाद्दीर्घत्वे कृते द्विर्वक्ष्यते ? इक तर्हि ह्वयतेः सनि ह्वास् इत्यस्य द्विर्वचनम्, समुदायस्य समुदाय आदेशस्तत्र आदेश एतन्नास्ति—इयं प्रकृतिरयं प्रत्यय इति, ततश्च 'ह्वोऽभ्यस्तस्य' इति संप्रसारणं न स्यात्, जुहाव जुहवतुरित्यादावेव तु स्याद्—यत्र ह्वामात्रस्य द्विर्वचनात्स्थानिवत्त्वम् ? नैष दोषः; 'ह्वोऽभ्यस्तस्य' इति व्यधिकरणे षष्ठ्यौ, ह्वयतेरभ्यस्तस्य भविष्यतः प्रागेव संप्रसारणं परपूर्वत्वम् । 'हलः' इति 'अज्झनगमाम्' इति वा दीर्घत्वम्, 'ह्वास्' इत्यस्य

**( तै० सं० ४.६.३.२ )। अनड्वान् दाधान ( अथर्व० ४.११.१ )। 'व्रतं मीमाय' ( अथर्व० ५.११.३ )। दाधार। स तूताव ( ऋ० १.९४.२ )।**

**दीर्घश्चैषां छन्दसि प्रत्ययविशेषे एव दृश्यते, ततोऽन्यत्र न भवति—तुतोज शबलान् ॥**

## २४४८. लिटि धातोरनभ्यासस्य ॥ ८ ॥ ( २१७७ )

**लिटि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पपाच। पपाठ। प्रोर्णुनाव। 'वाच्य ऊर्णोर्णुवद्भावः' इति वचनाद् ऊर्णोतेः "इजादेः" ( ३.३.३९ ) इत्याम्न भवति।**

**न्यासः**

**दीर्घश्चैषामित्यादिना** यस्य सत एव साधुत्वमनेन क्रियते, स च दीर्घश्छन्दस्येव दृश्यते, न भाषायाम्। तत्रापि च्छन्दसि विषये प्रत्ययविशेषे कानजादौ, न प्रत्ययमात्रे। **ततोऽन्यत्र न भवतीति**। यथोक्ताद् विषयादन्यत्र न भवतीत्यर्थः। तुजेश्छन्दसि कानचि दृष्टः, ततोऽन्यत्र भाषायां छन्दस्यपि णलादौ प्रत्ययान्तरे न भवति। डुमिञ् छन्दसि णलि दृष्टः; ततोऽन्यत्र भाषायां छन्दस्यपि कानजादौ प्रत्ययान्तरे न भवति। यच्चैवं तेनास्यान्यत्राव्यापारः। सत एव दीर्घस्य साधुत्वमात्रमनेन विधीयते। न चान्यत्र दीर्घोऽस्ति यस्यानेन विधीयेत साधुत्वम्। एतच्च प्रकारवाचिन आदिशब्दाल्लभ्यत। **तुतोजेति**। भाषायां प्रयोगः। यदि तर्हि च्छन्दसि सत एव दीर्घस्य साधुत्वमनेन विधीयते, 'व्यत्ययो बहुलम्' इत्यनेन सुब्व्यत्ययस्य विहितत्वादपार्थकमेतत्? नापार्थकम्; तस्यैव प्रपञ्चार्थत्वात् ॥ ७ ॥

**लिटि धातोरनभ्यासस्य** ॥ 'एकाचो द्वे प्रथमस्य' इति, 'अजादेर्द्वितीयस्य' इति चानुवर्त्तते। धातोरित्यवयवयोगा षष्ठी। सामानाधिकरण्ये हि प्रथमस्य, द्वितीयस्येति च सम्बन्धो नोपपद्यते। 'अनभ्यासस्य' इति च प्रतिषेधाच्च। सामानाधिकरण्ये हि प्रतिषेधोऽनर्थकः स्यात्, न ह्यभ्यासवानेकाज् धातुः सम्भवति। **यथायोगमिति**।

**पदमञ्जरी**

न शक्यं परिगणयितुम्, अन्येषामपि दर्शनात्—पुरुषः, नारक इति। अनेकाजङ्गत्वाच्च येषां चारभ्यते तेषामेव तस्मिन्प्रयोगे न दृश्यते—मामहानः, ममहान इति वा ॥ ७ ॥

**लिटि धातोरनभ्यासस्य ॥ धातोरिति किमिति**। लिटि परतोऽन्यो न सम्भवति; तस्य धातोरेव

**भावबोधिनी**

इन धातुओं के वैदिक रूपों में प्रत्ययविशेष के परे रहते ही दीर्घ देखा जाता है, अतः उनसे भिन्न में नहीं होता है—तुतोज शबलान् हरीन्। [ यह लौकिक रूप है। यद्यपि वेद में व्यत्यय के बल से प्रस्तुत कार्य सम्भव है, सूत्र की आवश्यकता नहीं है फिर भी उस कार्य की स्पष्टता के लिये यह सूत्र बनाया गया है। उदा०—के सभी रूप भूतकाल अर्थ के वाचक हैं ] ॥ ७ ॥

लिट् परे रहने पर अनभ्यास धातु के अवयव प्रथम एकाच् के अथवा द्वितीय एकाच् के, जिसके भी उचित हैं, दो रूप हो जाते हैं, द्वित्व होता है। उदा०—पपाच। पपाठ। [ पच + लिट् = तिप् = णल् = अ, प्रस्तुत सूत्र से द्वित्व, प्रथम रूप की अभ्यास संज्ञा, उसका आदि हल् शेष उपधावृद्धि—पपाच। पठ + लिट्। ] प्रोर्णुनाव। [ प्र + ऊर्णुञ् = ऊर्णु + लिट् = तिप् = णल् = अ, 'अजादेर्द्वितीयस्य' सूत्र के अनुसार द्वितीय एकाच् णु = नु का द्वित्व, प्रऊर्नुनु + अ, वृद्धि आवादेश, णत्व—प्र + ऊर्णुनाव, दोनों के स्थान पर 'आद्गुणः' से गुण—प्रोर्णुनाव। ] ❀ ऊर्णु का णुवद्भाव कहना चाहिए। ❀ इस वचन के अनुसार 'इजादेश्च गुरुमतोऽनृच्छः' सूत्र से आम् प्रत्यय नहीं होता है। [ अतः प्रोर्णुवाञ्चकार यह रूप नहीं होता है। ]

लिटीति किम्? कर्त्ता। हर्त्ता। **धातोरिति किम्? 'ससृवांसो विश्रृण्विरे'** (ऋ० ४.८.६)। **'सोममिन्द्राय सुन्विरे'** (ऋ० ७.३२.४)। **अनभ्यासस्येति किम्? 'कृष्णो नोनाव वृषभो यदीदम्'** (ऋ० १.७९.२)। **नोनूयतेर्नोनाव। 'सम्मान्या मरुतः सम्मिमिक्षुः'** (ऋ० १.१६५.१)। **लिटि उसन्तः।**

**न्यासः**

हलादेः प्रथमस्यैकाचोऽवयवस्य, अजादेस्तु द्वितीयस्येत्येष यथायोगार्थः। **प्रोर्णुनावेति।** 'ऊर्णुञ् आच्छादने' 'अजादेर्द्वितीयस्य' इति नुशब्दस्य द्विर्वचनम्। रेफस्य तु 'न न्द्राः' इति प्रतिषेधान्न भवति। ननु चोर्णोतेरिजादित्वात् 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि कृते 'आमः' इति लेर्लुक् 'कृञ्चानुप्रयुज्यते लिटि' इति कृञो लिट्परस्यानुप्रयोगः, ततश्च प्रोर्णुवाञ्चकारेति भविष्यति, तत्कथं प्रोर्णुनावेति? अत आह—**वाच्य ऊर्णोरित्यादि।** नुवद्भावेन यथा नौतेराम् न भवति, तथोर्णोतेरपीति दर्शयति।

**विश्रृण्विर इति।** 'श्रु श्रवणे', 'लिटस्तझयोरेशिरेच्' इतीरेच्। 'छन्दस्युभयथा' इति लिटः सार्वधातुकत्वम्, ततः 'श्रुवः श्रृ च' इति श्नुः, श्रृभावश्च। 'हुश्नुवोः सार्वधातुके' इति यणादेशः। **सुन्विरे इति।** 'षुञ् अभिषवे'। धातुग्रहणादिह विकरणस्य द्विर्वचनं न भवति। यस्तत्र धातुस्तस्य विकरणेन व्यवहितत्वान्न भवतीत्येके। छान्दसत्वादित्यपरे, सर्वे विधयश्छन्दसि विकल्प्यन्त इति। एतच्च 'व्यत्ययो बहुलम्' इत्यस्माद् बहुलग्रहणाल्लभ्यते। एवञ्च कृत्वा 'द्विर्वचनप्रकरणे छन्दसि वा' इत्येतन्न कर्त्तव्यं भवति। **नोनावेति।** 'णु स्तुतौ', यङ्, द्विर्वचनम्, 'गुणो यङ्लुकोः' इति गुणः, नोनूय इति स्थिते 'यङोऽचि च' इति यङो लुक्, लिट्। 'अमन्त्रे' इति निषेधादाम्न भवति। **सम्मिमिक्षुरिति।** 'मिह सेचने', अतः सम्पूर्वात्, सन्, 'हो ढः' इति ढत्वम्, 'षढोः कः सि'

**पदमञ्जरी**

विधानादिति प्रश्नः। **विश्रृण्विरे इति।** 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'श्रुवः श्रृ च' इति श्नुप्रत्ययः श्रृभावश्च। अत्र विकरणान्तस्य समुदायस्य लिट्परस्याधातुत्वात्तदीयस्य प्रथमस्यैकाचो द्विर्वचनाभावः। ईक्षाञ्चक्रे इत्यादौ त्वामन्तस्य लिट्परत्वं नास्ति; 'आमः' इति लुका लुप्तत्वादिति द्विर्वचनाभावः सिद्धः। **अनभ्यासस्येति किमिति।** न तावद् नुनाव, पपाचेत्यादौ तत्रैव लिटि पुनर्द्विर्वचनप्रसङ्गः; सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्, अनवस्थापाताच्च। यस्तु प्रत्ययान्तरे सनादौ साभ्यासः, न तस्य लिटि सम्भवः; ततो हि 'कास्प्रत्ययाद्' इत्यामा भवितव्यमिति प्रश्नाः। **नोनावेति।** 'अमन्त्रे' इति प्रतिषेधादत्रामभावः। **सम्मिमिक्षुरिति।** सम्पूर्वान्मिहेः सनि 'हो ढः', 'षढोः कः सि', लिट्, झेरुस्, अतो लोपः। **द्विर्वचनप्रकरण**

**भावबोधिनी**

लिट् परे रहते? इसका क्या फल है? **कर्त्ता।** हर्त्ता। [ यहाँ कृ + लुट्, हृ + लुट् का प्रसङ्ग है। अतः द्वित्व नहीं होता है। ] धातु का ही होता है—इसका क्या फल है? ससृवांसो विश्रृण्विरे। सोममिन्द्राय सुन्विरे। [ यहाँ √ श्रु श्रवणे और √ षुञ् अभिषवे के लिट् के रूप हैं। इन वैदिक प्रयोगों में श्नु = नु विकरण होता है और तद्विशिष्ट समुदाय को धातु नहीं माना जाता इसलिए द्वित्व नहीं होता है। ] अनभ्यास का द्वित्व होता है—इसका क्या फल है? कृष्णो नोनाव वृषभो यदीदम्। [ √ णु स्तुतौ धातु से पौनः पुन्य अर्थ में यङ्, द्वित्व, 'गुणो यङ्लुकोः' सूत्र से गुण—नोनूय बनाकर 'यङोऽचि च' सूत्र से यङ् का लुक् कर देने पर 'नोनू' इतना ही बचता है—नोनू + लिट् = तिप् = णल् = अ। वृद्धि, आव् आदेश—नोनाव। यहाँ प्रथम द्वित्व के समय प्रथम की अभ्यास संज्ञा हो चुकी है। अतः दुबारा द्वित्व नहीं होता है। ] सम्मान्या मरुतः सम्मिमिक्षुः। लिट् परे उस्-प्रत्ययान्त रूप है। [ सम् उपसर्ग पूर्वक √ मिह् सेचने से सन्, मिह् = स, ह् का ढ्, 'षढोः कः सि' सूत्र से ढ् का क् संमिक् + स, द्वित्व, हलादिशेष, स् का ष्—सम्मिमिक् + ष् क्षत्व—सम्मिमिक्ष। इस सन्नन्त से लिट् = झि, 'सिजभ्यस्तविदिभ्यश्च' सूत्र से 'झि' का जुस् = उस्, अका लोप, स् का रुत्व विसर्ग। ]

❀ द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् ❀ ( म० भा० )। 'यो जागार तमृचः कामयन्ते' ( ऋ० ५.४४.१४ )। दाति प्रियाणीति ( ऋ० ४.८.३ ) ॥

## २४४९. सन्यङोः ॥ ९ ॥ ( २३९८ )

'धातोरनभ्यासस्य' इति वर्त्तते। 'सन्यङोः' इति च षष्ठ्यन्तमेतत्। सनन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पिपक्षति। पिपतिषति। अरिरिषति। उन्दिदिषति।

### न्यासः

इति कत्वम्, 'एकाचः' इत्यादिनेट्प्रतिषेधः, 'हलन्ताच्च' इति कित्वादगुणः, द्विर्वचनम्, षत्वम्; सम्मिक्ष इति स्थिते लिट्, 'अमन्त्रे इति प्रतिषेधादाम् न भवति। झि, तस्य उस्, अतो लोपः।

जागारेति। लिट्। दातीति। श्लुः। वेति वचनात् पक्षे जजागार, ददातीत्यपि भवति ॥ ८ ॥

सन्यङोः ॥ सन्यङोरिति सप्तम्यन्तमिदं वा स्यात्? षष्ठ्यन्तं वा? तत्र यदि सप्तम्यन्तं स्यात् तदायमर्थः स्यात्—सन्यङोः परतः इति, ततश्चेटः सन्भक्तत्वात् सन्ग्रहणेन ग्रहणात्, सनश्चेह द्विर्वचननिमित्तत्वात् निमित्तस्य च कार्यिणोऽयोगादिटो द्विर्वचनं न स्यात्, ततश्चाटिटिषतीत्यादि न सिध्येत्। षष्ठ्यन्ते त्वस्मिन् प्रत्ययग्रहणपरिभाषया तदन्त उपस्थापिते सत्ययमर्थो जायते—सनन्तस्य यङन्तस्य च यः प्रथम एकाज् द्वितीयो वा तेनेटो द्विर्वचनं भवतीति। तथा चाटिटिषतीत्यादि सिध्यतीत्येतदालोच्याऽऽह—सन्यङोरिति षष्ठ्यन्तमेतदिति। अत्र च ज्ञापको योगविभाग इति। यदि हि 'सन्यङोः' इति सप्तम्यन्तं स्यात्, 'श्लुसन्यङः' इत्येकमेव योगं कुर्यात्। ननु चासत्यपि प्रयोजने ज्ञापकमस्ति, अस्ति चेह योगविभागस्य प्रयोजनम्, किं तत्? सामर्थ्याद् यथासंख्यं यथा स्यात्—सनि प्रथमस्य, यङि द्वितीयस्येति? नैतदस्ति; यदि ह्यत्र यथासंख्यमभिप्रेतं स्यात् तदा 'नीग्वञ्चु' इत्यादिना वञ्चुप्रभृतीनामभ्यासस्य यङ्लुको नीगागमविधानं नोपपद्यते। यथासंख्ये हि सति यद्येषां द्विर्वचनं नास्तीति नीगागमं न विदध्यात्। तस्माद् योगविभागात् षष्ठ्यन्तमेतदित्यवसीयते।

### पदमञ्जरी

इति। प्रकरणग्रहणान्न केवलं सर्वं द्विर्वचनं छन्दसि विकल्प्यते। एवं च 'धातोः', 'अनभ्यासस्य' इत्युभयमुत्तरार्थम्। एतस्मादेव विकल्पाद्विकरणान्तसाभ्यासयोर्न भविष्यति ॥ ८ ॥

सन्यङोः ॥ षष्ठ्यन्तमेतदिति। तत्र प्रत्ययग्रहणपरिभाषया ( व्या० परि० ७ ) तदन्तस्य द्विर्वचनम्, न तु सन्यङोरेव, यदाह—सनन्तस्य यङन्तस्य चेति। सप्तमीपक्षे तु सन्यङोः परतः पूर्वस्य धातोर्द्विर्वचनं भवतीत्ययमर्थः स्यात्, ततश्च सन्भक्तस्येटो द्विर्वचनं न स्यात्—अटिटिषति, अशिशिषतीत्यादौ; तथा प्रतीषिषवीत्यादौ सनो न स्यात्। एवमरार्यत इत्यादौ यङः, तथा सप्तम्यामिष्टायां पूर्वेणापरेण वा सहैकमेव योगं कुर्यात्।

### भावबोधिनी

❀ द्विर्वचन के प्रकरण में वेद में विकल्प से होता है—ऐसा कहना चाहिए। ❀ उदा० —यो जागार तमृचः कामयन्ते। दाति प्रियाणि [ पहला लिट् का और दूसरा लट् का रूप है। पहले का जजागार और दूसरे का ददाति यह रूप भी होता है ] ॥ ८ ॥

'धातोः अनभ्यासस्य' इनकी अनुवृत्ति होती है। 'सन्यङो' यह षष्ठ्यन्त है। [ सप्तम्यन्त नहीं है। ] सन्नन्त और यङन्त धातु के अनभ्यास अवयव के प्रथम अथवा द्वितीय एकाच् के, जिसके भी उचित है, दो हो जाते हैं, द्वित्व हो जाता है। उदा०—पिपक्षति। [ पच्+सन् यहाँ सन्नन्त के द्वित्व में प्रथम एकाच् केवल पच् का द्वित्व होता है, अभ्यास कार्य, हलादिशेष—पपच्+स, कुत्व, षत्व, क्षत्व, अभ्यास के 'अ' का इत्व 'सन्यतः' सूत्र से—पिपक्षति। ] पिपतिषति। [ पत्+सन् ] अरिरिषति। [ ऋ+सन् ] उन्दिदिषति। [ उन्दी = उन्द्+सन्। ]

**यङन्तस्य—पापच्यते । अटाटचते । यायज्यते । अरार्यते । प्रोर्णोनूयते ।**
**अनभ्यासस्येत्येव—जुगुप्सिषते । लोलूयिषते ॥**

## २४५०. श्लौ ॥ १० ॥ ( २४९० )

**श्लौ परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः । जुहोति । बिभेति । जिह्रेति ॥**

**न्यासः**

**अटाट्यत इति ।** यङ्विधौ 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानम्' इति यङ् । **प्रोर्णोनूयत इति ।** 'अकृत्सार्वधातुकयोः' इति दीर्घः । **जुगुप्सिषत इति ।** गुपेः 'गुप्तिज्किद्भ्यः सन्' इति सन्, तदन्ताद् 'धातोः कर्मणः समानकर्तृकात्' इत्यादिनेच्छायां पुनः सन् । **लोलूयिषत इति ।** यङन्तात् सन् ॥ ९ ॥

**श्लौ ॥** श्लौ परत इति । ननु च प्रत्ययादर्शनं श्लुः तच्चाभावरूपम्, न चाभावे पौर्वापर्यमस्ति, तदयुक्तमुक्तम्—श्लौ परत इति ? स्थानिनः परत्वात्तस्यापि तद्द्वारेण पौर्वापर्यमौपचारिकं गृहीत्वैव युक्तमुक्तमित्यदोषः ॥ १० ॥

**पदमञ्जरी**

**जुगुप्सिषत इति ।** गुपे 'गुप्तिज्किद्भ्यः सन्', तत्र सनि द्विर्वचनम्, पुनरिच्छासन्, तत्राकृतत्वात्पुनर्द्विर्वचनप्रसङ्गः । **लोलूयिषते इति ।** अत्रापि यङि द्विर्वचनम्, न तु सनीति द्विर्वचनप्रसङ्गः ।

**भागवृत्तिकारस्त्वाह**—"पूर्वसूत्रे 'धातोरनभ्यासस्य' इति द्वयमपि प्रत्याख्याय **भाष्यकारेणोक्तम्**—'तिष्ठतु तावत्सांन्यासिकं धातुग्रहणम्' इति, उत्तरार्थमिति भावः । अनभ्यासग्रहणस्य तु न किञ्चित्प्रयोजनमुक्तम्, ततश्चोत्तरार्थमपि तन्न भवतीति **भाष्यकारस्याभिप्रायो** लक्ष्यते । तेनात्र भवितव्यमेव द्विर्वचनेन" इति ॥ ९ ॥

**श्लौ ॥ श्लौ परत इति ।** वर्णानामपि युगपदवस्थानाभावाद् बुद्धिपरिकल्पितं पौर्वापर्यम्, तच्चाभावरूपेण श्लुनाप्युपपद्यत इति भावः । **अनभ्यासस्येति ।** अधिकारमात्रेणैतदुक्तम्, न तु श्लौ साभ्यासो भवति । एवं **द्वितीयस्य** चेत्यत्र द्रष्टव्यम् ॥ १० ॥

**भावबोधिनी**

प्रस्तुत सूत्र से द्वित्व और अभ्यासकार्य होता है । सन्नन्त के उदा०—हैं । ]

यङन्त के द्वित्व के उदा०—पापच्यते । [ पुनः पुनः अतिशयेन वा पचति—इस अर्थ में 'धातोरेकाचो हलादेः क्रियासमभिहारे' सूत्र से यङ्—पच् + यङ् = य । प्रथम एकाच् पच् का द्वित्व, अभ्यासकार्य, 'दीर्घोऽकितः' सूत्र से अभ्यास का दीर्घ पापच्य + लट् । ] अटाट्यते । [ √ अट् इससे 'सूचिसूचिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानम्' इस वार्तिक से यङ् होता है अट् + यङ् = अट्य, द्वितीय एकाच् ट्य का द्वित्व, हलादिशेष, अभ्यास का दीर्घ अटाट्य + लट् = त ] यायज्यते । [ यज् + यङ् प्रथम एकाच् का द्वित्वादि करने के बाद अभ्यास का दीर्घ । ] अरार्यते । [ ऋ + यङ्, 'यङि च' पा० सू० ७।४।३० सूत्र से ऋ का गुण, रपर—अर्य, द्वितीय एकाच् 'र्य' का द्वित्व, हलादिशेष, अभ्यास का दीर्घ—अरार्य + लट् = त ] प्रोर्णोनूयते । [ प्र + ऊर्णुञ + यङ्, द्वितीय एकाच् 'नू' का द्वित्व, णत्व, गुणादि होने पर रूप बनता है । ]

अनभ्यास का ही द्वित्व होता है—जुगुप्सिषते । लोलूयिषते । [ इनमें एक बार द्वित्व होने से अभ्यास संज्ञा हो चुकी है अतः दुबारा सन् प्रत्यय करने पर भी द्वित्व नहीं होता है ] ॥ ९ ॥

श्लु परे रहते अभ्यासरहित धातु के अवयव प्रथम अथवा द्वितीय एकाच् का जिसका भी उचित है, द्वित्व होता है । उदा०—जुहोति । बिभेति । जिह्रेति । [ √ हु, √ त्रिभी, √ ह्रीञ् धातुयें जुहोत्यादिगण की हैं । अतः लट् परे रहते शप् का श्लु होता है, यह लोपसंज्ञक हैं अतः लुक् होने पर भी औपचारिक परत्व मान कर द्वित्व और अभ्यासादि कार्य होते हैं । अतः श्लु = लुक् के अभावरूप होने पर भी कोई दोष नहीं है ] ॥ १० ॥

## २४५१. चङि ॥ ११ ॥ ( २३१९ )

**चङि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। अपीपचत्। अपीपठत्। आटिटत्। आशिशत्। आर्दिदत्।**

**पचादीनां ण्यन्तानां चङि कृते णिलोप उपधाह्रस्वत्वं द्विर्वचनम्—इत्येषां कार्याणां प्रवृत्तिक्रमः। तथा च—'सन्वल्लघुनि चङ्परे' ( ६.४.९३ ) इति सन्वद्भावो विधीयमानो ह्रस्वस्य स्थानिवद्भावान्न प्रतिषिध्यते।**

**न्यासः**

**चङि ॥ अपीपचदित्यादि**। पचादिभ्यो ण्यन्तेभ्यो लुङ्, अडागमः, च्लिः, 'णिश्रि' इत्यादिना च्लेश्चङ्। अत्रेदानीं द्विर्वचनं प्राप्नोति णिलोपश्च; द्वयोरपि कृताकृतप्रसङ्गित्वान्नित्यत्वम्, तत्रश्चोभयोस्तुल्यबलत्वात् परत्वाण्णिलोपः। **आटिटदिति**। अत्रापि णिलोपे कृते णिलोपस्य स्थानिवत्वाद् द्विर्वचनं भवत्येव। स्थानिवद्भावस्तु 'द्विवर्वचनेऽचि' इत्यनेन।

णिलोपोऽपि नित्यः, अकृतेऽपि द्विर्वचने तेन भवितव्यम्, कृतेऽपि। न च शब्दान्तरप्राप्तिः; द्विष्प्रयोगो द्विर्वचनं भवतीति कृत्वा। स्थाने द्विर्वचनं त्वत्र न स्वीक्रियते; लक्ष्यानुरोधात्। ततश्चोभयोस्तुल्यबलयोः परत्वाण्णिलोपः। तत्र कृते द्विर्वचनं प्राप्नोत्युपधाह्रस्वश्च; तयोरपि कृताकृतप्रसङ्गित्वान्नित्यत्वम्। द्विर्वचनमपि ह्यकृते ह्रस्वत्वे प्राप्नोति, कृतेऽपि। न च शब्दान्तरप्राप्तिः; 'एकदेशविकृतमनन्यवद्भवति' इति वचनात्। ह्रस्वत्वमपि कृते द्विर्वचने प्राप्नोत्यकृतेऽपि। न च शब्दान्तरप्राप्तिः, स एव शब्दो द्विरुच्यत इति कृत्वा। स्थाने द्विर्वचनं त्वत्र नाश्रीयते; लक्ष्यानुरोधात्। तत्रोभयोस्तुल्यबलयोः परत्वाद् ह्रस्वत्वम्, ततो द्विर्वचनेन 'सन्वल्लघुनि' इति सन्वद्भावादित्वम्, 'दीर्घो लघोः' इति दीर्घः—इत्येतानि कार्य्याणि कर्त्तव्यानि। अत एवाह वृत्तौ—**पचादीनामित्यादि**। किं पुनः कारणं तथा शास्त्रप्रवृत्तिः क्रियते, यथैषां कार्याणामयं प्रवृत्तिक्रमो भवति ? इत्याह—**तथा चेत्यादि**। **ह्रस्वस्य स्थानिवद्भावान्न प्रतिषिध्यत इति**। तस्याभावादिति भावः। हेतौ चेयं पञ्चमी। यथा—'तदशिष्यं संज्ञाप्रमाणत्वात्' इति। अत्र हि 'सन्वल्लघुनि' इत्यादिना लघुनि धात्वक्षरे परे

**पदमञ्जरी**

**चङि ॥ एषां कार्याणां प्रवृत्तिक्रम इति**। एतच्च 'अचः परस्मिन्' इत्यत्रोपपादितम्, तत एवावधातव्यम्। न केवलं न्याय्यत्वादयं क्रम आश्रीयते, किन्तु प्रयोजनमप्यनन्यथासिद्धमस्तीत्याह—**तथा हीति**। **ह्रस्वस्य स्थानिवद्भावान्न प्रतिषिध्यत इति**। 'ह्रस्वस्य स्थानिवद्भावात्प्रतिषिध्यते' इति यत्तन्न भवति, स्थानिवद्भावाभावादित्यर्थः। कथं पुनरस्मिन् कार्यक्रमे सति स्थानिवद्भावो न भवति ? इत्यत आह—**अनादिष्टादच इति**। [ इतिकरणो हेतौ ? ]। 'अचः परस्मिन्' इत्यत्र योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावो भवतीति

**भावबोधिनी**

चङ् परे रहते अनभ्यास वाले धातु के अवयव प्रथम अथवा द्वितीय एकाच् जो भी उचित है उसका द्वित्व होता है। उदा०—अपीपचत्। अपीपठत्। आटिटत्। आशिशत्। आर्दिदत्। [ पच् से प्रेरणार्थक णिच् करके लुङ् का रूप है। पच् + णिच् = इ + लुङ्, अट् आगम, 'च्लि लुङि' सूत्र से च्लि और 'णिश्रिद्रुश्रुभ्यः कर्तरि चङ्' ( पा० सू० ३ १।४८ ) से च्लि का चङ् = अ, यहाँ द्वित्व भी प्राप्त है और 'णेरनिटि' सूत्र से णिलोप भी प्राप्त है, दोनों नित्य विधियाँ हैं अतः परवर्ती होने से पहले णि का लुक् हो जाता है—अपच् + अ + लुङ्=तिप्, प्रस्तुत सूत्र से द्वित्व, हलादिशेष, 'सन्यतः' सूत्र से अभ्यास का इत्व, 'दीर्घो लघोः' सूत्र से दीर्घ—अपीपच् + अ + ति, 'इतश्च' सूत्र से इ का लोप। इसी प्रकार पठ् + णिच् + लुङ् यहाँ णिलोप का स्थानिवद्भाव करके धातु का द्वित्व होता है तब णिलोप होता है। आशिशत् भी इसी प्रकार है। अर्द् + णिच् + लुङ्। ]

**यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावो भवति। न चास्मिन् कार्याणां क्रमेणानादिष्टादचः पूर्वोऽभ्यासो भवतीति। आटिटदिति 'द्विर्वचनेऽचि' (१.१.५९) इति स्थानिवद्भावाद् द्वितीयस्यैकाचो द्विर्वचनं भवति॥**

**न्यासः**

सन्वद्भावो विधीयमानो ह्रस्वस्य स्थानिवद्भावाद्धेतोः प्रतिषिध्यते, तस्मिन् सति लघुता निवर्त्तत इति कृत्वा। स चास्मिन् क्रमे सति स्थानिवद्भावो न सम्भवतीति सन्वद्भावो न प्रतिषिध्यते; प्रतिबन्धहेतोरभावात्।

कथं पुनरस्मिन् क्रमे सति कार्याणां स्थानिवद्भावो न सम्भवतीत्याह—**यो ह्यनादिष्टादित्यादि**। 'अचः परस्मिन् पूर्वविधौ' इत्यत्र यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावो भवतीत्येष सूत्रार्थो व्यवस्थितः। न चास्मिन् क्रमे सत्यत्राभ्यासोऽनादिष्टादचः पूर्वो भवति, किं तर्हि? आदिष्टादेव। तेन तस्य विधौ कर्त्तव्ये ह्रस्वस्य स्थानिवद्भावो न भवतीति लघुत्वं न निवर्त्तते। ततश्च 'सन्वत्' इत्यादिना लघुनिमित्तकः सन्वद्भावो विधीयमानो न व्याहन्यते। यदि पुनर्द्विर्वचनं कृत्वा ह्रस्वादि कार्यं विधीयते ततोऽनादिष्टादचः पूर्वोऽभ्यासः स्यात्, ततश्च तस्य विधौ कर्त्तव्ये ह्रस्वस्य स्थानिवद्भाव. स्यादेव। एवं 'दीर्घञ्च' इति लब्धस्वभावया गुरुसंज्ञया लघुसंज्ञायां निरस्तायां सन्वद्भावोऽन्यत्र सावकाश इह न स्यात्। कः पुनस्तस्यावकाशः? अशीशमदित्यादि। अत्र हि णौ परभूते प्रागेव 'मितां ह्रस्वः' विधीयते।

यदि तर्ह्ययं कार्यक्रमः, आटिटदित्यत्र णिलोपे कृते द्वितीयस्यैकाचष्टिशब्दस्य द्विर्वचनं न प्राप्नोति; तदभावात्? इत्यत आह—**आटिटदित्यत्र द्विर्वचनेऽचीत्यादि**। अथ किमर्थमेतानि त्रीणि सूत्राणि पृथक् क्रियन्ते—'लिटि धातोरनभ्यासस्य', 'श्लौ' 'चङि' इति, न 'लिट्श्लुचङ्क्षु' इत्येक एव योगः क्रियताम्; तत्रायमप्यर्थः—पुनः पुनर्विभक्तिर्नोच्चारयितव्या, लिटि श्लौ च द्विर्वचनम्? तदनित्यमिति ज्ञापनार्थं पृथग्योगकरणम्। तेन 'यो

**पदमञ्जरी**

सिद्धान्तः स्थापितः। न चास्मिन् क्रमे सत्यनादिष्टादचः पूर्वोऽभ्यासो भवति, किं तर्हि? आदिष्टादेव; ह्रस्वत्वे कृतेऽभ्यासोपजननात्। तेन तस्य विधौ कर्त्तव्ये ह्रस्वस्य स्थानिवद्भावो न भवतीति लघुत्वानिवृत्तेः सन्वद्भावो न व्याहन्येत। यदि तु द्विर्वचने कृते ह्रस्वः क्रियते, तर्ह्यनादिष्टादचः पूर्वोऽभ्यासः स्यात्, ततश्च तस्य स्थानिवद्भावः स्यादेव विधौ, ततश्च दीर्घत्वाल्लघुसंज्ञाया अभावात्सन्वद्भावो न स्यात्। क्व तर्हि स्याद्? अशीशमदित्यादौ। अत्र हि णावेव मितां ह्रस्वो विधीयते। यदि तर्ह्ययं कार्यक्रमः, आटिटदित्यादौ द्वितीयस्यैकाचष्टिशब्दस्य द्विर्वचनं न प्राप्नोति। अत्राह - **आटिटदित्यादि**।

**भावबोधिनी**

पचादि णिजन्तों का चङ् करने पर णिलोप, उपधा का ह्रस्वत्व, द्विर्वचन—इन कार्यों के प्रवृत्त होने का क्रम है। इस प्रकार 'सन्वल्लघुनि चङ्परेऽनग्लोपे' सूत्र से किया जाने वाला सन्वद्भाव, ह्रस्व का स्थानिवद्भाव हो जाने से, प्रतिषिद्ध नहीं होता है। क्योंकि अनादिष्ट (आदेशरहित) अच् से पूर्व जो होता है उसी की विधि के प्रति स्थानिवद्भाव होता है। और इसमें कार्यों के क्रम से अनादिष्ट अच् से पूर्व अभ्यास होता है। आटिटत्—इसमें 'द्विर्वचनेऽचि' इससे स्थानिवद्भाव से द्वितीय एकाच् का द्वित्व होता है।

**विमर्श**—काशिकाकार ने यहाँ रूपसिद्धि के लिये कार्य करने का क्रम निर्धारित किया है—अपच्+णिच्+लुङ् में च्लि का चङ् आदेश करने के बाद (१) णि का लोप होता है, (२) उपधा का ह्रस्व होता है, (३) द्वित्व होता है। इसमें पहले ह्रस्व हो जाता है तब द्वित्व होता है। अतः 'अचः परस्मिन् पूर्वविधौ' से ह्रस्व का स्थानिवद्भाव कर के दीर्घ नहीं माना जा सकता। क्योंकि उक्त क्रम में अनादिष्ट अच् से पूर्व अभ्यास नहीं है अपितु ह्रस्वरूप आदेशविशिष्ट अच् से पूर्व ही है अतः स्थानिवद्भाव नहीं होता है और ह्रस्व ह्रस्व ही रहता है, सन्वद्भाव होने में बाधा नहीं है।

## २४७२. दाश्वान् साह्वान् मीढ्वांश्च ॥ १२ ॥ ( ३६२९ )

**दाश्वान्, साह्वान्, मीढ्वान्**—इत्येते शब्दाश्छन्दसि भाषायां चाविशेषेण निपात्यन्ते। दाश्वानिति 'दाशृ दाने' ( धा० पा० ८८३ )—इत्येतस्य धातोः क्वसावद्विर्वचनमनिट्त्वं च निपात्येते। 'दाश्वांसो दाशुषः सुतम्' ( ऋ० १.३.५ ) इति।

साह्वानिति 'षह मर्षणे' ( धा० पा० ८५३ ) -इत्येतस्य परस्मैपदम्, उपधादीर्घत्वम्, अद्विर्वचनम्, अनिट्त्वं च निपातनात्। साह्वान्बलाहकः।

मीढ्वानिति 'मिह सेचने' ( धा० पा० ९९३ )—इत्येतस्याद्वित्वम्, अनिट्त्वम्, उपधादीर्घत्वं ढत्वं च निपातनात्। 'मीढ्वस्तोकाय तनयाय मृडय' ( ऋ० २.३३.१४ )। एकवचनमतन्त्रम्।

**न्यासः**

जागार तमृचः कामयन्ते', 'दाति प्रियाणि', 'धाति प्रियाणि' इत्यत्र न भवति द्विर्वचनम्, ततश्च 'द्विवर्वचनप्रकरणे छन्दसि वा' इत्येतन्न कर्त्तव्यं भवति ॥ ११ ॥

**दाश्वान् साह्वान् मीढ्वांश्च ॥ अविशेषेण निपात्यन्त इति।** विशेषानुपादानात्। **अनिट्त्वं चेति।** 'वस्वेकाजाद्घसाम्' इतीट् प्राप्नोति, अतस्तदभावो निपात्यते। ननु च कृतद्विवर्वचनानामेकाचामिड् विधास्यते अयंचाकृतद्विवर्वचनमेकाज् भवति; अकृतद्विवर्वचनत्वात्, तदयुक्तमनिट्त्वनिपातनम्? नैतदस्ति; लिटि हि श्रूयमाणैकाजुपलक्षणार्थं तत्र कृतद्विवर्वचनग्रहणं कृतम्। अस्ति चात्र लिटि श्रूयमाणैकाच्त्वमिति कात्रा-युक्तता? **परस्मैपदमिति।** सहेरात्मनेपदित्वात् परस्मैपदं न प्राप्नोतीत्यतस्तन्निपात्यते।

**पदमञ्जरी**

'श्लुचङोः' इत्येकयोग एव कर्त्तव्ये योगविभागो वैचित्र्यार्थः ॥ ११ ॥

**दाश्वान्साह्वान्मीढ्वांश्च ॥** दाश्वादीनां प्राचुर्येण छन्दसि प्रयोगदर्शनाच्छान्दसमेतत्सूत्रमिति मन्यमानं प्रत्याह—**अविशेषेणेति।** विशेषानुपादानादिति भावः। **परस्मैपदमिति।** भौवादिकस्यात्मनेपदित्वात्, चौरादिकस्य तु 'आ धृषाद्वा' ( चुरादि० १८०५ ) इति णिजभावपक्षे दीर्घत्वमनिट्त्वं च निपात्यत इत्यन्ये। **मीढ्वस्तोकायेति।** 'मतुवसोः' इति नुमो रुत्वम्।

**भावबोधिनी**

उक्त क्रम के विपरीत यदि पहले द्विर्वचन किया जाय तब ह्रस्वादि कार्य किया जाय तब अनादिष्ट अच् से पूर्व अभ्यास हो जायगा, और उसकी विधि की कर्तव्यता में स्थानिवद्भाव होगा ही। फलतः लघु परे नहीं मिलेगा। सन्वद्भाव नहीं हो सकेगा। अतः पहले ह्रस्व करके बाद में द्विर्वचन करना उचित है ॥ ११ ॥

दाश्वान्, साह्वान्, मीढ्वान्—ये तीन शब्द वेद में और भाषा में सामान्य रूप से निपातित होते हैं। ( १ ) दाश्वान्—यह '√ दाश् दाने' इस धातु का ( लिट् = ) क्वसु पर रहते द्विर्वचन न होना और अनिट्त्व निपातन से होता है। उदा० –दाश्वांसः दाशुषे सुतम्। [ √दाश् + लिट् = क्वसु = वस्, द्विर्वचन और इट् का अभाव होता है, ये नहीं होते हैं—दाश्वस् + जस् = अस, नुम् आगम. उपधादीर्घ आदि करने पर—दाश्वांसः दाश्वस् + ङस् = अस्, व् का सम्प्रसारण, उ, अका पूर्वरूप, स् का ष्—दाश् उष् + अस् = दाशुषस्, स् का रुत्व विसर्ग—दाशुषः।]

( २ ) साह्वान्—यह √षह मर्षणे—इस धातु का परस्मैपद, उपधा का दीर्घत्व, द्विर्वचन का अभाव और इट् न होना—निपातित होता है। [√षह—यह धातु आत्मनेपदी है अतः परस्मैपद निपातित किया जाता है—आदि ष का स करने पर—सह् = लिट् = क्वसु = वस् सहवस्—उपधा का दीर्घ, द्वित्व और इट् न करने पर—

❀ कृञादीनां के द्वे भवत इति वक्तव्यम् ❀ ( म० भा० ६.१ १२ वा० ५ )। क्रियतेऽनेनेति चक्रम्। चिक्लिदम्। कृञः क्लिदेश्च 'घञर्थे कविधानम्' ( वा० ३०६ ) इति कप्रत्ययः।

❀ चरिचलिपतिवदीनां द्वित्वमच्याक्चाभ्यासस्य ❀ ( म० भा० वा० ६ )। चरादीनां धातूनामचि प्रत्यये परतो द्वे भवतः। अभ्यासस्यागागमो भवति, आगागमविधानसामर्थ्याच्च हलादिशेषो न भवति। हलादिशेषे हि सत्यागमस्यादेशस्य च विशेषो नास्ति। चराचरः। चलाचलः। पतापतः। वदावदः।

❀ वेति वक्तव्यम् ❀ ( ? )। तेन चरः पुरुषः, चलो रथः, पतं यानम्, वदो मनुष्यः—इत्येवमाद्यपि सिद्धं भवति।

**न्यासः**

किं पुनः सामर्थ्यंमित्याह—हलादिशेष इत्यादि। यदि हलादिशेषः स्यात्, एवञ्च सत्यामाकारादेशमेव कुर्यात्, नहि हलादिशेषे सत्यागमस्यादेशस्य वा विशेषोऽस्ति।

णिलुक्चेति। 'णेरनिटि' इति णिलोपे सिद्धे लुग्वचनं प्रत्ययलक्षणेनोपधावृद्धिर्मा भूदित्येवमर्थम्। लोपे

**पदमञ्जरी**

किं पुनः सामर्थ्यम्? इत्याह–हलादिशेषे हीति। चराचर इति। दीर्घोच्चारणसामर्थ्याद् ह्रस्वो न भवति।

णिक्लुचेति। 'णेरनिटि' इति णिलोपे सिद्धे पुनर्वचनं प्रत्ययलक्षणेन पुनर्वृद्धिर्मा भूदिति। पाटूपट इति। पूर्ववद्धलादिशेषाभावो ह्रस्वत्वाभावश्च। दीर्घोच्चारणादेव 'अभ्यासस्यानचि' इति वचनाद्वा उभयत्रापि

**भावबोधिनी**

साह्वस्+सु, नुम् आगम, उपधादीर्घ, सुलोप, न् लोप करने पर रूप बनता है। ] साह्वान् बलाहकः।

( ३ ) मीढ्वान्—यह '√मिह सेचने'—इसका द्विवत्व न करना, इट् न करना उपधा का दीर्घ करना और ह् का ढ करना—निपातन से है। उदा०—मीढ्वस्तोकाय तनयाय मृडय। इनमें एकवचन का अनुशासन नहीं है। [ मिह्+क्वस=वस्, उपधादीर्घ, ह् का ढ् मीढ्वस्—तोकाय यह समास का रूप है। प्रथमा एकवचन में मीढ्वान् बनता है। ]

❀ क प्रत्यय परे रहते कृञ् आदि का द्विवत्व होता है।❀ उदा०—क्रियते अनेन इस अर्थ में चक्रम्। चिक्लिदम्। √ कृञ् और √ क्लिद् इनसे ❀ घञ् के अर्थ में क प्रत्यय का विधान है। ❀ इस वचन से क=अ प्रत्यय होता है। [ कृ+क=अ, द्विवत्व करने पर 'उरत्' सूत्र से ऋ का अत्व, रपरत्व कर्कृ+अ, हलादि शेष, "कुहोश्चुः" सूत्र से क् का च् चकृ+अ, ऋ का यण्। क्लिद्+क=अ, द्विवत्व, हलादिशेष, क का च। ]

❀ चरि, चलि, पति और वदि—इनका अच् परे रहते द्विवत्व होता है और अभ्यास को 'आक्' का आगम होता है। ❀ चर् आदि धातुओं का भी प्रत्यय परे रहते द्विवत्व होता है। अभ्यास को 'आक्' का आगम होता है और आगम के विधान के सामर्थ्य से हलादिशेष नहीं होता है क्योंकि हलादिशेष कर देने पर आगम और आदेश का कोई भेद नहीं रहता है। उदा०—चराचरः। चलाचलः। पतापतः। वदावदः।

[ √ चर् धातु से 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' ( पा० सू० ३।१।१३४ ) सूत्र से, पचादि गण को आकृतिगण मानकर अच् प्रत्यय करने पर प्रस्तुत वचन से द्विवत्व—चर् चर् अ, अभ्यास को आक्=आ का आगम चर् आ चर्+अ=चराचर। 'आक्' आगम का दीर्घविधान करने के सामर्थ्य से न तो ह्रस्व होता है और न हलादिशेष होता है। यही प्रक्रिया सभी चारों शब्दों में समझनी चाहिए। यहाँ अच् प्रत्यय कर्ता अर्थ में है। अतः—चलनेवाला—आदि अर्थ होते हैं। ]

❀ हन्तेर्घत्वं च ❀ ( म० भा० वा० ७ )। हन्तेरचि प्रत्यये परतो द्वे भवतोऽभ्यासस्य च हकारस्य [ च ] घत्वमाक् चागमो भवति। परस्य 'अभ्यासाच्च' इति कुत्वम्। 'घनाघनः क्षोभणश्चर्षणीनाम्' ( ऋ० १०.१०३.१ )।

❀ पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य ❀ ( म० भा० वा० ८ )। पाटेरचि परतो द्वे भवतः, णिलुक्च भवति। अभ्यासस्य चोगागमो दीर्घश्च भवति। पाटूपटः॥

२४५३. ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ १३ ॥ ( १००३ )

पुत्र, पति–इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे ष्यङः सम्प्रसारणं भवति। यणः स्थाने इग्भवतीत्यर्थः। कारीषगन्धीपुत्रः, कारीषगन्धीपतिः। कौमुदगन्धीपुत्रः, कौमुदगन्धीपतिः। कारीषस्येव गन्धोऽस्य, कुमुदस्येव

**न्यासः**

हि सति प्रत्ययलक्षणेनोपधावृद्धिः स्यात्, लुकि तु 'न लुमताङ्गस्य' इति प्रतिषेधान्न भवति ॥ १२ ॥

ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ सम्प्रसारणमिति यण्स्थानिकस्येक एषा संज्ञा विहिता, वाक्यार्थस्य च। 'इग्यणः' इति योऽयं वाक्यार्थः स्थान्यादेशसम्बन्धलक्षणस्तस्य तत्र चेदमुक्तमनुवादे वर्ण उपतिष्ठते, विधौ तु वाक्यार्थ इति; विधिश्चायम्, अतो वाक्यार्थस्यैवोपस्थानमित्याह—यणः स्थान इत्यादि। ततश्चापि विहित इति। 'यङश्चाप्' इत्यनेन।

**पदमञ्जरी**

हलादिशेषाभावः। अभ्यासस्य यदुच्यते तदचि न भवतीत्यर्थः ॥ १२ ॥

ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ 'इग्यणः संप्रसारणम्' इत्यत्रोक्तम्—'वाक्यार्थः संज्ञी वर्णश्च' इति, तत्र विधौ वाक्यार्थ उपतिष्ठते इति तदाश्रयेणाऽऽह—यणः स्थान इग्भवतीत्यर्थ इति।

**भावबोधिनी**

❀ पूर्वोक्त वचन विकल्प से कहना चाहिए। ❀ इस कारण—चरः पुरुषः, चलः रथः, पतं यानम्, वदः मनुष्यः ये रूप भी सिद्ध होते हैं। [ यहाँ भी पूर्वोक्त अर्थों की प्रतीति होती है। ]

❀ हन् धातु का घत्व भी होता है। ❀ अच् प्रत्यय परे रहते √ हन् धातु का द्वित्व होता है अभ्यास के हकार का घकार होता है और आक् आगम होता है। बाद वाले ह का कुत्व 'अभ्यासाच्च'' इस सूत्र से होता है। उदा०—घनाघनः क्षोभणश्चर्षणीनाम् [ हन् + अच्, द्वित्व, आक् = आ आगम, पूर्ववर्ती अभ्यास के ह् का घ घन् आ हन् अ, ''अभ्यासाच्च'' सूत्र से बाद वाले ह का घ—घनाघनः। ]

❀ पाटि धातु के णि का लुक् होता है अभ्यास को 'ऊक्' आगम और दीर्घ होता है। ❀ पाटि धातु का अच् परे रहते द्वित्व होता है और णि का लुक् होता है और अभ्यास के लिए ऊक् आगम और दीर्घ होता है। उदा०—पाटूपटः। [ पाटि + अच्, द्वित्व, णिलुक्, ऊक् आगम, पाट्ऊ पट् अ=पाटूपटः ] ॥ १२ ॥

पुत्र और पति शब्द उत्तर पद रहने पर तत्पुरुष समास में ष्यङ् का सम्प्रसारण होता है। यण् के स्थान में इक् होता है—यह अर्थ है। उदा०—कारीषगन्धीपुत्रः, कारीषगन्धीपतिः। [ कारीषगन्ध्यायाः पुत्रः, कारीषगन्ध्यायाः पतिः—इनमें षष्ठी तत्पुरुष करने पर विभक्तिलोप के बाद 'य्' का सम्प्रसारण 'इ' और 'आ' का पूर्वरूप करने पर कारीषगन्धि + पुत्रः में ''सम्प्रसारणस्य'' ( पा० सू० ६।३।१३९ ) सूत्र से सम्प्रसारण का दीर्घ करने पर उक्त रूप बनता हैं। ] कौमुदगन्धीपुत्रः, कौमुदगन्धीपतिः। [ यहाँ भी कौमुदगन्ध्यायाः पुत्रः, पतिः ये विग्रह करके पूर्ववत् प्रक्रिया करनी चाहिए। ] करीषस्य इव गन्धः अस्य सः, कुमुदस्य इव गन्धः यस्य सः—इन अर्थों में बहुव्रीहि समास है, इनमें ''उपमानाच्च'' सूत्र से इकारान्त आदेश होता है। करीषगन्धेः अपत्यम्—इसमें अण् [ आदिवृद्धि,

गन्धोऽस्येति बहुव्रीहिः, तत्र 'उपमानाच्च' ( ५.४.१३७ ) इति गन्धस्येदन्तादेशः, करीषगन्धेरपत्यमित्यण् ( ४.१.९२ ), तदन्तात्स्त्रियाम् 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' ( ४.१.७८ ) इति ष्यङ्, ततश्चापि विहिते षष्ठीसमासः, 'सम्प्रसारणस्य' ( ६.३.१३९ ) इति दीर्घत्वम् ।

ष्यङ इति किम् ? इभ्यापुत्रः । क्षत्त्रियापुत्रः । पुत्रपत्योरिति किम् ? कारीषगन्ध्याकुलम् । कौमुदगन्ध्याकुलम् । तत्पुरुष इति किम् ? कारीषगन्ध्यापतिरस्य ग्रामस्य कारीषगन्ध्यापतिरयं ग्रामः ।

**न्यासः**

**इभ्यापुत्र इति** । इभमर्हतीति 'दण्डादिभ्यो यः' । **क्षत्त्रियापुत्र इति** । क्षत्त्रस्यापत्यमिति 'क्षत्त्राद् घः' इति घः ॥

'ष्यङ' इति प्रत्ययग्रहणमिदम्, तत्र प्रत्ययग्रहणपरिभाषाया उपस्थानाद् यस्मात् स विहितस्तदादेस्तदन्तस्येति तदादितदन्तग्रहणमिहैव स्यात्—कारीषगन्धीपुत्र इति, इह तु न स्यात्—परमकारीषगन्धीपुत्र इति; कारीषगन्धशब्दाद्धि ष्यङ् विहितः, न परमकारीषगन्धशब्दात् ? अत इदं द्वेष्यमपाकर्तुमाह—**ष्यङिति स्त्रीप्रत्ययग्रहणमिति** । 'स्त्रियाम्' इत्यधिकृत्य विहितत्वात् । स्त्रीत्वं स्थानिवद्भावेन च प्रत्ययत्वं ष्यङः, न हि तस्यान्यथा स्त्रीप्रत्ययत्वमुपपद्यते; आदेशपक्षस्य च तत्राश्रितत्वात् । यदि स्त्रीप्रत्ययग्रहणमेतत्; ततश्च किमिति ? तदादिनियमो न भवति; यतोऽधिकस्याप्यत्र ग्रहणं स्यात्, अतिप्रसङ्गो वा । असति हि नियमे यथेह भवति—परमकारीषगन्धीपुत्र इति, तथेहापि स्याद्—अतिकारीषगन्ध्यापुत्र इति, अत आह—**न स्त्रीप्रत्यये चेत्यादि** । प्रत्ययग्रहणपरिभाषाया 'न स्त्रीप्रत्यये चानुपसर्जने' इत्ययमपवादः कृतः । तेन यत्रानुपसर्जनः स्त्रीप्रत्ययस्तत्रैषा प्रत्ययग्रहणपरिभाषा न प्रवर्त्तत इति तदादिनियमो नास्ति, तेन परमकारीषगन्धीपुत्र इत्यत्र भवत्येव । अत्र हि परमा चासौ

**पदमञ्जरी**

**तदन्तात् ष्यङिति** । ष्यङ्विधावादेशपक्षस्य स्थितत्वाल्ल्यब्लोप एषा पञ्चमी, तदन्तमाश्रित्येत्यर्थः । अतद्गुणसंविज्ञानोऽत्र बहुव्रीहिः, अण् प्रत्ययोऽन्तः=समीपो यस्य कारीषगन्धेस्तस्मात्परः ष्यङित्यर्थः । प्रत्ययपक्ष एव **वामनाचार्यस्य** तत्राभिमतः । तथा च 'ये च तद्धिते' इत्यत्र वक्ष्यति[1]—'अणिञन्ताद्वा परः ष्यङ् प्रत्यय एषितव्यः' इति ।

इभमर्हतीतीभ्या, 'दण्डादिभ्यो यत्', इह कारीषगन्ध्यामतिक्रान्तस्य पुत्रोऽतिकारीषगन्ध्यापुत्र इति प्रत्यग्रहणपरिभाषया समुदायस्याष्यङन्तत्वेऽपि योऽत्र ष्यङन्तस्तस्य प्रसङ्गः । तथा पुत्रस्य कुलं पुत्रकुलम्, कारीषगन्ध्यापुत्रकुलमिति वर्णग्रहणे तदादिविधिविज्ञानादिह च तदभावात्तदादिविध्यभावेऽपि पुत्रपत्यानन्तर्याश्रयं संप्रसारणं प्राप्नोति । नात्र तर्हीदानीमिदं भवति—कारीषगन्धीपुत्रकुलमिति । भवति च यदैतद्वाक्यं भवति—

**भावबोधिनी**

इलोप ], अणन्त से "अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे" (४।१।७८) सूत्र से ष्यङ्=य प्रत्यय, इस प्रकार के शब्द से [ "यङश्चाप्" सूत्र से ] चाप्=आ प्रत्यय करने के बाद [ कारीषगन्ध्या कौमुदगन्ध्या का षष्ठ्यन्त बनाकर ] षष्ठीसमास होता है । [ प्रस्तुतसूत्र से सम्प्रसारण कर देने पर ] "सम्प्रसारणस्य" ( ६।३।१३९ ) सूत्र से उसका दीर्घ होता है ।

ष्यङ् का—इस कथन का क्या फल है ? इभ्यापुत्रः । क्षत्रियापुत्रः । [ इनमें यण्=य है किन्तु ष्यङ् का नहीं है अपितु इभम् अर्हति—इसमें "दण्डादिभ्यः" से 'य' और "क्षत्त्राद् घः" सूत्र से क्षत्रिया में घ=इय है । अतः सम्प्रसारण नहीं होता है । ]

पुत्र और पति परे रहते—इसका क्या फल है ? कारीषगन्ध्याकुलम् । कौमुदगन्ध्याकुलम् । [ यहाँ सम्प्रसारण नहीं होता है । ] तत्पुरुष समास में—इसका क्या फल है ? कारीषगन्ध्यापतिः अस्य ग्रामस्य—इसमें—कारीषगन्ध्यापतिः अयं ग्रामः—यहाँ नहीं होता है । [ क्योंकि यह बहुव्रीहि है । ]

---

१. वस्तुतस्तु 'अचिशीर्षः' ( ६।१।६२ ) इत्यत्राग्रे ।

ष्यङ इति स्त्रीप्रत्ययग्रहणम्, 'न स्त्रीप्रत्यये चानुपसर्जने' ( सीर० परि० २६ ) इति प्रत्ययग्रहण-परिभाषया 'यस्मात् स विहितस्तदादेः' ( पुरु० परि० २४ ) इत्येष नियमो नास्ति; तेन परमकारीषगन्ध्यायाः पुत्रः परमकारीषगन्धीपुत्रः, परमकारीषगन्धीपतिरित्यपि भवति ।

**न्यासः**

कारीषगन्ध्या चेति 'सन्महत्' इत्यादिना समासः, स्त्रीप्रत्ययस्य प्राधान्यम्, 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः । यत्र तूपसर्जनं स्त्रीप्रत्ययस्तत्रानुपसर्जन इति वचनादुपतिष्ठत एवैषा परिभाषा । तेन भवत्येवात्र तदादिनियमः । तेनेह न भवति—अतिकारीषगन्ध्यात्र इति । अत्र हि कारीषगन्ध्यामतिक्रान्त इति प्रादिसमासः । अत्र योऽसावतिक्रान्तः स प्रधानम्, कारीषगन्ध्या तूपसर्जनम् । अत एव 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वो भवति । पुत्रपत्योः संप्रसारणे तदादावतिप्रसङ्गः । इहापि प्राप्नोति—कारीषगन्ध्यापुत्रकुलमिति । तथा हि—पुत्रपत्योरिति सप्तमी कार्यिण आनन्तर्यमाचष्टे, ततश्च शुद्धयोस्तदादौ चाविशिष्टम् । अथापि कथञ्चित् तदादौ न स्याद्, एवमपि 'येन विधिस्तदन्तस्य' इति तदन्तेऽतिप्रसङ्ग इहापि प्राप्नोति—कारीषगन्ध्यापरमपुत्र इति ।

विधिविधानविधिभाजां त्रयाणां सन्निधाने तदन्तविधिर्भवति । ते चेह सन्ति—विधिः संप्रसारणम्, विधिभाक् ष्यङ्, विधानं पतिपुत्रशब्दौ । इह च तत्पुरुषेणाव्यभिचारात् सन्निधापितं यदुत्तरपदं तत्

**पदमञ्जरी**

कारीषगन्धायाः पुत्रः कारीषगन्धीपुत्रस्तस्य कुलं कारीषगन्धीपुत्रकुलमिति । कः पुनरनयोरर्थभेदः ? न खलु कश्चित्, कारीषगन्ध्यापुत्रकुलमिति न सिध्यतीति चोद्यार्थः । तथा—अतिकारीषगन्ध्यापुत्रकुलमित्यादावपि सर्वत्र पुत्रपत्योः ष्यङन्तस्य चानन्तर्यमाश्रित्य सम्प्रसारणप्रसङ्गः ।

स्यादेतत्—यथा वृक्षे शाखेति वृक्षः शाखाया अवयवी प्रतीयते, तथेहापि ष्यङन्तस्य पुत्रपत्योश्च तत्पुरुषः तत्र प्रत्यासत्त्या यस्य तत्पुरुषस्य ष्यङन्तोऽवयवस्तस्यैव पुत्रपती इति गम्यते, इह न तथेति ? एवमप्यवयवावयवस्य समुदायावयवत्वादस्त्येव प्रसङ्गः ? नैष दोषः, पुत्रपत्योरिति सप्तमीनिर्देशात् ष्यङन्तस्य पुत्रपत्योश्च पौर्वापर्यं प्रतीयते, पूर्वोक्तेन न्यायेन तत्पुरुषावयवत्वं च । तत्पुरुषश्च पौर्वापर्यावस्थितावयवद्वयात्मकः । तदिह तत्पुरुषावयवयोः पौर्वापर्येणावस्थितयोरिदं भवतीत्युक्ते ययोः स तत्पुरुषस्तावेताविति गम्यते, ष्यङन्तस्य पूर्वपदस्य पुत्रपत्योरुत्तरपदयोरित्यर्थः । समासे च यस्माच्च पूर्वं नास्ति तत्पूर्वपदम्, यस्माच्च परं नास्ति तदुत्तरपदम्, तदिदमुक्तम्—'पुत्रपत्योरुत्तरपदयोः' इति । पूर्वोदाहृतेषु च यत्पूर्वपदं न तत् ष्यङन्तम्, यत् ष्यङन्तं न तत्पूर्वपदम्, यच्चोत्तरपदं न तत् पुत्रपत्यात्मकम्, यच्च पुत्रपत्यात्मकं न तदुत्तरपदमिति नास्ति प्रसङ्गः । इहापि तर्हि न प्राप्नोति—परमकारीषगन्धीपुत्र इति ? तत्राह—**ष्यङ इति स्त्रीप्रत्ययग्रहणमिति** । 'स्त्रियाम्' इति प्रकृत्य विहितत्वात्स्थानिवद्भावेन स्वयमेव वा प्रत्ययत्वाच्च स्त्रीप्रत्ययत्वम् । यदि स्त्रीप्रत्ययग्रहणम्, ततः किम् ? इत्यत आह—**तेनेति** ।

**भावबोधिनी**

ष्यङ्—यह स्त्रीप्रत्यय का ग्रहण है "और अनुपसर्जन स्त्रीप्रत्यय में तदादिनियम नहीं लगता है" इस प्रत्यय-ग्रहणपरिभाषा के कारण 'जिससे प्रत्यय किया गया है वह है आदि में जिसमें उसका" यह नियम नहीं लागू होता है । इसलिये 'परमकारीषगन्ध्यायाः पुत्रः' इस विग्रह में 'परमकारीषगन्धीपुत्रः' और ( परमकारीषगन्ध्यायाः पतिः इसमें ) परमकारीषगन्ध्यापतिः—यह भी होता है । [ क्योंकि परम के साथ समास होने पर भी ष्यङन्त का अर्थ उपसर्जन नहीं होता है । ]

उपसर्जने तु ष्यङि न भवति— अतिक्रान्ता कारीषगन्ध्यामतिकारीषगन्ध्यः[1], तस्य पुत्रोऽतिकारीषगन्ध्यपुत्रः, अतिकारीषगन्ध्यपतिः।

पुत्रपत्योः केवलयोरुत्तरपदयोरिदं सम्प्रसारणम्, तदादौ तदन्ते च न भवति—कारीषगन्ध्यापुत्रकुलम्, कारीषगन्ध्यापरमपुत्र इति।

**न्यासः**

पुत्रपतिशब्दाभ्यां विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीति पुत्रशब्दान्ते पतिशब्दान्ते चोत्तरपदे सम्प्रसारणं भवतीति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**पुत्रपत्योरित्यादि**। एवं मन्यते—तत्पुरुषोऽत्र पुत्रपत्योः ष्यङश्चाधिकरणभूतो निर्दिश्यमानस्तत्पुरुषावयवत्वं पुत्रपत्योः ख्यापयति, तद्यथा - वृक्षे शाखेति। वृक्षः शाखाया अधिकरणत्वेन निर्दिश्यमानः शाखाया वृक्षावयवत्वं बोधयति; तत्र प्रत्यासत्तेः। यत्र तत्पुरुषे ष्यङ् कार्यभागवयवः स्थितः तस्यैव तत्पुरुषस्य यावक्यवौ पुत्रपती तयोरेव ग्रहणम्, न तु पुत्रपत्यादावुत्तरपदे यौ पुत्रपतिशब्दौ तौ तस्यैव ष्यङः पूर्वपदस्य तत्पुरुषस्यावयवौ। अपि तु तत्पुरुषस्यान्तस्यापि पुत्रकुलशब्दस्य, पतिकुलशब्दस्य च। तस्मात् तदादौ तावन् न भवत्यतिप्रसङ्गः। तदन्तेऽपि न भवत्येव; यस्मादिह पुत्रपतिग्रहणं यच्च तत्पुरुषेण सन्निधापितमुत्तरपदं तयोर्विशेषणविशेष्यभावं प्रति कामचारः। तत्र यदीहोत्तरपदं पुत्रपतिशब्दाभ्यां विशिष्येत तदा स्यात् तदन्तविधिः, विशेषणेन तदन्तविधिर्भवतीति कृत्वा। न चेह ताभ्यां तद्विशिष्यते, अपि तु तावेव तेन; ततश्च तदन्तविधेरभावात् केवलयोरेवेदं विशेषणं भवतीति कुतस्तदन्तेऽतिप्रसङ्गः? ननु च यद्युत्तरपदेन पुत्रपती विशिष्येते तेन तयोस्तदन्तता विज्ञायते, ततश्चोत्तरपदपदान्तयोरेव ग्रहणं स्यात्, न केवलयोः, एवञ्च तदादावतिप्रसङ्गः? नैतदस्ति; न हि पुत्रपतिशब्दावुत्तरपदान्तौ सम्भवतः। यस्मादयमन्तशब्दोऽवयववचनः। न च पुत्रपतिशब्दयोरुत्तरपदमवयवः। किं तर्हि? समासस्य, न च तौ समासौ। तस्मान्नैवं विज्ञायते—उत्तरपदान्तयोः पुत्रपतिशब्दयोरिति, किं तर्हि? पुत्रपत्योरेवोत्तरपदयोः केवलयोरिति।

'येन विधिस्तदन्तस्य' इति तदन्तविधिनात्र ष्यङन्तस्य सम्प्रसारणं विज्ञायते, ततश्च वाराहीपुत्र इत्यत्र

**पदमञ्जरी**

अप्रधानम्=**उपसर्जनम्**। एतदुक्तं भवति—यत्रार्थे स्त्रीप्रत्ययो विहितः स यावति तदन्ते प्राधान्येनोच्यते तावान्समुदायस्तदन्ततया ग्राह्यः। अप्रधाने च यतो विहितस्तदादिके च तदन्ते च न भवति। यदा तत्पुरुषाक्षिप्तमुत्तरपदं पुत्रपतिभ्यां विशेष्यते तदा तदन्ते प्रसङ्गः, इह तूत्तरपदेन पुत्रपती विशेष्येते इति भावः।

**निर्दिश्यमानस्येति**। एतच्च 'षष्ठीस्थाने योगा' इत्यत्र व्याख्यातम्। 'अनन्त्यविकारेऽन्त्यसदेशस्य' (व्या० परि० ६३) इति तु परिभाषा प्रयोजनाभावान्नाश्रिता।

**भावबोधिनी**

परन्तु जहाँ ष्यङ् उपसर्जन होता है वहाँ तो साम्प्रसारण नहीं होता है--अतिक्रान्ता कारीषगन्ध्याम्—इसमें अतिकारीषगन्ध्यः, तस्य पुत्रः—इसमें अतिकारीषगन्ध्यपुत्रः, अतिकारीषगन्ध्यपति। [ इनमें ष्यङन्त कारीषगन्ध्या उपसर्जन=विशेषण बन गया है, अतः सम्प्रसारण नहीं होता है। अधिकांश पाठ 'अतिकारीषगन्ध्यापुत्रः अतिकारीषगन्ध्यापतिः' मिलता है किन्तु 'गोस्त्रियोरुपसर्जनस्य'' सूत्र से ह्रस्व हो जाने के कारण 'अतिकारीषगन्ध्यपुत्रः' ऐसा ही पाठ उचित है। ]

पुत्र और पति केवल उत्तरपद हों तभी यह सम्प्रसारण होता है, तदादि और तदन्त में नहीं होता है—परमकारीषगन्ध्यापुत्रकुलम् कारीषगन्ध्यापरमपुत्रः। [ प्रथम में पुत्र शब्द है किन्तु कुल के आदि में और द्वितीय में परम के अन्त में है अतः सम्प्रसारण नहीं होता है। ]

---

१. उपसर्जनत्वे 'गोस्त्रियोरुपसर्जने' इति ह्रस्वः पाठः साधुरिति बोध्यम्।

ष्यङन्ते च यद्यप्यन्ये यणः सन्ति; तथापि ष्यङ एव संप्रसारणम्, 'निर्दिश्यमानस्यादेशा भवन्ति' ( व्या० परि० १०६ ) इति।

सम्प्रसारणमिति चाधिक्रियते 'विभाषा परेः' ( ६.१ ४४ ) इति यावत् ॥

## २४५४. बन्धुनि बहुव्रीहौ ॥ १४ ॥ ( १००९ )

'ष्यङः सम्प्रसारणम्' इत्यनुवर्तते। बन्धुशब्द उत्तरपदे बहुव्रीहौ समासे ष्यङः सम्प्रसारणं भवति। कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः। कौमुदगन्धीबन्धुः।

बहुव्रीहाविति किम्? कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। अत्रापि पूर्ववदेव परमकारीषगन्धीबन्धुरित्यत्र भवति। अतिकारीषगन्ध्यबन्धुरिति च न भवति, तथा कारीषगन्ध्याबन्धुधनः, कारीषगन्ध्यापरमबन्धुरित्यादौ न।

**न्यासः**

वकारस्यापि सम्प्रसारणं प्राप्नोतीत्यत आह—**ष्यङन्ते चेत्यादि**। तत्रैव कारणमाह— **निर्दिश्यमानस्येत्यादि**। सम्प्रसारणग्रहणमुत्तरार्थम्। अतो हीकारग्रहणेनापि सिध्यत्येव। तां चोत्तरार्थतां तत्रैव दर्शयिष्यामः। तामेवोत्तरार्थतां सूचयन्नाह **सम्प्रसारणमित्यादि** ॥ १३ ॥

**बन्धुनि बहुव्रीहौ ॥ बन्धुनीति नपुंसकनिर्देश इत्यादि**। बन्धुनीति शब्दरूपापेक्षया नपुंसकलिङ्गेन निर्देशः

**पदमञ्जरी**

सम्प्रसारणग्रहणमुत्तरार्थम्। इह त्वीशापि सिद्धम्, शकारः सर्वादेशार्थः। तत्रायमप्यर्थः—सम्प्रसारणस्येति योगविभागेन दीर्घत्वं न विधेयं भवति, तदेवोत्तरार्थत्वं दर्शयति—**सम्प्रसारणमिति चेत्यादि**।

पूर्वं यत्र ष्यङन्तं पदमुपरितनं पुत्रपत्यात्मकं स्याद्<br>
दृष्ट्वा तत्र ष्यङं तत्पुरुष इह यणः स्थान इग्भावनीयः।<br>
यत्रार्थे ष्यङ् स यावत्यपि सति न गुणोऽसाविहेष्टस्तदन्ते<br>
यत्रेत्यर्थः प्रधानो न भवति स यतः ष्यङ् तदाद्येव तत्र ॥ १३ ॥

**बन्धुनि बहुव्रीहौ ॥ शब्दरूपापेक्षयेति**। 'बन्धु' इत्येतस्मिन् शब्दरूपमित्येवं शब्दरूपमपेक्ष्य नपुंसकनिर्देशः कृतः। किमर्थमेवं व्याख्यायते? इत्यत आह—**पुंल्लिङ्गाभिधेयस्त्वयमिति**। योऽयमस्मिन्सूत्रे बन्धुशब्द उपात्तः

**भावबोधिनी**

यद्यपि ष्यङन्त में अन्य भी यण् हैं किन्तु ष्यङ् का ही सम्प्रसारण होता है—"निर्दिश्यमान का ही आदेश किया जाता है।' यह [ परिभाषा ] है। [ सूत्र में 'ष्यङः' यही निर्दिश्यमान है इसी का सम्प्रसारण होता है। अतः 'वाराहीपुत्रः' आदि में 'व्' का सम्प्रसारण नहीं होता है। ]

वक्ष्यमाण 'विभाषा परेः' ( पा. सू. ६।१।४४ ) तक सम्प्रसारण का अधिकार चलता है ॥ १३ ॥

'ष्यङ् का सम्प्रसारण होता है' इसकी अनुवृत्ति होती है। बन्धु शब्द जिसके उत्तरपद में है ऐसे बहुव्रीहि समास में ष्यङ् का सम्प्रसारण होता है। उदा०—कारीषगन्ध्या बन्धुः अस्य—इस अर्थ में कारीषगन्धीबन्धुः, [ कौमुदगन्ध्या बन्धुः अस्य सः—इसमें ] कौमुदगन्धीबन्धुः। [ यहाँ 'य्' का सम्प्रसारण, आ का पूर्वरूप और 'सम्प्रसारणस्य' सूत्र से दीर्घ होता है। ]

बहुव्रीहि में इसका क्या फल है? कारीषगन्ध्यायाः बन्धुः—इस ( षष्ठी तत्पुरुष ) में—कारीषगन्ध्याबन्धुः। इस सूत्र में भी पूर्वसूत्र के समान [ परमकारीषगन्ध्या बन्धुः अस्य इस विग्रह में ] परमकारीषगन्धीपुत्रः' इसमें [ सम्प्रसारण ] होता है। किन्तु 'अतिकारीषगन्ध्याबन्धुः' इसमें नहीं होता है। क्योंकि यहाँ उपसर्जन है। और

बन्धुनीति नपुंसकलिङ्गनिर्देशः शब्दरूपापेक्षया, पुंल्लिङ्गाभिधेयोऽयं बन्धुशब्दः ।

❀ मातच्मातृकमातृषु ❀ ( म० भा० ६.१.१४ वा० १ ) । ष्यङः सम्प्रसारण भवति विभाषया बहुव्रीहावेव । कारीषगन्ध्या माताऽस्य—इत्येवं बहुव्रीहौ कृते एतस्मादेवोपसंख्यानात् पक्षे मातृशब्दस्य मातजादेशः, तत्र चित्करणसामर्थ्याद् बहुव्रीहिस्वरम् ( ६.२.१ ) अन्तोदात्तत्वं ( ६.१.१६३ ) बाधते।

मातृमातृकशब्दयोश्च भेदेनोपादनाद् 'नद्यृतश्च' ( ५.४.१५३ ) इति कबपि विकल्प्यते—कारीषगन्धीमातः, कारीषगन्ध्यामातः; कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः; कारीषगन्धीमाता, कारीषगन्ध्यामाता ॥

**न्यासः**

कृत इत्यर्थः। किं पुनः कारणमेवं व्याख्यायते ? इत्याह—**पुंल्लिङ्गाभिधेयोऽयमित्यादि**। ननु बन्धाविति पुंल्लिङ्गेनैव निर्देशः कस्मान्न कृतः ? पर्यायेषु मा भूत्। एवं हि क्रियमाणेऽर्थप्रधानोऽयं निर्देश इत्यादिः स्यात्, ततश्च पर्यायेष्वपि प्रसज्येत। अर्थप्रधाने हि निर्देशे स्वरूपपरिभाषा नोपतिष्ठत इत्युक्तम्।

**मातजित्यादि**। ननु च मातजिति शब्दरूपं नास्त्येव, न ह्यस्य स्वतन्त्रस्य क्वचित् प्रयोगो लभ्यते, कथं तत्र सम्प्रसारणं कर्तुं शक्यम् ? इत्यत आह—**अस्मादेवेत्यादि**। **तत्रेत्यादि**। यदि च 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति बहुव्रीहिस्वरः स्यात्, चित्करणमनर्थकं स्यात्। तस्मान्मा भूत् तस्यानर्थक्यमिति चित्करणसामर्थ्याद् बहुव्रीहिस्वरम् 'चितः' इत्यन्तोदात्तत्वं विधीयमानं बाधते।

ननु च मातृशब्दो बहुव्रीहावुत्तरपदं न सम्भवत्येव, 'नद्यृतश्च' इति नित्यं कपा भवितव्यम्, तत् कथं तत्रोत्तरपदे बहुव्रीहौ ष्यङः संप्रसारणमुपपद्यते ? इत्याह—**मातृमातृकयोश्चेत्यादि**। यदि च नित्यं कप् स्यात्, मातृमातृकयोर्भेदेनोपादनं न कुर्यात्, कृतञ्च। तस्माद् भेदेनोपादानात् कब् विकल्पेन क्रियते, न केवलं मातजादेश इत्यपिशब्दस्यार्थः ॥ १४ ॥

**पदमञ्जरी**

स इत्यर्थः। कुत एतत् ? नपुंसकलिङ्गस्यापि विद्यमानत्वात्, बध्यतेऽस्मिन् जातिरिति बन्धु=द्रव्यम्, 'जात्यन्ताच्छ बन्धुनि' इति। यद्येवम्, तस्यैव ग्रहणं प्राप्नोति ? नैष दोषः; पतिपुत्रसाहचर्याज्जातिवचन एव ग्रहीष्यते ॥ १४ ॥

**भावबोधिनी**

परमकारीषगन्ध्याबन्धुधनः' कारीषगन्ध्यापरमबन्धुः' इनमें नहीं होता है। [ क्योंकि उदा०—में अकेला बन्धु शब्द नहीं है। ]

बन्धुनि—यह नपुंसकलिङ्ग का निर्देश शब्दस्वरूप को मान कर लिखा गया है क्योंकि पुंल्लिङ्ग अर्थ को कहने वाला यह बन्धु शब्द है। [ यदि अर्थप्रधान निर्देश होता तो पर्याय शब्दों में भी सूत्र की प्रवृत्ति होने लगती। अतः स्वरूपपरक ही मानना चाहिए। ]

❀ मातृच्, मातृ और मातृक शब्दों के परे रहते भी ष्यङ् का सम्प्रसारण होता है। ❀ ष्यङ् का सम्प्रसारण विकल्प से बहुव्रीहि में ही होता है। उदा०—कारीषगन्ध्या माता अस्य—इस विग्रह में बहुव्रीहि करने पर इस वचन के कारण ही पक्ष में मातृ का मातृच् आदेश होता है। इसमें चित् करने के सामर्थ्य से बहुव्रीहि स्वर को [ "चितः" सूत्र से ] अन्तोदात्तस्वर बाधित कर लेता है।

मातृ और मातृक शब्दों का भेद से ( अलग अलग ) उपादान करने के कारण 'नद्यृतश्च' (पा० सू० ५।४।१५३) सूत्र से होने वाला कप् भी विकल्प से होता है। (१) कारीषगन्धीमातः, कारीषगन्ध्यामातः। (२) कारीषगन्धीमातृकः कारीषगन्ध्यामातृकः। (३) कारीषगन्धीमातः, कारीषगन्ध्यामाता। [ (१) मातृच् (२) मातृक और (३) मातृ तीन शब्द परे होने पर विकल्प से सम्प्रसारण होता है। अतः पूर्वोक्त तीन रूपों के छः रूप हो जाते हैं। ] ॥ १४ ॥

## २४७५. वचिस्वपियजादीनां किति ॥ १५ ॥ ( २४०९ )

**'सम्प्रसारणम्' इति वर्त्तते । 'ष्यङः' इति निवृत्तम् । वाचि—'वच परिभाषणे' ( धा० पा० १०६४ ), 'ब्रुवो वचिः' ( २.४.५३ ) इति च । स्वपि—'ञिष्वप् शये' ( धा० पा० १०६९ ) । यजादयः—'यज देवपूजासङ्गतिकरणदानेषु' ( धा० पा० १००३ ) इत्यतः प्रभृति आगणान्ताः ( धा० पा० १०११ ), तेषां वचिस्वपियजादीनां किति प्रत्यये परतः सम्प्रसारणं भवति । वचि—उक्तः, उक्तवान् । स्वपि—सुप्तः,**

### न्यासः

**वचिस्वपियजादीनां कीति ।** आदिशब्दोऽयं यजिनैव सम्बध्यत इति, न वच्यादिभिः प्रत्येकम् । यदि हि प्रत्येकमभिसम्बन्धोऽभिमतः स्याद् 'वच भाषणे' इत्यधीत्य 'ञिष्वप् शये' इत्यधीयताम्, तत्र वच्यादीनामित्येवं स्वपेरपि सिध्यतीति पृथगुपादानं न कर्त्तव्यं जायते । नन्वेवम्, तत्र 'रुदश्च पञ्चभ्यः' इत्यत्र स्वपेर्ग्रहणं न स्यात् ? नैष दोषः; शक्यते हि रुदादीनामादौ स्वपिमधीत्य 'स्वपश्च पञ्चभ्यः' इत्येवं सूत्रं प्रणेतुम् । तस्माद्, युक्तयुक्तम्—यजिनैव सम्बध्यत इति । वचेः स्वपिना साहचर्याद् धातुनिर्देशार्थं इकारः, न विशेषणार्थः । तेन च ब्रूञादेशस्यैव ग्रहणं भवतीत्याह—**वच परिभाषणे, ब्रुवो वचिरिति चेति ।** **उक्त इति ।** 'सम्प्रसारणाच्च' इति परपूर्वत्वम् । **इष्ट इति ।** व्रश्चादिना षत्वम्, ततः ष्टुत्वम् । **ऊढ इति ।** 'हो ढः' इति ढत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'ढो ढे लोपः' इति ढकारलोपः, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घत्वम् । **उषितमिति ।** 'शासिवसिघसीनाञ्च' इति षत्वम् । **संवीत, आहूतः, शून इति ।** 'हलः' इति दीर्घः । शून इत्यत्र 'ओदितश्च' इति निष्ठानत्वम् ।

### पदमञ्जरी

**वचिस्वपियजादीनां किति ॥** आदिशब्दोऽयं यजिनैव सम्बध्यते, न वच्यादिभिः प्रत्येकम्; स्वपिग्रहणात् । अन्यथा 'वच परिभाषणे' (धा० पा० १०६३), 'विद ज्ञाने' (धा० पा० १०६४), 'अस भुवि' (धा० पा० १०६५), 'मृजूष् शुद्धौ' ( धा० पा० १०६६ ), 'रुदिर् अश्रुविमोचने' ( धा० पा० १०६७ ), 'ञिष्वप् शये' ( धा० पा० १०६८ )—इत्येवं गणपाठाद् वच्यादिग्रहणेनैव स्वपादीनामपि ग्रहणसिद्धेः पृथक् स्वपादिग्रहणं न कुर्यात् । **आगणान्ता इति ।** गणस्यान्तो गणान्तः, आगता गणान्तमागणन्ताः । **उक्त इति ।** 'चोः कुः' । **इष्ट इति ।** व्रश्चादित्वात्षः । **ऊढ इति ।** 'हो ढः', 'झषस्थोतर्धोधः', ष्टुत्वम्,, 'ढो ढे लोपः' 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' । **उषित**

### भावबोधिनी

'सम्प्रसारण' इसकी अनुवृत्ति होती है । 'ष्यङ्' इसकी निवृत्ति=असम्बन्ध है । वच्—'√वच परिभाषणे' और 'ब्रुवो वचिः' इनसे विहित वचि [ दोनों गृहीत हैं ] । स्वप—'√ञिष्वप् शये' गृहीत है । यज आदि—'√यज देवपूजासंगतिकरणदानेषु' यहाँ से लेकर गण की समाप्ति तक । उन वचि, स्वपि और यजादि का कित् प्रत्यय परे रहते सम्प्रसारण होता है । उदा०—उक्तः, उक्तवान् । [ वच्+क्त=त, व् का सम्प्रासारण उ, अ का पूर्वरुप उच्+त, च् का क्—उक्तः । इसी प्रकार वच् + क्तवतु = तवत् में उक्तवान् । ] √स्वप सुप्तः, सुप्तवान् । [ स्वप् + क्त, स्वप् + क्तवतु व् का सम्प्रसारण उ, अ का पूर्वरूप सुप् + त, सुप् + तवत् । ] √यज्—इष्टः, इष्टवान् । [ यज् + क्त, यज् + क्तवत् । य् का सम्प्रसारण इ, अ का पूर्वरूप इज् + त, इज् + तवत्, 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' ( पा. सू. ८।२।३६ ) सूत्र से ज् का ष्—इष् + त, इष् + तवत्, ष्टुत्वादि ] वप्—उप्तः, उप्तवान् । [ वप् + क्त, वप् + क्तवत्, व् का सम्प्रसारण उ, अ का पूर्वरूप ] √वह्—ऊढः, ऊढवान् । [ वह् + क्त, वह् + क्तवतु, व् का सम्प्रसारण, अ का पूर्वरूप "हो ढः" सूत्र से ह का ढ्, "झषस्तथोर्धोऽधः" सूत्र से त् का ध्, ष्टुत्व, उढ् + ढ, उढ् + ढवत्, 'ढो ढे लोपः' सूत्र से प्रथम ढ् का लोप, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' सूत्र से 'उ' का दीर्घ ऊढः, ऊढवत्=ऊढवान् । ]

**सुप्तवान्** । **यज**—**इष्टः, इष्टवान्** । **वप्**—**उप्तः, उप्तवान्** । **वह्**—**ऊढः, ऊढवान्** । **वस**—**उषितः, उषितवान्** । **वेञ्**—**उतः, उतवान्** । **व्येञ्**—**संवीतः, संवीतवान्** । **ह्वेञ्**—**आहूतः, आहूतवान्** । **वद**—**उदितः, उदितवान्** । **टुओश्वि**—**शूनः, शूनवान्** ।

**धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते । तेनेह न भवति—वाच्यति, वाचिक इति ॥**

**न्यासः**

अथेह कस्मान्न भवति—वाचमिच्छति वाचा तरतीति ठक्, वाच्यति वाचिक इति ? यद्यपि **वचेः** 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च' इति वा दीर्घः कृतः, तथापि 'एकदेशविकृतमनन्यवद्भवति' इत्यस्ति प्राप्तिरित्याह—**धातोरित्यादि** । यत्र धातुः सामान्यवाचिना धातुशब्देन नोपादीयते, अपि तु स्वशब्देनैव, तत्र तत्प्रत्यये धातोरित्येवं यो विहितः प्रत्ययस्तत्रैव कार्यं विज्ञायते । एतच्च भ्रौणहत्येति निपातनं कुर्वन् ज्ञापयति—तद्धि तत्वार्थं निपातनम् । यदि च धातोः स्वरूपग्रहणे तत्प्रत्यय एव कार्यं न विज्ञायेत, तत्वनिपातनमनर्थकं स्यात् । 'हनस्तोऽचिण्णलोः' इत्यनेनैव तत्वस्य सिद्धत्वात् । **वाच्यति वाचिक** इत्यत्र यद्यपि 'क्विबन्ता धातुत्वं न जहति' इति, तथापि धातोरित्येवं नासौ प्रत्ययो विहितः । तथा ह्येकत्र सुप इत्येवं प्रत्ययो विहितः इत्येवं—'सुप आत्मनः क्यच्' इति, इतरत्र च 'प्रातिपदिकात्'—ङ्याप्प्रातिपदिकाधिकारात् । तस्मादिह वचेः स्वरूपग्रहणात् तत्प्रत्यय एव कार्यसंविज्ञानं न भवति ॥ १५ ॥

**पदमञ्जरी**

**इति** । 'वसतिक्षुधोरिट्,' 'शासिवसिघसीनां च' इति षत्वम् । **संवीतादौ** 'हलः' इति दीर्घः । **शून इति** । 'ओदितश्च' इति निष्ठानत्वम् ।

**धातोः स्वरूपग्रहण इति** । यत्र धातुः स्वरूपेणोपादीयते, न धातुशब्देन तत्र तत्प्रत्यये धातोरित्येवं यो विहितः प्रत्ययस्तत्रैव कार्यं विज्ञायते । एतच्च 'भ्रौणहत्य' इति तत्त्वनिपातनेन ज्ञापयिष्यते । **वाच्यति, वाचिकमिति** । अत्र तु यद्यपि क्विबन्ता धातुत्वं न जहति, तथापि धातोरित्येवं प्रत्ययस्याविधानात्सम्प्रसारणाभावः ॥ १५ ॥

**भावबोधिनी**

√वस्—उषितः, उषितवान् । [ वस् + क्त, वस् + क्तवत्, व् का सम्प्रसारण, अ का पूर्वरूप, इट् "शासिवसिघसीनां च" सूत्र से स् का ष्—उषितः, उषितवान् । ] √वेञ्—उतः उतवान् । [ वे + क्त, वे + क्तवतु, व् का सम्प्रसारण उ, ए का पूर्वरूप – उत्, उतवत् । ] √व्येञ्—संवीतः, संवीतवान् । [ सम् पूर्वक व्ये + क्त, व्ये + क्तवत्, य् का सम्प्रसारण इ, ए का पूर्वरूप व्इ+त, "हलः" सूत्र से दीर्घ—वोत, संवीतः, संवीतवान् । ] √ह्वेञ्—आहूतः, आहूतवान् । आङ्पूर्वक ह्वेञ् से ह्वे + क्त, ह्वे + क्तवत्, व् का सम्प्रसारण उ, ए का पूर्वरूप, "हलः" सूत्र से दीर्घ—आहूतः, आहूतवान् । ] √वद—उदितः, उदितवान् । [ वद् + क्त, वद + क्तवतु, इट्, व् का सम्प्रसारण, अ का पूर्वरूप । ] √टु ओश्वि—शूनः, शूनवान् । [ 'आदिर्ञिटुडवः' सूत्र से टु की इत्संज्ञा, ओ की इत्संज्ञा, लोप, व् का सम्प्रसारण उ, इ का पूर्वरूप—शु + त, शु + तवत्, "हलः" सूत्र से दीर्घ "ओदितश्च" सूत्र से निष्ठा त का न—शूनः, शूनवान् । ]

धातु के स्वरूप के ग्रहण में उस प्रत्यय के परे रहते धातु का कार्य ज्ञात होता है । इस कारण यहाँ नहीं होता है—वाच्यति, वाचिकः । [ यहाँ धातुरूप को मानकर प्रत्यय नहीं किया गया है अतः यहाँ सम्प्रसारण नहीं होता है । ] ॥ १५ ॥

**२४५६. ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥१६॥ (२४१२)**

'ग्रह उपादाने' ( धा० पा० १५३४ ), 'ज्या वयोहानौ' ( धा० पा० १५०० ), 'वेञो वयिः ( २.४.४१ ), 'व्यध ताडने' ( धा० पा० ११८२ ), 'वश कान्तौ', ( धा० पा० १०८१ ), 'व्यच व्याजीकरणे' ( धा० पा० १२९४ ), 'ओव्रश्चू छेदने' ( धा० पा० १२९३ ), 'प्रच्छ ज्ञीप्सायाम्' ( धा० पा० १४१४ ), 'भ्रस्ज पाके' ( धा० पा० १२८५ )—इत्येतेषां धातूनां ङिति प्रत्यये परतश्चकारात् किति च सम्प्रसारणं भवति। ग्रह—गृहीतः। गृहीतवान्। ङिति- गृह्णाति, जरीगृह्यते। ज्या—जीनः, जीनवान्। 'ल्वादिभ्यः' ( ८.२.४४ ) निष्ठानत्वम्। ङिति-जिनाति, जेजीयते। 'हलः' ( ६.४.२ ) इति सम्प्रसारणदीर्घे कृते 'ष्वादीनाम्' ( ७.३.८० ) इति ह्रस्वः क्रियते।

वयिः— लिटि परतो वेञो वयिः ( २.४.४१ ) आदेशः, तस्य ङिदभावात् किदेवोदाह्रियते—ऊयतुः, ऊयुः। यद्येवम्, वयिग्रहणमनर्थकम्, यजादिषु वेञ् पठ्यते ? नैवं शक्यम्; लिटि तस्य 'वेञः' ( ६.१.४० )

**न्यासः**

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च॥** गृहीतमिति। 'ग्रहोऽलिटि' इति दीर्घः। **जरीगृह्यत इति**। यङि सम्प्रसारणं द्विवर्चनम्। 'रीगृदुपधस्य' इति रीगागमः।

वयिरयमस्त्येवात्मनेपदी—'अय वय गतौ', अस्ति च परस्मैपदी—'वेञो वयिः' इति; तत्र ग्रह्यादिभिरनात्मनेपदिभिः साहचर्य्यादनात्मनेपदी गृह्यते ? इत्याह—**वयिर्लिटीत्यादि**। तस्माच्च परस्य लिटः 'असंयोगाल्लिट्

**पदमञ्जरी**

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च॥ गृहीतः**, यद्यपि प्रथमं ङिति प्रत्यये परतः सम्प्रसारणं चकारात्किति चेति क्रमो व्याख्यातः, तथाप्यनास्थया प्रथमं कित्युदाहृतम्। **विजादेशो**[1]

**भावबोधिनी**

'√ग्रह उपादान अर्थ में', '√ज्या वय=अवस्था ही हानि अर्थ में', '√वेञ् बुनना अर्थ में', '√व्यध ताड़न अर्थ में', '√वश कान्ति = इच्छा अर्थ में', '√व्यच व्याजीकरण = बहाना अर्थ में,' '√ओ व्रश्चू छेदन अर्थ में', '√प्रच्छ ज्ञीप्सा अर्थ में', √भ्रस्ज पाक अर्थ में'—इन धातुओं का ङित् प्रत्यय परे रहते चकार के बल से कित् परे रहते सम्प्रसारण होता है (१) ग्रह—गृहीतः। गृहीतवान्। [ √ग्रह + क्त, ग्रह + क्तवतु, क् की इत्संज्ञा, लोप करने पर कित् प्रत्यय परे रहते 'र्' का सम्प्रसारण 'ऋ' और 'अ' का पूर्वरूप करने पर—गृह् + त, गृह् + तवत्, इट् आगम दीर्घ। ] ङित् प्रत्यय परे रहते का उदा०—गृह्णाति। जरीगृह्यते। [ ग्रह् + लट् = तिप्, श्ना = ना, 'सार्वधातुकमपित्' सूत्र से ङिद्वद्भाव होने पर सम्प्रसारण और णत्व होता है। ग्रह् + यङ्, सम्प्रसारण, पूर्वरूप करने पर गृह् य, द्वित्वादि करने पर ज गृह् य, "रीगृदुपधस्य च" सूत्र से रीक् = री का आगम—जरीगृह्यते रूप होता है। ] (२) ज्या—जीनः, जीनवान्। [ ज्या + क्त, ज्या + क्तवतु, य् का सम्प्रसारण, आ का पूर्वरूप, दीर्घ, "ल्वादिभ्यः" सूत्र से निष्ठा के त का न करने पर रूप बनते हैं। ] ङित् प्रत्यय परे रहते—जिनाति, जेजीयते। [ ज्या + श्ना + तिप्, सम्प्रसारण, पूर्वरूप करने पर जिनाति। ज्या + यङ्, सम्प्रसारण, पूर्वरूप, दीर्घद्वित्व, "ष्वादीनाम्" सूत्र से ह्रस्व, गुण—यही लिखा है— ] "हलः" सूत्र से सम्प्रसारण का दीर्घ करने पर "ष्वादीनाम्" सूत्र से ह्रस्व होता है।

(३) वय—लिट् परे रहते वेञ् का वय् आदेश होता है। लिट् के ङित् न होने के कारण कित् का ही उदाहरण दिया जा रहा है—ऊयतुः, ऊयुः। [ वेञ् + लिट् वय आदेश—वय् + लिट् = तस् = अतुस्, 'व्' का सम्प्रसारण 'अ'

---

१. अत्र 'वयिरादेशः' इति काशिकानुसारी पाठ उचितः।

**इति प्रतिषेधो वक्ष्यते, तत्र यथैव स्थानिवद्भावाद् वयेर्विधिः, एवं प्रतिषेधोऽपि प्राप्नोति ? नैष दोषः; 'लिटि वयो यः' ( ६.१.३८ ) इति यकारस्य सम्प्रसारणप्रतिषेधाद् वयेर्विधौ ग्रहणं प्रतिषेधे चाग्रहण-मनुमास्यते ? सत्यमेतत्; एष एवार्थः साक्षान्निर्देशेन वयेः स्पष्टीक्रियते ।**

**व्यध -विद्धः, विद्धवान् । ङिति—विध्यति, वेविध्यते ।**

**न्यासः**

कित्' इति कित्त्वेन भवितव्यम् ? इत्यत आह - **तस्येत्यादि । यद्येवमिति ।** यदि वेञादेशस्य वयेर्ग्रहणमित्यर्थः । **यजादिषु वेञ् पठ्यत इति ।** ततश्च पूर्वसूत्रेणैव तस्य स्थानिवद्भावात् सम्प्रसारणं सिद्धमित्यभिप्रायः । **नैवं शक्यमिति ।** विज्ञातुमिति शेषः । नानयोपपत्त्या वयिग्रहणमनर्थकं शक्यं विज्ञातुमित्यर्थः । किं कारणम् ? इत्याह—**लिटि तस्येत्यादि ।** स्यादेतत्—विधिप्रतिषेधयोर्विरोधादेकत्र विधिरेव भविष्यति, न प्रतिषेध इति ? अत आह—**अत्र यथैवेत्यादि ।** यदि विरोधादेकत्रासम्भवः, पर्यायोऽस्तु, न तु द्वयोरन्यत्र चरितार्थत्वादेकेनैव भवितव्यम्, नापरेणेत्येषोऽर्थो लभ्यत इति भावः । **नैष दोष इति ।** कथं नैष दोषः ? इत्यत आह—**लिटीत्यादि ।** 'लिटि वयो यः' इति यकारस्य सम्प्रसारणप्रतिषेधो लिङ्गम्— विधौ वेञोग्रहणेन वयिग्रहणं भवतीत्यस्यार्थस्य । असति विधौ ग्रहणे प्राप्तेरसम्भवात् प्रतिषेधोऽनर्थकः स्यात् । वेञ इत्यत्र प्रतिषेधे वयेर्ग्रहणं न भवतीति अत्राप्येतदेव प्रतिषेधवचनं लिङ्गम् । सति हि वेञ्ग्रहणे वेञ इत्यनेनैव प्रतिषेधस्य सिद्धत्वात्, पुनः 'लिटि वयो यः' इति प्रतिषेधोऽनर्थकः स्यात् । तदेतस्माल्लिङ्गाद् **वयेर्विधौग्रहणं प्रतिषेधे चाग्रहणमित्यनुमास्यते, सत्यमेत-**

**पदमञ्जरी**

**गृह्यत इति ।** पूर्वपरसाहचर्याद्यस्य वयेः परस्मैपदसंभवस्तस्य ग्रहणं न्याय्यम्, यस्तु 'अय वय गतौ' ( का० पा० ४७४, ४७५ ) इति वयिः, सोऽनुदात्तेदात्मनेपदी । **यद्येवमिति ।** वेञादेशस्य ग्रहणमित्यर्थः । **यजादिषु वेञ् पठ्यत इति ।** ततश्च पूर्वेणैव सम्प्रसारणं सिद्धमिति भावः । **नैवं शक्यमिति ।** विज्ञातुमिति शेषः । नानयोपपत्त्या

**भावबोधिनी**

का पूर्वरूप—उय्+अतुस्, द्वित्व, हलादिशेष सवर्णदीर्घ—ऊयतुः । इसी प्रकार बहुवचन में—ऊयुः । ] यदि ऐसा है तब तो 'वयि' का ग्रहण व्यर्थ है क्योंकि यजादिगण में वेञ् का पाठ है ? ऐसा नहीं कहा जा सकता क्योंकि लिट् परे रहते उस वेञ् के सम्प्रसारण का प्रतिषेध कहा जायगा । उसमें जिस प्रकार स्थानिवद्भाव से 'वय्' की विधि होती है उसी प्रकार प्रतिषेध भी प्राप्त होता है ? यह दोष नहीं है क्योंकि "लिटि वयो यः" सूत्र से यकार के सम्प्रसारण का प्रतिषेध होने से 'वय् का विधि में ग्रहण होता है । और प्रतिषेध में ग्रहण नहीं होता है—इसका अनुमान किया जायगा ? यह सच है, यही बात 'वय्' के साक्षात् निर्देश के द्वारा स्पष्ट की जाती है । [ इसका आशय न्यास में देखें । ]

(४) व्यध—विद्धः, विद्धवान् । [ व्यध्+क्त, व्यध्+क्तवत्, य् का सम्प्रसारण, अ का पूर्वरूप—विध्+त, "झषस्तथोर्धोऽधः' सूत्र से त का ध, 'झलां जश् झशि" सूत्र से प्रथम ध् का जश्त्व द्—विद्धः, विद्धवान् । ] ङित् प्रत्यय परे रहते—विध्यति, वेविध्यते । [ व्यध्+श्यन्=य+लट्=तिप, श्यन् परे रहते सम्प्रसारण होता है । व्यध्+यङ्, सम्प्रसारण, पूर्वरूप —विध्+य, द्वित्वादि करने पर विविध्य, अभ्यास का गुण —वेविध्यते । ]

(५) वश् —उशितः, उशितवान् । [ वश+क्त, वश्+क्तवत्, सम्प्रसारण, पूर्वरूप । ] ङित् परे रहते—उष्टः । उशन्ति । [ वश्+तस्, अदादि होने से शप् का लुक्, अपित् सार्वधातुक ङित् मान कर सम्प्रसारण, पूर्वरूप उश्+त, "व्रश्चभ्रस्ज" आदि सूत्र से श् का षत्व, ष्टुत्व । वश्+झि=अन्ति, पूर्ववत् सम्प्रसारण और पूर्वरूप—उशन्ति । ]

**वश—उशितः, उशितवान् । ङिति—उष्टः, उशन्ति ।**

**व्यच विचितः । विचितवान् । ङिति—विचति, वेविच्यते । 'व्यचेः कुटादित्वमनसि' ( रा० १८ ) प्रतिपादितम्, तेन सर्वत्राञ्णिति प्रत्यये सम्प्रसारणं भवति—उद्विचिता, उद्विचितुम्, उद्विचितव्यमिति ।**

**व्रश्चेः—वृक्णः, वृक्णवान् । अथ कथमत्र कुत्वम्, 'व्रश्चभ्रस्ज' ( ८.२.३६ ) इति हि षत्वेन भवितव्यम् ?**

**❀ निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः ❀ ( ? )। तत्र षत्वं प्रति नत्वस्य सिद्धत्वाद् झलादिर्निष्ठा न भवति। कुत्वे तु कर्त्तव्ये तदसिद्धमेवेति प्रवर्तते कुत्वम्। ङिति—वृश्चति, वरीवृश्च्यते।**

**न्यासः**

**दिति**। अनन्तरोक्तमर्थमभ्यनुजानाति। यदि सत्यमेतत्, तर्हि किमर्थं वयिग्रहणम् ? इत्याह—**एष एवेत्यादि**। तेन स्पष्टीकरणार्थं वयिग्रहणमित्याचष्टे। **विध्यतीति**। दिवादित्वाच्छ्यन्। **उष्ट इति**। तसन्तमेतत्, अदादित्वाच्छपो लुक्, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम्। **विचतीति**। तुदादित्वाच्छः।

**वृक्ण इति** पूर्ववन्नत्वम्, 'स्कोः' इति सलोपः। झलादिर्निष्ठा न भवतीति तेनात्र षत्वं न भवतीति भावः। झलादौ हि तद् विधीयते; 'झलो झलि' इत्यतो झल्ग्रहणानुवृत्तेः। **कुत्वे तु कर्त्तव्ये तदसिद्धमेवेति**। न हि यथा षत्वादौ निष्ठादेशस्य सिद्धत्वमुच्यते, तथा कुत्वेऽपि, तेन तत् प्रवर्त्तत एव। **वृश्चतीति**। पूर्ववच्छः। **वरीवृश्चचत**

**पदमञ्जरी**

वयिग्रहणमनर्थकं शक्यं विज्ञातुमित्यर्थः। **एवं प्रतिषेधोऽपि प्राप्नोतीति**। नात्रापिशब्देन समुच्चय उच्यते, किं तर्हि ? यथा स्थानिवद्भावाद्विधिः प्राप्यते, तथा प्रतिषेधोऽपि प्राप्नोति, तत्रापि स्थानिवद्भावस्य तुल्यत्वात् इति हेतोस्तुल्यत्वमपिशब्देन द्योत्यते, तेन प्रतिषेध एव भवेदित्यर्थः। **उष्ट इति**। तसन्तम्। व्यधिर्दिवादिः, व्यचिप्रभृतयस्तुदादयः। **वृक्ण इति**। 'स्कोः संयोगाद्योः' इति सलोपः, पूर्ववन्निष्ठानत्वम्। **वरीवृश्च्यत इत्यादौ** 'रीगृत्वतः'

**भावबोधिनी**

(६) व्यच—विचितः, विचितवान्। [ व्यच् + क्त, व्यच् + क्तवत्, य् का सम्प्रसारण, अ का पूर्वरूप। ] ङित् परे रहते—विचति। वेविच्यते। [ व्यच् + लट्, "तुदादिभ्यः शः" सूत्र से श=अ विकरण है ङित् मानकर सम्प्रसारण। व्यच् + यङ् = य, सम्प्रसारण, पूर्वरूप—विच् + य, द्वित्वादि। ] व्यच् का कुटादित्व अनस् परे प्रतिपादित किया गया है। [ अनस् में नञ् पर्युदास है अतः कृत्प्रत्यय मात्र में लेना है। "गाङ्कुटादिभ्यः" इस सूत्र में अञ्णित् प्रत्यय ङित् कहे गये हैं ] इसलिये सर्वत्र अञ्णित् प्रत्यय परे रहते सम्प्रसारण होता है—उद्विचिता, उद्विचितुम्, उद्विचितव्यम्।

( ७ ) व्रश्च—वृक्णः, वृक्णवान्। [ व्रश्च् + क्त, व्रश्च् + क्तवत्, सम्प्रसारण, पूर्वरूप, कुत्व, करने पर वृस्क् + न, "स्कोः संयोगाद्यो." सूत्र से स् का लोप, निष्ठा त का न, न का णत्व-वृक्णः, वृक्णवान्। ]

यहाँ कुत्व कैसे होगा, क्योंकि "व्रश्चभ्रस्ज" आदि सूत्र से षत्व होना चाहिए ? ❀ षत्व, स्वर, प्रत्ययविधि और इट्विधियों में निष्ठादेश सिद्ध ही कहना चाहिए। ❀ इस वचन से षत्व के प्रति नत्व आदेश सिद्ध ही रहता है अतः निष्ठा झलादि नहीं मिलता है। [ इसलिए झलादि परे न होने से व्रश्च् के श् का ष् नहीं होता है। ] परन्तु कुत्व की कर्तव्यता में तो वह नत्व आदेश असिद्ध ही रहता है इसलिए कुत्व होता ही है। ङित् परे रहने के उदा०—वृश्चति, वरीवृश्च्यते। [ व्रश्च् + श = अ + तिप्, व्रश्च् + यङ्, सम्प्रसारण पूर्वरूप वृश्च् य, द्वित्व हलादिशेष और रीक् आगम करने पर रूप बनता है। ]

प्रच्छ—पृष्टः, पृष्टवान्। ङिति—पृच्छति, परीपृच्छ्यते, प्रश्नः। नङि तु 'प्रश्ने चासन्नकाले' (३.२.११७) इति निपातनादसम्प्रसारणम्।

भ्रस्ज—भृष्टः, भृष्टवान्। ङिति—भृज्जति, बरीभृज्ज्यते। सकारस्य 'झलां जश् झशि' (८.४.५२) इति जश्त्वेन दकारः, स्तोः श्चुना श्चुः' (८.४.४०) इति श्चुत्वेन जकारः॥

२४५७. लिट्यभ्यासस्योभयेषाम्॥ १७॥ (२४०८)

उभयेषां=वच्यादीनां ग्रह्यादीनां च लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति। वचि—उवाच, उवचिथ। स्वप्—सुष्वाप, सुष्वपिथ। यज—इयाज, इयजिथ। टुवप्—उवाप, उवपिथ।

**न्यासः**

इति। 'रीगृत्वत इति वक्तव्यम्' इति रीगागमः। पृष्ट इति। पूर्ववत् षत्वम्। 'यजयाच' इत्यादिना नङि विहिते प्रश्न इत्यत्र सम्प्रसारणं कस्मान्न भवति? इत्यत आह—नङित्यादि। भृष्ट इति। पूर्ववत् षत्वम्। भृज्जतीति। पूर्ववच्छः। बरीभृज्यत इति। पूर्ववद् रीक्। सकारस्येत्यादि। ननु 'स्कोः संयोगाद्योरन्ते च' इति तस्य लोपेन भवितव्यम्? नैतदस्ति; झलि पदान्ते च स उच्यत इति॥ १६॥

लिट्यभ्यासस्योभयेषाम्॥ उवयिथेति। क्रादिनियमादिट् प्राप्तः 'उपदेशेऽत्वतः' इति प्रतिषिद्धः 'ऋतो भारद्वाजस्य' इति नियमात् पुनर्भवति।

**पदमञ्जरी**

इति रीग्भावः॥ १६॥

लिट्यभ्यासस्योभयेषाम्। विव्याथेति। 'व्यचेः कुटादित्वमनसीति वक्तव्यम्' (वा० १८) इत्यत्र पर्युदासवृत्त्यास्प्रत्ययसदृशस्य कृतो ग्रहणादिह ङित्वाभावाद्धातोः सम्प्रसारणाभावः।

**भावबोधिनी**

(८) प्रच्छ—पृष्टः, पृष्टवान्। [प्रच्छ+क्त, प्रच्छ्+क्तवत्, 'र्' का सम्प्रसारण अ का पूर्वरूप—पृच्छ्+त, "च्छ्वोः शूडनुनासिके च" सूत्र से च्छ् का श् आदेश, "व्रश्च-भ्रस्ज" आदि सूत्र से षत्व, ष्टुत्व।] ङित् परे रहते का उदा०—पृच्छति, परीपृच्छ्यते। [पृच्छ्+श=अ+ति, सम्प्रसारण, पूर्वरूप। प्रच्छ्+यङ्, सम्प्रसारण पूर्वरूप, द्वित्व, हलादिशेष के बाद रीक् आगम] प्रश्नः। [प्रच्छ्+नङ्, "च्छ्वोः शूडनुनासिके च" सूत्र से च्छ् का श् नङ् प्रत्यय परे रहते "प्रश्ने चासन्नकाले" (३।२।११७) इस निपातन के कारण सम्प्रसारण नहीं होता है।]

(९) भ्रस्ज—भृष्टः, भृष्टवान्। [भ्रस्ज्+क्त, सम्प्रसारण, कुत्व, स्लोप भृज्+त, ज् का ष् "व्रश्चभ्रस्ज" आदि सूत्र से भृष्+त, ष्टुत्व।] ङित् परे रहते उदा०—भृज्जति, बरीभृज्ज्यते। [भ्रस्ज्+श=अ, ति, सम्प्रसारण, अ का पूर्वरूप, श्चुत्व स् का श्, जश्त्व से श् का ज्—भृज्ज् अति। भ्रस्ज्+यङ् यहाँ सम्प्रसारण, पूर्वरूप के बाद द्वित्वादि करके ब भ्रस्ज्+य, रीक् आगम, स् का श्, श् का जश्त्व ज्—बरीभृज्ज्यते।] सकारका "झलां जश् झशि" सूत्र से जश्त्व करके दकार होता है और "स्तोः श्चुना श्चुः" सूत्र से 'द्' का चुत्व करके 'ज्' होता है। [सिद्धान्तकौमुदी में पहले श्चुत्व और बाद में जश्त्व से ज् किया गया है।]॥ १६॥

वचि आदि और ग्रह आदि दोनों के अभ्यास का सम्प्रसारण लिट् परे रहते होता है। उदा०—वच—उवाच, उवचिथ। [वच्+लिट्, तिप्=णल्=अ, द्वित्व, हलादिशेष, ववच्+अ, अभ्यास का सम्प्रसारण, पूर्वरूप उपधा की वृद्धि—उवाच। वच+लिट्=सिप्=थल्, यहाँ भी अभ्यास का सम्प्रसारण होता है। पित् परे होने से पूर्ववर्त्ती सूत्र की प्रवृत्ति नहीं होती है।] स्वप्—सुष्वाप, सुष्वपिथ। [स्वप्+लिट्=तिप्=णल्=अ, द्वित्व, हलादिशेष, अभ्यास के 'व्' का सम्प्रसारण, अ का पूर्वरूप सु स्वप्+अ, उपधावृद्धि, स् का ष्—सुष्वाप। थल् परे रहते—सुष्वपिथ।]

**ग्रह्यादीनाम्**—तत्र ग्रहेरविशेषः। जग्राह, जग्रहिथ। ज्या—जिज्यौ, जिज्यिथ। वयि—उवाय, उवयिथ। व्यध—विव्याध, विव्यधिथ। वश—उवाश, उवशिथ। व्यच—विव्याच, विव्यचिथ।

**वृश्चतेः सत्यसति वा योगे नास्ति विशेषः। योगारम्भे तु सति यदि सम्प्रसारणमकृत्वा हलादिःशेषेण ( ७.४.६० ) रेफो निवर्त्यते, तदा वकारस्य सम्प्रसारणं प्राप्नोति। अथ रेफस्य सम्प्रसारणं कृत्वा उरदत्वं रपरत्वं च क्रियते, तदानीमुरदत्वस्य स्थानिवद्भावात् 'न सम्प्रसारणे सम्प्रसारणम्' ( ६.१.३५ ) इति प्रतिषेधो भवतीत्यस्ति विशेषः। वव्रश्च, वव्रश्चिथ।**

### न्यासः

**ग्रहेरविशेष इति।** यस्मात् सति सम्प्रसारणे हलादिशेषेण रेफनिवृत्तौ जग्राहेति ग्रहेर्यद्रूपं भवति, सत्यपि सम्प्रसारण उरत्वरपरत्वहलादिशेषेष्वपि कृतेषु तदेव भवति। **जिज्याविति।** 'आत औ णलः'। **जिज्यिथेति।** 'आतो लोप इटि च' इत्याकारलोपः। **वृश्चतेः सत्यसति वा योगे नास्ति विशेष इति।** यद्यन्यार्थो योग आरभ्यते न वृश्चत्यर्थः, ततो वृश्चत्यर्थमेतद्वचनं न भवतीति सत्यप्येतस्मिन्नन्यार्थवचने वृश्चतेरभ्यासस्य नैव सम्प्रसारणेन भवितव्यम्। न ह्यसति तदर्थे वचने केनचित् प्रकारेण सम्प्रसारणमुपपद्यत इत्यभिप्रायः। ततश्चासत्यस्मिन् योगे वव्रश्चेति यद्रूपं भवति सत्यपि तदेवेति नास्ति वृश्चतेर्विशेषः। एतच्च वृत्तिकारमतेनोक्तम्। भाष्यकारमतेन त्वाह—**योगारम्भ इत्यादि।** तस्यायम्भावः—सति वचनेऽन्यार्थे क्रियमाणे तस्य वृश्चत्यर्थतापि भवति; वृश्चतेरपि ग्रह्यादिष्वन्तर्भावात्। ततश्च तदर्थोऽप्ययं योगारम्भ इति तदभ्यासस्यापि सम्प्रसारणेन भवितव्यमिति तुशब्दो वृत्तिकारमताद्विशेषं दर्शयति। **यदि सम्प्रसारणमकृत्वेत्यादि।** ननु चोभयग्रहणस्य प्रयोजनं वक्ष्यति—हलादिशेषं परमपि बाधित्वा सम्प्रसारणमेव यथा स्यादिति, तत् कुतोऽस्य पक्षस्य सम्भवः? उभयग्रहणरहिते योगे सतीत्यभिप्रायः। **अथ रेफस्येत्यादि।** उभयग्रहणसहिते योगे सतीति भावः। **उरदत्वस्य स्थानिवद्भावादिति।** केन पुनः स्थानिवद्भावः? 'अचः परस्मिन् पूर्वविधौ' इति। कः पुनरसौ? प्रत्ययोऽचः परः, यन्निमित्तमोरत्वं स्यात्। अङ्गस्य योऽभ्यास इति विज्ञायमाने सामर्थ्यात् प्रत्यय आश्रितो भवति; बिना तेनाङ्गव्यपदेशाभावात्। **वृत्तिकारमतं** चेषितव्यम्; अन्यथा तत्रोभयग्रहणाभावाद् हलादिशेषेण प्रागेव सम्प्रसारणाद् रेफे निर्वर्त्तिते वकारस्य सम्प्रसारणं स्यात्। ततश्च उव्रश्चेत्यनिष्टं रूपं स्यात्।

### पदमञ्जरी

'वृश्चतिपृच्छतिभृज्जतीनामविशेषः' इति वार्त्तिकम्, तद् वृश्चतिविषये **भाष्यकारेण** दूषितम्—'यदुच्यते वृश्चतेरविशेषः' इत्यादि। तत्र **वार्त्तिककारस्याभिप्रायमाह—वृश्चतेरिति।** असति सूत्रे यद्रूपं तदेव सतीत्यभिप्रायेण वार्त्तिककारेणैतदुक्तमित्यर्थः। **भाष्यकारस्याभिप्रायमाह—योगारम्भे सतीति।** रेफस्य सम्प्रसारणे सत्यसति वा नास्ति विशेष इति वार्त्तिककारेणोक्तमित्यध्यारोप्य भाष्यकारेणोक्तमित्यर्थः।

### भावबोधिनी

यज्—इयाज, इयजिथ। [ यज्+लिट् आदि के बाद द्वित्वादि—ययज्+अ, अभ्यास य् का सम्प्रसारण, अ का पूर्वरूप, उपधावृद्धि।] टुवप्—उवाप, उवपिथ। [ वप्+लिट् यहाँ भी द्वित्वादि के बाद अभ्यास का सम्प्रसारण होता है।]

ग्रह आदि का सम्प्रसारण, इनमें √ग्रह के सम्प्रसारण करने पर कोई अन्तर नहीं आता है—[ क्योंकि 'र्' का लोप हो सकता है और सम्प्रसारण में ऋ का गुण होकर र् का लोप हो जाता है—] जग्राह, जग्रहिथ। √ज्या-जिज्यौ, जिज्यिथ। [ ज्या+लिट्=तिप्, णल् "आत औ णलः" (पा० सू० ७।१।३४) से णल् का औ आदेश, द्वित्व ज्या ज्या+औ, सम्प्रसारण, आ का पूर्वरूप—जिज्या+औ, वृद्धि-जिज्यौ। ज्या+लिट् सिप्=थल्, इट् "आतो लोप इटि च" से आ का लोप, सम्प्रसारण पूर्वरूप—जिज्य् इथ।] √वयि—उवाय, उवयिथ। [वेञ्+लिट्=तिप्=णल्=अ, वेञ् का वय् आदेश, द्वित्व, सम्प्रसारण, उपधावृद्धि।] √व्यध—विव्याध, विव्यधिथ। [ व्यध्+लिट्=तिप्=

पृच्छतिभृज्जत्योरविशेषः। अकिदर्थं चेदमभ्यासस्य सम्प्रसारणं विधीयते। किति हि परत्वाद्धातोः सम्प्रसारणे कृते पुनः प्रसङ्गविज्ञानाद् द्विर्वचनम्—ऊचतुः, ऊचुरिति।

**न्यासः**

**पृच्छतिभृज्जत्योरविशेष इति।** ग्रहेरिव वेदितव्यः। **अकिदर्थमित्यादि।** किं पुनः कारणमकिदर्थमिदं व्याख्येयम्? इत्यत आह—**कितीत्यादि।** यस्मात् किति परत्वात् सम्प्रसारणे कृते कृतसम्प्रसारणस्य पुनः प्रसङ्गविज्ञानाद् द्विर्वचने कृतेऽन्तरेणाप्येद् वचनम्, ऊचतुरित्यादि सिद्धयत्येव। तस्मान्नेदं किदर्थम्, अपि त्वकिदर्थमेवेति।

अथ किमर्थमुभयेषामित्युच्यते, यावता स्वरितलिङ्गासङ्गादेवोभयेषामित्यस्यानुवृत्तिर्भविष्यति? न चानुवृत्तौ सत्यां ङिति वच्यादीनामपि सम्प्रसारणं प्राप्नोतीत्येतच्च नाशङ्कनीयम्; यदि वच्यादीनामपि ङिति सम्प्रसारणं स्याद् योगविभागोऽनर्थकः स्यात्; मण्डूकप्लुतिन्यायेन वा वच्यादीनामनुवृत्तिर्भविष्यति,

**पदमञ्जरी**

**अकिदर्थमिदमिति।** किति कथम्? इत्यत आह—**किति हीति।**

**भावबोधिनी**

णल् = अ, द्वित्व हलादिशेष सम्प्रसारण, उपधावृद्धि–विव्याध।] √ वश—उवाश, उवशिथ। [वश + लिट् = तिप् = णल् = अ, द्वित्व, हलादिशेष संप्रसारण] √ व्यच्—विव्याच, विव्यचिथ। [व्यच् + लिट् आदि के बाद द्वित्व, सम्प्रसारण, उपधावृद्धि।]

√ व्रश्च धातु के सूत्र में रहने अथवा न रहने पर कोई अन्तर नहीं है। सूत्र के बनाने पर यदि सम्प्रसारण न करके हलादिशेष द्वारा रेफ का लोप हो जाता है तब तो वकार का सम्प्रसारण प्राप्त होता है। यदि रेफ का सम्प्रसारण करके [ ऋ बनाते हैं तब ] "उरत्" सूत्र से [ ऋ का ] अत्व और रपरत्व किया जाता है। तब ऋ के अकार का स्थानिवद्भाव होने से "न सम्प्रसारणे सम्प्रसारणम्" ( पा० सू० ६।१।३७ ) के अनुसार [ वकार के ] सम्प्रसारण का प्रतिषेध होता है—यह अन्तर तो है। [ अतः ग्रहण सार्थक है। ] वव्रश्च, वव्रश्चिथ।

[ भाव यह है कि व्रश्च + लिट् = तिप् = णल् = अ, यहाँ द्वित्व करके हलादिशेष कर दिया जाय तब वव्रश्च बनता है। यदि रेफ का सम्प्रसारण कर दिया जाय तब वृश्च् व्रश्च् + अ, गुण, रपर हलादिशेष करने पर भी—वव्रश्च ही बनता है। अतः सूत्र में ग्रहण से कोई अन्तर नहीं आता है। ऐसी शंका होती है। समाधान यह है कि सूत्र में ग्रहण रहने पर सम्प्रसारण न करके पहले हलादिशेष कर देने पर व व्रश्च—यहाँ 'व्' का सम्प्रसारण प्राप्त होता है। यदि द्वित्व के बाद सम्प्रसारण करते हैं तो रेफ का ऋ होता है, उसका अ होता है किन्तु स्थानिवद्भाव से ऋ बुद्धि हो जाती है ऋ इस सम्प्रसारण के परे रहते 'व्' के सम्प्रसारण की प्राप्ति नहीं हो सकती क्योंकि "न सम्प्रसारणे हां, संप्रसारणम्" सूत्र से निषेध होता है। यह दूसरा पक्ष ही तर्कसंगत प्रतीत होता है। ]

√ प्रच्छ और भ्रस्ज में कोई अन्तर नहीं है। अकित् प्रत्ययों के लिए अभ्यास का यह संप्रसारण किया जा रहा है, क्योंकि कित् परे रहते तो धातु का सम्प्रसारण करने पर "पुनः प्रसङ्ग-विज्ञानात् सिद्धम्" इस वचन से द्वित्व करने पर रूप बनता है— ऊचतुः, ऊचुः। [ वच् + लिट् = तस् = अतुस्, पहले ही सम्प्रसारण करके तब द्वित्व और हलादिशेष करने पर रूप होता है—उ उच् + अतुस्। सवर्णदीर्घ—ऊचतुः। अतः अकित् प्रत्ययों के परे रहते केवल अभ्यास का सम्प्रसारण करना इस सूत्र का प्रयोजन है। ]

**अधिकारादेवोभयेषां ग्रहणे सिद्धे पुनरुभयेषामिति वचनम्—हलादिःशेषम् ( ७.४.६० ) अपि बाधित्वा सम्प्रसारणमेव यथा स्यादिति—विव्याध ॥**

## २४५८. स्वापेश्चङि ॥ १८ ॥ ( २५८४ )

**स्वापेरिति स्वपेर्ण्यन्तस्य ग्रहणम्, तस्य चङि परतः सम्प्रसारणं भवति । असूषुपत्, असूषुपन् । द्विर्वचनात्पूर्वमत्र सम्प्रसारणम्, तत्र कृते लघूपधगुणः (७.३.८६), तस्य 'णौ चङ्युपधायाः' (७.४.१) ह्रस्वत्वम्, ततो द्विर्वचनम्, 'दीर्घो लघोः' ( ७.४.९४ ) इति दीर्घत्वम् ।**

### न्यासः

कुतोऽस्य दोषस्यावसरः ? इत्याह—**अधिकारादेवेत्यादि** । अधिकारादेवोभयग्रहणे सिद्धे पुनरुभयेषां ग्रहणात् पुनःश्रुतिर्भवति । तस्याश्चैतदेव प्रयोजनम् –यत्र सम्प्रसारणं चान्यच्च प्राप्नोति तत्र सम्प्रसारणमेव यथा स्यात्, मा भूदन्यदिति । तेन विव्याध, विव्यधिथ इत्यत्र हलादिशेषं परमपि बाधित्वा सम्प्रसारणमेव भवति; अन्यथात्र परत्वात् प्राक् प्रवर्त्तमानेन हलादिशेषेण यकारस्य निवृत्तौ कृतायां वकारस्य सम्प्रसारणमापद्येत, ततश्च—उव्याध, उव्यधिथेत्यनिष्टं रूपं स्यात् ॥ १७ ॥

**स्वापेश्चङि** ॥ **स्वापेरिति** । 'आप्लृ व्याप्तौ' इत्यस्यापि सुपूर्वस्यैका निर्देशः सम्भवति, अतस्तद्ग्रहणाशङ्कानिराकरणायाह-**स्वपेर्ण्यन्तस्य ग्रहणमिति** । ण्यन्तस्य ग्रहणं चङ्ग्रहणाद् विज्ञायते, न ह्यण्यन्ताच्चङ् सम्भवति । **असूषुपदिति** । 'हेतुमति च' इति णिच् । **द्विर्वचनात् पूर्वमत्र सम्प्रसारणमिति** । परत्वात् । **स्वाप्यत इति** । कर्मणि लकारः, 'सार्वधातुके यक्' । **स्वापितमिति** । 'निष्ठायां सेटि' इति णिलोपः । ननु च ग्रह्यादिसूत्रात्

### पदमञ्जरी

**अधिकारादेवेति** । नात्र शास्त्रीयोऽधिकारः, किं तर्हि ? अपेक्षालक्षणः, तेन पूर्वसूत्रे वच्यादेः सम्बन्धोः नाशङ्कनीयः । योगाविभागसामर्थ्याद्वा पूर्वसूत्रे तेषामसम्बन्धः ।

**हलादिःशेषमपि बाधित्वेति** । अन्यथा परत्वाद्धलादिःशेषः स्यात् । **सम्प्रसारणमेव यथा स्यादिति** । पुनर्विधानमुभयेषां ग्रहणाद्भवति तद्बाधकबाधनार्थमिति भावः ॥ १७ ॥

**स्वापेश्चङि** ॥ **स्वापेर्ण्यन्तस्य ग्रहणमिति** । आप्नोतेस्तु सुपूर्वस्य ग्रहणं न अण्यन्तस्य; चङोऽसम्भवात् । ण्यन्तस्यापि न भवति; 'धातोः' इत्यधिकारात् । **स्वाप्यत इति** । कर्मणि लट्, णिलोपः ।

### भावबोधिनी

अधिकार (—अनुवृत्ति ) से ही ( वच्यादि और ग्रह्यादि ) दोनों का ग्रहण सिद्ध रहने पर पुनः 'उभयेषाम्' ( दोनों का )—यह कथन हलादिशेष का भी बाध करके पहले संप्रसारण ही हो सके—इसके लिए है—विव्याध । [ व्यध् व्यध् + लिट् = तिप् = णल् = अ में हलादिशेष और संप्रसारण दोनों की प्राप्ति है पर होने से हलादिशेष बलवत्तर है वही होगा । फलतः वव्यध = उव्याध रूप प्रसक्त होगा । किन्तु दुबारा ग्रहण करने के कारण पहले संप्रसारण होता है और वह 'य्' का ही होता है विध् व्यध् + अ, तब हलादिशेष होता है । अतः इष्ट रूप बनते हैं । अतः 'उभयेषाम्' ग्रहण सार्थक है । ] ॥ १७ ॥

'स्वापि' यह ण्यन्त का ग्रहण है । इसका चङ् परे रहते संप्रसारण होता है । उदा०—असूषुपत्, असूषुपन् । [ अ स्वप् + णिच् + चङ् = अ + लुङ्, 'व्' का संप्रसारण, अ का पूर्वरूप—सुप्, णिलोप, द्वित्व हलादिशेष—अ सु सुप् अ ति, अभ्यास का दीर्घ और द्वितीय स का ष—असूषुपत् । झि = अन्ति = अन् परे रहते—असूषुप् + अन् ] । यहाँ द्विर्वचन से पहले ही संप्रसारण होता है, संप्रसारण करने के बाद "पुगन्तलघूपधस्य च" ( पा० सू० ७।३।८६ से ) उपधा का गुण ( करने पर—सोप्—बनाकर ) "णौ चङ्युपधायाः" ( पा० सू० ७।४।१ ) से उपधा का ह्रस्व

चङीति किम् ? स्वाप्यते । स्वापितः ।

'कितीति निवृत्तम्, ङितीति केवलमिहानुवर्त्तते'— इत्येतद् दुर्विज्ञानम् ॥

## २४७९. स्वपिस्यमिव्येञां यङि ॥ १९ ॥ ( २६४५ )

'ञिष्वप् शये' ( धा० पा० १०६९ ), 'स्यमु ( धा० पा० ८२७ ) स्वन ( ८२८ ) ध्वन शब्दे' ( ८२९ ), 'व्येञ् संवरणे' ( धा० पा० १००८ ) —इत्येतेषां धातूनां यङि परतः सम्प्रसारणं भवति । **सोषुप्यते । सेसिम्यते । वेवीयते ।** यङीति किम् ? स्वप्नक् ( ३.२.१७२ ) ॥

### न्यासः

ङितीत्यनुवर्त्तते, न च स्वापेश्चङोऽन्यो ङिदस्ति, तत्र सामर्थ्याच्चङ्येव भविष्यतीति न कर्त्तव्यमेव चङ्ग्रहणम् ? इत्यत आह—**ङितीति केवलमित्यादि** । ग्रह्यादिसूत्रे ह्युभयं सन्निहितम्—किद्ग्रहणम्, ङिद्ग्रहणञ्च, तत्रोभयोरविशेषेण सन्निधाने ङिद्ग्रहणमेवानुवर्त्तते न किद्ग्रहणम्, ङिद्ग्रहणञ्च, तत्रोभयोरविशेषेण सन्निधाने ङिद्ग्रहणमेवानुवर्त्तते, न किद्ग्रहणमिति मन्दधिया दुर्बोधम् । अतः सुखप्रतिपत्तये मन्दबुद्धेश्चङ्ग्रहणं क्रियत इति भावः ॥ १८ ॥

**स्वपिस्यमिव्येञां यङि ॥ स्वप्नगिति** । 'स्वपितृषोर्नजिङ्' ॥ १९ ॥

### पदमञ्जरी

**स्वापित इति** । 'निष्ठायां सेटि' इति णिलोपः ।

ननु च 'ग्रहिज्या' इत्यादिसूत्राङ्ङितीत्यनुवर्त्तिष्यते, न चान्यः स्वापेर्ङिदस्ति, यङ् तावदनेकाच्त्वान्नास्ति, अपित्सार्वधातुकं तु विकरणैर्व्यवहितम्, अङादयस्त्वविहिता एव ? तत्राह—**ङितीति केवलमित्यादि** । ननु कितीत्येतच्चानुकृष्टं पूर्वसूत्र इति नेहानुवर्तिष्यते, किमर्थं दुर्ज्ञानं ङिद्ग्रहणम् ? ङिद्ग्रहणमपि तर्हि पूर्वसूत्रे नानुवर्तते; लिटो ङितोऽसम्भवादिति तस्येहानुवृत्तिर्दुर्विज्ञाना ॥ १८ ॥

**स्वपिस्यमिव्येञां यङि ॥ स्वप्नगिति** । 'स्वपितृषोर्नजिङ्' ॥ १९ ॥ २० ॥

### भावबोधिनी

करने पर ( पुनः उकार हो जाता है—सुप्, तब ) द्विर्वचन होता है सुप् सुप्, ( हलादिशेष के बाद षत्व ) "दीर्घो लघोः" ( ७।४।९४ ) सूत्र से उपधा का दीर्घ होता है ।

चङ् परे रहते ही सम्प्रसारण—इसका क्या फल है ? स्वाप्यते । स्वापितः । [ कर्म अर्थ में णिजन्त से लट् और क्त प्रत्ययों के रूप हैं । यहाँ चङ् परे नहीं है अतः संप्रसारण नहीं होता है । ]

इसमें 'कित् परे' इसकी अनुवृत्ति नहीं होती है केवल 'ङित् परे रहते' इतने की ही अनुवृत्ति होती है— यह समझना बहुत कठिन है । [ इस सूत्र में केवल ङित् की अनुवृत्ति होती है और 'स्वाप्' से परे चङ् ही ङित् होता है अतः चङ् का ग्रहण केवल स्पष्टता के लिये है । अन्यथा 'स्वापेश्च' यही सूत्र बना दिया जाता । किन्तु केवल ङित् की अनुवृत्ति समझना अत्यन्त कठिन है । अतः चङ् का स्पष्ट उल्लेख कर दिया गया ] ॥ १८ ॥

'√ ञि ष्वप शयन अर्थ में है', '√' स्यमु, स्वन, ध्वन—ये तीनों शब्द करना अर्थ में हैं, '√ व्येञ्' यह संवरण = ढकना अर्थ में है'—इन तीन धातुओं का यङ् पर रहते संप्रसारण होता है । उदा० — सोषुप्यते । सेसिम्यते । वेवीयते । [ स्वप् + यङ् पौनः पुन्य अर्थ में, संप्रसारण पूर्वरूप के बाद द्वित्व अभ्यास गुण, षत्व करने पर सोषुप्यते । स्यम् + यङ्, संप्रसारण करने पर सिम् बनाकर द्वित्वादि किया जाता है । व्ये + यङ् य् का संप्रसारण इ, ए का पूर्वरूप दीर्घ – वी + य, द्वित्व और अभ्यास के गुणादि के बाद—वेवीयते । ]

यङ् परे रहते—इसका क्या फल है ? स्वप्नक् । [ 'स्वप् से "स्वपितृषोर्नजिङ्" ( ३।२।१७२ ) सूत्र से नजिङ् = नज् प्रत्यय, ङित् परे है किन्तु यङ् नहीं है अतः संप्रसारण नहीं होता है । ] ॥ १९ ॥

## २४६०. न वशः ॥ २० ॥ ( २६४६ )

**'यङि' इति वर्त्तते । वशेर्द्धातोर्यङि परतः सम्प्रसारणं न भवति । वावश्यते, वावश्येते, वावश्यन्ते । यङीति[1] किम् ? उष्टः । उशन्ति[1] ॥**

## २४६१. चायः की ॥ २१ ॥ ( २६४७ )

**'यङि' इति वर्त्तते । 'चायृ पूजानिशामनयोः' ( धा० पा० ८८१ )—इत्येतस्य धातोर्यङि परतः कीत्ययमादेशो भवति । चेकीयते, चेकीयेते, चेकीयन्ते ।**

**दीर्घोच्चारणं यङ्लुगर्थम् । चेकीतः ॥**

### न्यासः

**न वशः ॥ २० ॥**

**चायः की** ॥ अथ किमर्थं दीर्घोच्चारणम्, यावता ह्रस्वादेशेऽपि 'अकृत्सार्वधातुकयोः' इति दीर्घत्वेन चेकीयत इति सिध्यत्येव ? इत्याह—**दीर्घोच्चारणमित्यादि** । कथं पुनः 'यङि च' इत्युच्यमाने आदेशो यङ्लुकि स्यात् ? प्रत्ययलक्षणेन स्यात् । अथापि 'न लुमताङ्गस्य' इति प्रत्ययलक्षणं प्रतिषिध्यते ? एवमप्यस्मादेव दीर्घोच्चारणाद् यङ्लुकि भवतीति विज्ञायते, अन्यथा तदपार्थकं स्यात् ।

**चेकीत इति** । तसन्तमेतत् । 'यङोऽचि च' इति यङो लुक् ॥ २१ ॥

### पदमञ्जरी

**चायः की** ॥ कीति दीर्घोच्चारणमनर्थकम्, ह्रस्वादेशेऽपि 'अकृत्सार्वधातुकयोः' इति दीर्घस्य सिद्धत्वात् ? तत्राह—**दीर्घोच्चारणमित्यादि** । कथं पुनर्यङ्युच्यमान आदेशो यङ्लुकि स्यात् ? प्रत्ययलक्षणेन । 'न लुमताङ्गस्य' ? एवं तर्हि दीर्घोच्चारणसामर्थ्याल्लुक्यपि भविष्यति, पूर्वसूत्रविहितं तु प्रसारणं यङ्लुकि न भवत्येव । न च 'सम्प्रसारणाश्रयं च कार्यं बलवत्' ( पु॰ वृ॰ १०३ ) इति प्रागेव लुकः सम्प्रसारणम्; प्रत्याख्यातत्वादस्याः परिभाषायाः । तथा च पूर्वत्रोभयेषां ग्रहणं कृतम्, अन्यथाऽनयैव परिभाषया हलादिशेषात्प्रागेव सम्प्रसारणं भविष्यतीत्यनर्थकं तत्स्यात् । सास्वपीति, सास्वप्ति । सास्वप्तः, सास्वपीतः । वाव्येति, वाव्याति ॥ २१ ॥

### भावबोधिनी

यङ् की अनुवृत्ति होती है । यङ् परे रहते √ वश् धातु का संप्रसारण नहीं होता है । उदा०—वावश्यते, वावश्येते, वावश्यन्ते । [ वश्+यङ्, "ग्रहि-ज्या" आदि सूत्र से संप्रसारण प्राप्त है उसका निषेध हो जाने पर वश् का ही द्वित्व होता है । 'दीर्घोऽकितः' सूत्र से अभ्यास का दीर्घ होता है । ]

यङ् परे रहते नहीं होता है—इसका क्या फल है ? उष्टः । उशन्ति । [ वश्+क्त, संप्रसारण पूर्वरूप, श् का ष्, ष्टुत्व उष्टः । वश्+लट् शप् का लुक् कित् परे मानकर संप्रसारण, पूर्वरूप—उशन्ति । 'ग्रहिज्या०' सूत्र से संप्रसारण होता है । ] ॥ २० ॥

'यङ् परे रहते'—इसकी अनुवृत्ति होती है । '√ चायृ पूजा और निशामन अर्थों में है'— इस धातु का यङ् परे रहते 'की' यह आदेश होता है । उदा०—चेकीयते, केकीयेते, केकीयन्ते । [ चाय्+यङ् 'की' आदेश द्वित्व, ह्रस्व, अभ्यास का गुण और चुत्व—चेकीय+लट्=त ]

दीर्घ ई का उच्चारण यङ् लुक् के लिए है । चेकीतः । [ यङ् का लुक् कर देने पर 'अकृत्सार्वधातुकयोः' से दीर्घ करना संभव नहीं है अतः 'की' यह दीर्घ आदेश किया गया—चेकी+तस् । ] ॥ २१ ॥

---

१—१. पाठोऽयमेकस्मिन्न् पुस्तके नास्ति ।

## २४६२. स्फायः स्फी निष्ठायाम् ॥ २२ ॥ ( ३०४४ )

'स्फायी ओप्यायी वृद्धौ' ( धा० पा० ४८७, ४८८ )—इत्यस्य धातोर्निष्ठायां परतः 'स्फी' इत्ययमादेशो भवति । स्फीतः । स्फीतवान् ।

निष्ठायामिति किम् ? स्फातिः । स्फातीभवतीत्येदपि क्तिन्नन्तस्यैव रूपम्, न निष्ठान्तस्य ।

'निष्ठायाम्' इत्येतदधिक्रियते 'लिड्यङोश्च' ( ६.१.२९ ) इति प्रागेतस्मात् सूत्रात् ॥

## २४६३. स्त्यः प्रपूर्वस्य ॥ २३ ॥ ( ३०३३ )

'निष्ठायाम्' इति वर्त्तते, 'सम्प्रसारणम्' इति च । 'स्फी' इत्येतन्न स्वर्यते । 'स्त्यै ष्टचै शब्दसङ्घातयोः' ( धा० पा० ९११,९१२ )—द्वयोरप्येतयोर्द्धात्वोः स्त्यारूपमापन्नयोः सामान्येन ग्रहणम् । 'स्त्या' इत्येतस्य प्रपूर्वस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति । प्रस्तीतः । प्रस्तीतवान् । सम्प्रसारणे कृते यण्वत्त्वं

### न्यासः

स्फायः स्फी निष्ठायाम् ॥ स्फातिरिति । 'स्त्रियां क्तिन्', वलि यलोपः । स्फातीभवतीति । स्फायतेर्निष्ठान्ताच्च्वौ कृते 'अस्य च्वौ' इतीत्वे सतीदं रूपं भवतीति मन्यमानो यश्चोदयेद्–अथ कथं स्फातीभवतीत्येतद्रूपम्, यावताऽत्रापि निष्ठायामस्मिन्नादेशे स्फीतीभवतीत्येवं भवितव्यमिति ? तं प्रत्याह—स्फातीभवतीत्येतदपीत्यादि । एतदपि स्फातिशब्दात् क्तिन्नन्ताच्च्वौ कृते 'च्वौ च' इति दीर्घत्वे च क्तिन्नन्तस्यैव रूपम् । अतो न भवत्येष दोषप्रसङ्गः ॥ २२ ॥

स्त्यः प्रपूर्वस्य ॥ सामान्येन ग्रहणमिति । द्वयोरप्यात्त्वे कृते पूर्वस्य 'धात्वादेः षः स' इति सत्वे समानत्वाद् रूपस्य । लक्षणप्रतिपदोक्तपरिभाषा च नेहोपतिष्ठते; उभयोर्लाक्षणिकत्वात् । अथात्र 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वं कस्मान्न भवति इत्यत आह—सम्प्रसारण इत्यादि । न त्वस्य पूर्वत्रासिद्धत्वात् पूर्वं संप्रसारणं

### पदमञ्जरी

स्त्यः प्रपूर्वस्य ॥ द्वयोरप्येतयोरिति । द्वयोरपि स्त्यारूपस्य लाक्षणिकत्वात् । सम्प्रसारणे कृते इति । तस्यासिद्धत्वात्प्रागेव सम्प्रसारणम् ।

### भावबोधिनी

'√ 'स्फायी, √ ओप्यायी' धातुएँ वृद्धि अर्थ में है' इस स्फायी धातु का निष्ठा परे रहते 'स्फी' यह आदेश होता है । उदा०—स्फीतः । [ स्फाय् + क्त =, स्फी आदेश—स्फीतः ।, स्फाय् + क्तवतु, 'स्फी' आदेश—स्फीतवान् । ]

निष्ठा परे रहते—इसका क्या प्रयोजन है ? स्फातिः । [ स्फाय् + क्तिन् है अतः स्फी आदेश नहीं होता है । ] स्फातीभवन्ति—यह रूप भी क्तिन् प्रत्ययान्त का ही है, निष्ठा प्रत्ययान्त का नहीं है । [ अतः स्फा का निष्ठा प्रत्यय वाला रूप मानकर 'अस्य च्वौ' से ईत्व मानकर स्फातीभवन्ति रूप मानना ठीक नहीं है । निष्ठा परे स्फी—आदेश होने से 'स्फीतीभवन्ति' यही रूप होगा । ]

'लिड्यङोश्च' ( पा० सू० ६।१।२९ ) सूत्र से पहले तक 'निष्ठा' इसका अधिकार (अनुवृत्ति) चलता है ॥ २२ ॥

'निष्ठा में' और 'सम्प्रसारण होता है'—इनकी अनुवृत्ति होती है । 'स्फी' इसमें स्वरितत्व नहीं है । [ अतः इसकी अनुवृत्ति नहीं होती है । ] '√ स्त्यै ष्टचै शब्द करना और संघात अर्थों में हैं'—इन दोनों धातुओं का जिन्होंने 'स्त्या' रूप प्राप्त कर लिया है, उनका सामान्य रूप से ग्रहण है । 'प्र' उपसर्ग पूर्वक 'स्त्या' इस धातु का निष्ठा परे रहते सम्प्रसारण होता है । उदा०—प्रस्तीतः, प्रस्तीतवान् । [ प्र स्त्यै, ऐ का आत्व ''आदेच उपदेशेऽशिति'' सूत्र से, 'ष्टचै' के ष् का स् करने पर ष्टुत्व समाप्त हो जाने से 'स्त्यै' बचता है । उसके ऐ का आत्व करने पर 'स्त्या' रूप ही रहता है । प्रस्त्या + त, य् का सम्प्रसारण इ, आ का पूर्वरूप, दीर्घ प्र स्तीत, प्र स्ती तवत् । ] सम्प्रसारण कर देने पर

**विहतमिति निष्ठानत्वं न भवति । 'प्रस्त्योऽन्यतरस्याम्' ( ८.२.५४ ) इति तु पक्षे मकारः क्रियते—प्रस्तीमः, प्रस्तीमवान् ।**

**प्रपूर्वस्येति किम् ? संस्त्यानः, संस्त्यानवान् ।**

**'प्रस्त्यः' इत्येव[1] सिद्धे पूर्वग्रहणमिहापि यथा स्यात्—प्रसंस्तीतः, प्रसंस्तीतवान् ।**

**तत्कथं प्रपूर्वस्येति षष्ठ्यर्थे बहुव्रीहिः ? प्रः पूर्वो यस्य धातूपसर्गसमुदायस्य स प्रपूर्वस्तदवयवस्य स्त्यः—इति व्यधिकरणे षष्ठ्यौ । तत्र प्रसंस्तीत इत्यत्रापि प्रपूर्वसमुदायावयवः स्त्याशब्दो भवति ॥**

**न्यासः**

क्रियत इति, तत्र कृते च यण्वत्ता नास्तीति नत्वं न भवति ।

**प्रस्त्य इत्येवं सिद्ध इति ।** ननु चैवमुच्यमाने प्रशब्दस्यापि सम्प्रसारणं स्यात् ततश्च प्रस्तीत इति रूपं स्यात्, तत् किमुच्यते—प्रस्त्य इत्येवं सिद्ध इति ? 'अनन्त्यविकारेऽन्त्यदेशस्य' इति न भवत्येष इति मन्यते । **इहापि यथा स्यादिति ।** कस्मात् पुनर्न प्राप्नोति ? संशब्देन व्यवहितत्वात् ।

किं पूर्वग्रहणे क्रियमाणे शब्दार्थ एव तथाविधो भवति येनात्रापि भवति ? अथ ग्रन्थाधिक्यादर्थाधिक्यं सूचयति-इत्यभिप्रायेणाह—**तत् कथमिति ।** प्रथमकल्पं दर्शयन्नाह-**प्रपूर्वस्येति । षष्ठ्यर्थे बहुव्रीहिरिति ।** पूर्वशब्दोऽयमवयववचन इति षष्ठ्यर्थे बहुव्रीहिर्भवति । अवयववाचिनि पूर्वशब्दे धातुरन्यपदार्थो नोपपद्यते । न हि धातोः प्रशब्दोऽयमवयवो भवति, अपि तु धातूपसर्गसमुदायस्य । तस्मात् स एवान्यपदार्थो युक्त इत्याह-**प्रः पूर्वो यस्येत्यादि । तदवयवस्येति ।** तस्यावयवस्तदवयव इति षष्ठीसमासः । तच्छब्देन धातूपसर्गसमुदायः परामृश्यते । **व्यधिकरणषष्ठ्याविति । प्रपूर्वस्येति ।** स्त्यावयवापेक्षया योऽयमवयवावयविसम्बन्धस्तत्र षष्ठी, 'स्त्यः' इत्येषा तु यणवयवापेक्षया यः सम्बन्धस्तत्र । तेन भिन्नाभिधेयत्वात् 'स्त्यः', 'प्रपूर्वस्य' इति व्यधिकरणे षष्ठ्यौ । स्यादेवम्, प्रसंस्तीत इत्यत्र प्रपूर्वसमुदायावयवः स्त्याशब्दो न सम्भवति इत्यत आह-**तत्रेत्यादि** ॥ २३ ॥

**पदमञ्जरी**

**प्रस्त्य इत्येव सिद्ध इति ।** यथा 'प्रस्त्योऽन्यतरस्याम्' इत्यत्र । न चैवमुच्यमाने प्रशब्दस्यापि यो रेफस्तस्यापि प्रसङ्गः; धातोरित्यधिकारात् । **प्रसंस्तीत इति ।** 'प्रस्त्योऽन्यतरस्याम्' इति मत्वमत्र न भवत्येव । **तत्कथमिति ।** कथमयमर्थः शब्देनाभिहितो भवतीति प्रश्नः । **षष्ठ्यर्थे बहुव्रीहिरिति ।** पूर्वशब्दस्यावयववाचित्वात्, यथा—पूर्वं कायस्येति । **व्यधिकरणे षष्ठ्याविति ।** प्रपूर्वस्येति स्त्याशब्दापेक्षयावयवषष्ठी, स्त्य इत्येषापि यणवयवापेक्षया षष्ठी । यथा पुनरयमर्थः प्रकृतोपयोगी तथा दर्शयति—**तत्रेति** ॥ २३ ॥

**भावबोधिनी**

धातु की यण्वत्ता नष्ट हो जाती है इसलिए [ 'संयोगादेरातो धातोर्यण्वतः' सूत्र से ] निष्ठा के त का 'न' नहीं होता है । 'प्रस्त्योऽन्यतरस्याम्' ( ८।२।५४ ) सूत्र से पक्ष में मकार होता है—प्रस्तीमः, प्रस्तीमवान् ।

प्रपूर्वक—इसके कथन का क्या प्रयोजन है ? संस्त्यानः, संस्त्यानवान् । [ यहाँ 'सम्' उपसर्ग पूर्व में है अतः सम्प्रसारण नहीं होता है, यण्वान् संयोगादि आकारान्त मानकर णत्व हो जाता है । ]

'प्रस्त्यः' ऐसा एक साथ न लिखकर 'पूर्वस्य' का ग्रहण इसलिये है कि यहाँ भी हो सके—प्रसंस्तीतः, प्रसंस्तीतवान् । [ यहाँ सम् के पहले 'प्र' है अतः सम्प्रसारण में बाधा नहीं है । ]

यदि उपर्युक्त बात है तब तो 'प्रपूर्वस्य' यह षष्ठी के अर्थ में बहुव्रीहि [ प्रः पूर्वः यस्य स तस्य – यह ] कैसे है ? प्र है पूर्व में जिस धातु और उपसर्ग समुदाय के वह समुदाय प्रपूर्व है, उसके अवयव 'स्त्या' का [ संप्रसारण होता है ]—ऐसे व्यधिकरण अर्थ में षष्ठी विभक्तियाँ प्रयुक्त हैं । इनमें 'प्रसंस्तीतः' यहाँ भी प्रपूर्व समुदाय का अवयव 'स्त्या' शब्द होता है । [ अतः संप्रसारण में कोई बाधा नहीं है । ] ॥ २३ ॥

---

१, न्यासे 'इत्येवं सिद्धे', पदमञ्जर्याम् 'इत्येव सिद्धे' इति पाठयोः पदमञ्जरीपाठ उचिततरः प्रतिभाति ।

**२४६४. द्रवमूर्त्तिस्पर्शयोः श्यः ॥ २४ ॥ ( ३०२० )**

**द्रवमूर्त्तौ = द्रवकाठिन्ये, स्पर्शे च वर्त्तमानस्य 'श्यैङ् गतौ' ( धा० पा० ९६४ ) इत्यस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति । शीनं घृतम् । शीना वसा । शीनं मेदः । द्रवावस्थायाः काठिन्यं गतमित्यर्थः । 'श्योऽस्पर्शे ( ८.२.४७ ) इति निष्ठानत्वम् ।**

**स्पर्शे च—शीतं वर्त्तते । शीतो वायुः । शीतमुदकम् । गुणमात्रे तद्वति चास्य शीतशब्दस्य वृत्तिर्द्रष्टव्या । द्रवमूर्त्तिस्पर्शयोरिति किम् ? संश्यानो वृश्चिकः ॥**

**२४६५. प्रतेश्च ॥ २५ ॥ ( ३०२२ )**

**'श्यः' इति वर्त्तते । प्रतेरुत्तरस्य श्यायतेर्निष्ठायां परतः सम्प्रसारणं भवति । प्रतिशीनः, प्रतिशीनवान् ।**

**न्यासः**

**द्रवमूर्त्तिस्पर्शयोः श्यः ॥ द्रवमूर्त्तौ द्रवकाठिन्य इति ।** अनेन द्रवमूर्त्तिशब्दस्यार्थमाचष्टे । द्रवावस्थाया उत्तरोऽवस्थाविशेषः काठिन्याख्योऽत्र द्रवमूर्त्तिशब्देनोच्यते ।

**स्पर्शे चेति ।** रूपादिसहचरितो गुणः स्पर्श इत्युच्यते । **शीतो वायुः, शीतमुदकमिति ।** कथं पुनरत्र सामानाधिकरण्यम्, यावता शीतशब्देन गुणविशेषोऽभिधीयते । वाय्वादिशब्देन तु द्रव्यविशेष इत्यत आह—**गुणमात्र इत्यादि ।** यथा – शुक्लादिशब्दाः कदाचिद् गुणमात्रे वर्त्तन्ते, यथा – पटस्य शुक्ल इति; कदाचित्तु तद्वति द्रव्ये सोऽमित्यभेदसम्बन्धत्वान् मतुब्लोपान् मत्वर्थीयाकारप्रत्ययान्तत्वाद्वा शुक्लः पट इति, तथा शीतशब्दोऽपि । तेन यदा तद्वति द्रव्ये वर्त्तते, तदोभयोरेकद्रव्ये निवेशितत्वादुपपद्यते सामानाधिकरण्यमिति भावः ।

**संश्यान इति ।** 'संयोगादेः' इत्यादिना नत्वम् ॥ २४ ॥

**प्रतेश्च ॥ २५ ॥**

**पदमञ्जरी**

**द्रवमूर्तिस्पर्शयोः श्यः ॥ द्रवकाठिन्य इति ।** द्रवावस्थाया उत्तरावस्थाविशेषः = काठिन्यम् । **स्पर्शे चेति ।** रूपादिसहचरितो गुणः = स्पर्शः ।

**शीतो वायुरिति ।** कथं पुनः स्पर्शमात्राभिधायिनः शीतशब्दस्य तद्वद्द्रव्यवाचिना वायुशब्देन सामानाधिकरण्यम् ? तत्राह—**गुणमात्र इत्यादि ।** शुक्लादिशब्दवदिति भावः ॥ २४ ॥ २५ ॥

**भावबोधिनी**

द्रव्यमूर्ति = द्रव का कठिन होना अर्थ में और स्पर्श अर्थ में वर्तमान 'श्यैङ् गतौ' धातु का संप्रसारण निष्ठा प्रत्यय परे रहते होता है । [ द्रव अवस्था के बाद की अवस्थाविशेष को कठिन शब्द से कहा गया है । जब पिघला न होकर कड़ा पदार्थ हो तब यह रूप प्रयुक्त होता है । ] उदा०—शीनं घृतम् । शीना वसा । शीनं मेदः । [ श्यै + क्त, आत्व, श्या + क्त, संप्रसारण, आ का पूर्वरूप दीर्घ शी + क्त, त का न ] द्रव अवस्था ( पिघलेपन ) से कठिन ( कड़ेपन ) को प्राप्त—यह अर्थ है । "श्योऽस्पर्शे" ( पा० सू० ८।२।४७ ) इस सूत्र से निष्ठा के 'त' का 'न' होता है ।

स्पर्श अर्थ में उदा०—शीतं वर्त्तते । शीतो वायुः । शीतम् उदकम् । [ यहाँ भी श्यै = श्या + क्त, संप्रसारण, निष्ठा का नत्व नहीं होता है अतः 'त' ही रहता है । ] केवल गुण अर्थ में और गुणवान् अर्थ में अर्थात् गुण ( शैत्य ) और गुणी ( शैत्यवान् ) दोनों अर्थों में इस शीत शब्द की वृत्ति ( प्रयोग ) देखनी चाहिए ।

द्रवमूर्ति और स्पर्श—इन्हीं अर्थों में—इसका क्या फल है ? संश्यानः वृश्चिकः । [ दोनों अर्थ न होने से संप्रसारण नहीं होता है । निष्ठानत्व होता है । ] ॥ २४ ॥

'श्यः' इसकी अनुवृत्ति होती है । 'प्रति' उपसर्ग के उत्तरवर्त्ती 'श्या' का निष्ठा प्रत्यय परे रहते संप्रसारण

द्रवमूर्त्तिस्पर्शाभ्यामन्यत्रापि यथा स्यादिति सूत्रारम्भः ॥

## २४६६. विभाषाऽभ्यवपूर्वस्य ॥ २६ ॥ ( ३०२३ )

'श्यः' इति वर्त्तते। अभि, अव—इत्येवम्पूर्वस्य श्यायतेर्निष्ठायां विभाषा सम्प्रसारणं भवति। अभिशीनम्, अभिश्यानम्। अवशीनम्, अवश्यानम्। द्रवमूर्त्तिस्पर्शविवक्षायामपि विकल्पो भवति। अभिशीनं घृतम्, अभिश्यानं घृतम्। अवशीनं मेदः, अवश्यानं मेदः। अभिशीतो वायुः, अभिश्यानः। अवशीतमुदकम्, अवश्यानमुदकम्।

सेयमुभयत्रविभाषा द्रष्टव्या। पूर्वग्रहणस्य च प्रयोजनम्—समभिश्यानम्, समवश्यानमित्यत्र मा भूदिति केचिद् व्याचक्षते। न किलायमभ्यवपूर्वः समुदाय इति। योऽत्राभ्यवपूर्वः समुदायस्तदाश्रयो विकल्पः कस्मान्न भवति ? तस्मादत्र भवितव्यमेव। यदि तु नेष्यते, ततो यत्नान्तरमास्थेयमस्माद्विभाषाविज्ञानात्—व्यवस्थेयम्।

### न्यासः

**विभाषाऽभ्यवपूर्वस्य ॥ सेयमुभयत्र विभाषेति।** द्रवमूर्त्तिस्पर्शविषये पूर्वेण प्राप्ते, अन्यत्राप्राप्ते। अथ पूर्वग्रहणं किमर्थम्, न 'विभाषाऽभ्यवाभ्याम्' इत्येवोच्येत ? अत आह—**पूर्वग्रहणस्येत्यादि**। क्रियमाणे पूर्वग्रहणे कस्मादेवात्र न भवतीत्याह—**न किलेत्यादि**। अयं हि द्विविधोऽपि समुदायो नाभिपूर्वः, नाप्यवपूर्वः, किं तर्हि ? सम्पूर्वः। तेन पूर्वग्रहणादत्र न भवति। क्रियमाणेऽपि पूर्वग्रहणे प्राप्नोत्येवेति मन्यमानः किलशब्दमरुचिसूचनार्थं प्रयुक्तवान्। तामेव प्राप्तिं दर्शयन्नाह—**योऽत्रेत्यादि**। सम्-शब्दात् परो यो धातूपसर्गसमुदायस्तदाश्रयो विकल्पः कस्मान्न भवति, भवति ह्यसावभ्यवपूर्व इत्यस्ति प्राप्तिः ? अत आह—**यत्नान्तर-**

### पदमञ्जरी

**विभाषाभ्यवपूर्वस्य ॥ सेयमुभयत्र विभाषेति।** द्रवमूर्तिविषये पूर्वेण प्राप्तेऽन्यत्राप्राप्ते। अथ पूर्वग्रहणं किमर्थम्, न 'विभाषाभ्यवाभ्याम्' इत्येवोच्येत, तत्राह—**पूर्वग्रहणस्येत्यादि**। क्रियमाणेऽपि पूर्वग्रहणे कस्मादेवात्र न भवति ? इत्याह—**न किलेति**। किलशब्दसूचितामरुचिं दर्शयति—**योऽत्रेति**। मा भून्महासमुदायोऽभ्यवपूर्वः, अवान्तरसमुदायस्त्वभ्यवपूर्वोऽप्यस्ति, तदाश्रयो विकल्पः प्राप्नोति। **यत्नान्तरमास्थेयमिति**। विभाषाग्रहणं

### भावबोधिनी

होता है। उदा०—प्रतिशीनः, प्रतिशीनवान्। [ प्रति श्यैं + क्त, आत्व, संप्रसारण, आ का पूर्णरूप दीर्घ, निष्ठा त का न—प्रतिशीनः। प्रति श्यैं = श्या + क्तवतु। ]

द्रवमूर्ति और स्पर्श अर्थों से भिन्न अर्थों में जिस प्रकार हो सके इसके लिए यह सूत्र बनाया गया है ॥ २५ ॥

'श्यः' इसकी अनुवृत्ति होती है। अभि और अव—ये जिसके पूर्व में हैं ऐसे √ श्यैं धातु से निष्ठा प्रत्यय परे रहते विकल्प से संप्रसारण होता है। उदा०—अभिशीनम् अभिश्यानम्। [ अभिश्यैं = श्या, य् का संप्रसारण आ का पूर्वरूप दीर्घ, निष्ठा त का न—अभिशीनम्। संप्रसारण न होने पर—अभिश्यानम् ] अवशीनम्, अवश्यानम्। अव + श्यैं = श्या + क्त, संप्रसारण होने पर पहला रूप और न होने पर दूसरा रूप बनता है। ] द्रवमूर्ति और स्पर्श की विवक्षा में भी विकल्प होता है—अभिशीनं घृतम्, अभिश्यानं घृतम्। अवशीनं मेदः, अवश्यानं मेदः। [ संप्रसारण होने और न होने से दो रूप होते हैं। ] अभिशीतो वायुः, अभिश्यानः। अवशीतम् उदकम्, अवश्यानम् उदकम्। [ जब संप्रसारण होता है तब यण्वान् न रह जाने से त का न नहीं होता है, किन्तु जब संप्रसारण नहीं होता है तब यण्वान् होने से "संयोगादेरातो धातोर्यण्वतः" सूत्र से निष्ठा का न हो जाता है। इसीलिए उक्त दो रूप बनते हैं। ]

यह सूत्र उभयत्रविभाषा समझें। [ क्योंकि द्रवमूर्ति और स्पर्श के विषय में पूर्व सूत्र से प्राप्त है अन्य अर्थों में नहीं प्राप्त है अतः प्राप्ताप्राप्तविभाषा समझनी चाहिये। ] पूर्व—इसके ग्रहण का प्रयोजन है—समभिश्यानम्, समवश्यानम्—इनमें

**पूर्वग्रहणस्य चान्यत् प्रयोजनं वक्तव्यम्**[1] ॥

**२४६७. शृतं पाके ॥ २७ ॥ ( ३०६७ )**

**'विभाषा' इत्यनुवर्त्तते । 'श्रा पाके' ( धा० पा० ८१० )—इत्येतस्य धातोर्ण्यन्तस्याण्यन्तस्य च पाकेऽभिधेये क्तप्रत्यये परतः शृभावो निपात्यते विभाषा । शृतं क्षीरम् । शृतं हविः ।**

**न्यासः**

**मास्थेयमिति ।** विभाषाग्रहणमिह क्रियते, सा च व्यवस्थितविभाषा विज्ञायते, तेनेह न भवतीति यत्नान्तरम् । **पूर्वग्रहणस्य चान्यत्प्रयोजनं वक्तव्यमिति ।** तत् पुनरभिसंशीनम्, अभिसंश्यानम्, अवसंशीनम्, अवसंश्यानम्—इत्यत्रापि विकल्पो यथा स्यादित्येवं तद् वेदितव्यम् । एतच्च पूर्वग्रहणे क्रियमाणे यथोपपद्यते तथा 'स्त्यः प्रपूर्वस्य' इत्यत्र 'प्रपूर्वस्येति षष्ठ्यर्थे बहुव्रीहिः' इत्यादिना व्याख्यातम् ॥ २६ ॥

**शृतं पाके ॥ श्रा पाक इत्यस्य धातोरिति ।** 'श्रा पाके' इत्यदादौ पठ्यते, घटादौ च मित्संज्ञार्थम्, केश्चिच्चुरादावपि, 'श्रै पाके' इति भ्वादौ, तत्रेहाविशेषेण ग्रहणं प्राप्तम् । श्रायतेरपि हि कृतात्वस्यैतद्रूपं भवत्येव, निपातनाच्च । लक्षणप्रतिपदोक्तपरिभाषया प्रतिबन्धं न करोति । **ण्यन्तस्याण्यन्तस्य चेति ।** विशेषानुपादानात् । तथा चोक्तम्—श्राश्रप्योः शृतमिति ।

**पदमञ्जरी**

व्यवस्थितविभाषार्थमाश्रयणीयमित्यर्थः । **पूर्वग्रहणस्य चान्यत्प्रयोजनं वक्तव्यमिति ।** तत्पुनरभिसंशीनम्, अभिसंश्यानम्, अवसंशीनम्, अवसंश्यानमित्यत्रापि विकल्पप्रवृत्तिरेव । तच्च पूर्वग्रहणे क्रियमाणे यथा लभ्यते तथा 'स्त्यः प्रपूर्वस्य' इत्यत्र व्याख्यातम् ॥ २६ ॥

**शृतं पाके ॥ श्रा पाक इत्यस्य धातोरिति ।** 'श्रा पाके' ( धा० पा० १०५३ ) इत्यदादौ पठ्यते, 'श्रै पाके' ( धा० पा० ९१९ ) इति चुरादौ, घटादिष्वपि मित्त्वार्थः 'श्रा पाके' ( धा० पा० ८१० ) इति पठ्यते, तत्रेह सर्वेषां ग्रहणम् । श्रायतेरपि कृतात्वस्यैतद्रूपं भवति, निपातनसामर्थ्याच्च लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयते । **ण्यन्तस्य चाण्यन्तस्य चेति ।** तथा चोक्तम्—'श्राश्रप्योः शृभावो निपात्यते' इति । अत एव प्रकृतं सम्प्रसारणमेव न विहितम्, श्रपेरपि शृतमित्येव यथा स्यादिति ।

**भावबोधिनी**

संप्रसारण न हो सके—ऐसी व्याख्या कुछ लोग करते हैं। क्योंकि उक्त समुदाय अभ्यत्रपूर्व नहीं है। जो अभ्यत्रपूर्व समुदाय है उसे मानकर विकल्प क्यों नहीं होता है ? अतः यहाँ होना ही चाहिए। यदि इष्ट नहीं है तब दूसरा प्रयत्न करना चाहिए इस विभाषाविज्ञान से—यह व्यवस्था है। और पूर्व ग्रहण का दूसरा ही प्रयोजन कहना चाहिए। [ अतः यह व्यवस्थित विभाषा माननी चाहिए। यही दूसरा यत्न है, जिससे अतिप्रसक्ति वारित की जा सकती है। ] ॥ २६ ॥

'विभाषा' इसकी अनुवृत्ति होती है। '√ श्रा पाके' ( पकाना अर्थ में श्रा धातु है ) इस धातु के णिजन्त और अणिजन्त का शृ भाव विकल्प से निपातित होता है यदि 'क्त' प्रत्यय परे हो और पाक अर्थ अभिधेय हो। उदा०—शृतं क्षीरम् । शृतं हविः । [ श्रा + क्त, शृ आदेश करने पर रूप बना है। ]

---

१. इतोऽग्रे—"अभिसंशीनम्, अभिसंश्यानं वा । अवसंशीनम्, अवसंश्यानं वा । अत्र विकल्पो यथा स्याद् इति पूर्वग्रहणम् 'स्त्यः प्रपूर्वस्य' इतिवत्"— इति पाठो दृश्यते, स तु प्रक्षिप्तो वेदितव्यः; पदमञ्जर्याम्, न्यासे च तस्य व्याख्यानरूपेण दर्शनात् ।

**व्यवस्थितविभाषा चेयम्, तेन क्षीरहविषोर्नित्यं श्रृभावो भवति। अन्यत्र न भवति—श्राणा यवागूः, श्रपिता यवागूरिति।**

**यदापि बाह्ये प्रयोजके द्वितीयो णिजुत्पद्यते, तदापि नेष्यते—श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति।**

**श्रातिरयमकर्मकः कर्मकर्तृविषयस्य पचेरर्थे वर्त्तते, स ण्यन्तोऽपि प्राकृतं पच्यर्थमाह। तदत्र द्वयोरपि**

**न्यासः**

यदि विभाषेत्यनुवर्त्तते क्षीरहविषोरपि पक्षे—श्राणम्, श्रपितमिति स्यात्; ताभ्यामन्यत्रापि पक्षे श्रृतमिति प्रसज्येत ? इत्यत आह—**व्यवस्थितविभाषेयमिति।**

**यदापीत्यादि।** प्रयोजकव्यापारः प्रेषणाध्येषणादिः कार्ये कारणोपचारं कृत्वा प्रयोजकशब्देनोक्तः। स हि प्राकृतादर्थाद् बाह्यो भवति, तत्र तस्यानन्तर्भावात्। तत्र यदा 'हेतुमति च' इति द्वितीयो णिजुत्पद्यते, तदापि क्षीरहविषोरपि निपातनमेतन्नेष्यते; व्यवस्थितविभाषाविज्ञानादेव। तथा चोक्तम्—श्रपेः श्रृतमन्यत्र हेतोरिति। हेतुमण्णिचोऽन्यत्रेत्यर्थः। द्वितीयग्रहणं यदैकमेव भवति, तदेष्टत्वाच् श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति 'तत्प्रयोजको हेतुश्च' इति चकाराद् देवदत्तयज्ञदत्तयोः कर्तृसंज्ञाविधानादुभयत्रापि कर्त्तरि तृतीया। **श्रपितमिति।** श्रातेर्णिचि कृते 'अर्त्तिह्री' इत्यादिना पुक्, 'मितां ह्रस्वः' क्षीरं स्वयमेव श्राति स्म—तद् यदा देवदत्तेन प्रयुज्यते स्म तदा 'हेतुमति च' इति प्रथमो णिच्। सोऽपि श्रपयन् यदा यज्ञदत्तेन प्रयुज्यते स्म तदा द्वितीयः। 'णेरनिटि' इति पूर्वस्य णेर्लोपः, ततः क्षीरे प्रयोज्ये कर्मणि निष्ठा—श्रृतमिति।

'ण्यन्तस्याण्यन्तस्य चेति निपात्यते इति प्रतिज्ञाते सति युक्तं ण्यन्तस्याप्येतन्निपातनम्—येषां श्राति-श्चुरादावपि पठ्यते इत्यभ्युपगमः। ये तु चुरादावस्य पाठं न प्रतिजानते तेषां कथं ण्यन्तस्यैतन्निपातनं युज्यते, न च शक्यते वक्तुम्—तेषामपि हेतुमण्ण्यन्तस्यैतन्निपातनं युज्यते; 'श्रपेः श्रृतमन्यत्र हेतोः' इति भाष्यकार-वचनादिति यश्चोदयेत्, तं प्रत्याह—**श्रातिरयमित्यादि।** कर्मभावापन्नेऽपि योऽर्थः सौकर्यात् स्वातन्त्र्येण विवक्ष्यते

**पदमञ्जरी**

यदि विभाषेत्यतदत्रानुवर्त्तते, क्षीरहविषोरन्यत्र च विकल्पः प्राप्नोति सर्वत्र, तत्राह—**व्यवस्थितविभाषा चेयमिति। यदा त्वित्यादि।** प्रयोजकव्यापारः प्रेषणादिलक्षण उपचारेण प्रयोजकशब्देनोक्तः, तस्य च बाह्यत्वं बहिर्भूतणिज्व्याप्यत्वात्। **तदापि नेष्यत इति।** तथा चोक्तम्—श्रपेः श्रृतमन्यत्र हेतोरिति। **श्रपितं क्षीरं देवदत्तेन।** प्रयोजकव्यापारेणाप्यमानस्यापि प्रयोज्यस्य कर्मसंज्ञा न भवति 'गतिबुद्धिप्रत्यवसान' इति नियमात्। कथं पुनर्ण्यन्तस्य निपातनं लभ्यन्ते, यावता पाक इत्युच्यते, ण्यन्तेन च पाचनाभिधीयते न पाकः; अथ पाचनाया-मपि गुणभूतः पाकः प्रतीयते, तदायं निपातनं स्यात् ? यद्येवम्, द्वितीयेऽपि णिचि प्रसङ्गः। न हि तत्र पाको गुणभूतो न गम्यते।

अथ तत्र गुणभूतत्वादेव प्रधानभूते पाके चरितार्थं निपातनं न भविष्यतीत्युच्येत ? प्रथमेऽपि न स्याद्, वक्तव्यो वा विशेषः। तमाह—**श्रातिरयमित्यादि।** अयमभिप्रायः—द्विविधः पाकः—विक्लत्तिलक्षणः

**भावबोधिनी**

यह व्यवस्थित विभाषा है इसलिए क्षीर और हविष् अर्थों में नित्य 'श्रृ' होता है। अन्य अर्थों में नहीं होता है—श्राणा यवागूः। [ श्रा + क्त, 'संयोगादेरातो धातोर्यण्वतः' सूत्र से क्त = त का न, णत्व, टाप् = आ ] श्रपिता यवागूः। [ श्रा + णिच्, पुक् उपधाह्रस्व श्रपि + क्त = त। ]

जब बाह्य प्रयोजक अर्थ में दूसरा णिच् होता है, तब भी यह आदेश इष्ट नहीं है—श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेन। [ देवदत्त ने यज्ञदत्त द्वारा दूध पकवाया—इस अर्थ में णिजन्त मानकर प्रत्यय होने पर 'श्रृ' आदेश नहीं होता है। ]

**श्रृतमितीष्यते—श्रृतं क्षीरं स्वयमेव, श्रृतं क्षीरं देवदत्तेन।**

**पाकग्रहणं निपातनविषयप्रदर्शनार्थम्, तेन क्षीरहविषोरेव॥**

**न्यासः**

स कर्मकर्त्ता, कर्म कर्त्ता भवतीति कृत्वा। कर्म चासौ कर्त्ता चेति विशेषणसमासः, स यस्य विषयः स कर्मकर्तृविषयः। अर्थद्वारकं चेदं विशेषणं पचेः कर्मकर्तृविषयत्वं वेदितव्यम्। तस्य योऽर्थः पच्यमानकर्तृकत्वं विक्लेदनमात्रं तत्रायमकर्मकः श्रातिर्वर्त्तते। यदा तु स ण्यन्तो भवति तदा प्राकृतं पच्यर्थमाह। प्रकृतौ भवः प्राकृतः, स पुनरर्थः प्रकृत्यन्तस्य पचेरर्थः पक्तृकर्तृको विक्लेदनोपसंहारादिः स इह वेदितव्यः। देवदत्तादिपक्तृकर्तृकं प्राकृतं पाकाख्यं पच्यर्थमाहेत्यर्थः। तत्र द्वयोरपि श्रृतमिष्यत इति योऽण्यन्तः श्रातिः कर्मकर्तृविषयेण पचिना समानार्थस्तत्रापीष्यते। योऽपि ण्यन्तः प्राकृतं पच्यर्थमाह तत्रापीष्यते। तत्र श्रृतं क्षीरं स्वयमेवेति प्रथमस्योदाहरणम्, श्रृतं क्षीरं देवदत्तेनेति द्वितीयस्य। ननु च 'श्रपेः श्रृतमन्यत्र हेतोः' इति भाष्ये उक्तम्, तत् कथं द्वयोरपीष्यते? एवं मन्यते—यदिदं भाष्ये उक्तम्—'श्रपेः श्रृतमन्यत्र हेतोः' इति, तत्र 'अन्यत्र हेतोः' इत्यनेन सर्वस्य हेतुमण्णिचः पर्युदासो न विधित्सितः; अन्यथा विप्रतिषिद्धमिदं स्यात्, असति हि श्रातेश्चुरादौ पाठे यदि श्रपेः श्रृतमिति निपात्यते, कथमन्यत्र हेतोरिति पर्युदासः! अथान्यत्र हेतोरिति पर्युदासो न तर्हि श्रपेः श्रृतमिति निपातनमुपपद्यते। न हि श्रातेश्चुरादावसति पाठे श्रातेर्हेतुमण्णिचं त्यक्त्वाऽन्यस्ततो णिजस्ति। तस्माद् यस्य हेतुमण्णिचो न केनचित् प्रकारेण स्वार्थिकत्वमुपपद्यते, स एव भाष्यकारस्य पर्युदासविषयत्वेनाभीष्टः। स पुनर्यो बाह्ये प्रयोज्यके द्वितीयो णिजुत्पद्यते स विज्ञेयः। यस्य तु केनचित् प्रकारेण स्वार्थिकत्वमुपपद्यते, स एव भाष्यकारस्य पर्युदासविषयत्वेन न प्रकल्प्यते, तस्यैतन्निपातनमिष्टमेव। स पुनर्यस्मिन्नुत्पन्ने श्रातिः प्राकृतं पच्यर्थमाह स विज्ञेयः, शक्यते हि तस्य पचिना प्रकृत्यर्थेन समानार्थत्वात् स्वार्थिकत्वमुपचारेणाभिधातुमिति। तदेवमिह पाठेऽपि चुरादौ श्रातेर्ण्यन्तस्याप्येतन्निपातनं युज्यत एवेति॥ २७॥

**पदमञ्जरी**

विक्लेदनालक्षणश्च; उभयत्रापि पचेः प्रयोगदर्शनात्, पच्यते ओदनः स्वयमेव, पचत्योदनं देवदत्त इति। श्रातिश्चायं यद्यपि 'पाके' इत्यविशेषेण पठ्यते, तथापि कर्मकर्तृविषयस्य पचेरर्थे वर्त्तते। स **ण्यन्तोऽपि प्राकृतं** प्रकृतौ भवं णिज्रहितपचिवाच्यं **पच्यर्थमाह**। सोऽपि पाक एव, न पाचयतेरर्थः, यथा—सिद्ध्यत्योदनः, साधयत्योदनमिति। तत्र यदा श्रातेः क्त उत्पद्यते, तदाऽकर्मकत्वात्कर्त्तरि भवति—श्रृतं क्षीरमिति, श्रपेस्तु कर्मणि—श्रृतं क्षीरं देवदत्तेन। द्वितीये तु णिचि पाचयितृव्यापारः पाचनालक्षणः प्राधान्येनाभिधीयते, न तु पाक इति निपातनाभाव इति। 'श्रपेः श्रृत्वमन्यत्र हेतोः' (कात्या० वा० ३४६०) इति वार्त्तिके 'श्राश्रप्योः श्रृभावो निपात्यते' (कात्या० वा० ३४५८) इति पूर्वमुक्तत्वादाद्यप्रकृतलक्षणप्रयोजकव्यापाराङ्गीकरणसामर्थ्यात्पाचयितृलक्षणप्रयोजकव्यापारनिषेधो विज्ञेयः॥

पाकोऽयं पाक्यपक्त्रोर्द्विविध इह स विक्लित्तिविक्लेदनात्मा, श्रातिर्वक्त्येकमन्यं श्रपयतिरुभयत्रोभयोक्तेः श्रृभावः। स्वे स्वे वाच्ये श्रपेस्तु प्रसजति सति वा पाचने न द्वितीये नित्यं क्षीरे शृभावो हविषि च न तु पाक्येषु चार्थान्तरेषु॥२७॥

**भावबोधिनी**

√श्रा यह अकर्मक धातु कर्मकर्तृविषयक √पच् धातु के अर्थ में है, वह णिजन्त होने पर भी प्रस्तुत पच् धातु के अर्थ को ही कहता है। इन दोनों में भी 'श्रृत' यह इष्ट है—श्रृतं क्षीरं स्वयमेव, [ दूध अपने आप पक गया। ] श्रृतं क्षीरं देवदत्तेन। [ देवदत्त ने दूध पकाया। यहाँ पहला उदा०—कर्मकर्तृ का है। ]

पाक—का ग्रहण निपातन के विषय का प्रदर्शन करने के लिए है, इस कारण क्षीर और हविष् इन्हीं अर्थों में यह आदेश होता है। ]॥ २७॥

## २४६८. प्यायः पी ॥ २८ ॥ ( ३०७२ )

'विभाषा' इत्येव । 'ओप्यायी वृद्धौ' ( धा० पा० ४८८ )—इत्यस्य धातोर्निष्ठायां विभाषा पीत्ययमादेशो भवति । पीनं मुखम् । पीनौ बाहू । पीनमुरः ।

इयमपि व्यवस्थितविभाषैव, तेनानुपसर्गस्य नित्यं भवति । सोपसर्गस्य तु नैव भवति । आप्यानश्चन्द्रमाः ।

आङ्पूर्वस्यान्धूधसोर्भवत्येव—आपीनोऽन्धुः । आपीनमूध इति ॥

## २४६९. लिड्यङोश्च ॥ २९ ॥ ( २३२७ )

'विभाषा' इति निवृत्तम् । 'प्यायः पी' ( ६.१.२८ ) इत्येतच्चशब्देनानुकृष्यते । लिटि यङि च परतः प्यायः 'पी' इत्ययमादेशो भवति । आपिप्ये । आपिप्यिरे । परत्वात् पीभावे कृते पुनःप्रसङ्गविज्ञानाद्

**न्यासः**

प्यायः पी ॥ पीनमिति । 'ओदितश्च' इति निष्ठानत्वम् ।

इयमपीत्यादि । अपिशब्देन न केवलं पूर्वसूत्रे या विभाषा सैव व्यवस्थितविभाषा, अपि त्वेषापीति दर्शयति । तेन किं सिद्धं भवति ? इत्याह—तेनेत्यादि ।

सोपसर्गस्य तु नैव भवतीत्यस्यापवादमाह-आङ्पूर्वस्येत्यादि । नित्यश्चायमन्धूधसो पीभावः । व्यवस्थित-विभाषैव ॥ २८ ॥

लिड्यङोश्च ॥ विभाषेति निवृत्तमिति । उत्तरसूत्रे पुनर्विभाषाग्रहणात् । अन्यथापीदमेव तत्रानुवर्त्तिष्यत इति तन्न कुर्यात् । अत एवोच्यते—द्वयोर्विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीति । प्यायः पीत्येतच्चशब्देना-

**पदमञ्जरी**

प्यायः पी ॥ अन्धुः=कूपः ॥ २८ ॥

लिड्यङोश्च ॥ विभाषेति निवृत्तमिति । उत्तरसूत्रे पुनर्विभाषाग्रहणात् । प्यायः पीत्येतच्चकारेणानुकृष्यते इति । असति चकारे प्रकरणिनः सम्प्रसारणस्यैवानुवृत्तिः स्याद्, यथोत्तरत्र । परत्वात्पीभावे कृते इति ।

**भावबोधिनी**

'विभाषा' इसकी अनुवृत्ति होती है । '√ओ प्यायी वृद्धौ' ( 'ओ प्यायी' यह बढ़ना अर्थ में है— ) इस धातु का 'पी' यह आदेश विकल्प से होता है निष्ठा प्रत्यय के विषय में । उदा०—पीन मुखम् । पीनौ बाहु । पीनम् उरः । [ √ओ प्यायी से क्त करने पर 'पी' आदेश, 'ओदितश्च' सूत्र से निष्ठा त का नत्व । बढ़ा हुआ, फूला हुआ मुख हाथ, वक्षःस्थल—ये अर्थ हैं । ]

यह भी व्यवस्थित विभाषा ही है, इसलिए उपसर्ग-रहित का नित्य आदेश होता है, उपसर्ग-विशिष्ट का तो नहीं ही होता है—आप्यानः चन्द्रमाः । [ आङ् प्याय् + क्त, 'लोपो व्योर्वलि' से य् का लोप, निष्ठा का नत्व । ]

आङ् पूर्वक का अन्धू और ऊधस् अर्थों में होता ही है—आपीनोऽन्धुः । आपीनम् ऊधः । [ इनमें 'पी' आदेश होता है । अन्धू=कुआँ । ऊधस्=थन । पानी से खूब भरा हुआ कुआँ और दूध से भरा हुआ थन—यह अर्थ है । ] ॥ २८ ॥

'विभाषा' इसकी निवृत्ति है, अनुवृत्ति नहीं होती है । प्यायी का पी होता है' इसका अनुकर्षण 'च' शब्द के बल से होता है । लिट् और यङ् परे रहते 'प्याय्' का 'पी' यह आदेश होता है । उदा०—आपिप्ये । आपिप्यिरे । [ आङ् प्याय् + लिट्=त=एश्, 'पी' आदेश द्वित्व, अभ्यास का ह्रस्व, यण्—आपिप्ये । बहुवचन में झ = इरेच् का रूप है । ] पर होने से पहले 'पी' आदेश करने पर 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इस नियम के अनुसार द्वित्व होता है,

**द्विर्वचनम्, 'एरनेकाच.' ( ६.४.८२ ) इति यणादेशः ।**

**यङि— आपेपीयते । आपेपीयन्ते ॥**

## २४७०. विभाषा श्वेः ॥ ३० ॥ ( २४२० )

**'लिड्यङोः' इति वर्तते, 'सम्प्रसारणम्' इति च । लिटि यङि च श्वयतेर्धातोर्विभाषा सम्प्रसारणं भवति । शुशाव, शिश्वाय । शुशुवतुः, शिश्वियतुः । यङि—शोशूयते, शेश्वीयते । तदत्र यङि सम्प्रसारण-**

**न्यासः**

**नुकृष्यत इति ।** इतरथा हि सम्प्रसारणस्य प्रकृतत्वाल्लिड्यङोः प्यायः सम्प्रसारणं विज्ञायेत । चशब्दे तु सत्य-नन्तरेणैव पीभावेन सम्बन्धः सुखमवसीयते । नाप्राप्ते द्विर्वचने पीभावो विधीयते । तेन तस्य बाधकं प्राप्नोतीति कस्यचिदाशङ्का स्यात् । अतस्तां निराकर्तुमाह-**परत्वादित्यादि** । विरोधे हि सति बाधा स्यात्, इह तु विरोधो नास्ति । अतः परत्वात् पीभावे कृते पुनः प्रसङ्गविज्ञानात् सिद्धमिति द्विर्वचनं भवतीति ॥ २९ ॥

**विभाषा श्वेः ॥ शुशावेति** । लिटि णलि सम्प्रसारणे कृते वृद्ध्यावादेशौ । **शिश्वायेति** । यदा न सम्प्रसारणं तदा वृद्ध्यायादेशौ । **शुशुवतुः, शिश्वयतुरिति** । यदा सम्प्रसारणं तदोवङ्, अन्यदेयङ् । **अप्राप्तमिति** । केनचिदविहितत्वात् ।

'लिट्यभ्यासस्योभयेषाम्' इत्यत्रोभयग्रहणादन्यत् कार्यं प्रवर्त्तमानमपास्याभ्यासस्य सम्प्रसारणमेव यथा स्यादित्येतदुभयेषांग्रहणस्य प्रयोजनमुक्तम् । ततश्चेममपि विकल्पं बाधित्वा नित्यं सम्प्रसारणमेव स्यादिति

**पदमञ्जरी**

ननु द्वयोः सावकाशयोः परत्वं भवति, अनवकाशश्च पीभावः, एवं तर्हि परत्वादुत्कृष्टत्वादनवकाशत्वादिति भावः । **पुनः प्रसङ्गविज्ञानादिति** । अत्रापि 'विप्रतिषेधे परम्' ( का० परि० ६९ ) इत्यत्र यदुक्तं न तद्विवक्षितम्, किं तर्हि ? द्विर्वचनस्य पुनः प्रसङ्गोऽस्तीति कृत्वेत्यर्थः । यदि तर्ह्यनवकाशः पीभावो नाप्राप्ते द्विर्वचन आरभ्यमाणेन तेन द्विर्वचनस्य बाधः प्राप्नोतिः । नैष दोषः; उत्सर्गापवादयोः परस्परसन्निधौ बाध्यबाधकभावः । इह तु सम्प्रसारणप्रकरणेन द्विर्वचनप्रकरणं विच्छिन्नम् । अत एव वक्ष्यते—'दिग्यादेशेन द्वित्वबाधनमिष्यते' इति ॥ २९ ॥

**विभाषा श्वेः ॥ शुशावेति** । परावपि वृद्ध्यायादेशौ बाधित्वा नित्यत्वात् सम्प्रसारणमन्वरङ्गत्वात्पूर्वत्वम् । **शुशुवतुरिति** । अत्रापि परत्वात्प्राप्तमियङं बाधित्वा नित्यत्वात्सम्प्रसारणम् । तत्र कृते परमपि 'एरनेकाचः'

**भावबोधिनी**

'एरनेकाचोऽसंयोगपूर्वस्य' ( पा० सू० ६।४।८२ ) से यण् होता है । [ यह यण् इयङ् आदेश का अपवाद है । ]

यङ् परे रहते आदेश का उदा०—आपेपीयते । आपेपीयन्ते । [ आङ् प्याय् + यङ्, 'पी' आदेश, द्वित्व, गुण—आपेपीयते । बहुवचन में आपेपीयन्ते । ] ॥ २९ ॥

'लिट् और यङ् परे रहते' इसकी तथा 'संप्रसारण' इसकी अनुवृत्ति होती है । लिट् और यङ् परे रहते √ श्वि का संप्रसारण विकल्प से होता है । उदा०—शुशाव, शिश्वाय । [ श्वि + लिट् = तिप् = णल् = अ, व् का संप्रसारण इ का पूर्वरूप—शु + अ, द्वित्व, 'उ' की वृद्धि, आव् आदेश—शु शाव । संप्रसारण न होने पर श्विश्वि + अ, हलादि शेष, शिश्वि + अ, वृद्धि, आय् आदेश—शिश्वाय । ] शुशुवतुः, शिश्वियतुः । [ शुशु + लिट् = तस् = अतुस्, 'उ' का उवङ् आदेश । पक्ष में शिश्वि + अतुस्, इ का इयङ् आदेश ] यङ् परे उदा०—शोशूयते, शेश्वीयते । [ श्वि + यङ् व् का संप्रसारण, इ का पूर्वरूप—शु + य, द्वित्वादि के बाद रूप बनता है । संप्रसारण न होने पर श्वि + य, द्वित्वादि के बाद रूप बनता है । ] यहाँ यङ् परे संप्रसारण को अप्राप्तविभाषा की जाती है [ किसी से प्राप्ति न रहते विभाषा =

मप्राप्तविभाषा विधीयते। लिटि तु किति यजादित्वाद् नित्यं प्राप्तम्, तत्र सर्वत्र विकल्पो भवतीत्येषोभयत्र विभाषा।

यदा च धातोर्न भवति, तदा 'लिटयभ्यासस्योभयेषाम्' ( ६.१.१७ ) इत्यभ्यासस्यापि न भवति॥

## २४७१. णौ च संश्चङोः ॥ ३१ ॥ ( २५७९ )

**'विभाषा श्वेः' ( ६.१.३० ) इति वर्त्तते। सन्परे चङ्परे च णौ परतः श्वयतेर्धातोर्विभाषा सम्प्रसारणं भवति। शुशावयिषति। चङि—अशूशवत्, अशिश्वयत्। 'सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयो भवति'**

न्यासः

कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**यदा चेत्यादि**। अत्र श्वयतेर्विभाषा सम्प्रसारणमुच्यते, यदि कदाचिद् धातोर्न सम्प्रसारणं भवति तदाभ्यासस्य स्यात्, ततश्च श्वयतेः सम्प्रसारणं पाक्षिकं न कृतं स्यात्। स्यादेतत् —लिट्परस्य श्वयतेरिदं विकल्पेन कार्यं विधीयते, तस्य च तदस्त्येवेति ? असम्यगेतत्; द्विष्प्रयोगे हि द्विर्वचने क्रियामात्रम् भिद्यते, न धातुरूपम् इति कुतः पूर्वपरयोः कार्यसम्बन्धं प्रति भेदः ! तस्माद् यदा धातोर्न भवति तदाभ्यासस्यापि न भवत्येव ॥ ३० ॥

**णौ च संश्चङोः॥ णौ च संश्चङोरिति** भिन्नाधिकरणे सप्तम्यौ—संश्चङोः परतो यो णिस्तस्मिण्णौ परतो यः श्वयतिरिति। **शुशावयिषतीति**। श्वयतेर्णिच्, सन्, सम्प्रसारणम्, वृद्धिरावादेशः, 'शु' इत्येतस्य द्विर्वचनम्।

पदमञ्जरी

इति यणं बाधित्वान्तरङ्गत्वात्पूर्वत्वम्, पश्चादुवङादेशः। **अन्यत्रेति**। पित्सु वचनेषु। **तत्र सर्वत्र विकल्प इति**। पित्सु तावद्विकल्प्यते; प्रतिषेधकाभावात्। कित्स्वपि परत्वादयं विकल्पः। यजादिलक्षणस्यावकाशः—शूनः, शूनवान्, अस्यावकाशः पिद्वचनानि; किति लिट्युभयप्रसंगे परत्वादयं विकल्पः। **अभ्यासस्यापि न भवतीति**। किमिति न भवति ? न तावत् परत्वादनेन विकल्पेन बाधः, धातोरयं विकल्पः, नाभ्यासस्य। किञ्च—उभयेषांग्रहणस्य स एव विधिर्यथा स्यादिति। तस्माद्वचनमेवात्र शरणम्। यदाह—'श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः' ( कात्या० वा० ३४६२ ) इति ॥ ३० ॥

**णौ च संश्चङोः**॥ 'णौ' इति श्वयत्यपेक्षया परसप्तमी, 'संश्चङोः' इति ण्यपेक्षया। तदाह—**सन्परे चङ्परे च णौ परत इति**। **अन्तरङ्गमपीति**। अन्तरङ्गत्वं तु णिज्मात्रापेक्षत्वात्। **वृद्ध्यादिकमिति**।

भावबोधिनी

विकल्प किया जा रहा है।] परन्तु लिट् में कित् परे रहते तो यजादि होने से नित्य संप्रसारण प्राप्त है [ अतः प्राप्ति में विभाषा है ] इनमें सभी में विभाषा होती है, अतः यह उभयत्रविभाषा ( प्राप्ताप्राप्तविभाषा ) है।

और जब धातु का नहीं होता है तब 'लिटयभ्यासस्योभयेषाम्' ( पा० सू०६।१।१७ ) इस सूत्र से अभ्यास का भी संप्रसारण नहीं होता है। [ अतः एक रूप बिना संप्रसारण का होता ही है। इसलिए दो रूप ही होते हैं। ] ॥ ३० ॥

'विभाषा श्वेः' इसकी अनुवृत्ति होती है। सन्परक और चङ्परक णि परे रहते √ श्वि का विकल्प से संप्रसारण होता है। उदा०—शुशावयिषति। [ श्वि + णिच् + सन् में व् का संप्रसारण, पूर्वरूप इट्, द्वित्व, वृद्धि, आव् आदेश—शु शाव् इ + इ स, णिच् की इ का गुण अय् आदेश, षत्व —शु शाव् अय् इष = शुशावयिष। ] चङ् परे उदा०—अशूशवत् [ श्वि + णिच् + लुङ्, च्लि = चङ्, अट् आगम अश्वि + इ + अ + ति, व् का संप्रसारण, द्वित्व, वृद्धि, आव् आदेश, उपधाह्रस्व, अभ्यास दीर्घ अशूशवत्। पक्ष में अशिश्वयत्। ] 'संप्रसारण और संप्रसारण मानकर होने वाला कार्य बलवत्तर होता है' इस वचन से अन्तरङ्ग भी वृद्धि आदि को संप्रसारण द्वारा बाधित कर

( सीर० परि० ५९ ) इति वचनादन्तरङ्गमपि वृद्ध्यादिकं सम्प्रसारणेन बाध्यते। कृते तु सम्प्रसारणे वृद्धिः, आवादेशश्च। ततः 'ओः पुयण्ज्यपरे' ( ७.४.८० ) इत्येतद्वचनं ज्ञापकम्—णौ कृतस्थानिवद्भावस्य, इति स्थानिवद्भावात् शुशब्दो द्विरुच्यते ॥

## २४७२. ह्वः सम्प्रसारणम् ॥ ३२ ॥ ( २५८६ )

'णौ च संश्चङोः' ( ६.१.३१ ) इति वर्त्तते। सन्परे चङ्परे च णौ परतो ह्वः सम्प्रसारणं भवति।

### न्यासः

अशूशवदिति। लुङ्, च्लेश्चङ्, सम्प्रसारणादिकम्, पूर्ववण्णिलोपः, 'णौ चङि' इति ह्रस्वः, द्विर्वचनम्, 'दीर्घो लघोः' इति दीर्घः। ननु च श्वयतेर्णिचि तदन्ताच्च सनि कृते चङि चान्तरङ्गत्वात् पूर्वं वृद्ध्यायादेशाभ्यां भवितव्यम्, ततः सम्प्रसारणेन। तथा च सति शुशुययिषतीति सन्परे णौ भवितव्यम्, चङ्परे, तु-अशूशुयदिति, तत् कथं शुशावयिषति, अशूशवदिति चोदाहृतम् ? इत्याह—सम्प्रसारणमित्यादि। आदिशब्देनायादेशः परिगृह्यते। सम्प्रसारणाश्रयं पुनरत्र 'सम्प्रसारणाच्च' इति परपूर्वत्वम्। तेनापि वृद्ध्यादिकं बाध्यत इति। नन्वेवमपि वृद्ध्यावादेशयोः कृतयोः शावित्यस्य द्विर्वचनं प्राप्नोति, न हि केनचित् णौ स्थानिवद्भावो विहितः ? इत्यत आह—ओः पुयण्ज्यपर इत्यादि। यत्र चैतज्ज्ञापकं तथा तस्यैव वृत्तावुपपादयिष्यामः ॥ ३१ ॥

ह्वः सम्प्रसारणम् ॥ जुहावयिषतीति। अत्रापि पूर्ववद् बलीयस्त्वाद् वृद्ध्यादेः प्राक् संप्रसारणं भवति, अभ्यासस्य 'कुहोश्चुः' इति चुत्वम्—हकारस्य झकारः। तस्य 'अभ्यासे चर्च' इति जश्त्वम्-जकारः। अथात्र कस्मात् 'साच्छाशाह्वा' इत्यादिना प्रागेव सम्प्रसारणाद् युगागमो न भवति ? इत्याह-सम्प्रसारणस्येत्यादि।

### पदमञ्जरी

आदिशब्देनायादेशो गृह्यते, यदा तु 'सम्प्रसारणं सम्प्रसारणाश्रयं च कार्यं बलीयः' ( सीर० परि० ५९ ) इति परिभाषा प्रयोजनाभावात्प्रत्याख्याता, तदा 'णौ च संश्चङोर्विषयभूतयोः' इति। ओः पुयण्जीत्यादि। यथा चैतज्ज्ञापकं तथा 'द्विर्वचनेऽचि' इत्यत्र प्रतिपादितम्। अत्र स्थानिवद्भावादित्यतः पूर्वम् 'द्वितीयोऽपि' इतिशब्दः पाठ्यः। 'तेन' इति वा पठितव्यम् ॥ ३१ ॥

ह्वः सम्प्रसारणम् ॥ सम्प्रसारणस्य बलीयस्त्वादिति। बलीयस्त्वं च पूर्ववत्।

### भावबोधिनी

लिया जाता है। संप्रसारण कर लेने पर वृद्धि, आव् आदेश होता है। इसके बाद "ओः पुयण्ज्यपरे" ( पा० सू ७।४।८० ) यह वचन=सूत्र ज्ञापक है—णि परे किये गये स्थानिवद्भाव का, इसलिए स्थानिवद्भाव के कारण 'शु' शब्द का द्वित्व होता है। [ संप्रसारण बाधित कर लेता है तब पहले संप्रसारण ही होता है—शु + णि, अब वृद्धि और आव् आदेश कर देने पर शाव् + इ में 'शाव्' इसका द्विर्वचन प्राप्त है। इसको कैसे रोका जाय ? इसके लिए ज्ञापन का आश्रय लिया जाता है। अतः स्थानिवद्भाव मानकर 'शु' का ही द्वित्व किया जाता है। इसलिए इष्ट रूप में कोई बाधा नहीं है। ] ॥ ३१ ॥

'णौ च संश्चङोः' इसकी अनुवृत्ति होती है। सन्परक और चङ्परक णि परे रहते 'ह्वे' धातु का सम्प्रसारण होता है। उदा०—जुहावयिषति, जुहावयिषतः, जुहावयिषन्ति। [ √ह्वे + णिच् = इ + सन्, व् का सम्प्रसारण उ, ए का पूर्वरूप—हु + इ, द्वित्व = हु हु + इ, "कुहोश्चुः" सूत्र से चुत्व ह = झ, "अभ्यासे चर्च" से जश्त्व करने पर झ का ज—जु हु + इ, 'अचो ञ्णिति' से वृद्धि आव् आदेश—जुहावि + इट् सन् = इस, इ (णिच्) का गुण अय् आदेश, षत्व—

**जुहावयिषति, जुहावयिषतः, जुहावयिषन्ति । अजूहवत्, अजूहवताम्, अजूहवन् । सम्प्रसारणस्य बलीयस्त्वात् 'शाच्छासाह्वाव्यावेपां युक्' ( ७.३.३७ ) इति प्रागेव युग्न भवति ।**

**'सम्प्रसारणम्' इति वर्त्तमाने पुनः सम्प्रसारणमित्युक्तं विभाषेत्यस्य निवृत्त्यर्थम् ।**

**'ह्वः सम्प्रसारणमभ्यस्तस्य' इत्येकयोगेन सिद्धे पृथग्योगकरणमनभ्यस्तनिमित्तप्रत्ययेन व्यवधाने सम्प्रसारणाभावज्ञापनार्थम् । ह्वायकमिच्छति ह्वायकीयति । ह्वायकीयतेः सन्—जिह्वायकीयिषति ॥**

**न्यासः**

ननु च सम्प्रसारणग्रहमनुवर्त्तत एव, तत् किमर्थं पुनः सम्प्रसारणमित्युच्यते ? इत्याह—**सम्प्रसारणमितीत्यादि** । पूर्वकं हि सम्प्रसारणग्रहणं विभाषेत्यनेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । तस्माद् विभाषेत्यस्य निवृत्तये पुनः सम्प्रसरणमित्युक्तम् ।

अथ कस्माद् योगविभागः क्रियते, यावता 'ह्वः सम्प्रसारणमभ्यस्तस्य च' इत्येकयोगेऽपि जुहावयिषतीत्यादि सिध्यत्येव, अत्रापि ह्वयतिरभ्यस्तस्य कारणत्वेन सम्बन्धी भवत्येव, तथा च 'एकाचो द्वे प्रथमस्य' इति स एव द्विरुच्यमानोऽभ्यासस्य कारणं भवत्येव ? इत्याह—**ह्वः संप्रसारणमित्यादि** । एकयोगेनैव सिद्धे पृथग्योगकरणम्—अभ्यस्तस्य निमित्तं यः प्रत्ययो न भवति, तेन व्यवधाने सम्प्रसारणं न भवतीत्यस्यार्थस्य ज्ञापनार्थम् । तेन जिह्वायकीयिषतीत्यत्र ण्वुला क्यचा च व्यवधाने न भवति । यदि पुनः पृथग्योगकरणेनायमर्थो न ज्ञाप्येत, तदा स्यादेवात्र सम्प्रसारणम् । भवति ह्यत्रापि ह्वयतिरभ्यस्तस्य निमित्तम् । ह्वायकशब्दाण्ण्वुलन्तात् क्यच्, 'क्यचि च' इतीत्त्वम्, क्यजन्तात् सन्, इट्, 'अतो लोपः' द्विर्वचनम् ॥ ३२ ॥

**पदमञ्जरी**

**एकयोगेनैव सिद्ध इति** । उत्तरसूत्रे कस्यचिन्निमित्तस्य सप्तमीनिर्दिष्टस्याभ्यस्तं प्रत्यश्रवणाण्णावपि संश्चङ्परे ह्वेरभ्यस्तकारणस्य सिद्धमेव सम्प्रसारणमिति भावः । **अनभ्यस्तनिमित्तप्रत्ययेनेति** । अभ्यस्तस्य यन्निमित्तं न भवति तेन । **व्यवधाने इति** । यद्युत्तरसूत्रं प्रवर्तेत, तदा योगविभागोऽनर्थकः स्यादिति ज्ञापकत्वम् ॥ ३२ ॥

**भावबोधिनी**

जुहावयिष । एकवचन, द्विवचन और बहुवचन के रूप हैं । ] चङ् परे उदा०—अजूहवत्, अजूहवताम् अजूहवन् । [ अ ह्वे + णिच् - इ + चङ् = अ + लुङ् - तिप्, सम्प्रसारण, पूर्वरूप, द्वित्व, चुत्व, जश्त्वादि के बाद अभ्यास का दीर्घ करने पर एकवचन, द्विवचन और बहुवचन के रूप हैं । ] सम्प्रसारण अधिक बलवान् है इसलिए "शाच्छासाह्वावेपां युक्" ( पा० सू० ७।३।३७ ) सूत्र से पहले ही युक् आगम नहीं किया जाता है ।

'सम्प्रसारणम्' इसकी अनुवृत्ति सम्भव रहने पर पुनः जो 'सम्प्रसारण' कहा गया वह 'विभाषा' इसकी निवृत्ति के लिए है ।

'ह्व' संप्रसारणमभ्यस्तस्य' इस एक ही सूत्र के बना देने से कार्य की सिद्धि सम्भव रहने पर जो अलग-अलग सूत्र बनाये गये वे अनभ्यस्त-निमित्त प्रत्यय के द्वारा व्यवधान में संप्रसारण का अभाव ज्ञापित करने के लिए हैं । उदा०—ह्वायकम् इच्छति—इस अर्थ में ह्वायकीयति । ह्वायकीय से सन् प्रत्यय परे रहते—जिह्वायकीयिषति । [ अभ्यास का निमित्त जो प्रत्यय नहीं है उसके द्वारा व्यवधान रहने पर संप्रसारण नहीं होता है । अतः उक्त उदाहरणों में संप्रसारण नहीं होता है । ] ॥ ३२ ॥

## २४७३. अभ्यस्तस्य च ॥ ३३ ॥ ( २४१७ )

**'ह्वः' इति वर्त्तते, तद् 'अभ्यस्तस्य' इत्यनेन व्यधिकरणम्—अभ्यस्तस्य यो ह्वयतिः। कश्चाभ्यस्तस्य ह्वयतिः? कारणम्। तेनाभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात्सम्प्रसारणं भवति। जुहाव। जुहूयते। जुहूषति॥**

## २४७४. बहुलं छन्दसि ॥ ३४ ॥ ( ३५१० )

**'ह्वः' इति वर्त्तते। छन्दसि विषये ह्वयतेर्धातोर्बहुलं सम्प्रसारणं भवति। 'इन्द्राग्नी हुवे'। देवीं सरस्वतीं हुवे। ( ऋ० ५.४६.३ ) ह्वेञो लटयात्मनेपदोत्तमैकवचने 'बहुलं छन्दसि' ( २.४.७६ )इति शपो लुकि कृते सम्प्रसारणमुवङादेशश्च।**

### न्यासः

**अभ्यस्तस्य च ॥** चकारः 'ह्वः' इत्यनुकर्षणार्थः, अत एवाह—**ह्व इत्यनुवर्त्तत इति**। यदि 'ह्वः' इत्येन्नानुवर्त्तते ततोऽभ्यस्तमात्रस्य स्यात्। तत्र 'ह्वः' इत्यनुवर्त्तमानस्याभ्यस्तस्येत्यनेन यदि सामानाधिकरण्यं स्यात्, तदा द्विर्वचने कृतेऽभ्यस्तसंज्ञायामुपजातायां सम्प्रसारणं स्यात्। एवञ्च 'न सम्प्रसारणे सम्प्रसारणम्' इत्यभ्यासस्य सम्प्रसारणं न स्यात्। यद्यपि परेण हरूपेण व्यवधानम्, तथापि समानाङ्गग्रहणात् तस्य व्यवधानेऽपि प्राप्नोत्येवात्र प्रतिषेधः, यथा यूनेत्यत्र—इतीमं पक्षे सामानधिकरण्ये दोषं पश्यन्नाह—**तदभ्यस्तस्येत्यनेन व्यधिकरणमिति**। भिन्नाभिधेयमित्यर्थः। **अभ्यस्तस्य यो ह्वयतिरित्यादिना** सम्बन्धलक्षणां षष्ठीं ख्यापयंस्तदेव वैयधिकरण्यं दर्शयति। तेन किं सिद्धं भवति? इत्याह—**तेनेत्यादि**। **जुहावेति**। सम्प्रसारणे वृद्ध्यावादेशयोः स्थानिवद्भावेन हु इत्यस्य द्विर्बचनम्॥ ३३॥

**बहुलं छन्दसि ॥ ३४ ॥ चायः की ॥ निचिक्युरिति**। 'एरनेकाचः' इत्यादिना यणादेशः। **निचाय्येति**।

### पदमञ्जरी

**अभ्यस्तस्य च ॥** अत्र 'ह्वः' इत्यनुवर्तमानस्य यद्यभ्यस्तस्येत्यनेन सामानाधिकरण्यं स्यात्, तदा कृते द्विर्वचनेऽभ्यस्तसंज्ञायामुपजातायां सम्प्रसारणेन भवितव्यम्, ततश्चाभ्यासस्य सम्प्रसारणं न स्यात्; 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधात्। आकारहकाराभ्यां व्यवहितत्वादप्रतिषेध इति चेत्? न; समानाङ्गे

### भावबोधिनी

'ह्वः' इसकी अनुवृत्ति होती है वह 'अभ्यस्तस्य' इसके साथ व्यधिकरण है—अभ्यस्त का जो ह्वेञ्धातु। अभ्यस्त का कौन ह्वेञ् धातु है? कारण। इसलिए अभ्यस्त के कारणभूत ह्वेञ् का द्विर्वचन के पहले ही संप्रसारण होता है। उदा०—जुहाव। जुहूयते। जुहूषति।

**विमर्श**—प्रस्तुत सूत्र में षष्ठ्यन्त 'ह्वः' की अनुवृत्ति है। 'अभ्यस्तस्य' यह भी षष्ठ्यन्त है। इनका सामानाधिकरण्येन संबन्ध है अथवा वैयधिकरण्येन? इस पर भाष्यानुसारी उत्तर काशिका में है। परन्तु अभ्यस्त का जो √ह्वेञ् धातु उसका संप्रसारण माना है। अभ्यस्त का √ह्वेञ् कौन है? इस पर काशिका में 'कारणम्' उत्तर लिखा है। भाष्य में 'प्रकृतिः' यह उत्तर है "ह्वोभ्यस्तस्य प्रकृतेरिति।" भाष्य के अनुसार अभ्यस्तसंज्ञा की जो प्रकृतिभूत 'ह्वे' है उसका संप्रसारण होता है। अतः जहाँ द्वित्व के बाद अभ्यस्त संज्ञा संभव है वहाँ पहले संप्रसारण हो जाने पर बाद में द्वित्व होता है। अतः लिट् में जुहाव, यङ् में जूहूयते, सन् में जुहूषति रूप बनते हैं॥ ३३॥

'ह्व' इसकी अनुवृत्ति होती है। वेद विषय में √ह्वेञ् का संप्रसारण बहुल रूप से होता है। उदा०—इन्द्राग्नी हुवे। देवीं सरस्वतीं हुवे। यहाँ ह्वेञ् धातु से लट् में आत्मनेपद उत्तमपुरुष एकवचन में 'बहुलं छन्दसि' ( पा० सू०

**न च भवति—'ह्वयामि मरुतः शिवान्'। 'ह्वयामि विश्वान्देवान्' ( ऋ० ७.३४.८ ) ॥**

**२४७५. चायः की ॥ ३५ ॥ ( ३५११ )**

**'बहुलं छन्दसि' ( ६.१.३४ ) इति वर्त्तते। चायतेर्धातोश्छन्दसि विषये बहुलं कीत्ययमादेशो भवति। वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यम् ( ऋ० १.१६४.३८ )। लिटचुसि रूपम्।**

**न भवति—'अग्निर्ज्योतिर्निचाय:' ( वा० सं० ११.१ ) ॥**

**२४७६. अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्त्ताः ॥ ३६ ॥ ( ३५१२ )**

**'छन्दसि' इति वर्त्तते। अपस्पृधेथामिति 'स्पर्ध सङ्घर्षे' ( धा० पा० ३ ) इत्यस्य लङि आथामि द्विर्वचनं रेफस्य सम्प्रसारणमकारलोपश्च निपातनात्। 'इन्द्रश्च विष्णो यदपस्पृधेथाम्'। अस्पर्धेथामिति भाषायाम्। अपर आह—स्पर्धेरपपूर्वस्य लङ्याथामि सम्प्रसारणमकारलोपश्च निपातनात्। 'बहुलं**

**न्यासः**

ल्यबन्तमेतत्। दीर्घोच्चारणं चिकीवानित्यत्र दीर्घस्य श्रवणार्थम्। इदं क्वसौ रूपम् ॥ ३५ ॥

**अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्त्ताः ॥ अकारलोपश्चेति।** धातोरवयवो योऽकारस्तस्य निपातनाल्लोपः। **अपास्पर्द्धेथामिति।** अपाकारस्य 'आटश्च' इति सवर्णदीर्घत्वम्।

**पदमञ्जरी**

सम्प्रसारणप्रतिषेधात्। समानाङ्गग्रहणं तत्र चोदयिष्यति, एतच्च तत्रैव व्यक्तं व्याख्यास्यते। तमिमं सामानाधिकरण्ये दोषं पश्यन्नाह—**तदभ्यस्तस्येत्यनेन व्यधिकरणमिति। एतदेव स्फोरयति—अभ्यस्तस्य यो ह्वयतिरिति।** तेन किं सिद्धं भवति? इत्याह—**तेनेति** ॥ ३३ ॥ ३४ ॥ ३५ ॥

**अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्त्ताः ॥ अपर आहेति।** कस्याञ्चिच्छाखायामपस्पृधेथामित्याद्युदात्तं पठ्यते, अन्यस्यां तु पदद्वयम्, उभयमप्यनेन पिपातनेन संगृह्यते। तत्रैकपद्ये 'तिङ्ङतिङः' इति निघातः प्राप्तः, 'यद्वृत्तान्नित्यम्' इति प्रतिषिद्धः। तत्राट्स्वरेणाद्युदात्तं पदं भवति। यदा

**भावबोधिनी**

२।४।७६ ) सूत्र से शप् का लुक् कर देने पर संप्रसारण और उवङ् आदेश होता है। [ ह्वे + लट् = इट् = ए, संप्रसारण पूर्वरूप, शप् और उसका लुक् हु + ए, उ का उवङ् आदेश—हुवे = बुलाता हूँ। ]

और नहीं भी होता है—ह्वयामि मरुतः शिवान्। ह्वयामि विश्वान् देवाँ। [ ह्वे + शप् + लट् = मिप् अय् आदेश, दीर्घ-ह्वयामि। ] ॥ ३४ ॥

'बहुलं छन्दसि' इसकी अनुवृत्ति होती है। √चाय् इस धातु का वेदविषय में बहुलरूप से 'की' यह आदेश होता है। उदा०—नान्यं चिक्युर्न निचिक्युरन्यम्। लिट् लकार के झि = उस् प्रत्यय परे रूप हैं। [ चाय् + लिट् = झि = उस् 'की' आदेश, द्वित्व ह्रस्व, चुत्व—चिकी + उस् यण् ] नहीं भी होता है—"अग्नेर्ज्योतिर्निचाय्यः।" [ निचाय् + क्त्वा = ल्यप् = य ] ॥ ३५ ॥

'छन्दसि' ( वेद विषय में ) इसकी अनुवृत्ति होती है। (१) अपस्पृधेथाम्—यह √स्पर्ध संघर्षे' इसका लङ् में आथाम् ( मध्यम पुरुष द्विवचन ) में द्विर्वचन, रेफ का संप्रसारण और अकार का लोप निपातन से होता है। उदा०—इन्द्रश्च विष्णो यदपस्पृधेथाम्। भाषा ( लौकिक संस्कृत ) में अस्पर्धेथाम् रूप होता है। दूसरा व्याख्याकार कहता

छन्दस्यमाङ्योगेऽपि' ( ६.४.७५ ) इत्यडागमाभावः। अत्र प्रत्युदाहरणमपास्पर्द्धेथामिति भाषायाम्।

आनृचुः, आनृहुरिति। 'अर्च पूजायाम्' ( धा० पा० २०४ ), 'अर्ह पूजायाम्' ( धा० पा० ७४० ) इत्यनयोर्धात्वोर्लिटचुसि सम्प्रसारणमकारलोपश्च निपातनात्। ततो द्विर्वचनम्, उरदत्वम्, 'अत आदेः' ( ७.४.७० ) इति दीर्घत्वम्। 'तस्मान्नुड् द्विहलः' ( ७.४.७१ ) इति नुडागमः। 'य उग्रा अर्कमानृचुः' ( ऋ० १.१९.४ )। 'न वसून्यानृहुः' ( अथर्व० २.३५.१ )। आनर्चुः, आनर्हुरिति भाषायाम्।

चिच्युषे। 'च्युङ् गतौ ( धा० पा० ९३६ ) इत्यस्य धातोर्लिटि सेशब्देऽभ्यासस्य सम्प्रसारणमनिट् च निपातनात्। चिच्युषे' ( ऋ० ४.३०.२२ )। चुच्युविष इति भाषायाम्॥

तित्याज। 'त्यज हानौ' ( धा० पा० ९८७ )—इत्यस्य धातोर्लिटचभ्यासस्य सम्प्रसारणं निपात्यते। 'तित्याज' ( ऋ० १०.७१.६ )। तत्याजेति भाषायाम्।

श्राता इति। 'श्रीञ् पाके' ( धा० पा० १३७६ ) इत्येतस्य धातोर्निष्ठायां श्राभावः। 'श्रातास्त इन्द्रसोमाः' ( मै० सं० १.९.१ )।

श्रितमिति। तस्यैव श्रीणातेर्ह्रस्वत्वम्। 'सोमो गौरी अधिश्रितः' ( ऋ० ९.१२.३ )। श्रिता नो गृहाः। अनयोः श्राभावश्रिभावयोर्विषयविभागमिच्छन्ति। सोमेषु बहुषु श्राभाव एव। अन्यत्र श्रिभाव इति।

**न्यासः**

विषयविभागमिच्छन्तीति। स च निपातनसामर्थ्याल्लभ्यत इति वेदितव्यम्। यदि क्वचिदप्येकस्मिन्

**पदमञ्जरी**

तु द्वे पदे, तदा निघातप्रतिषेधे 'तस्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरेण स्पृधेथामिति पदमाद्युदात्तम्, 'तिङि चोदात्तवति' इत्यपशब्दस्य निघातः।

**भावबोधिनी**

है—अप-पूर्वक √स्पर्ध से लङ् में आथाम् प्रत्यय में संप्रसारण और आकार का लोप निपातन से होता है। "बहुलं छन्दस्यमाङ्योगेऽपि" ( पा० सू० ६।४।७५ ) सूत्र से अट् आगम का अभाव होता है। इसमें 'अपास्पर्धेथाम्' यह प्रत्युदाहरण लौकिक संस्कृत में देखना चाहिए।

(२) आनृचुः, (३) आनृहुः—√'अर्च पूजा अर्थ में' '√अर्ह पूजा अर्थ में'—इन धातुओं के लिट् में उस् ( प्रथम पुरुष बहुवचन में ) संप्रसारण और आकार का लोप निपातन से होता है। इसके बाद द्विवचन, ऋ का अत्व, ( हलादिशेष ), "अतः आदेः" ( पा० सू० ७।४।७० ) से दीर्घ, "तस्मान्नुड् द्विहलः" ( ७।४।७१ ) सूत्र से नुट् आगम। उदा०—य उग्रा अर्कमानृचुः। न वसून्यानृहुः। भाषा में—आनर्चुः और आनर्हुः—ये रूप होते हैं।

(४ चिच्युषे। '√च्युङ् गतौ' इस धातु के लिट् में 'से' ( =थास् ) परे रहते अभ्यास का संप्रसारण और अनिट् निपातन से होता है। चिच्युषे। [च्यु + लिट् = थास् = से, द्वित्व य् का संप्रसारण,—चिच्यु + से, षत्व] भाषा में 'चुच्युविषे' यह बनता है। [ च्यु + से द्वित्व, हलादिशेष, इट्, उवङ्, षत्व ]

(५) तित्याज। '√त्यज हानौ' इस धातु से लिट् परे रहते अभ्यास का संप्रसारण निपातन से होता है। तित्याज। [ त्यज् + लिट् = तिप् = णल् = अ, द्वित्व, य् का संप्रसारण अ का पूर्वरूप उपधावृद्धि—तित्याज ] लौकिक प्रयोग—तत्याज।

(६) श्राता। '√श्रीञ् पाके' इस धातु का निष्ठा प्रत्यय में 'श्रा' होता है। उदा०—श्रातास्त इन्द्रसोमाः। [ श्री + क्त, श्रा आदेश करने पर—श्राताः। ]

(७) श्रितम्। पूर्वोक्त उसी श्रीणाति धातु का ह्रस्व होने पर रूप है। उदा०—सोमो गौरी अधिश्रितः। श्रिता नो गृहाः। कुछ लोग इन 'श्रा' आदेश और 'श्रि' आदेश का विषयविभाग चाहते हैं। सोम के बहुत होने पर 'श्रा'

**सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावो दृश्यते। 'यदि श्रातो जुहोतन' ( ऋ० १०.१७९.१ )। तस्य श्राता इति बहुवचनस्याविवक्षितत्वादुपसंग्रहो द्रष्टव्यः।**

**आशीराशीर्त्त इति। तस्यैव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठायां च शीरादेशः, निष्ठायाश्च नत्वाभावो निपातनात्। 'तामाशीरा दुहन्ति।' 'आशीर्त्त ऊर्जम्।' 'क्षीरैर्मध्यत आशीर्त्तः' ( ऋ० ८.२.९ )॥**

## २४७७. न सम्प्रसारणे सम्प्रसारणम्॥ ३७॥ ( ३६३ )

**सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न भवति।√व्यधः—विद्धः।√व्यच—विचितः।√व्येञ्—संवीतः।**

**न्यासः**

श्राभावो दृश्यते, तदर्थं तर्हि यत्नान्तरमास्थेयम्। न हि श्राता इत्यनेनैतदपि सिध्यति; सूत्रे बहुवचननिर्देशात्। अत आह—**तस्येत्यादि**॥ ३६॥

**न सम्प्रसारणे सम्प्रसारणम्**॥ येषां सम्प्रसारणमुक्तं तेषां यावन्तो यणः सम्भवन्ति तेषां सर्वेषां सम्प्रसारणं प्राप्तमिति प्रतिषेधोऽयमारभ्यते। ननु चालोऽन्त्यपरिभाषयाऽन्त्यस्यैव भविष्यति, नानन्त्यस्य? नैतदस्ति; न ह्यनया परिभाषया शक्यमिहोपस्थातुम्। वचिस्वपियजादीनामन्त्यस्य यणोऽसम्भवात्। एवं तर्हि 'अनन्त्य-

**पदमञ्जरी**

**बहुवचनस्याविवक्षितत्वादिति।** सोमस्यैव बहुत्वे श्राभाव इति नियमानाश्रयणाच्च, अन्यथा बहुत्वाविवक्षायामपि सोमादन्यत्र श्राभावो न स्याद् विषयविभागवादिनाम्॥ ३६॥

**न सम्प्रसारणे सम्प्रसारणम्**॥ येषां सम्प्रसारणं विहितं तेषां यावन्तो यणस्तेषां सर्वेषां सम्प्रसारणे प्राप्ते प्रतिषेधोऽयमुच्यते। ननु चालोन्त्यपरिभाषयान्त्यस्यैव भविष्यति? नानया परिभाषया शक्यमिहोपस्थातुम्, वच्यादीनामन्त्यस्य यणोऽसम्भवात्। 'अनन्त्यविकारेऽन्त्यसदेशस्य' ( व्या० परि० ६३ ) इत्यनया परिभाषया तर्हि अन्त्यसदेशस्यैव भविष्यति, नेतरस्य? नैषास्ति परिभाषा; प्रयोजनाभावात्। एतच्चास्माभिः **परिभाषाप्रकरणाख्ये** ग्रन्थे उपपादितम्।

एवं तर्हि ज्ञापकात्सिद्धम्, यदयं प्यायः पीभावं शास्ति, तज्ज्ञापयति—न सर्वस्य यणः सम्प्रसारणं भवतीति। यदि स्यात्, प्यायः सम्प्रसारणमेव विदध्यात्। द्वयोर्यकारयोः सम्प्रसारणे पूर्वत्वे च 'हलः' इति

**भावबोधिनी**

ही होता है। अन्य अर्थ में 'श्रि' होता है। सोम से भिन्न कहीं-कहीं एक अर्थ में भी 'श्रा' आदेश देखा जाता है। उदा०—यदि श्रातो जुहोतन। [ श्री+क्त, श्रा आदेश ] उसका 'श्राताः' यह बहुवचन अविवक्षित होने से उपसंग्रह समझना चाहिए।

(८) आशीराशीर्तः। उसी श्रीधातु जिसके पूर्व में आङ् है, का क्विप् प्रत्यय में और निष्ठा में 'शीर' आदेश होता है और निष्ठा के नत्व का अभाव निपातन से होता है। उदा०—तामाशीरा दुहन्ति। [ आङ् श्रा + क्विप्, शीर आदेश, क्विप् का सर्वापहारी लोप ] (९) आशीर्त्त ऊर्जम्। क्षीरैर्मध्यत आशीर्त्तः। [ आ श्रा + क्त, शीर् आदेश, नत्व का अभाव। आशीर तथा आशीर्त दो उदा०—क्विप् और क्त परे बने हैं। ]॥ ३६॥

संप्रसारण के परे रहते पूर्ववर्ती यण् का संप्रसारण नहीं होता है। उदा०—व्यध्—विद्धः। [ व्यध्+क्त=त, 'य्' का संप्रसारण, अ का पूर्वरूप—विध्+त, त का ध, प्रथम ध् का जश्त्व द्—विद्धः। ] व्यच्—विचितः। [ व्यच्+क्त, इट् संप्रसारण ] व्येञ्—संवीतः। [ सम्+व्येञ्+क्त, य् का संप्रसारण, दीर्घ। सभी में अवशिष्ट यण व् का संप्रसारण प्राप्त है किन्तु निषेध हो जाता है। ]

**एकयोगलक्षणमपि सम्प्रसारणमत एव वचनात्प्रथमं परस्य यणः क्रियते। पूर्वस्य च प्रसक्तं प्रतिषिध्यते।**

**सम्प्रसारणमिति वर्त्तमाने पुनः सम्प्रसारणग्रहणं विदेशस्थस्यापि सम्प्रसारणस्य प्रतिषेधो यथा स्यादिति, 'श्वयुवमघोनामतद्धिते' ( ६.४.१३३ )—यूनः, यूना।**

**न्यासः**

विकारेऽन्त्यसदेशस्य' इत्यन्त्यसदेशस्य कार्यं भविष्यति—अन्त्यसदेशो यो यण् तस्यैव कार्यं भविष्यति, नेतरस्य? नैषास्ति परिभाषा; प्रयोजनाभावात्। यदाह—तस्याः परिभाषाया न सन्ति प्रयोजनानीति। तस्मात् कर्त्तव्यमेतत् सूत्रम्।

ननु च पूर्वपरयोरेकयोगलक्षणं सम्प्रसारणम्, ततो यदि तत् परस्याभिनिर्वृत्तं तदा पूर्वस्याप्यनिर्वृत्तमेव[1], न चाभिनिर्वृत्तस्य निवृत्तिः शक्यते कर्तुम्, नाप्यनभिनिर्वृत्तस्य निमित्तत्वेनाश्रयणं युज्यते, ततोऽस्मादेव प्रतिषेधवचनात् तत् परस्य तावत् क्रियते; तत्र कृते तु पूर्वस्यापि प्राप्तं प्रतिषिध्यते। अथ सम्प्रसारण-मित्यनुवर्त्तमाने पुनः सम्प्रसारणग्रहणं किमर्थम्? इत्याह—**सम्प्रसारणमित्यादि**। असति पुनः सम्प्रसारणग्रहणे 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति प्रकृतस्यैव सम्प्रसारणस्य प्रतिषेधः स्यात्, न विदेशस्थस्य।

**पदमञ्जरी**

दीर्घत्वे च सिद्धं स्यात्—पीनं मुखमिति। ननु च प्यायोऽन्त्य-यणः सम्भवात्तस्यैव स्यात्? स्यादेवं यदि 'प्यायः' इति स्थानषष्ठी विज्ञायेत, अवयवषष्ठी चैषा विज्ञास्यते-प्यायो यो यण् तस्येति। एवमप्येतावदेवानेन ज्ञाप्यते-न सर्वस्य यणः सम्प्रसारणं भवतीति, तत्र कुत एतत्—परस्यैव भवति न पूर्वस्येति, न च विध्यतीत्यादि-निर्देशात्परस्यैवेति शक्यमवगन्तुम्? पर्यायेण प्रवृत्तावपि तदुपपत्तेः। तस्मादारभ्यमेवैतत्।

ननु पूर्वपरयोर्यणोरेकयोगलक्षणं संप्रसारणं तद्यदि परस्याभिनिर्वृत्तं पूर्वस्याप्यभिनिर्वृत्तमेव, न चाभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या विज्ञातुम्, यो हि भुक्तवन्तं ब्रूयाद् मा भुंक्था इति, किं तेन कृतं स्यात्! अथ पूर्वस्यानभिनिर्वृत्तं परस्याप्यनभिनिर्वृत्तमेव, तत्र निमित्तत्वेनाश्रयणमनुपपन्नम्? इत्यत आह—**एकयोगलक्षणमपीति**। अपरः कल्पः—अस्तु द्वयोरप्यभिनिर्वृत्तम्, कथं तर्हि प्रतिषिद्ध्यते? न सम्प्रसारणं प्रतिषिद्ध्यते, किं तर्हि? तदाश्रयं पूर्वत्वम्। तदेव त्वत्र सम्प्रसारणशब्देनोपचारादुच्यते, तस्मिन्प्रतिषिद्धे यणादेशेन सिद्धमिष्टम्। अस्तु वा द्वयोरप्यनभिनिर्वृत्तम्। कथं तर्हि निमित्तत्वम्? नैवात्र सम्प्रसारणनिमित्तम्, किं तर्हि? तद्भावी यो यण् स एव च सप्तम्यन्तेन सम्प्रसारणशब्देनोच्यत इति।

**पुनः सम्प्रसारणग्रहणमिति**। असति तस्मिन्, 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या० परि० १९)

**भावबोधिनी**

**एकयोगलक्षण** [ एक सूत्र से एक लक्ष्य में होने वाला ] संप्रसारण इसी वचन के कारण पहले बाद वाले यण् का किया जाता है और तब ( उसके परे रहते ) पूर्व का प्रसक्त होता है उसका प्रतिषेध किया जाता है।

**सम्प्रसारण**—इसकी अनुवृत्ति रहने पर भी पुनः सम्प्रसारण का ग्रहण करना विदेशस्थित ( अन्यस्थलीय ) सम्प्रसारण का भी निषेध करने के लिए है—"श्वयुवमघोनामतद्धिते" ( ६।४।१३३ ) यूनः, यूना। [ युवन् + शस् = अस्, व् के सम्प्रसारण के बाद पुनः य् का सम्प्रसारण चतुर्थ पाद के सूत्र से प्राप्त है, उसका भी निषेध हो जाता है। ]

---

१. अतः परम्—"न चाभिनिर्वृत्तस्य प्रतिषेधः शक्यते कर्तुम्, यो हि भुक्तवन्तं ब्रूयात् मा भुंक्था इति किं तेन कृतं स्यात्! अथ पूर्वस्याभिनिर्वृत्तम् परस्याप्यभिनिर्वृत्तमेव। एवं सत्यसतः प्रतिषेधं प्रति निमित्तत्वेनाश्रयो नोपपद्यत इत्याह—एकयोगलक्षणेत्यादि। यदि युगपद् द्वयोरपि स्यादिदं वचनमनर्थकं स्यात्"—इत्यधिको महीशूरसंस्करणे पाठः।

**सम्प्रसारणग्रहणसामर्थ्यादेव पूर्वस्य प्रतिषेधे वक्तव्ये सवर्णदीर्घत्वमेकादेशो न स्थानिवद्भवति। सति वा स्थानिवत्त्वे व्यवधानमेतावदाश्रयिष्यते ॥**

**❀ ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि ❀ ( म० भा० ६.१.३७ वा० ५ )। ऋचि परतस्त्रेः सम्प्रसारणं भवति, उत्तरपदादिलोपश्च छन्दसि विषये। तिस्र ऋचो यस्मिन् तत् तृचं सूक्तम्, तृचं साम। 'ऋक्पूरब्धूः-पथामानक्षे' ( ५.४.७४ ) इति समासान्तः। छन्दसीति किम् ? त्र्यृचं कर्म ॥**

**न्यासः**

तस्माद् विदेशस्थस्यापि भिन्नप्रकरणविहितस्य प्रतिषेधो यथा स्यादित्येवमर्थं पुनः सम्प्रसारणग्रहणम्। **यूनो यूनेति**। सम्प्रसारणे कृते परपूर्वत्वे कृते च 'अकः सवर्णे दीर्घः'। ननु च क्रियमाणेऽपि पुनः सम्प्रसारणग्रहणे तत्र प्रतिषेधो न स्यात्, सवर्णदीर्घत्वस्य पूर्वविधौ स्थानिवद्भावे सत्युकारव्यवहितत्वात् ? अत आह— **सम्प्रसारणग्रहणसामर्थ्यादेवेत्यादि**। यदि स्थानिवद्भावः स्यात्, अनर्थकं पुनः सम्प्रसारणग्रहणं स्यादित्यभिप्रायः। अभ्युपेत्य पुनः परिहारान्तरमाह— **सति वेत्यादि**। सम्प्रसारणग्रहणसामर्थ्यादेवात्राश्रूयमाणोऽपि शास्त्रान्तरेण स्थानिवद्भावमापन्नो योऽज् व्यवधानं करोति; तन्मात्रेण व्यवधानं नाश्रयिष्यते— मा भूत् सम्प्रसारणग्रहण-मनर्थकमिति। ननु च 'यूनश्च कुत्सायाम्', 'वृद्धो यूना' इति निपातनादेव यूनः, यूनेत्यत्र सम्प्रसारणं न भविष्यति, तत् किमेतन्निवृत्त्यर्थेन पुनः सम्प्रसारणग्रहणेन ? नैतदस्ति; अबाधकान्यपि निपातनानि भवन्तीत्युक्तम्।

**पदमञ्जरी**

इति पूर्वप्रकरणविहितस्यैव सम्प्रसारणस्य प्रतिषेधः स्यान्न विदेशस्थस्य। विभिन्नो देशः—विदेशः।

**सम्प्रसारणग्रहणादेवेति**[1]। इह तु 'व्यथो लिटि' विव्यथे इति हलादिःशेषापवादः सम्प्रसारणम्, प्रकरणादुत्सर्गदेशश्चापवादो भवतीति परस्यैव संप्रसारणात्सिद्धम्। अत एव पुनः संप्रसारणाद्विदेशस्थेपि संप्रसारणे प्रतिषेध इतीष्टव्यम्, अन्यथा तत्रेति वाच्यं स्यात्। **व्यवधानमेतावदाश्रयिष्यत इति**। तेनोपपूर्वाद्विसेः 'भाषायां सदवसश्रुवः' इति लिटः क्वसौ विभक्तौ च परतो वसोस्सम्प्रसारणे उपेयुषेत्यादौ धातोः प्राप्तस्य यजादिलक्षणस्य सम्प्रसारणस्य प्रतिषेधो न भवति, प्रत्यक्षेण षकारेण व्यवधानादिति भावः। यदि तु व्यवधानमात्रे स्यात्, तदा समानाङ्गग्रहणं कर्त्तव्यम्। निमित्तनिमित्तिनौ यत्रैकस्मिन्नेवाङ्गे भवतः, तत्र प्रतिषेधो भवतीति वक्तव्यम्। उपेयुषीत्यत्र क्वसौ धातुरङ्गम्, क्वस्वन्तं च विभक्ताविति प्रतिषेधाभावः। अन्तरङ्गत्वाद्वाऽत्र पूर्वमेव धातोः सम्प्रसारणम्।

**भावबोधिनी**

सम्प्रसारण के ग्रहण करने के सामर्थ्य से ही—पूर्व का [ सम्प्रसारण का ] प्रतिषेध कहना योग्य होने पर— सवर्णदीर्घत्व रूप एकादेश स्थानिवत् नहीं होता है। अथवा स्थानिवद्भाव होने पर भी इतना व्यवधान मान लिया जायगा। [ अतः मध्य में व्यवधान होने से सम्प्रसारण नहीं होता है। ]

❀ वेद में ऋच् परे 'त्रि' का [ संप्रसारण और ] उत्तर पद के आदि का लोप होता है। ❀ ऋच् शब्द परे रहते त्रि का संप्रसारण होता है और उत्तरपद के आदि अक्षर का लोप होता है वेद विषय में। उदा०—तिस्रा ऋचः यस्मिन् तत्—इस अर्थ में—तृचं सूक्तम्। तृचं साम। [ त्रि+ऋच्, र् का संप्रसारण, इ का पूर्वरूप तृ+ऋच् ऋ का लोप ] "ऋक्पूरब्धूःपथामानक्षे" ( पा० सू० ५।४।७४ ) से समासान्त 'अ' प्रत्यय ] वेद में—इसका क्या फल है ? त्र्यृचं कर्म। [ त्रि+ऋच् इ का यण् य्—त्र्यृचम्। यहाँ लौकिक प्रयोग में संप्रसारण और लोप नहीं होता है। ]

---

१. 'सम्प्रसारणग्रहणसामर्थ्यादेव' इति काशिकान्यासयोः पाठ एव उचितः।

❀ रयेर्मतौ बहुलम् ❀ ( वा० ६ )। रयिशब्दस्य छन्दसि विषये मतौ परतो बहुलं सम्प्रसारणं भवति। आ रेवानेतु नो विशः। न च भवति—'रयिमान्पुष्टिवर्धनः ( वाज० सं० ३.४० )॥

## २४७८. लिटि वयो यः ॥ ३८ ॥ ( २४१३ )

'न सम्प्रसारणम्' इत्यनुवर्तते। लिटि परतो वयो यकारस्य सम्प्रसारणं न भवति। उवाय। ऊयतुः। ऊयुः।

लिड्ग्रहणमुत्तरार्थम् ॥

### न्यासः

अपि चैतद्विषयमेव निपातनं विज्ञायते, तथा च—यूनः, यूना, यूनीत्यत्र सम्प्रसारणं स्यादेवेति। **आरेवानिति**। रयिरस्यास्तीति मतुप्। सम्प्रसारणे कृते 'आद्गुणः', 'छन्दसीरः' इति वत्वम् ॥ ३७ ॥

**लिटि वयो यः** ॥ वयेर्द्वौ यणौ, तत्र पूर्वेण वकारस्य सम्प्रसारणप्रतिषेधे प्राप्ते यकारस्यानेन सम्प्रसारणं लिटि प्रतिषिध्यते। तत्र प्रतिषिद्धे यकारः सम्प्रसारणभाग् न भवतीति वकारस्य सम्प्रसारणं भवति, धातोरभ्यासस्य च; तत्र धातोर्ग्रह्यादिसूत्रेण[1], अभ्यासस्य 'लिट्यभ्यासस्योभयेषाम्' इत्यनेन। अथ किमर्थं लिड्ग्रहणम्, यावता वयेरादेशस्य लिटोऽन्यत्र सम्भवो नास्ति, तद्विधौ 'लिट्यन्यतरस्याम्' इत्यतो लिड्ग्रहणानुवृत्तेः, तत्सामर्थ्यादेव लिटि भविष्यति ? इत्यत आह—**लिड्ग्रहणमुत्तरार्थमिति**। 'वेञः' इति प्रतिषेधो लिटि यथा स्यादित्येवमर्थं लिड्ग्रहणम् ॥ ३८ ॥

### पदमञ्जरी

**ऋचि त्रेरिति**। कल्पसूत्रकारास्तु द्विशब्दस्यापि सम्प्रसारणं प्रयुञ्जते—'तृचाः प्रतिपदनुचराः', 'द्वृचाः प्रगाथाः' इति ॥ ३७ ॥

**लिटि वयो यः** ॥ **लिड्ग्रहणमुत्तरार्थमिति**। नेहार्थं लिटः; अन्यत्र वयादेशस्यासम्भवात् ॥ ३८ ॥

### भावबोधिनी

❀ रयि का मतुप् परे बहुलरूप से होता है। ❀ वेदविषय में मतुप् परे रहते रयि शब्द का बहुलरूप से संप्रसारण होता है। उदा०—"आ रेवानेतु नो विशः। [ रयि + मत् य् का संप्रसारण, इ का पूर्वरूप र + इ + मत् गुण, मकार का वत्वादेशादि करने पर 'रेवान्' बनता है। ] और नहीं भी होता है—रयिमान् पुष्टिवर्धनः। [ रयि + मत्। यहाँ संप्रसारण नहीं होता है। ]॥ ३७ ॥

'न संप्रसारणम्' इसकी अनुवृत्ति होती है। लिट् परे रहते √वय् धातु के यकार का संप्रसारण नहीं होता है। उदा०—उवाय। ऊयतुः। ऊयुः। [ वय् + लिट् = तिप् = णल् = अ, द्वित्व, हलादिशेष व वय् + अ, प्रथम व् = अभ्यास के संप्रसारण के बाद पुनः प्राप्त य का संप्रसारण नहीं होता है। उपधावृद्धि। द्विवचनादि में भी प्रतिषेध होता है ]

लिट् का ग्रहण उत्तरसूत्र में अनुवृति के लिए है॥ ३८॥

---

१. 'वच्यादिसूत्रेण'—इति महीशूरसंस्करणे पाठः।

## २४७९. वश्चास्यान्यतरस्यां किति ॥ ३९ ॥ ( २४१४ )

अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवत्यन्यतरस्याम् । ऊवतुः । ऊवुः । ऊयतुः । ऊयुः । कितीति किम् ? उवाय । उवयिथ ॥

## २४८०. वेञः ॥ ४० ॥ ( २४१५ )

'लिटि' इत्यनुवर्तते । 'वेञ् तन्तुसन्ताने' इत्यस्य धातोर्लिटि परतः सम्प्रसारणं न भवति । ववौ । ववतुः । ववुः । किति यजादित्वाद् धातोः प्राप्तमकित्यपि 'लिट्यभ्यासस्योभयेषाम्' ( ६.१.१७ ) इत्यभ्यासस्यात उभयं प्रतिषिध्यते ॥

## २४८१. ल्यपि च ॥ ४१ ॥ ( ३३३९ )

'वेञः' इत्यनुवर्तते । ल्यपि च परतो व्येञः सम्प्रसारणं न भवति । प्रवाय । उपवाय । पृथग्योगकरणमुत्तरार्थम् ॥

### न्यासः

**वश्चास्यान्यतरस्यां किति ॥ ३९ ॥ वेञः ॥ ४० ॥ ल्यपि च ॥ ४१ ॥**

### पदमञ्जरी

**वश्चास्यान्यतरस्यां किति ॥** अस्यग्रहणेन वयो यकारः प्रतिनिर्दिश्यते, अन्यथादेशाकारस्योच्चारणार्थत्वे प्रमाणाभावाद्द्वय एवायं सर्वादेशः सम्भाव्येत । अस्यग्रहणे तु सति यद्यप्यकारवानादेशः, तथाप्यतो लोपेन सिद्धमिष्टम् ।

वश्चास्यग्रहणं शक्यमकर्त्तुम् । कथम् ? 'अन्यतरस्यां किति वेञः' इति सूत्रं कर्तव्यम्, लिटीत्येव, किति लिटि परतो वेञः सम्प्रसारणं न भवत्यन्यतरस्याम्—ववतुः, ववुः; सम्प्रसारणपक्षे उवङादेशे सति द्विर्वचनम्, सवर्णदीर्घत्वम्—ऊचतुः, ऊचुः, 'वेञो वयिः'—ऊयतुः, ऊयुरिति । कथं ववौ, वविथ ? 'ल्यपि च' इति चकारेण लिडनुकृष्यते, तत्पिति नित्यनिषेधार्थं भविष्यति ॥ ३९ ॥ ४० ॥

### भावबोधिनी

इस √वय् धातु के यकार का कित् लिट् परे रहते विकल्प से वकार आदेश होता है । उदा०—ऊवतुः । ऊवुः । ऊयतुः । ऊयुः । [ वय्+लिट्=तस्=अतुस् व् का संप्रसारण अ का पूर्वरूप, द्वित्व आदि के बाद ऊय् + अतुस् में 'य्' का 'व्' विकल्प से होता है । अतः दो रूप बनते हैं । ]

कित् परे रहते—इसका क्या फल है ? उवाय । उवयिथ । [ तिप् और सिप् प्रत्यय कित् नहीं हैं अतः वकार आदेश नहीं होता है । ] ॥ ३९ ॥

'लिटि' इसकी अनुवृत्ति होती है । '√वेञ् तन्तुसन्ताने' इस धातु का लिट् परे रहते संप्रसारण नहीं होता है । उदा०—ववौ । ववतुः । ववुः । [ वे + लिट् = तिप् = णल्, ए का आत्व वा + णल्, द्वित्व, हलादिशेष, णल् का औ, वृद्धि—ववौ । ] कित् परे रहते यजादि होने से प्राप्त और अकित् में भी 'लिट्यभ्यासस्योभयेषाम्' ( पा० सू० ६।१।१७ ) से प्राप्त अभ्यास का—अतः दोनों का प्रतिषेध होता है ॥ ४० ॥

'वेञ्' इसकी अनुवृत्ति होती है और ल्यप् परे रहते भी वेञ् का संप्रसारण नहीं होता है । उदा०—प्रवाय । उपवाय । [ प्र उपसर्गपूर्वक वे + क्त्वा, ए का आ, क्त्वा का ल्यप्=य । कित् परे होने से प्राप्त संप्रसारण का प्रतिषेध होता है । ]

अग्रिम सूत्र में अनुवृत्ति के लिए यह पृथक् सूत्र बनाया गया है ॥ ४१ ॥

२४८२. ज्यश्च ॥ ४२ ॥ ( ३३४० )

'ल्यपि' इत्येव। 'ज्या वयोहानौ' ( धा० पा० १५०० ) इत्यस्य धातोर्ल्यपि परतः सम्प्रसारणं न भवति। प्रज्याय। उपज्याय॥

२४८३. व्यश्च ॥ ४३ ॥ ( ३३४१ )

'ल्यपि' इत्येव। 'व्येञ् संवरणे' ( धा० पा० १००८ ) इत्येतस्य धातोर्ल्यपि परतः सम्प्रसारणं न भवति। प्रव्याय। उपव्याय। योगविभाग उत्तरार्थः॥

२४८४. विभाषा परेः ॥ ४४ ॥ ( ३३४२ )

'ल्यपि च', 'व्यश्च' इत्यनुवर्तते। परेरुत्तरस्य व्येञित्येतस्य धातोर्ल्यपि परतो विभाषा सम्प्रसारणं न भवति। परिवीय यूपम्। परिव्याय। सम्प्रसारणे कृते परपूर्वत्वे च 'ह्रस्वस्य' ( ६.१.७१ ) इति तुक् प्राप्नोति, स 'हलः' ( ६.४.२ ) इति दीर्घत्वेन परत्वाद्बाध्यते॥

२४८५. आदेच उपदेशेऽशिति ॥ ४५ ॥ ( २३७० )

'धातोः' ( ६.१.८ ) इति वर्तते। एजन्तो यो धातुरुपदेशे तस्याकारादेशो भवति, शिति तु प्रत्यये न भवति। ग्लै—ग्लाता, ग्लातुम्, ग्लातव्यम्। शो—निशाता, निशातुम्, निशातव्यम्।

न्यासः

ज्यश्च ॥ ४२ ॥ व्यश्च ॥ योगविभाग उत्तरार्थ इति। उत्तरत्र व्येञ एव विभाषा सम्प्रसारणं यथा स्यात्, 'ज्या' इत्यस्य मा भूदित्येवमर्थो योगविभागः॥ ४३॥

विभाषा परेः ॥ ४४ ॥ आदेच उपदेशेऽशिति ॥ धातोरिति वर्त्तत इति। 'लिटि धातोरनभ्यासस्य'

पदमञ्जरी

ल्यपि च ॥ पूर्वं वश्चास्यग्रहणे क्रियमाणे 'ल्यपि व्यो ज्यश्च' इति एकयोग एव कर्त्तव्यः, एवं हि द्विश्चकारोऽपि न कर्त्तव्यो भवति॥ ४१॥ ४२॥ ४३॥ ४४॥

आदेच उपदेशेऽशिति ॥ अत्र यदि 'धातोः' इति नानुवर्त्तेत, ततो विशेष्याभावादेव नास्ति तदन्त-

भावबोधिनी

'ल्यपि' इसी की अनुवृत्ति होती है। '√ज्या वयोहानौ' इस धातु का ल्यप् परे रहते संप्रसारण नहीं होता है। उदा०—प्रज्याय। उपज्याय। [ प्रज्या + क्त्वा = ल्यप् = य, प्राप्त संप्रसारण का निषेध ]॥ ४२॥

'ल्यपि' इसकी अनुवृत्ति होती है। '√व्येञ् संवरणे' इस धातु का ल्यप् परे रहते संप्रसारण नहीं होता है। उदा०—प्रव्याय। उपव्याय। [ प्र + व्ये + क्त्वा = ल्यप् = य, ए का आत्व ] योगविभाग = अलग सूत्र बनाना आगे सूत्र में अनुवृत्ति के लिए है॥ ४३॥

'ल्यपि च' 'व्यश्च' इनकी अनुवृत्ति होती है। 'परि' इसके बाद वाले √व्येञ् इस धातु का ल्यप् परे रहते विकल्प से संप्रसारण नहीं होता है। उदा०—परिवीय यूपम्। परिव्याय। [ परि + व्ये + क्त्वा = ल्यप् = य, ए का आत्व, य् का संप्रसारण इ, पूर्वरूप, परि वि + य, दीर्घ। संप्रसारण न होने पर परिव्याय। ] संप्रसारण करने पर बाद वाले का पूर्वरूप कर देने पर "ह्रस्वस्य पिति कृति तुक्" ( पा० सू० ६।१।७१ ) से तुक् प्राप्त है, परन्तु "हलः" ( पा० सू० ६।४।२ ) इसके परवर्त्ती होने से दीर्घ द्वारा उस ( तुक् ) का बाध कर लिया जाता है॥ ४४॥

'धातोः' इसकी अनुवृत्ति होती है। उपदेश अवस्था में एजन्त जो धातु उसका आकारादेश होता है, किन्तु शित् प्रत्यय परे रहते नहीं होता है। उदा० —ग्लै—ग्लाता। ग्लातुम्। ग्लातव्यम्। [ √ग्लै के ऐ का आ करने पर

**एच इति किम् ? कर्त्ता, हर्त्ता। उपदेश इति किम् ? चेता, स्तोता। अशितीति किम् ? ग्लायति, म्लायति।**

**कथं जग्ले, मम्ले ? नैवं विज्ञायते—शकार इद्यस्य सोऽयं शिदिति, किं तर्हि ? श एव इद् शित्।**

**न्यासः**

इत्यतः, तस्य च धातोरेवैच इति विशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्याह—**एजन्तो यो धातुरिति। उपदेश इति।** आद्युच्चारणे गणपाठ इत्यर्थः। **चेता, स्तोतेति।** ननु च लक्षणप्रतिपदोक्तपरिभाषयैवात्र न भविष्यति, तत् किमुपदेशग्रहणेन ? एवं तर्हि उपदेशग्रहणमेतज् ज्ञापयति—अनित्यैषा परिभाषेति। एतेन 'अर्त्तिह्री' इत्यादिसूत्रे लाक्षणिकस्याप्याकारस्य ग्रहणे सति क्रापयतीत्यादावपि पुक् सिद्धो भवति। **श इद् यस्य सोऽयं शिदिति।** यश्च 'लिटस्तझयोरेशिरेच्' इत्येशादेशः स शिद् भवति, ततश्च शिति प्रतिषेधे क्रियमाण एश्यप्यात्वं न प्राप्नोति। अत्रायादेशे कृते स्थानिवद्भावेन 'ग्लै' इत्यस्य द्विर्वचने 'जग्लाय' इत्यनिष्टं रूपं स्यात्—इति मन्यमान आह—**कथमित्यादि।** ग्लै इत्यादौ 'आतो लोप इटि च' इत्याकारलोपः। **नैवमित्यादिना** परिहारः। श एव इत् शिदिति विज्ञायमाने सत्यल्ग्रहणमेव भवति। तत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे'—परिभाषया शिदादौ प्रत्यये प्रतिषेधेन भवितव्यम्, न चैश् शिदादिः, किं तर्हि ? शिदन्तः; शिदन्तस्यैवो-

**पदमञ्जरी**

विधिरित्युपदेशे य एच् तस्यात्त्वमित्यर्थो भवति; ततश्च ढौकिता, त्रौकिता इत्यत्रापि प्राप्नोति। ननु चाशितीत्युच्यते, न चात्राशितं पश्यामः; न च ककार एवाशित्, किं कारणम् ? नञिवयुक्तन्यायेन (व्या० परि० ६५) शित्सदृशस्य प्रत्ययस्यैव ग्रहणात् ? स्यादेवं यद्यशितीति पर्युदासः स्यात्, प्रसज्यप्रतिषेधस्त्वयमिति वक्ष्यते। तस्माद्धातोरित्यनुवर्त्यमित्याह—**धातोरिति वर्त्तत इति।** तस्य चैचो विशेषणात्तदन्तविधिरित्याह—**एजन्तो यो धातुरिति। उपदेश इति।** अनिर्ज्ञातस्वरूपस्य स्वरूपज्ञानार्थमाद्यमुच्चारणम्=उपदेशः।

**चेता, स्तोतेति।** आर्धधातुके गुणविधानं त्वात्त्वार्थमेव स्यात्; 'यं विधिं प्रत्युपदेशः' (व्या० परि० ५६) इति न्यायात्। कर्त्ता, हर्त्ता इत्यादौ च गुणविधिश्चरितार्थः। एवमपि लाक्षणिकत्वादेवात्र न भविष्यति ? ज्ञापकाच्च; यदयं क्रीङ्जीनां णावात्त्वं शास्ति, तज्ज्ञापयति—न परनिमित्तस्यैच आत्त्वं भवतीति। नैतदस्ति ज्ञापकम्, नियमार्थमेतत् स्यात्-क्रीङ्जीनां णावेवेति। तर्त्तहि 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्त्वं शास्ति ? एवं तर्हुत्तरार्थमवश्यं कर्त्तव्यमुपदेशग्रहणम्, तदिहैव क्रियते मन्दधियामनुग्रहाय।

**कथमिति।** अशिदित्ययं बहुव्रीहिः, तत्र शिति प्रतिषेधे क्रियमाणे शिन्मात्रस्य प्राप्नोति, ततश्च जग्लाये इति भवितव्यमिति प्रश्नः। भावे लकारः, तत्पुरुषाश्रयेणोत्तरम्। कः पुनस्तत्पुरुषे सति गुणः ? इत्यत आह—

**भावबोधिनी**

'ग्ला' हो जाता है। तृच्, तुमुन् और तव्य प्रत्ययों के रूप हैं।] '√शो तनूकरणे—शाता, शातुम्, शातव्यम्। [यहाँ भी ओ का आ करने पर तृच् प्रत्यय अथवा लुट् प्रत्यय परे रूप बना है।]

एच्=ए ओ ऐ औ का ही होता है—इसका क्या फल है ? कर्त्ता, हर्त्ता। [यहाँ कृ, हृ में ऋ है, इसका आत्व नहीं होता है।] उपदेश अवस्था में रहने वाले एच् का—इसका क्या फल है ? चेता, स्तोता। [यहाँ चि, स्तु धातुओं में गुण करने पर चे, स्तो यह होता है। अतः आत्व नहीं होता है।]

अशित् प्रत्यय में—इसका क्या फल है ? ग्लायति, म्लायति। [ग्लै+शप्+लट्=तिप्, म्लै+शप्+लट्=ति में शित् ही परे है अतः आत्व नहीं होता है। ऐ का आय् आदेश करने पर ग्लायति, म्लायति रूप बनते हैं।]

[यदि शित् में नहीं होता है तो] जग्ले, मम्ले—इनमें कैसे होता है ? यह नहीं माना जाता है—शकार है इत् जिसका वह शित् है। तो क्या ? श ही है इत्—वह शित् है। और इसमें 'यस्मिन् विधिः' अर्थात् जिसके

**तत्र 'यस्मिन्विधिस्तदादावल्ग्रहणे' ( व्या० परि० १२७ ) इति शिदादौ प्रत्यये प्रतिषेधः । एश शकारान्तो भवति ।**

**न्यासः**

च्चारणात् । तस्मादत्रैशि प्रतिषेधो न भवति । अशितीति पर्युदासो वा ? प्रसज्यप्रतिषेधो वा ? तत्र यदि पर्युदासः, तदा शितोऽन्यदात्वनिमित्तमाश्रितं स्यात् । एवञ्च यावदात्त्वस्य निमित्तं न भवति, तावदात्त्वेन न भवितव्यमिति; अनाकारान्तत्वात् । 'सुग्लः' इत्यादावाकारान्तलक्षणः कप्रत्ययो न स्यादित्येतच्चेतसि

**पदमञ्जरी**

**तत्रेति** । तत्पुरुषे हि वर्णग्रहणमिदं भवति, वर्णग्रहणे च तदादौ कार्यं भवति । स्तनन्धय इत्यत्र तु 'नासिकास्तनयोः' इति खशि कृते मध्यपातिनं शपमाश्रित्य प्रतिषेधः । प्रयोजनाभावादेवात्र न शपा भवितव्यमिति चेत् ? नन्विदमेव प्रयोजनं यदुतात्त्वनिवृत्तिः । **अशितीति** । यद्ययं पर्युदासः स्यात्—शितोऽन्योऽशित् तस्मिन्नशितीति, ततो ग्लायन्ति, म्लायन्तीत्यत्र शबकारस्यान्त्याकारस्य चैकादेशे कृते तस्य परं प्रत्यादिवद्भावादस्ति शितोऽन्य इति कृत्वाऽऽत्वमत्र प्राप्नोति । प्रसज्यप्रतिषेधे तु न दोषः; एकादेशस्य पूर्वं प्रत्यन्तवद्भावात् शिद्ग्रहणेन ग्रहणात् शिति प्रतिषेध एव भवति । किं पुनः कारणमेकादेशविषय एव आत्त्वप्राप्तिश्चोद्यते, न पुनर्ग्लायतीत्यादावपि लकार एवाशिति परत आत्त्वं प्राप्नोतीति ? 'नैवं शक्यं चोदयितुम्; एवं ह्यशितीति प्रतिषेधो निर्विषयः स्यात्, न च 'पाघ्राध्मा-धेट्दृशः' इति धेटः शप्रत्ययोऽनन्यपूर्वो विषयः । न ह्येकमुदाहरणं शित्प्रतिषेधं प्रयोजयति । यद्येतावत् प्रयोजनं स्याद् 'अशे' इत्येव ब्रूयात् । यद्वा—अन्तरङ्गत्वान्नित्यत्वाच्च पूर्वं लस्य तिबादयः, पश्चाच्छप्, अनित्यं चात्त्वम्, तस्मादेकादेशविषय एव चोद्यते ? नैषः दोषः; एकादेशस्य पूर्वविधौ स्थानिवद्भावेनादिशितोऽन्यस्य प्रत्ययस्या-भावात् । इह तर्हि—सुग्लः, सुग्ला, सुग्लानमित्याकारान्तलक्षणाः काङ्यचो न स्युः ? एषोऽप्यदोषः;

अत्त्वभाविन एजन्तादाकारान्तनिमित्तकः ।
प्रत्ययो ज्ञाप्यते सर्वो ह्वावामश्चेत्यणा पुनः ॥

इह तर्हि ग्लै—ग्लानीयम्, पै—पानीयम्, अनीयरि कृते आत्त्वं च प्राप्नोति, आयादयश्च, परत्वादायादयः स्युः ? सत्यम्; कृतेषु तेष्वलोन्त्यस्यात्वे सवर्णदीर्घत्वे ग्लानीयमित्यादि सिद्धम् । नन्वायादिषु कृतेषु नायमेजन्तः, न च स्थानिवद्भावोऽलाश्रयत्वात् ? स्यादेतदेवं यदि सम्प्रति यदेजन्तं तस्यात्त्वं भवतीत्युच्येत, इह तूपदेशगतमेजन्तत्वं न सम्प्रतितनमिति नास्ति स्थानिवद्भावापेक्षा । नन्वेवमपि जग्लतुरित्यादौ यकारस्यात्वे कृते जग्ल + आ + अतुसिति स्थितेऽन्तरङ्गमप्याकारयोरेकादेशं बाधित्वा 'आतो लोप इटि च' इत्यातो लोपः स्यात्, न च पूर्वस्याकारस्य पुनर्लोपो लभ्यते, यकाराकारलोपस्य पूर्वविधौ स्थानिवद्भावात् 'असिद्धवदत्राभात्' इत्यसिद्धत्वाच्च ? नैष दोषः; समानाश्रये 'वार्णादाङ्गं बलीयः' ( व्या० परि० ३९ ), इह तु व्याश्रयत्वादन्तरङ्ग एकादेशे सति पश्चादाल्लोप इति सिद्धमिष्टम् । एवमपि 'द्विर्वचनेऽचि' इत्यायादीनां स्थानिवत्वात् ग्लैशब्दस्य द्विर्वचनेऽभ्यासस्येवर्णान्तता प्राप्नोति, पक्षान्तरे त्वनैमित्तिकत्वादात्वस्य द्विर्वचन-निमित्तेऽच्यविहितत्वान्न दोषः ? पर्युदासपक्षेऽपि न दोषः, 'लिटि वयो यः' इति द्विलकारकोऽयं निर्देशः, तथानिर्देशस्य च तत्र प्रयोजनाभावादिहानुवृत्तं वाक्यभेदेन सम्बद्ध्यते—अशित्येच आत्वं भवति, लिटि तु लकारादौ लावस्थायामेवेति । ततश्चात्त्वस्य द्विर्वचननिमित्ताज्निमित्तत्वाभावात्तस्य तावन्न स्थानिवद्भावः ।

**भावबोधिनी**

परे रहते विधि हाती है, वह अल्ग्रहण में तदादि में समझनी चाहिये ।' इससे शिदादि प्रत्यय परे ही निषेध होता है । उक्त उदाहरणों में [ त का होने वाला ] एश् आदेश शकारान्त है । [ अतः शिदादि न होने से 'अशिति' यह प्रतिषेध नहीं लागू होता है । लिट् = त = एश् परे भी आ हो जाने से जग्ले, मम्ले रूप बन जाते हैं । ]

अशितीति प्रसज्यप्रतिषेधोऽयम्, तेनैतदात्त्वमनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर्भवतीति। सुग्लः, सुम्ल इति—'आतश्चोपसर्गे ( ३.१.१३६ ) इति कप्रत्ययः। सुग्लान, सुम्लान इति—'आतो युच्' (३.३.१२८) इत्येवमादि सिद्धं भवतीति।

आकाराधिकारस्त्वयम 'नित्यं स्मयतेः' ( ६.१.५७ ) इति यावत् ॥

## २४८६. न व्यो लिटि ॥ ४६ ॥ ( २४१६ )

'व्येञ्' इत्येतस्य धातोर्लिटि परत आकारादेशो न भवति। संविव्याय। संविव्ययिथ। 'लिट्य-

**न्यासः**

कृत्वाऽऽह—**अशितीत्यादि**। तेन किं सिद्धं भवति? इत्याह—**तेनेत्यादि**। प्रसज्यप्रतिषेधे ह्यात्त्वस्य शिति प्रतिषेधः क्रियते, न तु किञ्चिन्निमित्तमाश्रीयत इति तदनैमित्तिकं भवति। अतः प्रा व प्रत्ययोत्पत्तेरात्त्वं भवतीत्याकारान्तलक्षणः प्रत्ययः सिध्यति, तेन 'सुम्लः' इत्यादि सिद्धं भवति। आदिशब्देन सुग्लः, सुग्ला—इत्यादेर्ग्रहणम्। तत्र हि स्त्रियाम् 'आतश्चोपसर्गे' इत्यङ् ॥ ४५ ॥

**न व्यो लिटि** ॥ 'व्येञ् संवरणे'। अथालिटीति कस्मान्न ज्ञायते, तुल्या हि संहिता? नैतदस्ति; यदि ह्येवं स्यात्, 'लिटि व्यः' इति नियम एव कृतः स्यात् लिट्येवात्त्वम्, नान्यत्रेति। लक्ष्यस्थित्या च

**पदमञ्जरी**

आयादयस्तु लिट्यप्राप्ता एव। तदेवं पर्युदासपक्षस्य बहुप्रतिविधेयत्वात्प्रसज्यप्रतिषेधोऽयमित्याह—**अशितीति प्रसज्यप्रतिषेधोऽयमिति**। तेन किं सिद्धं भवति? इत्याह—**तेनैतदित्यादि**। **एवमादि सिद्ध भवतीति**। आदिशब्देन सुग्लेत्यत्र 'आतश्चोपसर्गे' इत्यङो ग्रहणम्। अन्यानि बहूनि प्रयोजनानि प्रागेवास्माभिर्दर्शितानि।

इह कस्मान्न भवति—**गोभ्याम्, नौभ्यामिति**? ज्ञापकात्। यदयम् 'रायो हलि' इत्यात्त्वं शास्ति, तज्ज्ञापयति—न प्रातिपदिकस्यात्त्वं भवतीति। नैतदस्ति ज्ञापकम्, नियमार्थमेतत्स्यात्—रायो हल्येव; 'औतोम्शसोः' इत्येतत्तु गां पश्येत्यत्र, 'गोतो णित्' इति णित्त्वाद्वृद्धिः प्राप्नोति, गाः पश्येत्यत्र त्वशितीति प्रतिषेधः प्राप्नोतीति कृतं भवेदित्यज्ञापकम्? एवं तर्ह्युपदेश इत्युच्यते, न च गोनौशब्दयोरुपदेशोऽस्ति, यः 'गोपयसोर्यत्', 'नौवयोधर्म' इत्यादौ उच्चारणं नासावुपदेशः, किं तर्हि? उद्देशः, सिद्धवदुपादानात्। मा भूद् गोनौशब्दयोरुपदेशः, एवस्तूपदेशोऽस्ति—**'गमेर्डोः'** ( द० उ० २.११ ), 'ग्लानुदिभ्यां डौः' ( द० उ० २.१२ ) इति, न च डोडावोर्विधानवैयर्थ्यम्, शसि चरितार्थत्वात्? एवं तर्हि 'धातोरिति वर्त्तते'—इत्युक्तत्वान्न भविष्यति ॥ ४५ ॥

**न व्यो लिटि** ॥ कित्यात्त्वे सत्यसति वा विशेषाभावात्पित्युदाहरणमेतस्य वृत्तिकारेण दर्शितम्। थलि

**भावबोधिनी**

अशिति—यह प्रसज्यप्रतिषेध है, इस लिये यह आत्व आदेश अनैमित्तिक है इस कारण प्रत्यय के आने के पहले ही हो जाता है। [ क्योंकि शित् परे नहीं होता है—ऐसा अर्थ है। ] सुग्लः, सुम्लः—इनमें [ सुग्लै, सुम्लै में 'ऐ' का आत्व करने के बाद आकारान्त मानकर ] "आतश्चोपसर्गे" सूत्र से 'क' (अ) प्रत्यय होता है। [ और "आतो लोप इटि च" ( पा० सू० ६।४।६४ ) से आ का लोप हो जाता है। ] 'सुग्लानः सुम्लानः'—इनमें "आतो युच्" ( पा० सू० ३।३।१२८ ) सूत्र से युच् ( अन ) प्रत्यय आदि भी सिद्ध होता है।

यह आकार का अधिकार [ अनुवृत्ति ] "नित्यं स्मयतेः' ( पा० सू० ६।१।५७ ) तक चलता है ॥ ४५ ॥

'व्येञ्' इस धातु का लिट् परे रहते आकार आदेश नहीं होता है। उदा०—संविव्याय। संविव्ययिथ। [ सं व्ये + लिट् = तिप् = णल् आ नहीं होता है, द्वित्व के बाद य् का संप्रसारण सं विव्ये + अ, वृद्धि, आय् आदेश करनेपर रूप

भ्यासस्योभयेषाम्' ( ६.१.१७ ) इत्यभ्यासस्य सम्प्रसारणम् । णलि 'अचो ञ्णिति' ( ७.२.११५ ) इति वृद्धिः ॥

## २४८७. स्फुरतिस्फुलत्योर्घञि ॥ ४७ ॥ ( ३१८५ )

**'आदेचः' ( ६.१.४५ ) इति वर्तते । 'स्फुर स्फुल चलने' ( धा० पा० १३९०. १३९१ )— इत्येतयोर्धात्वोरेचः स्थाने घञि परत आकारादेशो भवति । विस्फारः । विस्फालः । विष्फारः । विष्फालः । 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' ( ८.३.७६ ) इति वा षत्वम् ॥**

## २४८८. क्रीङ्जीनां णौ ॥ ४८ ॥ ( २६०० )

**'डुक्रीञ् द्रव्यविनिमये' ( धा० पा० १४७४ ), 'इङ् अध्ययने' ( धा० पा० १०४७), 'जि जये'**

**न्यासः**

विपरीतनियमो भविष्यति । द्विवचनबहुवचनयोः सम्प्रसारणे पूर्वरूपत्व आत्वे च सत्यसति वा नास्ति विशेष इत्येकवचनान्तमुदाहृतम् । **संविव्ययिथेति** । थलि वलादिलक्षणस्येटः 'एकाचः' इत्यादिना प्रतिषेधः । पुनरपि क्रादिनियमार्थः प्राप्तः, सोऽपि 'अचस्तास्वत्' इत्यादिना प्रतिषिद्धः, पुनः 'ऋतो भारद्वाजस्य' इति नियमाद्विकल्पे प्राप्ते 'इडर्त्तिव्ययतीनाम्' इति नित्यं क्रियते ॥ ४६ ॥

**स्फुरतिस्फुलत्योर्घञि ॥ विस्फारः, विस्फाल इति** । भावे घञ्, 'हलश्च' इति करणाधिकरणयोर्वा ॥ ४७ ॥

**क्रीङ्जीनां णौ** ॥ 'डुक्रीञ् द्रव्यविनिमये', 'इङ् अध्ययने', 'जि जये' । अनुपदेशार्थ आरम्भः । **क्रापयती**-त्यादावात्वे कृते 'अर्त्तिह्री' इत्यादिना पुक् । किमर्थमिदमुच्यते, न 'क्नप कुत्सायां गतौ', 'जप जल्प व्यक्तायां वाचि', 'आप्लृ व्याप्तौ' इत्यस्य चाधिपूर्वस्य णिचि कृते क्रापयतीत्यादिकं रूपं सिद्धम्, अनेकार्थत्वाद् धातूनां क्रीणात्याद्यर्थे क्नपादयो वर्तिष्यन्ते ? उच्यते; क्रीणात्यादीनां णिचि प्रयोगान्तरनिवृत्त्यर्थम् । अथ करोतेः 'ईङ् गतौ' इत्यस्य ग्रहणं कस्मान्न विज्ञायते ? उच्यते; करोतेस्तावन्न सम्भवति, एच इत्यधिकारात् । अत एव **वृत्तिकृता** 'एचः' इत्यनुवर्त्तितम् । वचनसामर्थ्याद्वा तस्य हि वृद्धैचवात्वं सिद्धम् ? नैतदस्ति; नियमार्थं हि स्यात्—आत्वमेव, न पुना रपरत्वमिति ? नैतदस्ति; 'विधिनियमसम्भवे विधिरेव ज्यायान्' इति क्रीणातेरेव

**पदमञ्जरी**

'इडत्यर्तिव्ययतीनाम्' इतीट ॥ ४६ ॥ ४७ ॥

**क्रीङ्जीनां णौ** ॥ यद्यपि करोतेः 'ईङ् गतौ' ( धा० पा० ११४३ ) इत्येतस्य यणादेशे ङिति रूपं सम्भवति,

**भावबोधिनी**

बनता है । संव्ये + सिप् = थल्, इट् आगम, द्वित्व, अभ्यास का संप्रसारण पूर्वरूप, 'ए' का अय् आदेश करने पर संविव्ययिथ ] "लिट्यभ्यासस्योभयेषाम्" ( पा० सू० ६।१।१७ ) सूत्र से अभ्यास के य् का संप्रसारण 'इ' होता है । णल् में "अचो ञ्णिति" ( पा० सू० २।७।११५ ) से इ की वृद्धि ऐ होती है ॥ ४६ ॥

'आदेचः' इसकी अनुवृत्ति होती है । '√स्फुर √स्फुल चलने' इन धातुओं के एच् के स्थान पर घञ् परे रहते आकार आदेश होता है । उदा०—विस्फारः । विस्फालः । विष्फारः । विष्फालः । इनमें "स्फुरति-स्फुलत्योर्निर्निविभ्यः" (पा० सू० ८।३।७६) से विकल्प से षत्व होता है । [ स्फुर, स्फुल् में उपधा का गुण करने पर ओ का आत्व करने से रूप बनते हैं । ] ॥ ४७ ॥

'√डुक्रीञ् द्रव्यविनिमये' '√इङ् अध्ययने' '√जि जये'—इन तीन धातुओं के एच् के स्थान पर णि परे रहते आ आदेश होता है। उदा०—क्रापयति। अध्यापयति। जापयति। [क्री + णिच् = इ, वृद्धि करने पर क्रै + इ, ऐ का आकार

( धा० पा० ९३७ )— इत्येतेषां धातूनामेचः स्थाने णौ परत आकारादेशो भवति। क्रापयति। अध्यापयति। जापयति ॥

## २४८९. सिध्यतेरपारलौकिके ॥ ४९ ॥ ( २६०२ )

**'णौ' इति वर्तते। 'षिधु' हिंसासंराद्धयोः' ( धा० पा० ११९३ )—इत्यस्य धातोरपारलौकिकेऽर्थे वर्तमानस्यैचः स्थाने णौ परत आकारादेशो भवति। अन्नं साधयति। ग्रामं साधयति।**

**अपारलौकिक इति किम्? तपस्तापसं सेधयति। स्वान्येवैनं कर्माणि सेधयन्ति। अत्र हि सिध्यतिः पारलौकिके ज्ञानविशेषे वर्तते। तापसः सिध्यति = ज्ञानविशेषमासादयति, तं तपः प्रयुङ्क्ते। स च ज्ञानविशेष उत्पन्नः परलोके = जन्मान्तरे फलमभ्युदयलक्षणमुपसंहरन् परलोकप्रयोजनो भवति।**

### न्यासः

ग्रहणम्, न करोतेः; तस्य नियमार्थत्वात्। क्रीणातेस्तु विध्यर्थत्वात्। 'ईङ् गतौ' इत्यस्यापि ग्रहणं न सम्भवति, जयतिना ह्रस्वान्तेन साहचर्य्यात्। इङ् ह्रस्वान्तो ग्रहीष्यते, न दीर्घान्तः; शब्दपरविप्रतिषेधात्। जयतिना साहचर्य्यम्, न क्रीणातिना। व्याख्यानतो वा विशेषोऽवसेयः ॥ ४८ ॥

**सिध्यतेरपारलौकिके ॥ अन्नं साधयतीति।** अन्नं निष्पादयतीत्यर्थः। **अत्र हि सिधिः पारलौकिकेऽर्थे ज्ञानविशेषे वर्त्तत** इति। अस्यार्थम्—**तापसः सिध्यतीत्यादिना** स्पष्टीकरोति। **उपसंहरन्निति।** निष्पादयन्नित्यर्थः।

### पदमञ्जरी

तथापि 'एचः' इत्यधिकारात्करोतेस्तावद् ग्रहणं न सम्भवति। तथा ईङोऽपि ग्रहणं न भवति, ह्रस्वान्तेन परेण जयतिना साहचर्यात् ॥ ४८ ॥

**सिध्यतेरपारलौकिके ॥** परलोकः प्रयोजनमस्य तत्पारलौकिकम् 'प्रयोजनम्' इति ठक् अनुशतिकादित्वादुभयपदवृद्धिः। **ज्ञानविशेषे वर्त्तत इति।** हेयोपादेयतत्त्वावबोधः = ज्ञानविशेषः। **तापसः सिध्यतीति।** हेयमुपादेयं च तत्त्वतो ज्ञातुकामः प्रवर्त्तत इत्यर्थः। तदाह—**ज्ञानविशेषमासादयतीति। तपः प्रयुङ्क्ते इति।** ज्ञानविशेषवन्तं करोतीत्यर्थः। परलोक इत्यस्य विवरणम्-**जन्मान्तर इति।** इह वा भवतु, स्वर्गादौ वा, शरीरान्तरोपलक्षणार्थं पारलौकिकग्रहणमिति। **उपसंहरन्निति।** हेतौ शतृप्रत्ययः।

### भावबोधिनी

आदेश क्रा + इ, 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ' ( पा० सू० ७।३।३६ ) से पुक् = प् आगम करने पर क्रापि + लट् = तिप्, शप्, गुण, अय् आदेश—क्रापयति। इङ् सदैव अधि के साथ ही प्रयुक्त होता है—अधि इ + णिच्, धातु की इ की वृद्धि, आ आदेश—अधि आ + इ, पुक् आगम, गुण, अय् आदेश अधिआपय् + अति, यण्—अध्यापयति। जि + णिच् = इ, वृद्धि के बाद आत्व, पुक्, गुण, अय् आदेश—जापयति। ] ॥ ४८ ॥

'णौ' इसकी अनुवृत्ति है। '√षिधु हिंसासंराद्धयोः' यह धातु जो कि अपारलौकिक अर्थ में वर्तमान है, उसके एच् के स्थान पर आ आदेश णि परे रहते होता है। उदा०—अन्नं साधयति। ग्रामं साधयति। [ षिध्, स् आदेश करने पर सिध् + णिच् गुण के बाद ए का आ आदेश—सेध् = साध् + इ, इ का गुण अय् आदेश—साधयति। अन्नं साधयति = निष्पादयति, और ग्रामं साधयति = बनाता है—यह अर्थ है। ]

अपारलौकिक अर्थ में—इसका क्या फल है? तपः तापसं सेधयति। [ तप तापस को सिद्ध करता है। ] स्वानि एव कर्माणि एनं सेधयन्ति। [ अपने ही कर्म इसे सिद्ध करते है। ] यहाँ √सिध् धातु पारलौकिक ( परलोकसंबन्धी ) ज्ञानविशेष अर्थ में वर्तमान है। तापसः सिद्धयति = तापस ज्ञानविशेष को प्राप्त करता है, उस तापस को

इह कस्मान्न भवति ? **अन्नं साधयति ब्राह्मणेभ्यो दास्यामीति । सिध्यतेरत्रार्थो निष्पत्तिः, तस्याः प्रयोजनमन्नम्, तस्य यद्दानं तत्पारलौकिकम्; न पुनः सिद्धिरेवेति न आत्वं पर्युदस्यते । साक्षात्परलोकप्रयोजने च सिध्यर्थे कृतावकाशं वचनमेवं विषयं नावगाहते ।**

**सिध्यतेरिति श्यना निर्देशः 'षिधु गत्याम्' ( धा० पा० ४७ ) इत्यस्य भौवादिकस्य निवृत्त्यर्थः ॥**

**न्यासः**

**इह कस्मान्न भवतीत्यादि** । एवं मन्यते—ब्राह्मणेभ्यो दास्यामीत्यनेनाभिप्रायेण योऽन्नं साधयति स जन्मान्तरे भवन् फलमभ्युदयलक्षणं प्राप्नोति, तस्मात् पारलौकिकेऽर्थे सिधिरत्र वर्त्तत इति पर्युदासेन भवितव्यमिति । सिध्यतेरत्रार्थो निष्पत्तिरित्यादिनेहलोकार्थतां तस्य दर्शयति । **तस्याः प्रयोजनमन्नमिति** । अन्नमुद्दिश्य प्रवृत्तत्वात् । **तस्येति** । अन्नस्य । **न पुनः सिद्धिरेवेतीति** । अर्थाल्लिङ्गविपरिणामं कृत्वा न पुनः सिद्धिरेव पारलौकिकीति सम्बन्धनीयम् । सिद्धिर्निष्पत्तिरित्यर्थः । इतिकरणो हेतौ । यस्मात् सिद्धौ धातुर्वर्त्तते । अत्र सिद्धिः पारलौकिकी न भवति, तस्मान्नात्रात्वं पर्युदस्यते । स्यादेतत् यद्यपि साक्षाद् धातुः परलोकार्थो न भवति, पारम्पर्य्येण तु भवत्येव, तस्माद् भवितव्यमेव प्रतिषेधेन ? इत्याह—**साक्षादित्यादि** । यदि साक्षादव्यवधानेन परलोकार्थो यः सिध्यतेरर्थः, तत्रापि पारलौकिक इतीदं वचनं न कृतार्थं स्यात्, तदा पारम्पर्येणापि यः परलोकार्थस्तत्र व्याप्रियेत—मा भूद् वचनवैयर्थ्यमिति । इदं तु ज्ञानविशेषे साक्षात् परलोकार्थे सिध्यत्यर्थे चरितार्थम्, ततो नोत्सहत एवंविधविषयमवगाहितुम् । न शक्नोत्येवम्प्रकारे विषये निषेधः प्रवर्त्तितुमित्यर्थः ।

अथ सिध्यतेः श्यना निर्देशः किमर्थः, न सिधेरित्येवोच्येत, एवं हि लघु सूत्रं भवति ? इत्याह—**सिध्यतेरित्यादि** ॥ ४९ ॥

**पदमञ्जरी**

**इह कस्मादिति** । ब्राह्मणेभ्यो दास्यामीत्यनेनाभिप्रायेणानुष्ठितो धात्वर्थः परलोकप्रयोजनो भवतीति प्रश्नः । **सिद्ध्यतेरर्थ इत्यादिना**—ऐहलौकिकत्वं धात्वर्थस्य दर्शयति । **तस्य प्रयोजनमिति** । तदुद्दिश्य प्रवृत्तत्वात् । **पुनः सिद्धरेवेति** । पारलौकिकीति लिङ्गविपरिणामेन सम्बन्धनीयम् । सिद्धिः = निष्पत्तिः । यस्यां सिद्धौ धातुर्वर्त्तते सा च पारलौकिकी न भवति, तस्मादात्वं न पर्युपदस्यते । **साक्षादिति** । यदि साक्षादव्यवधानेन पारलौकिको यः सिद्ध्यतेरर्थस्तत्र पर्युदासो न चरितार्थः स्यात्तदा पारम्पर्याश्रयणम् । इदं तु साक्षात्परलोकार्थे ज्ञानविशेषे चरितार्थम्, अतो नैवंविधे विषये प्रवर्त्तते इत्यर्थः ॥ ४९ ॥

**भावबोधिनी**

तप प्रयुक्त करता है, ज्ञानविशेष की प्राप्ति में लगाता है । वह ज्ञानविशेष उत्पन्न होता हुआ परलोक = दूसरे जन्म में अभ्युदयलक्षण ( अभ्युदय कराने वाले ) फल को उत्पन्न कराता हुआ परलोकप्राप्ति रूप प्रयोजनवाला बनता है ।

यहाँ क्यो नहीं होता है ?—अन्नं साधयति, ब्राह्मणेभ्यो दास्यामि । [ अन्न पकाता है कि ब्राह्मणों को दूंगा । ] उत्तर—यहाँ √सिध् का अर्थ निष्पत्ति = बनाना है, उसका प्रयोजन अन्न है, उसका जो दान है वह तो ( पूर्व उदाहरण के समान ) पारलौकिक है, न कि केवल सिद्धि ही है । इसलिए आत्व पर्युदास ( निषेध ) नहीं होता है और साक्षात् परलोकरूप प्रयोजन वाले सिध् धात्वर्थ में कृतावकाश ( चरितार्थ ) होने वाला वचन इस प्रकार के विषय को नहीं उद्देश्य बनाता है । [ यहाँ परम्परया परलोक प्रयोजन बनता है । अतः आत्व का निषेध नहीं होता है । ]

'सिध्यतेः' यहाँ श्यन् विकरण से निर्देश करना भौवादिक '√षिधु गत्याम्' की निवृत्ति के लिये है । [ उसमें यह आत्व नहीं होता है । सेधयति बनता है । ] ॥ ४९ ॥

## २४९०. मीनातिमिनोतिदीङां ल्यपि च ।। ५० ।। ( २५०८ )

'आदेच उपदेशे' ( ६.१.४५ ) इति वर्तते । 'मीङ् हिंसायाम्' ( धा० पा० १४७७ ), 'डुमिञ् प्रक्षेपणे' ( धा० पा० १२५१ ), 'दीङ् क्षये' ( धा० पा० ११३५ )—इत्येतेषां धातूनां ल्यपि विषये चकारादेचश्च विषये उपदेश एव प्राक्प्रत्ययोत्पत्तेरलोऽन्त्यस्य ( १.१.५२ ) स्थाने आकारादेशो भवति । प्रमाता, प्रमातव्यम्, प्रमातुम्, प्रमाय । निमाता, निमातुम्, निमातव्यम्, निमाय । उपदाता, उपदातव्यम्, उपदातुम्, उपदाय ।

उपदेश एवात्त्वविधानादिवर्णान्तलक्षणः प्रत्ययो न भवति, आकारान्तलक्षणश्च भवति— उपदायो वर्तते, ईषदुपदानमिति घञ्युचौ भवतः ।।

### न्यासः

**मीनातिमिनोतिदीङां ल्यपि च** ।। उपदेश इत्यनुवृत्तेः प्रागेव प्रत्ययोत्पत्तेरात्त्वेन भवितव्यमिति, अत आत्वविधानकाले ल्यपः परत्वं न सम्भवतीति तस्माल्ल्यपीति विषयसप्तमीयं विज्ञायत इत्याह—**ल्यपि विषय इति** । एच इति यद्यपि प्रकृतिविशेषणं प्रागासीत्, तथापीहोपदेशाधिकारान्मीनातिप्रभृतीनां चोपदेशावस्थायामेचो-ऽसम्भवात् सामर्थ्याद्विषयविशेषणं विज्ञायत इत्याह—**एचश्च विषय इति** । **उपदेश** इत्यस्य **प्रागित्यादिना**र्थमाचष्टे । **प्रमायेति** । 'समासेऽनञ्' इति ल्यप् ।

क पुनरुपदेशावस्थायामेवात्त्वविधानेऽर्थः सम्पद्यते, यदर्थमुपदेशावस्थायामात्त्वं क्रियते ? इत्याह—**उपदेश एवेत्यादि** । इवर्णान्तलक्षणः 'एरच्' इत्यच्, आकारान्तलक्षणः 'आतो युच्' । **उपदाय इति** । उपदेश एवात्त्वे कृते सत्यचो निमित्तं विहतमित्युत्सर्ग एव 'भावे' इति घञ् सिद्धो भवति । 'आतो युक् चिण्कृतोः' इति युक् । **ईषदुपदानमिति** । उपदेशावस्थायामात्त्वे खलपवादो युच् सिद्धो भवति ।। ५० ।।

### पदमञ्जरी

**मीनातिमिनोतिदीङां ल्यपि च** ।। उपदेश एवात्त्वविधानाल्ल्यपः परत्वासम्भवाल्ल्यपीति विषयसप्तमीत्याह—**ल्यपि विषय इति । एकाच इति** । यद्यपि प्रकृतिविशेषणं प्रागासीत्, तथापीहोपदेशाधिकारान्मीनात्यादीनां चोपदेश एजन्तत्वासम्भवात्सामर्थ्यादिव इत्येतदपि विषयविशेषणं विज्ञायत इत्याह—**एचश्च विषय इति** । यत्र प्रत्यये एज्भावी तस्मिन्बुद्धिस्थ इत्यर्थः । उपदेश एवेत्यस्य विवरणम्—**प्राक् प्रत्ययोत्पत्तेरिति** ।

उपदेश एवात्त्वविधाने योऽर्थः सम्पद्यते तं दर्शयति—**उपदेश एवात्त्वविधानादिति** । इवर्णान्तलक्षणः प्रत्यय एरच्, आकारान्तलक्षणस्तु घञ् । यद्यपि घञाकारान्तादिति नोच्यते, तथाप्यत्रात्त्वे सति भवति, असति तु न भवतीत्येतावता घञ आकारान्तलक्षणत्वम् । **उपदायो वर्त्तत इति** । घञि 'आतो युक् चिण्कृतोः' इति युक् । **ईषदुपदानमिति** । खलर्थे 'आतो युच्' । मीनातिमिनोत्योस्तु खलचावेव भवतः; 'निमीमिलियां खलचोः प्रतिषेधः' ( वा० ६६६ ) इति वक्ष्यमाणत्वात् । अतो दीङेवोदाहृतः ।। ५० ।।

### भावबोधिनी

'आदेच उपदेशे' इसकी अनुवृत्ति होती । '√ मीन् हिंसायाम्' √ डु मिन् प्रक्षेपणे' '√ दीङ् क्षये'—इन तीन धातुओं का ल्यप् के विषय में और च के कारण एच् के विषय में प्रत्यय की उत्पत्ति के पहले उपदेश में अन्त्य अल् ( वर्ण ) के स्थान पर आकार आदेश होता है । उदा०—प्रमाता, प्रमातव्यम्, प्रमातुम्, प्रमाय । [ प्र + मी आत्व करने पर प्रमा + तृच् प्रमा + तव्य, प्रमा + तुमुन्, प्रमा + क्त = ल्यप् ] निमाता, निमातव्यम्, निमातुम्, निमाय । [ यहाँ नि मी में आत्व करके प्रत्यय का योग किया जाता है । ] उपदाता, उपदातव्यम्, उपदातुम्, उपदाय । [ उपदीङ् आत्व करने के बाद उपदा बनाकर प्रत्यय जोड़े जाते हैं । ]

## २४९१. विभाषा लीयतेः ॥ ५१ ॥ ( २५०९ )

'ल्यपि' ( ६.१.४१ ) इति वर्तते, 'आदेच उपदेशे' ( ६.१.४५ ) इति च। 'लीङ् श्लेषणे'—( धा० पा० )—इति दिवादिः, 'ली श्लेषणे' ( धा० पा० १५०२ )—इति क्रयादिः; तयोरुभयोरपि यका निर्देशः स्मर्यते। लीयतेर्धातोर्ल्यपि च एचश्च विषये उपदेश एवालोऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति। विलाता, विलातुम्, विलाय, विलातव्यम्। विलेता, विलेतुम्, विलेतव्यम्, विलीय।

❀निमीमिलियां खलचोः प्रतिषेधो वक्तव्यः❀ ( म० भा० ६.१.५० वा० ५२ )। ईषत्प्रमयः। प्रमयो वर्तते। ईषन्निमयः, नियमो वर्तते। ईषद्विलयः, विलयो वर्तते। अत्र तु लियो व्यवस्थितविभाषाविज्ञानात्सिद्धम्।

**न्यासः**

**विभाषा लीयतेः ॥ तयोरुभयोरपि यका निर्देशः स्मर्यत इति।** आचार्यैः। अथ दैवादिस्यायं श्यना निर्देशः कस्मान्न विज्ञायते? अत एव निर्देशात्। यदि दैवादिक एवात्र निर्देष्टुमभीष्टः स्यात्, अनुबन्धेन लीङ इति निर्देशं कुर्यात्। तस्मात् साधारणेनागन्तुकेन यकायमुभयोनिर्देशः। **ईषत्प्रमय इति।** 'ईषद्दुःसुषु' इत्यादिना खल्। **निमयो वर्त्तत इति।** 'एरच्' इत्यच्।

**अत्र तु लियो व्यवस्थितविभाषया विज्ञानात् सिद्धमिति।** 'लियः' इत्युपलक्षणमात्रम्, इतरयोरपि सिद्ध एव; विभाषाग्रहणस्य पूर्वेणापि सूत्रेण सम्बन्धात्। व्यवस्थितविभाषाविज्ञानात् **प्रलम्भनशालीनीकरणयोश्च णौ**

**पदमञ्जरी**

**विभाषा लीयतेः ॥ तयोरुभयोरपि यकाऽयं निर्द्देशः क्रियते इति।** यदि तु दैवादिकस्यैव श्यना निर्देशः क्रियेत, 'लीङः' इत्येव ब्रूयादिति भावः। शितपः शित्करणसामर्थ्याच्चाभावकर्मवाचित्वेऽपि यग् भवति, यथा—अकर्तृवाचित्वशबादयः—'भवतेरः' इत्यादौ। **खलचोरिति।** पचाद्यच एरचश्च सामान्येन ग्रहणम्। **एवं चेति।**

**भावबोधिनी**

उपदेश अवस्था में ही आत्व आदेश कर दिया जाता है, इसलिए इवर्णान्त को मान कर होने वाला प्रत्यय नहीं होता है और आकारान्त को मानकर होने वाला प्रत्यय होता है - उपदायो भवति। [ उप दी, आत्व के बाद उपदा + घञ्, युक् आगम आदि करने पर रूप बनता है। ] ईषदुपदानम्—इनमें क्रमशः घञ् और और युच् प्रत्यय [ "भावे घञ्" ( ३।३।१८ ) और "आतो युच्" ( ३।३।११८ ) सूत्रों से ] होते हैं॥ ५०॥

'ल्यपि' और 'आदेच उपदेशे' इनकी अनुवृत्ति होती है। '√ लीङ् श्लेषणे' यह दिवादिगणीय और '√ली श्लेषणे' क्र्यादिगणीय इन दोनों का यक् से निर्देश स्मृत किया जाता है। √ लीयति धातु का ल्यप् परे रहते और एच् के विषय में उपदेश में ही अन्त्य अल् के स्थान पर विकल्प से 'आ' आदेश होता है। उदा०—विलाता, विलातुम्, विलाय, विलातव्यम्। [ वि पूर्वक √ लीङ् अथवा √ लि से तृच् तुमुन्, क्त्वा=ल्यप् और तव्यत् प्रत्यय परे रहते गुण करने पर 'ले' बनाकर एच् का आ आदेश करने से रूप बनते हैं। जब आकार आदेश नहीं होता है तब ये रूप होते हैं— ] विलेता, विलेतुम्, विलेतव्यम्, विलीय।

❀ निमी, मि और ली के आत्व का प्रतिषेध खल् और अच् प्रत्ययों के परे रहते कहना चाहिए। ❀ उदा०—ईषन्निमयः, निमयः वर्तते। ईषत्प्रमयः, प्रमयो वर्तते। ईषद्विलयः, विलयो वर्तते [ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ( पा० सू० ३।३।१२६ ) से विहित खल्=अ तथा पचाद्यच् ( २।१।१२४ ) और 'एरच्' ( ३।३।५६ ) से विहित अच् दोनों का ग्रहण है। गुण करने पर आत्व प्राप्त है। निषेध हो जाने से ए का अय् आदेश होता है। ]

यहाँ व्यस्थित विभाषा के कारण √ ली का तो सिद्ध ही है। [ शेष में प्रतिषेध कहना चाहिए। ]

एवं च प्रलम्भनशालीनीकरणयोश्च णौ नित्यमात्वं भवति—कस्त्वामुल्लापयते, श्येनो वर्त्तिकामुल्लापयते ॥

२४९२. खिदेश्छन्दसि ॥ ५२ ॥ ( ३५१३ )

'विभाषा' इति वर्तते । 'खिद दैन्ये' ( धा० पा० ११७१ ) इत्यस्य धातोरेचः स्थाने छन्दसि विषये विभाषा आकार आदेशो भवति । चित्तं चिखाद । चित्तं चिखेद । छन्दसीति किम् ? चित्तं खेदयति ॥

२४९३. अपगुरो णमुलि ॥ ५३ ॥ ( ३३७९ )

'गुरी उद्यमने' ( धा० पा० १३९७ )—इत्यस्य धातोरपपूर्वस्य णमुलि परत एचः स्थाने विभाषा आकार आदेशो भवति । अपगारमपगारम् । अपगोरमपगोरम् । 'आभीक्ष्ण्ये णमुल्च' ( ३.४.२२ ) इति णमुल् । अस्यपगारं युध्यन्ते, अस्यपगोरं युध्यन्त इत्यत्र 'द्वितीयायां च' ( ३.४.५३ ) इति णमुल् ॥

**न्यासः**

नित्यमात्वं भवति । व्यवस्थितविभाषाविज्ञानादेव । उल्लापयते, 'अपलापयत इति । 'लियः सम्माननशालीनीकरणयोः' इत्यात्मनेपदम् ॥ ५१ ॥

खिदेश्छन्दसि ॥ चिखादेति । 'पुगन्तलघूपधस्य' इति गुणे कृत [ तस्य ] आकारः ।

यदि खादिरपि खिदेरर्थे वर्त्तते, ततोऽयं योगः शक्योऽकर्तुम्; खादेस्तु—चखादेति भविष्यति, खिदेस्तु-चिखेदेति ॥ ५२ ॥

अपगुरो णमुलि ॥ अपगारमपगारमिति । 'आभीक्ष्ण्ये द्वे भवतः' इति द्वित्वम् ॥ ५३ ॥

**पदमञ्जरी**

व्यवस्थितविभाषाविज्ञानादेवेत्यर्थः । उल्लापयत इति । 'लियः सम्माननशालीनीकरणयोश्च' इत्यात्मनेपदम् ॥ ५१ ॥

खिदेश्छन्दसि ॥[2] चखादेति । व्यत्ययेन परस्मैपदम्, आत्त्वस्यानैमित्तिकत्वाद् 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाभावादभ्यासस्येवर्णान्वता न भवति ।

अयं योगः शक्योऽवक्तुम् । कथम् ? खादेः—चखाद, खिदेः—चिखेदेति, अनेकार्थत्वाद्धातूनामर्थभेदोऽप्यकिञ्चित्करः ॥ ५२ ॥

अपगुरो णमुलि ॥ यदि गिरतिर्गुरेरर्थे वर्तते, तदायं योगः शक्योऽवक्तुम् । कथम् ? गिरेः—

**भावबोधिनी**

और इस प्रकार प्रलम्भन और शालीनीकरण अर्थों में णि परे रहते नित्य ही आकार आदेश होता है—कः त्वाम् उल्लापयते। श्येनो वार्त्तिकाम् उल्लापयते। [ यहाँ 'लियः सम्माननशालीनीकरणयोश्च' १।३।७ से अर्थों में आत्मनेपद होता है आत्व कर देने से पुक् आगम हो जाता है। भाष्य में यह वार्तिक 'मीनातिमीनोति' इस पूर्ववर्ती सूत्र में है । ] ५१ ॥

'विभाषा' इसकी अनुवृत्ति होती है। '✓ खिद दैन्ये' इस धातु के एच् के स्थान पर विकल्प से आकार आदेश वेद के विषय में होता है । उदा०— चित्तं चिखाद । चित्तं चिखेद । [ ए का आ करने पर पहला रूप बनता है । ]

वेदविषय में— इसका क्या फल है ? चित्तं खेदयति । [ यह लौकिक प्रयोग है अतः आत्व नहीं होता है ।] ॥५२॥

'✓गुरी उद्यमन' अर्थ वाली धातु जिसके पूर्व में 'अप' उपसर्ग है, उसका णमुल परे रहते एच् के स्थान पर विकल्प से आकार आदेश होता है। उदा०—अपगारम्, अपगारम् । अपगोरम् अपगोरम् । [ अप गुर् + णमुल् = अम् आभीक्ष्ण्य अर्थ में द्वित्व हो जाता है । आकार आदेश न होने पर दूसरा रूप बनता है । ] यहाँ 'आभीक्ष्ण्ये णमूल् च'' ( ३।४।२२ ) वचन से णमुल = अम् प्रत्यय होता है। 'अस्यपगारं युध्यन्ते, अस्यपगोरं युध्यन्ते—यहाँ ''द्वितीयायां च'' ( ३।४।५३ ) सूत्र से णमुल् होता है । तलवार उठाकर लड़ता है—यह अर्थ है । ] ॥ ५३ ॥

---

१. काशिकायां नेदमुपलभ्यते । २. 'चिखाद' इति काशिकासम्मतः पाठः ।

**२४९४. चिस्फुरोर्णौ ॥ ५४ ॥ ( २५६९ )**

'चिञ्' ( धा० पा० १२५२ ), 'स्फुर' ( धा० पा० १३९० )—इत्येतयोर्धात्वोर्णौ परत एचः स्थाने विभाषा आकारादेशो भवति । चापयति, चाययति । स्फारयति, स्फोरयति ॥

**२४९५. प्रजने वीयतेः ॥ ५५ ॥ ( २६०३ )**

'णौ' इति वर्तते । 'वी गतिप्रजनकान्त्यसनखादनेषु' ( धा० पा० १०४९ )—इत्यस्य धातोः प्रजने वर्तमानस्य णौ परतो विभाषा आकारादेशो भवति । पुरोवातो गाः प्रवापयति । पुरोवातो गाः प्रवाययति । गर्भं ग्राहयतीत्यर्थः ।

प्रजनो हि जन्मन उपक्रमो गर्भग्रहणम् ॥

**२४९६. बिभेतेर्हेतुभये ॥ ५६ ॥ ( २५९३ )**

'णौ' इति वर्तते, 'विभाषा' इति च । हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकः, ततो यद्भयम्, स यस्य भयस्य साक्षाद्धेतुः, तद्भयं हेतुभयम् । तत्र वर्तमानस्य 'ञिभी भये' ( धा० पा० १०८४ ) इत्यस्य

**न्यासः**

**चिस्फुरोर्णौ** ॥ 'क्रीङ्जीनां णौ' इत्यत्र प्रदेश इदं नोक्तम्; नित्यं मा भूदित्येवमर्थम् ॥ ५४ ॥

**प्रजने वीयतेः** ॥ यदि 'वा गतिगन्धनयोः' इत्ययं धातुः प्रजने वर्त्तते, ततः शक्यतेऽपि योगोऽवक्तुम्; वातेर्हि—वापयतीति भविष्यति, वीयतेस्तु—वाययतीति ॥ ५५ ॥

**बिभेतेर्हेतुभय इति** । 'पञ्चमी भयेन' इति पञ्चमीसमासोऽयमित्याह—**ततो यद्भयमिति** । किं पुनस्ततो

**पदमञ्जरी**

अपगारमपगारम्, गुरोः—अपगोरमपगोरम् ॥ ५३ ॥ ५४ ॥

**प्रजने वीयतेः** ॥ यदि वातिरप्रजनेऽपि वर्तते, तदा योगोऽयं शक्योऽकर्तुम् । कथम् ? वातेः—प्रवापयति, वीयतेः—प्रवाययतीति । वीयतेरित्ययमपि यका निर्देशः स्मर्यते, वेतेरादादिकत्वेन श्यनोऽसम्भवात् । प्रयोजनं हि यका निर्देशस्य चिन्त्यम् । **जन्मन उपक्रम इति** । जनेर्भवे घञ्, प्रशब्द आदिकर्मणि । **गर्भग्रहणमिति** । गृहीतो हि गर्भो जायते, ततो गर्भग्रहणं जन्मन उपक्रमः ॥ ५५ ॥

**बिभेतेर्हेतुभये** ॥ **हेतुभयमिति** । 'पञ्चमी भयेन' इति समासः, तदाह—**हेतोर्भयमिति** । किं पुनस्तत् ?

**भावबोधिनी**

'√चिञ्' और '√स्फुर' इन धातुओं के णि परे रहते एच् के स्थान पर विकल्प से आकार आदेश होता है । उदा०—चापयति, चाययति । स्फारयति, स्फोरयति । [ चि + णि वृद्धि करने के बाद 'ऐ' का आत्व करने से पुक् आगम होता है—चापि + लट् आदि का रूप है । आत्व न करने पर ऐ का आय् आदेश—चायि + लट् आदि का रूप है । इसीप्रकार स्फोर बना कर विकल्प से आत्व आदेश होने से स्फारयति, स्फोरयति दो रूप बनते हैं । ] ॥ ५४ ॥

'णौ' इसकी अनुवृत्ति होती है । '√ वी गति-प्रजन कान्ति—असन-खादनेषु' यह 'वी' धातु जो प्रजन अर्थ में वर्तमान है उसका णि परे रहते विकल्प से आकार आदेश होता है । उदा०—पुरोवातो गाः प्रवापयति । पुरोवातो गाः प्रवाययति । गर्भ ग्रहण करता है—यह अर्थ है । [ प्र वी + णिच्, वृद्धि वै + इ इसमें आकार आदेश करने पर पुक् आगम होने से प्रवापि + लट् । आत्व न करने पर प्रवायि + लट् ] प्रजन = जन्म का उपक्रम अर्थात् गर्भग्रहण है ॥ ५५ ॥

'णौ' इसकी और 'विभाषा' इसकी अनुवृत्ति होती है । इस सूत्र में हेतु पारिभाषिक—स्वतन्त्र का प्रयोजक कर्त्ता ( लिया जाता है ), उस से जो भय होता है, वह ( प्रयोजक ) जिस भय का साक्षात् हेतु है, वह भय हेतुभय

धातोर्णौ परतो विभाषा आकारादेशो भवति। मुण्डो भापयते, मुण्डो भीषयते। जटिलो भापयते, जटिलो भीषयते। 'भीस्म्योर्हेतुभये' ( १.३.३८ ) इत्यात्मनेपदम् 'भियो हेतुभये षुक्' ( ७.३.४० )। स चात्त्वपक्षे न भवति। लिभियोरीकारप्रश्लेषनिर्देशादीकारान्तस्य भियः षुग्विधीयते।

हेतुभय इति किम्? कुञ्चिकयैनं भाययति ( म० भा० )। अत्र हि कुञ्चिकातो भयं करणात्, न हेतोर्देवदत्तात्॥

## २४९७. नित्यं स्मयतेः॥ ५७॥ ( २५९६ )

'णौ' इति वर्तते, 'हेतुभये' इति च। नित्यग्रहणात् 'विभाषा' इति निवृत्तम्। 'स्मिङ् ईषद्धसने'

**न्यासः**

भयम्? इत्याह—**स यस्य भयस्येत्यादि**। अथात्त्वपक्षे षुगागमः कस्मान्न भवति? अस्ति ह्यत्रापि प्राप्तिः—'एकदेशविकृतमनन्यवद् भवति' इत्यत आह—**स चेत्यादि**। 'भियो हेतुभये षुक्' इत्यत्र हि भी+ई इति ईकारेण प्रश्लिष्टस्य निर्देशः कृतः-ईकारान्तस्यैव षुग् यथा स्यात्, आकारान्तस्य मा भूदिति। तथा लियो ग्रहणम्, तस्याप्यात्त्वपक्षे 'लीलोर्नुक्लुकावन्यतरस्यां स्नेहविपातने' इति नुग्न भवति। ईकारप्रश्लेषनिर्देशादेवेति प्रसङ्गेन व्युत्पादितम्॥ ५६॥

**नित्यं स्मयतेः॥ भयशब्देन धात्वर्थसाम्यादित्यादि**। यश्च बिभेतेरर्थो यश्च स्मयतेः, तौ द्वावपि सदृशौ;

**पदमञ्जरी**

इत्याह—**स यस्य भयस्येति। स चात्त्वपक्षे न भवतीति**। एकदेशविकृतस्यानन्यत्वात्प्राप्नोति, कुतो न भवति? इत्याह-**लीभियोरीकारप्रश्लेषनिर्द्देशादिति**। 'लीलोर्नुग्लुकौ' इति लियो नुग्विधीयते, यश्च 'भियः षुक्'-तावुभावप्याकारान्तयोर्न भवतः, कुतः? ली+ई भी+ई इति ईकारप्रश्लेषेणेकारान्तयोर्विधानात्। लीभियोः प्रश्लेषनिर्द्देशादिति वर्त्तिके सह पाठादिह लियो ग्रहणम्॥ ५६॥

**नित्यं स्मयतेः॥ धात्व[1]र्थसामान्यादिति**। सामान्यम्=सादृश्यम्, धात्वर्थयोः सामान्यं धात्वर्थसामान्यम्,

**भावबोधिनी**

[ कहा जाता ] है। उस अर्थ में वर्तमान '√ ञि भी भये' इस धातु का णि परे रहते विकल्प से आकार आदेश होता है। उदा०—मुण्डो भापयते, मुण्डो भीषयते। जटिलो भापयते, जटिलो भीषयते। [ भी+णिच्=इ यहाँ ] "भीस्म्यो· र्हेतुभये' ( पा०सू० १।३।६८ ) इस से आत्मनेपद होता है "भियो हेतुभये षुक्" ( पा०सू० ७।३।४० ) सूत्र से षुक् आगम होता है। वह आगम आत्व पक्ष में नहीं होता है। क्योंकि 'लीभी – इनमें ईकार का प्रश्लेष होने के कारण ईकारान्त [ ली और भी ] का ही षुक् आगम किया जाता है [ "लीलोर्नुक्लुकौ' 'भियो हेतुभये षुक्' इन सूत्रों में 'ली' तथा 'भी' में ईकार प्रश्लिष्ट है। अतः इनके ईकारान्त रूप में ही षुक् आगम किया जाता है। पक्ष में आत्व करने पर 'अर्तिह्रीब्ली री०" सूत्र से पुक् आगम करने पर भाप्+इ=भापयते और षुक् करने पर भीषयते रूप होते हैं। ]

हेतु का भय—इसका क्या फल है? कुञ्चिकया एनं भाययति। [ यहाँ पारिभाषिक हेतु ( कर्ता ) से भय नहीं है अपितु हेतु=कारण से भय है। अतः आत्व आदि कोई कार्य नहीं होता है यही लिखते हैं —] यहाँ कुञ्चिका से जो भय है वह कारण से भय है, देवदत्त रूप हेतु ( कर्ता ) से नहीं है। [ अतः कोई कार्य नहीं होता है। ]॥ ५६॥

'णौ' इसकी और 'हेतुभये' इसकी अनुवृत्ति होती है। नित्य के ग्रहण के कारण 'विभाषा' की निवृत्ति है, अनुवृत्ति नहीं होती है। '√ स्मिङ् ईषद्हसने' इस धातु का हेतुभय अर्थ में 'णि' परे रहते नित्य आकार आदेश होता

---

१. 'हेत्वर्थसामान्यात्' इति काशिकापाठः।

( धा० पा० ९४९ )—इत्यस्य धातोर्हेतुभयेऽर्थे णौ परतो नित्यमाकारादेशो भवति। मुण्डो विस्मापयते। जटिलो विस्मापयते।

भय इति किम्? कुञ्चिकयैनं विस्मापयति। भयशब्देन हेत्वर्थसामान्यादिह स्मयतेरर्थोऽभिधीयते। न हि मुख्ये भये स्मयतेर्वृत्तिरस्ति॥

२४९८. सृजिदृशोर्झल्यमकिति॥ ५८॥ ( २४०५ )

'सृज विसर्गे' ( धा० पा० १४१५ ), 'दृशिर् प्रेक्षणे' ( धा० पा० ९८९ )—इत्येतयोर्धात्वोर्झलादावकिति प्रत्यये परतोऽमागमो भवति। स्रष्टा, स्रष्टुम्, स्रष्टव्यम्। द्रष्टा, द्रष्टुम्, द्रष्टव्यम्। लघूपधगुणापवादोऽयममागमः। अस्राक्षीत्। अद्राक्षीत्। सिचि वृद्धिः ( ७.२ ३ ) अमि कृते भवति, पूर्वं तु बाध्यते।

न्यासः

चित्तविकारस्वभावतया। द्वावपि तौ चित्तसंक्षोभलक्षणौ, अतो द्वयोरपि यत् सामान्यं तत् सादृश्यम्। तस्माद् भयशब्देनात्र स्मयतेरर्थोऽभिधीयते। दृश्यते हि सादृश्यादर्थान्तरेऽपि शब्दानां वृत्तिः, यथा-सिंहो माणवक इति। किं पुनः कारणमेवं व्याख्यायते? इत्याह-न हीत्यादि। 'हेतुभये' इत्यनुवर्त्तते। उच्यते चेदं विशेषणम्। न च मुख्ये भये स्मयतेर्वृत्तिरस्ति। तत्र सामर्थ्यात् केनचित् सादृश्येन स्मयत्यर्थ एव भयशब्देनात्राभिधीयत इति विज्ञायते॥ ५७॥

सृजिदृशोर्झल्यमकिति॥ स्रष्टा, द्रष्टेति। अमागमे कृते यणादेशः, व्रश्चादिसूत्रेण षत्वम्। लघूपधगुणावादोऽयमित्यादि। ननु चासति सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यादिति, तत्र गुणे कृतेऽमागमो भविष्यति? नैतदेवम्; सामान्यविहितो गुणः, विशेषविहितस्त्वमागमः, सामान्यविहितस्य च विशेषविहितो बाधको भवति, यथा-ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति। यथा सामान्यविहितस्य दधिदानस्य विशेष-

पदमञ्जरी

द्वयोरपि धात्वोरर्थौ चित्तविकारस्वभावौ, तेन भयशब्देन स्मयतेरर्थोऽभिधीयते, 'क्रीङ्जीनां णौ' इत्यत्र स्मयतिर्नोक्तः, 'हेतुभये' इत्युपाधिं वक्ष्यामीति॥ ५७॥

सृजिदृशोर्झल्यमकिति॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायत इति प्रत्यय इह सन्निधापितो झला विशेष्यत इति तदादिविधिर्विज्ञायत इत्याह-झलादाविति। अकिति प्रत्यये परत इति। किति परतो न भवतीत्यर्थः! प्रसज्यप्रतिषेधो ह्ययमिष्यते, एतच्च गाङ्कुटादिसूत्रे सम्यगुपपादितम्। लघूपधगुणापवादोऽयमिति। अकितीति वचनान्नाप्राप्ते तस्मिन्नस्यारम्भात्। सिचि[1] वृद्धिस्त्वमि कृते भवति। सिचि वृद्धिस्तु भवति, न बाध्यते; येन

भावबोधिनी

है। उदा०—मुण्डो विस्मापयते। जटिलो विस्मापयते। [ विस्मि + णि = इ, वृद्धि, आत्व के बाद पुक् = प् आगम—विस्माप् + इ, ''भीस्म्योर्हेतुभये' सूत्र से आत्मनेपद होता है। ]

भय अर्थ में—इसका क्या प्रयोजन है? कुञ्चिकया एनं विस्मापयति। [ सूत्र में ] भय शब्द से हेत्वर्थसामान्य से स्मयति का अर्थ कहा जाता है क्योंकि मुख्य भय अर्थ में 'स्मि' धातु वर्तमान नहीं होती है। [ 'स्मि' धातु का अर्थ भय नहीं है किन्तु 'भीस्म्योर्हेतुभये' इस सूत्र में 'भी' और 'स्मि' दोनों के लिए 'हेतुभय' अर्थ निर्दिष्ट है। अतः दोनों धातुओं का समान अर्थ = चित्तविकार लेना चाहिए। इसी सादृश्य से निर्वाह करना चाहिए। अतः प्रत्युदाहरण में प्रवृत्ति नहीं होती है। ]॥ ५७॥

'√ सृज विसर्गे' 'दृशिर् प्रेक्षणे' इन धातुओं को झलादि अकित् प्रत्यय परे रहते 'अम्' आगम होता है। उदा०—स्रष्टा। स्रष्टुम्। स्रष्टव्यम्। [ सृज् + तृच्, अम् आगम मित् होने से अन्त्य अच् से बाद में ही होता है—

१. सिचि वृद्धिरमि कृते भवतीति काशिकापाठः।

झलीति किम् ? सर्जनम् । दर्शनम् । अकितीति किम् ? सृष्टः । दृष्टः ।

धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिह न भवति—रज्जुसृड्भ्याम्, देवदृग्भ्यामिति ॥

## २४९९. अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ ५९ ॥ ( २४०२ )

'उपदेशे' इति वर्तते, 'झल्यमकिति' इति च । उपदेशेऽनुदात्तस्य धातोर्ऋकारोपधस्य झलादावकिति

**न्यासः**

विहितं तक्रदानं बाधकं भवति, तथेहापि युक्ताऽमागमेन गुणस्य बाधा । अस्राक्षीत् अद्राक्षीदिति । 'आदेशप्रत्यययोः' इति षत्वम्, 'अस्तिसिचोऽपृक्ते इतीट्,' 'वदव्रजहलन्तस्याचः' इति वृद्धिः 'षढोः कः सि' इति कत्वम् । वृद्धिरमि कृते भवतीति । अथ प्रागेव वृद्धिः कस्मान्न भवति ? इत्याह–पूर्वन्तु बाध्यत इति । यथैव हि विशेषविहितत्वादमागमेन सामान्यविहितो गुणो बाध्यते, तथा वृद्धिरपि सामान्यविहितैवामागमे कृते पश्चात् पुनःप्रसङ्गविज्ञानात् सिद्धमिति सापि भवति । गुणस्त्वमागमे कृते न भवति; निमित्तस्य विहितत्वात् । न ह्यमागमे कृत उपधा लघ्वी गुणभाविन्युपपद्यते ।

अथेह कस्मान्न भवति –रज्जुसृड्भ्याम्, देवदृग्भ्यामिति; सत्यपि धात्वधिकारे 'क्विबन्ता धातुत्वं न जहति' इति भ्याम्प्रत्ययमकितमाश्रित्यामागमः प्राप्नोति ? इत्यत आह–धातोरित्यादि ॥ ५८ ॥

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ उपदेश इति वर्त्तत इति । अनुदात्तस्य विशेषणार्थम् । तेन त्रप्तेत्यत्र यद्यपि तृनि विहिते नित्स्वरेण धातोरुदात्तत्वम्, तथाप्युपदेशावस्थायामनुदात्त इत्यमागमः सिद्धो भवति; इह च

**पदमञ्जरी**

नाप्राप्त्यभावात् । साप्यमि कृते भवति । तस्यैव व्याख्या । पूर्वं तु बाध्यत इति । अमागमेन; नित्यत्वात्तस्य । रज्जुसृड्भ्याम्, देवदृग्भ्यामिति । उभयत्र व्रश्चादिसूत्रेण षत्वे जश्त्वमिति केचित् । अन्ये तु 'क्विन्प्रत्ययस्य कुः' इति कुत्वमिच्छन्ति । ननु न क्विन्नन्तावेतौ, किं तर्हि ? क्विबन्तौ ? नैष दोषः; यस्माद्धातोः क्वचित्क्विन् विहितः, तस्य प्रत्ययान्तरे कुत्वं भवति, 'क्विनः कुः' इति वक्तव्ये प्रत्ययग्रहणादिति वक्ष्यते । पदान्तस्येत्यधिकारात् स्रष्टा, द्रष्टेत्यत्र न भवति, कुत्वविधावेव तस्य निर्णयं वक्ष्यामः ॥ ५८ ॥

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ उपदेश इति वर्त्तत इति । अनुदात्तस्य विशेषणार्थम्, तेन द्रप्तेत्यत्र तृनि विहिते यद्यपि नित्स्वरेण धातोरुदात्तत्वं भवति, तथापि उपदेशेऽनुदात्त इत्यम्भवति । वर्ढेत्यत्र तृचि कृते

**भावबोधिनी**

सृ+अ+ज्+तृ, यण् स्रज्+तृ, "व्रश्चभ्रस्ज०" सूत्र से ज् का ष्, ष्टुत्व, विभक्तिसम्बन्धो कार्य करने पर स्रष्टा । सृज्+तुमुन्, सृज्+तव्यत् में भी पूर्वोक्त सभी कार्य होते हैं ] द्रष्टा, द्रष्टुम्, द्रष्टव्यम् । [ दृश्+तृच्, अम् आगम द अ+श्+तृ, यण्, षत्व, ष्टुत्व, विभक्तिसम्बन्धी कार्य—द्रष्टा । दृश्+तुमुन्, दृश्+तव्यत् में भी यही होता है । ] यह अम् आगम लघूपध गुण का अपवाद है । अस्राक्षीत् । अद्राक्षीत् । अम् कर देने पर सिच् परे वृद्धि होती है किन्तु अम् आगम से पहले वृद्धि का बाध होता हैं । [ असृज्+लुङ्=तिप्, च्लि, सिच्, असृज्+स्+ति, इलोप ईट् आगम, अम् आगम, यण्, वृद्धि,—अस्राज्+सीत् षत्व, कत्व, क्षत्व—अस्राक्षीत् । इसी प्रकार अद्राक्षीत् भी बनता है । ]

झलादि प्रत्यय परे रहते—इसका क्या फल है ? सर्जनम् । दर्शनम् । [ सृज्+ल्युट्—यु=अन, ऋ का गुण, रपर । दृश्+ल्युट्=यु=अन, गुण, रपर । झलादि परे नहीं है, अतः अम् आगम नहीं होता है । ] अकित् परे—इसका क्या फल है ? सृष्टः, दृष्टः । [ सृज्+क्त, दृश्+क्त, कित् परे है, अतः 'अम्' आगम नहीं होता है । ज् और श् का ष, ष्टुत्व ]

धातु के स्वरूप के ग्रहण में उस प्रत्यय के परे रहते काय का विज्ञान होने से यहाँ [ अम् ] नहीं होता है—रज्जुसृड्भ्याम् । देवदृग्भ्याम् । [ यहाँ नामधातु बना दिया गया है । शुद्ध धातु का ग्रहण नहीं है अतः अम् आगम नहीं होता है । ] ॥ ५८ ॥

**प्रत्यये परतोऽन्यतरस्याममागमो भवति। त्रप्ता, तर्पिता, तर्प्ता। द्रप्ता, दर्पिता, दर्प्ता। 'तृप प्रीणने' ( धा० पा० ११९६ ), 'दृप हर्षणमोचनयोः' ( धा० पा० ११९७ )—इत्येतौ रधादी धातू, तयोरिडागमः 'रधादिभ्यश्च' ( ७.२.४५ ) इति विकल्प्यते। अनुदात्तोपदेशः पुनरनर्थ एव।**

**अनुदात्तस्येति किम्? वर्ढा, वर्ढुम्, वर्ढव्यम्। 'वृहू उद्यमने' ( धा० पा० १३४८ ) इत्ययमुदात्तोपदेश ऊदित्वाच्चास्येड् विकल्प्यते। ऋदुपधस्येति किम्? भेत्ता। छेत्ता।**

**न्यासः**

वर्ढेति यद्यपि तृचि कृते धातुरनुदात्तो भवति, तथाप्युपदेशावस्थायान्नायमनुदात्त इत्यमागमो न प्रवर्त्तते; किमर्थम् पुनरनुदात्तस्येत्युच्यते, अनिट इत्येव नोच्येत, एवं हि लघु सूत्रं भवति? इत्याह—**तृप प्रीणन इत्यादि।** तृप्यतिदृप्यत्योः 'रधादिभ्यश्च' इतीट् विकल्प्यते, ततो यद्यनिट एवोच्येत, तदा पाक्षिकेणेटा नैतावनिटाविति तयोरमागमो न स्यात्। अथ पाक्षिकेणेड्भावेन तयोरनिट्त्वादमागमो भविति, तथा च सति 'वृहू उद्यमने' इत्यस्यापि स्यात्, अयमप्यूदित्वात् पाक्षिकेड्भावादनिड् भवति। तस्मान्न शक्यतेऽनिट इति वक्तुमित्यभिप्रायः। यदि तर्ह्यनयोरिड् विकल्पयते, तदानुदात्तोपदेशः किमर्थः? स ह्येवमर्थः क्रियते,—'अनुदात्तात्' इतीट्प्रतिषेधो यथा स्यात्। यदि तर्ह्यनयोरिड् विकल्प्यते, किं तेन? इत्यत आह—**अनुदात्तोपदेशः पुनरनर्थ एवेति। वर्ढेति।** 'हो ढः', 'ष्टुना ष्टुः', 'ढो ढे लोपः'। यदाप्युदात्तोपदेशस्तदेडत्र प्राप्नोति? इत्याह—**ऊदित्वादित्यादि।**

**पदमञ्जरी**

यद्यपि शेषनिघातेन धातुरनुदात्तो भवति, तथाप्युपदेशे नायमनुदात्त इत्यम्न भवति। किमर्थं पुनरनुदात्तस्येत्युच्यते, नानिट इत्येवोच्येत, एवं हि सति लघु सूत्रं भवति? तत्राह-**तृप प्रीणन इत्यादि। इडागमो रधादिभ्यश्चेत्यनेन विकल्पित**[1] इति। ततश्च पाक्षिकेणेटा सेट्त्वात्तयोर्न स्यात्। अथ पाक्षिकेणेडभावेन तयोरपि स्यात्, वर्ढा,

**भावबोधिनी**

'उपदेशे' इसकी और 'झलि अम् अकिति' इनकी अनुवृत्ति होती है। उपदेश में अनुदात्त ऋकारोपध धातु को झलादि अकित् प्रत्यय परे रहते विकल्प से 'अम्' आगम होता है। उदा०—त्रप्ता, तर्पिता, तर्प्ता। द्रप्ता, दर्पिता, दर्प्ता। √तृप् प्रीणने' '√दृप् हर्षणमोचनयोः' ये दोनों रधादि धातुयें हैं, इनका इट् आगम 'रधादिभ्यश्च' सूत्र से विकल्प से होता है। [ दो विकल्पों के कारण तीन तीन रूप बनते हैं। ] अनुदात्तोपदेश अम् आगम के लिए ही है। [ तृप् + लुट् = ति, तास्, विकल्प से तृप् + तास् + ति, ति का 'डा' आदेश, टि = आस् का लोप तृप् त् आ, अम् आगम, यण्, त्रप्ता। इट् करने पर झलादि परे न रहने से अम् नहीं होता है तृप् इता गुण, रपर—तर्पिता। इट् और अम् दोनों न होने पर तृप् ता, गुण, रपर तर्प्ता। इसी प्रकार दृप् + ता, अम्, अण्—द्रप्ता, इट् गुण रपर दर्पिता। इट्, अम् न होने पर दर्प्ता। ]

अनुदात्त धातु का—इसका फल है—वर्ढा, वर्ढुम्, वर्ढव्यम्। '√वृहू उद्यमने' यह उदात्तोपदेश धातु है ओर ऊकार इत् होने से [ "स्वरतिसूतिसूयतिधूञूदितो वा" सूत्र से ] इट् विकल्प से होता है। [ वृह् + तृच्, इट् के अभावपक्ष में झलादि होने पर भी अम् आगम नहीं है, 'होढः' से ह् का ढ, 'झषस्तथोर्धोऽधः" से त का ध, ष्टुत्व वृढ् ढ् ऋ, 'ढो ढे लोपः' से प्रथम ढ् का लोप, ऋ का गुण, रपर, सु प्रत्यय परे विभक्तिसम्बन्धी कार्य—वर्ढा। वृह् + तुमुन्, वृह् + तव्यम् इनमे भी पूर्वोक्त सब प्रक्रिया होती है। ]

ऋकारोपध को अम् होता है—इसका क्या फल है? भेत्ता, छेत्ता। [ यहाँ √भिदिर् √ छिदिर् ऋकारोपध नहीं है। अतः अम् नहीं होता है। ]

१. तयोरिडागमो 'रधादिभ्यश्च' इति विकल्प्यते'—इति काशिकापाठः।

झलीत्येव—तर्पणम् । दर्पणम् ।

अकितीत्येव—तृप्तः । दृप्तः ॥

२५००. शीर्षंश्छन्दसि ॥ ६० ॥ ( ३५१४ )

'शीर्षन्' इति शब्दान्तरं शिरःशब्देन समानार्थं छन्दसि विषये निपात्यते, न पुनरयमादेशः शिरःशब्दस्य । सोऽपि हि छन्दसि प्रयुज्यत एव । शीर्ष्णा हि तत्र सोमं क्रीतं हरन्ति । यत्ते शीर्ष्णो दौर्भाग्यम् ।

छन्दसीति किम् ? शिरः ॥

**न्यासः**

'स्वरतिसूति' इत्यादिनास्योदित्त्वादिड् विकल्प्यते, ततस्तेन सत्युदात्तत्वे पक्ष इडभावो न भवति । चकारोऽयमनुकर्षणार्थः । तेनोत्तरत्र तस्यानुवृत्तिर्न भवति ॥ ५९ ॥

शीर्षंश्छन्दसि ॥ किं पुनः कारणमादेशो नेष्यते ? इत्याह—सोऽपि हीत्यादि । यतः शिरःशब्दोऽपि च्छन्दसि प्रयुज्यते, ततो नायमादेशः प्रयुज्यते । आदेशे हि सति शिरःशब्दस्य च्छन्दसि विषये प्रयोगो न स्यात्; निवृत्तिधर्मत्वात् स्थानिनः । यद्यन्यतरस्यांग्रहणमिहानुवर्त्तते, तदादेशेऽप्यदोषः । शीर्षा इति । 'नोपधायाः' इति दीर्घः । क्वचित् शीर्ष्णेति पठ्यते, तत् तृतीयान्तं द्रष्टव्यम् । 'अल्लोपोऽनः' इत्यकारलोपः । शीर्ष्ण इति । षष्ठ्येकवचनान्तमेतत् ॥ ६० ॥

**पदमञ्जरी**

वर्द्धमित्यत्रापि स्यादिति भावः । यदि तर्हि तयोः 'रधादिभ्यश्च' इतीड्विकल्प्यते, अनुदात्तोपदेशः पुनस्तयोः किमर्थः ? इत्याह—अनुदात्तोपदेशः पुनरमर्थ एवेति ॥ ५९ ॥

शीर्षंश्छन्दसि ॥ न पुनरयमादेशः शिरःशब्दस्येति । यद्यपि सूत्रे शिरस इति स्थानी नोपात्तः, तथापि समानार्थत्वादादेशेनाक्षिप्यते, यथा-शिवादिषु विश्रवणरवणशब्दाभ्यां विश्रवःशब्द इत्यादेशत्वशङ्का । सोऽपि हि छन्दसि प्रयुज्यत इति । आदेशपक्षे तु तेन निवर्तितत्वाच्छिरःशब्दो न प्रयुज्येतेति भावः । ननु च 'अन्यतरस्याम्' इत्यनुवृत्तेस्तस्यापि प्रयोगो भविष्यति, सत्यम्; उत्तरत्रापि विकल्पानुवृत्तिः शङ्क्येतेति प्रकृत्यन्तरपक्ष एवाश्रितः ॥ ६० ॥

**भावबोधिनी**

झल् परे रहते ही होता है—तर्पणम् । दर्पणम् । [ तृप् + ल्युट् = अन, दृप् + ल्युट् = अन में झल् परे न रहने से अम् नहीं होता है । ऋ का गुण रपर होता है । णत्व करने पर रूप बनते हैं । ]

अकित् प्रत्यय परे ही—तृप्तः । दृप्तः । [ तृप् + क्त, दृप् + क्त में कित् प्रत्यय परे होने से अम् नहीं होता है । ] ॥ ५९ ॥

'शीर्षन्' यह एक दूसरा शब्द जो शिरः शब्द का समानार्थक है, वेदविषय में निपातित होता है, परन्तु यह शिरः शब्द का आदेश नहीं है । क्योंकि शिरः भी वेद में प्रयुक्त होता है ही । उदा०—'शीर्ष्णा हि तत्र सोमं क्रीतं हरन्ति ।' "यत्ते शीर्ष्णो दौर्भाग्यम् । [ शिरस् + टा, शीर्षन् निपातन—शीर्षन् + आ, 'अल्लोपोऽनः' सूत्र से अकारलोप, ष्टुत्व । शिरस् + ङस् = अ, शीर्षन् आदेश, अलोप, ष्टुत्व विसर्ग ]

वेद में—इसका क्या फल है ? शिरः । [ यहाँ लौकिक प्रयोग में शीर्षन् निपातन नहीं होता है । ] ॥ ६० ॥

## २५०१. ये च तद्धिते ॥ ६१ ॥ ( १६६७ )

'शीर्षन्' इति वर्तते। आदेशोऽयमिष्यते, स कथम्? 'तद्धिते' इति हि परं निमित्तमुपादीयते, स तदनुरूपां प्रकृतिं शिरःशब्दमाक्षिपति। यकारादौ तद्धिते परतः शिरःशब्दस्य शीर्षन्नादेशो भवति। शीर्षण्यो हि मुख्यो भवति। शीर्षण्यः स्वरः। शिरसि भव इति 'शरीरावयवाच्च' ( ४.३.५५ ) इति यत्, 'ये चाभावकर्मणोः' ( ६.४.१३८ ) इति प्रकृतिभावः।

तद्धित इति किम्? शिर इच्छति शिरस्यति ॥

❀ वा केशेषु ❀ ( म० भा० ६.१.६१ वा० २ )। शिरसः शीर्षन्नादेशो वक्तव्यः। शीर्षण्याः केशाः

**न्यासः**

**ये च तद्धिते ॥** यदि यकारादावपि तद्धिते प्रकृत्यन्तरं विज्ञायते, ततो यदि शिरःशब्दात् यकारादिस्तद्धित उत्पद्यते, तदा तस्य श्रवणमापद्येत, न चेष्यते, इत्यत आह—**आदेशोऽयमिष्यत इति**। स्थानिनोऽनुपादानादिहाप्यादेशो न युज्यत इत्यभिप्रायेणाह—**स कथमिति**। **तद्धित इति हीत्यादि**। यस्मादिह यकारादिस्तद्धितः परनिमित्तमुपादीयते, न चानुपादाय प्रकृतिं तद्धित उत्पद्यते, न च शीर्षञ्शब्द एव प्रकृतिर्युक्ता; तस्य भाषायामसम्भवात्। स हि च्छन्दसि निपातितः, भाषायाञ्चेदम्। तस्मात् प्रकृत्यन्तरादुत्पन्ने यकारादौ तद्धिते विधीयमाने या तेन प्रकृतिराक्षिप्ता तस्या आदेशोऽयं विज्ञायते। आदेशोऽपि हि विज्ञायमानो न यस्य कस्यचिद्विज्ञायते, अपि तु शिरःशब्दस्यैव। यतः स तद्धितस्तदनुरूपां तस्यादेशस्य शब्दतश्चार्थतश्चान्तरतमां प्रकृतिं शिरःशब्दमेवाक्षिपति। **शीर्षण्य इति**। अट्कुप्वादिना णत्वम्।

**शिरस्यतीति**। 'सुप आत्मनः क्यच्'।

**वा केशेष्विति**। केशेष्वभिधेयेषु शिरःशब्दस्य शीर्षन्नित्यादेशो वा वक्तव्योऽव्याख्येय इत्यर्थः। तत्रेदं

**पदमञ्जरी**

**ये च तद्धिते ॥ छन्दसि पूर्वेणैव सिद्धिमिति**। भाषार्थमिदम्, यदि पूर्वसूत्रवदिहापि शीर्षन्निति प्रकृत्यन्तरं विज्ञायेत तदा। यदा शिरःशब्दाद्यकारादिस्तद्धित उत्पद्यते तदा तस्य श्रवणं प्रसज्येतेति मत्वाऽऽह—**आदेशोऽयमिष्यत इति। स कथमिति**। स आदेशः कथं लभ्यते, न कथञ्चित्, स्थानिनोऽनुपादानात् पूर्वसूत्रवदिति प्रश्नः। तन्निमित्तमनुरूपां शब्दतश्चार्थतश्चान्तरतमां प्रकृतिं शिरःशब्दमेवाक्षिपति। **शिरस्यतीति**। 'सुप आत्मनः क्यच्'।

**वा केशेष्विति**। सूत्रेण नित्ये प्राप्ते विकल्पितः। अत्र शिरस्यशब्दस्य केशैकविषयत्वात्तत्प्रयोग केशशब्दो

**भावबोधिनी**

'शीर्षन्' की अनुवृत्ति होती है। यह आदेश इष्ट है, वह कैसे होता है? चूंकि 'तद्धिते' इससे तद्धित को परनिमित्त के रूप में लिया गया है, अतः यह आदेश अपने अनुरूप प्रकृति शिरः शब्द का आक्षेप कर लेता है। यकारादि तद्धित प्रत्यय परे रहते 'शिरः' शब्द का 'शीर्षन्' यह आदेश होता है। क्योंकि शीर्षण्य मुख्य होता है। उदा०—शीर्षण्यः स्वरः। 'शिरसि भवः' इस अर्थ में 'शरीरावयवाच्च' ( पा० सू० ३।३।५५ ) सूत्र से यत्=य प्रत्यय होता है। [ प्रस्तुतसूत्र से शीर्षन्+य, अलोप प्राप्त है किन्तु ] "ये चाभावकर्मणोः" ( पा० सू० ६।४।१६८ ) से प्रकृतिभाव होता है। [ न् का णत्व—शीर्षण्यः=शिर में उत्पन्न=उच्चारित होने वाला स्वर। ]

तद्धित परे—इसका क्या फल है? शिर इच्छति—इस विग्रह में—शिरस्यति। [ यहाँ "सुप आत्मनः क्यच्" सूत्र से क्यच्=य प्रत्यय होता है किन्तु वह तद्धित नहीं है अतः 'शीर्षन्' आदेश नहीं होता है। नामधातु का रूप है। ]

❀ केश अर्थ में विकल्प से होता है। ❀ शिरस् का शीर्षन् आदेश विकल्प से कहना चाहिये। उदा०—

शिरस्याः केशाः ॥

## २५०२. अचि शीर्षः ॥ ६२ ॥ ( १६६७ )

**अजादौ तद्धिते शिरसः शीर्षशब्द आदेशो भवति । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः[1] । 'बाह्वादिभ्यश्च' ( ४.१.९६ )—इति इञ् । स्थूलशिरस इदं स्थौलशीर्षम् । शीर्षन्भावे हि 'अन्' ( ६.४.१६७ ) इति प्रकृतिभावः स्यात् ।**

**हास्तिशीर्षिशब्दात् स्त्रियामिञः 'अणिञोरनार्षयोः' ( ४.१.७८ ) ष्यङादेशे कृते शीर्षस्य शिरःशब्दग्रहणेन ग्रहणात् शीर्षन्नादेशः प्राप्नोति, तत्र प्रकृतिभावे सति हास्तिशीर्षण्येत्यनिष्टं रूपं स्यात्, इष्यते तु हास्तिशीर्ष्येति, तत्कथम् ? कर्त्तव्योऽत्र यत्नः । अणिञन्ताद् वा परः प्रत्ययः ष्यङाश्रयितव्यः, तत्र**

**न्यासः**

व्याख्यानम्—अन्यतरस्यांग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते । तेन शिरसः केशेषु वा शीर्षन्नादेशो भविष्यतीति ॥ ६१ ॥

**अचि शीर्षः ॥ स्थौलशीर्षमिति ।** 'तस्येदम्' इत्यण् । किमर्थं पुनरादेशान्तरं विधीयते, न प्रकृत एव शीर्षन्नादेशो विधीयताम् ? तत्रापि 'नस्तद्धिते' इति टिलोपे कृते सिध्यतेवेष्टमित्याह-**शीर्षन्भाव इत्यादि ।**

**ष्यङादेशे कृत इत्यादि ।** 'अणिञोरनार्षयोः' इत्यादिना, तस्य शीर्षस्य शिरःशब्दग्रहणेन ग्रहणादिति स्थानिवद्भावेन शीर्षन्नादेशः । **प्राप्नोतीति ।** 'ये च तद्धिते' इत्यनेनैव । **तत्रेत्यादि ।** प्रकृतिभावप्राप्तिस्तु 'ये चाभावकर्मणोः' इत्यनेन । **हास्तिशीर्षण्या, हास्तिशीर्ष्येति ।** 'यङश्चाप्' इति चाप् । तत् कथमिति हास्तिशीर्ष्येति । कथमिष्टं सिध्यतीत्यर्थः । **कर्त्तव्योऽत्र यत्न इति ।** स पुनर्यत्नः-शिरस्याः केशा इत्यस्य सिद्धये य एव

**पदमञ्जरी**

न प्रयोक्तव्यः, शीर्षण्यशब्दस्तु सामान्यवाचीति तत्प्रयोगे विशेषावगमाय केशशब्दः प्रयोक्तव्यः ॥ ६१ ॥

**अचि शीर्षः ॥ शीर्षन्भावे हि 'अन्' इति प्रकृतिभावः स्यादिति ।** अतोऽकारान्तमादेशान्तरं विहितमिति भावः ।

**कर्त्तव्योऽत्र यत्न इति ।** तत्रायं यत्नः—शीर्षन्नादेशसन्निपातकृतः ष्यङादेशस्तद्विघातस्य निमित्तं न

**भावबोधिनी**

शीर्षण्याः केशाः, शिरस्याः केशाः । [ भवार्थक यत् प्रत्यय परे शीर्षन् आदेश होने और न होने पर दो रूप बनते हैं । ] ॥ ६१ ॥

अजादि तद्धित प्रत्यय परे रहते शिरस् का 'शीर्ष' आदेश होता है । उदा०—हस्तिशिरसः अपत्यम्—इस विग्रह में—हास्तिशीर्षिः । "बाह्वादिभ्यश्च" ( पा० सू० ४।१।९६ ) सूत्र से इञ प्रत्यय [ हस्तिशिरस् + इञ्=इ आदिवृद्धि, शिरस् का शीर्ष आदेश, भसंज्ञा, अलोप --हास्तिशीर्षिः । ] स्थूलशिरसः इदम्—इस अर्थ में—स्थौलशीर्षम । [ "तस्येदम्" सूत्र से अण् प्रत्यय, आदिवृद्धि, 'शीर्ष' आदेश, भसंज्ञा, अलोप ] यदि शीर्षन् आदेश किया जाता तो "अन्" ( पा० सू० ६।४।१६४ ) से प्रकृतिभाव होता । [ फलतः इष्ट रूप नहीं बनते । अतः 'शीर्ष' यह अकारान्त आदेश किया गया । ]

हास्तिशीर्षि—शब्द से स्त्री अर्थ में इञ् का 'अणिञोरनार्षयोः' ( पा० सू० ४।१।७८ ) से ष्यङ् (=य) आदेश करने पर 'शीर्ष' शब्द का शिरः शब्द से ग्रहण होने से [ "ये च तद्धिते" इस पूर्वोक्त सूत्र द्वारा ] शीर्षन् आदेश प्राप्त होता है । यहाँ प्रकृतिभाव कर देने पर हास्तिशीर्षण्या—यह अनिष्ट रूप होने लगेगा, जब कि इष्ट तो है—हास्तिशीर्ष्या ।

---

१. पैलुशीर्षिः—इत्यधिकं पुस्तकान्तरे । भाष्यसम्मतोऽयं पाठः ।

**यस्येतिलोपस्य स्थानिवद्भावाद् व्यवधानम् ॥**

**२५०३. पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥ ६३ ॥ ( २२८ )**

**पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृत्, शकृत्, उदक, आसन—इत्येतेषां शब्दानां स्थाने शस्प्रभृतिप्रत्ययेषु परतः—पद्, दत्, नस्, मास्, हृत्, निश्, असन्, यूषन्, दोषन्, यकन्, शकन्, उदन्, आसन्—इत्येते आदेशा यथासंख्यं भवन्ति। पद्—निपदश्चतुरो जहि। पदा वर्त्तय गोदुहम्।**

**न्यासः**

प्रकृतः स एव वेदितव्यः। व्यवस्थितविभाषयैव हि शीर्षशब्दस्य शिरःशब्देन ग्रहणाच्च शीर्षन्नादेशो न भविष्यतीति; तेन हास्तिशीर्ष्येत्येवं भवति, न हास्तिशीर्षण्येति। **अणिञन्ताद्वेत्यादि**। 'अणिञोरनार्षयोः' इत्यत्र सूत्रे द्वौ पक्षौ—अणिञोः स्थान आदेशः ष्यङ् विधीयत इत्येकः पक्षः, अणिञन्तात् परः ष्यङ्प्रत्ययो भवतीति द्वितीयः। तत्रादेशपक्षेऽयं दोष आपततीत्यणिञन्तात् परः ष्यङाश्रयितव्य इति प्रत्ययपक्ष आश्रयितव्य इत्यर्थः। आदेशपक्षे 'यत्नो वा कर्त्तव्यः' इति विकल्पार्थो वाशब्दः। अथ तत्रापि प्रत्ययपक्ष आश्रीयमाणे शीर्षस्य शीर्षन्नादेशः कस्मान्न भवति? इत्याह—**तत्रेत्यादि**। यदा प्रत्ययः ष्यङ् तदा तस्मिन्परतो योऽसाविञः 'यस्येति च' इति लोपस्तस्य पूर्वविधौ कर्त्तव्ये स्थानिवद्भावाद् व्यवधानम्। अतो यकारादेः शीर्षन्नादेशनिमित्तस्य तद्धितस्य व्यवधानादादेशो न प्राप्नोतीति भावः॥ ६२॥

**पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥** इहापि शस्प्रभृतयो निमित्तत्वेनोपादीयन्ते, ते च प्रकृत्या विना नोपपद्यन्त इति भावः। तेषु प्रकृत्यन्तराद्विहितेषु विधीयमानाः पदादय आदेशा विज्ञायन्ते। न च स्थानिनोऽनुपादानादनियमेनादेशप्रसङ्गः; यतस्तेष्वादिश्यमानेषु शस्प्रभृतयोऽनुरूपामेव पादादिकां स्वार्थिकीं

**पदमञ्जरी**

भवतीति। **अणिञन्ताद्वा पर इति**। 'अणिञोरनार्षयोः' इत्यादेशपक्षप्रहाणेन प्रत्ययपक्ष आश्रयणीयः, आदेशपक्ष एव वा स्थित्वा यत्नः कर्त्तव्य इति वाशब्दार्थः॥ ६२॥

**पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥** इहापि 'शस्प्रभृतिषु' इति निमित्तो-

**भावबोधिनी**

तब कैसे होगा? इस विषय में यत्न करना है, अणन्त और इञन्त से परे ष्यङ् प्रत्यय का आश्रयण करना चाहिए। इसमें 'यस्येति च' सूत्र से किये गये इलोप का स्थानिवद्भाव होने से [ य प्रत्यय से पूर्व में नहीं है अपितु ] व्यवधान है। [ अतः शीर्षन् आदेश नहीं होता है। ]

**विमर्श**—हास्तिशीर्षिः—इसका स्त्रीलिङ्ग करने के लिए 'अणिञोरनार्षयोः' इस सूत्र से ष्यङ् करना है। इसमें यदि इञ् प्रत्यय का आदेश ष्यङ् है तो हास्तिशीर्ष+ष्यङ्=य में यकारादि तद्धित प्रत्यय पर रहते 'शीर्ष' को स्थानिवद्भावेन शिरस् मानकर "ये च तद्धिते" सूत्र से शीर्षन् आदेश प्रसक्त होगा और "यङश्चाप्" सूत्र से चाप् प्रत्यय करने पर—हास्तिशीर्षण्या ऐसा अनिष्ट रूप होने लगेगा। इस दोष की निवृत्ति के लिए भाष्य में आदेशपक्ष न मान ष्यङ् को प्रत्यय माना गया है, इञन्त से ष्यङ् प्रत्यय होता है—हास्तिशीर्षि+य, अब "यस्येतिच" से इलोप होता है, यह लोप पूर्वविधि ( शीर्ष=शिरस् का शीर्षन् आदेश ) करने में स्थानिवत् हो जाता है अतः इ का व्यवधान हो जाने से यकारादि प्रत्यय अव्यवहित परे नहीं मिलता है, शीर्षन् आदेश का प्रसङ्ग नहीं है। इस प्रकार कोई समस्या नहीं रह जाती है॥ ६२॥

पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृत् शकृत्, उदक और आसन—इन तेरह शब्दों के स्थान पर शस् आदि प्रत्यय परे रहते क्रमशः—पद्, दत्, नस्, मास्, हृत्, निश्, असन्, यूषन्, दोषन्,

'पादस्य पत्' । दत्—'या दतो धावति तस्यै श्यावदन्' ( तै० सं० २.५.१.७ ) । नस्—सूकरस्त्वखनन्नसा' ( अथर्व० २.२७.२ ) । मास्—'मासि त्वा पश्यामि चक्षुषा' ( तै० सं० २.५.६.६ ) । हृद्—'हृदा पूतं मनसा जातवेदो' ( अथर्व० ४.३९ ) । निश्—अमावास्यायां निशि ( वि० २.१.८ ) यजेत' । असन्—'आसिक्तोऽस्नावरोहति' ( मै० सं० ३.१५.८ ) । यूषन्—'या पात्राणि यूष्ण आसेचनानि' ( ऋ० १.१६२.१३ ) । दोषन्—'यत्ते दोष्णो ( मै० सं० ३.१०.३ ) दौर्भाग्यम्' । यकन्—यक्नोऽवद्यति । शकन्—शक्नोऽवद्यति ( अथर्व १२.४.४ ) । उदन्—'उद्नो दिव्यस्य नोदेहि' ( तै० सं० २.४.८.२ ) । आसन्—'आसनि ( ऋ० १.७५.१ ) किं लभे मधूनि' ।

शस्प्रभृतिष्विति किम् ? पादौ ते प्रतिपीड्यौ, नासिके ते कृशे ।

**न्यासः**

प्रकृतिमाक्षिपन्तीत्याह–पाददन्तनासिकेत्यादि । पदित्याद्युदाहरणेषु पदो दत इति शसन्ते । यूष्णः, दोष्णः, यक्नः, शक्न उदान् इति षष्ठ्येकवचनान्तानि । 'अल्लोपोऽनः' इत्यकारलोपः । मासि, निशि, आसनीति सप्तम्येकवचनान्तानि । आसनीत्यत्र 'विभाषा ङिश्योः' इति पक्षेऽकारलोपो न भवति । शेषाणि तृतीयैकवचनान्तानि । पादौ, नासिके इति प्रथमाद्विवचनान्ते ।

**पदमञ्जरी**

पादानादनुरूपाः प्रकृतयः आक्षिप्यन्ते, पदादयश्चादेशा विज्ञायन्ते इत्याह—पाददन्तेत्यादि । अन्ते आसनशब्दः पठ्यते, आस्यशब्दस्तु पठितव्यः, "आस्नो वृकस्य वर्त्तिकामभीके, ग्रीवायां बद्धो अपि कक्ष आसनि, आस्नो यत्सीसमुब्भ्रतं वृकस्ये"त्यादौ ह्यास्यार्थोऽवगम्यते । आसनीति । 'विभाषा ङिश्योः' इत्यल्लोपाभावपक्षे रूपम् । अपरे पुनरविशेषेणेच्छन्तीति । भाष्ये तु छान्दसमेवैतदिति स्थितम् ।

**भावबोधिनी**

यकन्, शकन्, उदन् और आसन्—ये तेरह आदेश होते हैं । उदा०—( १ ) पद्—निपदः चतुरो जहि । [ निपाद + शस् = अस्, पद् आदेश ] पदा वर्त्तय गोदुहम् । [ पाद + टा = आ ] पाद का पद् आदेश । ( २ ) दत्—या दतो धावति तस्यै श्यावदन् । [ दन्त + शस् = अस् दत् आदेश । ] ( ३ ) नस्—सूकरः त्वखनत् नसा । [ नासिका + टा = आ, नस् आदेश ] ( ४ ) मास्—मासि त्वा पश्यामि चक्षुषा । [ मास + ङि = इ, मास् आदेश ] ( ५ ) हृद्—हृदा पूतेन मनसा जातवेदसम् । [ हृदय + टा = आ, हृद् आदेश ] ( ६ ) निश्—अमावास्यायां निशि यजेत । [ निशा + ङि = इ, निश् आदेश ] ( ७ ) असन्—असिक्तोऽस्नावरोहति । [ असन + टा = आ, असन् आदेश 'अल्लोपोऽनः' अलोप—अस्ना ] ( ८ ) यूषन्—या पात्राणि यूष्ण आसेचनानि । [ यूष + शस् = अस्, यूषन् आदेश, अलोप ष्टुत्व—यूष्णः । ] ( ९ ) दोषन्—यत्ते दोष्णो दौर्भाग्यम् । [ दोष + ङस् = अस्, दोषन् आदेश "अलोपोऽनः" से अलोप, ष्टुत्व ] ( १० ) यकन्—यक्नोऽवद्यति । [ यकृत् + शस् = अस्, यकन् आदेश, अलोप ] ( ११ ) शकन्—शक्नोऽवद्यति । [ शकृत् + शस् = अस्, शकन् आदेश, अलोप ] ( १२ ) उदन्—उद्नो दिव्यस्य नावा ते । [ उदक + शस् = अस्, उदन् आदेश, अलोप ] ( १३ ) आसन्—आसनि किं लभे मधूनि । [ आसन + ङि = इ, आसन् आदेश । ]

**विमर्श**—सिद्धान्तकौमुदी में आस्य का आसन् आदेश लिख कर—काशिका के आसन का आसन् आदेश—इसको प्रामादिक माना गया है । और तत्त्वबोधिनीकार ने 'आस्नो वृकस्य वर्त्तिकाम्' इसमें 'मुखात्' यही अर्थ माना है । अतः दोनों के व्याख्यान का औचित्य विचारणीय है । भाष्य में मूलशब्दों के विषय में कुछ विशेष उल्लेख नहीं है । यहाँ और "ऊडिदम्" ६।१।१७१ की पदमंजरी में "आस्यशब्दस्यासनादेशः" लिखा है ।

( अनु० ) शस् आदि प्रत्यय परे रहते—इसका क्या फल है ? पादौ ते प्रतिपीड्यौ । नासिके ते कृशे ।

केचिदत्र छन्दसीत्यनुवर्त्तयन्ति। अपरे पुनरविशेषेणेच्छन्ति। तथा हि—भाषायामपि पदादयः शब्दाः प्रयुज्यन्ते।

'व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः॥' इत्येवमादयः।

अन्यतरस्यामित्येतदनुवर्तयन्ति, तेन पादादयोऽपि प्रयुज्यन्ते।

शस्प्रभृतिष्विति प्रकारार्थे प्रभृतिशब्द इति 'शला दोषणी' (काठ० सं० १६.२१) इत्यत्रापि दोषन्नादेशो भवति।

❀ पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् ❀ (म० भा० ६.१.६३ वा० १)। मांस, पृतना—सानु—इत्येतेषां स्थाने यथासंख्यं मांस्, पृत्, स्नु—इत्येते आदेशा भवति। 'मांस्पचन्या उखायाः' (ऋ० १.१६२.१३)। मांसपचन्या इति प्राप्ते। 'पृत्सु मर्त्यम्' (ऋ० १.२७७)। पृतनासु मर्त्यमिति प्राप्ते। 'न ते दिवो न पृथिव्या अधिस्नुषु' (वाज० सं० १७.१४)। अधिसानुष्विति प्राप्ते।

**न्यासः**

कस्मात् पुनरन्यतरस्यामित्येतदनुवर्त्तयन्ति? इत्याह—तेन पादादयोऽपीत्यादि। यस्मात् पादादयोऽपि प्रयुज्यन्ते तस्मादन्यतरस्यामित्यनुवर्त्तयन्ति।

**पदमञ्जरी**

प्रकारार्थे प्रभृतिशब्द इति। व्यवस्थावाचिनि तु शसः पूर्वेषु वचनेषु न स्युः। दोषणीति। प्रथमाद्विवचने, दोःशब्दस्य दोषन्नादेशः, औङः शीभावः। मांस्पचन्या उखाया इति। 'मांसस्य पचि युट्घञोः' इत्यन्तलोपो

**भावबोधिनी**

[ यहाँ 'औ' प्रत्यय परे होने से आदेश नहीं होते हैं। ]

कुछ विद्वान् इस सूत्र में 'छन्दसि' इसकी अनुवृत्ति मानते हैं। [ उनके अनुसार यह आदेश केवल वेद में ही होते हैं ] परन्तु दूसरे लोग सामान्य रूप से विधान मानते हैं। [ अतः सर्वत्र होते हैं। ] क्योंकि भाषा में भी पद आदि शब्दों का प्रयोग होता है।

"व्यायाम से पुष्ट शरीर वाले और पैरों से उद्वर्तित [ मालिश आदि कराने वाले ] व्यक्ति के पास रोग उसी प्रकार नहीं आते हैं जिस प्रकार गरुड़ के पास साँप नहीं जाते हैं।"

[ यहाँ 'पद्भ्याम्' यह सामान्य प्रयोग है। ]

इसमें 'अन्यतरस्याम्' इसकी अनुवृत्ति [ "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" ६।१।५९ से ] करते हैं अतः पाद आदि शब्दों का भी प्रयोग किया जाता है।

'शस् प्रभृतिषु' इसमें प्रकार अर्थ में 'प्रभृति' शब्द है अतः—शला दोषणी—यहाँ भी दोषन् आदेश होता है। [ दोष + औ = ङीप्, दोषन् होता है। अथवा दोषन् आदेश करके 'ऋन्नेभ्यो ङीप्' से ङीप् होता है। ]

❀ पद आदि आदेशों के प्रसंग में मास्, पृत् और स्नु—इनका भी उपसंख्यान करना चाहिए। ❀ मांस, पृतना, सानु—इनके स्थान पर क्रमशः मांस्, पृत् और स्नु—ये आदेश होते हैं। उदा०—(१) मांस्पचन्या उखायाः। यहाँ 'मांसपचन्या' यह प्राप्त है। [ मांस इस अकारान्त का मांस् यह सकारान्त आदेश होने पर 'मांस्पचन्याः' यह पञ्चमी या षष्ठी एकवचन में होता है। ] (२) पृत्सु मर्त्यम्। पृतनासु मर्त्यम्—यह प्राप्त है। [ पृतना + सुप्, पृत् आदेश। ] (३) 'न ते दिवो न पृथिव्या अधिस्नुषु।' यहाँ 'अधिसानुषु' यह प्राप्त है। [ अधि सानु + सुप् = सु, स्नु करने पर उक्त रूप बनता है। ]

❀ नस् नासिकायां यत्तस्क्षुद्रेषु ❀ ( म० भा० ६.१.६४ वा० २ )। नासिकाया नस्भावो वक्तव्यो यत्, तस्, क्षुद्र —इत्येतेषु परतः। नस्यम्। 'नस्तः' ( काठ० सं० १२.१२ )। नःक्षुद्रः।

❀ यदि वर्णनगरयोर्नेति वक्तव्यम् ❀ ( म० भा० )। नासिक्यो वर्णः। नासिक्यं नगरम्॥

## २५०४. धात्वादेः षः सः ॥ ६४ ॥ ( २२६४ )

**धातोरादेः षकारस्य स्थाने सकारादेशो भवति। षह—सहते। षिच - सिञ्चति।**

### न्यासः

व्यवस्थावाचिनि प्रभृतिशब्द आश्रीयमाणे शस्प्रभृतिभ्योऽन्यत्रादेशो न सिध्यतीत्यभिप्रायेणाह—**प्रकारार्थे प्रभृतिशब्द इति। दोषणी इति।** केचिदाहुः—प्रथमाद्विवचने दोषन्नादेश, औङः शीभावः। अन्ये त्वाहुः—दोषणीति ङीबन्तमेतत्, ङीपि विषयभूते दोषन्नादेशः, ततः 'ऋन्नेभ्यो ङीप्'।

**नस्यमिति।** हितार्थे 'शरीरावयवाद्यत्'। **नस्त इति।** 'अपादाने चाहीयरुहोः' इति तसिः। **नःक्षुद्र इति।** नासिका क्षुद्रा यस्येति बहुव्रीहिः।

**नासिक्यो वर्ण इति।** भवार्थे 'शरीरावयवात्' इति यत्। **नासिक्यं नगरमिति** अत्र हितार्थे यत्॥ ६३॥

**धात्वादेः षः सः॥ सिञ्चतीति।** 'शे मुचादीनाम्' इति नुम्।

### पदमञ्जरी

वक्ष्यते, तद्युत्पत्त्यन्तरम्। **नस्यमिति।** हितार्थे भवार्थे वा 'शरीरावयवाद्यत्'। **नस्त इति।** 'अपादाने चाहीयरुहोः' इति तसिः। **नः क्षुद्रः इति।** 'तृतीया तत्कृतार्थेन' इति समासः। 'सप्तमी' इति योगविभागादित्यन्ये। बहुव्रीहौ विशेषणस्य क्षुद्रशब्दस्य राजदन्तादित्वात्परनिपात इत्यन्ये।

**यति वर्णनगरयोर्नेति वक्तव्यमिति।** तर्त्तहि वक्तव्यम्? न वक्तव्यम्; इह तावन्नासिक्यो वर्ण इति, परिमुखादिपाठाद् ञ्यः, नासिक्यं नगरमिति सङ्काशादिपाठाद् ण्यः, 'राजन्यसाङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानामादिर्वान्तो वा' इति प्रतिपदस्वरविधानात्स्वरेऽपि नास्ति विशेषः, प्रत्युत यत्प्रत्यये सत्यनासिक्यमित्यत्र 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वं प्रसज्येत, अव्ययपूर्वपदकृतिस्वरश्चेष्यते॥ ६३॥

**धात्वादेः षः सः॥ सिञ्चतीति।** 'शे मुचादीनाम्' इति नुम्।

### भावबोधिनी

❀ नासिका का नस् आदेश—यत्, तस्, क्षुद्र परे। ❀ नासिका का नस् आदेश—यत्, तस् और क्षुद्र के परे—कहना चाहिए। उदा०—नस्यम्। [ नासिकायां भवम्—इस अर्थ में 'शरीरावयवाद् यत्' सूत्र से यत् प्रत्यय, नस् आदेश ] नस्तः। [ नासिकायाः—इस अपादान में "अपादाने चाहीयरुहोः" सूत्र से तसिल्=तस्, नासिका नस् आदेश ] नःक्षुद्रः। [ नासिका क्षुद्रा यस्य सः—इस बहुव्रीहि में नस् आदेश, उपसर्जन का ह्रस्व, स् का विसर्ग—नःक्षुद्रः। राजदन्तादिगण को आकृतिगण मानकर क्षुद्र का परनिपात होता है। ]

❀ यत् परे रहते वर्ण और नगर अर्थों में नस् आदेश नहीं होता है—ऐसा कहना चाहिए। ❀ उदा०—नासिक्यो वर्णः, नासिक्यं नगरम्। [ नासिकायां भवः और नासिकायै हितम्—इन अर्थों में यत् करने पर नस् आदेश नहीं होता है। अत. उक्त रूप बनते हैं। ] ॥ ६३ ॥

धातु के आदि षकार के स्थान पर सकार आदेश होता है। उदा०—√ षह—सहते। √ षिच—सिञ्चति। [ इनमें आदि ष का स हो जाता है। सिच्+श=अ+ति में "शे मुचादीनाम्" सूत्र से नुम् होता है। अनुस्वार और परसवर्ण करने पर सिञ्चति होता है। ]

**धातुग्रहणं किम् ? षोडश । षोडन् । षडिकः । षण्डः । आदेरिति किम् ? कषति । लषति । कृषति ।**

**न्यासः**

**षोडश इति ।** षट् वा दश वास्येति 'संख्यायाव्यय' इत्यादिना बहुव्रीहिः, 'संख्येये डज्' इत्यादिना समासान्तो डच् । **षोडन्निति ।** षट् दन्ता अस्येति बहुव्रीहिः, 'वयसि दन्तस्य दतृ' इति दन्तशब्दस्य दत्रादेशः । 'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वञ्च' इति षष उत्वम्, उत्तरपदादेश्च ष्टुत्वम्—डकारः । **षण्ड इति ।** प्रातिपदिकान्तमेतदव्युत्पन्नम् । **षडिक इति ।** अनुकम्पितः षडङ्गुलिदत्त इति 'बह्वचो मनुष्यनाम्नष्ठच्' इति ठच्' 'ठाजादावूर्ध्वं द्वितीयादचः' इत्यङ्गुलिदत्तशब्दस्य लोपः । ननु च 'लिटि धातोः' इत्यतोऽत्र धातुग्रहण-मनुवर्त्तिष्यते, तदिह किं पुनर्धातुग्रहणेन ? एवं तर्ह्येतज् ज्ञापयति—तन्निवृत्तमिति । तस्य ह्यनुवृत्तौ 'लोपो व्योर्वलि' इत्ययमपि लोपो धात्ववयवस्यैव विज्ञायते । क्नूयी, क्तः—क्नूतः, क्ष्मायी, क्तः—क्ष्मात इत्यत्रैव स्यात्; गौधेरः, पचेरन्नित्यत्र न स्यात् । नन्वेवमपि धातुग्रहणमनर्थकमेव, यस्मादुपदेश इति वर्त्तत एव, न च प्रातिपदिकानामुपदेशः, तेषां तर्हि उपदेशः ? धातूनाम् ? नैतदस्ति; उपदेशाधिकारेऽप्युपदेशग्रहणेन षकारो विशिष्यते, षषश्च षकार उपदेशो भवति । 'षष उत्त्वं दतृदशधासूत्तरपदादेः' इति सूत्रे[1] पाठात् । तस्माद् धातुग्रहणं कर्त्तव्यम् । **कषतीति ।** भ्वादौ कषसिषेत्यादिर्हिंसार्थो धातुवर्गे पठ्यते । **लषतीति ।** 'लष कान्तौ' । अनयोरादिग्रहणान्न भवति । ननु चोपदेशसामर्थ्यादेवात्र न भविष्यतीति, अन्यथा ह्युपदेशस्य वैयर्थ्यं स्यात् ? नैतदस्ति; अस्ति ह्यन्यत्तूपदेशस्य प्रयोजनम् । किं तत् ?—'शेषे विभाषाऽकखादावषान्त उपदेशे' इत्यत्र कषेर्ग्रहणं मा भूत्; लषेश्च लेषतुः, लेषुरिति षत्वं यथा स्यात् ।

**पदमञ्जरी**

**षोडन्निति ।** षड् दन्ता यस्येति बहुव्रीहौ 'वयसि दन्तस्य दतृ' 'षष उत्त्वं दतृदशधासु' ( कात्या० वा० ४००१ ) इति षष उत्वमुत्तरपदादेष्टुत्वं च, 'उगिदचाम्' इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ । **क्वचित्तु षोड इति** पठ्यते, तत्तु षोडन्तमाचष्ट इति णिचि कृते टिलोपे पचाद्यचि रूपम् । षटशब्दोऽव्युत्पन्नं प्रातिपदिकम् । अनुकम्पितः षडङ्गुलिः षडिकः, 'बह्वचो मनुष्यनाम्नष्ठज्वा', 'ठाजादावूर्ध्वम्' इत्यङ्गुलिशब्दस्य लोपः । **लषतीति ।** षकारोपदेशस्तु प्रनिलषतीत्यादौ 'शेषे विभाषाऽकखादावषान्त उपदेशे' इति नेर्णत्वप्रतिषेधार्थं स्यात्, लेषतुः लेषुरित्यत्र 'आदेशप्रत्यययोः' इति षत्वार्थम् । **क्वचित्तु** कषतीत्यपि पठ्यते; **तदयुक्तम्;** षकारोपदेशसामर्थ्यदेवात्र न भविष्यति; प्रनिकषतीत्यत्रापि कखादावित्येव णत्वप्रतिषेधः सिद्धः; आदेशा-

**भावबोधिनी**

धातु के ग्रहण का क्या फल है ? षोडश । षोडन् । षडिकः । षण्डः ।

[ षड् वा दश वा अस्य—इस अर्थ में बहुव्रीहि के बाद समासान्त डच् प्रत्यय षष् + दशन् + डच् = अ, टिलोप, "षष उत्वं दतृ-दश-धासूत्तरपदादेः ष्टुत्वञ्च" इस वार्तिक से ष् का उ और द का ष्टुत्व ड—ष उ + डश् अ गुण—षोडश । षट् दन्ता यस्य सः—यहाँ 'वयसि दन्तस्य दतृ" ( पा० सू० ५।४।१४१ ) से दतृ आदेश, पूर्ववत् उत्व, ष्टुत्व, गुण—षोडत्, नुमादि करने पर षोडन् । अनुकम्पितः षडङ्गुलिदत्तः—इस अर्थ में 'बह्वचो मनुष्यनाम्नष्ठज्' सूत्र से ठच्=इक प्रत्यय, "ठाजादावूर्ध्वं द्वितीयादचः" सूत्र से अङ्गुलि दत्त का लोप—षष् + इक, जश्त्व—षडिकः । षण्डः—यह अव्युत्पन्न प्रातिपदिक है । ये सभी धातु के रूप नहीं है अतः ष का स नहीं होता है । धातु का ग्रहण न होने पर सर्वत्र अतिप्रसक्ति होती । ]

"आदेशप्रत्यययोः" ( पा० सू० ८।३।५९ ) इस सूत्र में षत्व की व्यवस्था के लिए कुछ धातुएँ षादि उपदिष्ट हैं । वे कौन सी हैं ? जो भी षकारादि पढ़ी जाती हैं । अथवा लक्षण किया जाता है—

१. वस्तुतस्तु वार्तिकमिदम् ६, ३, १०९—इति सूत्रे ।

**'आदेशप्रत्यययोः'** ( ८.३.५९ ) **इत्यत्र षत्वव्यवस्थार्थं षादयो धातवः केचिदुपदिष्टाः। के पुनस्ते ? ये तथा पठ्यन्ते। अथवा, लक्षणं क्रियते—'अज्दन्त्यपराः सादयः षोपदेशाः स्मिस्विदिस्वदिस्वञ्जिस्वपितयश्च', सृपिसृजिस्तृस्त्यासेक्सृवर्जम्॥**

**न्यासः**

किमर्थं पुनः षादयो धातव उपदिष्टाः, न सादयो ह्युपदिश्येरन्, एवं ह्येतत् सूत्रं न कर्त्तव्यं भवति ? इत्यत आह—**आदेशप्रत्यययोरित्यादि**। षत्वव्यवस्था = षत्वनियमः। 'आदेशप्रत्यययोः' इत्यनेन सहादीनामेव षत्वव्यवस्था यथा स्यादित्येवमर्थम्। षादयः केचिदुपदिष्टाः, अन्यथा सहादीनां षत्वार्थं यत्नान्तरं कर्त्तव्यं स्यात्। तच्च गुरु भवतीत्यभिप्रायः। यद्यपि षकारादिषु सन्देहो न भवति, सकारादिषु च भवत्येव। अत्र हि न ज्ञायते—किं षोपदेशा एव सन्तः 'धात्वादेः षः सः' इत्यनेन कृतसत्वा उच्चारिताः ? उत सकारादय एव ? इति सन्दिह्य पृच्छति—**के पुनस्त इति**। **ये यथा पठ्यन्त इति**। षादयो ये यथा पठ्यन्ते सन्निधानात् त एव षोपदेशा अवगन्तव्याः। **अज्दन्त्यपरा इत्यादि**। अज्दन्त्यौ परौ येषामिति तेऽज्दन्त्यपराः। परशब्दोऽत्रावयवे वर्त्तते। तच्चाज्दन्त्ययोः परत्वमवयवान्तरापेक्षं विज्ञायमानं सन्निधानात् सकारापेक्षं विज्ञायते। **स्मिस्विदिस्वञ्जिस्वपयश्चेति**। 'ष्मिङ् ईषद्धसने', 'ञिष्विदा गात्रप्रक्षरणे', 'ष्वन्ज परिष्वङ्गे', 'ञिष्वप् शये'—एते स्वरूपेणाख्यायन्ते; मकारवकारयोरज्दन्त्यत्वाभावात्। केचित् स्मिस्वदिस्वदिस्वञ्जिस्वपयश्चेति स्विदिस्थाने स्वर्दि पठन्ति, तेषां 'स्वद स्वर्द आस्वादने' इति स्वदिरपि षोपदेश एव। **सृपिसृजिस्तृस्त्यासेकृसृवर्जमिति**। 'गम्लृ

**पदमञ्जरी**

दित्वाभ्यासलोपौ च न स्तः—चकषतुः, चकषुः।

किमर्थं पुनः षादयो धातव उपदिष्टाः, न सादय एवोपदिश्येरन्, एवं ह्येतत्सूत्रं न कर्त्तव्यं भवति ? तत्राह—**आदेशप्रत्यययोरित्यादि**। व्यवस्थानियमः—आदेशप्रत्यययोरिति सहादीनामेव षत्वं यथा स्यात्, सृपिसृजिप्रभृतीनां मा भूदित्येवमर्थं षादयः कचिदुपदिष्टाः; अन्यथा सहादीनां षत्वार्थं यत्नान्तरमास्थेयम्, तच्च गुरु भवतीति भावः। **के पुनस्त इति**। पाठे भ्रंशसम्भवात्प्रश्नः। **ये तथा पठ्यन्त इति**। अप्रमादेन पठितव्यमित्यर्थः। **अथ वा लक्षणं क्रियत इति**। मन्दधियोऽनुग्रहीतुमिति भावः। **अज्दन्त्यपराः सादय इति**। अज्दन्त्यौ परौ येषां तेऽज्दन्त्यपराः, परशब्दोऽवयववाची। तच्चाज्दन्त्ययोः परत्वमवयवान्तरापेक्षं विज्ञायमानं सन्निधानात्सकारापेक्षं विज्ञायते। **स्मिङ्स्विदिति**। 'ष्मिङीषद्धसने' ( धा० पा० ९४८ ), 'ञिष्विदा गात्रप्रक्षरणे' ( धा० पा० ७७४ ), 'ष्वन्ज सङ्गे' ( धा० पा० ९७६ ), 'ञिष्वप् शये' ( धा० पा० १०६८ )—एते स्वरूपेणैव पठ्यन्ते। वकारमकारयोरनज्दन्त्यत्वाद्वकारोऽपि केवलदन्तस्थानो न भवति। 'स्वद आस्वादने' इति। **स्वदिमपि** केचित्पठन्ति। **सृपिसृजीत्यादि**। 'सृप्लृ गतौ' ( धा० पा० ९८३ ), 'सृज विसर्गे' ( धा० पा० १४१४ ),

**भावबोधिनी**

"जिनके पर में ( अवयवरूप से ) अच् और दन्त्य अक्षर हैं ऐसी सकारादि धातुएँ षोपदेश है—स्मि, स्विदि, स्वदि, स्वञ्जि, स्वपि। सृप्, सृज्, स्तृ, स्त्यै, सेक, सृ—इनको छोड़कर।"

[ √ ष्मिङ् ईषद् हसने, √ ञिष्विदा गात्रप्रक्षेपणे, √ ष्वन्ज सङ्गे, √ ञिष्वप् शये—ये षकारादि हैं। इनमें ष् का स् होता है। अतः दन्त्य स् आदेशभूत स् होने से पुनः षत्व होता है। किन्तु √ सृप्लृ गतौ, √ सृज विसर्गे, √ स्तृञ् आच्छादने, √ स्त्यै शब्दसंघातयोः, √ सेक गत्यर्थः, √ सृ गतौ—ये षोपदेश नहीं है। अतः इनमें आदेश का स् न होने से षत्व नहीं होता है। ]

---

१. इतोऽग्रे–मकारवकारयोरनज्दन्त्यत्वान्न भवतीति अप्राप्ते विधानम्' इति पाठो मुद्रितपुस्तके दृश्यते।

**❀ सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः ❀। ( म० भा० ६.१.६४ वा० १ )। षोडीयति। षण्डीयति। ष्ठीवति। ष्वष्कते। 'ष्ठिवु'—इत्येतस्य द्वितीयस्थकारष्ठकारश्चेष्यते। तेन तेष्ठीव्यते, टेष्ठीव्यते इति**

**न्यासः**

सृप्लृ गतौ', 'सृज विसर्गे', 'स्तृञ् आच्छादने', 'ष्ट्यै स्त्यै शब्दसङ्घातयोः', 'सेक सेक्ृ श्रकि श्लकि गत्यर्थाः', 'सृ गतौ'—एतान् वर्जयित्वा येऽन्येऽज्दन्त्यपरास्ते षोपदेशाः।

**सुब्धात्वित्यादि**। सुब्धातुः क्यजान्तः। 'ष्ठिवु निरसने', 'ष्वक्क वुक्क मक्क तिक्क टिक्क टीक्क वगि लगि गत्यर्थाः'—एषां प्रतिषेधो वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—सुब्धातौ तावत् षोडीयतीत्यादौ नैव धात्वादिः षकारः, तथा ह्यादिरवयवः। आरम्भकश्चावयवो भवति, सुब्धातुः सुबन्तेन क्यचा चारभ्यते। न च षकारेणापि वर्णान्तरेणेति कुतस्तस्य षकारादित्वम्? सहादयस्तु षकारादिभिरेव वर्णैरारभ्यन्त इति युक्तं तेषां षकारादित्वम्। ष्ठिवेरपि निपातनान्न भवति, किं तन्निपातनम्? 'ष्ठिवुक्लमुचमां शिति' इति। यस्य हि सत्वं भवति तमयं प्रदेशेषु कृतसत्वमेवोच्चारयति यथा प्रदेशे—'स्थाघ्वोरिच्च' इति। ष्वक्केरप्यज्दन्त्यपरा इत्यनेन निर्वर्त्तितत्वान् न भवति। वकारस्य दन्त्यौष्ठ्यत्वादज्दन्त्यग्रहणेन न गृह्यते। अथ वा—यादित्वात् 'ष्ठिवुष्वक्कोर्न भविष्यति, यकारस्तु लुप्तनिर्दिष्टत्वान्न श्रूयते। अथ वा—अन्यतरस्यांग्रहणमत्रानुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते, तेन सुब्धात्वादीनां न भवतीति। **ष्ठीवतीति**। 'ष्ठिवुक्लमुचमां शिति' इति दीर्घः। **ष्वक्कत इति**। अनुदात्तेत्त्वादात्मनेपदम्। अथ ष्ठिवो द्वितीयवर्णः किं ठकार इष्यते? उत थकारः? यदि ठकारस्तदा सिद्धम्—टेष्ठीव्यत इति, न सिध्यति—तेष्ठीव्यत इति, 'अभ्यासे चर्च्च' इति टकार एवान्तरतमष्ठकारस्य स्थाने प्राप्नोतीति कृत्वा; अथ थकारस्तदा सिद्धम्—तेष्ठीव्यत इति, एतन् न सिध्यति-टेष्ठीव्यत इति, आन्तरतम्याद् विधीयमानस्थकारस्य स्थाने तकार एव प्राप्नोतीत्यत आह—**ष्ठिवु इत्येतस्येत्यादि**। अभ्यासस्य द्वैरूप्यं यथा स्यादिति केचिदाचार्येण शिष्याः 'ठकारोऽयम्' इत्युपदिष्टाः। अपरे पुनः 'थकारोऽयं ष्टुत्वेन ठकारः

**पदमञ्जरी**

'स्तृञ् आच्छादने' ( धा० पा० १४८४ ), 'स्त्यै ष्ट्यै शब्दसङ्घातयोः' ( धा० पा० ९१०, ९११ ), 'सेकतिर्गत्यर्थः' 'सृ गतौ' ( धा० पा० ९३५ )—एतान्वर्जयित्वा येऽन्येऽज्दन्त्यपरास्ते षोपदेशाः।

**सुब्धात्वित्यादि**। सुब्धातुः क्यजाद्यन्तः, 'ष्ठिवु निरसने' ( धा० पा० १११० ), 'ष्वष्कतिर्गत्यर्थः' अनुदात्तेत्—एषां सत्वस्य प्रतिषेधो वक्तव्यः। तत्र सुब्धातूनां तावन्न वक्तव्यः, उपदेश इति वर्तते, न च सुब्धातवः क्वचिदुपदिश्यन्ते, एवं च कृत्वा धातुग्रहणं शक्यमकर्तुम्। उपदेशाभावादेव षोडादेर्न भविष्यति, तत् क्रियते धातोरित्यस्य निवृत्तिं सूचयितुम्। तेन 'लोपो व्योर्वलि' इति अविशेषेण भवति, ष्ठीवतिष्वष्कती द्विषकारकौ, तत्र पूर्वस्यास्तु सत्वम्, परेण सन्निपातेन षत्वं भविष्यतीति। यद्येवम्, लिट् ष्वष्कते, षत्वस्यासिद्धत्वाद् 'डः सि धुट्' इति धुट् प्रसज्येत? एवं तर्हि यकारादी ष्ठिवुष्वष्कती, यकारस्तु 'लोपो व्योर्वलि' इति लुप्यते। **ष्ठीवतीति**। 'ष्ठिवुक्लमुचमां शिति' इति दीर्घत्वम्। अथास्य द्वितीयो वर्णो यदि ठकारः, तेष्ठीव्यत

**भावबोधिनी**

❀ सुब्धातु = नामधातु, ष्ठिवु, ष्वष्क—इनका प्रतिषेध कहना चाहिए। ❀ उदा०—षोडीयति। षण्डीयति। [ इनमें इच्छा या आचार अर्थ में क्यच् करके सनाद्यन्त मानकर धातुत्व है। परन्तु ष् का स् नहीं होता है। ] ष्ठीवति। ष्वष्कते। [ √ ष्ठिवु निरसने' और '√ ष्वष्कतिर्गत्यर्थः' हैं। इनमें भी स नहीं होता है। ] √ष्ठिवु इसके स्थकार का ष्ठकार इष्ट है। इस लिए—तेष्ठीव्यते और टेष्ठीव्यते ये अभ्यासवाले दो रूप होते हैं। [ 'ष्ठिवु' धातु में स्वाभाविक रूप से 'ठ' है ऐसा कुछ लोगों को पढ़ाया गया। ष्टुत्व के कारण थ का ठ हुआ है—ऐसा दूसरों को पढ़ाया गया है। इस लिये जब थकार वाला पाठ है तब यङ प्रत्यय परे द्वित्व करने पर स्थिव्

चाभ्यासरूपं द्विधा भवति॥

२५०५. णो नः ॥ ६५ ॥ ( २२८६ )

**'धातोरादेः' इत्यनुवर्तते। धातोरादेर्णकारस्य नकार आदेशो भवति। णीञ्—नयति। णम्—नमति। णह्—नह्यति। धात्वादेरित्येव—अणति।**

**सुब्धातोरयमपि नेष्यते—णकारमिच्छति णकारीयति।**

**'उपसर्गादसमासेऽपि णोपदेशस्य' ( ८.४.१४ ) इत्यत्र णत्वविधेर्व्यवस्थार्थं णादयो धातवः केचिदुपदिश्यन्ते। के पुनस्ते? ये तथा पठ्यन्ते। अथ वा, लक्षणं क्रियते—'सर्वे णादयो णोपदेशाः, नृतीनन्दिनर्दिनक्कनाटिनाथृनाधृनॄवर्जम्'[1] ॥**

न्यासः

श्रूयते' इतीममर्थं ग्राहिताः। उभञ्चैतत् प्रयोजनम्। अन्ये पुनराहुः–ष्ठिवुर्दिवादिष्वपि पुनरधीयते, तत्रैकस्य द्वितीयस्थकारः अपरस्य तु ठकार इति। तेष्ठीव्यत इति 'शर्पूर्वाः खयः' शेषः ॥ ६४ ॥

**णो नः ॥ सुब्धातोरयमपि नेष्यत इति।** पूर्वस्मादेव हेतोः।

**उपसर्गादसमासेऽपीत्यादि।** अत्र पूर्वानुसारेण पूर्वपक्षो विज्ञेयः। **नृतीनन्दीत्यादि।** 'नृती गात्रविक्षेपे', 'टुनदि समृद्धौ', 'नर्द गर्द शब्दे', 'नक्क वक्क नाशने', 'नट अवस्यन्दने', चुरादिणिजन्तः, 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु', 'नॄ नये' ॥ ६५ ॥

पदमञ्जरी

इति न सिध्यति; अथ थकारः, टेष्ठीव्यत इति न सिद्धयति; उभयं चेष्यते, तत्राह—**ष्ठीवत इत्यस्येत्यादि।** उभयथा ह्याचार्येण शिष्याः पाठिता इति भावः ॥ ६४ ॥

**णो नः ॥ अणतीति।** णोपदेशस्तु निरणतीत्यादौ 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वार्थं स्यात्। **सुब्धातोरयमपि नेष्यत इति।** पूर्ववदेव सर्वे नादय इति प्रयोगे। **नृतीनन्दीत्यादि।** 'नृती गात्रविक्षेपे', ( धा० पा० १११६ ) 'टुनदि समृद्धौ', धा० प० ६७ ) 'नर्द गर्द शब्दे', ( धा० प० ५६, ५७ ) 'नक्क नाशने', ( धा० पा० १५९३ ) 'नट अवस्यन्दने' ( धा० पा० १५४५ ) चुरादिः, 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' ( धा० पा० ६, ७ ) [ नॄ नये ]॥ ६५ ॥

भावबोधिनी

स्थिव्+य, 'शर्पूर्वाः खयः'' सूत्र से खय् = थ शेष है स् का लोप है थिस्थि, चर्त्व, अभ्यास का गुण तेस्थि, दीर्घ ष्टुत्व तेष्ठीव्यते। ष्ठ—के पाठ में टेष्ठीव्यते होता है। ] ॥ ६४ ॥

"धातु के आदि का' इसकी अनुवृत्ति होती है। धातु के आदि णकार का नकार होता है। उदा०—'√ णीञ् प्रापणे' का—नयति। [ णी = नी + लट् = तिप्, शप्, गुण, अय् आदेश ] √णम्— नमति। णह् = नह् = नह्यति। [ णह् = नह् + श्यन् + लट् = ति। ]

धातु के आदि का ही—अणति। [ यहाँ धातु का ण् है किन्तु आदि न होकर अन्त है अतः न् नहीं होता है। ]

यह नत्व भी सुब्धातु = नामधातु का इष्ट नहीं है—णकारम् इच्छति—इस अर्थ में णकारीयति। [ "सुप आत्मनः क्यच्" सूत्र से क्यच् = य प्रत्यय दीर्घ आदि करने पर रूप बनता है। ]

"उपसर्गादसमासेऽपि णोपदेशस्य" ( पा० सू० ८।४।१४ ) इस सूत्र में णत्व की विधि की व्यवस्था के लिए कुछ धातुएँ णादि [ ण है आदि में जिनके ऐसी ] कही गई हैं। वे कौन सी हैं? जो उसी प्रकार की पढ़ी जाती हैं। अथवा लक्षण किया जाता है—सभी णादि धातुएँ णोपदेश हैं—नृती, नन्दि नर्दि, नक्क, नाटि, नाथृ, नाधृ, नॄ को छोड़कर। ['√ नृती गात्रविक्षेपे', '√ टुनदि समृद्धौ', '√नर्द गर्द शब्दे', '√नक्क वक्क नाशने', '√नट अवस्यन्दने' ( यह चुरादिगणीय होने से णिजन्त है। ) '√नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' '√ नॄ नये' इनमें न स्वाभाविक है, उपदेश में ण नहीं है। अतः णोपदेश मानकर होने वाला णत्व इनमें नहीं होता है। ] ॥ ६५ ॥

---

१. भाष्ये न्यासे चास्योपलब्ध्या मुद्रितसंस्करणेषु पदमञ्जर्याञ्चानुल्लेखः प्रमाद एवेति बोध्यम्।

## २५०६. लोपो व्योर्वलि ॥ ६६ ॥ ( ८७३ )

धातोरिति प्रकृतं यत् तद् धात्वादेरिति पुनर्धातुग्रहणान्निवृत्तम्। तेन धातोरधातोश्च वकारयकारयोर्वलि परतो लोपो भवति। दिव्—दिदिवान्, दिदिवांसौ, दिदिवांसः। ऊयी - ऊतम्। क्नूयी—क्नूतम्। 'गोधाया ढ्रक्' ( ४.१.१२९ ) गौधेरः। पचेरन्। यजेरन्। वकारस्य—'जीवेरदानुक् ( द० उ० १.१६३ )

### न्यासः

**लोपो व्यर्वलि** ॥ 'लिटि धातोः' इत्यस्य धातुग्रहणस्य दृष्टानुवृत्तिसामर्थ्यादिहाप्यनुवृत्तिरिति मन्यमानस्य धातोरेवायं वलि व्यलोपो विधीयत इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तमाह—**धातोरिति यत् प्रकृतमित्यादि**। **दिदिवानिति**। दिवेः क्वसौ रूपम्। **ऊयीति**। 'ऊयी तन्तुसन्ताने'। **क्नूयीति**। 'क्नूयी शब्दे'। **गौधेर इति**। 'गोधाया ढ्रक्' ढस्यैयादेशः, यकारलोपः। **पचेरन्निति**। सीयुड्यकारस्य लोपः। **जीवेरिति**। 'जीव प्राणधारणे' इत्यस्य। **स्रिवेरिति**। 'स्रिवु गतिशोषणयोः' इत्येतस्य। **आस्रेमाणमिति**। औणादिकोऽयं मनिन्। कथं पुनरेतदिहोदाहरणम्, यावता परत्वाद् 'वार्णादाङ्गं बलीयो भवति' इति बलीयस्त्वात् 'च्छ्वोः शूडनुनासिके च' इत्यादिनोठादेशेनात्र भवितव्यम्? इत्यत आह—**उणादयो बहुलमित्यादि**। बहुलग्रहणस्य सर्वविधिव्यभिचारार्थत्वान् न भवत्येष दोषप्रसङ्ग इति।

पश्चाल्लोपग्रहणे क्रियमाणे पकारात् परेणाध्यर्धमात्रोच्चारयितव्या भवति, अकारो हि मात्रा, विसर्जनीयस्त्वर्धमात्रः। पूर्वं तु लोपग्रहणे क्रियमाणे मात्राद्वयमुच्चारयितव्यं जायते; ओकारस्य द्विमात्रिकत्वात्। तत्र लाघवार्थं पश्चादेव लोपग्रहणं कर्तुं युक्तम्, तत् किं पूर्वं क्रियते? इत्यत आह—**पूर्वमित्यादि**। अन्यस्तु पूर्वं कार्यिनिर्देशो युक्तः, पश्चात् कार्यनिर्देश इति पूर्वं व्योर्ग्रहणे कर्तव्ये किमर्थं लोपग्रहणं क्रियत इति पूर्वपक्षं

### पदमञ्जरी

**लोपो व्योर्वलि** ॥ **धातोरिति प्रकृतमित्यादि**। एतद् 'धात्वादेः षः सः' इत्यत्र व्याख्यातम्। **दिदिवानिति**। दिवेः क्वसौ रूपम्। 'वस्वेकाजाद्घसाम्' इति नियमादिडभावः। अत्र वक्तव्यमस्ति तद् 'वस्वेकाजाद्घसाम्' इत्यत्र वक्ष्यामः। 'ऊयी तन्तुसन्ताने', ( धा० पा० ४८३ ) 'क्नूयी शब्दे' ( धा० पा० ४८५ )। **अस्रेमाणमिति**। 'स्रिवु गतिशोषणयोः' ( धा० पा० ११०९ ) औणादिको मनिन्, नञा समासः।

ननु च सतः कार्यिणः कार्येण भवितव्यमिति पूर्वं कार्यिनिर्देशो युक्तः, पश्चात्कार्यनिर्देशः—'व्योर्वलि लोपः' इति, लाघवं च भवत्यर्द्धमात्रया, तत्किमर्थं पूर्वं लोपग्रहणं कृतम्? इत्यत आह —**पूर्वं लोपग्रहणमित्यादि**। पूर्वं लोपग्रहणेनायमर्थः सूच्यते—विध्यन्तरात्पूर्वमेवायं लोपो भवतीति, कण्डूयतेर्यलोपश्च प्राप्नोति, वेरपृक्तलोपश्च, तत्रान्तरङ्गत्वात्पूर्वमपृक्तलोपेन भवितव्यम्।

### भावबोधिनी

'धातोः' इससे प्रकृत ( अनुवृत्त ) जो ( धातु है ) उसकी [ पूर्वसूत्र में ] 'धात्वादेः' इस पुनः धातुग्रहण से निवृत्ति हो जाती है। [ अतः यह सूत्र धातु अधातु दोनों में प्रवृत्त होता है। इस लिए वल् प्रत्याहार के किसी अक्षर के परे रहते धातु अथवा अधातु के यकार और वकार का लोप होता है। उदा०—दिदिवान् दिदिवांसौ, दिदिवांसः। [ दिव् + लिट् = क्वसु = वस्, द्वित्व, हलादिशेष—दिदिव् + वस्, व का लोप, दिदिवस्, सु परे रहते नुम् दीर्घ आदि होते हैं। द्विवचन और बहुवचन के भी रूप हैं। ] √ऊयी—ऊतम्। [ ऊय् + क्त, यलोप ] √क्नूयी क्नूतम्। [ क्नूय् + क्त = त ] 'गोधा से ढ्रक् प्रत्यय होता है"—गौधेरः [ गोधा + ढ्रक्, आदिवृद्धि, ढ् का एय् गौधा + एय् रक्, यलोप, आलोप, क्लोप करने पर गौधेरः बनता है। ] पचेरन्। [ √पच् + शप् + सीयुट् + ईय् + झ = रन् = पच् + अ + ईय् + रन्, गुण, यलोप—पचेरन् ] यजेरन् [ यज् + शप् + सीयुट् + लिङ् =

**जीरदानुः । स्रिवेः—आस्रेमाणम् । 'उणादयो बहुलम्' ( ३.३.१ ) इति बहुलवचनात् 'च्छ्वोः शूडनुनासिके च' ( ६.४.१९ ) इति ऊठ् न भवति ।**

**वलीति किम् ? ऊय्यते । क्नूय्यते । पूर्वं लोपग्रहणं किम् ? वेरपृक्तलोपात्पूर्वं वलि लोपो यथा स्यात्—कण्डूयतेः क्विप्—कण्डूः । लोलूयतेः—लोलूः ।**

**न्यासः**

वर्णयति, सचायुक्तः; 'लुगणिञोः' त्यत्र कार्यस्यापि पूर्वं निर्देशात् । **वेरपृक्तलोपादित्यादि** । कण्डूयतेर्लोलूयतेश्च क्विपि कृते वलि लोपात् परत्वात् कृताकृतप्रसङ्गित्वेन नित्यत्वाच्च पूर्वं वेरपृक्तलोप एव स्यात्, अस्मिश्च सति निमित्ताभावाद् वर्णाश्रये प्रत्ययलक्षणाभावाद् वलि लोपो न स्यात् । तस्मात् पूर्वं लोपग्रहणं क्रियते—वलि लोप एव पूर्वं यथा स्यात् । पूर्वं लोपग्रहणे ह्ययमर्थः सूच्यते–वेरपृक्तलोपात् पूर्वं वलि लोप एव कर्त्तव्यमिति । **कण्डूरिति** । 'अतो लोपः' इत्यकारलोपः । 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषु न स्थानिवत्' इत्यकारस्य स्थानिवद्भावो न भवति, वलि लोपः । अथ व्रश्चकः, व्रश्चन इत्यत्र रेफे वलि परतो वकारलोपः कस्मान्न

**पदमञ्जरी**

**कण्डूयतेः क्विबिति** । 'कण्ड्वादिभ्यो यक्' इत्यत्र भाष्यम्—'नैतेभ्यः क्विब् दृश्यते' ( म० भा० ) इति, तस्माकण्डूमिच्छतीति क्यजन्तात्क्विब् द्रष्टव्यः । द्विविधा हि कण्ड्वादयः—धातवः, प्रातिपदिकानि च । तत्र धातुभ्यो यग्विधानात्प्रातिपदिकेभ्यः क्यजादयो भवन्त्येव, तत्र क्यजन्तात्क्विपि कृते—अतो लोपश्च प्राप्नोति, वेरपृक्तलोपश्च तत्रान्तरङ्गत्वात्पूर्वमपृक्तलोपेन भाव्यम् । अथाप्यार्द्धधातुक इति विषयसप्तम्याश्रयणात्पूर्वमतो लोपः पश्चात्क्विप् ? एवमपि क्विलोपश्च प्राप्नोति वलोपश्च, तत्र परत्वान्नित्यत्वाच्च पूर्वमपृक्तलोपः स्यात्, तस्मिश्च सति निमित्ताभावादलाश्रये प्रत्ययलक्षणाभावात्स्थानिवद्भावाभावाच्च वलि लोपो न स्यात्, पूर्वं लोपग्रहणाच्च भवति । अथात्र लोपस्य स्थानिवद्भावादुवङ् कस्मान्न भवति ? उच्यते; क्यजन्तात्क्विबित्युक्तम्, ततः किम् ? स्थानिवद्भावेनापि कण्डूमात्रस्य धातुत्वाभावादुवङ् न भवति । यणादेशस्तर्हि प्राप्नोति ? अस्तु यण्, तस्योठ् करिष्यते । न चोठ्यपि कर्तव्ये स्थानिवद्भावः, आदिष्टादचः पूर्वत्वाद्वकारस्य, अत एव कण्ड्वावित्यादावूङुवङादिषु कर्तव्येषु नास्त्यल्लोपस्य स्थानिवद्भावः ।

**भावबोधिनी**

ञ=रन्, शेष पूर्ववत् ] वकार के लोप के उदा० —"जीवेरदानुः" [ जीव् से रदानुक् प्रत्यय होता है । जीव्+रदानुक्, व्लोप करने पर ] जीरदानुः । स्रिव्—आस्रेमाणम् । [ स्रिव्+मनिन्, स्रिव्+मन्, व् का लोप, नञ्समास, पुनः अणादि प्रत्यय करके आदिवृद्धि और णत्व—आस्रेमाणम् ] "उणादयो बहुलम्" ( पा० सू० ३।३।१२) इसमें बहुल—वचन के कारण 'च्छ्वोः शूडनुनासिके च' ( पा० सू० ६।४।१९ ) इस सूत्र से व् का ऊठ् नहीं होता है । [ ऊठ् और व् लोप की कर्तव्यता में क्या किया जाय ? इस सन्देह में 'उणादयो बहुलम्' का बहुल वचन ऊठ् का वारण कर देता है । अतः व् लोप ही होता है । ]

वल् परे रहते—इसका क्या फल है ? ऊय्यते । क्नूय्यते । [ ऊय्+यक्+ते क्नूय्+यक्+ते, यहाँ य् परे है अतः लोप नहीं होता है क्योंकि य् को छोड़ कर सभी व्यंजन वल् में आते हैं । ]

[ व्योर्वलि लोपः—ऐसा सूत्र न करके ] लोपो व्योर्वलि—यह पहले 'लोपः' का ग्रहण क्यों किया गया ? 'वि' के अपृक्तलोप से पहले वल् परे लोप हो जाय । उदाहरणार्थ—कण्डूय से क्विप् करने पर—कण्डूः । लोलूय से क्विप् करने पर लोलूः ।

**विमर्श**—कण्डूय+क्विप्=व् यहाँ धातु के अ का लोप कर देने पर 'कृताकृतप्रसङ्गी होने से' नित्य होने के कारण पहले 'वेरपृक्तस्य' सूत्र से व् का ही लोप होगा । तब आगे वल् परे न मिलने से निमित्ताभाव से य् लोप

व्रश्चादीनामुपदेशसामर्थ्याद् वलि लोपो न भवति। वृश्चति, वव्रश्चेत्यत्रापि हि सम्प्रसारणहलादिःशेषयोर्बहिरङ्गत्वात्प्राप्नोति ॥

## २५०७. वेरपृक्तस्य ॥ ६७ ॥ ( ३७५ )

'लोपः' इति वर्तते। 'वेः' इति क्विबादयो विशेषाननुबन्धानुत्सृज्य सामान्येन गृह्यन्ते। वेरपृक्तस्य

### न्यासः

भवति ? इत्याह—व्रश्चादीनामित्यादि। यद्येषामपि लोपः स्याद्, वकारोच्चारणमनर्थकं स्यात्। अतश्चोच्चारणसामर्थ्याद् व्रश्चादीनां वलि लोपो न भवति। स्यादेतत्—वृश्चति, वव्रश्चेत्यत्र संप्रसारणे हलादिशेषे च वकारस्य श्रवणं यथा स्यात्, तत् कुत उपदेशस्य वैयर्थ्यम् ? अत आह—वृश्चतीत्यादि। यथा व्रश्चक इत्यादौ लोपस्य प्राप्तिः, एवं वृश्चतीत्यादावपि सम्प्रसारणादौ कार्ये कृतेऽपि; तस्य बहिरङ्गत्वेनासिद्धत्वात्। तत्र सम्प्रसारणं ङित्प्रत्ययापेक्षत्वात् बहिरङ्गम्, हलादिशेषोऽभ्यासापेक्षत्वाद् बहिरङ्गः, वलि यलोपस्तु वर्णमात्राश्रयत्वादन्तरङ्गः। तस्मात् सर्वत्रैव व्रश्चेर्वकारलोपः प्राप्नोति। क्रियते चास्योपदेशः, अत उपदेशसामर्थ्यान्न भविष्यतीति तदेवावस्थितम् ॥ ६६ ॥

वेरपृक्तस्य ॥ वेरित्यादि। क्विबादेरन्यस्य वेरपृक्तसंज्ञकस्याभावात् क्विबादय एव गृह्यन्ते, कथं

### पदमञ्जरी

अथ व्रश्चकः, व्रश्चनमित्यादौ रेफे वलि परतो वकारस्य लोपः कस्मान्न भवति ? तत्राह—व्रश्चादीनामित्यादि। ननु वृश्चति, वव्रश्चेत्यादौ सम्प्रसारणे कृते हलादिशेषे च वकारस्य श्रवणं यथा स्यादित्येतदुपदेशस्य प्रयोजनं स्यात्, न ह्यत्र लोपः प्रवर्तते, वल्परत्वाभावादित्यत आह—वृश्चति वव्रश्चेत्यादावपीत्यादि[१]। बहिरङ्गत्वादिति। बहिरङ्गत्वं सम्प्रसारणस्य किङत्प्रत्ययापेक्षत्वात्, हलादिशेषस्य त्वभ्यासापेक्षत्वात्, ततश्चाकृतयोरेव तयोर्वलोपः प्राप्त उपदेशसामर्थ्यादेव न भवति।

अत्र भाष्ये वलोपः प्रत्याख्यातः। आस्रेमाणम्, जीरदानुरित्यत्र छान्दसो वर्णलोपः, क्वसावपि छान्दस एव, दिविप्रभृतीनां यङ्लुगन्तानां तसादिषूठा भवितव्यम्, तिप्सिपोरीडभावपक्षेषूठा भवितव्यम्। ये तत्र किङतीति नानुवर्त्तयन्ति—देदिविति देद्योति, देदिवीषि देद्योषि, मिपि त्वनुनासिकत्वादेव भवति, देदिवीमि देद्योमि; ये त्वनुवर्त्तयन्ति तेषामपि छान्दसो यङ्लुगिति ॥ ६६ ॥

वेरपृक्तस्य ॥ क्विबादयो गृह्यन्त इति। ततोऽन्यस्य वेरपृक्तस्याभावात्। घृतस्पृगिति। 'क्विन्प्रत्ययस्य

### भावबोधिनी

नहीं होगा। वर्णाश्रय होने से स्थानिवद्भाव भी नहीं होगा। अतः सूत्र में पहले 'लोपः' का उल्लेख करने से पहले यही लोप हो जाता है बाद में अपृक्त व् का लोप होता है जिससे—कण्डूः, लोलूः—आदि रूप बनते हैं।

( अनु० ) व्रश्च—आदि में व् के उपदेश करने के सामर्थ्य के कारण वल् परे व् का लोप नहीं होता है। [इसीलिए व्रश्चकः, व्रश्चनम् आदि में व् सुनाई देता है। ] वृश्चति, वव्रश्च—इनमें भी सम्प्रसारण और हलादिशेष, बहिरङ्ग हैं, अतः व् लोप प्राप्त होता है। [ यहाँ भी उपदेश-सामर्थ्य से ही व् लोप का वारण किया जाता है। अतः जहाँ भी लोप की सम्भावना हो वहाँ उपदेश के कारण ही वारण करना चाहिए। ] ॥ ६६ ॥

'लोपः' इसकी अनुवृत्ति होती है। 'वेः' ( वि का ) यह क्विप् आदि के जो विशेष विशेष अनुबन्ध हैं उनको छोड़ कर सामान्य रूप से गृहीत है। [ सभी अन्य अनुबन्धों के लोप के बाद जो ] 'वि' = व् अपृक्त [ बचता है ]

---

१. 'वव्रश्चेत्यत्रापि' इति काशिकापाठः।

लोपो भवति। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ( ३.२.८७ ) ब्रह्महा, भ्रूणहा। 'स्पृशोऽनुदके क्विन्' ( २.२.५८ )—घृतस्पृक्, तैलस्पृक्। 'भजो ण्विः' ( ३.२.६२ ) अर्धभाक्, पादभाक्, तुरीयभाक्।

अपृक्तस्येति किम् ? 'वृदृभ्यां विन्' ( उ० ५०२ )—दर्विः। 'कृगृशृसृजागृभ्यः क्विः'—जागृविः॥

## २५०८. हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥ ६८ ॥ ( २५२ )

'लोपः' इति वर्तते। तदिह लौकिकेनार्थेनार्थवत् कर्मसाधनं द्रष्टव्यम्—लुप्यते इति लोपः। हलन्ताद्, ङ्यन्तादाबन्ताच्च दीर्घात् परं सु, ति, सि—इत्येतदपृक्तं हल् लुप्यते। हलन्तात् सुलोपः—राजा, तक्षा, उखास्रत्, पर्णध्वत्। ङ्यन्तात्—कुमारी, गौरी, शार्ङ्गरवी। आबन्तात्—खट्वा, बहुराजा, कारीषगन्ध्या।

**न्यासः**

पुनर्वेरित्युच्यमाने क्विबादीनां सामान्येन ग्रहणमुपपद्यते, यावता पकारादयस्तेषां विशेषा अनुबन्धाः सन्ति ? इति चोद्यनिरासायेदमुक्तम्—**विशेषाननुबन्धनानुत्सृज्येति**। **ब्रह्महा, भ्रूणहेति**। 'सौ च' इति दीर्घः। **घृतस्पृगिति**। 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्। **अर्धभागिति**। 'चोः कुः' इति कुत्वम्।

दर्विरित्यादौ 'उणादयो बहुलम्' इति बहुलग्रहणादेव लोपो न भवतीति शक्यते वक्तुम्, अतः प्रपञ्चार्थम्। वैचित्र्यार्थं वाऽपृक्तग्रहणम् ॥ ६७ ॥

**हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्**॥ यदि लोप इतीहानुवर्तमानं शास्त्रीयेणार्थेनैवार्थवत् स्यात्, तदा तेन हलित्यस्य प्रथमान्तस्य सामानाधिकरण्येन सम्बन्धो नोपपद्यते। शास्त्रीयस्य हि लोपशब्दस्यार्थः—दर्शनाभावः=

**पदमञ्जरी**

कुः' अपृक्तग्रहणाद्वकारमात्रस्येदं ग्रहणम्, इकार उच्चारणार्थः ॥ ६७ ॥

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** ॥ दीर्घग्रहणं सम्भवव्यभिचाराभ्यां ङ्यापोरेव विशेषणम्। ङ्याब्ग्रहणं च सोर्विशेषणम्। हलपृक्तग्रहणं च तिस्योः। सुतिसीति त्रीणि पदानि। **तदिहेत्यादि**। प्रकृतस्य लोपशब्दस्य शास्त्रीयस्य भावसाधनस्य सुतिसीति प्रथमान्तेन सम्बन्धाभावादिति भावः। अपर आह—'हल्ङ्याब्भ्यः' इति पञ्चम्या सुतिसीत्यादिकायाः प्रथमायाः षष्ठ्यां प्रकल्पितायां शास्त्रीयेऽपि लोपशब्दे न दोषः इति। **अभिनोऽत्रेति**। भिदेर्लङि सिलोपः, 'दश्च' इति दकारस्य रुत्वम्, तस्य 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, श्नमोऽकारेण 'आद्गुणः' 'एङः पदान्तादति' इति पूर्वरूपम्।

**भावबोधिनी**

उसका लोप होता है। ''ब्रह्मभ्रूणवृत्रेषु क्विप्'' ( पा० सू० ३।२।८७ ) से क्विप् करने पर—ब्रह्महा। भ्रूणहा। [ ब्रह्म+हन्+क्विप्=व् का लोप सु परे का रूप है। ] ''स्पृशोऽनुदके क्विन्'' ( पा० सू० २।२।५८ ) से क्विन् करने पर—घृतस्पृक्, तैलस्पृक्। [ घृतं स्पृशति—इस विग्रह में क्विन्=वि का लोप होता है। ] ''भजो ण्विः'' ( पा० सू० ३।२।६२ ) से ण्वि करने पर—अर्धभाक्, पादभाक्, तुरीयभाक्। [ अर्धं भजति—आदि अर्थों में ण्वि होता है। णित् होने से उपधा की वृद्धि करने बाद ज् का कुत्व, चर्त्व आदि करने पर रूप बनते हैं। ]

अपृक्त [ 'अपृक्त एकाल् प्रत्ययः' सूत्रबोधित ] का लोप—इसका क्या फल है ? ''वृदृभ्यां विन्'' सूत्र से विन् प्रत्यय होता है। [ यहाँ 'वि' अपृक्त नहीं है। अतः लोप नहीं होता है। ] ''कृगृशृसृजागृभ्यः क्विः' से क्वि प्रत्यय—जागृविः। [ यहाँ भी 'वि' अपृक्त न होने से लोप नहीं होता है ॥ ६७ ॥

'लोपः' इसकी अनुवृत्ति होती है। वह यहाँ लौकिक अर्थ से अर्थवाला कर्म अर्थ में प्रत्ययवाला समझना चाहिए—लुप्यते इति लोपः। [ कर्म में घञ् करके लोप बनाया है। पारिभाषिक लोप=अदर्शन है। हल् अदर्शन

हलन्तादेव तिलोपः, सिलोपश्च। तत्र तिलोपस्तावत्—अबिभर्भवान्। भृञो लङि तिपि 'श्लौ', 'भृञामित्' (७.४.७६) इत्यभ्यासस्येत्त्वम्। अजागर्भवान्। सिलोपः—अभिनोऽत्र (म० भा०)। अच्छिनोऽत्र। दस्य रेफः।

**न्यासः**

अदर्शनम्, न च हलदर्शनं भवति। न च 'हल्ङ्याब्भ्यः' इति पञ्चमी हलिति प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति। सामर्थ्याद्वा हलित्यस्य षष्ठ्यन्ततया विपरिणामो भविष्यति, अतः षष्ठ्यन्तस्य लोपशब्देन सम्बन्धो भविष्यतीति शक्यं प्रकल्पयितुम्; अकृतार्थत्वात् प्रथमायाः षष्ठीभावस्यानुपपत्तेरित्येतदालोच्याह—**तदिहेत्यादि**। **लुप्यत इति लोपः**। कर्मणि घञ्। एतेन लौकिकार्थेनार्थवत्त्वं लोपशब्दस्य दर्शयति। लुप्यत इति निरुध्यत इत्यर्थः। लौकिकेनार्थेनार्थवता कर्मसाधनेन लोपशब्देन हलित्येतस्य विशेषणविशेष्यभाव उपपद्यते। लोपशब्देन हि लुप्यमानं वर्णमात्रमुच्यते। **सुतिस्यपृक्तं हलिति**। अनेन च तदेव विशिष्यते। **दीर्घादिति**। एतच्च ङ्यापोरेव विशेषणम्; सम्भवाव्यभिचारात्, न तु हलन्तस्य; असम्भवात्। **उखास्रत्**। **पर्णध्वदिति**। 'स्रन्सु ध्वन्सु अधःपतने', उखायां स्रंसते, पर्णानि ध्वंसत इति क्विप्, 'अनिदिताम्' इत्यनुनासिकलोपः, 'वसुस्रंसुध्वंस्वनडुहां दः' इति दकारः, तस्य 'वावसाने' चर्त्वम्—तकारः। **कुमारीति**। 'वयसि प्रथमे' इति ङीप्। **गौरीति**। 'षिद्गौरादिभ्यश्च' इति ङीष्। **शार्ङ्गरवीति**। 'शार्ङ्गरवाद्यञो ङीन्।' **खट्वेति**। 'अजाद्यतष्टाप्' इति टाप्। **बहुराजेति**। 'डाबुभाभ्यामन्यतरस्याम्' इति डाप्। **कारीषगन्ध्येति**। 'यङश्चाप्।'

**हलन्तादेव तिलोपः सिलोपश्चेति**। ननु ङ्याबन्तादित्येवकारेण दर्शयति, न हि ङ्याबन्तात् परौ तिसी सम्भवतः; धातोरेव परस्य लकारस्य तयोर्विधानात्। **अबिभर्भवानिति**। गुणे रपरत्वे च कृते तिलोपः।

**पदमञ्जरी**

**निष्कौशाम्बिरिति**। ननु च प्रत्ययग्रहणपरिभाषया (पुरु० परि० २५) तदादिग्रहणादेवात्र न भविष्यति, इहापि तर्हि न स्यात्—परमकुमारी परमखट्वेति? 'स्त्रीप्रत्यये चानुपर्जने न' (पुरु० परि० २७) इति तदादिनियमाभावाद्भविष्यति। निष्कौशाम्बिरित्यादौ उपसर्जनत्वाद्भवत्येव तदादिनिमः? एवं तर्हि एतज्ज्ञापयति—उपसर्जनेऽपि स्त्रीप्रत्यये तदादिनियमोऽत्र न भवतीति। तेनार्द्धं पिप्पल्या अर्द्धपिप्पलीत्यादौ 'एकविभक्ति च' इत्युपसर्जनत्वे सत्यपि लोपो भवति। नात्रोपसर्जनं पिप्पली; एकविभक्तावषष्ठ्यन्तमिति वचनात्। अत एव 'गोस्त्रियोरुपर्जनस्य' इति ह्रस्वत्वं न भवति। मा भूच्छास्त्रीयमुपसर्जनम्, अप्रधानं तावद्भवत्येवं—बह्व्यः श्रेयस्योऽस्य बहुश्रेयसीति? शास्त्रीयमप्युसर्जनत्वमस्ति, 'ईयसश्च' इति कपः प्रतिषेधः, 'ईयसो बहुव्रीहौ प्रतिषेधो वक्तव्यः' (वा० १८, काशिका प्र० भा० पृ० ५५) इति ह्रस्वाभावः। अपर आह—'निष्कौशाम्बि-

**भावबोधिनी**

नहीं हो सकता है।] हलन्त, दीर्घ ङ्यन्त और आबन्त—इन से परे सु, ति, सि—इनका जो अपृक्त हल् वह लुप्त हो जाता है। हलन्त से सुलोप का उदा०—राजा, तक्षा, उखास्रत्, पर्णध्वत्। [राजन्+सु, तक्षन्+सु, उखास्रंस्+सु, पर्णध्वंस्+सु—इनमें उ का लोप करने बाद स् अपृक्त लुप्त हो जाता है।] ङ्यन्त से सुलोप का उदा०—कुमारी, गौरी, शार्ङ्गरवी। [कुमारी ङीप्प्रत्ययान्त, गौरी ङीष्प्रत्ययान्त, शार्ङ्गरवी ङीन् प्रत्ययान्त हैं। सभी ङ्यन्त हैं, अतः सुलोप हो जाता है।] आबन्त से सुलोप के उदा०—खट्वा, बहुराजा, कारीषगन्ध्या। [खट्वा यह टाबन्त है। 'बहुराजा' यह बहुव्रीहि 'डाबुभाभ्यामन्यतरस्याम्'' सूत्र से डाबन्त है और कारीषगन्ध्या—यह ष्यङ् प्रत्ययान्त होने से 'यङश्चाप्' सूत्र से चाप् प्रत्ययान्त है। अतः सभी आबन्त हैं। सु का लोप हो जाता है।]

ति और सि का लोप केवल हलन्त से ही होता है। तिलोप का उदा०—अबिभर् भवान्। √भृञ् धातु से लङ्=तिप् परे रहते [शप् का श्लु और] ''श्लौ'' सूत्र से द्वित्व [गुण, रपर हलादिशेष जश्त्वादि के बाद अ ब भर्+

हल्ङ्याब्भ्य इति किम् ? ग्रामणीः । सेनानीः । दीर्घादिति किम् ? निष्कौशाम्बिः । अतिखट्वः । सुतिसीति किम् ? अभैत्सीत् । तिपा सहचरितस्य सिशब्दस्य ग्रहणात्सिचो ग्रहणं नास्ति । अपृक्तमिति किम् ? भिनत्ति, छिनत्ति[1] ।

**न्यासः**

**अजागर्भवानिति** । 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणः । भवानित्यनुप्रयोगस्तिशब्दाभिव्यक्तये । **अभिन इति** । भिदेर्लङ्, 'दश्च' इति रुत्वम्, 'अतो रोरप्लुतादप्लुते' इत्युत्वम् श्नमोऽकारेण सह 'आद्गुणः', 'एङः पदान्तादति' इति पूर्वरूपत्वम् ।

**ग्रामणीरिति** । ग्रामं नयतीति 'सत्सूद्विष' इत्यादिना क्विप् । **निष्कौशाम्बिरिति** । निर्गतः कौशाम्ब्या इति प्रादिसमासः, 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम् । **अतिखट्व इति** । खट्वामतिक्रान्त इति पूर्ववत् समासे कृते ह्रस्वः । **अभैत्सीदिति** । 'वदव्रज' इति वृद्धिः, अपृक्त इट् । ननु सीति सामान्येन निर्देशात् सिचोऽपि ग्रहणम्, अतो न युक्तमिदं प्रत्युदाहरणम् ? अत आह—**तिसहचरितस्येत्यादि** । तिङ्तिशब्देन साहचर्य्यात् तिङ एव सेर्ग्रहणम्, न सिच इति किमत्रायुक्तम् ! **बिभेदेति** । णलोऽकारोऽत्र भवत्यपृक्तः, न तु हल् इति नासौ लुप्यते ।

**पदमञ्जरी**

रित्यादौ समुदायस्य ङ्याबन्तत्वेऽपि यदत्र ङ्याबन्तं कौशाम्ब्यादि, ततः परस्य सोर्लोपः प्राप्नोति दीर्घग्रहणाद्-व्यावर्त्तते' इति । ननु च विहितविशेषणं विज्ञायते—ङ्याबन्ताद्विहितस्येति ? नैवं शक्यम्; या, सा, केत्यादौ न स्यात्, न ह्यत्र टाबन्तात्सुब्विहितः । मा भूदेवम्, हलन्ताद्विहित इत्येवं भविष्यति । यद्येवम्, यः, सः क इत्यत्रापि स्यात्, कर्त्ता हर्तेत्यादौ च न स्यात्, न ह्यत्र हलन्तात् सुर्विहित इति ? अतोऽन्यस्मादपि विहितस्य हल्ङ्याब्भ्योऽनन्तस्य लोप इत्यास्थेयम् । एवं च निष्कौशाम्ब्यादावपि लोपः प्राप्तो दीर्घग्रहणेन व्यावर्त्तनीयः **तिपा सहचरितस्येति** । तिपा[2] तिशब्देन साहचर्यात् सिनापि[3] तिङ एव ग्रहणमित्यर्थः ।

**भावबोधिनी**

ति ] ''भृञामित्'' सूत्र से अभ्यास के अ का इत्व [ अबिभर् + ति, 'इतश्च' से इलोप के बाद अपृक्त त् का लोप इस सूत्र से होने से—] अबिभर् [ विसर्ग करने पर अबिभः । ] अजागर् भवान् । [ अ जागृ + लङ् = ति, ''जाग्रोऽविचिण्ण-ल्ङित्सु' सूत्र से गुण, रपर अजागर् + ति, इलोप, त् लोप, विसर्ग—अजागः ] सिलोप के उदा०—अभिनोऽत्र । अच्छिनोऽत्र । द् का रेफ होता है । [ अभिद् + लङ् = सि, श्नम् = न अभिनद् + सि, इलोप, स्लोप—अभिनद् के द् का रु ''दश्च'' सूत्र से । ''अतो रोरप्लुतादप्लुते'' सूत्र से रु का 'उ' अभिन + उ, ''आद्गुणः'' से गुण 'अभिनो + अत्र, ''एङः पदान्तादति'' सूत्र से पूर्वरूप—अभिनोऽत्र । अछिद् + लङ्=सि, यहाँ भी तुक्, श्चुत्व शेष पूर्वोक्त सारी प्रक्रिया होती है— अच्छिनोऽत्र । ]

हलन्त, ङ्यन्त और आबन्त—इन्हीं से परे लोप होता है—इसका क्या फल है ? ग्रामणीः, सेनानीः [ ग्रामं नयति, सेनां नयति—इन अर्थों में क्विप् प्रत्ययान्त रूप हैं । हलन्तादि से परे न होने से सु का लोप नहीं होता है । ] दीर्घ से परे—इसका क्या फल है ? निष्कौशाम्बिः । अतिखट्वः । [ निष्क्रान्तः कौशाम्ब्याः, खट्वाम् अतिक्रान्तः—इन अर्थों में प्रादिसमास करने के बाद ''गोस्त्रियोरुपसर्जनस्य'' सूत्र से ह्रस्व हो जाता है । अतः ङ्यन्त और आबन्त होने पर भी दीर्घ नहीं है अतः सुलोप न होकर विसर्ग होता है । ]

सु, ति, सि— इन्हीं का लोप होता है—इसका क्या फल है ? अभैत्सीत् । [ अभिद् + सिच् + तिप्, इलोप, वृद्धि, ईट्, वृद्धि, चर्त्व—अभैत् स् + ईत् में 'सि' है किन्तु सिप् प्रत्यय का नहीं है अतः लोप नहीं होता है । ] तिप्

१. 'बिभर्ति' इत्यधिकमेकस्मिन्पुस्तके । २. तिङा इति पाठभेदः । ३. सेरपि ।

हलिति किम् ? बिभेद । चिच्छेद ।

अथ किमर्थं हलन्तात्सुतिसीनां लोपो विधीयते, संयोगान्तलोपेनैव सिद्धम् ? न सिद्धयति; राजा

**न्यासः**

**संयोगान्तलोपनैव सिद्धमिति ।** राजेत्यादिकमुदाहरणमिति शेषः । कथं पुनर्न सिध्यति ? इत्यत आह— **राजा, तक्षेत्यादि ।** यथा पचन्नित्यत्र संयोगान्तलोपस्यासिद्धत्वान् नलोपो न भवति; तथा राजा, तक्षेत्यादावपि न स्यात् ! संयोगान्तलोपासिद्धत्वं चात्र पारम्पर्य्येण हेतुः । तस्मिन् सति हि सौ परतः पूर्वस्य पदसंज्ञा न भवति; 'असर्वनामस्थाने' इति प्रतिषेधात् । तस्यां चासत्यां पदस्येत्युच्यमानो नलोपो न स्यात्, नलोपे चासति राजेत्यादिकं रूपं न सिध्येत् । **दत्वमिति ।** न स्यादिति प्रकृतेन सम्बन्धनीयम् । दत्वमपि हि संयोगान्तलोपस्यासिद्धत्वादसत्यां पदसंज्ञायां न स्यात् । अथ वा—संयोगान्तलोपोऽत्र न प्रवर्त्तत एव, तस्य 'स्कोः संयोगाद्योरन्ते च' इति संयोगादिलोपोऽपवादभूत इति स एव स्यात्, यथा—काष्ठं तक्ष्णोतीति काष्ठतडित्यत्र । तस्मिञ्च सति विभक्तिसकारस्य रुत्वविसर्गौ स्यातामिति कुतो दत्वम् ? **उत्वमिति ।** न स्यादित्यपेक्षते, एतदपि संयोगान्त-

**पदमञ्जरी**

**अथ किमर्थमित्यादि ।** 'ङ्यापोर्दीर्घात्सुः' इत्येव वक्तव्यमिति चोद्यार्थः । **न लोपो न स्यादिति ।** ननु च 'न ङिसम्बुद्धयोः' इति ज्ञापकान्नलोपे कर्त्तव्ये संयोगान्तलोपः सिद्ध एव भविष्यति ? न; पचन्नित्यादावपि प्रसङ्गात् । नकारसंबुद्धयोरानन्तर्ये प्रतिषेधो विज्ञायमानस्तुल्यजातीये नकारविभक्त्योरानन्तर्य एव संयोगान्तलोपस्य सिद्धत्वं ज्ञापयति । पचन्नित्यादौ तु तकारेण व्यवहितत्वाद् ज्ञापकाभावाल्लोपाभावः ?—इत्याशङ्क्य दोषान्तरमाह— **उखास्रत्, पर्णध्वदिति । दत्वमिति ।** न स्यादित्यनुषङ्गः । उखास्रस् + सु इति स्थिते संयोगान्तलोपमपवादत्वाद् बाधित्वा 'स्कोः संयोगाद्योः' इति प्रकृतिसकारस्य लोपे श्रूयमाणः सकारो न वस्वादिसम्बन्धीति 'वसुस्रंसु' इति दत्वं न स्यात् । न च संयोगादिलोपं बाधित्वा पूर्वमेव प्रकृतिसकारस्य दत्वं लभ्यते; अपदान्तत्वात् । न हि सौ श्रूयमाणे पूर्वस्य पदसंज्ञाऽस्ति; 'असर्वनामस्थाने' इति प्रतिषेधात् । अथापि सावपि पदत्वमिति पक्षाश्रयेण स्यात्पदत्वम् ? एवमपि दत्वस्यासिद्धत्वात्पूर्वं संयोगादिलोप एव स्यात् । ननु च वस्वादीनां दत्वं सौ दीर्घत्वे सिद्धमिति वक्ष्यति तत्र, सौ दीर्घग्रहणं न करिष्यते वस्वादीनां दत्वमित्येव, ततश्च पूर्वमेव दत्वं भविष्यति ? एवमपि राजा, तक्षेत्यादौ सावपि पदत्वे सति संयोगान्तलोपस्यासिद्धत्वात्पूर्वं नलोपे सति असंयोगान्तत्वात्सोर्लोपो न स्यात् । तस्मात्सुष्ठूक्तम्—दत्वं न स्यादिति । **उत्वमिति ।** न स्यादित्यनुषङ्गः । स एव हेतुः—संयोगान्तलोपस्यासिद्धत्वादिति । एतच्च 'संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः' ( वा० ९०१ ) इत्येतदनाश्रित्योक्तम् । तदाश्रयणे तु—'हरिवो मेदिनीम्' ( तै० सं० ४।७।१४।४ ) इत्यादिवत्सिद्धम् । **रात्सस्येति नियमाल्लोप एव न स्यादिति ।** ननु 'रात्सस्य' इति द्वितकारकनिर्देशात्तकारस्यापि प्रश्लेषाद्रेफा-

**भावबोधिनी**

के सहचरित सि अर्थात् सिप् का ग्रहण होने से सिच् के सि का ग्रहण नहीं होता है ।

अपृक्त=एकाल् प्रत्यय का ही लोप—इसका क्या फल है ? भिनत्ति, छिनत्ति । [ ति एक अल् वाला नहीं, दो अलों वाला है अतः हल् से परे होने पर भी लोप नहीं होता है । ]

अपृक्त हल् का लोप इसका क्या फल है ? बिभेद । चिच्छेद । [ भिद् + लिट् = तिप् = णल् अ, द्वित्व अभ्यास कार्य के बाद बिभेद् = अ, यह तिप् का अ है किन्तु हल् नहीं है अतः लोप नहीं होता है । ]

प्रश्न यह है कि हलन्त से परे सु, ति, सि का लोप किया जा रहा है, यह तो 'संयोगान्तस्य लोपः' से संयोगान्तलोप

तक्षेत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न स्यात्। उखास्रत्, पर्णध्वदित्यत्रापदान्तत्वाद्दत्वं च न स्यात्। अभिनोऽत्रेत्यत्र 'अतो रोरप्लुतादप्लुते' (६.१.११३) इत्युत्वं न स्यात्। अबिभर्भवानित्यत्र तु 'रात्सस्य' (८.३.२४) इति नियमाल्लोप एव न स्यात्।

संयोगान्तस्य लोपे हि नलोपादिर्न सिद्धचति।
रात्तु ते नैव लोपः स्याद्, हलस्तस्माद्विधीयते ॥

**न्यासः**

लोपस्यासिद्धत्वात्। अलब्धपदव्यपदेशस्य न स्यात्। **रात्सस्येति नियमादिति**। 'संयोगान्तस्य लोपः' इत्यनेनैव सिद्धेः। 'रात्सस्य' इति नियमार्थमिदम्–रात्सस्यैव लोपो यथा स्यान्नान्यस्येति। ततश्चाबिभर्भवानित्यत्र तकारस्य लोप एव न स्यात्। तस्मात् संयोगान्तलोपेन न सिध्यतीति हलन्ताल्लोप उच्यते।

अस्यैवार्थस्य सुखोपग्रहणार्थं **संयोगान्तस्य लोपे हीत्यादि** संग्रहश्लोकस्योपन्यासः हिशब्दो हेतौ। यस्मात् संयोगान्तलोप आश्रीयमाणे नलोपादिकं कार्यं न सिध्यतीति। किञ्च—ते = तव, भवतः संयोगान्तलोपवादिनः, रात्तु=रेफात्तु परस्य तकारस्याबिभर्भवानजगर्भवानित्यत्र नैव लोपः स्यात्। तस्माद्धलन्तात् सुतिसीनां लोपो विधीयते ॥ ६८॥

**पदमञ्जरी**

दुत्तरस्य च तकारस्यापि लोपो विधास्यते ? यद्येवम्, कीर्त्तयतेः क्विपि 'कीः' इति स्यात्, यथान्यासे तु कीर्दिति भवति। तदेवं सिग्रहणमेकं न कर्त्तव्यम्, अन्यत्सर्वं कर्त्तव्यमिति स्थितम्।

**संयोगान्तस्य लोपे हीत्यादि**। संग्रहश्लोकः। हिशब्दो हेतौ, नलोपादीत्यादिशब्देन दत्वोत्वयोर्ग्रहणम्। ये तु संयोगान्तलोपवादिनस्तेषां रेफादुत्तरस्य तकारस्य अबिभर्भवानित्यत्र नैव लोपः स्यात्, तस्माद्धल उत्तरेषां सुतिसीनां लोपो विधीयते ॥ ६८ ॥

**भावबोधिनी**

मान कर ही सिद्ध हो सकता है ? नहीं सिद्ध हो सकता है, क्योंकि राजा, तक्षा—इनमें संयोगान्त-लोप के असिद्ध हो जाने से 'न्' का लोप नहीं हो सकेगा। [ "संयोगान्तस्य लोपः" ८।२।२३ होने से त्रिपादी का है और प्रस्तुत सूत्र सपादसप्ताध्यायी का है। अतः "पूर्वत्रासिद्धम्' सूत्र से संयोगान्तलोप असिद्ध हो जाने पर 'नलोपः प्रातिपदिकान्तस्य" से न् लोप नहीं हो सकेगा। ] उखास्रत्, पर्णध्वत्–इनमें अपदान्त हो जाने से "वसुस्रंसु०" सूत्र से स् का द् नहीं हो सकेगा। और 'अभिनोऽत्र' यहाँ पर "अतो रोरप्लुतादप्लुते' सूत्र से उत्व नहीं हो सकेगा [ क्योंकि संयोगान्तलोप असिद्ध हो जाने पर मध्य में स् का व्यवधान हो जायगा। ] और 'अबिभर्भवान्' यहाँ 'रात्सस्य' सूत्र नियम से स् का लोप ही नहीं होगा [ क्योंकि अबिभर् त् यहाँ 'संयोगान्तलोप' से निर्वाह सम्भव रहने पर जो 'रात्सस्य' सूत्र बनाया गया वह नियमार्थ होता है—र् से परे स् का ही लोप होता है। इस लिए 'त्' का लोप ही नहीं हो सकेगा। इनसभी अनुपपत्तियों को देख कर प्रस्तुत सूत्र से ही सु, ति, सि के अपृक्त हल् के लोप का विधान किया गया। इसी विषय को एक श्लोक में संग्रह करके यहाँ प्रस्तुत किया गया है—]

संयोगान्त का लोप करने पर न्–लोप आदि सिद्ध नहीं होते हैं। र् से त परे रहते उसका लोप नहीं होता है, इस लिये हलन्त से परे [ सु, ति सि – के ] लोप का विधान किया जाता है। [ ऊपर के उदाहरणों में इसकी व्याख्या का आशय आ चुका है ] ॥ ६८ ॥

## २५०९. एङ्ह्रस्वात्सम्बुद्धेः ॥ ६९ ॥ ( १९३ )

'लोपः' इति वर्त्तते, 'हल्' इति च। 'अपृक्तम्' इति नाधिक्रियते, तथा च पूर्वसूत्रे पुनरपृक्तग्रहणं कृतम्। एङन्तात्प्रातिपदिकाद् ह्रस्वान्ताच्च परो हल्लुप्यते स चेत्सम्बुद्धेर्भवति। एङन्तात्—हे अग्ने, हे वायो। ह्रस्वान्तात् —हे देवदत्त, हे नदि, हे वधु, हे कुण्ड!। कुण्डशब्दाद् 'अतोऽम्' ( ७.१.२४ ) इत्यम्, 'अमि पूर्वः' ( ६.१.१०७ ) इति पूर्वत्वे कृते हल्मात्रस्य मकारस्य लोपः।

हे कतरदित्यत्र डिदयमद्डादेशः ( ७.१.२५ ), तत्र टिलोपे सति ह्रस्वाभावान्नास्ति सम्बुद्धिलोपः।

### न्यासः

**एङ्ह्रस्वात् सम्बुद्धेः॥ हलिति चेति।** वर्त्तत इत्यपेक्षते। यदि हलिति नानुवर्त्तेत, तदा हे कुण्ड + सु इति स्थिते लोपात् पदत्वादम्भावे कृते 'आदेः परस्य' इत्यकारलोपे 'सुपि च' इति दीर्घत्वे च हे कुण्डामित्यनिष्टं रूपं स्यादित्यभिप्रायः। **अपृक्तमिति नाधिक्रियत इति।** यदि ह्यपृक्तमिहानुवर्त्तेत, तर्हि हे कुण्डेत्यत्र लोपो न स्यात्; अपृक्तसंज्ञाया अभावादिति भावः। कथं पुनर्ज्ञायते—अपृक्त इह नानुवर्त्तते? इत्याह—**तथा चेत्यादि।** तथा चेति हेतौ। यस्मात् पूर्वसूत्रेऽपृक्तग्रहणं कृतमतोऽवसीयते—नात्र प्रकरणेऽपृक्तग्रहणस्यानुवृत्तिरस्तीति; अन्यथा

### पदमञ्जरी

**एङ्ह्रस्वात्सम्बुद्धेः॥** अत्र यदि हल्ग्रहणं नानुवर्तेत, तत एङ्ह्रस्वाभ्यां सम्बुद्धिरेव विशेषणीया—एङन्ताद् ह्रस्वान्ताच्च परस्याः सम्बुद्धेर्लोप इति, ततश्च हे कुण्डेत्यत्र न स्यात्। कथम्? कुण्ड + सु इति स्थिते लोपश्च प्राप्नोत्यम्भावश्च, तत्र लोपः शब्दान्तरप्राप्त्याऽनित्यः, स हि कृतेऽम्भावे 'आदेः परस्य' इत्यमोऽकारस्य प्राप्नोति, अकृते तु सकारस्य, अम्भावस्तु लोपे कृतेऽप्यन्ताप्राप्त्याऽनित्यः—इत्युभयोरनित्ययोः परत्वादम्भावे कृतेऽमि पूर्वस्य प्राप्नोति लोपश्च। तत्रामि पूर्वत्वे कृते व्यपवर्गाभावादुभयत आश्रयणेऽन्तादिवद्भावाभावाच्च लोपो न प्राप्नोति, लोपे च कृतेऽमोऽभावादमिपूर्वत्वं न प्राप्नोतीत्युभयोरनित्ययोः परत्वादमि पूर्वत्वे कृते लोपो न स्यात्, तस्मादनुवर्त्यं हल्ग्रहणम्। तदाह—**हलिति चेति।** 'वर्त्तते' इत्यपेक्षते। **अपृक्तमिति नाधिक्रियत इति।** यद्यधिक्रियेत, हे कुण्डेत्यत्र न स्यात्; अपृक्तसंज्ञाया अभावात्। कथं पुनर्ज्ञायते—नायमधिक्रियत इति? तत्राऽऽह—**तथा चेति।** अनुवर्तमानेऽपि हल्ग्रहणे यद्येङ्ह्रस्वाभ्यां सम्बुद्धिर्विशेष्येत, तया हल् विशेष्येत—एङन्ताद् ह्रस्वान्ताच्च परा या सम्बुद्धिस्तस्या हल्लुप्यते इति, ततः हे कुण्डेत्यत्र न स्यात् पूर्वोक्तादेव हेतोः। अत एङ्ह्रस्वाभ्यां सम्बुद्ध्या च हलेव विशेषणीय इति मत्वाऽऽह—**एङन्तात्प्रातिपदिकादित्यादि।** सम्बुद्ध्याक्षिप्तप्रातिपदिकमेङ्ह्रस्वाभ्यां विशेष्यत इति तदन्तविधिलाभः। अत्र पक्षे कुण्डेत्यत्रामि पूर्वत्वस्य पूर्वं प्रत्यन्तवद्भावाद् ह्रस्वान्तात्परो हल्भवति। वस्तुतश्च सम्बुद्धेरिति लोपः सिद्ध्यति।

**[1]अच्छब्द इति।** एतच्च तत्रैव[2] व्याख्यास्यते। **ह्रस्वाभावादिति।** ननु चाद्डेवाकारो ह्रस्वः, ततः

### भावबोधिनी

'लोपः' और 'हल्' इनकी अनुवृत्ति होती है। 'अपृक्त=एकाल् प्रत्यय' इसकी अनुवृत्ति नहीं होती है। और इसी लिए [ 'वेरपृक्तस्य' में होने पर भी ] पूर्ववर्ती सूत्र में अपृक्त का दुबारा उल्लेख किया गया है। एङन्त प्रातिपदिक से और ह्रस्वान्त प्रातिपदिक से परे हल् का लोप होता है यदि वह 'हल्' सम्बुद्धि ( =सम्बोधन एकवचन ) का होता है। उदा०—एङन्त से—हे अग्ने!, हे वायो!। [ यहाँ सम्बोधन एकवचन में सु के उ का लोप करने के बाद स् का लोप हो जाता है। ] ह्रस्वान्त से लोप के उदा०—हे देवदत्त!, हे नदि!, हे वधु!, हे कुण्ड! [ वायु+सु, अग्नि+सु में 'ह्रस्वस्य गुणः' सूत्र से गुण करने पर एङन्त हो जाने से सुलोप हो जाता है।

१. काशिकायां नेदं पदम्।　　२. ७।१।२५ सूत्रे पदमञ्जर्याम्।

**एङ्ग्रहणं क्रियते सम्बुद्धिगुणबलीयस्त्वात् ॥**

**न्यासः**

हि 'वेरपृक्तस्य' इत्यत एवापृक्तग्रहणमनुवर्त्तिष्यत इति। पुनरपृक्तग्रहणं पूर्वसूत्रे न क्रियेतेति। **स चेत् सम्बुद्धेर्भवतीति**। यदि सम्बुद्धेः सम्बद्धो भवतीत्यर्थः। एतेन सम्बुद्धेरित्यस्यावयवषष्ठ्यन्ततां दर्शयति। **हे अग्ने हे वायो इति**। 'ह्रस्वस्य गुणः'। **हे नदि, हे वध्विति**। 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वम्। **हल्मात्रस्य मकारस्य लोप इति**। हलित्यनुवृत्तेः।

हे कतरदित्यत्रैकादेशे कृते ह्रस्वात् सम्बुद्धेर्हल् भवतीति तस्य लोपः कस्मान्न भवति ? इत्याह - **हे कतरदित्यादि**। 'अद्ड्डतरादिभ्यः' इत्यत्र द्विडकारनिर्देशाड् डिच्छब्द आदेशो भवतीति डित्वाट् टिलोपे ह्रस्वो नास्तीति न भवति लोपः।

अथैङ्ग्रहणं किमर्थम्, यावता हे अग्ने इत्यादावपि प्रागेव सम्बुद्धिगुणाद् ह्रस्वादित्येवं लोपेन भवितव्यम् ?

**पदमञ्जरी**

परो हल् भवति, सम्बुद्धेश्च सम्बन्धीति लोपः स्यादेव, सम्बुद्धौ तु विशेष्यमाणायां प्रकृत्यकारस्य लोपे ह्रस्वात्परा सम्बुद्धिर्न भवतीति लोपाप्रसङ्गः ? उच्यते; 'सम्बुद्ध्याक्षिप्तं प्रातिपदिकमेङ्ह्रस्वाभ्यां विशेष्यते' इत्युक्तम्, तेन कुण्डेत्यत्र न भविष्यति; एकादेशस्य पूर्वं प्रत्यन्तवद्भावात् प्रकृतिग्रहणेन ग्रहणात्। हे कतरदित्यत्र च न भविष्यति; टिलोपे कृते प्रकृतेरह्रस्वान्तत्वात्। **सम्बुद्धिगुणबलीयस्त्वादिति**। अन्यथा अग्नि + सु इति स्थिते सम्बुद्धिगुणश्च प्राप्नोति, ह्रस्वादिति लोपश्च; तत्र नित्यत्वात्परत्वाच्च सम्बुद्धिगुणे कृतेऽह्रस्वान्तत्वान्न भवेत्। ननु च विहितविशेषणं विज्ञास्यते-ह्रस्वान्ताद्विहिता या सम्बुद्धिरिति ? एवमपि हे खट्वेत्यत्र न स्यात्। मा भूदनेन, आबन्तत्वात्पूर्वेण भविष्यति ? एवमपि हे नदि, हे यवागु, हे कुमारीत्यत्र न स्यात्, न चात्र ङ्यन्तत्वाल्लोपो लभ्यते, दीर्घग्रहणात्। एवं तर्ह्युभयं विज्ञास्यते-विहितविशेषणम्, परविशेषणं च; तेनाग्ने, कुमारीत्यादौ सर्वत्र भविष्यति ? तत्र सकृच्छ्रुतस्य ह्रस्वग्रहणस्योभयविशेषणत्वमेव तावद् दुर्लभम्। अथापि लभ्यते ? एवमपि हे कतरदित्यत्र यद्यपि टिलोपे कृते सम्बुद्धेर्ह्रस्वपरत्वाभावः, तथापि ह्रस्वान्ताद्विहिता सम्बुद्धिरिति स्यादेव लोपः। तस्मादेङ्ग्रहणं कर्तव्यम्।

वयं तु ब्रूमः—ये स्वभावत एङन्तास्तदर्थमप्येङ्ग्रहणं कर्त्तव्यमिति। तद्यथा—हेशब्दमतिक्रान्तो ब्राह्मणोऽतिहेः, तस्य सम्बोधनं हे अतिहे; अनुकृतः पचतेशब्दो येन तस्य सम्बोधनं हेऽनुकृतपचते; विहित ईरेप्रत्ययो येन स विहितेरेः पाणिनिः, तस्य सम्बोधनम्—विहितेरे इत्यादि। अत्र संग्रहश्लोकः—

सम्बुद्धिर्ह्रस्वभेद्या यदि हि न च भवेन्नादिवन्नान्तवत्स्याद्,
दोषोऽसौ हल्निवृत्तावपि लुपि भवतोऽम् पूर्वरूपे परत्वात्।

**भावबोधिनी**

देवदत्त + सु, ह्रस्व से परे लोप होता है। हे नदि !, हे वधु ! यहाँ "अम्बार्थनद्योर्ह्रस्वः" सूत्र से ह्रस्व करने के बाद सुलोप होता है। ] हे कुण्ड ! यहाँ कुण्ड शब्द से परे सु का अम् 'अतोऽम्' सूत्र से होता है, "अमि पूर्वः" सूत्र से पूर्वरूप करने के बाद अवशिष्ट हल् मात्र मकार का का लोप होता है। [ वास्तव में यह द्राविड़ प्राणायाम न करके, अमादेश किये विना ही सु + स् का लोप करना चाहिए। ]

हे कतरत् ! यहाँ अद्ड् आदेश डित् है अतः टि का लोप कर देने पर ह्रस्व से परे नहीं है अतः सम्बुद्धि का लोप नहीं होता है। [ अतः सु के स्थान पर होने वाले अद्ड्=अत् के हल्=त् का लोप नहीं होता है। ]

## २५१०. शेश्छन्दसि बहुलम् ॥ ७० ॥ ( ३५१६ )

**'शि' इत्येतस्य बहुलं छन्दसि विषये लोपो भवति । या क्षेत्रा । 'या वना' ( अथर्व० १४.२.७ ) । 'यानि क्षेत्राणि' ( अथर्व० १४.२.७ ) । यानि वनानि ॥**

### न्यासः

इत्यत आह—**एङ्ग्रहणमित्यादि** । नित्यत्वात् परत्वाच्च सम्बुद्धिगुणो बलीयानिति तेनैव तावत् भवितव्यम्, तत्र कृते ह्रस्वात् परः सम्बुद्धेर्हल् न सम्भवतीति लोपो न प्राप्नोति, अत एङ्ग्रहणं क्रियते । ननु च विहित-विशेषणं विज्ञास्यते—ह्रस्वाद् विहितायाः सम्बुद्धेरिति ? नैतदस्ति; एका हीयं पञ्चमी, तत्र यदि ह्रस्वाद् विहितविशेषणं विज्ञायते तदेङन्तादपि विज्ञायेत । तथा च—हे गौरित्यत्रापि स्यात् । तस्मादेङ्ग्रहणं कर्त्तव्यम् ॥ ६९ ॥

**शेश्छन्दसि बहुलम्** ॥ 'जश्शसोः शिः' इति यः शिरादेशस्तस्यायं लोपो विधीयते । **या क्षेत्रा, या वना इति** । शेर्लोपे कृते प्रत्ययलक्षणेन 'नपुंसकस्य झलचः' इति नुम्, 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः, 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः ।

वेति कर्त्तव्ये बहुलग्रहणं सर्वविधिव्यभिचारार्थम् । तेन 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्युपपन्नं भवति ॥ ७० ॥

### पदमञ्जरी

ह्रस्वान्ताल्लुब्विधिः स्याद्धल इति कतरड्डित्त्वतो नो हलो लुप्,
ह्रस्वश्रुत्या न शक्यः परविहितविधिर्नातिहेऽतोऽप्यकार्येऽङ् ॥

लोपनं लुप्, लोप इत्यर्थः ॥ ६९ ॥

**शेश्छन्दसि बहुलम्** ॥ **या क्षेत्रेति** । शेर्लोपे कृते प्रत्ययलक्षणेन 'नपुंसकस्य झलचः' इति नुम् 'सर्वनामस्थाने च' इति दीर्घः, नलोपः ।

**अयं योगः** शक्योऽवक्तुम्, कथम् ? डादेशेन सिद्धत्वात् । कथम् 'अग्नेत्री' इति ? त्रि + इ इति स्थिते प्रथमयोः पूर्वसवर्णदीर्घत्वेनैव सिद्धम् । न सिद्धयति, नुमा व्यवहितत्वात् ? 'छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः, मधोर्गृह्लातीत्ये'वमाद्यर्थं पुंवद्भावेनैव नुमो निवृत्तिः । एवमपि 'जसि च' इति गुणः प्राप्नोति, वक्ष्यत्येतत्—'जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः' ( का० वा० ) इति । अपि च या क्षेत्रा, ता ता पिण्डानामिति त + इ इति स्थिते 'सुपां सुलुक्' इतीकारस्याकारे कृते 'प्रथमयोः पूर्वसवर्णः' इति दीर्घत्वेन सिद्धम् ॥ ७० ॥

### भावबोधिनी

एङ् का ग्रहण इसलिए किया जा रहा है कि [ पर और नित्य होने से ] सम्बुद्धि-निमित्तक गुण बलवत्तर है । [ वही होगा । ह्रस्व से परे नहीं मिलेगा । लोप नहीं हो सकेगा । अतः गुण के बाद भी लोप हो सके—इसके लिए एङ् का ग्रहण है ] ॥ ६९ ॥

'शि' इसका छन्दोविषय ( वेदविषय ) में बहुल रूप से लोप होता है । उदा०—या क्षेत्रा । या वना । [ क्षेत्र + जस् + शि, लोप करने के बाद प्रत्यय-लक्षण मान कर "नपुंसकस्य झलचः" सूत्र से नुम् 'सर्वमामस्थाने चासम्बुद्धौ'' सूत्र से दीर्घ करने के बाद ''नलोपः प्रातिपदिकान्तस्य'' सूत्र से न् का लोप करने पर—क्षेत्रा, वना, या—ये रूप हैं । जब शि—इ का लोप नहीं होता है तब ] यानि क्षेत्राणि । यानि बनानि ॥ ७० ॥

## २५११. ह्रस्वस्य पिति कृति तुक् ॥ ७१ ॥ ( २८५८ )

**पिति कृति परतो ह्रस्वान्तस्य धातोः तुगागमो भवति। अग्निचित्। सोमसुत्। प्रकृत्य। प्रहृत्य। उपस्तुत्य।**

**ह्रस्वस्येति किम्? आलूय। ग्रामणीः। पितीति किम्? कृतम्। हृतम्। कृतीति किम्? पटुतरः। पटुतमः। ग्रामणि ब्राह्मणकुलमित्यत्र ह्रस्वस्य बहिरङ्गस्यासिद्धत्वात् तुग्न भवति ॥**

### न्यासः

**ह्रस्वस्य पिति कृति लुक् ॥** कृतात्र प्रत्ययेन धातुरुपस्थाप्यते, ह्रस्वेन च स एव विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीत्यतो ह्रस्वान्तो धातुरागमी विज्ञायत इत्याह—**ह्रस्वान्तस्य धातोरित्यादि। अग्निचिदिति।** 'अग्नौ चेः' इति क्विप्। **सोमसुदिति:** 'सोमे सुञः' इत्युभयत्रोपपदसमासः। **प्रकृत्येत्यादौ** प्रादिसमासः। 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप्।

अथ ग्रामं नयतीति ग्रामणि ब्राह्मणकुलमित्यत्र नपुंसकह्रस्वत्वे कृते ह्रस्वाश्रयस्तुक् कस्मान्न भवति? इत्याह—**ग्रामणि ब्राह्मणकुलमित्यादि।** ह्रस्वत्वं हि नपुंसकार्थवृत्तिप्रातिपदिकमपेक्षत इति बहिरङ्गम्, अन्तरङ्गस्तु

### पदमञ्जरी

**ह्रस्वस्य पिति कृति तुक् ॥** कृता धातुराक्षिप्यते, स च ह्रस्वेन विशेष्यते, तेन तदन्तविधिर्भवतीत्याह—**ह्रस्वान्तस्य धातोरिति। अग्निचित्, सोमसुदिति।** 'अग्नौ चेः', 'सोमे सुञः' इति क्विप्।

ग्रामणिकुलमिति व्यस्तं चेन्नपुंसकह्रस्वत्वम् षष्ठीसमासे तु 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वः। अत्र नपुंसकह्रस्वत्वमर्थापेक्षत्वाद्बहिरङ्गम्; इतरदुत्तरपदापेक्षत्वात्।

यदि पुनरयं तुक् परादिः क्रियते? नैवं शक्यम्; इहाग्निचित्सोमसुत्, 'वेरपृक्तस्य' इति वलोपो न प्राप्नोति। इह च परितनोतीति क्विप्, 'क्वौ च गमादीनाम् (वा० ७८३) इत्यनुनासिकलोपः, 'नहिवृति' इत्यादिना दीर्घः—परीतत्, तुक आर्द्धधातुकभक्तत्वादिट्प्रसङ्गः। इह चावच्छद् 'वाऽन्यस्य संयोगादेः' इत्येत्वं प्रसज्येत। अथाभक्तः स्याद्, मधुच्छादयतीति 'तिङ्ङतिङः' इति निघातो न प्राप्नोति; तकारेण व्यवधानात्।

### भावबोधिनी

पित् कृत् प्रत्यय परे रहते ह्रस्वान्त धातु को तुक् का आगम होता है। उदा०—अग्निचित्। सोमचित्। [ अग्नि चिनोति, सोमं सुनोति—इन अर्थों में 'अग्नौ चेः' 'सोमे सुञः' सूत्रों से क्रमशः क्विप् प्रत्यय और उसका सर्वापहारी लोप करने के बाद प्रत्यय-लक्षण से पित्त्व मानकर प्रस्तुत सूत्र से तुक् = त् आगम धातु से होता है। ] प्रकृत्य। प्रहृत्य। उपस्तुत्य। [ प्र कृ + क्त्वा, प्रहृ + क्त्वा, उपस्तु + क्त्वा सभी में 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' सूत्र से क्त्वा का ल्यप् = य आदेश करने के बाद पित् परे मानकर धातु के बाद तुक् = त् आगम करने पर रूप बनते हैं। ]

ह्रस्वान्त को तुक् होता है—इसका फल है? आलूय। [ आङ् उपसर्ग पूर्वक लू + क्त्वा = ल्यप् = य, ग्रामणीः गामं नयति—इसमें—ग्राम + नी + क्विप् = ग्रामणीः में ह्रस्वान्त धातु न होने से तुक् नहीं होता हैं। ]

पित् प्रत्यय परे—इसका क्या फल है? कृतम्। हृतम्। [ कृ + क्त, हृ + क्त में कृत् तो है किन्तु वह पित् नहीं है। अतः तुक् नहीं होता है। ]

कृत् प्रत्यय परे रहते—इसका क्या फल है? पटुतरः। पटुतमः। [ पटु + तरप्, पटु + तमप्—यह पित् है किन्तु कृत् संज्ञक न होकर तद्धितसंज्ञक है। अतः तुक् नहीं होता हैं। ]

ग्रामणि ब्राह्मणकुलम्—यहाँ [ "ह्रस्वो नपुंसके प्रातिपदिकस्य" सूत्र से किया जाने वाला ] ह्रस्व बहिरङ्ग होने से असिद्ध हो जाता है अतः [ ह्रस्व से परे न होने से ] तुक् नहीं होता है। [ अन्यथा ग्रामं नयति—इस अर्थ में किये गये क्विप् को मान तुक् होने लगता। ] ॥ ७१ ॥

**वृक्षावित्यत्र सुबौकारः असुबकारः, तयोः सुबसुपोरेकादेशः सुप आदिवद्भवति । यथा शक्यते वक्तुम्—'सुबन्तं पदम्' ( १.४.१४. ) इति ।**

**वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यते, तथा हि- खट्वाभिरित्यत्रान्तवद्भावाभावाद् 'अतो भिस ऐस्' ( ७.१.९ ) इति न भवति । ह्वयतेः—जुहावेति सम्प्रसारणपूर्वत्वस्यादिवद्भावाभावाद् 'आत औ णलः'**

**न्यासः**

**वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यत इति।** कथमेतज्ज्ञायते ? इत्याह—**तथा** हीत्यादि । 'अतो भिस ऐस्' इत्यकारवर्णाश्रयो विधिः, तत्र कर्त्तव्ये खट्वाभिरित्यत्र सवर्णदीर्घत्वं पूर्वस्यान्तवन्न भवति । 'आत औ णलः' इत्याकारवर्णाश्रयोऽयं विधिः । तत्र कर्त्तव्ये वर्णाश्रये जुहावेत्यत्र 'अभ्यस्तस्य च' इति ह्वयतेः सम्प्रसारणे कृते यत् पूर्वरूपत्वमाकारस्य तन्नादिवद्भवति । 'एङः पदान्तादति' इत्येष विधिरेङ्वर्णाश्रयः ।

**पदमञ्जरी**

स्थानिनौ पूर्वपरावन्तादी तद्व्यपदेशयुक्तस्यैकादेशोऽप्यन्तादिवदित्यर्थः ? एतदुक्तं भवति--एकादेशात्प्राक् पूर्वपरयोः पृथगवस्थितयोस्ताभ्यां सह यो व्यपदेशः पूर्वपरसमुदायविषयो दृष्टः--प्रातिपदिकमिति वा, सुबन्तमिति वा, स व्यपदेश एकादेशे कृतेऽपि भवतीति । तदिदमुक्तम्—**यथा तस्यान्त आदिर्वा तदन्तर्भूत इत्यादि ।** तस्येत्यनेन एकादेशात्प्रागवस्थितः पूर्वः परश्च समुदायो निर्दिश्यते, अन्तादिशब्दाभ्यां च एकादेशस्य स्थानिनौ पूर्वपरौ । **तद्ग्रहणेन गृह्यत** इत्यनेनापि 'एतदुक्तं भवति' इत्यारभ्यानन्तरं यदुक्तमस्माभिस्तद्दर्शितम् । **एषोऽतिदेशार्थ इति ।** अतिदिश्यत इत्यतिदेशः, अतिदेशश्चासावर्थश्चेत्यतिदेशार्थः, कर्मधारयोऽयमर्थोऽत्राति-दिश्यत इत्यर्थः ।

**वर्णाश्रयविधावित्यादि ।** वर्णस्वरूपमाश्रित्य यद्विधीयते न तदन्तादिवद्भावेनातिदिश्यत इत्यर्थः । तत्कथम् ? नात्र ताद्रूप्यनिबन्धनं कार्यमतिदिश्यते, योऽयमन्त आदिर्वा प्रागेकादेशादवस्थितः पूर्वः परश्च तद्वदयमेकादेशो भवति । **तत्प्रयुक्तं कार्यं लभत इति ।** एवं च तद्वच्चेत्येव वक्तव्यं स्यात्, तच्छब्देन पूर्वापरौ परामृश्येते। एवं हि सिद्धेऽन्तादिवदिति वचनादन्तादित्वप्रयुक्तं कार्यमेकादेशस्य भवतु, पूर्वपरस्वरूपप्रयुक्तं तु कार्यं केन भवेत् ! लिङ्गं चात्र भवति तुक्यसिद्धवचनम्; अन्यथा अधीत्येत्यादावेकाशस्यादिवद्भावादेव तुकः सिद्धत्वादनर्थकं तत्स्यात् । **खट्वाभिरिति ।** तपरकरणं तु यत्रैकादेशो नास्ति तदर्थं स्यात्—शुभंयाभिरिति । **जुहावेति ।** 'अभ्यस्तस्य च' इति ह्वयतेः सम्प्रसारणे कृते जुहु + आ इति यत्पूर्वरूपत्वमाकारस्य तन्नादिवद्भवति, योऽयमादिराकारस्तद्वन्न भवति, तेन 'आत औ णलः' इति न भवति। **अस्यै अश्व इति ।** स्याटो विभक्त्ये-

**भावबोधिनी**

वृक्षौ---इसमें सुप् औकार है और असुप् अकार है—इन सुप् और असुप् का एकादेश ( औ ) सुप् का आदिवत् होता है । जिससे 'सुबन्त पद होता है' ऐसा कहा जा सकता है । [ अतिदेश से ही सुबन्तत्व होने से पदसंज्ञा होती है । ]

जहाँ वर्ण को मान कर कोई विधि की जाने वाली होती है वहाँ अन्तादिवद्भाव इष्ट नहीं है । वह इस प्रकार है—खट्वाभिः---इसमें अन्तवद्भाव न होने के कारण 'अतो भिस ऐस्' सूत्र से भिस् का 'ऐस्' नहीं होता है । [ खट्व + टाप् = आ यहाँ सवर्णदीर्घ एक आदेश होता है यहाँ पूर्व का ह्रस्वान्तत्व अतिदिष्ट नहीं होता है क्योंकि 'अतो भिस ऐस्' यहाँ अत् वर्ण को मान कर ऐस् विधि होनी है । ] √ 'ह्वेञ्'—जुहाव---इसमें सम्प्रसारण पूर्वत्व (पूर्वरूप) का आदिवद्भाव न होने के कारण 'आत औ णलः' सूत्र नहीं प्रवृत्त होता है । [ √ह्वे में 'आदेच उपदेशेऽशिति' इस सूत्र से ए का आत्व करने पर 'ह्वा' बनाने के बाद व् का सम्प्रसारण और 'आ' का पूर्वरूप कर देने पर 'हु' बनता है । हु + णल्, द्वित्वादि के बाद पूर्वरूप एक आदेश का आदिवद्भाव मानकर आकारान्त समझ कर णल् का औ नहीं होता है । ] अस्यै अश्वः

**( ७.१.३४ ) इति न भवति। अस्यै अश्वः, अस्या अश्व इति 'वृद्धिरेचि' ( ६.१.८८ ) इति वृद्धिः, 'एङः पदान्तादति' ( ६.१.१०९ ) इत्यत्र विधावादिवन्न भवति।**

**पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्त्यते। तत्रावयवयोरानुमानिकं स्थानित्वमिति**

**न्यासः**

तत्र कर्त्तव्ये—अस्यै अश्व इत्यत्र 'आटश्च' इति वृद्धिः परस्यादिवन्न भवति, तदभावादायादेशः', 'लोपः शाकल्यस्य' इति यकारलोपः। तत् किमेतद् वक्तव्यम् –वर्णाश्रये नान्तादिवदिति ? न वक्तव्यम्। कथम् ? अताद्रूप्यातिदेशात्। नेह ताद्रूप्यमतिदिश्यते, रूपाश्रयाश्चैते विधयः, तेनाताद्रूप्यान्न भविष्यन्ति।

किमर्थं पुनरयमन्तादिवद्भावो विधीयते, यावता पूर्वपरावुक्तावेकादेशस्य स्थानिनौ, अत्र स्थानिवद्भावादेव तदाश्रयं कार्यं भविष्यति ? इत्यत आह—**पूर्वपरसमुदाय एकादेशस्य स्थानीति**। कथं ज्ञायते ? इत्याह—**स हीत्यादि**। येन हि यो निवर्त्यत आदेशेन स तस्य स्थानीति, तद् यथा—'अस्तेर्भूः' इति। अत्र भुवोऽस्तिः, समुदायश्चेहैकादेशेन निवर्त्यत इति स एव तस्य स्थानी, न पूर्वपरौ समुदायिनौ। स्यादेतत्–अवयवस्य समुदायाभ्य-

**पदमञ्जरी**

**कारस्य योऽयं 'वृद्धिरेचि' इति वृद्धिरेकादेशः स परस्यादिवन्न भवति, तेन 'एङः पदान्तादति' इति न भवति। यत्र च युगपदुभयमाश्रीयते—अन्तश्चादिश्च, तत्राप्यन्तादिवद्भावो न भवति, यथा 'एतेर्लिङि' इति ह्रस्वत्वमुपसर्गात्परस्येणो विधीयमानम्—अभीयात्परोयादित्यादौ न भवति। यदि ह्ययमेकादेशः पूर्वं प्रत्यन्तवद् बुद्ध्या गृह्येत, स तदानीमेव कथं परं प्रत्यादिवत्स्यात् ! एवं परं प्रत्यादिवत्त्वे तदानीमेव पूर्वं प्रत्यन्तवद्भावोऽप्य-नुपपन्नः; एकस्योभयापेक्षया युगपत्पारतन्त्र्यस्य विरोधात्।**

**पूर्वापरेति। यो येन निवर्त्यते स तस्य स्थानी, यथा–भुवोऽस्तिः। समुदायश्चात्र निवर्त्यते, ततश्च तत्प्रयुक्तमेव कार्यं स्थानिवद्भावात्स्याद् यदि किञ्चिदस्ति, न तु प्रत्येकं पूर्वपरयुक्तम्। स्यादेतद्–अवयवयोरपि निवर्त्यमानत्वात्तयोरपि स्थानित्वम् ? इत्यत आह—तत्रेति। इतिकरणद्वयमपि हेतौ। तत्र समुदाये स्थानिन्यव-यवयोर्यत्स्थानित्वं तदानुमानिकमवयवनिवृत्तिमन्तरेणावयविनो निवर्त्तयितुमशक्यत्वादवयवयोर्निवृत्तिः, न त्वादिष्टत्वादित्यर्थः। ततश्च तदाश्रयं कार्यं स्थानिवद्भावान्न प्राप्नोति; साक्षाच्छ्रुतस्यैव च स्थानिनस्तत्राश्रयणात्। इष्यते च, तदर्थमन्तादिवद्भावो विधीयते। ननु विपरीतमिदम्–अवयवयोरानुमानिकं स्थानित्वमिति ? 'पूर्वपरयोः' इति द्विर्वचननिर्देशात् तयोरेव स्थानित्वं श्रुतं न समुदायस्य शब्दोऽस्ति, द्वयोस्तु निवर्तमानयोरर्थात्समुदायो निवर्तत इत्येतावत्। तथा च पूर्वसूत्रे 'स्थानिभेदाद्भिन्नादिषु नत्ववत्' इत्युक्तम्। तच्चान्यत्रापि उक्तम्—यो**

**भावबोधिनी**

अस्या अश्वः —यहाँ "वृद्धिरेचि" से वृद्धि जो की गई है वह 'एङः पदान्तादति' इससे किये जाने वाले पूर्वरूपविधि में आदिवत् नहीं होती है। [ इदम् के स्त्रीलिङ् में चतुर्थी एकवचन में ङे परे स्याट् होता है, 'हलि लोपः' सूत्र से इत् का लोप अ शेष—अ स्या + ए, वृद्धि—अस्यै + अश्वः यहाँ पदान्त ऐ में आदिवद्भाव मान कर ए-बुद्धि नहीं होती है। इसलिए 'एङः पदान्तादति' सूत्र से पूर्वरूप नहीं होता है। अस्यै अश्वा में ऐ का आय्, य् लोप कर देने के बाद भी अतिदेश न होने से पूर्वरूप नहीं होता है क्योंकि यह भी वर्णाश्रय विधि है। ]

पूर्व और पर दोनों का समुदाय एकादेश का स्थानी है, वह एकादेश से निवृत्त हो जाता है ( हटा दिया जाता है )। इसमें अवयवों का अनुमानिक स्थानित्व होता है इसलिए उनको मान कर होने वाला कार्य स्थानिवद्भाव

**तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तमित्यन्तादिवद्भावो विधीयते ॥**

**न्यासः**

न्तरत्वात् समुदाय आदेशेन निवर्त्यमानेऽवयवावपि निवर्त्येते, तस्मात् तयोरपि स्थानित्वम् ? इत्यत आह— **तत्रेत्यादि** । इतिकरणौ द्वावपि हेतौ । तत्र समुदाये स्थानिन्यवयवयोर्यत् स्थानित्वं तदानुमानिकम्, समुदाय एकादेशस्य आदेशेन निवर्त्यमाने तयोरपि निवर्त्तनं नान्तरीयकमिति कृत्वा । न हि विनावयवनिवर्त्तनेन समुदायः शक्यते निवर्त्तयितुम्; तस्य तदात्मकत्वात् । समुदायस्य तु प्रत्यक्षं स्थानित्वम् । 'पूर्वपरयोः' इति स्थानषष्ठ्यन्तस्य साक्षाच् श्रवणात् 'श्रुतानुमितयोः श्रौतः सम्बन्धो गरीयान्' इति 'स्थानिवदादेशोऽनल्विधौ' इत्यनेन यस्य प्रत्यक्षं साक्षात् श्रुतम्, स्थानित्वं तदाश्रयमेव कार्यमादेशे विधीयते । अवयवयोश्चानुमानिकं स्थानित्वं न प्रत्यक्षम्, अतस्तदाश्रयं कार्यं नातिदिश्यते । तेन तदाश्रयं कार्यं स्थानिवद्भावादेशे न प्राप्नोति, इष्यते च। तदर्थमयमन्तादिवद्भावो विधीयते ॥ ८५ ॥

**पदमञ्जरी**

ह्युभयस्थाने भवति लभते सोऽन्यतरव्यपदेशम्, तेन खट्वर्श्य इत्यत्र रपरत्वं भवत्यृकारस्यापि स्थानित्वादिति । भवतु वा स्थानित्वमवयवयोरानुमानिकम्, तथापि सिद्धः स्थानिवद्भावः, कथम् ? 'स्थानिवदादेशः' इत्यत्र स्थानिशब्दस्य सम्बन्धिशब्दत्वादेवादेशपरिग्रहे सिद्धे आदेशग्रहणमानुमानिकस्याप्यादेशस्य स्थानिवद्भावार्थम्, ततश्च स्थान्यप्यानुमानिक आश्रितः, यथा 'एरुः', पचत्वित्यत्र । अत्र हि इकारेणेकारान्तः स्थान्यनुमीयते, उकारेणाप्युकारान्त आदेशः, तस्य स्थानिवद्भावात् 'तिङन्तं पदम्' इति पदसंज्ञा भवति । एवमप्यत्रावयवयोरानुमानिके स्थानित्वे सिद्धः स्थानिवद्भावः ? एवं तर्ह्यनल्विधौ स्थानिवद्भाव उक्तः अल्विध्यर्थमिदम्, यथा–क्षीरपेण, सुरापेणोत्तरपदविभक्त्योरेकादेशस्यान्तवद्भावात् 'एकाजुत्तरपदे णः' इति णत्वमल्विधिरपि भवति । ननु च 'अनल्विधौ' इति प्रतिषेधः स्थान्यलाश्रयेष्वेव कार्येषु, अस्य त्वेकादेशस्योत्तरपदं प्रत्यवयवत्वमेव स्थानिवत्त्वेन प्रार्थनीयम्; अच्त्वं तु स्वत एव सिद्धम्, ततश्च यथा–अरुदितामित्यत्र स्वाश्रयं बलादित्वं स्थानिवद्भावकृतं च सार्वधातुकत्वमाश्रित्य 'रुदादिभ्यः सार्वधातुके' इतीड् भवति, तद्वदिहापि स्थानिवद्भावकृतमुत्तरपदावयवत्वं स्वाश्रयं चाच्त्वमाश्रित्य णत्वं भवति । तत्तु स्थान्यल्स्वरूपनिबन्धनम्, तत्रेष्यत एव, यथा खट्वाभिरित्यादावैस्भावादि । तस्मात् चिन्त्यमस्य प्रयोजनम् ॥ ८५ ॥

**भावबोधिनी**

से अप्राप्त है, इसलिए अन्तवद्भाव और आदिवद्भाव किया जाता है ।

**विमर्श**—अवयवों का स्थानित्व आनुमानिक है प्रत्यक्ष नहीं है । उन्हें मान कर किया जाने वाला कार्य 'स्थानिदादेशः' सूत्र से अतिदिष्ट नहीं हो सकता । उसके लिए यह सूत्र बनाया गया है । अतः पूर्व समुदायवृत्ति और पर-समुदायवृत्ति जो जो धर्म प्रातिपदिकत्व आदि हैं वे वे कृतैकादेश में अतिदिष्ट कराना—इस सूत्र का उद्देश्य है । वास्तव में स्थानिवत्सूत्र से ही यह सूत्र गतार्थ है, इसकी कोई आवश्यकता नहीं है । चूँकि यह सूत्र पूर्वसमुदाय या परसमुदाय में ही रहने वाले धर्म का अतिदेश करता है न कि केवल वर्ण में रहने वाले धर्म का, इसलिए 'खट्वाभिः' आदि में एकादेश आ में खट्व के ह्रस्वत्व रूप धर्म का अतिदेश न होने से 'अतो भिस ऐस्' से भिस् का ऐस् नहीं होता है । प्र + ऋच्छति आदि में वृद्धि रपर एकादेश कर देने के बाद 'आर्च्छे' इसमें पूर्वसमुदाय प्र-वृत्ति धर्म पदान्तत्व का और परसमुदाय ऋच्छति-वृत्ति धातुत्व का अतिदेश होता है । इसीलिए पदान्त रेफ का विसर्ग प्राप्त होता है और 'उभयथर्क्षु' तथा 'कर्तरि चर्षिदेवतयोः' आदि सूत्रों के निर्देशों के आधार पर विसर्ग का वारण होता है । चूँकि यह अतिदेश स्थानिवत् सूत्र से भी सम्भव है अतः प्रस्तुत सूत्र की अनावश्यकता सिद्ध की गई है ॥ ८५ ॥

## २५२६. षत्वतुकोरसिद्धः ॥ ८६ ॥ ( ३३३३ )

**षत्वे तुकि च कर्तव्ये एकादेशोऽसिद्धो भवति । सिद्धकार्यं न करोतीत्यर्थः । "असिद्धवचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च" (म० भा० ६।१।८६) । 'कोऽसिचद् इत्यत्र' 'एङः पदान्तादति' (६.१.१०९) इत्येकादेशस्य परं प्रत्यादिवद्भावादपदादेरिण उत्तरस्यादेशस्य सकारस्य षत्वं प्राप्नोति, तदसिद्धत्वान्न**

### न्यासः

**षत्वतुकोरसिद्धः ॥** इहासिद्धवचनेनैकादेशस्याभावो वा क्रियते ? तत्कार्यसामर्थ्यं वा प्रतिपाद्यते ? सिद्धमपि हि वस्तु सिद्धकार्यं कर्तुमसामर्थ्यादसिद्धमित्युच्यते, यथा—पुत्रकार्यकरणेऽसामर्थ्यात् पुत्रोऽप्यपुत्र इति । तत्र यद्यनेनैकादेशस्याभावः क्रियते तदाधीत्येत्यत्र तुग् न स्यात्, न हीह ह्रस्वोऽस्ति; एकादेशेन निवर्त्तितत्वात् । न चासिद्धवचनेनैकादेशे निवर्त्तिते ह्रस्वस्य प्रादुर्भावो भवति, न हि देवदत्तस्य हन्तरि हते पुनर्देवदत्तस्य प्रादुर्भावो भवतीतीममाद्ये पक्षे दोषं दृष्ट्वा कार्यासामर्थ्यमेकादेशस्यासिद्धत्वश्रुत्या प्रत्याय्यत इति दर्शयन्नाह— **सिद्धकार्यं न करोतीत्यर्थ इति ।** सिद्धस्त्र निष्पन्नस्य यत् कार्यं तदेकादेशः सिद्धो निष्पन्नोऽपि न करोतीत्ययमस्य वचनस्यार्थः । **असिद्धवचनमित्यादिना** सूत्रस्य प्रयोजनमाचष्टे । आदेशे च कृते यत्कार्यं तद्धेतुकं प्राप्नोति तदादेशलक्षणम्, आदेशो लक्षणं निमित्तमस्येति कृत्वा । तस्य प्रतिषेधो यथा स्यादित्येवमर्थमसिद्धवचनम् ।

### पदमञ्जरी

**षत्वतुकोरसिद्धः ॥ षत्वे तुकि चेति ।** षत्वशास्त्रे तुक्शास्त्रे चेत्यर्थः । **एकादेश इति ।** एकादेशास्त्रम् 'आद्गुणः' इत्यादीत्यर्थः । **असिद्धो भवतीति ।** सिद्धः=निष्पन्नः, ततोऽन्योऽसिद्धः । तत्र शास्त्रस्वरूपं तावन्निष्पन्नमिति परत्र परशब्दप्रयोगादिवार्थोऽवगम्यते, तत्कार्यकरणाच्च सादृयम्, तदाह—**सिद्धकार्याणि[1] न करोतीत्यर्थ इति ।** षत्वतुक्शास्त्रसन्निधावेकादेशशास्त्रं स्वकार्यमेकादेशाख्यं कार्यं न करोति = न प्रवर्त्तयति, न प्रतिपादयतीत्यर्थः । सूत्रस्य प्रयोजनमाह—**असिद्धवचनमिति ।** आदेशे कृते यत्कार्यं तद्धेतुकं प्राप्नोति तदादेशलक्षणम्, आदेशो लक्षणं निमित्तमस्येति कृत्वा; तस्य प्रतिषेधार्थमसिद्धवचनम् । उत्सर्गः=स्थानी, सामान्योत्सृष्टत्वात्, स लक्षणं यस्य तदुत्सर्गलक्षणम्, तस्य भावः=प्रवृत्तिर्यथा स्यादित्येवमर्थं चासिद्धवचनम् । **कोऽसिचदिति ।** 'लिपिसिचिह्वश्च' इति च्लेरङ्, कशब्दात्सोरुत्वम्, 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, गुणः । **एङः पदान्तादतीति । परम्प्रत्यादिवद्भावादिति ।** आदिवद्भावे हि ओसिचदित्येतदन्तं पदम्, ततः सकारः पदादिर्न भवतीति 'सात्पदाद्योः' इति निषेधाभावादेकादेशमोकारमिणमाश्रित्य षत्वं प्राप्नोति, तदसिद्धत्वान्न भवति । असिद्धत्वे हि षत्वशास्त्रं प्रत्येकादेशशास्त्रस्याप्रतिपादकत्वात् को असिचदित्येवमवस्थितं पदरूपं भवति, तत्राकारेण व्यवधानात्षत्वाभावः ।

### भावबोधिनी

षत्व और तुक् की कर्तव्यता में एकादेश असिद्ध हो जाता है । सिद्ध आदेश मानकर होने वाला कार्य नहीं करता है—यह अर्थ है । यह असिद्धवचन आदेशलक्षण ( कृतैकादेशनिमित्तक ) कार्य का प्रतिषेध करने के लिए है, और उत्सर्गलक्षण = स्थानी मान कर होने वाले कार्य की प्रवृत्ति के लिए है । उदा०—कोऽसिचत्—यहाँ [ गुण के बाद पूर्वरूप ] एकादेश का पर के प्रति आदिवद्भाव होने से अपदादि इण् से उत्तरवर्ती आदेश के सकार का षत्व प्राप्त होता है वह एकादेश के असिद्ध हो जाने से नहीं होता है । [ वाक्यसंस्कार-पक्ष में 'कोऽसिचत्' में कः असिचत् में किम् शब्द से सु परे रहते उसका 'उ' कर के 'आद्गुणः' से गुण, को + असिचत् में 'एङः पदान्तादति' से पूर्वरूप एकादेश होता है । एकादेश 'ओसिचत्' में आदिवद्भाव से सकार पदादि नहीं मिलता है 'सात्पदाद्योः' सूत्र से षत्व-निषेध नहीं होता है ।

---

१. 'सिद्धकार्यम्' इति काशिकापाठः ।

**भवति । कोऽस्य, योऽस्य, कोऽस्मै, योऽस्मै—इत्येकादेशस्यासिद्धत्वाद 'इणः' ( ८.३.३९ ) इति षत्वं न भवति ।**

**तुग्विधौ—अधीत्य, प्रेत्येति । अत्रैकादेशस्यासिद्धत्वात् 'ह्रस्वस्य पिति कृति तुक्' ( ६.१.७१ ) इति तुग्भवति ।**

**॥ सम्प्रसारणङीट्सु प्रतिषेधो वक्तव्यः ॥ ( भ० भा० वा० ६ ) । सम्प्रसारणे—ब्रह्महूषु । परिवीषु[१] ।**

**न्यासः**

उत्सृज्यते=निवर्त्यत इत्युत्सर्गः, स्थान्यभिधीयते । उत्सर्गो लक्षणं यस्य तदुत्सर्गलक्षणम्, तद्भावो यथा स्यादित्येवमर्थञ्चासिद्धवचनम् । **कोऽसिचदिति** । सिचेर्लुङि च्लिः, 'लिपिसिचिह्वश्च' इति च्लेरङ्, किंशब्दात् परस्य सकारस्य रुत्वम्, 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, 'आद्गुणः' इति गुणः, 'एङः पदान्तादति' इति परपूर्वत्वम् । **परं प्रत्यादिवद्भावादित्यादि** । असिचदित्यत्र योऽकारस्तं प्रत्येकादेशस्य 'अन्तादिवच्च' इत्यनेनादिवद्भावः । अयञ्चापदादित्वे हेतुः। **असिद्धत्वान्न भवतीति**। असिद्धत्वे हि सति सकारोऽत्रादिरेव पदस्य भवति, तेन 'सात्पदाद्योः' इति षत्वप्रतिषेधो भवति। **कोऽस्येति** । इदमः षष्ठ्येकवचनम्, 'त्यदादीनामः' इत्यत्वम्, 'टाङसिङसामिनात्स्याः' इति स्यभावः, 'हलि लोपः' इतीद्रूपस्य लोपः । शेषं पूर्ववत् । एतदादेशलक्षणप्रतिषेधस्योदाहरणम् ।

**पदमञ्जरी**

**कोऽस्येति** । इदमः षष्ठ्येकवचनम्, त्यदाद्यत्वम्, 'टाङसिङसामिनात्स्याः' इति स्यादेशः, हलि लोपः, शेषं पूर्ववत् । एवामादेशलक्षणप्रतिषेधस्योदाहरणानि दर्शितानि ।

इतरस्य दर्शयति—**अधीत्य, प्रेत्येति** । **एकादेशस्यासिद्धत्वादित्यादि** । असिद्धत्वे हि तुक्शास्त्रसन्निधावधि + इ + येत्येव स्थितं पदरूपं भवति, ततश्च ह्रस्वाश्रयस्तुक् प्रवर्त्तते । यदि तु मुख्यस्यैकादेशस्यैव कार्यस्यासिद्धत्वमुच्यते, तदा षत्वे नास्ति दोषः, कथम् ? ओकारस्तावत्स्वकार्यं षत्वं न करोति, यौ तु ततः पूर्वौ ककारयकारौ तदाश्रयमपि षत्वं न भवति, तेनैवौकारेण व्यवधानात् । तुकि नेष्टसिद्धिः । कथम् ? एकादेशेन ह्रस्वस्य निर्वर्तितत्वात्, न चैकादेशः स्वकार्यं न करोति । अनेन स्थानिनः प्रत्यावृत्तिः शक्या, तस्मात्तुकि शास्त्रासिद्धत्वमेवाश्रयणीयम् । आह च—स्थानिवद्वचनानर्थक्यं च शास्त्रासिद्धत्वादिति ।

**सम्प्रसारणङीट्स्विति** । सम्प्रसारणे ङौ इटि च य एकादेशस्तस्यासिद्धत्वप्रतिषेधो वक्तव्यः । [२]**शकहूष्विति** । शकान् ह्वयतीति यजादित्वात्सम्प्रसारणं पूर्वत्वम्, क्विप्, 'हलः' इति दीर्घः । **परिवीष्विति** । व्येञःपरिपूर्वात्-क्विबादि पूर्ववत् । **असिद्धत्वात्षत्वं न प्राप्नोतीति** । पूर्वरूपस्यासिद्धत्वे हि शकहु + आ इत्येव-

**भावबोधिनी**

जब एकादेश असिद्ध हो जाता है तब 'को असिचत्' में अकार का व्यवधान हो जाने से इण् से परे 'स' नहीं रहता है अतः षत्व की प्राप्ति नहीं है । ] कोऽस्य, योऽस्य, कोऽस्मै, योऽस्मै—इनमें भी पूर्वरूप एकादेश असिद्ध हो जाने से 'इणः षः' सूत्र से षत्व नहीं होता है । [ इन सभी में एक-आदेश को मान कर प्राप्त षत्व की कर्तव्यता में एकादेश असिद्ध माना गया है । उत्सर्गलक्षण का विषय आगे दे रहे हैं— ]

तुक् विधि में—अधीत्य, प्रेत्य आदि । इनमें एकादेश के असिद्ध हो जाने के कारण 'ह्रस्वस्य पिति कृति तुक्' सूत्र से तुक् होता है । [ अधि + इ + य यहाँ उपसर्ग और धातु के इकारों का दीर्घ करने के बाद एकादेश असिद्ध करके तुक् होता है । ] इनमें एकादेश ( दीर्घ ) के असिद्ध होने से ''ह्रस्वस्य पिति कृति तुक्'' ( ६।१।७१ ) सूत्र से तुक् होता है । [ यदि एकादेश असिद्ध नहीं होता तो दीर्घ रहने से तुक् नहीं हो पाता । ]

॥ सम्प्रसारण, ङि और इट् में जो एकादेश है उसके असिद्धत्व का प्रतिषेध कहना चाहिए ।॥ क्रमशः उदा०—

१. पारिपूर्वक 'व्येञः' क्विपि सम्प्रसारणादि कृते सप्तमीबहुवचनेरूपम् ।

२. 'ब्रह्महूषु' इति काशिकापाठः । 'शकहूषु' इति महाभाष्ये पाठः ।

**सम्प्रसारणपूर्वत्वस्यासिद्धत्वात्षत्वं न प्राप्नोति । ङौ—वृक्षेच्छत्रम्, वृक्षे छत्रम् । इटि—अपचेच्छत्रम्, अपचे**

**न्यासः**

उत्सर्गलक्षणभावस्य तु **अधीत्य, प्रेत्येति** । ननु च बहिरङ्ग एकादेशो द्विपदाश्रयत्वात्; अन्तरङ्गावेव षत्वतुकौ, एकपदाश्रयत्वात्, तत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनया परिभाषयैवात्रासिद्धत्वं भविष्यतीति निरर्थकमिदं वचनम् ? एवं तर्हि सैव परिभाषात्र प्रकरणे षत्वतुकोर्नियम्यते । तेनाक्षद्यूरित्यत्र बहिरङ्गलक्षणोऽप्यूडादेशो-ऽन्तरङ्गयणादेशे कर्त्तव्ये नासिद्धो भवति ।

**सम्प्रसारण इत्यादि** । सम्प्रसारणे ङौ इटि च य एकादेशस्तस्यासिद्धत्वप्रतिषेधो वक्तव्यः । **ब्रह्महूष्विति** । ब्रह्माणं ह्वयतीति क्विप्, यजादित्वात् सम्प्रसारणम्, 'सम्प्रसारणाच्च' इति परपूर्वत्वम्, 'हलः' इति दीर्घः ।

**पदमञ्जरी**

मवस्थितं पदरूपं भवति । **वृक्षेच्छत्रमिति, अपचेच्छत्रमिति** । पचेर्लङ्, उत्तमैकवचनमिट्, शप् । **आद्गुणस्या-सिद्धत्वादिति** । असिद्धत्वे हि तस्य वृक्ष इ च्छत्रम्, अपच इ च्छत्रमित्येवमवस्थितं पदरूपं भवति । अत्र सम्प्रसारणे तावत्प्रतिषेधो न वक्तव्यः, एकादेशोऽसिद्ध इत्युच्यते, न चात्रैकादेशं पश्यामः; दीर्घेण निर्वर्तितत्वात् । न च दीर्घस्य स्थानिवद्भावादेकादेशग्रहणेन ग्रहणम्; अल्विधित्वात् । ङीटोस्तु प्रतिषेधो वक्तव्य एव ।

अथ वा – लाघवार्थं पदस्येति वक्तव्यम् । अन्तादिग्रहणं च पूर्वसूत्रादनुवर्त्तनीयम्, तेन पदान्तस्य पदादेश्च य एकादेशः सोऽसिद्ध इत्येषोऽर्थो भवति । यद्येवम्, 'सुपिप्पला ओषधीस्कृधि ( मै० सं० १.२.२ ) इत्यत्रौषधि-शब्दाद् द्वितीयाबहुवचनम्, 'ओषधेश्च विभक्तावप्रथमायाम्' इति दीर्घः, ततः प्रथमयोः पूर्वसवर्णदीर्घः, रुत्वविस-र्जनीयौ । अत्रेदानीम् 'कःकरत्करतिकृति' इति विसर्जनीयस्य सत्वमिष्यते, तन्न प्राप्नोति; 'पदान्तपदाद्योः' इति वचनात् । एकादेशस्यासिद्धत्वाभावाद् इण उत्तरो विसर्जनीय इति 'इणः षः' इति षत्वं प्राप्नोति, अविशेषेणासिद्धत्वे ओषधी + अस् कृधीत्येवमवस्थानादिण उत्तरत्वाभावात्षत्वाप्रसङ्गात्सत्वं सिध्यति ? ज्ञापका-त्सिद्धम्; यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति, तज्ज्ञापयति—नैकादेशात्परस्य विसर्जनीयस्य षत्वं भवतीति । यदि स्याद्, भ्रातृशब्दान्ङसि 'ऋत् उद्' इत्युत्वे एकादेशे रपरे च कृते 'रात्सस्य' इति सकारलोपे कृते षष्ठीसमासे 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इत्यलुकि रेफस्य विसर्जनीये 'ऋत उद्' इत्युकारस्यैकादेशस्य सिद्धत्वात् 'इदुदुपधस्य च' इत्येव षत्वे सिद्धे कस्कादिषु तन्न पठेत्, पठति च, ततो ज्ञायते—नैकादेशात्परस्य षत्वमिति । शकहूष्वित्यत्रापि तर्हि न प्राप्नोति ? नैष दोषः; तुल्यजातीयस्य ज्ञापकं भवति । कश्च तुल्यजातीयः ? यः कुप्वोरनन्तरः । इह च ह्वेञः क्विपि सम्प्रसारणे पूर्वत्वे च 'ह्रस्वस्य पिति कृति' इति तुकि प्राप्ते पूर्वत्वस्य सूत्रेणासिद्धत्वे प्राप्ते 'पदान्तपदाद्योः' इति वचनादसिद्धत्वाभावादुदिति तुग्भवत्येव । न हि उ + आ इत्येका-देशात्प्रागवस्थायामाकारः पदान्तः । नाप्यकारः पदादिः; विभक्तेरभावात् । न चैकादेशात्प्रागेव कृदन्तत्वा-

**भावबोधिनी**

सम्प्रसारण में—ब्रह्महूषु परिवीषु । [ ब्राह्मणं ह्वयति—इसमें 'ह्वे' से आत्व क्विप्, सर्वापहारी लोप के बाद 'वचिस्वपि-यजादीनाम्'' से व् का सम्प्रसारण उ, आ, का पूर्वरूप—हु । उपपदसमास, सप्तमी बहुवचन का रूप है । ] सम्प्रसारण में पूर्वरूप एकादेश असिद्ध होने से षत्व नहीं प्राप्त होता है । [ अतः सम्प्रसारण में एकादेश असिद्ध नहीं माना जाता है अन्यथा ब्रह्महुआ + सु ऐसा होने पर षत्व नहीं हो पाता । अतः पूर्वरूप एकादेश सिद्ध ही है । इसलिए षत्व होता है । ] ङि में असिद्धत्व के अभाव का उदा०—वृक्षेच्छत्रम् वृक्षे छत्रम् । [ वृक्ष + इ, गुण—वृक्षे छत्रम् में गुणरूप एकादेश असिद्ध होने पर नित्य तुक् प्रसक्त होता । जब कि इष्ट है विकल्प । अतः गुण एकादेश सिद्ध ही रहता है । ] इट् = उत्तमपुरुष एकवचन में उदा०—अपचे च्छत्रम्, अपचे छत्रम् । [ अ पच् + शप् = अ + लङ् = इ, गुण एकादेश के बाद अपचे छत्रम् ] 'आद्गुणः''

**छत्रम् ( म० भा० ) आद्गुणस्यासिद्धत्वाद् ह्रस्वलक्षणो ( ६.१.७१ ) नित्योऽत्र तुक् प्राप्नोति, 'दीर्घात्' ( ६.१.७५ ) 'पदान्ताद्वा' ( ६.१.७६ ) इति तुग्विकल्प इष्यते ॥**

## २५२७. आद् गुणः ॥ ८७ ॥ ( ६९ )

**'अचि' इत्यनुवर्तते । अवर्णात्परो योऽच्, अचि च पूर्वो योऽवर्णः, तयोः पूर्वपरयोरवर्णाचोः स्थाने एको गुण आदेशो भवति । तवेदम् । खट्वेन्द्रः, मालेन्द्रः । तवेहते, खट्वेहते । तवोदकम्, खट्वोदकम् ।**

**न्यासः**

सप्तमीबहुवचनम् । **परिवीष्विति** । वेञः[1] परिपूर्वस्य पूर्ववत् क्विबादिषु कृतेषु रूपम् । **अपचेच्छत्रमिति** । पचेर्लङ्युत्तमपुरुषैकवचनमिट्, 'कर्त्तरि शप्, आद्गुणः इति गुणः ॥ ८६ ॥

**आद्गुणः ॥ तवल्कारः, खट्वल्कार इति** । कथं पुनरत्र लपरत्वम् ? इत्याह—**लृकारस्य स्थान इत्यादि** । एतच्च 'लृकारऋकारयोः सवर्णज्ञा वक्तव्या' इत्युपसंख्यानाद् ,उरण् रपरः' इत्यत्र रप्रत्याहारग्रहणाल्लभ्यते ।

**पदमञ्जरी**

द्विभक्त्युत्पत्तिः; एकादेशस्यान्तरङ्गत्वात् । अथापि प्रागेव विभक्त्युत्पत्तिः; एवमपि उ+आस् इति स्थिते उकारः पदादिः सकारः पदान्तः, सुबन्तं हि पदम्, न तु ततः पूर्वम् ! अथापि भ्याम्प्रभृतौ उ+आभ्यामिति स्थिते 'स्वादिषु' इति पदसंज्ञायां पदान्तपदाद्योरेकादेशः ? तथापि न दोषः; 'पूर्वपरयोः' इति वर्त्तते, अन्तादिग्रहणञ्च; तत्र यथासंख्यसम्बन्धात्पूर्वपदस्य योऽन्तः परस्य चादिस्तयोरेकादेशोऽसिद्ध इत्यर्थः सम्पद्यते । आकारश्चात्र पदादिर्न भवति, नाप्युकारः पदान्त इत्यसिद्धत्वात्तुग् भवत्येव ।

किमर्थं पुनः षत्वतुकोरेकादेशस्यासिद्धत्वादुच्यते, यावता द्विपदाश्रयत्वाद् बहिरङ्गस्यैकादेशस्यैकपदाश्रयत्वेनान्तरङ्गयोः षत्वतुकोः 'असिद्धं बहिरङ्गमन्तरङ्गे' ( व्या० परि० ४२ ) इत्येवासिद्धत्वं सिद्धम् ? ज्ञापनार्थं तु, एतज्ज्ञापयति—'यत्र बहिरङ्गस्यान्तरङ्गस्य वाऽचोरानन्तर्यं निमित्तत्वेनाश्रितं तत्र बहिरङ्गपरिभाषा न प्रवर्त्तते' इति । तेनाक्षद्यूरित्यत्र बहिरङ्गस्याप्यूठोऽसिद्धत्वाभावाद्यणादेशः सिद्धो भवति । अयमेवार्थः परिभाषारूपेण पठ्यते 'नाजानन्तर्यं बहिष्ट्वप्रक्लृप्तिः' ( व्या० परि० ४४ ) इति ॥ ८६ ॥

**आद्गुणः** ॥ गुणग्रहणं किम्, यावताऽचीति वर्तते, 'एकः पूर्वपरयो' इति च, तत्रान्तर्यतः कण्ठतालव्ययोरकारेकारयोः स्थाने तादृश एवैकारो भविष्यति, कण्ठ्यौष्ठ्ययोश्चाकारोकारयोः स्थाने तादृश एवौकारो भविष्यति; न चैकारौकारयोरपि प्रसङ्गः, वृद्धिरेचीति नियमात् ? तदिदानीं नियमार्थम्, ऐचोरनेनैव सिद्धत्वात्, एच्येव वृद्धिर्भवति । उभयथा नियमश्च व्याख्यास्यते, वृद्धिरेवैचीति । इह तर्हि खट्वर्श्यः, मालर्श्य इति, प्रमाणतोऽन्तरतमः, मूर्द्धन्य ऋकारः प्राप्नाति ? उभयोर्योऽन्तरतमस्तेन भाव्यम्, न चर्कार उभयोरन्तरतमः, अकारस्तु शिष्यमाण एव रपरो भवतीति स्थानत उभयोरन्तरतमः । आकारस्तर्हि प्राप्नोति ? 'उपसर्गाहति

**भावबोधिनी**

के असिद्ध हो जाने से ( 'छे च' सूत्र से ) ह्रस्वलक्षण नित्य तुक् प्राप्त होता है जब कि इष्ट है—"दीर्घात्, पदान्ताद् वा" सूत्र से विकल्प से तुक् । [ अपचे और वृक्षे में ए को दीर्घ मान कर पदान्त दीर्घ से वैकल्पिक तुक् इष्ट है । अतः एकादेश सिद्ध मानना आवश्यक है । इसीलिए यह वचन है । ] ॥ ८६ ॥

'अचि' ( अच् परे रहते )—इसकी अनुवृत्ति होती है । अवर्ण से परे जो अच् और अच् परे रहते जो पूर्ववर्ती अवर्ण—उन पूर्व और पर = अवर्ण और अच् के स्थान में गुण रूप एक आदेश होता है । उदा०—तवेदम् । खट्वेन्द्रः । मालेन्द्रः । तवेहते । खट्वेहते । [ तव + इदम्, खट्वा + इन्द्रः, माला + इन्द्रः, तव + ईहते, खट्वा + ईहते—इन उदाहरणों ह्रस्व अ और दीर्घ आ पूर्व में है ह्रस्व इ और दीर्घ ई बाद में हैं वह अच् है । अतः स्थानसाम्य के आधार पर 'ए' एक गुण आदेश होता है । ] तवोदकम्, खट्वोदकम् । [यहाँ तव + उदकम्, खट्वा + उदकम् में अ, आ पूर्व में है, उ बाद में

---

१. अत्र 'व्येञः' इत्येवोचितं सम्प्रसारणार्थत्वात् ।

**तवर्श्यः, खट्वर्श्यः । तवल्कारः, खट्वल्कारः । ऌकारस्य स्थाने योऽण् तस्य लपरत्वमिष्यते ॥**

## २५२८. वृद्धिरेचि ॥ ८८ ॥ ( ७२ )

**'आत्' इति वर्तते । अवर्णात्परो य एच्, एचि च पूर्वो योऽवर्णः, तयोः पूर्वपरयोरवर्णैचोः स्थाने वृद्धिरेकादेशो भवति । आद्गुणस्यापवादः । ब्रह्मैडका, खट्वैडका । ब्रह्मैतिकायनः, खट्वैतिकायनः । ब्रह्मौदनः,**

**न्यासः**

उक्तं ह्यक्षरसमाम्नाये—हकारादिषु वर्णेष्वकार उच्चारणार्थः, लकारे त्वनुनासिक इत्संज्ञकः प्रतिज्ञायते' इति । तत्र रेफादारभ्य लणकारेण प्रत्याहारे सति ऌकारस्य ऋकारग्रहणेन गृहीतस्य स्थानेऽण् विधीयमानो लपरः

**पदमञ्जरी**

धातौ' इत्येतन्नियमार्थं भविष्यति—ऋति धातावेवाकारो नान्यत्रेति । प्लुतस्तर्हि प्राप्नोति– खट्वेन्द्रः, 'प्लुतश्च विषये स्मृतः', प्लुतविधाने हि सति यस्मिन्विषये प्लुतो विहितस्तस्मिन्नप्यनेनैव भाव्यम् ? अस्मिन् कर्तव्ये आष्टमिकस्य प्लुतस्यासिद्धत्वात्, ततश्च पक्षेऽनुवाददोषप्रसङ्गात् प्लुतो न भवतीति । इह तर्हि खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, आन्तर्यतश्चतुर्मात्र आदेशः प्राप्नोति, गुणग्रहणे तु क्रियमाणे गुणसंज्ञायान्तपरकरणं सर्वार्थमिति त्रिमात्रचतुर्मात्राणामगुणत्वादप्रसङ्गः । तस्माद् गुणग्रहणम् । श्लोकौ चात्र भवतः—

आदेकश्चेद् गुणः केन, स्थानेऽन्तरतमो हि सः ।
ऐदौतौ नैचि तावुक्तावृकारो नोभयान्तरः ॥ १ ॥
आकारो नर्त्तिधातौ स, प्लुतश्च विषये स्मृतः ।
आन्तर्यात्त्रिचतुर्मात्राः, तपरत्वान्न ते स्मृताः ॥ २ ॥ (भ० भा०, श्लोकौ० ६।१।८७)

इह वृक्षशब्दाण्ङिः, वृक्ष + इ + इन्द्रमिति स्थिते अकारेकायोर्गुणश्च प्राप्नोतीकारयोः सवर्णदीर्घश्च, तत्र शब्दपरविप्रतिषेधाद्दीर्घप्रसङ्गः, तथा तच्छब्दात् 'जश्शसोः शिः', त इ इन्द्रम्, पचेरुत्तमैकवचनमिट् शप्, पच

**भावबोधिनी**

हैं । खट्वा + ऊर्ध्वम् में ऊ बाद में है । दोनों के स्थान पर साम्य के आधार पर 'ओ' एक गुण आदेश हो जाता है । ] तवर्श्यः खट्वर्श्यः । [ तव + ऋश्यः, खट्वा + ऋश्यः अ + ऋ, आ + ऋ दोनों के स्थान पर 'आ' गुण होता है और 'उरण् रपरः' सूत्र से वह रपर = अर् ही होता है । ] तवल्कारः' खट्वल्कारः । [ तव + ऌकारः । खट्वा + ऌकारः— यहाँ ] ऌकार के स्थान पर जो अण् (गुणरूप में अ) होता है वह लपर = अल् ऐसा इष्ट है । [ अतः गुण लपर = अल् करने पर उक्त उदाहरण बनते हैं । ] ॥ ८७ ॥

'आत्' इसकी अनुवृत्ति होती है । अवर्ण से परे जो एच् और एच् परे पूर्ववर्त्ती जो अवर्ण—उन पूर्ववर्त्ती-परवर्ती = अवर्ण तथा एच् के स्थान पर वृद्धि रूप एकादेश होता है । यह "आद्गुणः" सूत्र का अपवाद है । [ अतः अवर्ण के बाद इ, उ, ऋ, ऌ रहने पर दोनों के स्थात पर गुण एकादेश होता है और अवर्ण के बाद ए, ओ, ऐ औ— रहने पर वृद्धि एकादेश होता है । ] उदा०—ब्रह्मैडका । खट्वैडका । ब्रह्मैतिकायनः । खट्वैतिकायनः । ब्रह्मौदनः, खट्वौदनः । ब्रह्मौपगवः, खट्वौपवगवः । [ ब्रह्म + एडका, खट्वा + एडका, ब्रह्म + ऐतिकायनः, खट्वा + ऐतिकायनः— इनमें अ अथवा आ पूर्व में हैं ए अथवा ऐ पर में है अतः दोनों के स्थान पर 'ऐ' वृद्धि रूप एक आदेश होता है । ब्रह्म + ओदानः, खट्वा + ओदनः, ब्रह्म + औपगवः, खट्वा + औपगवः—इनमें अ अथवा आ पहले है ओ अथवा औ बाद में है । दोनों के स्थान पर 'औ' वृद्धि रूप एक आदेश होता है । इसलिए पूर्व में अ, आ, और पर में ए, ऐ, ओ,

खट्वौदनः । ब्रह्मौपगवः, खट्वौपगवः ॥

## २५२९. एत्येधत्यूठ्सु ॥ ८९ ॥ ( ७३ )

**'वृद्धिरेचि' इति वर्तते, 'आत्' इति च । तदेतदेज्ग्रहणमेतेरेव विशेषणम्, न पुनरेधतेः; अव्यभिचाराद्, ऊठश्चासम्भवात् । 'इण् गतौ' ( धा० पा० १०४६ ) इत्येतस्मिन् धातावेचि, 'एध वृद्धौ' ( धा० पा० २ ) इत्येतस्मिन् ऊठि च पूर्वं यदवर्णं ततश्च परो योऽच्, तयोः पूर्वपरयोरवर्णाचोः स्थाने वृद्धिरेकादेशो भवति । उपैति, उपैषि, उपैमि । उपैधते, प्रैधते । प्रष्ठौहः, प्रष्ठौहा, प्रष्ठौहे । ऊठ्यादगुणापवादो वृद्धिर्विधीयते । एत्येधत्योः—एङिपररूपापवादः ।**

### न्यासः

**सम्पद्यते ॥ ८७ ॥ वृद्धिरेचि ॥ ८८ ॥**

**एत्येधत्यूठ्सु ॥** सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवति, तौ च सम्भवव्यभिचारावेतावेव धातो स्तः, नेतरत्रेत्याह—**तदेतदेज्ग्रहणमित्यादि । प्रष्ठौह इति ।** प्रष्ठं वहतीति 'च्छन्दसि सहः' इति 'वहश्च' इति ण्विप्रत्ययः, 'वाह ऊठ' इत्यूठ् सम्प्रसारणसंज्ञकः, 'सम्प्रसारणाच्च' इति परपूर्वत्वम्. ततो वृद्धिः । **एत्येधत्योरेङि पररूपापवाद इति** वृद्धिर्विधीयत इति प्रकृतेन सम्बन्धः ।

### पदमञ्जरी

इ इन्द्रम् ? नैष दोषः; एकपदाश्रयत्वादन्तरङ्गो गुणो भविष्यति प्रागेव पदान्तरसन्निधानात् ।

**लृकारस्य स्थानत[1] इति ।** यथा चैतल्लभ्यते तथा 'लण्' इत्यत्र व्याख्यातम् ॥ ८७ ॥ ८८ ॥

**एत्येधत्यूठ्सु ॥ न पुनरेधतेरव्यभिचारादिति ।** बाहुल्याभिप्रायेणैतदुक्तम् । अस्ति ह्यस्यापि व्यभिचारः—चङ्युपधाह्रस्वत्वे भवान् मा प्रेदिधदित्यत्रेत्याहुः । **प्रष्ठौह इति ।** प्रष्ठं वहतीति 'छन्दसि सहः', 'वहश्च' इति ण्विः, 'वाह ऊठ्' इत्यूठ, सम्प्रसारणम्, पूर्वत्वम्, ततो वृद्धिः । **एत्येधत्योरेङि पररूपापवाद इति ।** वृद्धिर्विधीयत इत्यनुषङ्गः ।

### भावबोधिनी

औ—रहने पर स्थान-साम्य के आधार पर 'ऐ' अथवा 'औ' वृद्धि एकादेश किया जाता है । जहाँ 'आ' वृद्धि सम्भावित होती है । वहाँ रपर हो जाने से 'आर' ही होता है । यह आगे ( ६।१।९१ में ) दिखाया जायगा । ] ॥ ८८ ॥

'वृद्धिः एचि' और 'आत्' इनकी अनुवृत्ति होती है । यह एच्ग्रहण 'एति' ( √इण् ) का ही विशेषण होता है, एध का नहीं क्योंकि व्यभिचार नहीं है [ अर्थात् √एध सर्वत्र एजादि ही मिलता है अतः एजादि एध कहने का कोई लाभ नहीं है । ] और ऊठ् का भी विशेषण नहीं है क्योंकि असम्भव है । '√इण् गतौ' इस धातु में एच् रहने पर, '√एध वृद्धौ इसके और ऊठ् के परे रहने पर—इनसे पूर्व जो अवर्ण, उससे परे [ पूर्वोक्त इण् एध् ऊठ् का ] जो अच् उसके परे रहते उन पूर्व + पर वर्णों = अवर्ण और अच् दोनों के स्थान पर वृद्धि रूप एकादेश होता है । उदा०—उपैति, उपैषि, उपैमि । [ उप + एति, एषि, एमि—यहाँ अवर्ण से परे एजादि इण् धातु के रूप हैं, अतः दोनों के स्थान पर वृद्धि रूप एकादेश हो जाता है । ] उपैधते, प्रैधते । [ उप + एधते, प्र + एधते—यहाँ अवर्ण के बाद एध का अच् है । वृद्धि होती है । ] प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । ] [ प्रष्ठ + ऊहः, यहाँ वह् धातु के व् का ऊठ् 'वाह ऊठ्' सूत्र से होता है । अतः ऊठ् परे रहते वृद्धि हो जाती है । द्वितीया बहुवचन और तृतीया-चतुर्थी एकवचन के रूप हैं । ] ऊठ् परे रहते 'आद् गुणः' से प्राप्त गुण की अपवाद वृद्धि का विधान किया जाता है । एति और एधति परे रहते 'एङि पर-रूपम्' सूत्र से प्राप्त पररूप की अपवाद वृद्धि का विधान किया जाता है ।

---

१. 'लृकारस्य स्थाने' इति काशिका ।

'ओमाङोश्च' ( ६.१.९५ ) इत्येतत्तु पररूपं न बाध्यते; 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' ( व्या० परि० ४९ ) इति, 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते' ( व्या० परि० ९ ) इति वा। तेनेह न भवति —उप + आ + इतः = उपेत इति।

एचीत्येव—उप + इतः = उपेतः।

**न्यासः**

अथ 'ओमाङोश्च' इत्यस्याप्याङि पररूपापवादो वृद्धिः कस्मान्न भवति, नाप्राप्ते हि पररूप इयं वृद्धिरारभ्यत इति मा यथैङि पररूपं बाधते तथाङि पररूपमपि बाधेत, ततश्चेहापि स्यात्—आ + इतः = एतः, उप + एतः = उपेतः ? इत्यत आह—**ओमाङोश्चेत्येतदित्यादि**। अत्रैव कारणमाह—**येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति**। नाप्राप्त एङि पररूपे इयं वृद्धिरारभ्यत इति युक्तं यत् तस्य बाधिका भवति। आङि पररूपे तु प्राप्ते चाप्राप्ते चैषा वृद्धिरारभ्यते। आ + इतः = एतः, प्र + एतः = प्रेतः, परेतः—इत्यत्र प्राप्त आङि पररूपे, उप + एति = उपैतीति—अत्र त्वप्राप्ते। तस्मादेषा वृद्धिराङि पररूपत्वं न बाधते। **पुरस्तादपवादा इत्यादिना** परीहारान्तरमाह। 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति, इयं च वृद्धिः पुरस्तादपवादः, अस्याश्चैङि पररूपमेवानन्तरम्, अतस्तदेव तया बाध्यते, नाङिपररूपम्; तस्यानन्तरत्वात्।

**पदमञ्जरी**

यथैव तर्हि 'एङि पररूपम्' बाधते, एवमाङि पररूपमपि बाधेत; नाप्राप्ते पररूपेऽस्या वृद्धेरारम्भात् ? इत्यत आह—**ओमाङोश्चैतत्त्विति**। कुतः ? इत्याह—**येनेति**। **स तस्य बाधको भवतीति**। तस्यैव बाधको भवतीति यावत्, तद्बाधस्यावश्यम्भावित्वात्, तावता च बाधकस्य चरितार्थत्वात्। न चाप्राप्त एङि पररूपे इयं वृद्धिरारभ्यते, आङि पररूपे तु आ इतः = एतः, प्रेतः, परेत इत्यत्र प्राप्ते; उपैति, प्रैतीत्यत्र त्वप्राप्ते तस्मान्न बाधते। परिहारान्तरमाह—**पुरस्तादिति**। अनन्तरे बाध्ये ज्ञाते तद्बाधया वचनस्य चरितार्थत्वादुत्तरेण सह स्पर्द्धायां परत्वात्तदेव भवतीति भावः।

**अक्षौहिणीति**। अक्षैरूहतेऽवश्यमिति आवश्यके णिनिः, साधनम् 'कृता' इति समासः।

**स्वैरमिति**। 'ईर गतौ', ( धा० पा० १०१८ ) ईरणमीरः, भावे घञ्, स्वेनाभिप्रायेण ईरणं स्वैरम्, 'कर्तृकरणे कृता बहुलम्' इति समासः, क्रियाविशेषणात्वाल्लोकाश्रयत्वाद्वा लिङ्गस्य नपुंसकत्वम्। स्वेनाभिप्रायेणेरते गच्छतीति स्वैरी, 'सुप्यजातौ' इति णिनिः। ईरिग्रहमनर्थकम्, 'पदास्वैरिबाह्य' इति निपातनात्सिद्धम्, पदास्वैर-शब्दादिना मत्वर्थीयेन सिद्धम्, णिनिस्त्वनभिधानान्न भविष्यति।

**भावबोधिनी**

'ओमाङोश्च' इस सूत्र से प्राप्त पररूप का तो बाध नहीं किया जाता है क्योंकि 'यत्कर्तृक अवश्य प्राप्ति रहने पर जिस विधि शास्त्र का प्रणयन किया जाता है वह उसका अपवाद होता है।' [ अतः 'एङि पर-रूपम्' इसी का अपवाद बन सकता है। ] अथवा 'पहले वाले अपवाद शास्त्र अव्यवहित उत्तरवर्ती विधियों के ही बाधक होते हैं व्यवहित के नहीं' इस परिभाषा से [ भी 'ओमाङोश्च' से प्राप्त पररूप की अपवाद यह वृद्धि नहीं है क्योंकि पहले 'एङि पररूपम्' ६।१।९४ है बाद में 'ओमाङोश्च' ६।१।९५ है। ] इस कारण यहाँ वृद्धि नहीं होती है—उप + आ + इतः उपेतः। [ उप के अवर्ण के बाद आङ् है, पररूप होता है तब आ + इ का गुण होता है। अन्यथा आ + इ का गुण करने पर इण् एजादि मानकर वृद्धि होने लगती। ]

एजादि इण् परे रहते ही वृद्धि होती है—इसका क्या फल है ? उप + इतः = उपेतः। [ यहाँ वृद्धि नहीं होती है। ]

❀ अक्षादूहिन्यां वृद्धिर्वक्तव्या ❀ ( म० भा० ६.१.८९ वा० ११ )। अक्षौहिणी।

❀ स्वादीरेरिण्योर्वृद्धिर्वक्तव्या ❀ ( म० भा० वा० १३ )। स्वैरम्[१]। स्वैरिणी[१]।

❀ प्रादूढोढ्येषैष्येषु वृद्धिर्वक्तव्या ❀ ( म० भा० वा० १२ ) [ प्रौहः[२] ]। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः।

❀ ऋते च तृतीयासमासेऽवर्णाद् वृद्धिर्वक्तव्या ❀ ( म० भा० वा० १४ )। सुखेन ऋतः सुखार्तः। दुःखेन ऋतो दुःखार्तः। ऋत इति किम्? सुखेन इतः सुखेतः। तृतीयेति किम्? परमर्तः। समास इति किम्? सुखेनर्तः।

**न्यासः**

**अक्षादित्यादि**। वक्तव्येति। व्याख्येयेत्यर्थः। तत्रेदं व्याख्यानम्—उत्तरसूत्रे चकारोऽधिकविधानार्थः। तेनाक्षशब्दादूहिनीशब्दे परतो वृद्धिर्भविष्यतीति। एवमुत्तरत्रापि वक्तव्यशब्दस्यार्थः, व्याख्यानमप्येवमेव वेदितव्यम्। अक्षाणामूहः, सोऽस्यास्तीति मत्वर्थीय इनिः, 'ऋन्नेभ्यो ङीप् इति ङीप्'—अक्षौहिणी।

**स्वैरमिति**। 'ईर गतौ,' ईरणमीरः, भावे घञ्, स्वस्य ईरः स्वैरः। क्रियाविशेषणत्वात् स्वैरमिति वृत्तौ नपुंसकलिङ्गेन निर्देशः। क्रिया तु काचिदत्राध्याहर्त्तव्या। अथ वा–स्व ईरो यस्य कुलस्य तत् स्वैरं कुलम्।

**पदमञ्जरी**

**प्रादित्यादि**। ऊढ, ऊढि एष, एष्य—इत्येतान्युत्तरपदानि। इष्यतेरिच्छतेरिष्णातेर्वा यदा ण्यत् तदा–प्रैष्यः, यदा घञ तदा–प्रैषः, एङि पररूपापवादो वृद्धिः। ईष्यशब्दे तु प्रेष्य इति भवति। तथा आ + ऊढा ओढा

**भावबोधिनी**

❀ अक्ष शब्द से परे ऊहिनी शब्द रहने पर दोनों के स्थान पर वृद्धि रूप एक आदेश कहना चाहिए। ❀ उदा०—अक्षौहिणी[3] सेना। [ अक्ष + ऊहिनी, वृद्धि करने के बाद 'पूर्वपदात् संज्ञायामगः' इस सूत्र से णत्व हो जाता है। महाभारत में अक्षौहिणी के विषय में यह लिखा है—

अक्षौहिण्याः प्रमाणं तु खागाष्टैकद्विकैर्गजैः। रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः॥ ]

❀ स्व शब्द से ईर, ईरिणी शब्दों के परे रहते वृद्धि कहनी चाहिए। ❀ उदा०—स्वैरः, स्वैरिणी। [ स्व + ईरः, स्व + ईरिनी, वृद्धि, णत्व। स्वच्छन्द घूमना, घूमने वाली ]

❀ प्र शब्द से ऊठ, ऊढि, एष और एष्य शब्द परे रहने पर वृद्धि कहनी चाहिए। ❀ उदा०—प्रौढः [ प्र + ऊढः ]। प्रौढिः। [ प्र + ऊढिः। ] प्रैषः। [ प्र + एषः ] प्रैष्यः। [ प्र + एष्यः। [ महाभाष्य में ऊह शब्द भी पठित मिलता है—प्रौहः = प्र + ऊहः। किन्तु काशिका, न्यास, पदमञ्जरी में कोई संकेत नहीं है। ]

❀ ऋत शब्द परे रहते तृतीया समास में अवर्ण से परे वृद्धि कहनी चाहिए। उदा०—सुखेन ऋतः—इसमें [ तृतीया समास विभक्तिलोप के बाद वृद्धि करने पर ] सुखार्तः। दुःखेन ऋतः = दुःखार्तः। [ अ + ऋ के स्थान पर आ वृद्धि होती है किन्तु 'उरण् रपरः' सूत्र से रपर होने से 'आर्' ही होती है। ] ऋत परे रहते—इसका क्या फल है? सुखेन इतः = सुखेतः। [ यहाँ वृद्धि न होकर गुण ही होता है। ] तृतीया-समास में—इसका क्या फल है? परमर्तः। [ परमश्चासौ ऋतः—यहाँ प्रथमा समास होने से कर्मधारय है। अतः वृद्धि नहीं होती है। ] समास में—इसका क्या फल है—सुखेनर्तः। [ सुखेन + ऋतः यहाँ समास नहीं है। अतः गुण, रपर ही होता है। ]

---

१.–१. 'स्वैरः, स्वैरी' इति महाभाष्ये पाठः।

२. अत्र वार्त्तिके ऊहग्रहणम्, प्रौह इति तदुदाहरणं च महाभाष्ये दृश्यते। भाष्ये वार्तिकक्रमविपर्ययोऽपि दृश्यते।

३. महाभारत में अक्षौहिणी सेना में २१८७० हाथी, २१८७० रथ, ६५६१० घोड़े और १०९३५० पैदल सैनिक कहे गए हैं।

❀ प्रवत्सतरकम्बलवसनानामृणे वृद्धिर्वक्तव्या ❀ ( म० भा० वा० १५ )। प्र—प्रार्णम्। वत्सतर—वत्सतरार्णम्। कम्बल—कम्बलार्णम्। वसन—वसनार्णम्।

❀ ऋणदशाभ्यां वृद्धिर्वक्तव्या ❀ ( म० भा० वा० १६ )। ऋणार्णम्। दशार्णम्॥

## २५३०. आटश्च ॥ ९० ॥ ( २६९ )

'एचि' इति निवृत्तम्। 'अचि' इत्यनुवर्तते। आटः परो योऽच्, अचि च पूर्वो य आट्—तयोः पूर्वपरयोराडचोः स्थाने वृद्धिरेकादेशो भवति। ऐक्षिष्ट। ऐक्षत। ऐक्षिष्यत। औभीत्। आर्ध्नोत्। औब्जीत्।

**न्यासः**

नपुंसकस्य कुलादेरन्यपदार्थत्वान्नपुंसक-लिङ्गत्वम्। स्वैरीति। स्वमीरितुं शीलमस्येति 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः।

ऊढः, ऊढिरिति शब्दौ निष्ठाक्तिन्नन्तौ। प्रैष इति। 'इष गतिहिंसादानेषु', 'इषु इच्छायाम्' इति वा, आभ्यां प्रपूर्वाभ्यां यदा घञ् तदा प्रैषः, यदा तु ण्यत् तदा प्रैष्य इति।

सुखार्त इति। 'कर्तृकरणे कृता बहुलम्' इति समासः॥ ८९॥

आटश्च॥ ऐक्षतेति। 'ईक्ष दर्शने' इति लङ्। ऐक्षिष्टेति। लुङ्। ऐक्षिष्यत इति। लृङ्। औम्भीदिति। 'उभ उम्भ पूरणे' इति लुङ्, इट्, 'अस्तिसिचोऽपृक्ते' इतीट्। 'इट ईटि' इति सिचो लोपः। औब्जीदिति। 'उब्ज आर्जवे'। आर्ध्नोदिति। 'ऋधु वृद्धौ' इति लङ्, 'स्वादिभ्यः श्नुः' इति श्नुः।

**पदमञ्जरी**

प्रोढेति 'ओमाङोश्च' इति पररूपं भवति। पूर्वोपात्तस्य ऋणस्यापनयनाय यदृणमन्यदुपात्तं तद् ऋणार्णम्। दशार्णशब्दो नदीविशेषस्य, देशविशेषस्य च संज्ञा॥ ८९॥

आटश्च॥ 'ईक्ष दर्शने', (धा० पा० ६१०) 'उभ उम्भ पूरणे', ( धा० पा० १३१९, १३२० ) 'उब्ज आर्जवे' ( धा० पा० १३०३ ) 'ऋधु वृद्धौ'—( धा० पा० १२४५ ) इत्येतेषामुदाहरणानि।

**भावबोधिनी**

❀ प्र, वत्सतर, कम्बल, वसन शब्दों की ऋण शब्द परे रहते वृद्धि कहनी चाहिए अर्थात् इनके अवर्ण और ऋ की वृद्धि होती है। ❀ उदा०—प्र—प्रार्णम्। [ प्र + ऋणम् ] वत्सतर—वत्सतरार्णम् [ वत्सतर + ऋणम् ]। कम्बल—कम्बलार्णम् [ कम्बल + ऋणम् ] वसन—वसनार्णम्। [ वसन + ऋणम् ]

❀ ऋण और देश—शब्दों से परे ऋण की वृद्धि कहनी चाहिए। ❀ उदा०—ऋणार्णम्। [ ऋण + ऋणम् ] दशार्णम्। [ दश + ऋणम्। दशार्ण एक नदी और एक स्थान-विशेष की संज्ञा है। सर्वत्र वृद्धि के बाद रपर होता है। काशिका में भाष्य के अनुसार दो वार्त्तिक लिखे गये है किन्तु सिद्धान्तकौमुदी में मिलाकर एक ही वार्तिक लिखा गया है—"प्रवत्सतरकम्बलवसनार्णदशानामृणे।" अतः यह भाष्यविरुद्ध है। ]॥ ८९॥

'एचि' इसकी निवृत्ति है। 'अचि' ( अच् परे रहते ) इसकी अनुवृत्ति है। आट् से परे जो अच् और अच् परे रहते जो आट्—इन पूर्व और पर = आट् + अच् के स्थान में वृद्धि एक आदेश होता है। उदा०—ऐक्षिष्ट। ऐक्षत। ऐक्षिष्यत। [ √ईक्ष दर्शने के लुङ्, लङ् और लृङ् के रूपों में 'आडजादीनाम्' सूत्र से आट् का आगम होने से—आ + ईक्ष·······में वृद्धि करने से 'ऐ' होकर उक्त रूप बनते हैं। ] औभीत्। [ √उभ उम्भ पूरणे' धातु का लुङ् का रूप है। आ + उभीत, वृद्धि ] आर्ध्नोत्। [ √ऋधु वृद्धौ के लङ् का रूप है—आ + ऋध् नोत्, वृद्धि, रपर ] औब्जीत्। [ √उब्ज आर्जवे का लुङ् का रूप है। वृद्धि करने पर रूप बना है। यह सूत्र न रहने पर सभी में गुण होने लगता। ]

[1]चकारोऽधिकविधानार्थः—'उसि' ( ६.१.९६ ) 'ओमाङोश्च' ( ६.१. ९५ ) इति पररूपबाधनार्थः। औस्रीयत्। औङ्कारीयत्। आ + ऊढा ओढा, तामैच्छत् औढीयत्॥

## २५३१. उपसर्गादृति धातौ॥ ९१॥ ( ७४ )

'आत्' इत्येव। अवर्णान्तादुपसर्गादृकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणापवादः। उपार्च्छति। प्रार्च्छति। उपार्ध्नोति।

### न्यासः

**चकारोऽधिकविधानार्थ इति**। न तु वृद्धेरनुकर्षणार्थः; तदनुवृत्तेः स्वरितत्वादेव सिद्धत्वादित्यभिप्रायः। अधिकविधानार्थं इत्यस्यार्थं वाक्यान्तरेण विस्पष्टीकर्तुमाह—**उस्योमाङोश्चेति पररूपबाधनार्थ इति**। उसि, ओमि, आङि च यत् पररूपं प्राप्नोति, तद्बाधनार्थ इत्यर्थः। चकारेण हि द्विर्वृद्धिविधानं विज्ञापयति। तत्र यद् द्वितीयं विधानं तद् बाधकबाधनार्थं भवति। तेन 'उस्यपदान्तात्' इति यत् पररूपं प्राप्नोति, यच्च 'ओमाङोश्च' इति, तदपि बाधित्वा वृद्धिरेव भवति। **औस्रीयद्, औङ्कारीयदिति**। उस्रशब्दादोङ्कारशब्दाच्च 'सुप आत्मनः क्यच् च' इति क्यच्, 'क्यचि च' इतीत्त्वम्, क्यजन्ताल्लुङ् आट्, 'उस्यपदान्तात्' इति पररूपे बाधके प्राप्ते चकारस्याधिकविधानार्थत्वाद्वृद्धिरेव भवति। **औढीयदिति**। ओढाशब्दात् क्यजन्ताल्लुङ्, आडागमे कृते 'ओमाङोश्च' इति पररूपे बाधके प्राप्ते चकारस्याधिकविधानार्थत्वाद्वृद्धिरेव भवति॥ ९०॥

**उपसर्गादृति धातौ॥ उपार्च्छतीति**। 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु'। **प्रगता ऋच्छका अस्माद् देशात् प्रर्च्छको देश इति**। अत्र 'यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्ति' इति गमिं प्रति प्रशब्दो गत्युपसर्गसंज्ञकः, न ऋच्छतिं प्रतीति भवति प्रत्युदाहरणमिदम्।

### पदमञ्जरी

**चकारोऽधिकविधानार्थं इति। उस्योमाङोश्चेति**। अस्यैव विवरणम्—**पररूपबाधनार्थं इति**। उसि, ओमि, आङि च यत्पररूपं प्राप्नोति तद्बाधनार्थं इत्यर्थः; अन्यथा परत्वात्तदेव पररूपं स्यात्। **औस्रीयदिति**। अनर्थकेऽप्युसि पररूपविधानादत्र प्रसङ्गः॥ ९०॥

**उपसर्गादृति धातौ॥ उपार्च्छतीति**। 'ऋच्छ गन्तीन्द्रियप्रलयमूर्तिभावेषु' ( धा० पा० १२९६ )।

### भावबोधिनी

चकार अधिक का विधान करने के लिए—"उस्यपदान्तात्" ( पा० सू० ६।१।९६ ) और 'ओमाङोश्च' ( पा० सू० ६।१।९५ ) सूत्रों से प्राप्त पररूप का बाध करने के लिए है। उदा०—औस्रीयत्। औङ्कारीयत्। [ उस्रम् आत्मन इच्छति—इस अर्थ में 'सुप आत्मनः क्यच्' से क्यच् = य, अ का ईत्व—उस्रीय बनाकर लङ् में आट् आगम करने पर 'उस्यपदान्तात्' से प्राप्त पररूप की अपवाद वृद्धि ही होती है—औस्रीयत्। इसी प्रकार ओङ्कारम् आत्मन इच्छति—में भी क्यच् आदि के बाद ओङ्कारीय नामधातु के लङ् में आट् आगम करने पर 'ओमाङोश्च' से प्राप्त पररूप की अपवाद वृद्धि ही होती है। ] आ + ऊढा = ओढा [ प्र से परे न होने के कारण वृद्धि न होकर गुण ही होता है। ओढाम् आत्मन इच्छति—इस अर्थ में क्यजन्त से लङ् में ] ओढाम् ऐच्छत्—यहाँ औढीयत् यह होता है। [ अन्यथा आङ् परे रहने से 'ओमाङोश्च' से वृद्धि का अपवाद पररूप ही होता। च के ग्रहण से दुबारा वृद्धि ही होती है—इसका ज्ञान कराया जाता है। अतः आट् के साथ सदैव वृद्धि ही होती है। यही 'आटश्च' में चग्रहण का फल है। ]॥ ९०॥

'आत्' [ इसकी अनुवृत्ति होती है। ] अवर्णान्त उपसर्ग से परे ऋकारादि धातु के होने पर पूर्व और पर दोनों के स्थान में वृद्धि एकादेश होता है। यह 'आद्गुणः' सूत्र का अपवाद है। उदा०—उपार्च्छति। प्रार्च्छति। उपार्ध्नोतित्।

---

१. 'च'—शब्द एवकारार्थ इति भावः। प्रस्तुतसूत्रभाष्ये उद्द्योतः।

**उपसर्गादिति किम्? खट्वर्च्छति। मालर्च्छति। प्रगता ऋच्छका अस्माद्देशात् प्रर्च्छको देशः। 'यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञकाः' ( जै० परि० ९९ ) इति।**

**ऋतीति किम्? उप + इतः उपेतः। तपकरणं किम्? उप + ॠकारीयति उपर्कारीयति। 'वा सुप्यापिशलेः' ( ६.१.९२ ) इति[1] विकल्पः स्यात्।**

**उपसर्गग्रहणादेव धातुग्रहणे सिद्धे धातुग्रहणं शाकल्यनिवृत्त्यर्थम्। 'ऋत्यकः' ( ६.१.१२८ ) इति हि**

**न्यासः**

**वा सुप्यापिशलेरिति विकल्पः स्यादिति।** एतेनोत्तरार्थतां तपरकरणस्य दर्शयति।

अथ धातुग्रहणं किमर्थम्, यावता सम्बन्धिशब्दा हि नियतं प्रतियोगिनमुपस्थापयन्ति, तद्यथा –पुत्रादिशब्दाः, उपसर्गश्चायं धात्वपेक्षत्वात् सम्बन्धिशब्दः, तत्रोपसर्गग्रहणादेव धातुग्रहणं सिध्यति? अत्र आह— **उपसर्गग्रहणादेवेत्यादि।** यदि धातुग्रहणं न क्रियेत, तदा पराच्र्छतीत्यत्र 'ऋत्यकः' इति परत्वाच्छाकल्यस्य मतेन प्रकृतिवद्भावः स्यात्। तस्मात् तस्य शाकल्यस्य प्रकृतिवद्भावस्यनिवृत्त्यर्थं धातुग्रहणं क्रियते। कथं पुनः क्रियमाणे धातुग्रहणे शाकल्यस्य प्रकृतिवद्भावनिवृत्तिर्लभ्यते? योगविभागकरणात्। सति हि धातुग्रहणे योगविभागः क्रियते - उपसर्गादृति वृद्धिर्भवतीति; ततो धाताविति, इहोपसर्गादिति वर्त्तते। ततो द्वितीयो योगो बाधकबाधनार्थो विज्ञायते। अथ 'उपसर्गाच्छन्दसि धात्वर्थे' इत्यत्र यथा प्राद्युपलक्षणार्थमुपसर्ग-

**पदमञ्जरी**

**प्रर्च्छको देश इति।** अत्र यत्क्रियायुक्ताः 'प्रादयः' इति गमिं प्रति प्रशब्दस्योपसर्गत्वं नर्च्छतिं प्रतीति भवति प्रत्युदाहरणम्।

**वा सुप्यापिशलेरिति हि विकल्पः स्यादिति।** तेनोत्तरार्थन्तपरकरणमिति भावः।

धातुग्रहणमनर्थकम्, यत्र चोपसर्गत्वं न सम्भवति, तत्रोपसर्गग्रहणेन प्रादयोऽपि लक्ष्यन्ते, यथा-नासिकाया नस्भावविधौ; इह तु मुख्यमेवोपसर्गत्वं सम्भवति, तत्किं धातुग्रहणेन? इत्यत आह–**उपसर्गग्रहणादेवेति।**

**भावबोधिनी**

[ उप + ऋच्छति, प्र + ऋच्छति। उप + ऋध्नोति। यहाँ अ + ऋ दोनों के स्थान में 'आ' वृद्धि और 'उरण् रपरः' से रपर होने से 'आर्' होती है। ]

उपसर्ग से परे --इसका क्या फल है? खट्वर्च्छति। मालर्च्छति। [ खट्वा + ऋच्छति, माला + ऋच्छति— उपसर्ग नहीं है। अतः वृद्धि न होकर गुण, रपर होता है। ] प्रगता ऋच्छका अस्मात् देशात्—इस अर्थ में ( समास के बाद ) प्रर्च्छकः देशः। [ प्र + ऋच्छकः यहाँ भी वृद्धि नहीं होती है, क्योंकि ] 'जिस क्रियावाचक से युक्त होते हैं, प्रादि उसी के प्रति उपसर्ग होते हैं।' यह वचन है। [ यहाँ प्र का योग गत—क्रिया के साथ है ✓ऋच्छ के साथ नहीं। अतः उपसर्ग के बाद ऋकार न होने से वृद्धि नहीं होती है। ]

ऋकारादि परे रहने पर इसका क्या फल है? उप + इतः = उपेतः। [ अकारान्त उपसर्ग है, किन्तु ऋकारादि धातु न होने से वृद्धि नहीं होती है। ] तपर-करण का क्या फल है अर्थात् ह्रस्व ऋकारादि परे रहने पर—इसका क्या प्रयोजन है? उप + ॠकारीयति = उपर्कारीयति—इसमें "वा सुप्यापिशलेः" इस सूत्र से विकल्प से वृद्धि होने लगती। [ 'ऋति' तपरविशिष्ट की ही उसमें अनुवृत्ति होने से प्रस्तुत दीर्घ ॠ परे उसकी प्रवृत्ति न होने के कारण गुण होकर एक ही रूप बनता है। ]

उपसर्ग के ग्रहण से ही धातु का ग्रहण सिद्ध रहने पर पुनः धातुग्रहण शाकल्य के मत की निवृत्ति के लिए है। 'ऋत्यकः' ( पा० सू० ६।१।१२८ ) इससे शाकल्य के मत में प्रकृतिभाव प्राप्त होता है। [ उपसर्ग संज्ञा धातु के योग में

---

१. 'हि' इत्यधिकं पदमञ्जर्याम्।

**शाकल्यस्य प्रकृतिभावः प्राप्नोति ॥**

**२५३२. वा सुप्यापिशलेः ॥ ९२ ॥ ( ७७ )**

**'आत्' इत्येव, 'उपसर्गादृति धातौ' इति च। सुबन्तावयवे धातावृकारादौ परतोऽवर्णन्तादुपसर्गात् पूर्वपरयोरापिशलेराचार्यस्य मतेन वा वृद्धिरेकादेशो भवति। उपर्षभीयति, उपार्षभीयति। उपल्कारीयति, उपाल्कारीयति। 'ऋकारऌकारयोः सावर्ण्यविधिः' इति ऋतीति ऌकारोऽपि गृह्यते।**

**आपिशलिग्रहणं पूजार्थम्, वेति ह्युच्यत एव ॥**

**न्यासः**

ग्रहणं विज्ञायते, तथेहापि कस्मान्न विज्ञायेत ? अशक्यत्वात्। 'उपसर्गाच्छन्दसि धात्वर्थे' इत्यत्र हि धातोरुपस्थानं न सम्भवतीति युक्तं प्राद्युपलक्षणार्थमुपसर्गग्रहणम्। इह हि धातोरुपस्थानं सम्भवतीत्ययुक्तम् ॥ ९१ ॥

**वा सुप्यापिशलेः** ॥ धातावित्यनुवर्त्तते, सुपीति चोच्यते, न च सुबन्तो धातुरस्ति, तत्र सामर्थ्याद्धात्वेकदेशे वर्त्तमानं सुपीत्येतदिह विशेषणं विज्ञायते, इत्याह—**सुबन्तावयवे धातावित्यादि। उपाल्कारीयतीति।** कथं पुनर्ऋतीत्युच्यमाने ऌकारे वृद्धिः प्रवर्त्तते ? इत्याह—**ऋकारऌकारयोरित्यादि।** ऋकारऌकारयोः सवर्णसंज्ञा विहितेति ऋकारो गृह्यमा.ण ऌकारमपि ग्राहयतीति तत्रापि वृद्धिर्भवति।

**आपिशलिग्रहणं पूजार्थमिति।** अथ विकल्पार्थं कस्मान्न भवति ? इत्याह—**वेत्युच्यत एवेति।** यद्यप्याचार्यग्रहणेनैव पूजा, विकल्पश्चोभयं सम्पद्यते; तथाप्याचार्यग्रहणस्य प्राधान्येन पूजां ख्यापयितुं वाग्रहणं कृतमिति भावः ॥ ९२ ॥

**पदमञ्जरी**

शाकल्यस्येदं शाकलम्, तस्य निवृत्त्यर्थं पुनर्धातुग्रहणम्। सति तु धातुग्रहणे योगविभागेन पुनर्वृद्धिर्विधीयत इति शाकलं बाध्यते। असति तु तस्मिन् शाकल्यमतेन परत्वात् प्रकृतिभावः स्यादेव ॥ ९१ ॥

**वा सुप्यापिशलेः।** सुबन्तस्य धातोरसम्भवात्सुबित्येतद्धातोरवयवद्वारकं विशेषणमित्याह—**सुबन्तावयवे धाताविति।** आचार्यग्रहणेनैव पूजाविकल्पयोरपि सिद्धयोः पुनर्वाग्रहणमाचार्यग्रहस्य प्राधान्येन पूजार्थतां ख्यापियितुं कृतम् ॥ ९२ ॥

**भावबोधिनी**

ही होती है। अतः उपसर्गग्रहण से ही आक्षेप से धातुग्रहण सम्भव हो जाने पर भी पुनः धातु के ग्रहण करने का फल है 'ऋत्यकः' सूत्र की प्रवृत्ति रोकना। अन्यथा परवर्ती होने से वैकल्पिक प्रकृतिभाव ही होने लग जाता। इसलिए धातुग्रहण द्वारा योगविभाग मानकर पुनर्वृद्धि-विधान किया जा सके, इसके लिए 'धातौ' इसका ग्रहण है। ] ॥ ९१ ॥

'आत्' और 'उपसर्गाद् ऋति धातौ' इनकी अनुवृत्ति होती है। सुबन्त की अवयव ऋकारादि धातु अवर्णान्त उपसर्ग से परे रहने पर पूर्व और पर दोनों स्थानियों के स्थान पर आपिशलि आचार्य के मत से विकल्प से वृद्धि एकादेश होता है। उदा०—उपर्षभीयति, उपार्षभीयति। [ ऋषभ इव आचरति अर्थ में क्यजन्त = सुब्धातु ऋषभीयति परे वैकल्पिक वृद्धि, रपर। पक्ष में गुण, रपर होता है। ] उपाल्कारीयति, उपाल्कारीयति। [ उप + ऌकारीयति—यहाँ ] 'ऋकार और ऌकार की सवर्णता होती है' मानकर 'ऋत् परे' इससे ऌ परे इसका भी ग्रहण हो जाता है। [ अतः वृद्धि, लपर और पक्ष में गुण, लपर होते हैं। ऌकार इव आचरति—आदि अर्थों में सुबन्त से क्यच् करने पर रूप बनता है। ऋ और ऌ की सवर्णता होने से दोनों का ग्रहण किया जाता है। अतः वैकल्पिक वृद्धि, पक्ष में गुण और लपर होते हैं। ]

[ सूत्र में ] आपिशलि का उल्लेख पूजा ( उनके प्रति सम्मान प्रकट करने ) के लिए है, क्योंकि 'वा' से विकल्प कह ही दिया जाता है। [ अतः विकल्प-बोधनार्थ नहीं है। ] ॥ ९२ ॥

## २५३३. औतोऽम्शसोः ॥ ९३ ॥ ( २८५ )

**ओतोऽमि शसि च परतः पूर्वपरयोराकार आदेशो भवति । गां पश्य, गाः पश्य । द्यां पश्य, द्याः पश्य ।**

**द्योशब्दोऽप्योकारान्त एव विद्यते, ततोऽपि परं सर्वनामस्थानं णिदिष्यते, तेन नाप्राप्तायां वृद्धावयमाकारो विधीयमानस्तां बाधते ।**

**अमिति द्वितीयैकवचनं गृह्यते; शसा साहचर्यात्, 'सुपि' इति चाधिकारात् । तेनाचिनवम्, असुनवमित्यत्र न भवति ॥**

### न्यासः

**औतोऽम्शसोः ॥ गाम्पश्येति ।** कथं पुनरेतदुदाहृतम्, यावता 'गोतो णित्' इति णित्त्वे सति परत्वाद् वृद्ध्यात्र भवितव्यम् ? इत्यत आह—**द्योशब्दोऽप्योकारान्त इत्यादि ।** तपरकरणं हि वर्णनिर्देशेषु प्रसिद्धमिति 'गोतः' इति तपरनिर्देश ओकारान्तोपलक्षणार्थो विज्ञायते, ततश्च द्योशब्दादपि परं सर्वनामस्थानं णिद्भवति । यद्येवम्, तत् किमिति वृद्धिर्नात्र भवति ? इत्याह—**तेनेत्यादि ।** यदि द्योशब्दात् परस्य सर्वनामस्थानस्य णित्त्वं न स्यात्, ततो द्यां पश्येत्यत्र सावकाशमात्वं गां पश्येत्यत्र परत्वाद् वृद्ध्या बाध्येत । यदि तु द्योशब्दादपि परं सर्वनामस्थानं णिद्भवतीति, तदा द्यां पश्येत्यत्र वृद्धिः प्राप्नोत्येव । ततो नाप्राप्तायां वृद्धाविदमात्वं विधीयमानमनवकाशत्वाद्वृद्धिं बाधते । ततश्च युक्तमेव गां पश्येत्येतदुदाहरणम् ।

अथेहाप्यचिनवम्, असुनवमित्यत्र चिनोतेः सुनोतेश्च लङि मिपि विकरणस्य गुणे कृते मिपः 'तस्थस्थमिपाम्' इत्यादिनाम्भावे चौकारस्यात्वं कस्मान्न भवति ? इत्याह—**अमीत्यादि ।** सशा साहचार्यात् सुबधिकाराद्वा सुप एवाम इदं ग्रहणम् । अतो नात्रात्वस्य प्रसङ्गः ।चित्रगुं पश्येत्यत्र तु ह्रस्वत्वे कृत ओकाराभावाद् 'अनल्विधौ' इति स्थानिवद्भावप्रतिषेधादात्वं न भवति ॥ ९३ ॥

### पदमञ्जरी

**औतोम्शसोः ॥ गां पश्येति ।** ननु चात्र 'गोतो णित्' इति णित्त्वे सति परत्वाद्वृद्धौ कृतायामोकाराभावादात्वेन न भाव्यम्, आत्वविधानं तु द्योशब्दार्थं स्यात्, न हि तत्र णित्वमस्ति, 'गोतः' इति वचनादित्यत आह—**द्योशब्दोऽपीत्यादि ।** सत्यं यदि णित्त्वं न स्यात्, अस्ति तु तत्रापि णित्वम्, 'गोतः' इत्यस्यौकारान्तोपलक्षणत्वात्, वर्णनिर्देशेषु तपरत्वप्रसिद्धेः । ततः किम् ? इत्याह—**तेनेति ।**

**शसा साहचर्यादिति ।** सुप एव हि शसोऽत्र सम्भवः, नान्यस्य; 'अचि' इत्यधिकारात् ।

**अचिनवमसुनवमिति ।** चिनोतेः, सुनोतेश्च लङ्, 'तस्थस्थमिपाम्' इत्यमि कृते विकरणस्य गुणावादेशौ ॥ ९३ ॥

### भावबोधिनी

ओकार से अम् और शस् परे रहते पूर्व और पर के स्थान पर 'आकार' एक आदेश होता है । उदा०—गां पश्य । गाः पश्य । [ गो + अम्, गो + शस् = अस्, ओ + अ = आ, ओ + अ = आ एकादेश कर देने पर गाम्, गास्—रुत्व, विसर्ग । ] द्यां पश्य । द्याः पश्य । [ द्यो + अम्, द्यो + शस् = अस्, ओ और अ के स्थान पर 'आ' आदेश—द्याम्, द्याः । ]

द्यो शब्द भी ओकारान्त ही है उससे परे भी सर्वनामस्थान संज्ञक प्रत्यय [ सु से औट् तक ] णित् इष्ट है । इसलिए अप्राप्त ही वृद्धि की स्थिति में किया जाने वाला यह आकार उस वृद्धि का बाध कर लेता है । शस् प्रत्यय के साहचर्य से और 'सुपि' ( सुप् परे रहते )—इसके अधिकार से 'अम्' यह द्वितीया का एकवचन ही लिया जाता है । इस कारण अचिनवम्, असुनवम् इनमें नहीं होता है । [ अचिनो + अम्, असुनो + अम्, उत्तम पुरुष मिप् का अम् आदेश है । यहाँ ओ + अ का आ नहीं होता है । ] ॥ ९३ ॥

## २५३४. एङि पररूपम् ॥ ९४ ॥ ( ७८ )

**'आत्' इत्येव, 'उपसर्गाद्धातौ' इति च। अवर्णान्तादुपसर्गादेङादौ धातौ पूर्वपरयोः पररूपमेकादेशो भवति। 'वृद्धिरेचि' ( ६ १.८८ ) इत्यस्यापवादः। उपेलयति। प्रेलयति। उपोषति। प्रोखति।**

**केचिद् 'वा सुप्यापिशलेः' इत्यनुवर्त्तयन्ति, तच्च वाक्यभेदेन सुब्धातौ विकल्पं करोति— उपेडकीयति, उपैडकीयति। उपोदनीयति, उपौदनीयति।**

### न्यासः

**एङि पररूपम्** ॥ **उपेलयतीति**। 'इल प्रेरणे', चुरादिणिच्। **प्रोखतीति**। 'उख नख' इत्युखिर्गत्यर्थो भ्वादौ पठ्यते। यदि 'वा सुपि' इत्यनुवर्त्तयन्ति, एवं सति तेन सहास्यैकवाक्यतायां सुब्धातोरेवानेन विकल्पेन पररूपं क्रियते, असुपि तु पररूपं न स्यादेवेत्याह— **तच्चेत्यादि**। एकवाक्यत्वे हि सत्येष दोषः स्यात्। न चात्रैकवाक्यता, किं तर्हि ? वाक्यभेदः। तेन तदिहानुवर्त्तमानं सुब्धातावेव विकल्पं करोति, इतरत्र तु नित्यमेव पररूपं प्रवर्त्तते। तत्रावर्णान्तादुपसर्गादसुबन्तावयवे धातावेङादौ पूर्वपरयोः पररूपमेकादेशो भवतीत्येकं वाक्यम्, अवर्णान्तादुपसर्गात् सुबन्तावयवे धातावेङादौ पूर्वपरयोर्वा पररूपमेकादेशो भवतीति द्वितीयम्। तत्र पूर्वेण वाक्येनासुबन्तावयवे धातावुपेलयतीत्यादौ नित्यं पररूपं विधीयते। द्वितीयेन तु सुबन्तावयवे धातावुपेडकीयतीत्येवमादौ विकल्पेन पररूपं विधीयते। वाक्यभेदस्तु 'एङि पररूपम्' इति तन्त्रेण सूत्रद्वयोच्चारणाल्लभ्यते। सूत्रद्वये तूच्चार्यमाणे सत्येक एव 'वा सुप्यापिशलेः' इत्येतदनुवर्तमानमपि लक्ष्यानुरोधान्नाभिसम्बध्यते, द्वितीये तु सम्बध्यत एव। तेन वाक्यद्वयं पूर्वोक्तं सम्पद्यते।

**वक्तव्यमिति**। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्— उत्तरसूत्रे चकारोऽधिकविधानार्थः, तेन शकन्ध्वादिषु पररूपं भविष्यतीति। उत्तरत्रापि वक्तव्यशब्दस्यायमर्थो व्याख्यानं चैतदेव वेदितव्यम्।

### पदमञ्जरी

**एङि पररूपम्** ॥ 'इल प्रेरणे' ( धा० पा० १६६० ) चुरादिः, 'ओखृ शाखृ' ( धा० पा० १२१, १२६ ) इति भूवादौ पठ्येते।

**केचिद्वा सुप्यापिशलेरित्यनुवर्त्तयन्तीति**। यद्येवम्, तेन सहास्यैकवाक्यतायाम् असुब्धातुषु नास्य प्रवृत्तिः स्याद् ? इत्यत आह— **तच्चेति**। अत्र व्याख्यानमेव शरणम्।

### भावबोधिनी

'आत्' इसकी और 'उपसर्गात् धातौ' इनकी अनुवृत्ति होती हैं। अवर्णान्त उपसर्ग से एङादि धातु परे रहने पर पूर्व और पर के स्थान में पररूप एक आदेश होता है। यह 'वृद्धिरेचि' इस एकादेश का अपवाद है। उदा०— उपेलयति। प्रेलयति। [ '√ इल प्रेरणे' चुरादिगणीय होने से णिच् = इ करने पर उपधा का गुण— एलि + लट्, शप्, गुण, अय्, आदेश — एलयति। उप + एलयति, प्र + एलयति। वृद्धि प्राप्त है किन्तु पूर्व-पर के स्थान में पररूप = ए एकादेश होता है। ] उपोषति। [ उप + ओषति ] प्रोखति। [ प्र + ओखति, यह उख अथवा ओख् धातु का रूप है। दोनों के स्थान पर 'ओ' पररूप एकादेश होता है। ]

कुछ व्याख्याकार 'वा सुप्यापिशलेः' इसकी अनुवृत्ति करते हैं, वह वाक्यभेद से सुब्धातु = नामधातु परे विकल्प करता है— उपेडकीयति, उपैडकीयति। [ एडकम् इच्छति— इसमें क्यच् आदि कर के एडकीयति बनाकर उप + एडकीयति, विकल्प से पररूप, पक्ष में वृद्धि करने पर दो रूप होते हैं। ] उपोदनीयति, उपौदनीयति। [ ओदनम् इच्छति— ओदनीयति, पाक्षिक पररूप और वृद्धि— उप + ओदनीयति में। ]

**❀ शकन्ध्वादिषु पररूपं वक्तव्यम् ❀ ( म० भा० ६.१.९४ वा० ४ )। शक + अन्धुः = शकन्धुः। कुल + अटा = कुलटा।**

**❀ सीमन्तः केशेषु ❀ ( म० भा० )। सीम्नोऽन्तः सीमन्तः। अन्यत्र सीमान्तः।**

**❀ एवे चानियोगे पररूपं वक्तव्यम् ❀ ( म० भा० वा० ३ )। इह + एव इहेव। अद्य + एव अद्येव। अनियोगे इति किम् ? इहैव भव माऽन्यत्र गाः॥**

**❀ ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम् ❀ ( म० भा० वा० ५ )। स्थूल + ओतुः स्थूलौतुः, स्थूलोतुः। बिम्बौष्ठी, बिम्बोष्ठी। समास इति किम् ? तिष्ठ देवदत्तौष्ठं पश्य।**

**❀ एमन्नादिषु छन्दसि पररूपं वक्तव्यम् ❀ ( म० भा० वा० ६ )। अपां त्वा एमन्, 'अपां त्वेमन्'**

**न्यासः**

**एवे चानियोग इति।** नियोगः = नियोजनम्, व्यापारणमित्यर्थः। न नियोगोऽनियोगः = अनवक्लृप्तिः। तत्रैवशब्दे पररूपं वेदितव्यम्। एवशब्दोऽनियमे वर्तते। यदा तमेव केवलं नियमं व्यापारेणाविशिष्टं ब्रूते तदा पररूपं भवति। यदा तु व्यापारेण विशिष्टं तदा वृद्धिरेव।

**पदमञ्जरी**

**शकन्ध्वादिष्विति।** शकन्ध्वादयः प्रयोगतोऽनुसर्तव्याः, तेषु पररूपं वक्तव्यम्। 'कुलटाया वा', 'कतन्तेभ्यः' इत्यादिनिर्देशोऽस्मिन्नर्थे लिङ्गम्। अन्धुः = कूपः, बहूनि कुलान्यटति नैकस्मिन्कुलेऽवस्थितेति कुलटा। पचादिष्वयं पठितव्यः, अन्यथा 'कर्मण्यण्' स्यात्।

**एवे चानियोग इति।** नियोगः = अवश्यम्भावः, नियमः = अवधारणम्, ततोऽन्यत्रार्थे पररूपं सम्भवति। उदाहरणेऽनवक्लृप्तावेवशब्दः, यथा—क्वेव भोक्ष्यस इति। अवधारणे तु वृद्धिरेव भवति—'अमैवाव्ययेन', 'धातोस्तन्निमित्तस्यैव', इहैव सन्तत्वाय, ममैव हव्यान्यग्न इत्यादि।

ओतुः = विडालः। 'तुन्वोर्वि निपात उपसंख्यानम्', वीति सप्तमीनिर्देशात्तदादिविधिः, वकारादौ निपाते परतः तुनु-इत्येतयोः पररूपं भवति तु वै त्वै, अनुभूततमं चैकम्। नुवै न्वै। एक एवायं निपातः, अर्थभेदात्, यदाह—'न वा, निपातैकत्वात्' इति। अत एव नैतद् **वृत्तिकारेण** पठितम्।

**भावबोधिनी**

❀ शकन्धु आदि में पररूप कहना चाहिए। ❀ उदा०—शक + अन्धुः—शकन्धुः। कुल + अटा = कुलटा। [ दोनों अकारों का पररूप एकादेश होता है। दीर्घ नहीं होता है। ]

❀ केश अर्थों में 'सीमन्तः' बनता है। ❀ उदा०—सीम्नः अन्तः [ इस षष्ठी तत्पुरुष में विभक्तिलोप के बाद सीमन् + अन्तः में अन् + अ का पररूप—अ, सीमन्तः। ] इससे भिन्न अर्थों में—सीमान्तः।

❀ अनियोग = अनियम अर्थ में एव परे रहते पररूप कहना चाहिए। इह + एव = इहेव, अद्य + एव = अद्येव। [ इनमें सामान्यतया प्रतीति है अवधारण नहीं है अतः पररूप होता है। ] अनियोग में—इसका क्या फल है ? इहैव भव, मान्यत्र गाः। [ इह + एव—में नियोग = नियम है अतः पररूप न होकर वृद्धि होती है। ]

❀ समास में ओतु और ओष्ठ शब्दों के परे रहते विकल्प से पररूप कहना चाहिए। ❀ उदा०—स्थूल + ओतुः—पाक्षिक पररूप—स्थूलोतुः। पक्ष में वृद्धि—स्थूलौतुः [ मोटा बिलाव ]। विम्ब + ओष्ठी—पाक्षिक पररूप—विम्बोष्ठी, पक्ष में वृद्धि विम्बौष्ठी। समास में—इसका क्या फल है ? तिष्ठ देवदत्तौष्ठं पश्य। [ सम्बोधन एकवचन में सु का लोप होने से अ + ओ के स्थान पर वृद्धिरूप एकादेश होता है। समास न होने से पररूप नहीं होता है। ]

❀ वेद में एमन् आदि परे रहते पररूप कहना चाहिए। ❀ उदा०—अपां त्वा + एमन्—अपां त्वेमन्। अपां

**( मै० सं० २.७.१८. १ ) । अपां त्वा ओद्मन्, 'अपां त्वोद्मन्' ( मै० सं० २.७.१८ १ ) ॥**

**२९३९. ओमाङोश्च ॥ ९५ ॥ ( ८० )**

**'आत्' इत्येव । अवर्णान्तादोमि आङि च परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । का + ओमित्यवोचत्, कोमित्यवोचत् । योमित्यवोचत् । आङि खल्वपि—आ + ऊढा ओढा । अद्य + ओढा अद्योढा । कदा + ओढा कदोढा । तदा + ओढा, तदोढा । 'वृद्धिरेचि' ( ६.१.८८ ) इत्यस्यापवादः ।**

**इह तु—आ ऋश्यात् अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यादिति 'अकः सवर्णे दीर्घत्वं' ( ६ १.१०१ ) बाधते ॥**

**न्यासः**

**बिम्बोष्ठीति** । 'नासिकोदरौष्ठ' इति ङीप् । तिष्ठ देवदत्तौष्ठं पश्येति वाक्यमेतत्, न तु समासः । देवदत्त-शब्दात् 'एङ् ह्रस्वात् सम्बुद्धेः' इति सोर्लोपः ॥ ९४ ॥

**ओमाङोश्च ॥ अद्योढेति** । अद्य + ओढा । ननु च 'आद्गुणः' इत्यनेनाङो निर्वर्तितत्वादिदमाङ उदाहरणं न युज्यते ? आङमाङोरेकादेशस्त्वाङ्ग्रहणेन गृह्यत इत्यदोषः । पूर्वमेव हीदमुक्तम्—'द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यो भवति लभतेऽसावन्यतरव्यपदेशम्' इति । किमर्थं पुनराङो ग्रहणम्, यावता प्रागेवाङः पूर्वेण सह 'अकः सवर्णे दीर्घः' इति दीर्घत्वे कृते ततः परेण सह 'आदगुणः' इति गुणे चाद्योढेत्यादि सिद्धमेव ? न सिध्यति, यतः 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति पूर्वमाद्गुणेन भवितव्यम्, तथा च सति वृद्धिः स्यात् । अत आङोऽपि ग्रहणं कर्त्तव्यम् ।

**इह त्वकः सवर्णे दीर्घत्वं बाध्यत इति** । अस्य विधेर्विशेषविहितत्वात्, अकः सवर्णे दीर्घस्य च सामान्य-विहितत्वात् विशेषविहितोऽपि सामान्यविहितस्य बाधको भवतीति प्रतिपादितमेतत् ॥ ९५ ॥

**पदमञ्जरी**

सूत्रे पररूपग्रहणमुत्तरार्थम्, इह त्वेङीत्येव सिद्धम्—एङि परत एकादेशो भवतीति । रूपग्रहणं चिन्त्यप्रयोजनम्, तथा च 'अमि पूर्वः' इत्यत्र रूपग्रहणं न कृतम् ॥ ९४ ॥

**ओमाङोश्च ॥ अद्योढेति** । आङनाङोरेकादेश आङ्ग्रहणेन गृह्यत इति भवत्युदाहरणम् । अत्र च 'धातूपसर्गयोः कार्यमन्तरङ्गम्' ( व्या० परि० वृ० ३७ ) इति पूर्वमाद्गुणे कृते पश्चादद्यशब्देन सम्बन्धे वृद्धिः प्राप्नोति, एवमाङो रूपमविनष्टम् । अद्य आगत इत्यादौ तत्र सवर्णदीर्घत्वेन सिद्धं रूपम् ।

**अकः सवर्णे दीर्घत्वं बाध्यत[1] इति** । ननु च मध्येऽपवादन्यायेन ( व्या० परि० १० ) वृद्धेरेव बाधो युक्तः, न दीर्घत्वस्य ? नैष दोषः; चकारोऽत्र क्रियते, स पुनर्विधानार्थो भविष्यति ॥ ९५ ॥

**भावबोधिनी**

त्वा + ओद्मन्—अपां त्वोद्मन् ।

**विमर्श**—इस सूत्र में 'पररूपम्' की आवश्यकता नहीं है । अतः इसे अग्रिम सूत्र में अनुवृत्ति के लिए माना जाता है । एङ् परे पूर्व और पर के स्थान में एक आदेश होता है और वह परवर्त्ती के रूप वाला ही होता है । इसीलिए 'अमि पूर्वः' में रूप शब्द नहीं है । यहाँ भी केवल 'परः' यही रहना चाहिए ॥ ९४ ॥

'आत्' इसकी अनुवृत्ति होती है । अवर्णान्त से ओम् और आङ् परे रहते पूर्वपर—दोनों के स्थान में पररूप एक आदेश होता है । उदा०—का + ओमित्यवोचत् + कोमित्यवोचत् । आङ् परे भी—आ + ऊढा—[ गुण ] ओढा । अद्य + ओढा में पररूप—अद्योढा । कदा + ओढा—कदोढा । तदा + ओढा—तदोढा । 'यह वृद्धिरेचि' का अपवाद है ।

आ + ऋश्यात् [ यहाँ गुण, रपर करने पर— ] अर्श्यात्, अद्य + अर्श्यात्—इस अद्यर्श्यात् में तो 'अकः सवर्णे दीर्घः' से प्राप्त दीर्घ का अपवाद पररूप होता है । [ इसके लिए आङ् ग्रहण आवश्यक है । ] ॥ ९५ ॥

---

१. 'बाधते' इति काशिकापाठः ।

## २८३६. उस्यपदान्तात् ॥ ९६ ॥ ( २२१४ )

**'आत्' इत्येव । अवर्णादपदान्तादुसि पूर्वपरयोराद्गुणापवादः पररूपमेकादेशो भवति । भिन्द्या + उस भिन्द्युः । छिन्द्या + उस् छिन्द्युः । अदा + उस् अदुः । अया + उस् अयुः ।**

**अपदान्तादिति किम् ? का + उस्रा कोस्रा ( म० भा० ) । का + उषिता कोषिता ।**

**आदित्येव—चक्रुः । अबिभयुः ॥**

**न्यासः**

**उस्यपदान्तात् ॥ भिन्द्युरिति ।** भिदेर्लिङ्, झि, यासुट् 'झेर्जुस्' इति जुस्, श्नम्, 'श्नसोरल्लोपः' इत्यकारलोपः, 'लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः, भिन्द्या + उसिति स्थितेऽनेन पररूपत्वम् । **अदुरिति ।** ददातेर्लुङ्, झि, 'आतः' इति झेर्जुस्, 'गातिस्था' इति सिचो लुक्, अदा + उसिति स्थितेऽनेन पररूपत्वम् ।

**कोस्रा, कोषितेति ।** ननु चात्रैकस्मिन् प्रत्युदाहरणे 'अर्थवद्ग्रहणे नानर्थकस्य' इत्यनया परिभाषयैव न भविष्यति, उस्राशब्दो हि समुदायोऽर्थवान् न तूसित्येष तदवयवः । द्वितीये तु 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य' इत्यनया परिभाषयाऽपि न भविष्यति, लाक्षणिको हि तत्रोस्, तथा हि—वसेर्निष्ठायाम् 'वसतिक्षुधोरिट्', यजादित्वात् सम्प्रसारणे कृते—उषितेति, तत्र पररूपं न सम्पद्यते, तत् किमपदान्तादित्यनेन ? एवं तर्ह्येतदतिरिच्यमानमपदान्तग्रहणमर्थवदनर्थवत्त्वादिकं विशेषमनपेक्ष्योस्मात्रे पररूपं भवतीत्यमुमर्थं द्योतयति । तेन नानर्थके 'उस्यपदान्तात्' इत्येतद् भवति । भिन्द्युरित्यत्र हि यासुडादिः समुदायोऽर्थवान्, न तु तदवयव उस् । लाक्षणिकेऽपि भवतीति— बभुषः पश्येति । 'भा दीप्तौ', लिटः क्वसुः, शस्, 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम्, 'सम्प्रसारणाच्च' इति पूर्वरूपम्, बभा उस् अस् इति स्थितेऽनेन पररूपत्वम् । एतत् सार्वधातुकपक्ष उदाहरणं वेदितव्यम् । आर्धधातुकपक्षे ह्याकारलोपेनैव सिद्धम् । सानुबन्धकेऽपि भवति—अदुः, अधुरिति । क्व तर्हि स्यात् ? बभुरिति । ननु चानर्थक्ये सत्यपदान्तग्रहणस्यायमर्थः परिकल्प्येत, अस्ति चास्योक्तसूत्रे प्रयोजनम्, किं तत् ? अपदान्ताद् यथा स्यादिह मा भूदिति—दण्डाग्रमिति ? नैतदस्ति; यद्येतदेव प्रयोजनमभिमतं स्यात्, तदोक्तसूत्र एवेदं कुर्यात् । इह करणात् तु यथोक्तार्थप्रतिपादनपरतैव तस्यावगम्यते । अधिकाराच्चोत्तरार्थतापि

**पदमञ्जरी**

**उस्यपदान्तात् ॥ भिन्द्युरिति ।** भिदेर्लिङ्, यासुट्, झेर्जुस्, श्नसोरल्लोपः, 'लिङः सलोपोऽनन्त्यस्य' इति सलोपः, भिन्द्या + उस्—अनेन पररूपम् । **अदुरिति ।** दाञो लुङ्, 'गातिस्था' इत्यादिना सिचो लुक्, 'आतः' इति झेर्जुस्, अदा + उस्—अनेन पररूपम् ।

**कोस्रेति ।** ननु चानर्थकत्वादेवास्योसो ग्रहणं न भविष्यति ? एवं तर्ह्येतज्ज्ञापयति—अनर्थकस्याप्युसो ग्रहणमिति, तेन भिद्युरित्यादावप्युसि पररूपं भवति । अत्र हि यासुडादिः समुदायोऽर्थवान्, न तु तदवयव उस् । **कोषितेति ।** वसेः क्तः, 'वसतिक्षुधोरिट्', यजादित्वात्सम्प्रसारणम्, 'शासिवसिघसिनानां च' इति षत्वम्,

**भावबोधिनी**

'आत्' इसकी अनुवृत्ति होती है । अवर्णान्त अपदान्त से उस् परे रहते पूर्व और पर के स्थान में 'आद्गुणः' इसका अपवाद पररूप एक आदेश होता है । उदा०—भिन्द्या + उस्—[ पररूप, विसर्ग ] भिन्द्युः । छिन्द्या + उस्—छिन्द्युः । अदा + उस्—अदुः । अया + उस्—अयुः । [ भिद् + लिङ् = झि = उस्, यासुट् = यास्, श्नम् = न भिनद् यास् + उस्, ''श्नसोरल्लोपः'' सूत्र से श्नम् = न के अ का लोप, ''लिङः सलोपोऽनन्त्यस्य'' सूत्र से यास् के स् का लोप—भिन्द्या + उस् यहाँ आ + उ का पररूप 'उ' होता है । सर्वत्र इसी प्रकार गुण का अपवाद पररूप होता है । ]

अपदान्त—इसका क्या फल है ? का + उस्रा—कोस्रा, का + उषिता—कोषिता । [ इनमें उस् परे होने पर भी वह अपदान्त से नहीं अपितु पदान्त अवर्ण से परे है अतः पररूप नहीं होता है । ]

## २५३७. अतो गुणे ॥ ९७ ॥ ( १९१ )

'अपदान्तात्' इति वर्त्तते । अकारादपदान्ताद् गुणे परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । पचन्ति । यजन्ति । अकः सवर्णे दीर्घस्यापवादः ( ६.१.१०१ ) ।

पचे, यजे —इत्यत्र 'वृद्धिरेचि' ( ६.१.८८ ) इति वृद्धिः प्राप्नोति । अत इति किम् ? यान्ति । वान्ति । गुण इति किम् ? अपचे । अयजे । अपदान्तादित्येव—दण्डाग्रम् । यूपाग्रम् ॥

### न्यासः

भवत्येव । कोषितेत्यत्र 'वसतिक्षुधोः' इतीट्, 'शासिवसिघसीनाञ्च' इति षत्वम्, तस्य चासिद्धत्वात् पररूपत्वप्राप्तिर्वेदितव्या ।

**चक्रुरिति** । कृञो लिटयुसि रूपम् । **अबिभयुरिति** । 'ञिभी भये', लङ्, शप्, 'जुहोत्यादिभ्यः श्लु' इति श्लुः, द्विर्वचनम्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्, 'जुसि च' इति गुणः ॥ ९६ ॥

**अतो गुणे** ॥ **पचे, यजे** इत्यत्र 'वृद्धिरेचि' इति वृद्धिः प्राप्नोति, तेन तस्या एव पररूपत्वमपवाद इत्यभिप्रायः ।

'आद्गुणः' इत्यत्र आदित्यनुवर्त्तत एवेति मन्यमान आप—**अत इति किमिति** । दीर्घनिवृत्त्यर्थं इह तपरस्याकारस्य निर्देशः क्रियत इति दर्शयितुमाह—**यान्ति, वान्तीति** ।

### पदमञ्जरी

तस्यासिद्धत्वादुसि न पररूपं भवति । अस्य तु लाक्षणिकत्वादेवाग्रहणं सिद्धम् । **अबिभयुरिति** । भियो लङ्, शपः श्लुः, 'सिजभ्यस्त' इत्यादिना झेर्जुस्, 'जुसि च' इति गुणः ॥ ९६ ॥

**अतो गुणे** ॥ **अकः सवर्णे दीर्घस्यापवाद इति** । ननु च मध्येऽपवादन्यायेन ( ०या परि० १० ) वृद्धेरेवाय-मपवादो युक्तः, न दीर्घस्य ? गुणग्रहणाद्दीर्घस्यापि बाधको भविष्यति, अन्यथा— 'अतोऽपदान्तात्' इत्येव वक्तव्यम् । एङीत्येव, ततो जुसि च, अपदान्तादित्येव । एवं सिद्धे गुणग्रहणाद् गुणमात्रेऽयं विधिः प्रवर्तमानो दीर्घमपि बाधिष्यते ।

### भावबोधिनी

आत् = आ से परे ही होता है—चक्रः । अबिभयुः । [ चक्र + उस्, अबिभी + उस् में आ से परे न होने से पररूप नहीं होता है । '√ञि भी भये' धातु से लङ् = झि, शप् का 'जुहोत्यादिभ्यः श्लुः' से श्लु, द्वित्व अभ्यास कार्य—अबिभी + झि, 'सिजभ्यस्त-विदिभ्यश्च' सूत्र से झि का जुस् = उस् । अबिभी + उस् यहाँ आ से परे न होने से पररूप रूप न होकर "जुसि च" सूत्र से ई का गुण, अय् आदेश—अबिभयुः । ] ॥ ९६ ॥

'अपदान्तात्' इसकी अनुवृत्ति होती है । अपदान्त अकार से गुण ( अ, ए, ओ ) परे रहते पूर्व और पर दोनों के स्थान में पररूप एक आदेश होता है । उदा०—पचन्ति । यजन्ति । [ पच् + शप् + लट् = झि = अन्ति पच + अन्ति में ] 'अकः सवर्णे दीर्घः' से प्राप्त सवर्णदीर्घ का अपवाद यह पररूप होता है । [ यज + अन्ति में भी पररूप । ]

पचे । यजे । [ पच् + शप् = अ + लट् = इट्, एत्व करने पर पच + ए, यज + ए में पररूप होता है । ] यहाँ 'वृद्धिरेचि' सूत्र से वृद्धि प्राप्त होती है ।

ह्रस्व अकार से परे—इसका क्या फल है ? यान्ति । वान्ति । [ या + अन्ति, वा + अन्ति । आ से परे अ है, पररूप नहीं होता है । ]

गुण ( = अ, ए, ओ ) परे रहते—इसका क्या फल है ? अपचे । अपचे । [ पच् + लङ् = इट्, अट् आगम,

## २५३८. अव्यक्तानुकरणस्यात इतौ ॥ ९८ ॥ ( ८१ )

**अव्यक्तम् = अपरिस्फुटवर्णम्, तदनुकरणं परिस्फुटवर्णमेव केनचित्सादृश्येन तदव्यक्तमनुकरोति तस्य योऽच्छब्दस्तस्मादितौ पूर्वपरयोः स्थाने पररूपमेकादेशो भवति। पटत् इति पटिति। घटत् इति घटिति। झटत् इति झटिति।[1] छमत् इति छमिति।**

**अव्यक्तानुकरणस्येति किम् ? जगत् इति जगदिति। अत इति किम् ? मरट् इति मरडिति। इताविति किम् ? पटत् अत्र पटदत्र॥**

**न्यासः**

अपचे इति। लङ्चात्मनेपदोत्तमपुरुषैकवचन इट्, अत्र 'आद्गुणः'। पररूपे तु सति स गुणो न लभ्यते॥ ९७॥

**अव्यक्तानुकरणस्यात इतौ॥ अव्यक्तमपरिस्फुटवर्णमिति।** अपरिस्फुटा = अव्यक्ता, अनभिव्यक्ता अकारादयो वर्णा यत्र तत् तथोक्तम्। यद्येवम्, तदनुकरणेनापि तथाविधेन भवितव्यम्, सदृशं ह्यनुकरणं भवति न त्वसदृशम्, ततश्चानुकार्य इवानुकरणेऽपि नैवाच्छब्दोऽवधार्यते, अनवधारितस्य च कथं शक्यते पररूपत्वं विधातुम् ? इत्यत आह—**तदनुकरणमित्यादि।** यदि तर्हि तदनुकरणं परिस्फुटवर्णम्, एवं सति तत् तस्यानुकरणमेव न स्यात्, न हि विसदृशमनुकरणं भवति, तेनानुकर्तुमशक्यत्वात्, अतिप्रसङ्गो वेत्यत आह—**केनचिदित्यादि।** तत् पुनः सादृश्यं ध्वनेस्तुल्यतया, उभयोरपि तयोः समानो ध्वनिः। तेन यद्यप्यनुकरणे वर्णविशेषा अवधार्यन्ते, तथापि ध्वनेः समानतया तदव्यक्तमप्यनुकार्यमनुकरोति। **पटितीति।** ननु च 'अलोऽन्त्यस्य'

**पदमञ्जरी**

**अत इति किमिति।** अदिति वर्त्तत एवेति प्रश्नः। तपरकरणे तात्पर्यमित्युत्तरम्॥ ९७॥

**अव्यक्तानुकरणस्यात इतौ॥ अव्यक्तमपरिस्फुटवर्णमिति।** अपरिस्फुटा = अनभिव्यक्ता अकारादयो वर्णा यस्मिन्तत्तथोक्तम्। यद्येवम्, तदनुकरणेनापि तथाविधेनैव भाव्यम्, सदृशं ह्यनुकरणं भवति, ततश्चानुकार्य इव तत्रापि नैवाच्छब्दोऽवधार्यते, अनवधारिते चाशक्यं पररूपं कर्त्तुम् ? तत्राह—**तदनुकरणं परिस्फुटवर्णमेवेति।** अथ कथं तर्हि तत्तेनानुक्रियते, न हि विसदृशमनुकरणं भवत्यतिप्रसङ्गात् ? इत्यत आह—**केनचित्सादृश्येनेति।** तत्पुनः सादृश्यं ध्वनेस्तुल्यतया, तेन ह्यव्यक्तमनुकार्यमनुकरोति पुरुषः, अनुकरणं कर्तृ अव्यक्तं कर्मानुकरोति, करणस्य कर्तृत्वविवक्षयां कर्तृप्रत्ययः, अनुकरणशब्दस्तु करणसाधन एव। **पररूपमेकादेशो भवतीति।** अच्छब्द-

**भावबोधिनी**

शप्—अपच + इ, टित् लकार न होनेसे एत्व नहीं होता है। अतः ए परे नहीं है। पररूप न होकर 'आद्गुणः' से गुण होता है। ]

अपदान्त अवर्ण से परे—इसका क्या फल है ? दण्डाग्रम। यूपाग्रम। [ दण्ड + अग्रम्, यहाँ षष्ठी तत्पुरुष में अन्तर्वर्तिनो विभक्त को मानकर पदान्तत्व है। अतः पररूप न होकर सवर्णदीर्घ ही होता है। ] ॥ ९७॥

अव्यक्त = अपरिस्फुट वर्ण वाला, वह अनुकरण परिस्फुट वर्ण वाला ही किसी सादृश्य से उस अव्यक्त का अनुकरण करता है, उस अनुकरण का जो 'अत्' शब्द उससे 'इति' परे रहते पूर्व-पर दोनों के स्थान में पररूप एक आदेश होता है। उदा०—पटत् इति = पटिति। घटत् + इति = घटिति। [ अत् + इ के स्थान पर पररूप होता है। ] झटत् + इति = झटिति। छमत् + इति = छमिति। [ अत् + इ = इ होता है। ]

अव्यक्त अनुकरण का—इसका क्या फल है ? जगत् + इति। [ यह स्पष्ट वर्णों का अनुकरण है, अतः पररूप नहीं होता है। ] अत् से परे—इसका क्या फल है ? मरट् + इति—मरडिति। [ यहाँ अत् न होकर अट् है, अतः

---

१. 'छमित्' इति प्रकाशितपाठोऽशुद्धः', 'अत्' इत्यस्यैव पररूपत्वे विधीयमाने 'छमत्' इत्यस्यैवोचितत्वात्।

**❀ अनेकाच इति वक्तव्यम् ❀ ( म० भा० ६.१.९८ वा० १ )। इह मा भूत्—स्रत् इति स्रदिति। कथं घटदिति गम्भीरमम्बुदैर्नदितमिति ? दकारान्तमेतदनुकरणं द्रष्टव्यम् ॥**

## २५३९. नाम्रेडितस्यान्त्यस्य तु वा ॥ ९९ ॥ ( ८२ )

**अव्यक्तानुकरणस्याम्रेडितस्य योऽच्छब्द इतौ तस्य पररूपं न भवति, तस्य योऽन्त्यस्तकारस्तस्य वा**

**न्यासः**

इत्यनया परिभाषयान्त्यस्य भवितव्यम्, तत् कथं सर्वस्यैवाच्छब्दस्य भवति ? नैष दोषः; 'नानर्थकेऽलोऽन्त्यविधिः' इति। अथवा—यदयम् 'नाम्रेडितस्यान्त्यस्य तु वा' इत्यत्रान्त्यग्रहणं करोति, ततोऽवसीयते—नात्रालोऽन्त्यस्यैषा परिभाषा प्रवर्त्तत इति। कथं पुनः पररूपे कृते तदनुकार्यस्य प्रतिपादनं भवति, कुतश्च न भविष्यति ? न्यूनत्वात् ? नैष दोषः; यथैव हि व्यक्तवर्णमपि तस्य केनचित्साधर्म्येण प्रतिपादकं भवति तथा न्यूनमपि भविष्यतीति।

**अनेकाच इति वक्तव्यमिति।** अनेकाचोऽव्यक्तानुकरणस्य पररूपं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—उत्तरसूत्रे वाग्रहणमुभयोरपि योगयोः शेषः। सा च व्यवस्थितविभाषा विज्ञायते। तेनानेकाच एव भविष्यति, न त्वेकाच इति।

**कथमिति।** तकारान्तमेतदव्यक्तमनुकरणमिति मन्यमानस्य प्रश्नः ॥ ९८ ॥

**नाम्रेडितस्यान्त्यस्य तु वा ॥ यदा त्वित्यादि।** यदा पटत्पटदित्येष शब्दः समुदाय एवानुकरणम्, तदा

**पदमञ्जरी**

स्यापि सर्वस्य, नालोन्त्यस्य; 'नानर्थकेऽलोन्त्यविधिः' इति वचनाज्ज्ञापकाच्च। यदयम् 'आम्रेडितस्यान्त्यस्य तु वा' इति अन्त्यग्रहणं करोति, तज्ज्ञापयति—'नात्रालोन्त्यपरिभाषा प्रवर्त्तते' इति। किञ्च—पूर्वापरसमुदाय एकादेशस्य स्थानीत्युक्तम्, तत्रश्च तदेकदेशे पूर्वस्मिन् खल्वेतत्परिभाषाप्रवृत्तिः कीदृशीति चिन्त्यम्। **पटदितीति।** प्रक्रियावाक्यमेतत्, न प्रयोगार्हम्; पररूपस्य नित्यत्वात्। **पटितीति।** कथं पुनः पररूपे कृते तदनुकार्यस्य प्रतिपादकं भवति, कुतश्च तस्यानुकरणत्वम् ? नैष दोषः; यथा गवित्ययमाहेति कृतावादेशमपि गोशब्दस्यानुकरणं भवति शास्त्रवासनया, तद्वदत्राऽपि भविष्यति।

**दकारान्तानुकरणमेतदिति।** तकारान्तानुकरणे तु रूपमेवैतन्न स्यात्; अपदत्वेन जश्त्वाभावाद्, यथा—पटिति करोतीति ॥ ९८ ॥

**नाम्रेडितस्यान्त्यस्य तु वा ॥ अव्यक्तानुकरणस्याम्रेडितस्येति।** व्यधिकरणे षष्ठ्यौ, अव्यक्तानुकरणस्य यदवयवभूतमाम्रेडितम्, तस्येत्यर्थः। **नित्यवीप्सयोरिति द्विर्वचनमिति।** वीप्सायोगस्तु यथाकथञ्चिद् द्रष्टव्यः।

**भावबोधिनी**

पररूप न होकर जश्त्व होता है। ] इति परे रहने पर—इसका क्या फल है ? पटत् + अत्र—पटदत्र। [ पररूप न होकर जश्त्व होता है। ]

❀ अनेक अचों वाले ही अव्यक्तानुकरण का पररूप होता है—ऐसा कहना चाहिये। ❀ इसमें न हो सके—स्रत् + इति, स्रदिति। [ यहाँ एक अच् वाला ही है, अतः पररूप नहीं होता है। ]

'घटदिति गम्भीरम् अम्बुदैः नदितम्'—यहाँ [ पररूप क्यों नहीं होता है ], ऐसा कैसे रहता है ? यह अनुकरण दकारान्त समझना चाहिये। [ तकारान्त अनुकरण का ही पररूप होता है। ] ॥ ९८ ॥

अव्यक्तानुकरण आम्रेडित का जो 'अत्' शब्द उसका 'इति' शब्द परे रहते पररूप नहीं होता है, किन्तु उस अत् का जो अन्त्य तकार है, उसका पररूप विकल्प से होता है। [ द्वित्व करने पर बाद वाले को आम्रेडित कहा जाता

भवति। पटत्पटदिति, पटत्पटेति करोति। 'नित्यवीप्सयोः' ( ८.१.४ ) इति द्विर्वचनम्।

यदा तु समुदायानुकरणं तदा भवत्येव पूर्वेण पररूपम्—पटत्पटेति करोति॥

## २८४०. नित्यमाम्रेडिते डाचि[1] ॥ १०० ॥ ( २१२८ )

'अव्यक्तानुकरणस्य', 'अतः' 'अन्त्यस्य' इति चानुवर्त्तते। डाच्परं यदाम्रेडितं तस्मिन्पूर्वस्याव्यक्तानुकरणस्याच्छब्दस्य योऽन्त्यस्तकारस्तस्य पूर्वस्य परस्य चाद्यस्य वर्णस्य नित्यं पररूपमेकादेशो भवति। पटपटाकरोति। दमादमाकरोति[2]।

**न्यासः**

तस्याद्विरुक्तत्वात्परस्यावयवस्य पटच्छब्दस्याम्रेडितसंज्ञा नास्तीति पूर्वेण पररूपं भवत्येव॥ ९९॥

**नित्यमाम्रेडिते डाचि॥** डाच्परमिति। डाच् परो यस्मात् तत तथोक्तम्।

**डाचि विहित इत्यादि।** विहित इति 'हि गतौ' इत्यस्य विपूर्वस्य रूपमिदम्। अस्य च 'सर्वे गत्यर्था ज्ञानार्थाः' इति विहिते=विज्ञाते बुद्धिस्थ एवेत्येषोऽर्थो वेदितव्यः। तेनायमर्थो भवति– डाचि विहिते बुद्धिस्थविषयभूत एवानुत्पन्ने 'डाचि बहुलं द्वे' इति द्विर्वचनमिति। अवश्यञ्चैतदेवं विज्ञेयम्; अन्यथा हि यदि डाचि

**पदमञ्जरी**

अपर आह—'नित्यवीप्सयोः' इत्युपलक्षणमेतत्, 'डाचि बहुलं द्वे भवतः' इत्यत्र बहुलवचनादन्यस्यापि द्विर्वचनमिति।

**यदा त्विति।** द्विरुक्तस्य समुदायानुकरणस्य वार्थभेदो भवति॥ ९९॥

**नित्यमाम्रेडिते डाचि॥** वार्त्तिकमेवेदम्। वृत्तिकृता सूत्ररूपेण पठितम्। **डाचि विवक्षित इति। तच्चेति।** 'आशंसायां भूतवच्च' इति भविष्यति क्तः, विधित्सित इत्यर्थः। अन्यथा डाजेव न स्यात्; द्व्यजवरार्धत्वाभावात्। तथा च डाज्विधावुक्तम्—'यस्य च द्विर्वचने द्व्यजराद्धंता ततः प्रत्ययः' ( का० वृ० ५ ४. ५७ ) इति, अष्टमे च वक्ष्यति डाचीति विषयसप्तमीति।

डाचि विधित्सित एव द्विर्वचनं क्रियत इत्यत्र प्रयोजनान्तरमाह—**तच्चेति।** ह्यर्थे चः, तद्धि द्विर्वचनं टिलोपात्पूर्वमिष्यते एवं च पूर्वं सिद्ध्यति, यदि डाचि विधित्सत एव द्विर्वचनं भवति, नान्यथा। यदि हि परभूते द्विर्वचनं स्यात्, ततोऽन्वरङ्गत्वात्पूर्वं टिलोपे कृते टकारान्तस्य द्विर्वचने पटपटेति न सिद्ध्येत्।

**भावबोधिनी**

है 'तस्य परमाम्रेडितम्' ] उदा०—पटत्पटदिति, पटत्पटेति करोति। [ पटत् इति में ] 'नित्यवीप्सयोः' सूत्र से द्वित्व होता है। पटत् पटत् + इति, त् का पररूप कर देने पर पटत्पट इति में गुण होकर पटत्पटेति बनता है। पररूप न होने पर जश्त्व करने पर पटत्पटदिति रूप होता है। [

परन्तु जब किसी समुदाय का अनुकरण होता है, तब पूर्व सूत्र से पररूप होता ही है—पटत्पटेति करोति। [ पटत्पटत् इति करोति—इसका अनुकरण है। पहले उदाहरण में एक पटत् का अनुकरण, द्वित्व होता है। अतः सूत्र लागू होता है। ] ॥ ९९ ॥

'अव्यक्तानुकरणस्य' 'अतः' और 'अन्त्यस्य' इनकी अनुवृत्ति होती है। डाच् परे रहते जो आम्रेडित उससे पूर्ववर्ती अव्यक्त अनुकरण के 'अत्' शब्द का जो अन्त्य तकार उस पूर्व का और पर के आद्य ( प्रथम )

---

१. भाष्ये त्विदं वार्त्तिकरूपेणैव गृहीतमिति बोध्यम्।　　२. 'मटमटाकरोति' इत्यधिकं पुस्तकान्तरे।

१. 'विहिते' इति काशिका पाठः।

**पटदित्यस्माद् 'अव्यक्तानुकरणाद्' इति डाचि विहिते 'डाचि बहुलम्' ( वा० ६९१ ) इति द्विर्वचनम्, तच्च टिलोपात् पूर्वमेवेष्यते ॥**

## २५४१. अकः सवर्णे दीर्घः ॥ १०१ ॥ ( ८५ )

**अकः सवर्णेऽचि परतः पूर्वपरयोः स्थाने दीर्घ एकादेशो भवति। दण्डाग्रम्। दधीन्द्रः। मधूदके। होतॄश्यः।**

**न्यासः**

विहिते = कृत इत्येषोऽर्थः स्यात्, तदा डाचि परभूते 'डाचि बहुलं द्वे' इत्यनेन द्विर्वचनं विधीयेत। तथा च यद्वक्ष्यति—'डाचीति विषयसप्तमीयम्' इति तद् विरुध्यते। किं पुनः कारणम्—डाचि विहिते बुद्धिविषयीभूत एवानुत्पन्ने द्विर्वचनं विधीयते ? इत्याह—**तच्चेत्यादि**। चशब्दो हेतौ। यस्माद् द्विर्वचनं टिलोपात् पूर्वमिष्यते तस्माड् डाचि विहिते बुद्धिस्थे विषयभूते एवानुत्पन्ने द्विर्वचनं विधीयते, न परभूते। एवं तट्टिलोपात् पूर्वं सिध्यति; नान्यथा। यदि हि डाचि परभूते द्विर्वचनं न क्रियते, तदान्तरङ्गत्वाट्टिलोपे कृते पश्चाट्टकारान्तस्य द्विर्वचनमापद्येत, तथा च पटपटेति न सिध्येत्। न च शक्यते वक्तुम्—'नित्यमाम्रेडितं डाचीत्येतद्वचनं ज्ञापकं पूर्वं द्विर्वचनं भवति ततष्टिलोपः' इति; यस्मात् पटदित्यादिकं टिलोपे कृते द्विरुच्यमानं यच्छब्दान्तं भवति तदर्थमेवेदं स्यात्—पटपटाकरोतीति।

अथ वा—डाचीति डाचि विहिते सति परसप्तम्यामदोष इति मन्यमानेन **डाचि विहित** इत्युक्तम्। डाचि विहिते सति 'डाचि बहुलं द्वे' इत्यनेनोपसंख्यानेन द्विर्वचनम्। ननु चैवं सति 'सर्वविधिभ्यो लोपविधिर्बलीयान्' इति द्विर्वचनात् प्राक् टिलोपः स्यात्, तथा चानिष्टं रूपं प्रसज्येत ? इत्यत आह—**तच्चेत्यादि**। कथं पुनष्टिलोपात् पूर्वमिष्यमाणमेतल्लभ्यते ? बहुलग्रहणात्। अस्मिंस्तु व्याख्याने विहित इति दधातेरेव तद् रूपं वेदितव्यम् ॥ १०० ॥

**अकः सवर्णे दीर्घः ॥ अग्नय इति**। परत्वाद् 'घेर्ङिति' इति गुणे कृतेऽगभावादत्र न भवति।

**पदमञ्जरी**

यद्वा—डाचि विहिते उत्पन्ने इत्यर्थः। ननु चोक्तम्-डाजेव न स्यादिति ? नैष दोषः; 'द्व्यजवरार्द्धात्' इति भाविव्यपदेशोऽयम्। यस्य व्यजवरार्द्धता भविष्यति द्विर्वचने कृते तस्मादित्यर्थः। यदि डाचि विहितं द्विर्वचनं परत्वाट्टिलोपप्रसङ्ग इत्युक्तम् ? तत्राह—**तच्चेत्यादि**। 'डाचि बहुलम्' ( वा० ८८८ ) इति बहुलग्रहणाद् द्विर्वचने कृते टिलोप इत्यर्थः ॥ १०० ॥

**अकः सवर्णे दीर्घः ॥ अग्नय इति**। 'घेर्ङिति' इति गुणे कृते दीर्घत्वप्रसङ्गः। **दध्यत्रेति**। असति सवर्णग्रहणे यणादेशस्य दीर्घस्य च विषयविभागो न ज्ञायेत, ततश्च पर्यायः स्यात्।

**भावबोधिनी**

वर्ण का अर्थात् त् और उसके बाद वाले वर्ण का नित्य पररूप एक आदेश होता है। उदा०—पटपटाकरोति। दमदमाकरोति।

पटत्—इस शब्द से "अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्" ( पा० सू० ५।४।५७ ) से डाच् करने पर "डाचि विवक्षते द्वे बहुलम्" वचन से द्वित्व, यह द्वित्व टिलोप से पहले ही करना इष्ट है। [ पटत् यहाँ डाच् की विवक्षा में पहले ही द्वित्व करने पर पटत् पटत् आ में प्रथम पटत् के त् और द्वितीय पटत् के 'प' का पररूप होने पर पटपटत् + आ, डित् होने से टि = अत् का लोप—पटपटा करोति। इसकी विशेष प्रक्रिया "अव्यक्तानुकरणाद्" काशिका ५।४।५८ सूत्र की व्याख्या में देखनी चाहिए। यह वार्त्तिक है। काशिका में सूत्र लिखा है। ] ॥१००॥

अक् से परे सवर्णसंज्ञक अच् रहने पर पूर्व और पर दोनों के स्थान में दीर्घ एक आदेश होता है। उदा०—दण्डाग्रम्। [ दण्ड + अग्रम् ] दधीन्द्रः। [ दधि + इन्द्रः ] मधूदके। [ मधु + उदके ] होतॄश्यः। [ होतृ + ऋश्यः ]

**अक इति किम् ? अग्नये । सवर्ण इति किम् ? दध्यत्र ।**

**अचीत्येव—'कुमारी शेते । नाज्झलौ' ( १.१.१० ) इत्यत्र यदजिति प्रत्याहारग्रहणं तत्र ग्रहणकशास्त्रस्यानभिनिर्वृत्तत्वात्सवर्णा न गृह्यन्त इति सवर्णत्वमीकारशकारयोरप्रतिषिद्धम् ।**

**न्यासः**

**दध्यत्रेति** । ननु च यणादेशोऽत्र बाधको भविष्यति, तत् किमेतन्निवृत्त्यर्थेन सवर्णग्रहणेन ? इहापि तर्हि बाधकः स्याद्—दधीन्द्रः, मधूष्णमिति । तस्माद् विषयविभागार्थं सवर्णग्रहणं कर्त्तव्यम् ।

**कुमारी शेते इति** । अत्र 'इचुयशास्तालव्याः' इति, 'विवृतं करणमूष्मणां स्वराणां च' इतीकारस्य सवर्णः शकारो यद्यपि भवति, तथाप्यज्ग्रहणानुवृत्तेर्न भवति । न च सावर्ण्यमप्यत्र नास्ति । 'नाज्झलौ' इति प्रतिषेधादित्यत आह—**नाज्झलावित्यत्रेत्यादि** । यदि 'नाज्झलौ' इत्यत्र 'अणुदित् सवर्णस्य चाप्रत्ययस्य' इत्येतद् ग्रहणकशास्त्रमभिनिर्वृत्तं स्याद्, एवमिकारो गृह्यमाण ईकारस्यापि ग्राहको भवति, ततश्च सवर्णत्वमीकारशकारयोः प्रतिषिध्येत । न च 'नाज्झलौ' इत्यत्र प्रतिषेधे कर्त्तव्ये ग्रहणकशास्त्रमभिनिर्वृत्तम्, तस्य हि शास्त्रस्य सवर्णसंज्ञाङ्गं निमित्तम्, ततो यावत् सा न प्रवर्त्तते, तावदङ्गवैकल्यात् ग्रहणकशास्त्रमनभिनिर्वृत्तम् । एवं सवर्णसंज्ञापि यावदपवादो नाभिनिर्वृत्तो भवति, तावत् क्व मया प्रवर्त्तितव्यमिति स्वविषयमजनाना न प्रवर्त्तते, ततो 'नाज्झलौ' इत्यस्यापवादस्यानभिनिर्वृत्तत्वात् सवर्णसंज्ञा न प्रवर्त्तते । तेनाङ्गवैकल्याद् ग्रहणकशास्त्रमपरिनिष्पन्नम्, अतोऽकः सवर्णा गृह्यन्ते । तेनागृहीतसवर्णानामेव प्रत्याहारसन्निविष्टानामयं प्रतिषेधः । न चायमीकारोऽक्षु सन्निविष्ट इति नासौ 'नाज्झलौ' इत्याजिति प्रत्याहारग्रहणेन गृह्यते । तेन सवर्णत्वमीकारशकारयोरप्रतिषिद्धम् ।

**पदमञ्जरी**

**कुमारी शेत इति** । ननु च तुल्यास्यप्रयत्नत्वेऽपि सावर्ण्यमत्र नास्ति, 'नाज्झलौ' इति प्रतिषेधात् ? इत्यत आह—**नाज्झलावित्यत्रेति** । 'अणुदित्सवर्णस्य चाप्रत्ययः' इति ग्रहणकवाक्यम्, तच्च 'नाज्झलौ' इत्यस्य प्रवृत्तिसमये नाभिनिर्वृत्तम्, तस्य हि सवर्णसंज्ञाङ्गम्, तेन यावत्सा न प्रवर्त्तते तावदनभिनिर्वृत्तम् । सवर्णसंज्ञाऽपि स्वापवादे 'नाज्झलौ' इत्यस्मिन्नप्रवृत्ते न प्रवर्त्तते, ततश्च पूर्वं 'नाज्झलौ' इत्यस्य प्रवृत्तिः, पश्चात्सवर्णसंज्ञायाः प्रवृत्तिः, पश्चाद् ग्रहणकवाक्यस्येति एष क्रमः । तेन 'नाज्झलौ' इत्यत्रागृहीतसवर्णानामचां ग्रहणमिति इकारशकारयोः सावर्ण्यमप्रतिषिद्धम्, तस्मादचीत्यनुवर्त्यमिति ।

**भावबोधिनी**

अक् से परे—इसका क्या फल है ? अग्नये । [ अग्ने + ए यहाँ अक् से परे न होने से सवर्णदीर्घ न होकर अव् आदेश होता है । ]

सवर्णसंज्ञक परे रहने पर—इसका क्या फल है ? दध्यत्र । [ दधि + अत्र, यहाँ भिन्न भिन्न हैं अतः दीर्घ न होकर यण् होता है । ]

अच् परे ही—होता है—कुमारी शेते । [ यहाँ सवर्णदीर्घ नहीं होता है । ]

''नाज्झलौ'' पा० सू० १।१।१० ) इस सूत्र में जिस अच् प्रत्याहार का ग्रहण है, उसमें ग्रहणक शास्त्र ( 'अणुदित्' सूत्र ) के अभिनिर्वृत्त ( निष्पन्न ) न होने से सवर्णों का ग्रहण नहीं होता है इसलिए ईकार और शकार का सावर्ण्य प्रतिषिद्ध नहीं होता है । [ सवर्ण परे हैं किन्तु अच् नहीं है । अतः दीर्घ नहीं होता है । ]

**विमर्श**—वाक्यार्थबोध के बिना कोई वाक्य स्वबोध्यार्थ के विषय में नहीं प्रवृत्त हो सकता । इसलिए जब 'नाज्झलौ' (पा० सू० १।१।१०) इस सूत्रवाक्य का अर्थ बोध होना है उस समय 'अणुदित्' (पा० सू० १।१।६९) सूत्रवाक्य का अर्थबोध ही नहीं हो पाता है । तब वह 'नाज्झलौ' सूत्र अच् पद से बोध्य अण् द्वारा सवर्णों का ग्रहण ( ज्ञान ) कैसे करायेगा, वाक्यार्थबोध में पदार्थोपस्थिति कारण होती है इसलिए 'अणुदित्' इस सूत्र के अर्थबोध में अण् उदित् ओर सवर्ण—इन

**❀ सवर्णदीर्घत्वे ऋति ऱृ वा वचनम् ❀ ( म० भा० ६.१.१०१ वा० १ )। ऋति सवर्णे परभूते तत्र ऱृ वा भवतीति वक्तव्यम्। होतृ + ऋकारः होतृ़कारः। यदा न ऱृ, तदा दीर्घ एव होतॄकारः।**

**❀ ऌति ऌ वा वचनम् ❀ ( म० भा० वा० २ )। ऌति सवर्णे परतो ऌ वा भवतीति वक्तव्यम्। होतृ + ऌकारः। होतॢकारः। होतॄकारः। ऋकारऌकारयोः सवर्णसंज्ञाविधिरुक्तः। दीर्घपक्षे तु समुदायान्त-**

**न्यासः**

**होतॢकारः, होतॄकार इति।** कथं पुनरत्र दीर्घत्वम्, यावता ऋकारऌकारयोर्भिन्नस्थानत्वात् सवर्णसंज्ञा नास्ति ? इत्यत आह— **ऋकारऌकारयोः सवर्णसंज्ञाविधिरुक्त इति।** ननु च ऋकारऌकारसमुदायोऽत्र स्थानीति तस्यैव योऽन्तरतमस्तेनैव युक्तमादेशेन भवितुम्, न च ऋकारस्तस्यान्तरतमस्तत् कथं स भवति ? इत्यत आह— **दीर्घपक्षे त्वित्यादि।** समुदायान्तरतमस्याभावादिति। ऋकारऌकारसमुदायोऽत्र स्थानी, तस्य चान्तरतमो

**पदमञ्जरी**

**ऋति ऱृ वा वचनमिति।** मध्ये रेफभक्ती द्वे, आदितोऽज्भक्तेरर्द्धमात्रा, एवमन्ततः।

एवम् ऌतीत्यत्रापि मध्ये द्वे लकारभक्ती, अभितः पूर्ववत्। एवं द्विमात्रयोरप्येतयोरीषत्स्पृष्टत्वाद्विवृत्ताभ्यामृकारऌकाराभ्यामसावर्ण्यादग्रहणाद्दीर्घसंज्ञाया अभावाद्वचनम्। अर्द्धतृतीयमात्रत्वात्तत्कालत्वाभावादित्यन्ये। एतच्च सवर्णसंज्ञायां प्रपञ्चितम्। **दीर्घपक्षे त्विति।** ऋकारऌकारयोः समुदायः स्थानी, न च तस्यान्तरतमो

**भावबोधिनी**

सभी का शक्तिज्ञान आवश्यक है, तभी इन पदार्थों की उपस्थिति होने पर वाक्यार्थबोध होगा। किन्तु यह हो नहीं सकता क्योंकि 'सवर्ण' पद का अर्थज्ञान 'तुल्यास्य' सूत्र के अधीन है। और 'तुल्यास्य' सूत्र अपने बाधक विषय को छोड़कर ही प्रवृत्त होता है—'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' यह नियम है और अपवादविषयलक्ष्य का ज्ञान अपवाद-वाक्यार्थबोध के बिना सम्भव नहीं है, इस कारण 'नाज्झलौ' इसका वाक्यार्थबोध हो जाने परइसके विषय को छोड़कर ही 'तुल्यास्य' सूत्र सवर्णसंज्ञा का विधान करता है। इसके बाद सवर्ण पद का शक्तिज्ञान हो जाने पर 'अणुदित्' सूत्रवाक्य का अर्थबोध होता है, तब वह स्वकार्य ( सवर्णबोधकता ) का निष्पादन करता है—इस क्रम से 'नाज्झलौ' इसमें अच् पदबोध्य में ग्रहणक शास्त्र ( 'अणुदित्' ) की प्रवृत्ति नहीं होती है। ''अणुदित्'' सूत्र की स्वरूपतः निष्पत्ति हो जाने पर भी ग्रहणकत्वेन = अण् द्वारा सवर्णबोधजनकत्वेन निष्पत्ति नही होती है। इस लिए ईकार और शकार का सावर्ण्य होने से कुमारी + शेते में संहिता-विवक्षा में दीर्घ प्रसक्त होता है। उसका वारण करने के लिए 'अचि' का अनुवर्तन आवश्यक है। अतः ई + श् का सावर्ण्य होने पर भी अच्त्व न होने से दीर्घ नही होता हैं।

( अनु० ) सवर्णदीर्घ होने में ऋत् ( ऋ ) परे रहते विकल्प से ऱृ होता है। ह्रस्व ऋ सवर्ण परवर्ती होने पर वहाँ विकल्प से 'ऱृ' होता है, ऐसा कहना चाहिए। उदा०—होतृ + ऋकारः = होतृ़कारः। जब 'ऱृ' नही होता है तब दीर्घ ही होता है—होतॄकारः।

❀ ऌ परे रहते विकल्प से 'ऌ' कहना चाहिये। ❀ सवर्ण ऌ परे रहते विकल्प से 'ऌ' होता है, ऐसा कहना चाहिये। उदा०—होतृ + ऌकारः—होतॢकारः। [ ऌ न होने पर ] होतॄकारः। ऋकार और ऌकार की सवर्णसंज्ञाविधि कही जा चुकी है। किन्तु दीर्घ करने के पक्ष में समुदाय का अन्तरतम = सदृशतम ऌवर्ण का दीर्घ नहीं होता है इस लिए ॠकार किया जाता है।

**विमर्श**—'ऋति ऱृ वा' 'ऌति ऌ वा' इन वार्तिकों से जिन का विधान किया जाता है उनकी दो-दो मात्राएँ मानी जाती हैं। 'ऱृ' इनमें मध्य में दो रेफ हैं अतः आधी + आधी मात्रा मिलकर एक मात्रा। इस रेफ के पूर्व और पर भागों में अज्भक्ति ( अच् का भाग अर्थात् आधी-आधी मात्रा ) हैं। दोनों को मिलाकर एक मात्रा होती है। इसलिए रेफों की एक और अज्भागों की एक मात्रा मिलाकर दो मात्राएँ होती हैं। इसी प्रकार 'ऌ' में भी दो लकार मध्य में

१. १. अयं विशेषो वर्णः, भावबोधिन्यामस्य विषये व्याख्यानं द्रष्टव्यम्।

**रतमस्य ऌवर्णस्य दीर्घस्याभावात् ॠकारः क्रियते ॥**

## २५४२. प्रथमयोः पूर्वसवर्णः ॥ १०२ ॥ ( १६४ )

'अकः' इति 'दीर्घः' इति वर्तते। **प्रथमाशब्दो विभक्तिविशेषे रूढः, तत्साहचर्यात् द्वितीयापि प्रथमेत्युक्ता। तस्यां प्रथमायां द्वितीयायां च विभक्तावचि अकः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घ एकादेशो भवति। अग्नी।**

**न्यासः**

दीर्घो न सम्भवतीत्यवयवस्य योऽन्तरतमस्तेनैव युक्तमादेशेन भवितुम्। तत्रापि ऌकारस्य दीर्घो न सम्भवतीति ॠकारस्य योऽन्तरतमो दीर्घः स एव ॠकारो भवति ॥ १०१ ॥

**प्रथमयोः पूर्वसवर्णः।** प्रथमशब्दोऽयं सन्निवेशविशेषापेक्षेऽभिधेये वर्त्तते। परेष्वभिसमीक्षितेषु यस्मात्पूर्वो नास्ति स प्रथमशब्दाभिधेयः। इह च 'प्रथमयोः' इति सामान्येन निर्देशान्न ज्ञायते—कयोः प्रथमयोरिदं ग्रहण-मित्यतस्तत्परिज्ञानायाह—**प्रथमाशब्द इत्यादि।** प्रथमाशब्दोऽयमिह शास्त्रे विभक्तिविशेषे रूढः, सुपां यदाद्यं त्रिकं तत्र प्रसिद्धः। तथा हि—'सपूर्वयोः प्रथमयोर्विभाषा', 'सप्तमीपञ्चमीप्रथमाभ्यः' इत्येवमादिषु निर्देशेषु प्रथमाशब्देन स एव विभक्तिविशेषो निर्दिष्टः। तस्माद् रूढिशब्दत्वादिह प्रथमाशब्दो विभक्तिविशेषे वर्त्तते इति विज्ञायते।

ननु च स्त्रीलिङ्गो यः प्रथमाशब्दः स इह शास्त्रे विभक्तिबिशेषे रूढः, अस्य च स्त्रीलिङ्गतैव सन्दिग्धा ? नैतदस्ति, प्रथमशब्दोपादानादेव स्त्रीलिङ्गोऽयमुपात्त इत्यवसीयते। यदि हि पुंल्लिङ्गस्येदमुपादानं स्यादेवं सति

**पदमञ्जरी**

दीर्घः सम्भवति, अतोऽवयवस्य योऽन्तरतमः स एव भवति। तत्रापि ऌवर्णस्य दीर्घासम्भवादृकारस्य योऽन्तरतमः स ॠकार एव भवति ॥ १०१ ॥

**प्रथमयोः पूर्वसवर्णः ॥ प्रथमाशब्दो विभक्तिविशेषे रूढ इति।** सुपामाद्यत्रिके 'सपूर्वायाः प्रथमायाः', 'सप्तमीपञ्चमीप्रथमाभ्यः' इत्यादौ तस्यैव ग्रहणात्। ननु च स्त्रीलिङ्गः प्रथमाशब्दस्तत्र रूढः, न चास्य स्त्रीलिङ्गत्वे प्रमाणमस्ति, प्रत्युत प्रथमशब्दस्तिङां त्रिकद्वयेऽस्मिन्नेव शास्त्रे संज्ञात्वेन विनियुक्त इति तस्यैव ग्रहणं युक्तम्; ततश्च पचति, पचतः, पचन्ति, पचते, पचेते, पचन्ते, चकार, चक्रतुः, चक्रुः; चक्रे, चक्राते, चक्रिरे—इत्यादौ यथाप्राप्तविध्यन्तरबाधेनायं विधिर्युक्तः। किञ्चैवं सति मुख्येऽपि प्रथमशब्दे 'प्रथमयोः'

**भावबोधिनी**

हैं उनको मिलाकर एक मात्रा और पूर्व भाग तथा पर भाग की अज्भक्ति=अच् के दो भागों को मिलाकर एक मात्रा होने से इसमें भी दो मात्राएँ होती हैं। सिद्धान्तकौमुदी का व्याख्यान द्रष्टव्य है ''ॠति ॠ वा' 'ॢति ॢ वा' इत्युभय-त्रापि विधेयं वर्णद्वयं द्विमात्रम्। आद्यस्य मध्ये द्वौ रेफौ, तयोरेका मात्रा। अभितोऽज्भक्तेरपरा। द्वितीयस्य तु मध्ये द्वौ लकारौ, शेषं प्रागवत्।''

आजकल इस प्रकार के प्रयोग नहीं किये जाते हैं ॥ १०१ ॥

'अकः' और 'दीर्घः' इनकी अनुवृत्ति होती है। प्रथमा शब्द विभक्तिविशेष अर्थ में रूढ है, उसके साहचर्य से द्वितीया भी प्रथमा ऐसी कही गई है। उस प्रथमा और द्वितीया विभक्ति में अच् परे रहते अक् से परे पूर्व और पर दोनों के स्थानों में पूर्व-सवर्णदीर्घ एक आदेश होता है अर्थात् पूर्व स्थानी का दीर्घ एकादेश होता है। उदा०—अग्नी। [ अग्नि + औ ] वायू। [ वायु + औ दोनों में क्रमशः इ और उ पूर्व है, उसका सवर्णदीर्घ एकादेश होने से इ + ओ = ई, उ + ओ = ऊ हो जाता है। ] वृक्षाः। प्लक्षाः। [ वृक्ष + जस् = अस्, प्लक्ष + जस् = अस् अ + अ में पूर्वसवर्णदीर्घ

**वायू । वृक्षाः । प्लक्षाः । वृक्षान् । प्लक्षान् ।**

**'अतो गुणे' ( ६.१.९७ ) इति यदकारे पररूपं तदकः सवर्णे दीर्घत्वमेव ( ६.१.१०१ ) बाधते, न तु पूर्वसवर्णदीर्घत्वम्, 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्' ( व्या० परि० ९ ) इति ।**

**न्यासः**

प्रत्ययग्रहणमेव स्यात् । यदि च प्रत्ययग्रहणमभीष्टं स्यात् तदौजसोरित्येवं ब्रूयात् । न चैवमुच्यमाने द्वितीयासम्बन्धिनोऽप्यौकारस्य ग्रहणप्रसङ्गः; इह जसा साहचर्यात् प्रथमासम्बन्धिन एवौकारस्य ग्रहणं विज्ञास्यते । तस्मात् स्त्रीलिङ्गस्येदं ग्रहणमित्यसन्दिग्धमेतत् ।

ननु च यदि प्रथमाशब्दोऽयमिह शास्त्रे विभक्तिविशेषे रूढः, एवं सति विभक्तिविशेष एक इत्यैकवचनेनैव भवितव्यम्, तत् कथं प्रथमयोरिति द्विवचनम् ? इत्यत आह—**तत्साहचर्यादित्यादि** । तेन प्रथमाख्येन विभक्तिविशेषण साहचर्याद् द्वितीयापि विभक्तिः प्रथमेत्युक्ता, ततश्च द्वित्वाद् द्विवचनमेव न्याय्यम् । तदेतेन प्रथमयोरिति विभक्त्योरिदं ग्रहणं न प्रत्यययोरिति दर्शयति । **वृक्षाः, प्लक्षा इति** । कथमिदमुदाहृतम् ? यावता 'अतो गुणे' इत्यनेन पररूपेणात्र भवितव्यम्, तद्धि नाप्राप्ते विभक्त्यन्तर आरभ्यमाणं यथाऽकः सवर्णे दीर्घत्वं बाधते, तथा 'प्रथमयोः पूर्वसवर्णः' इति दीर्घत्वमपि बाधेत ? इत्यत आह—**अतो गुण इत्यादि** । अत्रैवोपपत्तिमाह—**पुरस्तादित्यादि** । इतिकरणो हेतौ । यस्मात् 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति तस्माद् 'अतो गुणे' पररूपम् 'अकः सवर्णे दीर्घः' इति दीर्घत्वं बाधते; तस्यैव तदनन्तरत्वात् । 'प्रथमयोः पूर्वसवर्णः' इति

**पदमञ्जरी**

इति द्विवचनमुपपद्यते, आत्मनेपदपरस्मैपदभेदेन प्रथमस्य भेदात् ? उच्यते; एवं सति द्विवचननिर्देशोऽनर्थकः; 'लुटः प्रथमस्य' इत्यादिवत्सिद्धत्वात् । यद्वा—'वा सुप्यापिशलेः' इत्यतः सुपीत्यनुवर्त्तयिष्यते, तेन सुप एव प्रथमस्य ग्रहणम्, लिङ्गाच्च, किं लिङ्गम् ? 'दीर्घाज्जसि च' 'तस्माच्छसो नः पुंसि' इति । अत एव लिङ्गात्सुपामप्यादितः प्रथमयोर्द्वयोर्ग्रहणं भवति, अचीत्यधिकाराच्च, न हि सुरजादिः । सुरपि कुण्डं तिष्ठतीत्यदावजादिः ? नात्रायं विधिः प्राप्नोति, कारणम् ? अमि पूर्वत्वेन बाध्यते । तस्मात् स्त्रीलिङ्गस्य ग्रहणमिति स्थितम् । **तत्साहचर्याद द्वितीयापि प्रथमेत्युक्तेति** । द्विवचनं चात्र प्रमाणम् । ननु सकृच्छ्रुतः शब्दो मुख्यवृत्तिरेव वा भवति, जघन्यवृत्तिरेव वा, न पुनरुभयवृत्तिः ? प्रथमाद्वितीयासमुदाये जघन्यवृत्तिरेवायम्, स च समुदाय उद्भूतावयवभेद इति द्विवचनोपपत्तिः, यथा—छत्रिणो गच्छन्तीति ।

**वृक्षाः, प्लक्षा इति** । नन्वत्रापि 'अतो गुणे' इति पररूपेण भवितव्यम्, नाप्राप्ते विध्यन्तरे तस्यारम्भात् । स्यादेतत्—प्रथमयोरित्येतदपि दीर्घत्वं नाप्राप्ते विध्यन्तरे आरभ्यमाणम् अग्नी इत्यादौ यथा बाधते, तथा पररूपमपि बाधिष्यते इति । तत्र, स्वरन्धिषु गुणयणावुत्सर्गौ, वृद्धिः सवर्णदीर्घत्वं पूर्वसवर्णादेशश्च तयोरपवादा इति द्वितीयकक्षाप्राप्ताः, पररूपं तु तृतीयकक्षाप्राप्तमिति तदेव प्राप्नोति । एवं तर्हि योगविभागः करिष्यते—

**भावबोधिनी**

एकादेश होता है । ] वृक्षान् । प्लक्षान् । [ वृक्ष + शस् = अस्, प्लक्ष + शस् = अस्, सवर्णदीर्घ के बाद 'तस्माच्छसो: नः पुंसि'' ६।१।१०३ से स् का 'न्' होता है । ]

'अतो गुणे' यह सूत्र अकार परे रहते जिस पररूप को करता है, वह 'अकः सवर्णे दीर्घः से होने वाले दीर्घ का ही बाध करता है, पूर्व सवर्णदीर्घ का नहीं, क्योंकि ''पहले पढ़े गये अपवाद अव्यहित उत्तरवर्ती विधियों का ही बाध करते हैं, उनके बाद वाली विधियों का नहीं ।'' [ अतः 'अतो गुणे' सूत्र प्रस्तुत सूत्र द्वारा विधीयमान सवर्ण दीर्घ का बाध नहीं करता है । वृक्षाः, वृक्षान् आदि में कोई अनुपपत्ति नहीं है । ]

**अचीत्येव। वृक्षः, प्लक्षः। अक इत्येव—नावौ।**

**पूर्वसवर्णग्रहणं किम्? अग्नी इत्यत्र पक्षे परसवर्णो मा भूत्। दीर्घग्रहणं किम्? त्रिमात्रे स्थानिनि**

**न्यासः**

दीर्घत्वं तु न बाध्यते; विपर्ययात्। **अग्नी इत्यत्रेत्यादि।** असति पूर्वग्रहणे अग्नी इत्यत्र पूर्वपरसमुदायः स्थानी, तस्य चान्तरतमो दीर्घ आदेशो नास्तीत्यवयवान्तरतमो यस्तेन भवितव्यम्। अवयवौ चात्र द्वौ—पूर्वः, परश्चेति; तत्र च पूर्वस्यैव भवितव्यमिति नियमो न लभ्यते, नियमकरणाभावादिति तयोः पर्यायेण भवन्नादेशः पक्षे परसवर्णो वा स्याद्। अतस्तन्निवृत्त्यर्थं पूर्वग्रहणम्।

सवर्णग्रहणं तु विप्रतिषेधनिरासार्थम्। असति हि तस्मिन् दीर्घ इत्यनुवर्त्तमानेऽग्नी इत्यत्र विप्रतिषिद्धत्वमापद्येत यदि पूर्वो न दीर्घः; अथ दीर्घो न पूर्वः। यदि च पूर्वशब्देन पूर्वाकृतिरुच्येत, दीर्घादनुवृत्तेः पूर्वस्येति षष्ठी वा क्रियेत। तथा च सवर्णग्रहणं शक्यमकर्तुम्। क्रियमाणं वा तत् सुखप्रतिपत्त्यर्थं वेदितव्यम्।

**दीर्घग्रहणं त्रिमात्रे स्थानिनीत्यादि।** अग्नि+औ इति स्थिते, असति दीर्घग्रहण एकादेशः क्रियमाणः स्थानिन आन्तरतम्यात् त्रिमात्रः प्राप्नोति; स्थानिनस्त्रिमात्रकत्वात्। तथा हि–अग्निशब्दस्येकार एकमात्रः,

**पदमञ्जरी**

प्रथमयोरिति, अकः सवर्ण इत्येव, तेन वृक्षा इत्यादौ पररूपं बाधित्वा प्रथमयोरकः सवर्णे दीर्घत्वं भविष्यति; यथैव तर्हि योगविभागः पररूपं बाधते, तथा वृक्षमित्यादावमि पूर्वमपि बाधेत, तस्य त्वग्निमित्यादिरवकाशः? नैष दोषः, 'अमि पूर्वः' इत्यत्रामीति विभज्यते, तत्र च पूर्वसवर्णदीर्घप्रतिषेधः प्रकृतोऽनुवर्त्तिष्यते। प्रथमयोरिति योगविभागेन प्राप्तं दीर्घत्वमपि न भवतीत्यर्थः। एवमपि 'तस्माच्छसो नः पुंसि' इत्यत्र तच्छब्देनानन्तरो दीर्घः परामृश्यते, एतान् गाश्चरतो बलीवर्द्दान्पश्य इत्यत्र 'औतोम्शसोः' इत्येकादेशान्मा भूदिति, ततः किम्? योगविभागे क्रियमाणे अग्नीन्, वायूनित्यादावेव नत्वं स्यात्, न तु वृक्षानित्यादौ यत्र प्रथमयोरिति योगविभागाद् दीर्घो विधीयते? अयमप्यदोषः; तस्मादित्यनेनाक्स्थानिको दीर्घः परामृश्यते, नानन्तरः, नापि दीर्घमात्रम्, एतच्चाक इत्यनुवृत्तेर्लभ्यते। मा भूद्वा योगविभागः—प्रथमयोरिति। ननु चोक्तम्—वृक्षा इत्यादौ पररूपप्रसङ्ग इति? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—न जस्शसोः पररूपं भवतीति, यदयं 'नादिचि' इतीज्ग्रहणं करोति अन्यथा अवर्णान्तस्य नास्त्येव दीर्घप्रसङ्ग इति किमिज्ग्रहणेन? केवलोत्तरार्थे हि तस्मिंस्तत्रैव कर्त्तव्यं स्यात्। यद्वा—'दीर्घाच्छसि' इत्येव ब्रूयात्, किमर्थमिदम्? नियमार्थम्—दीर्घाच्छस्येवेति। तेन जस्शसोर्न भविष्यति।

**वृत्तिकारस्तु** यथोक्ते परिहारे प्रतिपत्तिगौरवप्रसङ्गान्न्यायतः परिहारमाह—**अतो गुण इति यदकारे पररूपमित्यादि।** न्यायं दर्शयति—**पुरस्तादिति।** इतिकरणो हेतौ।

**अग्नी इत्यत्रेति।** असति हि पूर्वग्रहणे पूर्वसमुदायस्य स्थानिनोऽन्तरतमस्य दीर्घस्याभावादवयवान्तरतमो भवन् पूर्वस्यैवेति नियमकारणाभावात्परसवर्णोऽपि स्यात्, ततस्तन्निवृत्त्यर्थम्। पूर्वग्रहणं तु विप्रतिषेधनिरा-

**भावबोधिनी**

अच् परे ही—वृक्षः, प्लक्षः। [ वृक्ष+सु, प्लक्ष+सु में अच् परे नहीं है। ]

अक् से परे अक् का ही—नावौ। [ नौ+औ यहाँ अक् से परे नहीं है, अतः एकादेश न होकर आव् आदेश होता है।

पूर्वसवर्ण ग्रहण का क्या फल है? अग्नी—इसमें पक्ष में परसवर्ण न होने लग जाय। [ चूंकि अग्नि+औ में 'पूर्व और पर दो स्थानी हैं। अतः स्पष्ट निर्देश के अभाव में कभी पूर्व का और कभी पर का सवर्ण दीर्घ होने लगेगा। ] दीर्घग्रहण किस लिए है? तीन मात्राओं वाले स्थानी के होने पर तीन मात्राओं वाले आदेश की निवृत्ति के

**त्रिमात्रादेशनिवृत्त्यर्थम् ॥**

## २५४३. तस्माच्छसो नः पुंसि ॥ १०३ ॥ ( १९६ )

**तस्मात्पूर्वसवर्णदीर्घादुत्तरस्य शसोऽवयवस्य सकारस्य पुंसि नकारादेशो भवति। वृक्षान्। अग्नीन्। वायून्। कर्तॄन्। हर्तॄन्। षण्डकान्। पण्ढकान्। स्थूरकान्। अररकान्पश्य। सर्व एते पुंल्लिङ्गविशिष्टं स्वार्थं प्रतिपादयन्ति।**

**न्यासः**

औकारो द्विमात्र इत्येतत्समुदायात्मकश्चात्र स्थानी। तस्मात् त्रिमात्रे स्थानिन्यन्तरतमस्त्रिमात्र आदेशो मा भूदित्येवमर्थं दीर्घग्रहणम्। दीर्घग्रहणे हि सति तेनादेशे विशिष्यमाणे त्रिमात्रस्यादेशप्रसङ्गो न भवति; द्विमात्रस्यैव दीर्घसंज्ञाविधानात् ॥ १०२ ॥

**तस्माच्छसो नः पुंसि ॥ तस्मात् पूर्वसवर्णदीर्घादिति।** एतेन तस्मादित्यनेनानन्तरः पूर्वसवर्णदीर्घो निर्दिष्ट इति दर्शयति। **शसोऽवयवस्य सकारस्येति।** अनेन शस इति सकारावयवापेक्षयावयवषष्ठीति पुंसीति प्रत्ययार्थस्येदं वा विशेषणम्—पुंसि चेद् बहुत्वे शसुत्पन्न इति। प्रकृतिविशेषणं वा–पुंशब्दाच्चेत् परः शसिति। तत्र यदा प्रत्ययार्थस्य विशेषणं तदा 'सर्व एते' इत्यादेरयं पूर्वपक्षः—वृक्षान्, अग्नीनित्यादिकं युक्तमुदाहरणम्; पुंसां बहुत्वेऽत्र शस उत्पन्नत्वात्। षण्डकान्, पण्ढकानिति—एतदुदाहरणद्वयमयुक्तम्; न ह्यत्र पुंसां बहुत्वे शस् उत्पन्नः, किं तर्हि ? नपुंसकानामित्यत आह—**सर्व एत इत्यादि।** सर्वग्रहणेन न केवलं वृक्षादयः शब्दाः पुंल्लिङ्गेन सामान्य-

**पदमञ्जरी**

करणार्थम्; अन्यथा अग्नी इत्यत्र विप्रतिषिद्धमापद्यते। कथम् ? 'दीर्घः' इति वर्तते, यदि पूर्वो न दीर्घः, यदि दीर्घो न पूर्वः। ननु दीर्घग्रहणानुवृत्तिसामर्थ्यात् पूर्वशब्देन पूर्वाकृतिर्ग्रहीष्यते ? कथं पुनः सामर्थ्यम्, यावता यत्र पूर्वव्यक्तिर्दीर्घभूता—कुमारीः पश्य, भस्त्राः पश्येत्यादौ तत्रैव यथा स्यात्, अग्नी इत्यादौ मा भूदित्येवमर्था दीर्घानुवृत्तिः स्यात् ? यद्येतावत् प्रयोजनं स्याद्—'दीर्घाच्छसि पूर्वोऽमि च' इति ब्रूयात्; यतस्तु खलु प्रथमयोरित्यारभ्यते ततो ज्ञायते—न केवलं कुमारीः पश्येत्यादौ दीर्घस्यैव प्रथमयोरित्यनेन दीर्घो विधित्सितः, किं तर्हि ? अग्नी इत्यादावपीति, तच्चाकृतिविवक्षायामुपपद्यते ? सत्यम्; तदेव सवर्णग्रहणेनापि विस्पष्टीक्रियते—**त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्त्यर्थमिति।** आन्तरतस्यात् त्रिमात्र एव प्राप्नोति। यत्र प्लुताप्लुतप्रसङ्गः स एव 'प्लुतश्च विषये स्मृतः' इत्यस्य विषयः, इह तु प्लुतस्यैव प्रसङ्ग इति नायमस्य विषयः ॥ १०२ ॥

**तस्माच्छसो न पुंसि ॥** तस्मादित्यनेनानन्तरः पूर्वसवर्णदीर्घो निर्दिश्यत इत्याह—**तस्मात्पूर्वसवर्णदीर्घादिति। उत्तरस्य शसोऽवयवस्येति।** उत्तरस्येत्येतच्छसवयवस्य विशेषणम्, तस्मादुत्तरो यः शसोऽवयवस्तस्येति, न तु शसः; असम्भवात्। न हि पूर्वसवर्णदीर्घात् परः क्वचिच्छस् सम्भवति। अन्तादिवद्भावोऽपि न भवति; उभयत आश्रयणात्। अत एवानुपात्तमप्यवयवस्येति लभ्यते। 'बहुषु बहुवचनम्' इत्यत्र 'त्रिकं

**भावबोधिनी**

लिए दीर्घ है। [ अतः एक आदेश दो मात्राओं वाला दीर्घ ही होता है, भले ही स्थानियों की तीन या अधिक मात्रायें हों। ] ॥ १०२ ॥

तस्मात् = उस पूर्वसवर्णदीर्घ से उत्तरवर्ती शस् प्रत्यय के अवयव सकार का पुंल्लिङ्ग में नकार आदेश हो जाता है। उदा०—वृक्षान्। [ वृक्ष + शस् = अस्, 'प्रथमयोः पूर्वसवर्णः' इस पूर्वोक्त सूत्र से पूर्वसवर्णदीर्घ के बाद वृक्षास् में इस सूत्र से स् का न्—वृक्षान् ] अग्नीन्। वायून्। [ अग्नि + शस् = अस्, वायु + शस् = अस्, पूर्वसवर्णदीर्घ के बाद स् का न् ] कर्तॄन्, हर्तॄन्। [ कर्तृ + शस् = अस्, हर्तृ + शस् = अस्, पूर्वसवर्णदीर्घ के बाद स् का न् ] षण्डकान् पण्ढकान्। [ षण्डक +

**इह तु चञ्चेव चञ्चा, 'लुम्मनुष्ये' ( ५.३.९८ ) इति कनो लुपि कृते 'लुपि युक्तवद् व्यक्तिवचने' ( १.२.५ ) इति पुंसोऽपि स्त्रीलिङ्गता, तेन नत्वं न भवति—चञ्चाः पश्य, वध्रिकाः पश्येति ।**

**न्यासः**

विशेषेण विशिष्टं स्वार्थं प्रतिपादयन्ति, अपि तु षण्डकपण्डकशब्दावपीति दर्शयति । स्वार्थः पुनरेषां पुंस्त्वेन सामान्यविशेषेणावच्छिन्नं वृक्षादिकं द्रव्यम् । तदेवं यतः सर्व एते पुंलिङ्गविशिष्टार्थाभिधायिनः, तेनैतेभ्य उत्पद्यमानः शस् पुंसामेव बहुत्वे उत्पद्यत इति पूर्वपक्षो निराकृतो भवति । यदा तु प्रकृतिविशेषणं तदायं पूर्वपक्षः—वृक्षानित्यादिकमित्युदाहरणमुपपद्यते, तत्र हि पुंशब्दात् परः शस् भवति; स्थूरान्, अररकानिति इदमुदाहरणद्वयं नोपपद्यते; तथा हि—स्थूराया अपत्यानि अररकाया अपत्यानीति 'गर्गादिभ्यो यञ्' इति यञ्, तस्य 'यञञोश्च' इति लुकि कृते स्त्रीप्रत्ययस्यापि 'लुक् तद्धितलुकि' इति लुक्—स्थूर, अररक, इत्येताभ्यां स्त्रीशब्दाभ्यामुत्पन्नोऽत्र शस् स्त्रीशब्दाभ्यां परो भवति, न नपुंसकशब्दाभ्याम् ? इत्यत आह—**सर्व एत इत्यादि** । प्रकृतिरेव ह्यत्र तद्धितलुगन्ता प्रत्ययार्थे वर्त्तते, स च प्रत्ययार्थः पुंल्लिङ्गेन विशिष्टः । तस्मान्न केवलं वृक्षादयः शब्दाः पुंल्लिङ्गेन विशिष्टं वृक्षादिकं स्वार्थं प्रतिपादयन्ति, अपि तु स्थूराररकशब्दावपीति पूर्वपक्षः प्रतिक्षिप्तो भवति ।

अयं तर्हि प्रत्ययार्थविशेषणपक्षे दोषः—चञ्चेव चञ्चाः पुमांस इति । 'इवे प्रतिकृतौ' कन्, 'लुम् मनुष्ये' इति लुप् ; यदा लुबन्ताच्चञ्चाशब्दाद् पुंसां बहुत्वे शस् उत्पद्यते, तदा चञ्चाः पश्येत्यत्र नत्वं प्राप्नोति ? इत्यत

**पदमञ्जरी**

प्रातिपदिकार्थः' इत्युक्तम्, तेन 'पुंसि' इत्येतत्प्रकृतिविशेषणम्—पुंशब्दात् परस्य शसोऽवयवस्येति । यद्येवम्, वृक्षानित्यादिकं पदं नकारान्तमुदाहरणमुपपद्यते । षणुकषण्ढकशब्दाविह लोकप्रसिद्ध्या नपुंसके वर्त्तमानावपि पुंस्त्वानुगतमेवार्थमाहतुः, यथा कुमार्यादिषु वर्त्तमानोऽर्थशब्दः, सामान्यविशेषा एव स्त्रीत्वादयो न पुनः स्तनादयः । स्त्रीसूत्रे चैतदुपपादितम् । स्थूरकानित्यादि तूदाहरणद्वयमयुक्तम्, कथम् ? स्थूरकाया अपत्यानि, अररकाया अपत्यानि 'गर्गादिभ्यो यञ्', बहुषु लुक्, स्त्रीप्रत्ययस्यापि 'लुक् तद्धितलुकि' इति लुक्, स्थूरक, अररक—इत्येतौ स्त्रीशब्दौ, ताभ्यां परोऽत्र शस् भवति; न तु पुंशब्दाभ्यामित्यत आह—**सर्व एत इति** । न केवलं वृक्षादयः, अपि त्वेतावपीति सर्वशब्दस्यार्थः, लुप्तेऽपि प्रत्यये प्रकृतिरेव तदर्थे वर्त्तते, प्रत्ययार्थश्चात्रायमन्यरूपः । **पुंस्त्वविशिष्ट इति** । स्त्रीवाचकत्वेन प्रसिद्धावप्येतावस्मिन् प्रयोगे पुंशब्दाविति भावः ।

यद्येवम्, चञ्चेव चञ्चाः पुमांस इति 'इवे प्रतिकृतौ' इति कनः 'लुम्मनुष्ये' इति लुपि कृते प्रकृरेव चञ्चाशब्दः पुंस्त्वविशिष्टं प्रत्ययार्थमस्मिन् प्रयोग आहेति नत्वप्रसङ्गः ? इत्यत आह—**इह त्वित्यादि** । प्रत्ययार्थोऽपि नैवात्र पुंस्त्वविशिष्टः किं तर्हि ? अतिदेशात् स्त्रीत्वविशिष्ट इत्यर्थः ।

**भावबोधिनी**

शस्, पण्ढक + शस् ] स्थूरकान् । अररकान् पश्य, इन में सभी ये शब्द पुंल्लिङ्गविशिष्ट स्वार्थ का प्रतिपादन करते हैं । [ अतः नपुंसकप्रवृतिवाले और स्त्रीप्रवृतिवाले शब्दों से प्रत्यय का लुक् हो जाने पर भी पुंल्लिङ्गत्व की ही प्रतीति होने से स् का न् होने में बाधा नहीं है । ]

परन्तु 'चञ्चा इव' इस अर्थ में—चञ्चा, यहाँ 'लुम्मनुष्ये' ( पा० सू० ५।३।९८ ) सूत्र से कन् का लुप् = लोप हो जाने पर "लुपि युक्तवद्व्यक्तिवचने" ( पा० सू० १।२।५१ ) से पुल्लिङ्ग की भी स्त्रीलिङ्गता है, इस कारण नत्व नहीं होता है—चञ्चाः पश्य, वध्रिकाः पश्य ।

**विमर्श**—प्रस्तुत सूत्रार्थ में यह शंका होती है कि यह स् का न् क्या पुरुषों के बहुत्व में होता है अथवा पुंल्लिङ्ग शब्द से बहुवचन में ? इन दोनों पक्षों में दोष हैं । प्रथम पक्ष में 'भ्रुकुंसान् पश्य' में नत्व नहीं हो सकता क्योंकि स्त्री-

तस्मादिति किम् ? एतांश्चरतो गाः पश्य। शस इति किम् ? वृक्षाः। प्लक्षाः। पुंसीति किम् ? धेनूः। बह्वीः। कुमारीः ॥

**न्यासः**

आह—इह त्वित्यादि। नैव ह्यत्र पुंबहुत्वे शस् उत्पन्नः, किं तर्हि ? स्त्रीबहुत्वे; पुंसोऽपि युक्तवद्भावेन स्त्रीत्वातिदेशात्। ततोऽत्र नत्वं न भवति।

दीर्घग्रहणं प्रकृतम्, तस्य चेहार्थवशेन पञ्चम्यन्तस्योपस्थाने सत्यन्तरेणापि तस्मादित्येतद् वचनं दीर्घादेवोत्तरस्य शसो नत्वं भविष्यतीत्यभिप्रायेणाह—तस्मादिति किमिति। एतान् गाश्चरतः पश्येति। 'औतोऽम्शसोः' इत्यात्वम्। यद्यनन्तरदीर्घप्रत्यवमर्शी तच्छब्देनोपादीयेत, तदाऽविशेषेण दीर्घमात्रान्नत्वं विधीयमानम्—एतान् गाश्चरतः पश्येत्यत्रापि स्यात्, भवति ह्ययमाकारो दीर्घः। तस्मात् तच्छब्दे तु न दोषः; न ह्ययमनन्तरसूत्रविहित आकारः ॥ १०३ ॥

**पदमञ्जरी**

तस्मादिति किमिति। प्रकृतस्य दीर्घग्रहणस्य पञ्चम्या विपरिणामात्सिद्धमिति प्रश्नः। एतान् गाः पश्येति। 'औतोऽम्शसोः' इत्यात्वमेकादेशः, 'एकः पूर्वपरयोः' इति महाप्रकरणम्, ततश्च तद्विषयमेव नत्वं स्यादिति मन्यते। नन्वेवं 'षत्वतुकोरसिद्धः' इति च तत्रैव कर्त्तव्यम्—शसो नः पुंसीति, इह तु प्रकरणादनन्तरमेवोपजीविष्यते ? तदेव तर्हि तस्माद्ग्रहणेन विस्पष्ट्यते ॥ १०३ ॥

**भावबोधिनी**

वेषधारी नर्तक पुरुष भ्रकुंस होता है। अतः पुरुषों का बहुत्व नहीं है। इसी प्रकार 'षण्ढान् पश्य' 'पण्डकान् पश्य इन नपुंसकवाचक शब्दों में भी नहीं हो सकता है। क्योंकि 'षण्ढ' शब्द से प्रसव में असमर्थ नपुंसक को कहा जाता है। इसके अतिरिक्त स्त्री शब्द से होने लगेगा—चञ्चा इव-इस अर्थ में 'इवे प्रतिकृतो' सूत्र से कन् होता है 'लुम्मनुष्ये' सूत्र से उसका लुप् ( लोप ) हो जाने पर भी 'लुपि युक्तवद् व्यक्तिवचने' सूत्र से पुंमर्थ रहने पर भी स्त्रीलिङ्गता है।

द्वितीयपक्ष ( पुंल्लिङ्ग से बहुत्व ) में भी दोष है। स्थूराया अपत्यानि—इस बहुवचन में 'गर्गादिभ्यो यञ्' से विहित यञ् का लुक् 'यञोश्च' से हो जाता है। बाद में 'लुक् तद्धितलुकि' सूत्र से स्त्रीप्रत्यय टाप् का भी लुक् हो जाता है। केवल 'स्थूर' बचता है। यह स्थूर स्त्रीलिङ्ग है, नत्व नहीं हो सकता। इसी प्रकार अरकाया अपत्यानि यहाँ अपत्यार्थक यञ् प्रत्यय, बहुवचन में यञ् का लुक्, स्त्री प्रत्यय का लुक् होने पर 'अररक' इतना शेष बचता है।

इसलिए शास्त्रीय अर्थपक्ष का आश्रयण करना चाहिए। इसलिए भ्रकुंस आदिशब्द पुंमर्थ को कहते हुए पुंशब्द ( = पुंवाचक ) हैं षण्ढक पण्ढक शब्दों से भी पुंस्त्वानुगत ही नपुंसक अर्थ कहा जाता है, जैसा कि 'नपुंसकोऽभवत्' आदि में नपुंसक शब्द से कहा जाता है। इसीप्रकार 'स्थूर' आदि शब्द भी प्रत्ययलुक् हो जाने पर पुमर्थ में वर्तमान होते पुंशब्द ही होते हैं। इस विषय में महाभाष्य में प्रदर्शित वचन इस प्रकार हैं'—

नत्वं पुंसां बहुत्वे चेत् पुंशब्दादिष्यते स्त्रियाम्। नपुंसके तथैवेष्टं स्त्रीशब्दाच्च प्रसज्येत ॥
पुंशब्दादिति चेदिष्टं स्थूरापत्ये न सिध्यति। कुण्डिन्या अरकायाः पुंस्प्राधान्यात् प्रसिध्यति ॥
पुंस्प्राधान्ये त एव स्युर्ये दोषाः पूर्वचोदिताः। तस्मादर्थे भवेन्नत्वं वध्रिकादिषु युक्तवत् ॥

( म० भा० ६।१।१०३ )

( अनु० ) तस्मात् ( = उस पूर्वसवर्णदीर्घ से )—इसका क्या फल ? एतांश्चरतो गाः पश्य। [ गो + शस् = अस् 'औतोऽम्शसोः' सूत्र से आत्व एकादेश होता है। अतः नत्व नहीं होता है। शस् के स् का—इसका क्या फल है ? वृक्षाः। प्लक्षाः। [ वृक्ष + जस्, प्लक्ष + जस् है। अतः पूर्वसवर्ण दीर्घ के बाद भी नत्व नही होता है ] पुंल्लिङ्ग में—इसका क्या फल है ? धेनूः। बह्वीः। कुमारीः। [ धेनु + शस् आदि में पूर्वसवर्ण दीर्घ तो है किन्तु पुंल्लिङ्ग न होने से नत्व नही होता है। ] ॥ १०३ ॥

## २५४४. नादिचि ॥ १०४ ॥ ( १६५ )

**अवर्णादिचि पूर्वसवर्णदीर्घो न भवति । वृक्षौ । प्लक्षौ । खट्वे । कुण्डे । आदिति किम् ? अग्नी । इचीति किम् ? वृक्षाः ॥**

## २५४५. दीर्घाज्जसि च ॥ १०५ ॥ ( २३९ )

### न्यासः

**नादिचि** ॥ खट्वे इति । 'औङ आपः' इति शीभावः । कुण्डे इति । अत्रापि 'नपुंसकाच्च' इति, तत्र कृते 'आद्गुणः' इति गुणः ॥ १०४ ॥

**दीर्घाज्जसि च** ॥ 'आत्' इति नानुवर्त्तते, तेनायं दीर्घमात्रात् पूर्वसवर्णस्य प्रतिषेधः । अथ खटवा इत्यत्र कथम् 'प्रथमयोः पूर्वसवर्णः' इति दीर्घत्वम्, नैव ह्यत्र 'प्रथमयोः पूर्वसवर्णः' इति दीर्घत्वम्, किं तर्हि ? तस्मिन् प्रतिषिद्धे 'अकः सवर्णे दीर्घः' इति दीर्घत्वम् ? दीर्घादिति वचनं स्पष्टार्थम् । ननु चासति तस्मिन् वृक्षा इत्यत्रापि स्यात् ? नैतदस्ति; यदि ह्यत्रापि स्यात्, तदा पूर्वसूत्रे 'इचि' इत्येतदपार्थकं स्यात् । इह तर्हि स्याद्—अग्नये इति ? इष्टत्वाददोषः । अत्र हि परत्वात् 'जसि च' इति गुण एव भवति । उत्तरार्थं तर्हि स्यात्—'वा छन्दसि' इति दीर्घाद् यथा स्यात् ? नैतदस्ति; वाग्रहणस्य तत्र व्यवस्थितविभाषाविज्ञानात्—दीर्घादेव भविष्यति, न ह्रस्वात् । 'जसि च' इत्येतदपि स्पष्टार्थमेव । ननु चासति 'जसि च' इत्येतस्मिन् युवतीः पश्य, पद्धतीः पश्येत्यादौ

### पदमञ्जरी

**नादिचि** ॥ खट्वे इति । 'औङ आपः' इति औङः शीभावः । **कुण्डे इति** । अत्रापि 'नपुंसकाच्च' इति ॥१०४ ॥

**दीर्घाज्जसि च** ॥ आदिति नानुवर्तते, चकारेणेचोऽनुकर्षणसामर्थ्यात्; अन्यथा पूर्वेणैव दीर्घादप्यवर्णादिचि सिद्धः प्रतिषेध इति किं तदनुवृत्त्यर्थेन चकारेण ! दीर्घग्रहणं किम्, यावता ऋवर्णस्य 'ऋतो ङिसर्वनामस्थानयोः' इति गुणविधानान्नातिप्रसङ्गः ? एवमिदुतोरपि जसि च' इति गुणो विधीयते । इह तर्हि वृक्षाः, अग्नी, वायू; इति ह्रस्वादपि प्रतिषेधः स्यात् ? नैष दोषः; 'नादिचि' इत्येतन्नियमार्थं भविष्यति, अगृह्यमाणविशेषत्वाच्चोभयथानियमः—आदिच्येव, आदेवेचीति । तत्राद्येन नियमेन वृक्षा इत्यादि सिद्धम्; द्वितीयेनाग्नी, वायू इत्यादि । यथैव तर्ह्यग्नी, वायू इत्यादौ निषेधो न भवति' एवं कुमार्यौ, वध्वावित्यादावपि न स्यात्, तस्माद् दीर्घादिति

### भावबोधिनी

अवर्ण से इचि ( प्रत्यहार का कोई वर्ण ) परे रहते पूर्वसवर्ण दीर्घ नही होता है । उदा०—वृक्षौ प्लक्षौ । [ वृक्ष + औ, प्लक्ष + औ यहाँ इच् = औ परे होने से दीर्घ का निषेध करने पर वृद्धि एकादेश होता है । खट्वे । कुण्डे । [ खट् + औ, "औङ आपः" सूत्र से औ का शी = ई होने पर पूर्वसवर्णदीर्घ न होकर गुण होता है । कुण्ड + औ "नपुंसकाच्च" सूत्र से औ का शी = ई करने पर प्राप्तपूर्वसवर्णदीर्घ का निषेध होने से गुण होता है । ]

आकार से परे [ नहीं होता है ]—इसका क्या फल है ? अग्नी । [ अग्नि + औ, अ से परे न होने से पूर्वसवर्ण दीर्घ ही होता है । ] इच् परे रहते—इसका क्या फल है ? वृक्षाः । [ वृक्ष + जस् = अस् में इच् परे नहीं है । अतः निषेध नहीं होता है । ] ॥ १०४ ॥

दीर्घ वर्ण से जस् और इच् परे रहते पूर्वसवर्ण दीर्घ नहीं होता है । उदा०—कुमार्यौ । कुमार्यः । ब्रह्मबन्ध्वौ ।

दीर्घाज्जसि इचि च परतः पूर्वसवर्णदीर्घो न भवति । कुमार्यौ । कुमार्यः । ब्रह्मबन्ध्वौ । ब्रह्मबन्ध्वः ॥

## २५४६. वा छन्दसि ॥ १०६ ॥

दीर्घाच्छन्दसि विषये जसि च इचि च परतो वा पूर्वसवर्णदीर्घो न भवति । मारुतीश्चतस्रः ( काठ० सं० ११.१० ) । पिण्डीः । मारुत्यश्चतस्रः ( ऋ० सर्वा० ) । पिण्ड्यः । वाराही ( मै० सं० ४.४.५ ) । उपानही । वाराह्यौ । उपानह्यौ ॥

### न्यासः

शस्यपि प्रतिषेधः स्यात् ? ज्ञापकान्न भविष्यति, यदयम् 'तस्माच्छसो नः पुंसि' इति पुंग्रहणं करोति, तज् ज्ञापयति—शसि प्रतिषेधो न भवतीति । तद्धि नपुंसके पूर्वसवर्णदीर्घत्वासम्भवात् स्त्रीनिवृत्त्यर्थमेव क्रियते । यदि च स्त्रियामयप्यं युवतीः पश्येत्यादौ प्रतिषेधः स्यात्, तदा पूर्वसवर्णदीर्घत्वाभावान् नत्वस्य प्राप्तिरेव नास्तीति किं पुंग्रहणेन ? उत्तरार्थं तर्हि जस्ग्रहणम् ? नैतदस्ति; वाग्रहणस्य तत्र व्यवस्थितविभाषात्वविज्ञानादेव जसोऽन्यत्र न भविष्यति ॥ १०५ ॥

वा छन्दसि ॥ मारुतीरिति । मरुद् देवता आसामिति 'सास्य देवता' इत्यण्, 'टिड्ढाणञ्' इति ङीप; सवर्णदीर्घत्वम् । वाराहीरिति । वराहस्य विकार इति 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इत्यण् , पूर्ववद् ङीप् । उपानहीति । 'षिद्गौरादिभ्यश्च' इति ङीष् ॥ १०६ ॥

### पदमञ्जरी

वक्तव्यम् । जस्ग्रहणं शस्निवृत्त्यर्थम्, अन्यथा कुमारीः पश्य, वधूः पश्येत्यादौ शस्यपि प्रतिषेधः स्यात् । ज्ञापकान्न भविष्यति, यदयम्, 'तस्माच्छसो नः पुंसि' इति पुंग्रहणं करोति, तज्ज्ञापयति—न शसि प्रतिषेधो भवतीति; तद्धि नपुंसके सवर्णदीर्घत्वासम्भवात् स्त्रीनिवृत्त्यर्थं कृतम्, यदि च स्त्रियामप्ययं कुमारीः पश्येत्यादौ शस्यपि प्रतिषेधः स्यात्तदा पूर्वसवर्णदीर्घत्वाभावादेव नत्वं न भविष्यति, किं पुंग्रहणेन ? नैतदस्ति ज्ञापकम्; ह्रस्वान्तं यत् स्त्रीलिङ्गं तदर्थमेतत् स्यात्—कृतीः पश्य, धेनूः पश्येति । तस्मात् 'जसि च' इत्येतदपि वक्तव्यमेव ॥ १०५ ॥

वा छन्दसि ॥ मारुतीरिति । मरुतो देवता आसामिति 'सास्य देवता' इत्यण्, ङीप्, जसि पूर्वसवर्णदीर्घत्वम् । वाराहीति । वराहस्य विकार इति 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति 'प्राणिरजतादिभ्योऽञ्', ङीष्, द्विवचने पूर्वसवर्णदीर्घः । उपानही विशेष्ये ॥ १०६ ॥

### भावबोधिनी

ब्रह्मबन्ध्वः । [ कुमारी + औ, कुमारी + जस् इनमें दीर्घ ई से परे है । ब्रह्मबन्धू + औ, ब्रह्मबन्धू + जस् में दीर्घ ऊ से परे है । अतः पूर्वसवर्ण दीर्घ न होकर यण् होता है । ] ॥ १०५ ॥

वेदविषय में दीर्घ से परे जस् अथवा इच् रहने पर विकल्प से पूर्वसवर्ण दीर्घ नहीं होता है । उदा०—मारुतीश्चतस्रः । [ मरुत् देवता आसाम्—इस अर्थ में 'साऽस्य देवता' सूत्र से अण्, आदिवृद्धि स्त्री अर्थ में 'टिड्ढाणञ्' सूत्र से ङीप् प्रत्यय, मारुती + शस् = अस् में विकल्प से पूर्वसवर्ण दीर्घ, स् का विसर्ग । पक्ष में यण् — ] मारुत्यश्चतस्रः । [ पिण्डी + शस् = अस् में भी दीर्घ और पक्ष में यण् ] पिण्ड्यः । वाराही । उपानही । [ वराहस्य विकारः—इस अर्थ में 'अवयवे च प्राण्योषधिवक्षेभ्यः' सूत्र से अण्, आदिवृद्धि, "टिड्ढाणञ्" सूत्र से ङीप् वाराही + औ, पाक्षिक पूर्वसवर्ण दीर्घ । पक्ष मे यण् ] वाराह्यौ । [ उपानह से ङीष् करके उपानही बनाकर पक्ष में पूर्वसवर्ण दीर्घ पक्ष में यण् — ] उपानह्यौ ॥ १०६ ॥

## २५४७. अमि पूर्वः ॥ १०७ ॥ ( १९४ )

**'अकः' इत्येव। अमि परतोऽकः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। वृक्षम्। प्लक्षम्। अग्निम्। वायुम्।**

**पूर्वग्रहणं किम्? पूर्व एव यथा स्यात्, पूर्वसवर्णोऽन्तरतमो मा भूदिति कुमारीमित्यत्र हि त्रिमात्रः स्यात्।**

**न्यासः**

**अमि पूर्वः॥** पूर्वसवर्णदीर्घत्वे प्राप्ते **वचनमिदम्। दीर्घ इति** नेहानुवर्त्तते, अन्यथा हीदं वचनमनर्थकं स्यात्।

अथ पूर्वग्रहणं किमर्थम्, यावता प्रकृतं यत् पूर्वग्रहणं तदेवेहानुवर्त्तिष्यत इति? अत आह—**पूर्वग्रहणमित्यादि।** यथाजातीयकः पूर्वस्तथाजातीयक एव यथा स्यादित्येवमर्थं पूर्वग्रहणम्। एवकारेण यद्व्यवच्छिन्नं तद् दर्शयितुमाह—**पूर्वसवर्णान्तरतमो मा भूदिति।** पूर्वसवर्णश्चासावन्तरतमश्चेति कर्मधारयः। असति हि पूर्वग्रहणे यत् पूर्वकं पूर्वग्रहणं तेनैवानुवर्त्तितव्यम्, तस्मिंश्चानुवर्त्तमाने तत्सम्बद्धं सवर्णग्रहणमप्यनुवर्त्तेत, तथा च 'स्थानेऽन्तरतमः' इत्यनया परिभाषया पूर्वस्य यः सवर्णः स एव प्रसज्येत। किं पुनरेवं सत्यनिष्टं स्यात्, वृक्षमित्यादौ द्विमात्रस्य स्थानिनो द्विमात्र एव स्यादिति चेत्? नैतदस्ति; एवं हि वचनमिदमनर्थकं स्यात्, 'प्रथमयोः पूर्वसवर्णः' इत्यनेन सिद्धत्वादित्यत आह—**कुमारीमित्यत्र हीत्यादि।** कुमारीशब्दस्येकारो द्विमात्रः, अमोऽकारो मात्रिकः; तत्समुदायात्मकश्चात्र स्थानी, तत्र पूर्वसवर्णो विधीयमानस्त्रिमात्रस्य स्थानिनोऽन्तरतमस्त्रिमात्र एव स्यात्, पूर्वग्रहणे तु सति यथाजातीयक एव पूर्वः, तथाजातीयक एव द्विमात्रो भवति।

**पदमञ्जरी**

**अमि पूर्वः॥** 'दीर्घात्' इति नानुवर्त्तते, आरम्भसामर्थ्यात्।

**पूर्वग्रहणमित्यादि।** यः पूर्वः श्रुतः, स एव यथा स्यात्। कः पुनरन्यः प्राप्नोति? तत्राह—**पूर्वसवर्णो दीर्घो मा भूदिति।** क्वचित्तु समासः पठ्यते, स कर्मधारयो द्रष्टव्यः। एतदुक्तं भवति—असतीह पूर्वग्रहणे प्रकृतं पूर्वग्रहणमनुवर्त्यम्, तस्मिंश्चानुवर्त्तमाने तत्सम्बद्धं सवर्णग्रहणमप्यनुवर्त्यम्, ततश्च पूर्वस्य यः सवर्णः स एवान्तरतमः प्रसज्येत, तत्र को दोषः? न तावद्वृक्षमित्यादौ द्विमात्रस्य स्थानित्वेन द्विमात्रप्रसङ्गः, वचनसामर्थ्यात् 'प्रथयोः पूर्वसवर्णः' इत्येव दीर्घस्य सिद्धत्वात्? अत आह—**कुमारीमित्यत्रेति।**

**भावबोधिनी**

'अकः' इसकी अनुवृत्ति है। अक् से अम् परे रहते पूर्व और पर के स्थान पर पूर्वरूप एकादेश होता है। उदा०—वृक्षम्। प्लक्षम्। [ वृक्ष + अम्, प्लक्ष + अम्, सवर्ण दीर्घ का अपवाद पूर्वरूप एकादेश होता है। ] अग्निम्। वायुम् [ अग्नि + अम्, वायु + अम् यहाँ भी पूर्वरूप एकादेश होता है। ]

पूर्व—इसका ग्रहण किस लिए है? पूर्व का ही रूप जिससे हो सके, पूर्वसवर्ण अन्तरतम ( सदृशतम ) दूसरा कोई वर्ण न हो सके। अन्यथा कुमारीम्—यहाँ तीन मात्राओं वाला आदेश होने लगता। [ कुमारी + अम् में दो मात्राएँ ई और एक मात्रा अ मिलाकर तीन मात्राएँ स्थानियों की हैं, अतः सदृशतम आदेश भी तीन मात्राओं का प्रसक्त होता है। उसका वारण करने के लिए 'पूर्व' का ग्रहण है। जैसा पूर्ववर्ती अक् होता है, वैसा ही आदेश होता है। ]

**'वा छन्दसि'** ( ६.१.१०६ ) **इत्येव—शमीं च** ( काठ० सं० ३६.६ ), **शम्यं च। गौरीं च, गौर्यं च** ( ऋ० १०.१२६.८ ) ॥

## २५४८. सम्प्रसारणाच्च ॥ १०८ ॥ ( ३३० )

**'पूर्वः' इत्येव। सम्प्रसारणादचि परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। यजि—इष्टम्। वपि—उप्तम्। ग्रहि—गृहीतम्। सम्प्रसारणविधानसामर्थ्याद्विगृहीतस्य श्रवणे प्राप्ते पूर्वत्वं विधीयते।**

**'वा छन्दसि' ( ६.१.१०६ ) इत्येव—'मित्रो नो अत्र वरुणौ यज्यमानः' ( अथर्व० १८.१.३९ )।**

### न्यासः

**वा च्छन्दसीत्येवेत्यादि।** यदि तर्हि 'वा च्छन्दसि' इत्यनुवर्त्तते, तेन सहास्यैकवाक्यतायां भाषायां परपूर्वत्वं न सिध्यति ? नैतदस्ति; यस्मात् तदिहानुवर्त्तमानं पूर्ववद् वाक्यभेदेन च्छन्दस्येव विकल्पं करोति, न भाषायाम् ॥ १०७ ॥

**सम्प्रसारणाच्च ॥** सम्प्रसारणस्य यणादेशो मा भूदित्येवमर्थमिदं परपूर्वत्वं विधीयते। यदि चात्र यणादेशः स्यात्, तदा सम्प्रसारणविधानमनर्थकं स्यात्। तस्मात् सम्प्रसारणविधानसामर्थ्यादेव यणादेशो न भविष्यति, तत् किमर्थमिदं विधीयते ? इत्याह—**सम्प्रसारणविधानसामर्थ्यादित्यादि।** सम्प्रसारणविधान-सामर्थ्याद् यणादेशो न भवतीति विगृहीतस्याकृतसंहिताकार्यस्य श्रवणं प्राप्नोति, तस्मान्मा भूदेष दोष इति परपूर्वत्वं विधीयते।

**वा च्छन्दसीत्येवेत्यादि।** अत्रापि पूर्ववद् वाक्यभेदो द्रष्टव्यः; अन्यथा भाषायां न स्यात्। **यज्यमान इति।** परपूर्वत्वाभावपक्षे यणादेशः। कथं पुनरत्र यणादेशः, यावता विगृहीतस्यैव ग्रहणेन भवितव्यम्, इदानीमेव

### पदमञ्जरी

**वा छन्दसीत्येवेति।** एतच्च वाक्यभेदेन सम्बद्ध्यते, अन्यथा भाषायां न स्यात्। **शम्यं चेति।** विकल्प-विधानसामार्थ्यात्पूर्वत्वाभावे पूर्वसवर्णदीर्घोऽपि न भवति, तयोरत्र विशेषाभावादिति यणादेश एव भवति ॥१०७॥

**सम्प्रसारणाच्च ॥ सम्प्रसारणविधानसामर्थ्यादिति।** कथं पुनः सामर्थ्यम्, यावता संहितायां यण् विधीयते, असंहितायां संप्रसारणं चरितार्थम् ? नैतदस्ति; 'संहितैकपदे नित्या' इति वचनात्।

**वा छन्दसीत्येवेति।** पूर्ववद्वाक्यभेदेन सम्बन्धः। **यज्यमान इति।** नन्विदानीमेवोक्तम्—विगृहीतस्य श्रवणं प्राप्नोति, तत्कथमत्र यणादेशः ? अत आह—**पूर्वत्वविधाने हीति।** सत्यम्, अनारब्धे पूर्वत्वे विगृहीतश्रवणं

### भावबोधिनी

छन्दस ( वेद ) में विकल्प ही होता है—शमीं च शम्यं च, गौरीं च, गौर्यं च। [ विकल्प से पूर्वसवर्ण दीर्घ और पाक्षिक यण् होता है। ] ॥ १०७ ॥

'पूर्वः' इसकी अनुवृत्ति होती है। सम्प्रसारण के बाद अच् परे रहते पूर्व और पर के स्थान में पूर्वरूप एकादेश होता है। उदा०—यज्–इष्टम् [ यज् + क्त, य् का सम्प्रसारण इ, अ का पूर्वरूप इ ही होता है, 'वृश्चभ्रस्ज' सूत्र से ज् का ष्, ष्टुत्व–इष्टम् ] वप्–उप्तम्। [ वप् + क्त = त, व् का सम्प्रसारण उ, अ का पूर्वरूप ] ग्रह—गृहीतम्। [ ग्रह + क्त = त, इट्, र् का सम्प्रसारण, अ का पूर्वरूप गृह् + इ + त, इ का दीर्घ ] सम्प्रसारण-विधान करने के सामर्थ्य से विगृहीत ( इ अ ज् + त, उ अ प् + त, गृ अ ह् ई त ) का श्रवण प्राप्त होने पर प्रस्तुत सूत्र से पूर्वसवर्ण दीर्घ किया जाता है।

वेद में विकल्प से ही होता है—मित्रावरुणौ यज्यमानौ। [ यज् + यक् = य + शानच् = आन, मुक्, यहाँ य् का सम्प्रसारण होने पर—इज्यमानौ। सम्प्रसारणाभाव में यज्यमानौ। ]

**परपूर्वत्वविधाने सत्यर्थवत्सम्प्रसारणविधानमिति इष्ट इत्येवमादिषु पूर्वत्वाभावे यणादेशो भवत्येव । अन्तरङ्गे चाचि कृतार्थं वचनमिति बाह्ये पश्चात्सन्निपतिते पूर्वत्वं न भवति—शकह्वौ, शकह्वर्थम् ॥**

**न्यासः**

ह्युक्तम्—सम्प्रसारणविधानसामर्थ्याद्विगृहीतस्यैव श्रवणे प्राप्ते परपूर्वत्वं विधीयते ? इत्यत आह—**परपूर्वत्वविधान इत्यादि** । अनारब्धे हि परपूर्वत्वे विगृहीतस्यैव श्रवणं प्राप्नोति, मा भूत् सम्प्रसारणस्य वैयर्थ्यमिति कृत्वा । सति तु परपूर्वत्वे यत्र परपूर्वत्वम्—इष्टमित्यादौ, तत्रार्थवत् सम्प्रसारणम् । अतः परपूर्वत्वभावपक्षे यणादेशो भवत्येव । अथेह कस्मान्न भवति—शकह्वौ, शकह्वर्थमिति; अत्र हि शकं ह्वयतीति क्विप्, यजादित्वात् सम्प्रसारणम्, परपूर्वत्वम्, तस्य 'अन्तादिवच्च' इति सम्प्रसारणग्रहणेन ग्रहणात् सम्प्रसारणासम्प्रसारणयोरेकादेशस्य सम्प्रसारणस्य व्यपदेशभावत्वात्; औकारेऽर्थशब्दे[1] चाच्परतो व्यवस्थिते 'सम्प्रसारणाच्च' इति परपूर्वत्वं प्राप्नोति ? इत्यत आह—**अन्तरङ्गे चाचीत्यादि** । योऽयं ह्वयतेरेचः स्थाने विहित आकारः स सम्प्रसारणस्यान्तरङ्गः प्रत्यासन्नः; उभयोरप्येकधात्वन्तर्गतत्वात् । औकारोऽर्थशब्दाकारश्च विप्रकृष्टः । विप्रकृष्टस्तु देशतः कालतश्च, यदाह—**बाह्य इति** । यस्य धातोः सम्प्रसारणमवयवः, तत्रानन्तर्भावाद् बाह्यः । कालतश्च, यदाह—**पश्चात् सन्निपतित इति** । पूर्वरूपविधानकालादुत्तरकालं सन्निहित इत्यर्थः । तत्र सन्निकृष्टविप्रकृष्टयोरचोः प्रत्यासत्तेरन्तरङ्गो योऽच् तत्रेदं वचनं प्रवर्त्तते, तत्र चरितार्थमिति विप्रकृष्ट औकारादौ पश्चात् सन्निहितेन भवति ॥ १०८ ॥

**पदमञ्जरी**

प्राप्नोति, सम्प्रसारणविधानं व्यर्थं मा भूदिति, पूर्वत्वविधाने हि सति तत्प्रतिपत्तिविषये अर्थवत्सम्प्रसारणमिति पूर्वत्वाभावपक्षे यणादेशो भवत्येव, 'सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्', यस्मिन्नङ्गे संप्रसारणमवस्थितं तदन्तर्भूतो योऽच् तेनैव सह यथा स्यात्, इह मा भूत—शकह्वौ, शकह्वर्थमिति, शकान् ह्वयतीति क्विपि यजादित्वात्सम्प्रसारणम्, योऽन्त्यो धातोराकारः तस्मिन्नेवाङ्गेऽन्तर्भवति तस्य तावत् पूर्वत्वम्, विभक्त्योकारोऽर्थशब्दाकारश्च न तस्मिन्नङ्गेऽन्तर्भवत इति तयोः पूर्वत्वं न भवति । अत्र परिहारः—यणः स्थाने य इक् स संप्रसारणम्, एकादेशस्तु न यण्स्थानिकः, वर्णाश्रयत्वाच्चान्तादिवद्भावोऽपि नास्ति, एवं पूर्वत्वमेव तावन्न सम्प्रसारणम्, किं पुनः, तत्स्थानिक ऊकार इति पूर्वैकादेशाभावः । सम्प्रसारणदीर्घत्वे तु वचनसामर्थ्यादेकादेशस्य पूर्वं प्रत्यन्तवद्भावात् सम्प्रसारणव्यपदेशः । **वृत्तिकारस्तु सम्प्रसारणत्वमभ्युपेत्य परिहारान्तरमाह—अन्तरङ्गे चेति** ।

**भावबोधिनी**

पर का पूर्वरूपत्व-विधान करने में सम्प्रसारण अर्थवान् ( चरितार्थ ) होता है । इसलिए 'इष्ट' आदि में पूर्वरूपत्व न करने पर यण् आदेश होता ही है । [ जब सम्प्रसारण करते हैं तो पर वर्ण का पूर्वरूप होने से सम्प्रसारण की चरितार्थता है, वह सुनाई देता है । अतः जब पूर्वरूपत्व नहीं किया जाता है, तब इ + अज् + त आदि में पुनः यण् करके य् अज् + त–यष्ट अथवा इज्यमान और यज्यमान दोनों रूप बनते हैं । ]

अन्तरङ्ग अच् परे रहते यह पूर्वरूप-विधायक वचन चरितार्थ हो जाता है, इसलिए बाद में सन्निपतित = सन्निहित में पूर्वरूपत्व नहीं होता है—शकह्वौ, शकह्वर्थम् । [ शकान् ह्वयति—इस अर्थ में ए का आ, 'ह्वा' से क्विप् प्रत्यय, सर्वापहारी लोप और व् का सम्प्रसारण आ का पूर्वरूप करने पर शक + हु = शकहु यहाँ पहले सम्प्रसारण के बाद अत्यन्त सन्निकट अच् = आ का पूर्वरूप करने में यह सूत्र चरितार्थ हो चुका है । अतः बाद में शकहु + औ में विभक्ति के साथ पूर्वरूप नहीं होता है । इसी प्रकार शकहु + अर्थम् में भी सम्प्रसारण न होकर यण् ही होता है । ] ॥ १०८ ॥

१. 'च चपरत' इति प्रकाशितपाठोऽसङ्गतः ।

## २५४९. एङः पदान्तादति ॥ १०९ ॥ ( ८६ )

**एङ् यः पदान्तस्तस्मादति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। अग्नेऽत्र। वायोऽत्र। अयवादेशयोरयमपवादः।**

**एङ इति किम्? दध्यत्र। मध्वत्र। पदान्तादिति किम्? चयनम्। लवनम्। अतीति किम्? वायो इति। भानो इति। वायविति। भानविति। तपकरणं किम्? वायवायाहि॥**

## २५५०. ङसिङसोश्च ॥ ११० ॥ ( २४६ )

**'एङः' इति वर्त्तते, 'अति' इति च। एङ उत्तरयोर्ङसिङसोरति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। अग्नेरागच्छति। अग्नेः स्वम्। वायोरागच्छति। वायोः स्वम्।**

**न्यासः**

**एङः पदान्तादति ॥ अग्नेऽत्रेति।** 'सम्बुद्धौ च' इति गुणः ॥ १०९ ॥

**ङसिङसोश्च ॥ एङ उत्तरयोरित्यादि।** एङ उत्तरौ यौ ङसिङसौ तयोः सम्बन्ध्यवयवो योऽत् तस्मिन् परत इत्यर्थः। **अग्नेरागच्छतीति।** 'घेर्ङिति' इति गुणः। अथ कस्मादत्र यथासंख्यं न भवति, एङावपि हि द्वौ, ङसिङसावपि द्वावेवेति प्राप्नोति? नैष दोषः; न ह्यत्र ङसिङसोः परतः कार्य्यं विधीयते, किं तर्हि? तत्सम्बन्धिन इति, स चैक एव। अथापि सम्बन्धिभेदेन भेदः स्यात्? एवमप्यदोषः; चकारोऽत्र समुच्चयार्थः क्रियते। एवं च समुच्चयो भवति यद्येकैकस्यैङो ङसिङसोः प्रत्येकमपि परतः परपूर्वत्वं भवति; नान्यथा।

**पदमञ्जरी**

देशतो विप्रकर्षोऽत्र बाह्यत्वेनोपवर्णितः।
कालतो विप्रकर्षस्तु पश्चादुपनिपाततः॥

धातावनन्वर्भावकृतं बाह्यत्वम् पश्चादुपनिपातस्तु स्पष्ट एव ॥ १०८ ॥ १०९ ॥

**ङसिङसोश्च ॥ एङ उत्तरयोरिति।** एङ उत्तरौ यौ ङसिङसौ, तयोर्यः सम्बन्ध्यकारः, तस्मिन् परत इत्यर्थः। **अग्नेरागच्छति, अग्नेः स्वमिति।** यद्यपि द्वावेङौ, ङसिङसावपि द्वावेव; तथापि यथासङ्ख्यं न भवति,

**भावबोधिनी**

एङ् जो पदान्त है उससे अत् = ह्रस्व अ परे रहते पूर्व और पर दोनों के स्थानों पर पूर्वरूप एक आदेश होता है। उदा०—अग्नेऽत्र। वायोऽत्र। [ अग्ने + अत्र, वायो + अत्र यहाँ ए तथा ओ का ] अय् तथा अव् आदेश का अपवाद यह [ पूर्वरूप ] है।

एङ् से परे—इसका क्या फल है? दध्यत्र। [ दधि + अत्र, मधु + अत्र में एङ् से परे नहीं है। पूर्वरूप न होकर यण् होता है। ] पदान्त से परे—इसका क्या फल है? चयनम् लवनम्। [ चे + अनम्, लो + अनम् में एकही पद के मध्य में एङ् है पदान्त नहीं है। ] अत् = अकार परे हो—इसका क्या फल हैं? भानो इति। वायो इति। [ पूर्वरूप नहीं होता है ओ का अव् आदेश होता है— ] भानविति। वायविति। तपरकरण किस लिये है? वायवायाहि। [ वायो + आयाहि में एकमात्रिक ह्रस्व अ परे नहीं है अतः पूर्वरूप न होकर अव् आदेश होता है। ] ॥ १०९ ॥

'एङः' इसकी और 'अति' इसकी अनुवृत्ति होती है। एङ् से उत्तरवर्त्ती ङसि और ङस् का अकार परे रहते पूर्व और पर दोनों के स्थान में पूर्वरूप एक आदेश होता है। उदा०—अग्नेरागच्छ। अग्नेः स्वम्। वायोरागच्छति। वायोः स्वम्। [ अग्नि + ङसि = अस्, वायु + ङसि = अस्, 'घेर्ङिति' सूत्र से इ और उ का गुण करने पर ए, ओ हो जाते हैं—अग्ने + अस्, वायो + अस् में दोनों के स्थान पर पूर्वरूप एकादेश करने के बाद स् का रुत्व—अग्नेर् आगच्छति, वायोर्,

**अपदान्तार्थ आरम्भः ॥**

## २५५१. ऋत उत् ॥ १११ ॥ ( २७९ )

**'ङसिङसोः' इत्येव। ऋकारान्तादुत्तरयोर्ङसिङसोरति परतः पूर्वपरयोरुकार एकादेशो भवति। होतुरागच्छति। होतुः स्वम्। द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यः स लभतेऽन्यतरव्यपदेशमिति 'उरण् रपरः' ( १.१.५१ ) इति रपरत्वमत्र कृत्वा 'रात्सस्य' ( ८.२.२४ ) इति सलोपः कर्तव्यः ॥**

**न्यासः**

'ईदग्नेः सोमवरुणयोः', 'ओरावश्यके' इति च निर्देशस्तदभावं ज्ञापयति। लक्षणव्यभिचारचिह्नेन वा। अल्पाच्तरस्य ङसः परनिपातेन यथासंख्याऽभावोऽवसीयते ॥ ११० ॥

**ऋत उत् ॥ द्वयोः षष्ठीनिर्दिष्टयोः स्थान इत्यादि।** किं पुनर्होतुरित्यादावनिष्टं स्याद् यदि रपत्वं न क्रियेत ? न किञ्चित्; न्यायतस्तु प्राप्नोति रपरत्वमपि, तदवश्यं कर्त्तव्यम्। तमेव न्यायं दर्शयितुम्—'द्वयोः षष्ठीनिर्दिष्टयोः स्थाने' इत्युक्तम्। ऋत इति तपरकरणं दीर्घनिवृत्त्यर्थम्। तेन 'उन्न्योर्ग्रः' 'प्रे स्त्रोऽयज्ञे' इत्यादौ न भवति। उदित्येतदपि तपरकरणं दीर्घनिवृत्त्यर्थमेव, आन्तरतम्याद् द्विमात्रस्य स्थाने द्विमात्र एव प्राप्नोति। ननु च 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इति सवर्णानां ग्रहणं न भविष्यतीति तत् किमेतन्निवृत्त्यर्थेन तपकरणेन ? एवं तर्ह्येतज्ज्ञापयति—'भवत्यत्र ह्युकारेण भाव्यमानेन सवर्णस्य ग्रहणमि'ति। तेनामू, अमूभ्यामित्यत्र 'अदसोऽसेर्दादु दो मः' इति दीर्घस्य स्थाने दीर्घ ऊकारो भवति ॥ १११ ॥

**पदमञ्जरी**

न ह्यत्र ङसिङसोः कार्यं विधीयते, किं तर्हि ? तत्सम्बन्धिन्यति; स चैक एव। अथापि सम्बन्धिभेदेन तस्य भेदः स्यात् ? एवमपि न दोषः; 'ईदग्नेः सोमवरुणयोः', 'धातोः' इत्यादिनिर्देशात् ॥ ११० ॥

**ऋत उत् ॥ द्वयोः षष्ठीनिर्दिष्टयोरित्यादि।** न्यायप्राप्तिप्रदर्शनमेतत्, न पुना रपत्वेऽक्रियमाणे किञ्चिदनिष्टम् 'ऋतः' इति तपरकरणं दीर्घनिवृत्त्यर्थम्, 'उन्न्योर्ग्रहः' 'प्रेस्त्रोऽयज्ञे' इत्यादौ न भवति। 'उत्' इत्यपि तपकरणं दीर्घनिवृत्त्यर्थमेव, आन्तर्यतो हि द्विमात्रस्य द्विमात्र एव प्राप्नोति। ननु 'भाव्यमानोऽण्सवर्णान्न गृह्णाति' ( व्या० परि० ३५ ) इति ? एवं तर्ह्येतज्ज्ञापयति—'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' ( पुरु० परि० २१ ) इति, तेनामूभ्यामित्यत्र 'अदसोसेर्दादु दो मः' इति दीर्घस्य दीर्घ ऊकारो भवति। इह गम्लृप्रभृतिभ्यो ङसिङसोः कृतयोः ऋकारलृकारयोः सवर्णसंज्ञाविधानादस्मिन्नुत्वे लपरत्वे च कृते संयोगान्तलोपे गमुलिति रूपं भवति ॥ १११ ॥

**भावबोधिनी**

आगच्छति। इसी प्रकार अग्नि + ङस् = अस्, वायु + ङस् = अस् यहाँ भी गुण के बाद ए + अ, ओ + अ का पूर्वरूप एकादेश, स् का रुत्वविसर्ग। ]

अपदान्त में पूर्वरूप के लिए यह सूत्र बनाया गया है [ पदान्त में पूर्वसूत्र करता है। ] ॥ ११० ॥

'ङसिङसोः' इसकी अनुवृत्ति होती है। ऋकारान्त से उत्तरवर्ती ङसि और ङस् के अकार के परे रहते पूर्व और पर के स्थान पर 'उकार' एक आदेश होता है। उदा०—होतुरागच्छति। [ होतृ + ङसि = अस्, प्रस्तुत सूत्र से ऋ और अ के स्थान पर 'उ' आदेश 'उरण् रपरः' सूत्र से रपर—होतुर्स्' "रात्सस्य" ( पा० सू० ८।२।२४ ) से स् का लोप—होतुर् आगच्छति' अवसान रहने पर या खर् परे होने पर विसर्ग होता है—होतुः। ] होतुः स्वम्। [ होतृ + ङस् = अस् शेष पूर्ववत् ] दोनों षष्ठीनिर्दिष्टों के स्थान पर जो एकादेश होता है वह अन्यतर का व्यपदेश प्राप्त करता है [ इसलिए ऋ के स्थान पर होने वाला अण् उ हो जाता है ] इसलिए 'उरण् रपरः' सूत्र से रपरत्व यहाँ करके 'रात्सस्य' ( पा० सू० ८।२।२४ ) से स् का लोप करना चाहिए।

## २५५२. ख्यत्यात् परस्य ॥ ११२ ॥ ( २५५ )

'ङसिङसोः' इति वर्त्तते, 'उत्' इति च। ख्यत्यादिति खिशब्दखीशब्दयोस्तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणम्, ताभ्यां परस्य ङसिङसोरत उकारादेशो भवति। सख्युरागच्छति। सख्युः स्वम्। पत्युरागच्छति। पत्युः स्वम्।

खीशब्दस्योदाहरणम्—सह खेन वर्त्तत इति सखस्तमिच्छतीति क्यच्—सखीयति, सखीयतेः क्विप् सखी, तस्य ङसिङसोः—सख्युरिति। तीशब्दस्यापि—लूनमिच्छति लूनीयति, लूनीयतेः क्विपि लुने लून्युरागच्छति। लून्युः स्वम्। निष्ठानत्वम् ( ८.२.४४ ) 'पूर्वत्रासिद्धम्' ( ८.२.१ ) इत्यसिद्धम्।

**न्यासः**

**ख्यत्यात् परस्य ॥ ख्यत्यादिति खिशब्दखीशब्दयोस्तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणमिति।** यणादेशे कृते तुल्यं रूपमिति विशेषाभावात्। अथ कस्मादत्राकारान्तयोरेव ख्यशब्द-त्यशब्दयोरिदं ग्रहणं न भवति? केवलस्य ख्यशब्दस्य त्यशब्दस्यासम्भवादिति चेत्? न; यदि केवलौ न स्तः, तदन्तानां तर्हि मुख्यगोसंख्यादीनामपत्यगार्हपत्यादीनाञ्च ग्रहणमस्तु? नैतदस्ति; एवं हि—'**सख्युरसम्बुद्धौ**' 'पत्युर्नो यज्ञसंयोगे' इति निर्देशौ नोपपद्येयाताम्।

**सह खेन वर्त्तत इति सख इति।** 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्य' इति सहस्य सभावः। **सखीयतीति।** 'क्यचि च' इतीत्वम्। **सखीरिति।** क्विप्, 'अतो लोपः' इत्यकारलोपः, लोपो व्योर्वलि'

**पदमञ्जरी**

**ख्यत्यात् परस्य ॥ खिशब्दखीशब्दयोरित्यादि।** यणादेशे कृते तुल्यरूपत्वाद् द्वयोरपि ग्रहणम्। एतदर्थमेवागन्तुकेनाकारेण यणादेशं कृत्वा विकृतनिर्देशः कृतः; अन्यथा खित्योरिति ह्रस्वयोर्ग्रहणे दीर्घयोर्न स्यात्, दीर्घयोर्ग्रहणे ह्रस्वयोर्न स्यात्। विकृतनिर्देशे तु द्वयोरपि भवति। अकारान्तयोस्तु मुख्यापत्यादिवर्त्तिनोर्ग्रहणं न भवति, 'सख्युर्यः' 'पत्युर्नो' 'आपत्यस्य च' इत्यादिनिर्देशात्।

**सखीयतेः क्विप् सखीरिति।** ननु चाल्लोपस्य स्थानिवद्भावाद्यणा भाव्यम्, तत्र कृते यलोपे स्थानिवत्त्वनिषेधादादिष्टादचः पूर्वत्वाच्च पुनः स्थानिवत्त्वाभावात् 'लोपो व्योर्वलि' इति यलोपे सख्युरित्यादि न सिद्ध्यति? नैतदस्ति; 'क्वौ लुप्तं न स्थानिवत्' ( जै० परि० ४७ ) इति स्थानिवत्त्वनिषेधात्।

**भावबोधिनी**

[ 'ऋतः' में तपरकरण दीर्घ स्थानी की निवृत्ति के लिए है। इसी प्रकार 'उत्' का तपरकरण भी दीर्घ = द्विमात्रिक की निवृत्ति के लिए ही है। अन्यथा द्विमात्रिक स्थानियों का आन्तरम्य से द्विमात्रिक ही आदेश होने लगता ] ॥ १११ ॥

'ङसिङसोः' इसकी और 'उत्' इसकी अनुवृत्ति होती है। ख्यत्यात्—यह किये गये यण् आदेश वाले 'खि' और 'खी' तथा 'ति' और 'ती' का ग्रहण है अर्थात् ह्रस्व और दीर्घ दोनों लिए जाते हैं, उनसे परे ङसि तथा ङस् के अकार का उकार आदेश होता है। उदा०—सख्युरागच्छति। सख्युः स्वम्। [ सखि + ङसिं = अस्, सखि + ङस् = अस् अ का उ आदेश, यण्—सख्युस्, रुत्व सख्युर् + आगच्छति, विसर्ग—सख्युः ] पत्युरागच्छति। पत्युः स्वम्। [ पति + ङसि, पति + ङस्, ङ् की इत्संज्ञालोप के बाद 'अ' का 'उ' आदेश, यण् रुत्व, विसर्ग—पत्युर्, पत्युः रूप होते हैं। ]

खी शब्द का उदाहरण—खेन सह वर्तते इस अर्थ में [ "तेन सहेति तुल्ययोगे" ( पा० सू० २।२।२८ ) से बहुव्रीहि समास 'वोपसर्जनस्य' ( पा० सू० ६।३।८२ ) से 'सह' का 'स' आदेश करने पर ]—सखः बनता है, तम् = सखम् इच्छति—इस अर्थ में [ "सुप आत्मनः क्यच्" पा० सू० ३।१।८ से ] क्यच् = य प्रत्यय, [ "क्यचि च" सूत्र से

**विकृतनिर्देशादेवेह न भवति—अतिसखेरागच्छति, सेनापतेरागच्छतीति। सखिशब्दस्य केवलस्य घिसंज्ञा प्रतिषिध्यते ( १.४.७ ), न तदन्तस्य ॥**

**न्यासः**

इति यकारस्य च। **लूनमिति।** 'ल्वादिभ्यः' इति निष्ठानत्वम्। ननु च नायं तीशब्दः, तत् कथं तस्येदमुदाहरणमित्यत आह—**निष्ठानत्वमित्यादि।**

अथेह कस्मान् न भवति—अतिसखेरागच्छति, सेनापतेरागच्छतीति, अस्ति ह्यत्रापि खिशब्दः, तिशब्दश्च? इत्यत आह—**विकृतनिर्देशादित्यादि।** योऽयं ख्यत्यादित्यागन्तुकेनाकारेण यणादेशं कृत्वा विकृतनिर्देशः कृतस्तस्यैतदेव प्रयोजनम् यत्र यणादेशः, तत्रैव यथा स्यात्। न चात्र यणादेशोऽस्ति, अतो न भवति; अन्यथा हि विकृतनिर्देशोऽनर्थकः स्यात्। ननु च लघ्वर्थः स्यात्, अन्यथा हि 'खितिखीतीभ्यः' इत्युच्यमाने गौरवं स्यात्? एवं मन्यते—यदि यत्र यण् न भवति, तत्रापि भवितव्यम्, तदा खीतीभ्यामित्येवं ब्रूयात्। न चैवमुच्यमाने ह्रस्वान्ताभ्यान्न प्राप्नोति; खिशब्दात् 'सख्युर्यः', तिशब्दात् 'पत्युर्णो यज्ञसंयोगे' इति निर्देशाभ्यामेव सिद्धेः। अत्र हि सखिपतिशब्दयोर्ग्रहणम्, न सखीपतीशब्दयोः। न हीह पतीशब्दस्य यज्ञेन संयोगोऽस्ति, नापि 'सह खेन वर्त्तते' इत्यादिना प्रकारेण व्युत्पादितो यः सखीशब्दस्तत उत्पन्नो यः प्रत्ययः स प्रकृत्यर्थाभिधाने समर्थो भवति; यतोऽभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति। तस्माद् विकृतनिर्देशस्य पूर्वोक्तमेव प्रयोजमिति।

अथ स यणादेशोऽत्र कस्मान्न भवति यस्मिन् सत्युत्वेन भवितव्यम्? 'घेर्ङिति' इति गुणेन बाधितत्वादिति चेत्? न; 'शेषो घ्यसखि' इति घिसंज्ञाप्रतिषेधादिति चेत्यत आह—**सखीशब्दस्येत्यादि।** अत्र च 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति प्रतिषेधो हेतुः।

परस्येति किमर्थम्? पूर्वपरयोर्मा भूत्। इतश्चारभ्य पूर्वपरयोरित्येतन्नानुवर्तते ॥ ११२ ॥

**पदमञ्जरी**

विकृतनिर्देशस्य प्रयोजनान्तरमप्याह—**विकृतनिर्देशादिति। अतिसखेरिति।** अतिक्रान्तः सखा येनेति बहुव्रीहिः। यद्वा—शोभनः सखा अतिसखा, 'न पूजनात्' इति समासान्तनिषेधः। अथ स एव यणादेशोऽत्र कस्मान्न भवति, 'घेर्ङिति' इति गुणेन बाधितत्वादिति चेत्? न; 'शेषो घ्यसखि' इति घिसंज्ञाप्रतिषेधादित्यत आह—**सखिशब्दस्य केवलस्यैव होति**[1]। एतच्च तत्रैव प्रतिपादितम् ॥ ११२ ॥

**भावबोधिनी**

ईत्व करके सखीयति बनता है। इस ] सखीयति = सखीय नामधातु से क्विप् [ सर्वापहारी लोप, प्रत्यय-लक्षण से अलोप, "लोपो व्योर्वलि" पा० सू० ६।१।६६ से यलोप करने पर प्रथमा एकवचन में ] सखीः बनता है। इसके ङसि और ङस् में—सख्युः बनता है। [ सखी + ङसि = अस् सखी + ङस् = अस् अ का उ, ई का यण् शेष पूर्ववत् ] ती—शब्द का भी उदाहरण—लूनम् इच्छति इस अर्थ क्यच् = य लूनीयति, इस लूनीय नामधातु से क्विप् लोप करने पर [ प्रत्ययलक्षण से अलोप और य् लोप के बाद लूनी + ङसि = अस्, लूनी + ङस् = अस्, अ का उ, यण्, रुत्व, विसर्ग ] लून्युरागच्छति। लून्युः स्वम्। 'पूर्वत्रासिद्धम्' ( पा० सू० ८।२।१ ) के आधार पर [ "ल्वादिभ्यः" पा० सू० ८।२।४४ से किया गया ] निष्ठा त का न [ प्रस्तुत सूत्र की दृष्टि में ] असिद्ध हो जाता है। [ अतः इसके लिये लूती + अस् ही है, उ, और यण् होता है। ]

चूंकि विकृत = ख्य, त्य ऐसा निर्देश किया गया है इस लिए इनमें नही होता है—अतिसखेरागच्छति, सेनापतेरागच्छति,। अकेले 'सखि' शब्द की ही घि संज्ञा का प्रतिषेध [ शेषो घ्यसखि" सूत्र से ] होता है, सखिशब्दान्त की घिसंज्ञा का प्रतिषेध नही होता है। [ इस लिए अतिक्रान्तः सखा येन सः—इसमें अतिसखिः बनाने के बाद ङसि और ङस् परे रहते 'इ' की घि संज्ञा होने से 'घेर्ङिति" ( पा० सू० ७।३।१११ ) सूत्र से इ का गुण अय् आदेश होने से यण् नही होता है। अ का उ भी नही होता है इसी लिए 'ख्य, त्य' ऐसा यण्विशिष्ट निर्दिष्ट किया गया है। ] ॥ ११२ ॥

१. 'केवलस्य' इति काशिकापाठः।

## २९५३. अतो रोरप्लुतादप्लुते ॥ ११३ ॥ ( १७३ )

**'अति' इति, 'उत्' इति वर्त्तते। अकारादप्लुतादुत्तरस्य रोः रेफस्य उकारानुबन्धविशिष्टस्य अकारेऽप्लुते परत उकारादेशो भवति। वृक्षोऽत्र। प्लक्षोऽत्र। 'भोभगोअघोअपूर्वस्य योऽशि' ( ८.३.१७ ) इत्यस्मिन्प्राप्ते उत्वं विधीयते। रुत्वस्याश्रयत्वात् 'पूर्वत्रासिद्धम्' ( ८.२.१ ) इत्यसिद्धं न भवति।**

**अत इति किम्? अग्निरत्र। तपरकरणं किम्? वृक्षा अत्र। सानुबन्धग्रहणं किम्? स्वरत्र। प्रातरत्र।**

**न्यासः**

**अतो रोरप्लुतादप्लुते ॥ उकारानुबन्धकस्येति।** यदि रुशब्दः समुदायः स्थानी स्यात्, तदा महातरुवनमित्यत्रापि 'हशि च' इत्युत्त्वं प्रसज्येत। किञ्च—'ससजुषो रुः' इत्युकारानुबन्धकरणमनर्थकं स्यात्। तत्र ह्युकारोऽस्य सूत्रस्य विशेषणार्थः क्रियते, स इह समुदाये स्थानिन्यनर्थको जायते। तस्मादुकारानुबन्धवत इदं ग्रहणम्। ननु चोत्त्वे कर्त्तव्ये 'पूर्वत्रासिद्धम्' इति रुत्वमसिद्धम्, तदसतो रोः कथमुत्त्वं शक्यते विधातुम्? इत्यत आह—**रुत्वमप्याश्रयात् सिद्धमिति।** यदि रुत्वमसिद्धं स्यात्, तदा स्थानित्वेन रोराश्रयणमनर्थकं स्यात्; कस्यचिदुकारानुबन्धविशिष्टस्य रोरसम्भवाद्। तस्मादाश्रयादेव रोरसिद्धत्वं नास्ति।

**तस्यापीति।** यत्राति परतो रोरुत्वमुच्यते तस्य **सुस्रोता३ अत्रेति** 'दूराद्धूते च' इति प्लुतः। **देवदत्ता३ अत्रेति।** अत्रापि 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' इत्यनेन।

अथ किमर्थम् 'अप्लुतादप्लुते' इत्युच्यते? न ह्यतोऽतीति च तपरकरणस्य वर्णस्य निर्देशे क्रियमाणे प्लुतात् परस्य प्लुते वा परतः प्राप्नोति? इत्यत आह—**प्लुतस्येत्यादि।** ननु च सिद्धः प्लुतः स्वरसन्धिषु',

**पदमञ्जरी**

**अतो रोरप्लुतादप्लुते ॥ [२]उकारानुबन्धकस्येति।** यदि रुशब्दसमुदायः स्थानी स्याद्, अगुर्वर्थम्, तर्वर्थमित्यादावपि प्रसज्येत। 'ससजुषो रुः' इत्यत्र चोकारस्यानुनासिकत्वप्रतिज्ञयाऽनुबन्धकरणमनर्थकं स्यात्, वद्धयत्रैव सूत्रे विशेषणार्थं क्रियते। **रुत्वमपीति।** अपिशब्दः पुनःशब्दस्यार्थे। यदि पुना रुत्वमसिद्धं स्यात्, स्थानित्वेनाश्रयणमनुपपन्नं स्यात्; उकारानुबन्धकस्य कस्यचिद्रोरभावात्।

**तस्यापीति।** निमित्तभूतस्यापीत्यर्थः। **सुस्रोता३ अत्र न्वसीति।** 'दूराद्धूते च, इति प्लुतः, नुशब्दः प्रश्ने। **अश्विन् अत्रेति।** अश्वशब्दान्मत्वर्थीय इनिः, सम्बुद्ध्यन्तं चैतत्, 'गुरोरनृतः' इति प्लुतः, हे अश्विन् अत्रैव प्रदेशे पयस्तिष्ठत्वित्यर्थः। प्रायेण तु तकारान्तं पठ्यते, तत्राश्विच्छब्दस्य व्युत्पत्तिर्मृग्या। ननु तपरकरणादेव प्लुतात्परस्य प्लुते वा परतो न भविष्यति, यथा दीर्घे? तत्राह—**प्लुतस्यासित्वादिति।** ननु च सिद्धः प्लुतः स्वरसन्धिषु, यदयं 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावं शास्ति, यस्य हि विकारः प्राप्नोति तस्य

**भावबोधिनी**

'अति' तथा 'उत्' इनकी अनुवृत्ति होती है। अप्लुत अकार से उत्तरवर्त्ती उकारानुबन्ध—विशिष्टरु के रेफ का अप्लुत अकार परे रहते उकार आदेश होता है। उदा०—वृक्षोऽत्र। प्लक्षोऽत्र। [ वृक्षस् + अत्र, 'ससजुषोः रुः' सूत्र से स् का रु करने पर वृक्षरु + अत्र में रु का उकार आदेश, गुण, 'एङः पदान्तादति" सूत्र से ए + अ का पूर्वरूप एकादेश वृक्षोऽत्र। इसी प्रकार प्लक्षसु + अत्र में भी समझना चाहिए ] 'भोभगोअघो—अपूर्वस्य योऽशि' ( पा० सू० ८।३।१७ ) से रु का य् प्राप्त रहते 'उ' आदेश किया जा रहा है। रुत्व को मानकर उत्व किया जाता है अतः 'पूर्वत्रासिद्धम्' इससे असिद्ध नहीं होता है। [ 'ससजुषोः रुः' ८।२।६६ है। अतः त्रिपादीस्थ होने से प्रस्तुत

१. 'प्रकृतिभावेषु' इति महीशूरसंस्करणे पाठः। २. 'उकारानुबन्धविशिष्टस्य' इति काशिका।

**अतीत्येव—वृक्ष इह । तस्यापि तपरत्वादत्र न भवति—वृक्ष आश्रितः । अप्लुतादिति किम् ? सुस्रोता३ अत्र न्वसि । अप्लुत इति किम् ? तिष्ठतु पय आ३श्विन् । अत्र प्लुतस्यासिद्धत्वादुत्वं प्राप्नोतीति 'अप्लुतादप्लुते' इत्युच्यते ॥**

## २५५४. हशि च ॥ ११४ ॥ ( १६६ )

**हशि च परतोऽत उत्तरस्य रोरुकारादेशो भवति । पुरुषो याति । पुरुषो हसति । पुरुषो ददाति ॥**

### न्यासः

यदयम् 'प्लुतः प्रगृह्या अचि' इति प्रकृतिभावं शास्ति ? एव मन्यते—प्रकृतिभाव एतवज्ज्ञापकं स्यात् । अथापि कथञ्चित् स्वरसन्धिविषयं ज्ञापकं स्यात्, तथा रोरुत्वं स्वरसन्धिर्न भवति । अथापि संहिताकार्य्यविषयं ज्ञापकं स्यात्, तथापि रोरुत्वं संहिताकार्य्यं न भवति । येन हि वर्णाः सन्धीयन्ते तत् संहिताकार्यम्, न चोत्वेन वर्णाः संहिता भवन्ति; पुनरप्याद् गुणाद्यपेक्षणादिति ॥ ११३ ॥

हशि च ॥ पूर्वत्रातीत्यनुवृत्तेर्हश्युत्वमप्राप्तमेवानेन विधीयते । चकारः 'अप्लुतात्' इत्यस्यानुकर्षणार्थः । तेनेह न भवति —सुस्रोता३ देहीति ॥ ११४ ॥

### पदमञ्जरी

प्रकृतिभावो विधातव्यः, न च प्लुतस्यासिद्धत्वे प्लुतस्य सतो विकारप्राप्तिरित्यनर्थकं तत् स्यात् ? अस्तु स्वरसन्धिषु प्लुतः सिद्धः, रोरुत्वं तु स्वरसन्धिर्न भवति ।

यदि तु संहिताधिकारे यद्विधीयते तन्मात्रविषयं ज्ञापकमाश्रीयते शक्यमकर्त्तुम्-'अप्लुतादप्लुते' इति ॥११३॥

**हशि च** ॥ अप्लुतादित्येव—सुस्रोता३ देहीति । चकारोऽतीत्यस्यानुकर्षणार्थः, तेनोत्तरत्र तस्यैवानुवृत्तिर्भवति, न हशीत्यस्य, नहि तदनुकर्षणस्यान्यत्प्रयोजनमस्ति ॥ ११४ ॥

### भावबोधिनी

सपादसप्ताध्यायीस्थ सूत्र की दृष्टि में असिद्ध होना चाहिए । परन्तु यहाँ 'पूर्वत्रासिद्धम्' की प्रवृत्ति नहीं होती है क्योंकि रु को मानकर ही प्रस्तुत सूत्र उ करता है । अतः वैयर्थ्यभिया यही माना जाता है कि रु असिद्ध नहीं होता है । ]

अत् = अकार से परे—इसका क्या फल है ? अग्निरत्र । [ अग्निस् + अत्र, यहाँ रु के बाद के 'उ' नहीं होता है क्योंकि अ से परे नहीं है । ] तपरकरण = अत् के ग्रहण का क्या फल है ? वृक्षा अत्र । [ वृक्ष + जस् = अस्, पूर्वसवर्ण-दीर्घ—वृक्षास् + अत्र रुत्व के बाद उत्व नहीं होता है क्योंकि ह्रस्व से परे नहीं है । "भो-भगो०" से य् और "लोपः शाकल्यस्य" से य् लोप होता है । ] उकार अनुबन्ध-विशिष्ट रु के रेफ का ही उ—इसका क्या फल है ? स्वरत्र । प्रातरत्र । ] स्वर् + अत्र, प्रातर् + अत्र । इसमें रु का रेफ नहीं है । अतः 'उ' नहीं होता है । ]

अत् परे रहते ही—वृक्ष इह । [ यहाँ उ न होकर य् और लोप होता है । ] जो बाद वाला है वह भी तपर होने से ह्रस्व लिया जाता है अतः यहाँ नहीं होता है—वृक्ष आश्रितः । अप्लुत से परे—इसका क्या फल है ? सुस्रोता[3] अत्र अन्वसि । [ यहाँ "दूराद्धूते च" सूत्र से प्लुत होने के कारण उत्व नहीं होता है । ] अप्लुत परे हो—इसका क्या फल है ? तिष्ठतु पय आ[3] श्विन् । यहाँ प्लुत के असिद्ध हो जाने से उत्व प्राप्त होता है, इसलिए कहा गया—अप्लुत अ से परे अप्लुत अ रहने पर ही उत्व होता है । [ वास्तव में "अप्लुतादप्लुते' के ग्रहण का विशेष प्रयोजन नहीं है । 'ह्रस्व अ से परे ह्रस्व अ रहने पर' इतने से ही निर्वाह हो जाता है । द्र० पदमञ्जरी ] ॥ ११३ ॥

हश् ( प्रत्याहार का कोई वर्ण ) परे रहते ह्रस्व अकार से उत्तरवर्त्ती 'रु' का 'उ' हो जाता है । उदा०—पुरुषो याति । पुरुषो हसति । पुरुषो ददाति । [ पुरुष + सु + याति, सु का रुत्व करने पर प्रस्तुत सूत्र से रु का उ, गुण करने पर 'पुरुषो' बनता है । ] ॥ ११४ ॥

## २५५५. प्रकृत्याऽन्तःपादमव्यपरे ॥ ११५ ॥ ( ३५१८ )

**एङोऽति** ( ६.१.१०९ ) इत्येव। 'एङः' इति यत्पञ्चम्यन्तमनुवर्त्तते तदर्थादिह प्रथमान्तं भवति। **प्रकृतिरिति स्वभावः कारणं वाऽभिधीयते। अन्तरित्यव्ययमधिकरणभूतं मध्यमाचष्टे। ❀ पादशब्देन च ऋक्पादस्यैव ग्रहणमिष्यते, न तु श्लोकपादस्य ❀। अवकारयकारपरेऽति परत एङ् प्रकृत्या भवति। स्वभावेनावतिष्ठते कारणात्मना वा भवति न विकारमापद्यते। तौ चेन्निमित्तकार्यिणावन्तःपादम् = ऋक्पादमध्ये भवतः।**

### न्यासः

**प्रकृत्याऽन्तःपादमव्यपरे ॥ प्रकृत्येति।** करणे तृतीया। **अन्तःपादमिति।** सप्तम्यन्तमेतत्। विभक्त्यर्थेऽव्ययीभावं विधाय ततः सप्तमी, तस्याः 'तृतीयासप्तम्योर्बहुलम्' इत्यम्भावः कृतः। **एङ इत्यादि।** पञ्चम्यन्तस्यैङः प्रकृत्या भवतीत्यनेन सम्बन्धो नोपपद्यते। तस्मादिहार्थादेङ्ग्रहणं प्रथमान्तमुपजायते। **प्रकृतिरित्यादिना** प्रकृतिशब्दस्यार्थमाचष्टे। प्रकृतिशब्दो हि लोके स्वभावे प्रयुज्यते, यथा—दुस्त्यजा प्रकृतिरिति, कारणेऽपि यथा—दध्नः क्षीरं प्रकृतिरिति, तदिहापि स एवार्थस्तस्य विज्ञायते। अन्तरित्यव्ययमधिकरणभूतमिति। अत एवान्तःपादमित्यव्ययीभावो भवति। **पादशब्देनेत्यादि।** कथं पुनरृक्पादस्यैव ग्रहणं लभ्यते, यावता पादशब्दः सामान्यवाची ? एवं मन्यते—'वा छन्दसि' इत्यतः छन्दोग्रहणमिह मण्डूकप्लुतिन्यायेनानुवर्त्तते, तेन ऋक्पादस्यैव ग्रहणं विज्ञायते। अथ 'सर्वत्र विभाषा गोः' इत्यतः सूत्रात् प्राक्छन्दस्येव कार्यं विज्ञायते। एवं हि तत्र सर्वत्रग्रहणमर्थवद् भवति यदि च्छन्दसि पूर्वं विधानं भवति। एवमवयवानामर्थमाख्याय **अवकारयकार** इत्यादिना समुदायस्यार्थमाचष्टे। अविद्यमानौ वकारयकारौ यस्य स तथोक्तः। **स्वभावेनेत्यादि।** यदा प्रकृतिशब्दः स्वभावे वर्त्तमानो गृह्यते, तदायमर्थः—एङ् स्वभावेन भवति। स्वभावपरित्यागेन संहिताकार्यं नोपपद्यत इति। यदा तु कारणे वर्त्तमानस्य प्रकृतिशब्दस्य परिग्रहस्तदायमर्थः—एङ् कारणात्मना भवतीति। कारणं परपूर्वत्वादेः कार्यस्यैङ्, तस्य य आत्मा स्वरूपं तेनैवात्मनैङ् भवतीत्येतदुक्तं भवति—प्राक् संहिताकार्याद् यदेङो रूपं तेनैव

### पदमञ्जरी

**प्रकृत्यान्तः पादमव्यपरे ॥ अतीत्येवेति।** न तु इशीति। अत्र हेतुः पूर्वमेवोक्तः। **एङ इति यत् पञ्चम्यन्तमित्यादि।** 'एङः' इति तावद् व्यवहितमप्यनुवर्तते, न त्वनन्तरमपि रोरिति, अत्र च व्याख्यानमेव शरणम्; तेनाव्यपरे हशि परतो रु प्रकृत्या भवतीत्यर्थो न भवति। **तदर्थादिति।** न हि पञ्चम्यन्तस्य 'प्रकृत्या' इत्यनेन सम्बन्धः सम्भवति। **प्रकृतिरित्यादि।** उभयत्रापि प्रकृतिशब्दो दृष्टः—दुस्त्यजा प्रकृतिः, दध्नः क्षीरं प्रकृतिरिति। **अन्तरित्यव्ययमित्यादि।** तेन मध्यवाचिनान्तः—शब्देनोपजनिते व्यतिरेके पादशब्दात्षष्ठी, तदन्तेन सहाव्ययीभावः। **ऋक्पादस्यैव ग्रहणमिष्यत इति।** इष्टिरेवैषा।

### भावबोधिनी

'एङः' 'अति' इनकी अनुवृत्ति होती है। 'एङः' यह जो पञ्चम्यन्त यहाँ अनुवृत्त होता है वह अर्थ ( के सामञ्जस्य ) के कारण प्रथमान्त हो जाता है। प्रकृति-इससे स्वभाव अथवा कारण कहा जाता है। अन्तः—यह अव्यय अधिकरणभूत मध्य को कहता है। पाद—शब्द से ऋक्-पाद का ही ग्रहण होता है श्लोक के पाद का नहीं। अवकार और अयकार [ वकार जिसमें नहीं है, यकार जिसमें नहीं है ऐसे ] अत् के परे रहते एङ् प्रकृति रूप से रहता है। स्वभाव में ही रहता है, कारणरूप में ही रहता है, किसी विकार ( परिवर्तन ) को नहीं प्राप्त करता है। यदि वे निमित्त और कार्यी ( अवकार-यकारपरक अकार तथा एङ् ) अन्तःपादम् = ऋक् के पाद के मध्य में हों तो। उदा०—ते अग्रे अश्वमायुञ्जन्। [ ते + अग्रे + अश्वम् यहाँ पूर्वरूप और अय् आदेश नहीं होते हैं। ] ते अस्मिन् जवमादधुः। [ ते + अस्मिन्, पूर्वरूप और अयादेश नहीं होता है। ] उपप्रयन्तो अध्वरम्। [ पूर्वरूप और अवादेश नहीं होता है। ]

**'ते अग्रे अश्वमायुञ्जन्'** ( वाज० सं० ९.७ )। **'ते अस्मिन् जवमादधुः'** ( वाज० सं० ९.७ )। **'उपप्रयन्तो अध्वरम्'** ( ऋ० १.७४.१ )। **'शिरो अपश्यम्'** ( ऋ० १.१६३.६ )। **'सुजाते अश्वसूनृते'** ( ऋ० ५.७९.१ )। **'अध्वर्यो अद्रिभिः सुतम्'** ( ऋ० ९.५१.१ )।

अन्तःपादमिति किम्? **'कया मती कुत एतास एतेऽर्चयन्ति'** ( ऋ० १.१६५.१ )। **अव्यपर इति किम्?** **'तेऽवदन्'** ( ऋ० १०.१०९.१ )। [1]**'तेजोऽयस्मयम्'** ( वाज० स० १२.६३ )। **एङिति किम्?** **'अन्वग्निरुषसामग्रमख्यत्'** ( अथर्व० ७.८२.४ )।

**न्यासः**

तदवतिष्ठत इति। अनन्तरोक्तमेवार्थद्वयं स्पष्टीकर्त्तुमाह—**न विकारमापद्यत इति**। एवं हि स्वभावेन भवति, यदि स्वभावादन्यथालक्षणा विकारावस्था नोत्पद्येत। तदेवं कारणात्मनापि भवति, यदि विकारभावं नोत्पद्यते। यदि कार्यात्मना न विपरिणमतीत्यर्थः। **नो चेन्निमित्तकार्यिणाविति**। निमित्तं तपरत्वविशिष्टोऽकारः। तत्र हि परतः प्रकृतिभावो विधीयते। कार्यी त्वेङ्, तस्य हि कार्यं प्रकृतिभावोऽस्ति। ते अग्रे **अश्वमायुञ्जन्निति**। अस्य ऋक्पादस्य मध्ये य एङ् एकारस्तेशब्देऽग्रेशब्दे च तस्य तदनन्तरे प्रकृतिभावाद् 'एङः पदान्तादति' इति पूर्वरूपं न भवति, अयादेशश्च। **उपप्रयन्तो अध्वरमिति**। अत्रापि प्रयन्त इति शब्दौकारस्यैङोऽध्वरशब्दस्यात्यनन्तरे प्रकृतिभावात् पूर्वरूपं न भवति, अवादेशश्च। एवं **सुजाते अश्व** इत्यादावपि प्रकृतिभावाद् पूर्वरूपादिकार्यस्याभावो वेदितव्यः।

**एतेऽर्चयन्तीति**। अत्रैतेशब्दे य एङ् एकारः स पदान्ते वर्त्तते। तदनन्तरस्त्वकारः पादादौ, न पादमध्ये। **तेऽवदन्निति**। अत्र तेशब्दे य एङ् तस्य प्रकृतिभावो न भवति; तदनन्तरस्यातो वकारपरत्वात्। **अवदन्निति**। वदतेर्ल्लङि प्रथमपुरुषबहुवचनान्तम्। [1]**तेऽयजन्निति**। अत्रापि तेशब्दे य एङ् तस्य प्रकृतिभावो न भवति। तदनन्तरस्यातो यकारपरत्वात्। **अन्वग्नीत्यादि**। सर्वमत्रास्ति, न त्वनुशब्द उकार एङ् भवति, नास्य प्रकृतिभावः।

**पदमञ्जरी**

अन्ये तु 'वा छन्दसि' इत्यतो मण्डूकप्लुत्या 'छन्दसि' इत्यनुवर्त्तयन्ति। एवमवयवार्थं दर्शयित्वा समुदायार्थं दर्शयति—**अवकारयकारपर इत्यादिना**। **स्वभावेनावतिष्ठत इति**। यदा प्रकृतिशब्दः स्वभावे वर्त्तते तदायमर्थः—स्वभावपरित्यागेन न संहिताकार्यमापद्यत इत्यर्थः। यदा तु कारणे वर्त्तते तदायमर्थः—एङ्कारणात्मना भवतीति। कारणं परपूर्वत्वादेः कार्यस्यैङ्, तस्यात्मा=स्वरूपम्, तेनैव भवति। प्राक संहिताकार्यादेङो यद्रूपं तेनैवावतिष्ठत इत्यर्थः। अनन्तरोक्तमेवार्थद्वयं विस्पष्टीकरोति—**न विकारमापद्यत इति**। एवं हि स्वभावेन भवति, यदि स्वभावादन्यथालक्षणां विकारावस्थां न प्राप्नोति; तथा एवङ्कारणात्मना भवति, यदि विकाररूपं नापद्यते, यदि कार्यात्मना न विपरिणमतीत्यर्थः। **तौ चेदिति**। निमित्तम्=अकारः, कार्यम्=एङ्। उदाहरणेषु 'एङः पदान्तादति' इति पूर्वत्वस्यायवादेश्च यथायोगमभावः।

**एतेऽर्चयन्तीति**। अत्रैतत्पदान्ते वर्त्तते, अर्चयन्तीत्यकारश्च परस्य पादस्यादौ।

**भावबोधिनी**

सुजाते अश्वसूनृते। [ पूर्वरूप और अय् आदेश नहीं होता है। ] अध्वर्यो ओद्रिभिः सुतम्। [ पूर्वरूप और अव् आदेश नहीं होता है। ]

पाद के मध्य में—इसका क्या फल है? कया मती कुत एतास एतेऽर्चयन्ति। [ एते+अर्चयन्ति यहाँ अकार **पाद** के आदि मे है मध्य में नहीं, प्रकृतिभाव नहीं होता है। ] वकारपरक और यकारपरक अकार न होने पर—

---

१-१. न्यासकारस्तु 'तेऽयजन्' इति पाठं स्वीकरोति।

**केचिदिदं सूत्रम् 'नान्तःपादमव्यपरे' इति पठन्ति, ते संहितायामिह यदुच्यते तस्य सर्वस्य प्रतिषेधं वर्णयन्ति ॥**

## २५५६. अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ११६ ॥ ( ३५१९ )

**अव्यात्, अवद्यात्, अवक्रमुः, अव्रत, अयम्, अवन्तु, अवस्यु—इत्येतेषु यकारवकारपरेऽप्यति परतोऽन्तःपादमेङ् प्रकृत्या भवति। 'अग्निः प्रथमो वसुभिर्नो अव्यात्' ( तै० सं० २.१.११.२ )। 'मित्रमहो**

**न्यासः**

**केचिदित्यादि**। यदि तर्हि 'नान्तःपादमव्यपरे' इति सूत्रं पठन्ति, एवं सति परपूर्वस्यैव प्रतिषेधः कृतः स्यात्, नायवोः; तथा हि—परपूर्वत्वमेङोऽनन्तरविहितम् ? इत्यत आह—**ते संहितायामित्यादि**। यदि परपूर्वत्वं संहिताकार्यं विशेषणमपेक्ष्यायं प्रतिषेधः क्रियते, तदायं दोषः स्यात्। यदा तु संहिताधिकारविहितं कार्यमात्रमपेक्ष्य प्रतिषेधो विधीयते, तदा सर्वस्यैव संहिताधिकारविहितस्य कार्यस्य प्रतिषेधो युक्त इति तेषां भावः ॥ ११५ ॥

**अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ नो अव्यादिति**। अस्मदो द्वितीयाबहुवचनान्तस्य' 'बहुवचनस्य वस्नसौ' इति नसि रुत्वे 'अतो रोरप्लुतादप्लुते' इत्युत्वे 'आद् गुणः' इति गुणे कृते 'नो' इति भवति। 'अव रक्षणे' इत्यस्मादाशिषि लिङि यासुटि तिपि 'इतश्च' इतीकारलोपे 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपे च कृते **अव्यादिति** भवति। **अवद्यादिति**। अवद्यशब्दोऽयं पञ्चम्येकवचनान्तः। **अवक्रमुरिति**।

**पदमञ्जरी**

**केचिदिति**। यदि 'नान्तः पादम्' इति पठन्ति, एवं सति पूर्वत्वस्यैवानन्तरस्य प्रतिषेधः प्राप्नोति, नायवोर्व्यवहितयोः ? इत्यत आह—**संहितायामिति**। 'संहितायाम्' इत्येतावदेवात्रापेक्ष्यते, न तु पूर्वरूपत्वम्; तेनैङः संहिताधिकारे यदुक्तं तन्न भवतीत्यर्थः। तेनैतदपि न चोदनीयम्—अनारब्धेऽस्मिन् प्रतिषेधेऽयवोः प्राप्तिर्नास्ति, पूर्वत्वेन बाधितत्वात्, अनेन तु प्रतिषेधेन पूर्वत्वे बाधिते तयोरुद्भवः स्यात्, तस्यां दशायामस्य व्यापारो नास्ति, आत्माश्रयदोषप्रसङ्गादिति। कथमेतच्चोद्यं परिहृतम् ? यदि पूर्वत्वस्यैवायं प्रतिषेधः स्यात्ततस्तदेवापेक्ष्य प्रतिषेधयेत्, यतस्तु खलु संहितायामित्यपेक्ष्य सामान्येन प्रतिषेधति तस्यैतत्प्रयोजनम्—स्वप्रवृत्त्युत्तरकालमुद्भवतोरयवोरपि प्रतिषेधो यथा स्यादिति। अत्र च 'पदान्ताद्' इत्यनुवर्त्यम्, अन्यथा 'अग्नेरहं सुहवस्य प्रणीतौ' 'वायोरिव सूनृतानामुदर्कः' ( ऋ० १.११३.१८ ) इत्यादौ 'ङसिङसोश्च' इति यत्पूर्वरूपम्, तस्यापि प्रकृतिभावप्रतिषेधौ प्राप्नुतः ॥ ११५ ॥

**अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च**। अव्यादीनामनुकरणत्वात्समासो विभक्तिश्च। **अव्यादिति**। अवेराशिषि लिङ्। **अवद्यादिति**। पञ्चम्येकवचनान्तम्। **अवक्रमुरिति**। अवपूर्वस्य क्रमेर्लिट्युसि 'द्विर्वचनप्रकरणे छन्दसि वा वक्तव्यम्' ( वा० ६.५६ ) इति द्विर्वचनाभावे रूपम्। केचित्तु सूत्रे **अवचक्रमुरिति** कृतद्विर्वचनं

**भावबोधिनी**

इसका क्या फल है ? तेऽवदन्। तेऽयस्मन्। [ यहाँ वकार और यकार अकार के बाद होने से प्रकृतिभाव नहीं होता है। ] एङ् का प्रकृतिभाव—इसका क्या फल है ? अन्वग्निरुषसामग्रमख्यत्। [ अनु + अग्निम् में एङ् नहीं है। अतः प्रकृतिभाव न होकर यण् होता है। ]

कुछ लोग इस सूत्र को 'नान्तःपादमव्यपरे' ऐसा पढ़ते हैं वे लोग ऐसा कहते हैं—संहिता में यहाँ जो भी कहा जाता है उस सबका प्रतिषेध होता है ॥ ११५ ॥

'अव्यात्, अवद्यात्, अवक्रमुः, अव्रत, अयम्, अवन्तु, अवस्यु—इनमें यकारपरक और वकारपरक अ रहने पर भी पाद के मध्य में एङ् प्रकृतिरूप से रहता है। उदा०—अग्निः प्रथमो वसुभिर्नो अव्यात् [ नो + अव्यात् ]।

**अवद्यात्'** ( ऋ० ४.४.१५ )। **'मा शिवासो अवक्रमुः'** ( ऋ० ७.३२.२७ )। **ते नो अव्रताः। शतधारो अयं मणिः। 'ते नो अवन्तु पितरः'** ( ऋ० १०.१५.१ )। **'कुशिकासो अवस्यवः'** ( ऋ० ३.४२.९ ) ॥

२९९७. यजुष्युरः ॥ ११७ ॥ ( ३५२० )

**उरःशब्द एङन्तो यजुषि विषयेऽति प्रकृत्या भवति। उरो अन्तरिक्षम्** ( **वाज० सं० ४.७** )।

**अपरे यजुष्युरो इति सूत्रं पठन्ति, उकारान्तमुरुशब्दं सम्बुद्धयन्तमधीयते। त इदमुदाहरन्ति—उरो अन्तरिक्षं सजूरिति।**

**यजुषि पादानामभावादनन्तःपादार्थं वचनम् ॥**

**न्यासः**

अवपूर्वात् क्रमेर्लिटचुसि रूपमेतत्। अन्ये तु लुङि वर्णयन्ति—'बहुलं छन्दसि' इति च्लेः श्लुः, 'श्लौः' इति द्विर्वचनम्, जुस्भावश्छान्दसः। **अवन्त्विति।** अवतेर्लोट्, झेरन्तादेशः, 'एरुः' इत्युत्वम्। **अवस्यव इति।** अवतेः 'सर्वधातुभ्योऽसुन्' इति असुन्—अवस् इति, ततः 'सुप आत्मनः क्यच्' इति क्यच्, तदन्तात् 'क्याच्छन्दसि' इत्युप्रत्ययः, ततो जस्, 'जसि च' इति गुणः—ओकारः, 'एचोऽयवयावः' इत्यावादेशः ॥ ११६ ॥

**यजुष्युरः ॥ उरो अन्तरिक्षमिति।** उरःशब्दस्योत्वम्, 'आद् गुणः' इति गुणः।

**ओकारान्तमुरोशब्दं सम्बुद्धयन्तमधीयत इति।** उरुशब्दस्य 'सम्बुद्धौ च' इति गुणे कृत 'उरो' इति भवति ॥ ११७ ॥

**पदमञ्जरी**

पठन्ति, तेषामुदाहरणं मृग्यम्; बह्वृचस्तावद्—अवक्रमुरित्यधीयते। **अव्रतेति।** **वृङ्वृञोः** 'मन्त्रे घस' इत्यादिना च्लेर्लुक्, 'आत्मनेपदेष्वनतः' इति अदादेशः। **अयमिति।** इदम्-शब्दात् सुः, 'इदोऽय् पुंसि'। अवतेर्लोट्, **अवन्तु,** तस्मादेवासुनन्तात् क्यच्, 'क्याच्छन्दसि' इत्युप्रत्ययः—**अवस्युः।** 'तेनोवन्तु पितरो हवेषु' ( ऋ० १०.१५.१ ) इति। बह्वृचाः पूर्वरूपमेवाधीयते। 'अधिब्रुवन्तु तेऽवन्त्वस्मान्' ( ऋ० १०.१५.५ ) इति ॥ ११६ ॥ ११७ ॥

**भावबोधिनी**

मित्रमहो + अवद्यात्। मा शिवासो + अवक्रमुः। ते नो + अव्रताः शतधारो + अयं मणिः ते नो + अवन्तु। कुशिकासो + अवस्यवः। [ इनमें ओ का अवादेश और पूर्वरूप प्राप्त है, बाध करके प्रकृति-भाव होता है। परवर्ती शब्दरूप क्रमशः ( १ ) अव्यात्—अव् धातु आशीर्लिङ् प्रथम पुरुष एकवचन, ( २ ) अवद्यात्—अवद्य का पञ्चमी एकवचनान्त, ( ३ ) अवक्रमुः—अवपूर्वक क्रमु धातु लिट् = उस् प्रथमपुरुष बहुवचन का रूप, ( ४ ) अव्रत—वृङ् या वृञ् के लुङ् प्रथम पुरुष बहुवचन का रूप, ( ५ ) अयम्—इदम् शब्द पुंल्लिङ्ग प्रथमा एकवचन का रूप, ( ६ ) अवन्तु—अव धातु लोट् प्रथम पुरुष बहुवचन, ( ७ ) अवस्यवः—अव् धातु से असुन् = अस् प्रत्यय—अवस् बनाकर क्यच् = य, 'क्याच्छन्दसि' सूत्र से 'उ' प्रत्यय अवस्यु—प्रथमा बहुवचन में जस् = अस् परे रहते गुण, अव् आदेश—अवस्यवः। ] ॥ ११६ ॥

उरः शब्द जो एङन्त है वह यजुर्वेद में अत् परे रहते प्रकृतिभाव से होता है। उदा०—उरो अन्तरिक्षम्।

दूसरे विद्वान् 'यजुष्युरो' ऐसा सूत्र पढ़ते हैं, उकारान्त उरु शब्द सम्बुद्धयन्त ( सम्बोधन—एकवचनान्त ) पढ़ते हैं। वे यह उदाहरण देते हैं—उरो अन्तरिक्षं सजूरिति। [ काशिका की पूर्व व्याख्या के अनुसार उरस् के स् का उत्व और 'आद्गुणः' से गुण होकर 'उरो' बनता है। द्वितीय व्याख्या के अनुसार 'उरु' का सम्बोधन एकवचन में 'सम्बुद्धौ च' सूत्र से गुण होकर 'उरो' बना है। ]

यजुर्वेद में पाद न होने के कारण अनन्तः पादार्थ ( पादमध्य से भिन्न स्थालों के लिए ) यह सूत्र है ॥ ११७ ॥

## २५५८. आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे ॥ ११८ ॥ ( ३५२१ )

**'यजुषि' इत्येव । आपो, जुषाणो, वृष्णो, वर्षिष्ठे—इत्येते शब्दा अम्बे, अम्बाले, इत्येतौ च यावम्बिके-शब्दात्पूर्वौ यजुषि पठितौ ते अति परतः प्रकृत्या भवन्ति । 'आपो अस्मान्मातरः शुन्धयन्तु' (वाज० सं० ४.२) । 'जुषाणो अप्तुराज्यस्य' ( वाज० सं० ५.३५ ) । 'वृष्णो अंशुभ्यां गभस्तिपूतः' ( वाज० सं० ७.१ ) । 'वर्षिष्ठे अधिनाके' ( तै० सं० १.१ ८.१ ) । 'अम्बे अम्बाल्यम्बिके' ( तै० सं० ७ ४.१९.१ ) –यजुषीदमीदृशमेव पठ्यते । अस्मादेव निपातनाद् 'अम्बार्थनद्योर्ह्रस्वः' ( ७.४.१०७ ) इति ह्रस्वत्वं न भवति ॥**

## २५५९. अङ्ग इत्यादौ च ॥ ११९ ॥ ( ३५२२ )

**अङ्गशब्दे य एङ् तदादौ चाकारे यः पूर्वः स यजुषि विषयेऽति प्रकृत्या भवति । ऐन्द्रः प्राणो अङ्गे**

**न्यासः**

**आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे ॥ आपो**—इत्येवमादीनि सर्वाण्येतान्यनुकरणान्य-विभक्तिकानि; 'सुपां सुलुक्' इत्यादिना तेभ्य उत्पन्नाया विभक्तेर्लुप्तत्वात् । अत्रापो इति प्रथमाबहुवचनान्तस्यनु-करणम् । **जुषाणो इति** । प्रथमैकवचनान्तस्य । **वृष्णो इति** । षष्ठ्येकवचनान्तस्य । **वर्षिष्ठे इति** । सप्तम्येक-वचनान्तस्य । **अम्बे अम्बाले इति** । द्वितीयाद्विवचनान्तस्य । **अम्बिकेपूर्वे इति** । एतत्तु प्रथमाद्विवचन-मनुकरणमेव अम्बे अम्बाले इत्येतयोर्विशेषणम् । अम्बिकेशब्दात् पूर्वे अम्बिकेपूर्वे, अस्मादेव निपातनात् समासः । ननु च 'अम्बे' इति सम्बुद्धचन्तस्यानुकरणम्, ततश्च 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वेनैत्त्वापवादेन भवितव्यम्, तत् कथमम्बे इत्यत्रैत्त्वम् ? इत्यत आह—**अस्मादेवेत्यादि** । अम्बाले, अम्बिके–इत्येतयोस्तु युक्तमेवैत्त्वम् । वक्ष्यति हि ह्रस्वविधाने - 'अम्बार्थं द्वयक्षरं यदि' इति ॥ ११८ ॥

**अङ्ग इत्यादौ च ॥ अङ्ग इत्यादौ चेति** इतिकरणेनानन्तरोक्तोऽङ्गशब्दः प्रत्यवमृश्यते । **तदादौ चाकार**

**पदमञ्जरी**

**आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे ॥ आपो** इत्यादीनि पृथक् पदानि अनुकरणानि, विभक्तिस्त्वनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वान्न भवति । 'सुपां सुलुक्' इति वा विभक्तेर्लुग् भवति, **अम्बिकेपूर्व** इत्येतदप्यनुकरणमेव । तत्र प्रथमं जसन्तम्, द्वितीयं स्वन्तम्, तृतीयं शसन्तम्, चतुर्थं ङ्यन्तम्, इतरे सम्बुद्धचन्ते । **अम्बिकेशब्दात्पूर्वाविति** । अस्मादेव निपातनात्पञ्चमीसमासः । **अस्मादेव निपातनादिति** । अम्बेत्येतद्विषयमेतत् । इतरयोस्तु 'अम्बार्थं द्व्यक्षरम्' इति वक्ष्यमाणत्वान्नैव **ह्रस्वप्रसङ्गः** ॥ ११८ ॥

**अङ्ग इत्यादौ च ॥ अङ्गशब्दे य एङिति** । 'स प्रकृत्या भवति' इति वक्ष्यमाणेन सम्बन्धः । **तदादौ चाकारे**

**भावबोधिनी**

'यजुषि' ( यजुर्वेद में ) इसकी अनुवृत्ति होती है । आपो, जुषाणो, वृष्णो, वर्षिष्ठे—ये चार शब्द और अम्बे तथा अम्बाले शब्द जो अम्बिके के पूर्व में यजुः में पठित हैं, वे अत् परे रहते प्रकृतिभाव प्राप्त करते हैं । उदा०— आपो + अस्मान् मातरः शुन्धयन्तु । [ अप् शब्द प्रथमा बहुवचन ] जुषाणो + अप्तुराज्यस्य । [ जुषाण का प्रथमा एकवचन ] वृष्णो + अंशुभ्यां गभस्तिभिः । [ वृष्णो—इसे कुछ शसन्त और न्यासकार षष्ठ्येकवचनान्त मानते हैं । परन्तु दोनों के अनुसार 'स्' का रुत्व और लोप आदि करने के बाद ही एङन्त हो सकता है । अतः इसे भी सम्बोधन एकवचनान्त ही मानना उचित है । तभी संहिता-कार्य की प्रसक्ति में प्रकृतिभाव उचित है । ] वर्षिष्ठे + अधिनाके । [ यह सप्तम्येकवचनान्त है । ] अम्बे + अम्बिके + अम्बाले—ऐसा ही पाठ यजुर्वेद में है । इसी निपातन के कारण 'अम्बार्थनद्योर्ह्रस्वः' सूत्र से 'अम्बे' का ह्रस्व भी नहीं होता है ॥ ११८ ॥

अङ्ग शब्द परे जो एङ् और उस अङ्ग शब्द के आदि में जो अकार उनके परे रहते जो पूर्ववर्ती है वह यजुर्वेद के

**अङ्गे अदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यत्' ( वाज० सं० ६.२० )। ऐन्द्रः प्राणो अङ्गे अङ्गे अशोचिषम् ॥**

## २५६०. अनुदात्ते च कुधपरे ॥ १२० ॥ ( ३५२३ )

**'यजुषि' इत्येव। अनुदात्ते चाति कवर्गधकारपरे परतो यजुषि विषये एङ् प्रकृत्या भवति। अयं सो अग्निः' ( वाज० सं० ५.३७ )। अयं सो अध्वरः।**

**अनुदात्ते इति किम्? अधोऽग्रे। अग्रशब्द आद्युदात्तो निपात्यते। कुधपरे इति किम्? 'सोऽयमग्निः**

**न्यासः**

**इति।** समानाधिकरणे सप्तम्यौ। तच्छब्देनातिक्रान्तप्रत्यवमर्शिनेतिकरणस्यार्थमाचष्टे—**तदादाविति।** अङ्गशब्दादावित्यर्थः। **यः पूर्व इति।** 'एङ्' इति सम्बध्यते। चकारोऽङ्गशब्दस्यादौ योऽकारस्तत्रापि परतः पूर्वस्यैङः प्रकृतिभावो यथा स्यादिति समुच्चयार्थः क्रियते। तत्र ह्यसत्यङ्गशब्दाकारे परतोऽङ्गशब्दस्य य एङ् तस्यैव प्रकृतिभावः स्यात्। यस्त्वङ्गशब्दे परतोऽनङ्गशब्दस्यैङ् तत्र न स्यात्। **प्राणो अङ्ग इत्यादि।** अत्र 'प्राण'-शब्दे य एङ अङ्गशब्दादावकारे प्रकृत्या भवति। **अङ्गे अङ्गे अदीध्यदिति।** अत्राङ्गशब्दे य एङ् तस्याङ्गशब्दादावकारेऽदीध्यच्छब्दादौ च प्रकृतिभावो भवति ॥ ११९ ॥

**अनुदात्ते च कुधपरे ॥ कुधपर इति।** अकारविशेषणमेतत्। कुधौ परौ यस्मात् स तथोक्तः। धकारेऽकार उच्चारणार्थः। **अयं सो अग्निरिति।** अग्निशब्दः 'अङ्गेर्निर्नलोपश्च' इति निप्रत्ययान्तो व्युत्पादित इति प्रत्ययस्वरेणान्तोदात्तः, शेषोऽनुदात्त इत्यकारस्यानुदात्तत्वम्। **अयं सो अध्वर इति।** अध्वरशब्दोऽपि प्रातिपदिकस्वरेणान्तोदात्तः, तदादिरप्यकारोऽनुदात्त एव। **आद्युदात्तो निपात्यत इति।** 'ऋजेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः' इत्यनेन। **सोऽयमिति।** अयंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः,

**पदमञ्जरी**

**यः पूर्व इति।** 'एङ्' इत्यपेक्ष्यते, पूर्ववच्च सम्बन्धः। तच्छब्देनातिक्रान्तप्रत्यवमर्शिनेतिशब्दस्यार्थमाचष्टे, तस्याङ्गशब्दस्यादिस्तदादिः। चकारः किमर्थः, असति चकारेऽङ्गशब्दस्यैवैङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः स्यात्, ततश्चाङ्गेऽङ्गे इत्यत्रैव स्यात्। सति तु तस्मिन्नङ्गशब्दस्य एवैङ् यत्र क्वचिदति परतः प्रकृत्या भवति, तदादौ चाति परतो यः कश्चिदेङ् प्रकृत्या भवतीत्ययमर्थो भवति। तेन **अङ्गे अदीध्यत्, प्राणो अङ्गे**—इत्युभयत्रापि भवति ॥ ११९ ॥

**अनुदात्ते च कुधपरे ॥ कवर्गधकारपरे इति।** कवर्गधकारौ परौ यस्मात्स तथोक्तः। धकारेऽकार उच्चारणार्थः। अग्निशब्दः 'अङ्गेर्निर्नलोश्च' ( द० उ० १.२० ) इति निप्रत्ययान्तोऽन्त्वोऽदात्तः। अध्वरशब्दः प्रातिपदिकस्वरेणान्तोदात्तः।

**भावबोधिनी**

विषय में अत् ( अ ) परे रहते प्रकृतिरूप से होता है। उदा०—ऐन्द्रः प्राणो अङ्गे + अङ्गे + अदीध्यत्। ऐन्द्रः प्राणो + अङ्गे + अङ्गे निदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे अशोचिषम्। [ यहाँ 'प्राणो' शब्द का एङ् ओ अङ्ग परे रहते प्रकृति-भाव से रहता है। अङ्गे + अदीध्यत् यहाँ भी प्रकृतिभाव होता है। और अङ्गे + अङ्गे यहाँ भी होता है। सूत्र में 'च' के कारण अङ्ग शब्द का अकार और अनङ्ग शब्द का अकार = अदीध्यत् दोनों के परे रहते प्रकृति-भाव सिद्ध हो जाता है। ] ॥ ११९ ॥

'यजुषि' इसकी अनुवृत्ति होती है। अनुदात्त अत् ( अकार ) जो कवर्गधकारपरक है, उसके परे रहते यजुर्वेद विषय में एङ् प्रकृतिभाव से रहता है। उदा०—अयं सो + अग्निः। अयं सो + अध्वरः। [ अग्निः में कवर्ग = गकारपरक अकार है और अध्वरः में धकारपरक अकार है अतः 'सो' के एङ् = ओ का प्रकृतिभाव रहता है। ]

**सहस्रियः'** ( वाज० १५.५२ ) ॥

**२५६१. अवपथासि च ॥ १२१ ॥ ( ३५२४ )**

**'यजुषि' इत्येव। 'अनुदात्ते' इति चशब्देनानुकृष्यते। अवपथाः— शब्देऽनुदात्तेऽकारादौ परतो यजुषि विषय एङ् प्रकृत्या भवति। 'स्त्री रुद्रेभ्यो अवपथाः'** ( काठ सं० ३०.६.३२ )। **वपेर्लङि थासि 'तिङ्ङतिङः'** ( ८.१.२८ ) **इति निघातेनानुदात्तत्वम्।**

**अनुदात्त इत्येव— यद्रुद्रेभ्योऽवपथाः। 'निपातैर्यद्यदिह हन्त'** ( ८.१.३० ) **इति निघातः प्रतिषिध्यते ॥**

**२५६२. सर्वत्र विभाषा गोः ॥ १२२ ॥ ( ८७ )**

**सर्वत्र=छन्दसि भाषायां च, अति परतो गोरेङ् प्रकृत्या भवति विभाषा। गोऽग्रम्, गो अग्रम्। छन्दसि—'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वान्'** ( तै० सं० ५.२.९.४ ) ॥

**न्यासः**

तस्यादिरनुदात्तः ॥ १२० ॥

**अवपथासि च ॥ यद्रुद्रेभ्योऽवपथा इति।** अटः स्वरेणाद्युदात्तोऽयमवपथाःशब्दः ॥ १२१ ॥

**सर्वत्र विभाषा गोः** ॥ १२२ ॥

**पदमञ्जरी**

**आद्युदात्तो निपात्यत इति। 'ऋज्रेन्द्राग्र'** ( द० उ० ८.४६ ) इत्यादावुणादिसूत्रे अग्रशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥ १२० ॥ १२१ ॥

**सर्वत्र विभाषा गोः ॥ सर्वत्र च्छन्दसि, भाषायां चेति।** यद्यपि 'छन्दसि' इति न प्रकृतम्, तथापि 'अन्तःपादं यजुषि' इति वचनात् अवक्रमुः, अव्रतावस्युरिति छान्दसानुकरणाच्च छान्दसानि पूर्वसूत्राणीति भावः। **सर्वत्रग्रहणं तु यजुषि, अन्यत्र चेत्यप्युपपन्नम्। पदान्तादित्येव—गोरागतं गोः स्वम्** ॥ १२२ ॥

**भावबोधिनी**

अनुदात्त परे रहते—इसका फल है? अधोऽग्रे। अग्र शब्द [ "ऋज्रेन्द्राग्नि" उणादि १।१८६ सूत्र से ] आद्युदात्त निपातित होता है। [ अतः इसके परे रहते प्रकृतिभाव नहीं होता है। ] कु=कवर्गपरक और धकारपरक अ परे रहते—इसका क्या प्रयोजन है? सोऽयमग्निः सहस्रियः। [ सो+अयम् यहाँ अ के बाद कवर्ग या धकार नहीं है। वास्तव में यहाँ "अव्यादवद्यात्" ८।१।११६ में प्रदर्शित शतधारो+अयं मणिः के समान ही प्रकृतिभाव होना चाहिए। अतः कोई दूसरा प्रत्युदाहरण देना चाहिए था। ] ॥ १२० ॥

'यजुषि' इसकी अनुवृत्ति होती है। 'अनुदात्ते' यह 'च' शब्द से अनुकृष्ट कर लिया जाता है। अवपथाः—यह अनुदात्त अकारादि शब्द के परे रहते यजुर्विषय में एङ् का प्रकृतिभाव होता है। उदा०—त्रीरुद्रेभ्यो+अवपथाः। √वप् धातु से लङ् थास् प्रत्यय में "तिङ्ङतिङः" सूत्र से निघात होने से अनुदात्त है। [ अव् आदेश और पूर्वरूप प्राप्त हैं। प्रकृतिभाव हो जाता है। ]

अनुदात्त रहने पर ही—यद्रुद्रेभ्योऽवपथाः। यहाँ 'निपातैर्यद्यदिहन्त" ( पा० सू० ८।१।३० ) से निघात का प्रतिषेध हो जाता है। [ अतः अट् का स्वर मानकर 'अवपथाः' यहाँ आद्युदात्त है। प्रकृतिभाव न होकर सन्धि हो जाती है। ] ॥ १२१ ॥

सर्वत्र=वेद में और भाषा में, अत्=अ परे रहते गो का एङ् विकल्प से प्रकृतिभाव प्राप्त करता है। उदा०—गो+अग्रम्। [ प्रकृतिभाव पक्ष में—] ( १ ) गो अग्रम्। [ पक्ष में पूर्वरूप होकर—] ( २ ) गोऽग्रम्। [ अग्रिम सूत्र से अवङ् होने पर ( ३ ) गवाग्रम्—ये तीन रूप होते हैं। ] वेद में—अपशवो वा अन्ये गोअश्वेभ्यः, पशवो गोऽश्वाः। [ प्रथम में प्रकृतिभाव दूसरे में पूर्वरूप हुआ है। ] ॥ १२२ ॥

## २५६३. अवङ् स्फोटायनस्य ॥ १२३ ॥ ( ८८ )

'अति' इति निवृत्तम्। 'अचि' इत्येतत्पुनरनुवर्त्तत एव। अचि परतो गोः स्फोटायनस्याचार्यस्य मतेनावङादेशो भवति। गवाग्रम्, गोऽग्रम्। गवाजिनम्, गोऽजिनम्। गवोदनम्, गवौदनम्। गवोष्ट्रम्, गवुष्ट्रम्।

आद्युदात्तश्चायमादेशो निपात्यते। स निपातनस्वरो बहुव्रीहौ प्रकृतिस्वरविधाने भवति—गावो

**न्यासः**

**अवङ् स्फोटायनस्य ॥ अतीति निवृत्तमिति।** यद्यतीत्यनुवर्त्तेत तदा गवौदनादौ न स्यात्, तस्मादतीत्येतदस्वरितत्वाद् निवृत्तम्। हल्यपि तर्हि प्राप्नोति? इत्यत आह—**अचीत्येतत्पुनरनुवर्त्तत इति।** 'इको यणचि' इत्यतः सा पुनस्तस्यानुवृत्तिर्मण्डूकप्लुतिन्यायेन वेदितव्या। न हि 'सम्प्रसारणाच्च' इत्यतः परेण ये योगा अस्माद् योगात् पूर्वं तेषु 'अति' इत्यस्यानुवृत्तिरस्ति। तथा च पूर्वमुक्तम्—"अचिति वायमधिकारः 'सम्प्रसारणाच्च' इति यावत्" इति। **गवाग्रम् गवाजिनमिति।** बहुव्रीहिः, तत्पुरुषो वा। **गवोष्ट्रमिति** द्वन्द्वः। **आद्युदात्तश्चायमित्यादि।** इह गावोऽग्रमस्येति बहुव्रीहौ कृते पूर्वपदप्रकृतिस्वरत्वञ्च प्राप्नोति, अवङादेशश्च, तत्रान्तरङ्गत्वादवङ् भवति, स च भवन् प्रातिपदिकस्वरेणान्तोदात्तस्य गोशब्दस्य स्थान आन्तर्यतोऽन्तोदात्त एव स्यात्। तस्मिन् सति पश्चात् प्रकृतिस्वरे कृतेऽन्तोदात्तत्वं पूर्वपदस्यापद्येत, आद्युदात्तश्चेष्यते, तस्मादाद्युदात्तोऽयमादेशो निपात्यते। यद्येवम्, तत्पुरुषादावपि स एव निपातनस्वरः प्राप्नोति? इत्यत आह—**अन्यत्र त्वित्यादि।** अन्यत्रेति—तत्पुरुषे,

**पदमञ्जरी**

**अवङ् स्फोटायनस्य ॥** स्फोटोऽयनं परायणं यस्य स स्फोटायनः=स्फोटप्रतिपादनपरो वैयाकरणाचार्यः। ये त्वौकारं पठन्ति, ते नडादिष्वश्वादिषु वा पाठं मन्यन्ते। **अतीति निवृत्तमिति।** अन्यथा गवौदनादौ न स्यात्। न चैवं सत्यतिप्रसङ्गः? इत्याह—**अचीत्येतत्त्विति।** सर्वत्र चात्र व्याख्यानमेव शरणम्। यद्यचीत्यनुवर्त्तते कथम् 'इको यणचि' इत्यत्रोक्तम्—"अचीति चाधिकारः 'सम्प्रसारणाच्च' इति यावत् इति? निरन्तरानुवृत्त्यभिप्रायं तदित्यदोषः। **गवाग्रम्, गवाजिनमिति।** बहुव्रीहिः, तत्पुरुषो वा। **गवोष्ट्रमिति।** द्वन्द्वः, **गोरवग्रवचनम्** गोरग्वक्तव्यः, तत्रापि अवादेशेन सिद्धयत्येव। न 'च एङः पदान्तात्' इति पूर्वत्वप्रसङ्गः; अगागमस्य तद्ग्रहणेन ग्रहणादोकारस्यापदान्तत्वात्। किं प्रयोजनम्? लाघवं तावद्भवति, स्वरे च न दोषः।

कथम् 'आगमा अनुदात्ताः'? तत्र गवाग्रादौ बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणागमानुदात्तत्वं सम्भवति, अवङादेशे त्वान्तर्यतोऽन्तोदात्तस्यान्तोदात्तोऽवङादेशः स्यात्। ननु चास्यैकाचः सतो व्यपदेशिवद्भावेनान्तोदात्तत्व-

**भावबोधिनी**

'अति' इसकी निवृत्ति है, अनुवृत्ति नहीं होती है। परन्तु 'अचि' इसकी फिर से अनुवृत्ति होती ही है। अच् परे रहते 'गो' शब्द का अवङ् आदेश स्फोटायन आचार्य के मत से होता है। [ अतः अन्य आचार्यों के मत से न होने के कारण विकल्प फलित होता है। ] उदा०—गवाग्रम्; गोऽग्रम्। [ गो + अग्रम्, अवङ् आदेश ङित् होने से अन्त्य ओ के स्थान पर होता है—ग् अव + अग्रम्, सवर्णदीर्घ ( १ ) गवाग्रम्। अवङ् न होने पर ( २ ) प्रकृतिभाव विकल्प से—गोअग्रम्। ( ३ ) प्रकृतिभाव न होने पर पूर्वरूप—गोऽग्रम् ] गवाजिनम्, गोऽजिनम्। [ गो + अजिनम्, वैकल्पिक अवङ् ] गवौदनम्, गवोदनम्। [ गो + ओदनम्, अवङ् करने पर वृद्धि, पक्ष में ओ का अव् ] गवोष्ट्रम्। गवुष्ट्रम्। [ गो + उष्ट्रम्, ओ का अवङ् करने पर गुण, पक्ष में ओ का अव् आदेश—गव् उष्ट्रम्। गवाग्रम्, गवाजिनम् में बहुव्रीहि या तत्पुरुष है। गवोदनम्, गवोष्ट्रम् में द्वन्द्व है। ]

यह अवङ् आदेश आद्युदात्त निपातित होता है। यह निपातन स्वर बहुव्रीहि में प्रकृतिस्वर के विधान में होता

**अग्रमस्य गवाग्र इति । अन्यत्र तु समासान्तोदात्तत्वेन बाध्यते ।**

**स्फोटायनग्रहणं पूजार्थम्, 'विभाषा' इत्येव हि वर्त्तते ।**

**व्यवस्थितविभाषेयम् । तेन गवाक्ष इत्यत्र नित्यमवङ् भवति ॥**

**न्यासः**

**द्वन्द्वे च** । गोशब्दस्यायमादेश इति तत्सम्बन्ध्येव शब्दान्तरं निपातनस्वरेण बाध्यते, न समासस्वरः । तस्माद् बहुव्रीहेरन्यत्र तत्पुरुषादौ समासान्तोदात्तत्वेन निपातनस्वरो बाध्यते । **स्फोटायनग्रहणं पूजार्थमिति** । किं पुनः कारणं विकल्पार्थं न भवति ? इत्याह—**विभाषेत्येव हि वर्त्तत इति** । किमर्थं पुनरवङ् विधीयते ? अगेव न विधीयेत, तत्रापि ह्यवादेशेन सिध्यत्येव ? न सिध्यति; 'एङः पदान्तादति' इति पूर्वरूपत्वं प्राप्नोतीति । ननु चाकि विहिते सति तदन्तो न भवति ? आगमस्य तद्ग्रहणेन ग्रहणात् । न ह्योकारस्य प्राक् प्रवृत्ता पदान्तता नास्तीति शक्यं वक्तुम् ॥ १२३ ॥

**पदमञ्जरी**

**मेष्टव्यम्**, तत एवाद्युदात्तत्वमपि भविष्यति, ततः किमाद्युदात्तस्याद्युदात्त आदेशो भविष्यति ? सत्यमेवतत्; न त्विदं लक्षणमस्ति—प्रातिपदिकस्यादिरुदात्तो भवतीति, इदं पुनरस्ति—प्रातिपदिकस्यान्त उदात्तो भवतीति । योऽसौ लक्षणेनान्तोदात्तः, तत्रान्तर्यतोऽन्तोदात्त आदेशः प्राप्नोति । ननु च 'गमेर्डो' ( द० उ० २.११ ) विधीयते ? ततः किम्, प्रत्ययाद्युदात्तत्वे कृते आन्तर्यत आद्युदात्त आदेशो भविष्यति । कथ पुनरयमाद्युदात्तः, यावता एकाच् व्यपदेशिवद्भावेन ? यद्येवम्, तत एवान्तोदात्तोऽपि, तत्रान्तर्यतोन्तोदात्तस्याऽन्तोदात्तोऽवङादेशः प्रसज्येत ? सत्यम्; नन्विदं लक्षणमस्ति—प्रत्ययस्यान्तोदात्तो भवतीति, इदं पुनरस्ति—प्रत्ययस्यादिरुदात्तो भवतीति । योऽसौ लक्षणेनाद्युदात्तस्तत्रान्वर्यत आद्युदात्त आदेशो भविष्यति । स्यादेवं यदि 'आद्यन्तवदेकस्मिन्' इति शास्त्रातिदेशः स्यात् । यदा त्वनेन कार्यमात्रमुदात्तत्वम्, अन्तत्वे असत्येवादित्वे चातिदिश्यते तदौकारस्यैवादित्वव्यपदेशाभावात् कुतस्तदादेशस्याद्युदात्तत्वम् ! ततश्च पर्यायेण त्वनियतदेशमाद्युदात्तत्वं स्यादिति पक्षे दोषप्रसङ्गः । तत्र सूत्रकारेण तावल्लाघवमनादृत्यावङादेशः कृतः । तत्र यथा स्वरे दोषो न भवति, तथा दर्शयति—**आद्युदात्तोऽवङादेशो निपात्यत**[1] **इति** । एकश्रुत्या सूत्रपाठे यदत्र यत्नेनाद्युदात्तोच्चारणं तदन्तोदात्तत्वबाधनार्थं विज्ञायते, **अन्यत्र समासान्तोदात्तत्वेन बाध्यत इति** । एतच्च भाष्ये 'उपदेशिवद्भावो वक्तव्यः' इति वचनेन लभ्यते, अन्यथा परत्वात् पूर्वं समासान्तोदात्तत्वे कृते अवङि अवङ्स्वर एव सतिशिष्टत्वात् स्यात् । उपदेशिवद्भावो तु पूर्वमवङि कृते पश्चात् समास इति सतिशिष्टत्वात् समासस्वर एव भवति । पदान्तादित्येव–गवे, गवोः, गवाम्, गवि ॥१२३॥

**भावबोधिनी**

है—गावः अग्रम् अस्य—गवाग्रः । अन्य समास में समासान्तोदात्त स्वर से प्रकृतिस्वर का बाध कर लिया जाता है ।

स्फोटायन का ग्रहण पूजा ( उनके प्रति सम्मान प्रकट करने ) के लिए है, क्योंकि 'विभाषा' इसकी अनुवृत्ति होती ही है ।

यह व्यवस्थित विभाषा है । इस कारण 'गवाक्षः' इसमें नित्य अवङ् होता है ।

**विमर्श**—गावः अग्रम् अस्य—इस बहुव्रीहि के करने पर पूर्वपद ( गो ) का प्रकृतिस्वर और अवङ् आदेश दोनों प्राप्त होते हैं । इनमें अन्तरङ्ग होने से अवङ् ही होता है । यह आदेश अन्तोदात्त ही होता है क्योंकि गो शब्द प्रातिपदिक स्वर से अन्तोदात्त ही है । यह स्वर करने के बाद प्रकृतिस्वर करने पर पूर्वपद का अन्तोदात्त होने लगेगा, जब कि इष्ट है आद्युदात्त । इस लिए यह अवङ् आदेश आद्युदात्त निपातन किया जाता है ।

बहुव्रीहि के समान तत्पुरुष में भी होने लगेगा इसका समाधान यह है कि अन्य समासों में इस निपातन का बाध करके समास का आन्तोदात्त ही इष्ट है ॥ १२३ ॥

---

१. 'आद्युदात्तश्चायमादेशो निपात्यते' इति काशिकापाठः ।

**२५६४. इन्द्रे च नित्यम्[1] ॥ १२४ ॥ (८९)**

**इन्द्रशब्दस्थेऽचि परतो गोर्नित्यमवङादेशो भवति । गवेन्द्रः । गवेन्द्रयज्ञस्वरः ॥**

**२५६५. प्लुतप्रगृह्या अचि ॥ १२५ ॥ (९०)**

**प्लुताश्च प्रगृह्याश्चाचि प्रकृत्या भवन्ति । देवदत्ता३ अत्र न्वसि । यज्ञदत्ता३ इदमानय । आश्रयादत्र प्लुतः सिद्धः । प्रगृह्याः—अग्नी इति । वायू इति । खट्वे इति । माले इति ।**

**न्यासः**

**इन्द्रे च नित्यम् ॥ इन्द्रशब्दस्थ इति ।** य इन्द्रशब्दे तिष्ठति स इन्द्रशब्दस्थः, स पुनर्य इन्द्रशब्दस्थावयवः स वेदितव्यः । पूर्वेण विकल्पः सिद्ध एव, तत्रारम्भसामर्थ्यादेव नित्ये विधावस्मिंल्लब्धे नित्यग्रहण-मुत्तरार्थम् ॥ १२४ ॥

**प्लुतप्रगृह्या अचि ॥ देवदत्ता३ अत्र न्वसीति ।** 'दूराद्धूते च' इति प्लुतः । ननु च 'पूर्वत्रासिद्धम्' इत्यसिद्धः प्लुतः, तदसतस्तस्य कथं शक्यते प्रकृतिभावो विधातुम् ? इत्यत आह—**आश्रयादित्यादि ।** आश्रयणमाश्रयः । तदेवत् प्रकृतिभावकार्यं विधातुं प्लुतस्य कार्यिण आश्रयणम् । अस्मादेवात्र प्रकृतिभावे कर्त्तव्ये सिद्धः प्लुतः, अन्यथा तस्य कार्यित्वेनाश्रयणमनर्थकं स्यात् । **अग्नी इत्यादि ।** 'ईदूदेद् द्विवचनम्' इत्यादिना अत्र प्रगृह्यसंज्ञा । अथाचीति किमर्थम्, यावताऽचीत्यनुवर्त्तत एव ? इत्यत आह—**अचीत्यनुवर्त्तमान इत्यादि ।** आदेशस्य निमित्तं योऽच् तस्य प्रकृतिभावनिमित्तत्वेन परिग्रहो यथा स्यादित्येवमर्थं पुनरज्ग्रहणम् । आदेशस्त्वत्र यत्राचि प्रकृतिभावो विधीयते तमेवाश्रित्य यः प्राप्नोति स एव विधेयः । कुत एतत् ? प्रत्यासत्तेः । तेनेह न भवति प्रकृतिभावः—

**पदमञ्जरी**

**इन्द्रे च ॥** अत्र यदि 'अचि' इति विशेषणम्, इन्द्रशब्दो विशेष्यम्, तदाऽजादौ इन्द्रशब्द इत्यर्थः स्यात् । ततश्च गवेन्द्रयज्ञ इत्यादौ न स्यात्, अनुत्तरपदत्वात् । यद्यप्यत्रोत्तरपदग्रहणं नास्ति, तथाप्यर्थात्समास एतद्वि-धानम्, न ह्यन्यत्र गोरनन्तर इन्द्रशब्दः सम्भवति । समासे च विधानमर्थादुत्तरपद एव स्यात्—ष्यङः सम्प्रसारणवत्, तस्मादज्विशेष्यम्, इन्द्रशब्दो विशेषणम्, अचि परतः कस्मिन्निन्द्रे यः स्थितस्तस्मिन्निति, तदिदमुक्तम्—**इन्द्रशब्दस्थेऽचीति** ॥ १२४ ॥

**प्लुतप्रगृह्या अचि नित्यम् ॥** ननु यस्य विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, न च प्लुतस्य विकारः प्राप्तः, स्वरसन्धिषु तस्यासिद्धत्वात् ? इत्यत [आह—] **आश्रयात्प्लुतः सिद्धः इति ।** यदिदं प्लुतस्य प्रकृतिभावं प्रति कार्यित्वेनाश्रयणम्, आह—अस्मादेव ज्ञापकात् 'स्वरसन्धिषु प्लुतः सिद्धः' इति कल्प्यत इत्यर्थः ।

**भावबोधिनी**

इन्द्र शब्दस्थ अच् परे रहते गो का नित्य अवङ् आदेश होता है । उदा०—गवेन्द्रः । गवेन्द्रयज्ञस्वरः । [ गो + इन्द्र, नित्य अवङ् आदेश, 'आद्गुणः' गुण । पूर्वसूत्र से इन्द्र परे रहते भी अवङ् आदेश सिद्ध ही था । अतः इस सूत्र की आवश्यकता न होने पर भी इससे बनाने से ही इस आदेश की नित्यता सिद्ध है । पुनः 'नित्य' का ग्रहण करना अग्रिम सूत्र के लिए है । ] ॥ १२४ ॥

अच् परे रहते प्लुत और प्रगृह्य [ स्वर ] प्रकृति रूप से ही रहते हैं । उदा०—देवदत्ता३ अत्र न्वसि । यज्ञदत्ता३ इदमानय । [ इनसे "दूराद् धूते च" सूत्र से प्लुत = त्रिमात्रिक कर देने पर प्राप्त सवर्णदीर्घ और गुण को बाध कर प्रकृतिभाव हो जाता है । यद्यपि प्लुत-विधायक सूत्र त्रिपादीस्थ है और प्रकृतिभाव का विधायक सूत्र सपादसप्ताध्यायीस्थ । अतः "पूर्वत्रासिद्धम्" के अनुसार इसकी दृष्टि में प्लुत असिद्ध है । प्रकृतिभाव किस प्रकार होगा ? ] आश्रय के कारण

१. पदमञ्जरीकारमते सिद्धान्तकौमुदीभाष्यकारादिमते च 'इन्द्रे च' 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रपाठः ।

**अचीत्यनुवर्त्तमाने पुनरज्ग्रहणमादेशनिमित्तस्याचः परिग्रहार्थम्। तेनेह न भवति—जानु उ अस्य रुजति =जान्वस्य रुजति ( म० भा० )। प्रगृह्यादुकारात्परस्याकारस्य सवर्णदीर्घत्वं प्रत्यनिमित्तत्वादत्र प्रकृतिभावो न भवति।**

**नित्यग्रहणमिहानुवर्त्तते। प्लुतप्रगृह्याणां नित्यमयमेव प्रकृतिभावो यथा स्यात्, 'इकोऽसवर्णे शाकल्यस्य**

**न्यासः**

जानु + उ + अस्य रुजति जानू अस्य रुजतीति। न हि जानुशब्दे य उकारो यश्च तदनन्तरः प्रगृह्यसंज्ञकस्तयोः सवर्णदीर्घत्वं प्रति प्रगृह्यसंज्ञकादुकारात् परस्याकारस्य निमित्तभावः। इह च न भवति—जान्वस्य रुजतीति। तेन पूर्वपरयोरुकारयोर्य एकादेशः, स यद्यपि 'अन्तादिवच्च' इत्यादिवद्भावात्प्रगृह्यसंज्ञकोकारग्रहणेन गृह्यते, तथापि यणादेशोऽकारे परतो भवत्येव। न ह्यत्राप्यकार एकादेशनिमित्तम्। यदि तु विशिष्टाच्परिग्रहार्थं पुनरज्ग्रहणं न क्रियते, तदाऽज्मात्रे प्रकृतिभावो विधीयमान इहापि स्यादेव। प्रगृह्यसंज्ञा पुनरकारपूर्वस्योकारस्य 'निपात एकाजनाङ्' इत्यनेन।

**नित्यग्रहणमित्यादि।** यदि नित्यग्रहणमिहा'न'नुवर्त्तते, तदाग्नी + इतीत्यादौ अस्य विधेः कृतार्थत्वाद्

**पदमञ्जरी**

**आदेशनिमित्तस्याचः परिग्रहार्थमिति।** यस्मिन्नादेशो विधीयते स एव प्रकृतिभावस्यापि निमित्तत्वेन परिगृहीतो यथा स्यादित्येवमर्थमित्यर्थः। **जानु उ अस्येति।** उञ निपातः, तस्य पूर्वेण सहैकादेशस्य यन्निमित्तं न स प्रगृह्यादुत्तरः, यश्च ततः परो न स एकादेशस्य निमित्तमिति प्रकृतिभावाभावादेकादेशो भवत्येव। असति पुनरज्ग्रहणे 'प्रगृह्योऽचि परतः प्रकृत्या भवति' इत्युच्यमाने पूर्वेण सह यो विकारः प्राप्तस्तस्यापि प्रकृतिभावः स्यात्। पुनरज्ग्रहणे तु न भवति, तत्रैकादेशे कृते तस्यादिवद्भावात्प्रगृह्यग्रहणेन ग्रहणात् 'इको यणचि' इति यणादेशः प्रकृतिवद्भावान्न भवति, 'मय उञो वो वा' इति पक्षे वकारः।

**नित्यग्रहणमनुवर्त्तत इति।** पूर्वसूत्रे नित्यग्रहणमेतदर्थमेव कृतम्, तत्र त्वारम्भसामर्थ्यादेव नित्यो विधिः

**भावबोधिनी**

प्लुत सिद्ध ही रहता है। [अन्यथा यह प्रकृतिभाव का विधान व्यर्थ होने लग जायगा।] प्रगृह्य के उदा०—अग्नी + इति। वायू + इति। खट्वे + इति। माले = इति। [ इनमें 'ईदूदेद् द्विवचनं प्रगृह्यम्' सूत्र से प्रगृह्य संज्ञा होती है। ]

'अचि' इसकी अनुवृत्ति रहने पर भी पुनः अच् का ग्रहण करना आदेश के निमित्तभूत अच् का परिग्रहण कराने के लिए है, अर्थात् जिस अच् को मानकर आदेश किया जा सकता है वही लिया जाना चाहिए। इस कारण यहाँ नहीं होता है—जानु उ अस्य रुजति—जान्वस्य रुजति। यहाँ प्रगृह्य संज्ञक 'उ' कार से परे अ का सवर्णदीर्घ के प्रति निमित्तत्व नहीं है इस लिए यहाँ प्रकृतिभाव नहीं होता है।

**विमर्श**—जानु + उ + अस्य यहाँ 'उ' की प्रगृह्यसंज्ञा होती है। इस निपात ( प्रगृह्य ) की पूर्व उकार के साथ सवर्ण दीर्घ रूप एकादेश की कर्त्तव्यता में 'अस्य' का अकार निमित्त नहीं होता है इसलिए प्रकृतिभाव न होने के कारण सवर्णदीर्घ रूप एकादेश होता ही है—( १ ) जानू + अस्य। परन्तु इस एकादेश का आदिवद्भाव मानकर प्रगृह्य संज्ञा होती है इस लिए प्रकृतिभाव हो जाने के कारण 'इको यणचि' सूत्र से यणादेश नहीं होता है—( १ ) जानू अस्य। पक्ष में 'मय उञो वो वा' सूत्र से 'उ' का 'व्' आदेश होने से ( २ ) जान्व् अस्य = जान्वस्य रुजति बनता है। यदि पुनः 'अचि' का ग्रहण न होता तो सवर्णदीर्घ भी नहीं हो पाता।

महाभाष्य, पदमञ्जरी और सिद्धान्त-कौमुदी आदि में 'नित्यम्' इसी सूत्र के साथ सम्बद्ध किया गया है। परन्तु काशिका और न्यास में 'इन्द्रे च नित्यम्' ऐसा ही माना गया है और अनुवृत्ति से प्रस्तुत सूत्र में 'नित्यम्' का सम्बन्ध किया गया है। यहाँ काशिकाकार का विचार उचित नहीं प्रतीत होता है।

ह्रस्वश्च' ( ६.१.१२७ ) इत्येतन्मा भूदिति ॥

२५६६. आङोऽनुनासिकश्छन्दसि ॥ १२६ ॥ ( ३५९९ )

आङोऽचि परतः संहितायां छन्दसि विषयेऽनुनासिकादेशो भवति, स च प्रकृत्या भवति। 'अभ्र आँ अपः' ( ऋ० ५. ४८. १ )। 'गभीरआँ उग्रपुत्रे जिघांसत' ( ऋ० ८. ६७. ११ )।

केचिद् 'आङोऽनुनासिकश्छन्दसि बहुलम्' इत्यधीयते। तेनेह न भवति—इन्द्रो बाहुभ्यामातरत्। आ अतरत्॥

न्यासः

वायू + अत्रेत्यादौ परत्वाच्छाकलो विधिः प्रसज्येत। तस्मात् प्रकृतिभाव एव यथा स्यात्—इत्येवमर्थं नित्यग्रहणमिहानुवर्त्तते ॥ १२५ ॥

आङोऽनुनासिकश्छन्दसि ॥ आङ इति ङिद्विशिष्टस्याकारस्योपादनम्। 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः'—तस्यैव ग्रहणं यथा स्यात्, वाक्यस्मरणयोर्यः तस्य मा भूदित्येवमर्थम्। असति प्रकृतिभावे विहितेऽप्याङोऽनुनासिकत्वे स्यादेव स्वरसन्धिः। अनुनासिकविधानं त्वादेशस्य सानुनासिकत्वार्थं स्यादित्येतन्मनसि कृत्वाऽऽह–न च प्रकृत्या भवतीति। आतरदिति। तरतेराङ्पूर्वाल्लङ्, अडागमः, अटा सह सवर्णदीर्घत्वम् ॥१२६॥

पदमञ्जरी

सिद्धः। नित्यमेव प्रकृतिभावो यथा स्यादिति। अयमेव प्रकृतिभावो नित्यं यथा स्यात्, शास्त्रान्तरेण कार्यान्तरसहितो मा भूदित्यर्थः ॥ १२५ ॥

आङोऽनुनासिकश्छन्दसि ॥ तेनेह न भवतीति। अनर्थकस्यैवाकारस्य भवति, अभ्र आँ अप इत्यादौ सप्तम्यैव तदर्थस्योक्तत्वात्तदर्थवृत्तिराङनर्थकः; अनर्थान्तरवाचित्वात्। आतरदित्यत्र तु क्रियाविशेषणत्वादर्थवान्।

कथं पुनरनर्थकस्य ङित्त्वम्, यावता—

'ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' ॥ इत्युक्तम् ?

सत्यम्; 'वाक्यस्मरणयोरङित्' इत्यत्रैव तात्पर्यम्, अन्यत्र सर्वत्र आङ् ङिद्वेदितव्यः—एवं तावद्भाष्ये स्थितम् ॥ १२६ ॥

भावबोधिनी

( अनु० ) इस सूत्र में [ पूर्व सूत्र से ] 'नित्यम्' ग्रहण की अनुवृत्ति होती है। प्लुत और प्रगृह्यों का नित्य यही प्रकृतिभाव हो सके, 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इस [ अग्रिम सूत्र ] की प्रवृत्ति न हो सके। [ अतः कार्यान्तरसहित प्रकृतिभाव रोकने के लिए यहाँ 'नित्यम्' का सम्बन्ध आवश्यक है। ] ॥ १२५ ॥

अच् परे रहते संहिता में वेद-विषय में आङ् का अनुनासिक ( आँ ) आदेश होता है और वह प्रकृतिरूप से रहता है। उदा०—अभ्र आँ अपः। गभीर आँ उग्रपुत्रे जिघांसत। [ आङ् के अनुनासिक आदेश और प्रकृतिभाव के कारण सन्धि नहीं होती है। ]

कुछ लोग—"आङोऽनुनासिकश्छन्दसि बहुलम्" ऐसा सूत्र पढ़ते हैं। इसलिए यहाँ नहीं होता है—इन्द्रो बाहुभ्यामातरत्। आ + अतरत्। [ बहुल ग्रहण के कारण अनुनासिक नहीं होता है, अतः प्रकृतिभाव भी नहीं होता है, दीर्घ हो जाता है। जहाँ आ अनर्थक है, वहीं अनुनासिक होता है। जैसे—अभ्र आँ अपः। परन्तु धातु के साथ उपसर्ग रूप में अर्थवान् हो जाता है। अतः वह न अनुनासिक होता है और न प्रकृति रूप से रहता है, दीर्घ हो जाता है। बहुल वचन के कारण अलग भी रह सकता है ] ॥ १२६ ॥

## २५६७. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२७ ॥ ( ९१ )

**इकोऽसवर्णेऽचि परतः शाकल्यस्याचार्यस्य मतेन प्रकृत्या भवन्ति, ह्रस्वश्च तस्येकः स्थाने भवति । दधि अत्र, दध्यत्र । मधु अत्र, मध्वत्र । कुमारि अत्र, कुमार्यत्र । किशोरि अत्र किशोर्यत्र ।**

**इक इति किम् ? खट्वेन्द्रः । असवर्ण इति किम् ? कुमारीन्द्रः ।**

**शाकल्यग्रहणं पूजार्थम्, आरम्भसामर्थ्यादेव हि यणादेशेन सह विकल्पः सिद्धः ।**

### न्यासः

**इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ ह्रस्वश्च तस्येकः स्थाने भवतीति ।** यद्येवम्, 'प्रकृत्या' इत्यस्यानुकर्षणार्थश्चकारो न कर्तव्यः, ह्रस्वविधानसामर्थ्यादेव हि स्वरसन्धिर्न भविष्यति ? अत्रैतत् स्यात्—दीर्घाणामेव ह्रस्वविधानसामर्थ्यात् स्वरसन्धिर्न स्यात् । ह्रस्वानां तु स्यादेव, न हि तेषां ह्रस्वा भवन्ति । प्रयोजनाभावादित्येतच्च नास्ति; ह्रस्वानामपि हि स्वरसन्धिबाधनार्थं ह्रस्वो भवत्येव । कृतकारि खल्विदं शास्त्रम्, पर्जन्यवत्; नाकृतकारि, दहनवत् । एवं तर्हि चकारेणैतदाख्यायते—क्वचिद् ईषा + अक्षादौ प्रकृतिभाव एव भवति, न ह्रस्वत्वमिति । तेन यदुक्तमीषा अक्षादौ प्रकृतिभावमात्रमिति, तन्न वक्तव्यं भवति ।

यणादेशेन सह विकल्पार्थं शाकल्यग्रहणं कस्मान्न भवति ? इत्याह—**आरम्भसामर्थ्यादेव हीत्यादि ।** यणादेशस्य ह्यसवर्ण एवाज्विषयः; सवर्णे तु 'अकः सवर्णे दीर्घः' इति दीर्घविधानात् । अयमपि च शाकलो ह्रस्वो विधीयते । अत एवास्मिन् विषय आरम्भसामर्थ्यादेवास्य विधेर्यणादेशेन सह विकल्पः सिद्ध इति न तदर्थमाचार्यग्रहणम् ।

### पदमञ्जरी

**इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥** किमर्थश्चकारः, प्रकृत्येत्येतदनुकृष्यतेऽनेन ? ननु च ह्रस्वविधानसामर्थ्यादेव स्वरसन्धिर्न भविष्यति ? भवेद्दीर्घाणां ह्रस्ववचनसामर्थ्यादेव स्वरसन्धिर्न स्यादिति ह्रस्वानां तु प्राप्नोति । न हि ह्रस्वानां ह्रस्वो भवति; प्रयोजनाभावात् । अस्ति प्रयोजनम्—स्वरसन्धिर्मा भूदिति ? इदं तर्हि प्रयोजनम्—प्रकृतिभावमात्रं क्वचिद्यथा स्यादिति, तेनेषा अक्षादिषु च्छन्दसि प्रकृतिभावमात्रं सिद्धं भवति ।

**शाकल्यग्रहणं पूजार्थमिति ।** अथ विकल्पार्थं कस्मान्न भवति ? इत्याह—**आरम्भसामर्थ्यादेवेति ।** सवर्णेऽचि दीर्घविधानाद्यणादेशस्यासवर्ण एवाज्विषयः, अस्यापि विधेः स एव विषयः, ततश्च विषयैक्यादेव विकल्पे सिद्धे न तदर्थकमाचार्यग्रहणम् ।

### भावबोधिनी

असवर्ण अच् परे रहते शाकल्य आचार्य के मत से इक् का प्रकृतिभाव होता है और उस इक् के स्थान पर ह्रस्व हो जाता है । उदा०—दधि अत्र, दध्यत्र । [ दधी + अत्र ], मधु अत्र, मध्वत्र । [ मधू + अत्र—इसमें ह्रस्व पक्ष में प्रकृतिभाव के कारण सन्धि नहीं होती है । अन्य आचार्यों के मत में न ह्रस्व, न प्रकृतिभाव । फलतः यण् हो जाने पर दूसरा रूप बनता है । ] कुमारि अत्र, कुमार्यत्र । [ कुमारी + अत्र ], किशोरि अत्र, किशोर्यत्र । [ किशोरी + अत्र ] । इक् का—इसका क्या फल है ? खट्वेन्द्रः । [ खट्वा + इन्द्रः. यहाँ आ का ह्रस्व और प्रकृतिभाव न होकर गुण होता है । ] असवर्ण परे रहते—इसका क्या फल है ? कुमारीन्द्रः । [ कुमारी + इन्द्रः—यहाँ सवर्ण इक् ही परे है, अतः ह्रस्व और प्रकृतिभाव नहीं होता है ! ]

शाकल्यग्रहण पूजा ( उनके प्रति सम्मान प्रकट करने ) के लिए है, क्योंकि इस सूत्र के आरम्भ ( प्रणयन ) के सामर्थ्य से ही यण् आदेश के साथ विकल्प सिद्ध हो है । [ अतः शाकल्यग्रहण विकल्पार्थ नहीं सिद्ध किया जा सकता । ]

**॥ सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः ॥** ( म० भा० ६. १. १२७ वा० १ )। सिति—'अयं ते योनिर्ऋत्वियः' ( ऋ० ३. २९. १० ) नित्यसमासे—व्याकरणम् । कुमार्यर्थम् ।

**॥ ईषाअक्षादिषु च्छन्दसि प्रकृतिभावमात्रं वक्तव्यम् ॥** ( म० भा० वा० २ )। 'ईषा अक्षो हिरण्ययः' ( ऋ० ८. ५. २९. ) । का ईमरे पिशङ्गिला ( वाज० स० २३. ५५ ) । पथा अगमन् ॥

**२५६८. ऋत्यकः ॥ १२८ ॥ ( ९२ )**

'शाकल्यस्य ह्रस्वश्च' इत्येतदनुवर्त्तते । ऋकारे परतः शाकल्यस्याचार्यस्य मतेनाकः प्रकृत्या भवन्ति,

**न्यासः**

**सिन्नित्यसमासयोरित्यादि** । एकमपि सप्तमी द्विधा भिद्यते; अपेक्षाभेदात् । सिदपेक्षया परसप्तमी, नित्यसमासापेक्षया विषयसप्तमी । सिच्च नित्यसमासश्चेति द्वन्द्वः—स इद् यस्य स सित् नित्याधिकारे विहितः समासो नित्यसमासः । शाकल्यास्यायं विधिः शाकलः—'कण्वादिभ्यो गोत्रे' इत्यण्, 'यस्येति च' इत्यकारलोपः, 'आपत्यस्य च तद्धितेऽनाति' इति यकारलोपः । शाकलस्य प्रतिषेधः शाकलप्रतिषेधः । **वक्तव्य इति** । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—'सर्वत्र विभाषा गोः' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते । तेन सिन्नित्यसमासयोः शाकलप्रतिषेधो भविष्यति । **ऋत्विय इति** । ऋतुः प्राप्तोऽस्येति 'ऋतोरण्', 'छन्दसि घस्' इति घस् । **व्याकरणमिति** । 'कुगतिप्रादयः' इति समासः । अत्र हि 'नित्यं क्रीडाजीविकयोः' इत्यतो नित्यग्रहणानुवृत्तेर्नित्यसमासोऽयम् । **कुमार्यर्थमिति** । कुमार्या इदं कुमार्यर्थमिति । 'अर्थशब्देन सह समासवचनं सर्वलिङ्गता च' इत्ययमपि नित्यसमास एव । सर्वत्र शाकलविधौ प्रतिषिद्धे यणादेशो भवत्येव ॥ १२७ ॥

**ऋत्यकः ॥ सवर्णार्थमनिगर्थञ्च वचनमिति** । अन्यत्र पूर्वेणैव सिद्धत्वात् । यदि सवर्णार्थं वचनम्,

**पदमञ्जरी**

**सिन्नित्यसमासयोरिति** । नित्याधिकारविहितोऽस्वपदविग्रहश्च समासो नित्यसमासः, एकापि सप्तमी विषयभेदाद्भिद्यते, सिति परतो नित्यसमासे च विषय इति, शाकल्यस्यायं विधिः शाकलः, 'कण्वादिभ्यो गोत्रे' इत्यण् । **ऋत्विय इति** । ऋतुरस्य प्राप्त इति 'ऋतोरण्', 'छन्दसि घस्' । **व्याकरणमिति** । 'कुगतिप्रादयः' इति समासः, तत्र 'नित्यम्' इत्यनुवर्त्तते । **कुमार्यर्थमिति** । कुमार्यै इदं कुमार्यर्थम्, अस्वपदविग्रहोऽयं नित्य-समासः ॥ १२७ ॥

**ऋत्यकः ॥ सवर्णार्थमनिगर्थं च वचनमिति** । होतृ ऋश्यः, खटव ऋश्य इत्यादौ; अन्यत्र

**भावबोधिनी**

॥ सित् परे और नित्य समास-विधि में शाकल्य के मत का प्रतिषेध कहना चाहिये । ॥ उदा०—सित् परे रहते—अयं ते योनिर्ऋत्वियः [ ऋतु प्राप्तः अस्य—इस अर्थ में ऋतु + घस् = घ = इय—ऋतु + इय में असवर्ण परे मानकर प्रकृतिभाव प्राप्त है, किन्तु सित् होने से उसका प्रतिषेध हो जाने से 'उ' का यण् होता है—ऋत्वियः । ] नित्यसमास में प्रतिषेध का उदा०—व्याकरणम् । कुमार्यर्थम् । [ वि + आ + कृ + अन में उपसर्ग का नित्यसमास है, अतः प्रकृतिभाव का प्रतिषेध करके यण्—व्या—करण बनाया जाता है । कुमार्यै इदम्—इसमें 'अर्थेन सह नित्यसमासो विशेष्यलिङ्गता च' इस वचन से अस्वपद विग्रह में नित्यसमास है । प्रकृतिभाव न होने से यण् हो जाता है । ]

॥ ईषाअक्ष आदि में वेद में केवल प्रकृतिभाव कहना चाहिये । ॥ उदा०—ईषा अक्षः । का ईमरे पिशङ्गिला । पथा अगमन् ] [ केवल प्रकृतिभाव होता है, ह्रस्व नहीं । ] ॥ १२७ ॥

'शाकल्यस्य ह्रस्वश्च' इनकी अनुवृत्ति होती है । ऋकार परे रहते शाकल्य आचार्य के मत से अक् प्रकृतिभाव से रहते हैं और उस 'अक्' के स्थान पर ह्रस्व होता है । उदा०—खट्व ऋश्यः [ खट्वा + ऋश्यः ] । माल ऋश्यः

**ह्रस्वश्च तस्याकः स्थाने भवति । खट्व ऋश्यः । माल ऋश्यः । कुमारि ऋश्यः । होतृ ऋश्यः[1] । ऋतीति किम् ? खट्वेन्द्रः । अक इति किम् ? वृक्षावृश्यः । सवर्णार्थमनिगर्थं च वचनम् ॥**

## २५६९. अप्लुतवदुपस्थिते ॥ १२९ ॥ ( ९८ )

**उपस्थितं नामानार्षं इतिकरणः समुदायादवच्छिद्य पदं येन स्वरूपेऽवस्थाप्यते तस्मिन्परतः प्लुतोऽप्लुतवद्भवति । प्लुतकार्यं प्रकृतिभावं न करोति । सुश्लोका३ इति, सुश्लोकेति । सुमङ्गला३ इति, सुमङ्गलेति ।**

### न्यासः

कथं तर्हि खट्वश्यं इत्युदाहरणम्, न ह्यत्र सवर्णोऽच्परः नैतदस्ति; **'अनिगर्थञ्च'** इति यदुक्तं तस्योदाहरणम् । अत एवाक इत्युपात्तं सूत्रे; अन्यथेक इत्यनुवर्त्तनीयं स्यात् । सत्यस्मिन् योगे सवर्णार्थेऽप्यकोऽनेनैव युक्तो ह्रस्वप्रकृतिभावो परत्वादित्यस्योदाहरणस्योपन्यासः ॥ १२८ ॥

**अप्लुतवदुपस्थिते ॥ ऋषौ** = वेदे भव आर्षः, तस्मादन्यो लौकिकोऽनार्षः । **समुदायादिति** । वाक्यादित्यर्थः । कुत एतत् ? पदरहितस्य वाक्यस्याप्रयोगात् । वाक्यस्य च समुदायात्मकत्वात् । **अवच्छिद्येति** । पृथक् कृत्वेत्यर्थः । **स्वरूपे व्यवस्थाप्यत इति** । शब्दपदात्मकतायां व्यवस्थाप्यत इत्यर्थः । **अप्लुतवदिति** । अप्लुतेन

### पदमञ्जरी

पूर्वेणैव सिद्धत्वात् ॥ १२८ ॥

**अप्लुतवदुपस्थिते ॥** ऋषिः = वेदः, तत्र भव आर्षः, ततोऽन्योनार्षः, समुदायाद्वाक्यादवच्छिद्य पृथक्कृत्य स्वरूपेऽवस्थाप्यते । कैः ? पदकारैः । पदस्येयत्तापरिज्ञानाय अप्लुतेन तुल्यं वर्त्तत इत्यप्लुतवत् । तत्र येन साधर्म्येणाप्लुतवत्त्वम्, तद्दर्शयति—**अप्लुतकार्यमिति** । तत्रापि प्लुतशब्देन विहितस्य कार्यस्य प्रतिषेध इति दर्शयति—**प्रकृतिभावं करोतीति** । अन्यथा स्वरसन्धेरपि प्रतिषेधः स्यात्, तस्यापि प्लुतकार्यत्वात् । उदाहरणेषु प्लुतकार्यप्रतिषेधादेकादेशो भवन् प्लुतमेवोपमृद्य भवति; स्वरसन्धिप्रकरणे प्लुतस्य सिद्धत्वात् ।

### भावबोधिनी

[ माला + ऋश्यः ] । कुमारि ऋश्यः । [ कुमारी + ऋश्यः ] । होतृ ऋश्यः [ होतृ + ऋश्यः । ह्रस्व और प्रकृतिभाव-विधान के कारण गुणसन्धि आदि नहीं होती है । ]

ऋत् परे रहते—इसका क्या फल है ? खट्वेन्द्रः [ खट्वा + इन्द्रः, यहाँ ऋ नहीं, इ परे है । ] अक् का ह्रस्व—इसका क्या फल है ? वृक्षावृश्यः । [ वृक्षौ + ऋश्यः यहाँ अक् न होकर 'औ' है, अतः ह्रस्व और प्रकृतिभाव दोनों नहीं होते हैं । ]

[ पूर्व सूत्र से सिद्ध रहने पर ] सवर्ण के लिए और अनिक् के लिए यह सूत्र है । [ पूर्ववर्ती सूत्र असवर्ण अच् परे रहते इक् का ह्रस्व और प्रकृतिभाव करता है । यह ऋ से परे सवर्ण ऋ रहने पर भी ह्रस्व और प्रकृतिभाव करता है । पूर्व सूत्र इक् का और यह सूत्र अक् का ह्रस्व करता है, अतः आ भी ह्रस्व हो जाता है । होतृ + ऋश्य में केवल प्रकृतिभाव होता है, क्योंकि ऋ तो ह्रस्व है । ] ॥ १२८ ॥

उपस्थित का अर्थ है अनार्ष = लौकिक इति का प्रयोग, वाक्यात्मक समुदाय से अलग करके पद को, जिसके द्वारा अपने रूप में अवस्थापित किया जाता है अर्थात् पद रूपबोधक होता है, अर्थबोधक नहीं, ऐसे 'इति' शब्द के परे रहते प्लुत अप्लुतवत् हो जाता है । प्लुतकार्य जो प्रकृतिभाव हैं, उसे नहीं करता है । सुश्लोका३ इति, सुश्लोकेति । सुमङ्गला३

---

१. 'पोतृ ऋश्यः' इत्यधिकं पुस्तकान्तरे ।

**वत्करणं किम् ? अप्लुत इत्युच्यमाने प्लुत एव प्रतिषिध्येत । तत्र को दोषः ? प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात् —अग्नी३ इति । वायू३ इति ॥**

**न्यासः**

तुल्यं वर्त्तत इत्यप्लुतवत् । येन साधर्म्येणाप्लुतवद् भवति तद् दर्शयितुमाह—**प्लुतकार्यमित्यादि** । तदनेन प्लुतकार्यस्यायं प्रतिषेधः, न तु प्लुतस्येति दर्शितं भवति । **सुश्लोका३ इति** । 'दूराद्धूते च' इति प्लुतः । **सुश्लोकेति** । प्लुतकार्यस्याकरणादेकादेशो भवत्येव । ननु चैकादेशेनापि न भवितव्यम्, तस्यापि प्लुतकार्यत्वात् ? नैतदस्ति; एवं हि वचनस्य वैयर्थ्यं स्यात् । तस्मात् प्लुतसंशब्दनेनैव प्लुतस्य यत् कार्यं विहितं तस्यैव प्रतिषेधः, न सर्वस्य प्लुतकार्यस्य । न चैकादेश एवं विहितः ।

**वत्करणं किमिति** । इह कार्यमात्रस्य प्रतिषेधे सति प्लुतस्य श्रवणं यथा स्यादित्येवमर्थं वत्करणं स्यात् । सत्यपि च कार्यमात्रस्य प्रकृतिभावस्य प्रतिषेधेनैव प्लुतश्रुत्या भवितव्यम्; एकादेशेन निर्वर्त्तितत्वात् । तत् कस्मात् प्लुतस्यैव प्रतिषेधो न क्रियत इत्यभिप्रायः ! प्लुतप्रतिषेधे वक्ष्यमाणं दोषं चेतसि कृत्वाऽऽह—**प्लुत इत्युच्यमान इत्यादि** । **तत्र को दोष इति** । यो वत्करणे सति न भवतीति भावः । **प्रगृह्याश्रय इत्यादि** । प्रगृह्य आश्रयो यस्य तस्मिन् प्रकृतिभावे सति प्रगृह्यसंज्ञको यः प्लुतस्तस्य श्रवणं न स्याद्, यदि प्लुत एव प्रतिषिध्येत । वत्करणे तु सति प्लुतकार्यस्यायं प्रतिषेधो भवति, न प्लुतस्यैव । तत्र प्लुताश्रये प्रतिषिद्धेऽपि प्रगृह्याश्रयस्याप्रतिषिद्धत्वादसत्येकादेश एष दोषो न भवति । **अग्नी इतीति** । 'ईदूदेद् द्विवचनम्' इत्यादिना प्रगृह्यसंज्ञा, गुरोरनृत' इत्यादिना प्लुतः ॥ १२९ ॥

**पदमञ्जरी**

**तत्र को दोष इति** । एकादेशेन निवर्त्त्यमानत्वात् प्लुतस्य श्रवणेन न भवितव्यमिति प्लुत एव निषिध्यताम्, किमर्थमतिदेशाश्रयणमिति प्रश्नः । **अग्नी३ इतीति** । यत्र प्लुताश्रयोऽपि प्रकृतिभावः प्राप्नोति, प्रगृह्याश्रयोऽपि; तत्र प्लुताश्रयस्य प्रतिषेधेऽपि प्रगृह्याश्रयस्य प्रकृतिभावस्य प्रतिषेधाभावात् प्लुतस्य श्रवणं सिद्ध्यति, प्लुतप्रतिषेधे तु क्रियमाणेऽत्रापि श्रवणं न स्यात् ॥ १२९ ॥

**भावबोधिनी**

इति, सुमङ्गलेति । [ दोनों उदाहरणों में 'दूराद् धूते च' सूत्र से प्लुत होने पर इति के योग में अप्लुतवत् हो जाने से प्रकृतिभाव न होकर गुण होता है । ]

वत् करने का क्या प्रयोजन है ? उत्तर यह है कि 'प्लुतोऽप्लुतः' ऐसा कह देने पर प्लुत का ही प्रतिषेध हो पाता । तो इसमें क्या दोष है [ जो वत् कर देने पर नहीं हो सकता ] ? प्रगृह्य को मानकर प्रकृतिभाव में प्लुत का श्रवण नहीं होता—अग्नी३ इति । वायू३ इति ।

**विमर्श**—'अप्लुतवत्' न कहकर 'अप्लुत' ऐसा सामान्य निषेध कर देने पर प्लुत को मानकर प्रकृतिभाव नहीं होता । जब अप्लुतवत्—ऐसा कहा गया है, तब जहाँ प्लुत को मानकर प्रकृतिभाव प्राप्त है और प्रगृह्य को मानकर भी प्राप्त है, वहाँ प्लुत को मानकर होने वाले प्रकृतिभाव का तो प्रतिषेध हो जाता है, परन्तु प्रगृह्य को मानकर जो प्रकृतिभाव होना है वह तो होता ही है, इसलिए प्लुत-प्रयुक्त कार्य का ही प्रतिषेध हो, वह प्लुत सुनाई देता रहे—यही वत्करण का फल है । इसलिए 'अग्नी'३ इति में 'ईदूदेद् द्विवचनं प्रगृह्यम्' सूत्र से प्रगृह्य संज्ञा और तत्प्रयुक्त प्रकृतिभाव भी होता है और "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" ( पा० सू० ८।२।८६ ) से प्लुत भी होता है ॥ १२९ ॥

## २५७०. ई३ चाक्रवर्मणस्य ॥ १३० ॥ ( ९९ )

**ई३कारः प्लुतोऽचि परतश्चाक्रवर्मणस्याचार्यस्य मतेनाप्लुतवद्भवति । अस्तु हीत्यब्रूताम्,[1] अस्तु ही३ इत्यब्रूताम्[1] । चिनु हीदम्, चिनुही३ इदम् ।**

**चाक्रवर्मणग्रहणं विकल्पार्थम्—तदुपस्थिते निवृत्त्यर्थम्, अनुपस्थिते प्राप्त्यर्थमित्युभयत्रविभाषेयम् ।**

**ईकारादन्यत्राप्ययमप्लुतवद्भाव इष्यते । वशा३ इयम्, वशेयम् ॥**

### न्यासः

**ई३ चाक्रवर्मणस्य ॥ अचि परत इति ।** एतेन 'उपस्थिते' इत्येतन्निवृत्तम्; अस्वरितत्वादिति सूचयति । **अस्य ही३ इति**[2] । 'असु क्षेपणे', लोट्, सिप् । 'सेर्ह्यपिच्च' इति सेर्हिः, व्यत्ययेन श्लुः । 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' इति प्लुतः ।

**तदुपस्थिते निवृत्त्यर्थमिति ।** तत्र पूर्वेणाप्लुतवद्भावस्य नित्यं प्राप्तत्वात् । **अनुपस्थिते प्राप्त्यर्थमिति ।** तत्र केनचिदप्राप्तत्वात् ।

**ईकारादित्यादि ।** कथं पुनरिकारादन्यत्रापीष्यमाणोऽप्येषोऽप्लुतवद्भावो लभ्यते ? 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इत्यतोऽनुवृत्तस्य चकारस्यानुक्तसमुच्चयार्थत्वात् ॥ १३० ॥

### पदमञ्जरी

**ई३ चाक्रवर्मणस्य ॥** सूत्रे ई३ चेति त्रिमात्रिकस्य निर्देशः । **अचि परत इति ।** उपस्थितग्रहणं चास्वरितत्वान्निवृत्तम् । **अस्तु ही३ इत्यब्रूतामिति ।** 'विभाषा पृष्टप्रतिवचने हेः' इति प्लुतः, अस्तेर्लोटि तिप् , 'एरुः' ।

**तदुपस्थिते निवृत्त्यर्थमिति ।** तत्र पूर्वेणाप्लुतवद्भावस्य नित्यप्राप्तत्वात्, अनुपस्थिते प्राप्त्यर्थमिति, तत्र केनचिदप्राप्तत्वात् ।

**ईकारादन्यत्रापीति । तथा च भाष्यम्—'ईकारग्रहणेन नार्थः' इत्यादि ॥ १३० ॥**

### भावबोधिनी

प्लुत ई३कार अच् परे रहते चाक्रवर्मण आचार्य के मत से अप्लुतवत् हो जाता है । उदा०—अस्तु हीत्यब्रूताम्, अस्तु ही$^3$ इत्यब्रूताम् । चिनु हीदम्, चिनु ही$^3$ दम् ।

[ √अस् के लोट् प्रथम पुरुष एकवचन में 'अस्तु' बना है, 'हि' अव्यय है । 'इति' परे है 'विभाषा पृष्टप्रतिवचने हेः' सूत्र से 'हि' का प्लुत होने पर प्रस्तुत सूत्र से अप्लुतवद्भाव पक्ष में प्रकृतिभाव न होकर दीर्घ होता है । पक्ष में प्रकृतिभाव होने से सन्धि नहीं होती है । न्यासकार ने 'अस्य हि' यह 'असु क्षेपणे' का लोट् मध्यम पुरुष एकबचन का रूप माना है और "क्षियाशीः प्रैषेषु तिङाकाङ्क्षम्" ( पा० सू० ८।२।१० ) माना है । परन्तु अग्रिम उदाहरण के समान यहाँ भी तीन पद मानकर पदमञ्जरीकार की व्युत्पत्ति ही उचित प्रतीत होती है । √चि धातु लोट् मध्यम पुरुष, एकवचन 'चिनु' 'हि' अव्यय इसका प्लुत होता है । ]

चाक्रवर्मण का ग्रहण विकल्प के लिए है—वह उपस्थित = वैदिक 'इति' परे की निवृत्ति के लिए है, अनुपस्थित = अवैदिक ( लौकिक ) परे रहते प्राप्ति कराने के लिए है । इस प्रकार [ यह चाक्रवर्मण का ग्रहण करने से ] यह उभयत्र विभाषा है ।

ईकार से भिन्न स्थल पर भी यह अप्लुतवद्भाव इष्ट है—वशा$^3$ इयम्, वशेयम् । [ इसीलिए भाष्य में लिखा है—"ईकारग्रहणेन नार्थः । वशा$^3$ इयम् में आ$^3$ अप्लुतवत् होने पर गुण हो जाता है ।" ] ॥ १३० ॥

---

१—१. उभयत्र 'इत्यब्रवीत्' इति मुद्रितमूलपुस्तके पाठः ।

२. न्यासे 'अस्य हीं इति' इति पाठः उचितः । 'अस्तु ही$^3$ति' इति प्रकाशितपाठस्य मध्यमपुरुषे सिपि असम्भवात् ।

## २५७१. दिव उत् ॥ १३१ ॥ ( ३३७ )

**'एङः पदान्तादति' ( ६. १. १०९ ) इत्यतः पदग्रहणमनुवर्तते। 'दिवः' इति प्रातिपदिकं गृह्यते, न धातुः; सानुबन्धकत्वात्। दिवः पदस्य उकारादेशो भवति। दिवि कामो यस्य द्युकामः। द्युमान्। विमलद्यु दिनम्। द्युभ्याम्। द्युभिः।**

**निरनुबन्धकग्रहणादिह न भवति–अक्षद्यूभ्याम्, अक्षद्यूभिरिति।**

### न्यासः

**दिव उत् ॥ सानुबन्धकत्वादिति।** कस्य धातोरनन्तरम्? प्रकृतत्वात् तस्यव। दीव्यतिर्धातुः सानुबन्धः, प्राविपदिकं तु दिवित्येतन्निरनुबन्धकम्, निरनुबन्धकस्य च सूत्र उपादानम्; तस्मात् 'निरनुबन्धकस्य ग्रहणे न सानुबन्धकस्य' इति प्रातिपदिकस्येदं ग्रहणम्, न धातोरिति। **द्युकाम इति।** दिवि कामोऽस्येवि बहुव्रीहिः, दिवं कामयत इति वा। 'शीलिकामिभिक्षाचरिभ्यो णो वक्तव्यः' इति णप्रत्ययः। **द्युमानिति।** द्यौरस्यास्तीति 'तदस्यास्त्यस्मिन्निति मतुप्'। **विमलद्यु दिनमिति।** विमला द्यौरस्मिन्निति बहुव्रीहिः। **अक्षद्यूभ्याम्, अक्षद्यूभिरिति।** अक्षशब्द उपपदे दीव्यतेर्धातोः क्विप्, 'च्छ्वोः शूडनुनासिके च' इत्यूठ्।

अथ तपरकरणं किमर्थम्, यावता यद्यपि 'ऋत उत्' इत्यत्र तपकरणेन 'भाव्यमनोऽप्युकारः सवर्णान् गृह्णाति' इति ज्ञापितम्, तथाप्यत्रान्तर्यतोऽर्द्धमात्राकालस्य व्यञ्जनस्य मात्रिक एव भविष्यति; न दीर्घः?

### पदमञ्जरी

**दिव उत् ॥ पदग्रहणमनुवर्त्तत इति।** अन्तग्रहणेनोपसमस्तमपि[1] केवलं पदग्रहणमेवानुवर्त्तते, ततश्चार्थात् षष्ठ्यन्तं जायते, दिवशब्देन विशेषणात्तदन्तविधिः, 'ग्रहणवता प्रातिपदिकेन' ( व्या० परि० ८९ ) इति तु प्रत्ययविधिविषयम्। व्यपदेशिवद्भावात् केवलस्यापि भवितव्यम्, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ( शा० परि० ६५ ) इत्येतदपि प्रत्ययविधिविषयमेव। **सानुबन्धकत्वादिति।** दीव्यतेर्धातोरुकारोऽनुबन्धः, प्रातिपदिकस्य तु न कश्चिदनुबन्धः। **दिवः पदस्येति।** तदन्तस्य पदस्येत्यर्थः। **द्युकाम इति।** दिवं कामयते इति 'शीलिकामिभिक्षाचरिभ्यो णः' ( कात्या० वा० १९८० )। **विमलद्यु इति।** विमला द्यौरस्मिन्निति बहुव्रीहिः। **अक्षद्युभ्यामिति।** अक्षशब्द उपपदे दीव्यतेः क्विप्, तत्र 'च्छ्वोः शूडनासिके च' इत्यूठ्।

### भावबोधिनी

'एङः पदान्तादति' इस सूत्र से 'पद' की अनुवृत्ति होती है। [ समास में भी एकदेश की अनुवृत्ति की जाती है। ] 'दिवः' यह प्रातिपदिक है, धातु नहीं है, क्योंकि [ धातु दिवु तो उकार ] अनुबन्धविशिष्ट है। दिव जो पदसंज्ञक है, उसका उकारादेश होता है। [ 'अलोऽन्त्यस्य' के आधार पर 'व्' का ही होता है। ] उदा०—दिवि कामो यस्य सः [ बहुव्रीहि में समास विभक्तिलोप के बाद अन्तर्वर्ती विभक्ति मानकर दिव् की पदसंज्ञा होने से व् का उ–दि + उ + काम, यण् ] द्युकामः [ द्यौः अस्ति अस्य सः इस अर्थ में मतुप् करने पर दिव् + मत्, पदसंज्ञा करने से 'व्' का 'उ' यण्—] द्युमान्। [ विमला द्यौः अस्मिन् तत्—इसमें भी व् का उ, यण्—] विमलद्यु दिनम्। द्युभ्याम्। द्युभिः। [ दिव् + भ्याम् 'स्वादिष्वसर्वनामस्थाने' ( १।४।१४ ) से प्रत्ययपूर्व की पदसंज्ञा होने से 'व्' का उ, यण्—द्युभ्याम्, द्युभिः। ]

निरनुबन्धक 'दिव्' के ग्रहण के कारण धातु रूप से उसका ग्रहण नहीं होता है—अक्षद्यूभ्याम्, अक्षद्यूभिः। [ अक्षैर्दीव्यति—इस अर्थ में अक्ष उपपद दिव् से क्विप् करने पर 'च्छ्वोः शूडनुनासिके च' सूत्र से 'व्' का 'ऊठ्' होने पर यण् हो जाता है। उत् नहीं होता है। ]

---

१. 'उत्तरपदेनापि'–इति पाठा०।

**तपरकरणमूठो निवृत्त्यर्थम्—द्युभ्याम्, द्युभिरिति। अत्र हि परत्वादूठ् प्राप्नोति।**

**पदस्येति किम् ? दिवौ। दिवः॥**

**न्यासः**

इत्यत आह—**तपरकरणमित्यादि**। यद्यप्यनेन दीर्घो न प्राप्नोति, लक्षणान्तरेण तु द्युभ्यां द्युभिः—इत्यत्रोठ् प्राप्नोति, अतः स मा भूदित्येवमर्थं तपरकरणम्। स्यादेतत्। ननु चोठ्प्राप्तिरेव नास्ति, किं तन्निवृत्त्यर्थेन तपरकरणेन ? इत्यत आह—**द्युभ्याम्, द्युभिरिति**। **अत्र हीत्यादि**। उत्त्वस्यावकाशो यत्र झलादिः क्विप्परो न विद्यते—विमलद्यु दिनमिति, ऊठोऽवकाशः—अक्षद्यूभ्यामिति; द्युभ्यामित्यादावुभयप्रसङ्गे परत्वादूठ् प्राप्नोति, तपरकरणादुत्त्वमेव भवति। यदि तर्हि प्राप्तस्योठो निवृत्तये तपरकरणं क्रियते, एवं सति 'च्छ्वोः शूडनुनासिके च' इत्यत्र 'कथं द्युभ्याम्, द्युभिः' इति परेण चोदिते यद्वक्ष्यति—'ऊठि कृते 'दिव उत्' इति तपरत्वान् मात्राकालो भविष्यति" इति, तद्विरुध्यते; तस्योठि कृतेऽभिनिवृत्ते तस्य स्थाने मात्राकाल उकारो भविष्यतीत्ययमर्थः ? नास्ति विरोधः; 'उठि कृते' इत्यस्य हि ग्रन्थस्य पूर्वेण चोद्यग्रन्थेन सह सम्बन्धः, नेतरेण परिहारग्रन्थेन। तत्र 'केचिदत्र क्ङितीति नानुवर्त्तयन्ति' इत्यस्मिन् दर्शनान्तरे उपन्यस्ते, 'कथं द्युभ्यां द्युभिरित्यूठि कृते' इति देश्यम्। तत्रायं चोदयितुरभिप्रायः—यदि क्ङितीति नानुवर्त्तेत, तदा द्युभ्यां द्युभिरित्यत्राप्यूडेव कर्त्तव्यः, ततश्चोठि कृते कथं द्युभ्यां द्युभिरिति सिध्यति, यावता द्यूभ्यां द्यूभिरिति भवितव्यमित्यस्य देश्यस्य 'दिव उत्' इति तपरत्वान् मात्राकालो भविष्यतीत्येष परिहारः। अत्राप्ययं परिहर्तुरभिप्रायः—तपरकरणस्यैतदेव प्रयोजनम् ऊठ् मा भूदिति; अन्यथा तदनर्थकं स्यात्। तस्मादुत्त्वमेव कर्त्तव्यम्, न तूड्भाव इति। ये तु 'क्ङिति' इत्यनुवर्त्तयन्ति, तेषां तपरकरणं विस्पष्टार्थम्॥ १३१॥

**पदमञ्जरी**

अथ तपरकरणं किमर्थम्, यद्यपि 'ऋत उत्' इति तपरकरणेन ज्ञापितम्—'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' ( चां० परि० ४४ ) इति, तथाप्यान्तर्यतोऽर्द्धमात्राकालस्य व्यञ्जनस्य मात्रिक एव भविष्यति ? इत्यत आह—**तपरकरणमिति**। यद्यप्यनेन दीर्घो न प्राप्नोति, लक्षणान्तरेण तु प्राप्नोतीत्याह—**द्युभ्याम्, द्युभिरिति**। उत्वस्यावकाशो यत्रायजादिपरः—विमलद्यु, ऊठोऽवकाशः - द्यूत्वा, द्यूतम्; यत्र तूभयोः प्रसङ्गस्तत्र परत्वादूठ प्राप्नोति, तपरकरणादुत्वमेव भवति। यदि प्राप्तस्योठो निवृत्त्यर्थं तपरकरणमित्युच्यते, एवं तर्हि 'च्छ्वोः शूडनुनासिके च' इत्यत्र 'कथं द्युभ्याम्, द्युभिः' इति परेण चोदिते यद्वक्ष्यति—'ऊठि कृते दिव उदिति तपरकरणान्मात्राकालो भविष्यति' तद्विरुद्ध्यते, तस्य ह्यूठि कृते तस्यैवोठो मात्राकालो भविष्यतीत्ययमर्थः ? नैषः दोषः; 'ऊठि कृते' इत्येतस्य पूर्वेण चोद्यग्रन्थेन सम्बन्धः—'कथं द्युभ्यां द्युभिरिति, ऊठि कृते' इति; 'दिव उत् इति तपरकरणात् मात्राकालो भविष्यति' इत्येतावान् परिहारग्रन्थः। तपरकरणस्य तूण्निवृत्तिरेव प्रयोजनम्। तस्मादुत्वमेवात्र कर्त्तव्यम्, न पुनरूडित्यर्थः॥ १३१॥

**भावबोधिनी**

तपरकरण ऊठ् की निवृत्ति के लिए है—द्युभ्याम्, द्युभिः। इनमें पर होने के कारण ऊठ् प्राप्त होता है। [ जहाँ झलादि क्विप् परे नहीं है, वहाँ उत्व सावकाश है—विमलद्यु दिनम्। जहाँ झलादि क्विप् परे है, वहाँ ऊठ् सावकाश है—अक्षद्यूभ्याम्। द्युभ्याम् आदि में दोनों की प्राप्ति है। पर होने से ऊठ् ही होने लगेगा, इसलिए तपरकरण है। इस तपरकरण का यही प्रयोजन है कि द्युभ्याम्, द्युभिः आदि में ऊठ् न हो। अन्यथा उत् करने का कोई फल ही नहीं रहता है। ]

पद का—इसका क्या फल है ? दिवौ, दिवः। [ यहाँ पद संज्ञा न होने से उत्व नहीं होता है। ]॥ १३१॥

## २५७२. एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ १३२ ॥ ( १७६ )

**एतत्तदौ यावककारौ नञ्समासे न वर्त्तेते तयोर्यः सुशब्दः, कश्च तयोः सुशब्दः ? यस्तदर्थेन सम्बद्धः, तस्य संहितायां विषये हलि परतो लोपो भवति । एष ददाति । स ददाति । एष भुङ्क्ते । स भुङ्क्ते ।**

**न्यासः**

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ नञ्समासे न वर्त्तेतेति ।** अनेन क्रियासम्बन्धं दर्शयन् 'अनञ्समासे' इति प्रसज्यप्रतिषेधोऽयमिति दर्शयति । पर्युदासे हि सति नञिवयुक्तन्यायेन नञ्समासादन्यस्मिन् समासे वर्त्तमानयोः स्यात्—परमैष ददाति, परमस ददातीति; एष ददाति, स ददातीत्यत्र तु न स्यात् । अथ 'स सम्प्रदानम्' इत्यादिको निर्देशो ज्ञापयति—असमासेऽपि भवतीति ? उच्यते; एवमप्येतच्छब्दस्य न स्यात्, योगापेक्षे तु ज्ञापक आश्रीयमाणे प्रतिपत्तिगौरवं स्यादित्यभिप्रायः । **तयोर्यः सुशब्द इति ।** एतेन 'एतत्तदोः' इति सुशब्दापेक्षया सम्बन्धलक्षणेयं षष्ठीत्याचष्टे । यद्येवम्, सुशब्दस्य सापेक्षत्वादसामर्थ्ये सति लोपशब्देन सह समासो नोपपद्यते । गमकत्वात् सापेक्षस्यापि समासो भविष्यतीत्यदोषः । अथ वा—असमासनिर्देश एवायम्, षष्ठी तु 'सुपां सुलुक्' इत्यनेनैव लुप्तत्वान्न श्रूयते । **कश्च तयोः सुशब्द इति ।** एवं मन्यते—आनन्तर्यलक्षणेन वा सम्बन्धेनैतत्तदोः सुशब्दः सम्बन्धी स्यात्, अर्थद्वारेण वा; तत्र हि पूर्वस्मिन् पक्षे सप्तमीबहुवचनस्यापि ग्रहणं स्यात् । भवति हि तदेतदोरानन्तर्यलक्षणेन सह सम्बन्धेन सम्बन्धी । इतरस्मिन् 'अनञ्समासे' इति प्रतिषेधस्यैव वैयर्थ्यं स्यात्—अनेषो ददाति, असो ददातीति । अत्र हि समासद्वारेण सुशब्दः समासस्यैव सम्बन्धी, न त्वेतत्तदोरिति । ननु च सानुबन्धकत्वात् सप्तमीबहुवचनं नाशङ्कनीयमेव ? नैतदस्ति, प्रथमैकवचनमपि हि तद्गुणसंविज्ञाने बहुव्रीहौ सानुबन्धकमेव । तद्गुणसंविज्ञान इति 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' इत्यत्र यदस्त्येकानुबन्धग्रहणं तदपेक्ष्य बोध्यम् । तत्रातद्गुणसंविज्ञानेऽङ्गीकृत एतद्वचनं न घटते; अनुबन्धं त्यक्त्वा सुशब्दो नास्ति, किं तर्हि ? सशब्दः । इयाँस्तु विशेषः—एकस्य पकारोऽनुबन्धः, अपरस्य तूकार इति । तस्माद् द्वयोरपि सानुबन्धकत्वात् सप्तमीबहुवचनमपि युक्तमाशङ्कितुम् । द्वितीये तु पक्षे यो दोषः, तमुत्तरत्र परिहरिष्यामीति चेतसि कृत्वाऽऽह—**यस्तदर्थेन सम्बन्ध इति ।** एवं ब्रुवता प्रथमैकवचनं तयोः सम्बन्धीत्युक्तम् भवति । कथं कृत्वा ? एतत्तच्छब्दौ हि प्रातिपदिके । 'त्रिकञ्च प्रातिपदिकार्थः' इतीदमत्र दर्शनमाश्रितम् । तथाहि 'बहुषु बहुवचनम्' इत्यत्र बहुषु

**पदमञ्जरी**

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ सुशब्द इति ।** एतेन 'एतत्तदोः' इति सुशब्दापेक्षया सम्बन्धलक्षणा षष्ठीत्याचष्टे । यद्येवम्, सु इत्येतस्य सापेक्षत्वाल्लोपशब्देन समासो न प्राप्नोति ? नैवायं समासः, सु इति पृथक्पदम् 'सुपां सुलुक्' इति लुप्तषष्ठीकम् । **कश्च तयोः सुशब्द इति ।** यदि यस्ताभ्यां विहितः सुः स तयोः सम्बन्धी भवति, तदा परमस ददाति, परमैष ददातीत्यादौ न स्यादिति मन्यमानः पृच्छति । इतरो विदिताभिप्रायः परिहरति—**यस्तदर्थेन सम्बद्ध इति ।** अर्थद्वारकश्च सम्बन्धः, यस्तदर्थगतमेकत्वमाचष्ट इत्यर्थः । परमस ददातीत्यादावपि उत्तरपदार्थप्रधानत्वात्तदर्थगतमेवैकत्वमाचष्ट इति सिद्धो लोपः । प्रथमैकवचनस्यात्र सुशब्दस्य

**भावबोधिनी**

एतत् और तत् जो ककाररहित हैं और नञ् समास में विद्यमान नहीं हैं, उनका जो 'सु' शब्द है, उनका सु शब्द कौन सा है ? जो उनके अर्थ से सम्बद्ध है, उस 'सु' का संहिता-विषय में हल् परे रहने पर लोप होता है । उदा०—एष ददाति । स ददाति । एष भुङ्क्ते । स भुङ्क्ते । [ एतत् + सु, 'त्यदादीनामः' सूत्र से त् का अ, "अतो गुणे" से पररूप एष + सु, "तदोः सावनन्त्ययोः" सूत्र से 'त' का स—एस + सु, 'आदेशप्रत्यययोः" से 'स्' का 'ष्'—एष + सु, सुलोप—एष ददाति । तत् + सु, अत्व, पररूप, त + सु, 'त' का स, स + सु, सुलोप । ]

**एतत्तदोरिति किम्? यो ददाति। यो भुङ्क्ते। सुग्रहणं किम्? एतौ गावौ चरतः। अकोरिति किम्? एषको ददाति। सको ददाति। 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' ( व्या० परि० २१ ) इति रूपभेदेऽपि साकच्कावेतत्तदावेव भवतः।**

**अनञ्समास इति किम्? अनेषो ददाति। असो ददाति। उत्तरपदार्थप्रधानत्वात् नञ्समासस्यै-तत्तदोरेवात्र सम्बद्धः सुशब्दः।**

**न्यासः**

**बहुवचनं भवति।** बहुत्वमस्य वाच्यं भवतीत्यर्थः। 'कर्मादयोऽप्यपरे विभक्तीनां वाच्यास्तदीये' ( १.४.२१ ) इति ब्रुवाणेन संख्यायाः कर्मादीनाञ्च विभक्तिवाच्यत्वमिति दर्शितम्, अर्थाच्च त्रिकत्वम्, 'स्वार्थद्रव्य-लिङ्गात्मकं प्रातिपदिकार्थः' इति तस्य प्रातिपदिकार्थस्य यदेकत्वं तत्र प्रथमैकवचनमेव भवति, न सप्तमीबहुवचनम्। तद् व्यधिकरणस्यैव बहुत्वे भवति। तस्माद् एतत्तदोरर्थद्वारकेण प्रथमैकवचनमेव सम्बद्धम्, न सप्तमीबहुवचनम्।

**एष ददातीति।** 'तदोः सः सावनन्त्ययोः' इति सत्वम्, त्यदाद्यत्वम्, 'आदेशप्रत्यययोः' इति षत्वम्।

**एषक इति।** 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच्। ननु साकच्कावेतौ भिन्नरूपत्वादेतत्तदौ न भवतः, तत् किम् 'अकोः' इति प्रतिषेधेन? इत्यत आह—**तन्मध्यपतित इत्यादि।** तस्याश्च परिभाषाया अस्तित्व एष एव 'अकोः' इति प्रतिषेधो ज्ञापकः, 'नेदमदसोरकोः' इति च।

ननु च नञ्समासे कृते शब्दान्तरस्य सम्बन्धी सुर्भवति, नैतत्तदोः, ततश्च प्रसङ्गो नास्तीति किम् 'अनञ्समासे' इति प्रतिषेधेन? इत्यत आह—**उत्तरपदार्थप्रधानत्वादित्यादि।** यद्यपि शब्दान्तरं **नञ्समासः,** तथापि तस्योत्तरपदार्थप्रधानत्वादेतत्तदोश्चोत्तरपदत्वात् तत्सम्बन्धिन्यामेव संख्यायां सुशब्द उत्पन्न इति तयोरेव

**पदमञ्जरी**

ग्रहणम्, न सप्तमीबहुवचनस्य। 'स्यश्छन्दसि' 'सोऽचि लोपे चेत्पादपूरणम्' इत्यत्र ह्यस्यैव सम्भवः द्वयोः सामान्येन ग्रहणं तर्हि कस्मान्न भवति? एवं तर्हि 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' ( व्या० परि० ५३ ) इति प्रथमैकवचनस्यैव ग्रहणम्, तस्य ह्युकार उच्चारणार्थः, नानुबन्धः। **एष इति।** 'तदोः सः सावनन्त्ययोः' इति सकारः, त्यदाद्यत्वम्, षत्वम्। **एषक इति।** 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच्।

ननु रूपभेदात्साकच्कावेतत्तदावेव न भवतः, तत्किम् 'अकोः' इति प्रतिषेधेन? तत्राह—**तन्मध्यपतित इति।** अस्याश्च परिभाषाया ( व्या० परि० २१ ) अस्तित्वे अयमेव प्रतिषेधो लिङ्गम्।

**भावबोधिनी**

एतत् और तत् के—इसका क्या फल है? यो ददाति, यो भुङ्क्ते। [ यत्+सु में अत्व, पररूप—य+सु, सु का रुत्व, उत्व, गुण करने पर यो ददाति। यहाँ सुलोप नहीं होता है। ] सु का ग्रहण किस लिए है? एतौ गावौ चरतः। [ यहाँ एतत्+औ है, लोप नहीं होता है। ] ककाररहितों का—इसका क्या फल है? एषको ददाति। सको ददाति। [ एतत्+सु, तत्+सु, अत्व, पररूप करने के बाद "अव्ययसर्वनाम्नामकच् प्राक् टेः" सूत्र से टि के पूर्व अकच् = अक आगम होता है—एत् अक अ+सु, त् अक अ+सु में ककारसहित होने के कारण सुलोप नहीं होता है। सत्व, षत्व, रुत्व, उत्व गुण कर देने पर एषको ददाति, सको ददाति बनते हैं। ] 'उसके मध्य में आया हुआ उसके ग्रहण से गृहीत होता है', इस न्याय से रूप का भेद होने पर भी अकच्विशिष्ट भी एतत् और तत् ही रहते हैं। [ अतः सुलोप की प्राप्ति का वारण करने के लिए—'अकोः' कहना आवश्यक है। ]

नञ्समास न रहने पर—इसका क्या फल है? अनेषो ददाति। असो ददाति। [ न एषः, न सः—इन अर्थों में नञ् समास है, प्रथम में "नलोपो नञः" से न् के लोप के बाद 'तस्मान्नुडचि' सूत्र से नुट् = न् का आगम करने पर अन् एष+सु, रुत्व, उत्व, गुण करने पर अनेषो ददाति ] नञ् समास उत्तरपदार्थप्रधान होता है, इसलिए यहाँ सु शब्द एतत् और तत् से सम्बद्ध ही है।

**हलीति किम् ? एषोऽत्र । सोऽत्र ॥**

## २५७३. स्यश्छन्दसि बहुलम् ॥ १३३ ॥ ( ३५२६ )

**'स्य' इत्येतस्य च्छन्दसि हलि परतो बहुलं सोर्लोपो भवति । 'उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि' ( ऋ० ४.४०.४ ) । 'एष स्य ते पवत इन्द्र सोमः' ( ऋ० ९.९७.४६ ) ।**

**न च भवति—यत्र स्यो निपतेद् ॥**

## २५७४. सोऽचि लोपे चेत्पादपूरणम् ॥ १३४ ॥ ( १७७ )

**'सः' इत्येतस्याचि परतः सुलोपो भवति, लोपे सति चेत्पादः पूर्यते । 'सेदु राजा क्षयति चर्षणीनाम्' ( ऋ० १.३२.१५ ) । 'सौषधीरनुरुध्यसे' ( ऋ० ८.४३.९ ) ।**

**लोपे चेत्पादपूरणमिति किम् ? स इव व्याघ्रो भवेत् ।**

### न्यासः

सुर्भवति । तस्मादस्ति प्राप्तिरिति प्रतिषेधः क्रियते । समास इति किम् ? वाक्ये प्रतिषेधो मा भूत्—नैष ददाति, न स पश्यतीति ॥ १३२ ॥

**स्यश्छन्दसि बहुलम् ॥** स्य इति त्यदः प्रथमैकवचनम्, तस्यानुकरणम् । तस्माच्च या षष्ठ्युत्पन्ना तस्याः 'सुपां सुलुक्' इत्यादिना लुक् । अनुत्पत्तिरेव तस्याः; अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वाद्, यथा—गवित्यय-माहेति । उदाहरणे तु पूर्ववत् सत्वादिकार्यम् ॥ १३३ ॥

**सोऽचि लोपे चेत् पादपूरणम् ॥** सोऽचीति पूर्ववत् तस्य प्रथमैकवचनान्तस्यानुकरणम् । पादपूरणम्= पादनिष्पत्तिः ।

### पदमञ्जरी

उत्तरपदार्थप्रधानत्वादिति । एतच्च नञ्सूत्र एव व्याख्यातम् । 'हल्ङ्याब्भ्यः' इत्यस्यानन्तरमिदं न कृतम्—संहितायां यथा स्यात्, असंहितायां मा भूदिति ॥ १३२ ॥

**स्यश्छन्दसि बहुलम् ॥** स्य इति यदित्यस्य प्रथमान्तस्यानुकरणम् 'सुपां सुलुक्' इति लुप्तषष्ठीकम् । अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादनुत्पत्तिरेव वा षष्ठ्याः । उदाहरणे सत्वादि पूर्ववत् ॥ १३३ ॥

**सोऽचि लोपे चेत्पादपूरणम् ॥** स इति निर्देशः पूर्ववत् ।

### भावबोधिनी

हल् परे रहते—इसका क्या फल है ? एषोऽत्र । सोऽत्र । [ यहाँ अच् परे है । अतः सुलोप न होकर रुत्व, उत्व, गुण पूर्वरूप होता है । ] ॥ १३२ ॥

'स्य' इससे वेदविषय में हल् परे रहते बहुलरूप से सु का लोप होता है । उदा०—उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि । एष स्य ते पवत [मधुमाँ] इन्द्र सोमः । [ यहाँ स्य = त्यद् + सु के सु का लोप हुआ है । ]

सुलोप नहीं भी होता है—यत्र स्यो निपतेत् । [ त्यद् + सु, अत्व, पररूप, सु का रुत्व, उत्व, गुण—स्यो । ] ॥ १३३ ॥

'सः' इसके सु का लोप अच् परे रहते हो जाता है यदि सु का लोप कर देने पर पाद की पूर्ति हो रही हो तो । उदा०—सेदु राजा चर्षणीनाम् । सौषधीरनुरुध्यसे । [ स + सु + इदु, स + सु + ओषधि में सु का लोप करने के बाद गुण और वृद्धि सन्धियाँ हुई हैं । ]

**अचीति विस्पष्टार्थम् ।**

**पादग्रहणेनात्र श्लोकपादस्यापि ग्रहणं केचिदिच्छन्ति, तेनेदमपि सिद्धं भवति—**

**सैष दाशरथी रामः, सैष राजा युधिष्ठिरः ।**
**सैष कर्णो महात्यागी, सैष भीमो महाबलः ॥**

## २५७५. सुट् कात् पूर्वः ॥ १३५ ॥ ( २५५३ )

**अधिकारोऽयम् 'पारस्करप्रभृतीनि च संज्ञायाम्' ( ६.१.१५७ ) इति यावत् । इत उत्तरं यद्वक्ष्यामस्तत्र 'सुट्' इति, 'कात्पूर्वः' इति चैतदधिकृतं वेदितव्यम् । वक्ष्यति—"'सम्पर्युपेभ्यः करोतौ भूषणे' ( ६.१.१३७ ) । संस्कर्ता । संस्कर्तुम् । संस्कर्तव्यम्" ।**

**न्यासः**

ननु चारम्भसामर्थ्यादेवाचि विज्ञायते, हलि हि पूर्वेणैव सिद्धत्वात्, तत् किमर्थमचीति क्रियते ? इत्याह—**अचीति विस्पष्टार्थमिति ।**

**केचिदिच्छन्तीति ।** ते च्छन्दोग्रहणं नानुवर्त्तयन्तीति ॥ १३४ ॥

**सुट् कात् पूर्वः ॥ संस्कर्त्तेति ।** 'सम्पुंकानां सत्वम्' इति वचनात् 'समः सुटि' इति निर्देशाद्वा समो मकारस्य सकारः, 'अत्रानुनासिकः पूर्वस्य तु वा' इति पूर्वाकारस्यानुनासिकः ।

**पदमञ्जरी**

**केचिदिति ।** स्वयं तु छन्दोऽधिकाराहक्पादस्यैव ग्रहणं मन्यते ॥ १३४ ॥

**सुट् कात् पूर्वः ॥ संस्कर्त्तेति ।** 'सम्पुंकानां सो वक्तव्यः' ( वा० ९.३६ ) इति वचनात् 'समस्सुटि' इति द्विसकारकत्वाद्वा निर्देशस्य समो मकारस्य सकारः, 'अत्रानुनासिकः पूर्वस्य तु वा' इति पूर्वस्यानुनासिकः । इह 'सम्पर्युपेभ्यः करोतौ भूषणे', 'किरतौ लवने' इत्यादौ ककारादावागमिनि टित्त्वादेव सुट् कात्पूर्वो लभ्यते । 'ह्रस्वाच्चन्द्रोत्तरपदे' इत्यादौ कात्पूर्वत्वसम्भवादनुपयोग एवेत्यनर्थकं कात्पूर्वग्रहणम् । स्यादेतत् संचस्कारे-

**भावबोधिनी**

लोप होने पर पाद की पूर्ति—इसका क्या फल है ? स इव व्याघ्रो भवेत् । [ यहाँ पाद की पूर्ति नहीं है । अतः इससे सुलोप न होकर सु का रुत्व, "भोभगो" से यत्व, "लोपः शाकल्यस्य" सूत्र से य् का लोप कर देने पर—स इव बनता है । यह य् लोप गुणादि की दृष्टि में असिद्ध हो जाता है अतः इसमें गुणादि कार्य नहीं होते हैं । ]

[ पूर्ववर्ती "एतत्तदोः" सूत्र से हल् परे रहते 'सु' लोप कहा ही गया है । अतः यह तो इस विधान-सामर्थ्य से ही सिद्ध था कि अच् परे रहते लोप होता है, तब 'अचि' किसलिए ? इसका उत्तर देते हैं—] 'अचि' यह स्पष्टता के लिए है ।

पाद-ग्रहण से यहाँ श्लोक के पाद का ग्रहण भी कुछ लोग चाहते हैं, इससे यह भी सिद्ध होता है—सैष = यह वही दशरथ के पुत्र राम हैं, सैष = यह वही राजा युधिष्ठिर है, सैष = यह वही महात्यागी कर्ण हैं, सैष = यह वही महाबली भीमसेन हैं । [ स + सु + एष में 'सु' के लोप के बाद वृद्धि होने से सभी चार रूपों में 'सैष' बना है । ] ॥ १३४ ॥

यह अधिकार है "पारस्करप्रभृतीनि च संज्ञायाम्" ( ६।१।१५७ ) तक । इस सूत्र के आगे जिन्हें कहेंगे, उनमें 'सुट्' और 'कात् पूर्वः' [ ककार से पहले सुट् का आगम होता है—] यह अधिकृत समझना चाहिए । आगे कहा जायगा—"सम्पर्युपेभ्यः करोतौ भूषणे" ( ६।१।१३७ ) [ सुट् करने पर ] संस्कर्ता । संस्कर्तुम् । सस्कर्तव्यम् । [ इनकी प्रक्रिया ६।१।१३७ में ही लिखी जायगी । ]

**कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम्। तथा हि—संस्क्रृषीष्ट, संस्क्रियते इति संयोगादिलक्षणाविड्गुणौ**

**न्यासः**

अथ कात्पूर्वग्रहणं किमर्थम्, यावता सुडयमादिलिङ्गः, करोतिश्च ककारादिः, तत्रान्तरेणापि कात्पूर्वग्रहणम् 'आद्यन्तौ टकितौ' इति कात्पूर्व एव सुड् भविष्यति ? इत्यत आह—**कात्पूर्वग्रहणमित्यादि**। किं पुनरभक्तत्वे सतीष्टं सिध्यतीति, अतस्तज्ज्ञापकं प्रति यत्नः क्रियते ? इत्याह—**तथा हीत्यादि। संस्क्रृषीष्टेति।** आशिषि लिङ्, सीयुट्, आत्मनेपदम्, 'उश्च' इति कित्त्वाद् गुणाभावः, 'सुट् तिथोः' इति तकारस्य सुडागमः, कात्पूर्वः सुट्, स यदि करोतेर्भक्तः स्यात् ततस्तस्य करोतिग्रहणेन ग्रहणात् कृञः संयोगादित्वं जातमिति 'ऋतश्च संयोगादेः' इतीट् प्रसज्येत। **संस्क्रियत इति।** लट्, कर्मण्यात्मनेपदम्, यक्, 'रिङ् शयग्लिङ्क्षु' इति

**पदमञ्जरी**

त्यादावभ्यासे सञ्जाते साभ्यासस्य करोतित्वाच्चात्पूर्वः सुट स्यात्, मा भूच्चात्पूर्वः, कात्पूर्व एव यथा स्यादित्येवमर्थं कात्पूर्वग्रहणमिति ? तन्न; अत्र हि लिटि द्विर्वचनं च प्राप्नोति, सुट् च; तत्र द्विर्वचनमकृते सुटि कृशब्दस्य प्राप्नोति, कृते तु स्कृशब्दस्य। सुडपि कृते द्विर्वचने चकृशब्दस्य प्राप्नोति, अकृते तु कृशब्दस्येत्युभयोरनित्ययोः परत्वात् सुटि कृते तस्य धातुग्रहणेन ग्रहणात् सहैव तेन द्विर्वचने 'शर्पूर्वाः खयः' इति खयः शेषे संचस्कारेति सिद्धम्। न च साभ्यासस्याकृतः सुडिति पुनः सुट्प्रसङ्गः; अस्मिन्नेव प्रयोगे लक्षणस्य प्रवृत्तत्वात्।

ननु 'पूर्वं धातुः साधनेन युज्यते' ( सीर० परि० १२८ ) इति दर्शने पूर्वं साधनवाचिनि लकारे तदाश्रये च द्विर्वचने एकपदाश्रयत्वादन्तरङ्गे कृते पदद्वयाश्रयत्वाद्बहिरङ्गः सुट् पश्चाद्भवन् चात्पूर्वः स्यात्, समस्करोदित्यादौ चान्तरङ्गत्वात् परत्वाच्चाटि कृते तेन व्यवधानान्नैव सुट् स्यात्, विकरणान्ताङ्गभक्तो ह्यडागमस्तमेव न व्यवदध्यात्, करोतिं तु व्यवदधात्येव; इह च समस्कृत, संस्कृथा इति यत्र करोतिरेवाङ्गं तत्राटः कृग्रहणेन ग्रहणादट एव पूर्वः सुट् स्यात्, अतोऽडभ्यासयोरपि कृतयोः कात् पूर्वः सुड्यथा स्यादिति कर्तव्यं कात्पूर्वग्रहणम् ? न कर्त्तव्यम्; 'अडभ्यासव्यवायेऽपि' इत्येतस्मादेव निर्देशादेतत्सिद्धम्। न च तत्र करिष्यामीति कात्पूर्वग्रहणम्, कृतेऽप्यस्मिन्नसिद्धेः। तथा हि—क्रियमाणमप्येतत्कालावधारणार्थं वा स्यात्—करोतेस्तस्यामवस्थायां सुड् भवति यस्यामवस्थायां भवन् कात्पूर्वो भवतीति। करोत्यवधारणार्थं वा—तस्य करोतेः सुड् भवति यस्य भवन् कात्पूर्वो भवतीति। तत्र पूर्वस्मिन्पक्षे यद्यप्यन्तरङ्गे अप्यड्द्विर्वचने बाधित्वा कात्पूर्वग्रहणसामर्थ्यात् पूर्वं सुड् भवति, पाश्चात्तयोः कृतयोरिष्टं सिद्धचति। द्वितीये तु प्रत्युताभ्यासवतोर्निवृत्त्यर्थमेव कात्पूर्वग्रहणं स्यात्, न हि तद्वतोर्भवन् कात्पूर्वः कृतः स्यात्। स्यादेतत्—न करोत्यवधारणार्थं कात्पूर्वग्रहम्, किं तर्हि ? अपकृष्य विधिः, करोतेः सर्वत्र सुड् भवति, स तु प्रदेशान्तरे प्राप्तः कात्पूर्वः कर्त्तव्य

**भावबोधिनी**

कात् पूर्वः ( ककार से पहले होता है )—सुट् का अभक्तत्व ( =अनवयवत्व ) ज्ञापित करने के लिए है। [ क्योंकि इसके कहे बिना भी टित् होने के कारण 'आद्यन्तौ टकितौ' के आधार पर आदि में ही हो जाता। परन्तु वह आद्यवयव बनाता है। जब 'क' से पूर्व होता है—ऐसा अलग से कहा गया तब सुट् ककारवान् का अवयव नहीं माना जाता। ] इसे इस प्रकार समझना चाहिए—संस्कृषीष्ट और संस्क्रियते—इनमें संयोगादिलक्षण ( संयोगादि मानकर होने वाले ) इट् और गुण नहीं होते हैं। [ सम् + कृ + लिङ् ( आशीः ) आत्मनेपद, सीयुट् = सीय्, "सुट् तिथोः" सूत्र से 'त' से पूर्व सुट् आगम—सम् + कृ + सीय्—स् त, 'लोपो व्योर्वलि' से य् लोप और प्रस्तुत सूत्र से क् से पूर्वं सुट् = स् करने पर सम् स् कृ + सी स् त, यदि सुट् को कृ का अवयव मानेंगे तो संयोगादि मानकर "ऋतश्च संयोगादेः" सूत्र से गुण की प्रसक्ति होती है। इसीलिए इस सुट् को अवयव नहीं माना जाता है। म् का

**( ७.२.४३ ) न भवतः । 'तिङ्ङतिङः' ( ८.१.१८ ) इति निघातोऽपि तर्हि न प्राप्नोति, सुटा व्यवहितत्वात् ? 'स्वरविधौ व्यञ्जनमविद्यमानवत्' ( व्या० परि० २७ ) इति वचनान्नास्ति व्यवधानम् ।**

**सञ्चस्करतुः, सञ्चस्करुः—इति गुणः कथम् ? 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' (व्या० परि० २१) इति ।**

**न्यासः**

रिङादेशः । तत्र यदि करोतिभक्तत्वं सुटः स्यात्, ततश्च संयोगादित्वं करोतेर्जातमिति 'गुणोऽर्तिसंयोगाद्योः' इति गुणः स्यात् । अभक्तत्वे तु सुटः संयोगादित्वादिड्गुणौ न भवतः । **तिङ्ङतिङ इत्यादि** । यद्यभक्तः सुट्, तदा संस्क्रियत इत्यत्र समः पदस्य सुटा व्यवहितत्वात् 'तिङ्ङतिङः' इति निघातो न सिध्यति । न च सुट एव पदस्य तिङो लभ्यते; पदादित्यधिकारात् सुटश्चापदत्वात् । **स्वरविधावित्यादि** परिहारः ।

'ऋतश्च संयोगादेः' इत्यनेन ऋकारान्तस्याङ्गस्य संयोगादेर्लिटि गुणो विधीयते, स चाभक्ते सुटि करोतेरसंयोगादित्वान्नोपपद्यत इति मन्यमान आह—**सञ्चस्करतुरित्यादि** । गुणः कथम् ? न कथञ्चिदित्यर्थः । **तन्मध्य इत्यादि** । द्विर्वचने कृते द्वौ करोती भवतः, तन्मध्ये चायं वर्त्तते सुट्, अतः 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति करोतिग्रहणेनैव गृह्यते, ततो नास्त्यसंयोगादित्वं कृञ इति भावः ।

**पदमञ्जरी**

इति ? एवमपि समस्कृत, समस्कृथा इति सिद्ध्यति, अटः प्राक्प्राप्नुवन् कात्पूर्वो नीयत इति, समस्करोदित्यादौ त्वसिद्धिरेव, कथम् ? प्रदेशान्तरे प्राप्तस्य विधिरपकृष्य भवति, न चात्र सुट् प्राप्तोऽटा व्यवधानादिति कथमपकृष्य विधिर्भवेत् । कथं च संचस्कारेत्यादावपि द्विःप्रयोगे द्विर्वचने उच्चारणभेदाच्छब्दभेद इति द्वौ करोती, तत्र यः समोऽनन्तरो न तस्य ककारः, यस्य च ककारो नासौ समोऽनन्तरः—इति अप्राप्तत्वान् न कात्पूर्वं विधीयेत ? स्थाने द्विर्वचने च स्थानिवद्भावादेक एव करोतिः, स चाव्यवहित इति कात् पूर्वः प्राप्तः कात् पूर्वः कृत इति न कश्चिद्दोषः । तदेवं 'धातुः पूर्वं साधनेन युज्यते' ( सीर० परि० १२८ ) ततश्च क्रियमाणेऽपि कात्पूर्वग्रहणे नैवेष्टं सिध्यतीति 'अडभ्यासव्यवायेऽपि' इत्येतदेव कर्त्तव्यम् । कात्पूर्वग्रहणं तु शक्यमकर्त्तुमिति **वार्त्तिककारस्य पक्षः** ।

यदि तु 'सम्पर्युपेभ्यः करोतौ' इति तृतीयानिर्देशेन समादिभिरुपसृष्टस्य सुड् विधीयते, तदा व्यवहितस्याप्युपसृष्टत्वात्कात्पूर्वग्रहणेनाप्ययमर्थः शक्यते सम्पादयितुम् । कथम् ? समस्करोदित्यादौ तावदन्तरेणापि कात्पूर्वग्रहणमटो न भविष्यति; तस्य करोति प्रत्यनवयवत्वात् । करोतेस्तु भविष्यति; व्यवहितस्याप्युपसृष्टत्वात् । समस्कृतेत्यादौ त्वटः पूर्वं प्राप्तः कात्पूर्वं चेष्यते । संचस्कारेत्यादौ च स्थाने द्विर्वचने कात्पूर्वं प्राप्तः कात्पूर्वं करिष्यते । द्विःप्रयोगे तु द्वयोरपि करोत्योः प्राप्तः पूर्वस्मादेव करिष्यते, न हि तस्य कृतः कात्पूर्वः कृतः स्यादिति सिद्धमिष्टम् ।

**भाष्यकारस्तु** मेने–उभयं न कर्त्तव्यम् । 'पूर्वं धातुरुपसर्गेण युज्यते', ( सीर० परि० १२९ ) ततश्चानुत्पन्न एव प्रत्यये संकृ इति स्थिते सुटि कृते लकारः, ततस्तन्निबन्धनावडभ्यासौ ससुट्कस्यैव भविष्यतः । ननु च लब्धस्वरूपा क्रिया विशेषणमाकाङ्क्षति, तल्लाभश्च साधनान्तर इति 'पूर्वं धातुः साधनेन युज्यते' ( सीर० परि०

**भावबोधिनी**

अनुस्वार दोनों सकारों के षकार, ष्टुत्व करने पर—संस्कृषीष्ट बनता है । सम् + कृ + लट् कर्म अर्थ में, 'सार्वधातुके यक्' से यक्—सम् कृ + य + त, "रिङ् शयग्लिङ्क्षु" सूत्र से 'ऋ' का 'रि' करने पर सम् क्रियते, सुट्, सम् स् क्रियते । यदि सुट् अवयव होता तो "गुणोऽर्तिसंयोगाद्योः" से गुण होने लगता । यदि सुट् अवयव नहीं माना जाता तब तो ] "तिङ्ङतिङः" सूत्र से निघात भी नहीं हो सकेगा क्योंकि सुट् का व्यवधान हो जाता है [—संस्क्रियते यहाँ सम्

**संयोगोपधग्रहणं च 'ऋतश्च संयोगादेर्गुणः' ( ७.४.१० ) इत्यत्र कर्तव्यम् ।**

**न्यासः**

ननु च 'द्विष्प्रयोगो द्विर्वचनम्' इत्यस्मिन् पक्ष उच्चारणमात्रं भिद्यते, धातुस्त्वेक एव, तत् कथं करोतेर्द्वित्वम् ? नैष दोषः; यद्यपि धातुरभिन्नः, तथाप्युच्चारणभेदाद्भेदस्तस्याश्रित इति; अडभ्यासव्यवायेऽपीति वचनात् । अभेदे हि व्यवाय एव नास्तीत्यभ्यासग्रहणमनर्थकं स्यात् । अथापि कथञ्चित् स तद्ग्रहणेन न गृह्यते, एवमपि गुणो भवत्येवेति दर्शयन्नाह—**संयोगेत्यादि** । संयोगोपधग्रहणे हि सति संयोग उपधा यस्येति संयोगोपधत्वेन ऋकारं विशेष्य पश्चात् तेनाङ्गं विशेष्येत—तदन्तस्याङ्गस्येति । तत्र यद्यपि करोतेरङ्गं संयोगोपधं न भवति, ऋकारस्तु भवतीति गुणो भवत्येव । तर्ह्यभक्तः सुट् ।

**पदमञ्जरी**

१२८ ) लब्धस्वरूपेति, कोऽर्थः ? किं प्रतिपन्नस्वरूपा, उत निष्पन्नस्वरूपा ? निष्पत्तिस्तावद्विशेषणसम्बन्धेनोपयुज्यते, प्रतिपत्तिस्तु विशेषणसम्बन्धात्प्रागपि क्रियायाः सम्भवति । विशिष्टा च क्रिया साधनेन युज्यते, तथा हि—तिष्ठतीति गतिनिवृत्तेः साधनसम्बन्धः प्रतीयते, प्रतिष्ठत इति गतेः, गच्छतीति गमनस्य, आगच्छतीत्यागमनस्य, करोतीति व्यापारमात्रस्य, संस्करोतीति भूषणस्य । विशिष्टा च क्रियोपसर्गसम्बन्धे सत्येव प्रतीयत इति द्योतकत्वेन वाचकत्वेन वा पूर्वमुपसर्गसम्बन्धोऽपेक्षणीयः । अवश्यं चैतदेवं विज्ञेयम्; अन्यथा भवतेरकर्मत्वाद्भावे लकार उत्पन्ने पश्चादनुशब्देन सम्बन्धे 'अनुभूयते कम्बलो देवदत्तेने'ति कथं कर्मणि लकारः स्यात् ? अतः 'पूर्वं धातुरुपसर्गेण युज्यते' ( सीर० परि० १२९ ) इत्येतदेव सम्प्रतिपन्नम् । एवं च पूर्वोक्तन्यासेन सिद्धमिष्टमिति नार्थः कात्पूर्वग्रहणेन, नापि 'अडभ्यासव्यवायेऽपि' इत्यनेन । यदि पूर्वं धातुरुपसर्गेण युज्यते; अध्येता, प्रत्येता, प्रत्यायक इत्यादौ पूर्वं धातूपसर्गयोरेकादेशे तस्य धातुं प्रत्यादिवत्त्वात्तत एव प्रत्ययोत्पत्तावनिष्टं प्राप्नोति ? नैष दोषः, 'नेन्द्रस्य परस्य' इत्यत्र ज्ञापितमेतत्—पूर्वोत्तरपदयोस्तावत्कार्यं भवति, पश्चात् स्वरसन्धिरिति । 'प्रत्यय' इति वा निर्देशोऽस्यार्थस्य ज्ञापकः ।

**वृत्तिकारस्तु**—उभयं वक्तव्यमिति मन्यमानः कात्पूर्वग्रहणस्य तावत्प्रयोजनमाह—**कात्पूर्वग्रहणमित्यादि** । किं पुनरभक्तत्वे प्रयोजनम् ? अत आह—**तथा हीति** । **संस्कृषीष्टेति** । आशिषि लिङ्, आत्मनेपदम्, 'उश्च' इति कित्त्वम्, सुट्, तयोः कात्पूर्वः सुट्, तस्य करोतिभक्तत्वात् करोतिग्रहणेन ग्रहणात् कृञः संयोगादिता ज्ञायेतेति 'ऋतश्च संयोगादेः' इतीट् प्रसज्येत । **संस्क्रियत इति** । कर्मणि लट् 'रिङ् शयग्लिङ्क्षु' । अत्रापि भक्तत्वे सुटः कृञः संयोगादित्वात् 'गुणोऽर्तिसंयोगाद्योः' इति गुणः स्यात्, अतस्तौ मा भूतामिति अभक्तः सुडेषितव्य इति भावः । निघातोऽपि तर्हि न प्राप्नोति ? समः पदस्य सुटा व्यवहितत्वात्, सुटश्चापदत्वात् ।

**गुणः कथमिति** । सुटोऽभक्तत्वेनाङ्गस्य संयोगादित्वाभावात्प्रश्नः । 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते'

**भावबोधिनी**

इस पद के बाद सुट् का व्यवधान है तब 'क्रियते' तिङन्त है ] ? "स्वर के विधान में व्यंजन को अविद्यमान के समान माना जाता है" इस वचन से [ सुट् का ] व्यवधान नहीं हैं ।

[ सुट् अवयव नहीं होता है तब उसके हो जाने पर भी संयोगादि नहीं हो पाता है इस लिए ] 'सञ्चस्करतुः, सञ्चस्करुः'—इनमें [ "ऋतश्च संयोगादेर्गुणः" पा० सू० ७।४।१० सूत्र से ] गुण कैसे होगा ? 'उसके बीच में पतित = आया हुआ उस समुदाय के ग्रहण से गृहीत होता है' इस वचन से [ सुट् भी उसका अवयव हो जाता है क्योंकि द्वित्व कर देने पर समुदाय की ही अङ्ग संज्ञा होती है । अतः सञ्चस्कृ + अतुस् में गुण ] हो जाता है ।

[ अवयव हो जाने पर भी सञ्चस्कृ + अतुस् में धातु तो संयोगादि नहीं है तब गुण कैसे होगा ? ] "ऋतश्च संयोगादेर्गुणः" इस सूत्र में 'संयोगोपध' का ग्रहण करना चाहिये । [ संयोग है उपधा जिसकी ऐसी ऋकारान्त धातु ( अंग )

**टित्करणम्—'सुट्स्तुस्वञ्जाम्' ( ८.३.७० ) इत्यत्र विशेषणार्थम् ॥**

**२५७६. अडभ्यासव्यवायेऽपि ॥ १३६ ॥ ( २५३९ )**

**अड्व्यवाये, अभ्यासव्यवायेऽपि सुट् कात्पूर्वो भवति। समस्करोत्। समस्कार्षीत्। सञ्चस्कार। परिचस्कार।**

**न्यासः**

टित्करणं किमर्थम् ? तद्धि तदादित्वात् तद्भक्तता यथा स्यादित्येवमर्थं क्रियते। अभक्तश्चेत् सुट् तदा टित्करणस्य वैयर्थ्यमेवापन्नमित्यत आह—**टित्करणमित्यादि**। 'सुस्तुस्वञ्जाम्' इत्युच्यमाने सुरेत्यादौ यः सुशब्दो यश्चोपसर्गस्तस्यापि ग्रहणं स्यात्। ततश्चातिसुस्थिरः, अतिसुस्थित इत्यादावपि षत्वं प्रसज्येत। तस्माद् विशेषणार्थं टित्करणम् ॥ १३५ ॥

**अडभ्यासव्यवायेऽपि ॥ अड्व्यवायेऽभ्यासव्यवायेऽपीति**। व्यवायः=व्यवधानम्। अपिशब्दादव्यवायेऽपि। असत्यपिशब्दे व्यवाय एव स्यात्। **समस्करोदिति**। लङ्। **समस्कार्षीदिति**। लुङ्, च्लिः, तस्य सिच्, 'सिचि वृद्धिः' इत्यादिना वृद्धिः, 'इतश्च' इतीकारलोपः, 'अस्तिसिचोऽपृक्ते' इतीट्। **सञ्चस्करतुरिति**। लिट्।

यदि पूर्वं धातुः साधनेन युज्यते, तदा साधनाभिधायिनि प्राग्लकारे कृते तन्निमित्ताभ्यामडभ्यासाभ्यां भवितव्यम्, ततश्च तद्व्यवधाने सति सुड् न प्राप्नोतीति तदर्थं युज्यतेऽस्यारम्भः। न च पूर्वं धातुः साधनेन

**पदमञ्जरी**

( व्या परि० २१ ) इति स्थाने द्विर्वचनपक्षे द्विःप्रयोगे च समुदायस्यैवाङ्गसंज्ञेत्युक्तम्, ततश्च तदङ्गमध्यपतितः तदङ्गग्रहणेन गृह्यते।

नन्वेवमपि असंयोगादित्वं तदवस्थम् ? अत आह—**संयोगोपधग्रहणं चेति**। अन्त्यादचः पूर्वस्य वर्णस्योपधासंज्ञाविधानात् 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' ( व्या० परि० २१ ) इत्येदुक्तं भवति यदि न सम्भक्तः सुट् टित्करणं किमर्थम् ? इत्यत आह—**टित्करणमिति**। 'सुट्स्तुस्वञ्जाम्' इत्युच्यमाने सुरेत्यादौ यः सुशब्दो यश्चोपसर्गस्तस्यापि ग्रहणं स्यात्, ततश्च सुरां परिचष्टे परिसुरयतीत्यादावपि प्राप्नोति ॥ १३५ ॥

**अडभ्यासव्यवायेऽपि** ॥ व्यवायः=व्यवधानम्, अपिशब्दादव्यवधानेऽपि, असति तु तस्मिन् व्यवाय एव स्यात्। **'संचस्करिथेति**। 'ऋतो भारद्वाजस्य' इत्येतदप्यसुट एवेष्यत इति वचनादिडागमः। **पूर्वं धातुरित्यादि**। यद्यपि 'पूर्वं धातुः साधनेन युज्यते' ( सीर० परि० १२८ ) इत्यत्रापि दर्शने सुतरामेतदनारम्भणीयम्, तथापि स्वदर्शनत्वादुपपन्नत्वाच्चेदमेव दर्शनमुपन्यस्तम्। अपर आह–'किमर्थं पुनरिदमुच्यते' इत्यस्यानन्तरं यावतेति पठितव्यम्, ततश्च पश्चादडभ्यासावित्येवमन्तश्चोद्यग्रन्थः' इति। परिहरति—

**भावबोधिनी**

उसका गुण होता है। अतः 'सञ्चस्करतुः' में गुण हो जायेगा। यदि ऐसा है तब सुट् का टकार व्यर्थ है, क्योंकि आदि अवयव बनाने के लिए ही वह अनुबन्ध है ?] टित् करना तो "सुट्स्तुस्वञ्जाम्" ( =परिनिविभ्यः सेवसितसयसिवसुट्स्तुस्वञ्जाम्" पा० सू० ८।३।७० ) इसमें विशेषण के लिए है। [ सुट् का जो स् उसी का षत्व होता है। अतः ट् अनुबन्ध आद्यवव बनाने के लिए नहीं समझना चाहिये। ] ।। १३५ ।।

अट् के व्यवधान में और अभ्यास के व्यवधान में भी सुट् ककार से पहले ही होता है। उदा०—समस्करोत्। समस्कार्षीत्। [ सम् अकरोत्, सम+अकार्षीत् लङ् और लुङ् में अट् करने पर भी सम् के बाद किन्तु ककार से पहले ही सुट्=स् होता है। ] सञ्चस्कार। सञ्चस्करतुः। [ यहाँ अभ्यास='च' का व्यवधान होने पर भी 'क्' से पहले ही सुट् किया गया है। ]

---

१. काशिकायां महाभाष्ये च नैतदुपलभ्यते।

**किमर्थं पुनरिदमुच्यते, 'पूर्वं धातुरुपसर्गेण युज्यते' इति तत्र 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति पूर्वं सुट् क्रियते, पश्चादडभ्यासौ ? 'अभक्तश्च सुट्' इत्युक्तम्, ततः सकाराद्युत्तरावडभ्यासावनिष्टे देशे स्याताम्। एतस्मिंस्तु सत्यत एव वचनात् कृतयोरडभ्यासयोस्तद्व्यवायेऽपि सुट् कात्पूर्वः क्रियत इति सिद्धमिष्टं भवति ॥**

**न्यासः**

युज्यते, किं तर्हि ? उपसर्गेण। यदि हि पूर्वं धातुः साधनेन युज्येत पश्चादुपसर्गेण, ततोऽनुभूयते कम्बलो देवदत्तेनेत्यत्र कर्मणि लकारो न स्यात्; भवतेरकर्मकत्वात्। उपसर्गेण पूर्वं सम्बध्यमाने न भवत्येष दोषः; अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीति। तस्मात् पूर्वं धातुरुपसर्गेण युज्यते, ततश्च धातूपसर्गयोः कार्यमन्तरङ्गम्; तन्निमित्तयोर्धातूपसर्गयोरडभ्यासनिमित्तात् प्रत्ययविशेषात् प्रागेव संविधानात्। अडभ्यासौ तु बहिरङ्गौ; उत्तरकालभाविप्रत्ययविशेषापेक्षत्वात्। धातूपसर्गकार्यञ्च सुट्, तन्निमित्तत्वात्। अतस्तेनान्तरङ्गत्वाद् धातूपसर्गयोरुपादानमनन्तरमेव भवितव्यम्। न ह्यसावुपजातनिमित्तो लकारस्य तावदुत्पत्तिं प्रतीक्षते। कुतः पुनरडभ्यासौ ? इत्यभिप्रायेणाह—**किमर्थं पुनरिदमुच्यत इत्यादि**। इतरस्तु नैवेदमप्राप्तस्य सुटः प्रापणार्थमारभ्यते। किं तर्हि ? कृतयोरडभ्यासयोस्तद्व्यवाये कात्पूर्वः सुड् यथा स्याद्, अकृतयोर्मा भूदित्येवमर्थमिति दर्शयितुमाह—**पूर्वमित्यादि**। इतिकरणो हेत्वर्थः। तत्र धातोः पूर्वमुपसर्गेण योगः सुटोऽन्तरङ्गतायां हेतुः पूर्वं सुट्करणस्य, तदपि **पश्चादडभ्यासाविति**। कर्त्तव्याविति शेषः। यतो धातुः पूर्वमुपसर्गेण युज्यते, तेन धातूपसर्गयोः कार्यं नैव किञ्चिदनिष्टमापद्यते ? इत्याह—**अभक्तश्च सुडित्युक्तमित्यादि**। पूर्वमेव ह्यभक्तत्वं सुटः प्रतिपादितम्, अतस्तस्य करोतिग्रहणेनाग्रहणे सति पश्चाद् भवन्तौ सकारात् परावड्भ्यासावनिष्टे देशे स्याताम्, ततश्चेष्टरूपं न सिध्यतीत्यभिप्रायः। अथ सत्यप्यस्मिन् कथमयं दोषो न भवतीत्याह—**एतस्मिंस्तु सत्यत एवेत्यादि**। अत्र तु सूत्रे सत्यत एव यावदडभ्यासव्यवायो न भवति तावत् सुटा भवितव्यमेव। तस्मात् पूर्वमडभ्यासौ कर्त्तव्यौ, ततस्तद्व्यवाये सति कात् पूर्वं सुडिति सर्वमिष्टं सिध्यति ॥ १३६ ॥

**पदमञ्जरी**

**अभक्तश्चेति**। चस्त्वर्थे। **तत्रेति**। अभक्ते। **एतस्मिंस्तु सतीत्यादि**। ननु चास्मादेव वचनात्कृतयोरडभ्यासयोस्तद्व्यवायेऽपि सुट् कात्पूर्वः क्रियताम्, यस्तु संकृ इत्यस्यामवस्थायां सुट् प्राप्नोति स केन वार्येत ? उच्यते; नाप्राप्ते तस्मिन्नस्यारम्भात्तस्यानेन बाधः। अपरे तु—एतच्चोद्यभयाद्भाष्यकारमतमेव ज्यायो मन्यन्ते। यत्पुनरुक्तमाद्गुणप्रसंग इति ? नैष दोषः; 'ऋतश्च संयोगादेः' इत्यत्र तावदुपदेश इति वर्त्तते, क्व प्रकृतम् ? 'एकाच उपदेशेऽनुदात्तात्' इति, ततः किम् ? 'उपदेशे संयोगादेः' इति सुटि कृते न भविष्यति। 'गुणोऽर्तिसंयोगाद्योः' इत्यत्रापि नित्यमित्यनुवर्तते, क्व प्रकृतम् ? 'नित्यं छन्दसि' इति, ततः किम् ? नित्यं यः संयोगादिस्तस्य गुणः ? सुटि कृते न भविष्यति ॥ १३६ ॥

**भावबोधिनी**

यह सूत्र क्यों बनाया जा रहा है, क्योंकि 'धातु पहले उपसर्ग से ही जोड़ा जाता है' [ अतः लकार के आने के पूर्व ही सम् और कृ का योग हो जाता है तब ] 'धातु और उपसर्ग का कार्य अन्तरङ्ग बलवान् होता है'', इस वचन से पहले सुट् किया जाता है। इसके बाद ही [ प्रत्यय-प्रयुक्त ] अट् और अभ्यास कार्य होते हैं ? इसका उत्तर यह है कि 'सुट् अभक्त = अनवयव होता है'—ऐसा कहा जा चुका है, इसलिए सकार के बाद अट् और अभ्यास अनिष्ट स्थान पर होने लगेंगे। परन्तु इस सूत्र के रहने पर तो इस वचन के कारण ही किये गये भी अट् और अभ्यास के व्यवधान हो जाने पर भी सुट् ककार से पहले ही किया जाता है, इससे इष्ट सिद्ध होता है [ 'कात् पूर्वः' न होने पर इष्ट रूप नहीं बन पाते। ] ॥ १३६ ॥

## २५७७. सम्पर्युपेभ्यः करोतौ भूषणे ॥ १३७ ॥ ( २५५० )

सम्, परि, उप— इत्येतेभ्यो भूषणार्थे करोतौ परतः सुट् कात्पूर्वो भवति। संस्कर्ता, संस्कर्तुम्, संस्कर्तव्यम् – अत्र 'सम्पुंकानां सत्वम्' ( ८.३.३४ वा० ) इति समो मकारस्य सकारः, पूर्वस्य चाकारस्यानुनासिकः। परिष्कर्ता, परिष्कर्तुम्, परिष्कर्तव्यम्—'सुट्स्तुस्वञ्जाम्' ( ८.३.७० ) इति षत्वम्। उपस्कर्ता, उपस्कर्तुम्, उपस्कर्तव्यम्।

भूषण इति किम्? उपकरोति।

सम्पूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते—संस्कृतमन्नमिति ॥

### न्यासः

सम्पर्युपेभ्यः करोतौ भूषणे ॥ सम्पूर्वस्य क्वचिदभूषणेऽपीष्यत इति। कथं पुनरिष्यमाणो लभ्यते? 'संस्कृतं भक्षाः' इत्याचार्यप्रवृत्तेर्लिङ्गात् ॥ १३७ ॥

### पदमञ्जरी

सम्पर्युपेभ्यः करोतौ भूषणे ॥ सम्पूर्वस्य क्वचिदभूषणेऽपीष्यत इति। एतच्च 'संस्कृतं भक्षाः इति निर्देशाल्लभ्यते ॥ १३७ ॥

### भावबोधिनी

सम्, परि, उप—इन तीन से भूषणार्थ में √कृ परे रहने पर ककार से पूर्व में सुट् होता है। उदा०—संस्कर्ता, संस्कर्तुम्, संस्कर्तव्यम्। यहाँ 'सम्पुकानां सत्वम्' इस वचन से सम् के मकार का सकार और पूर्ववर्ती अकार का अनुनासिक—संस्कर्ता। परिष्कर्ता, परिष्कर्तुम्, परिष्कर्तव्यम्—यहाँ 'परिनिविभ्य''''सुट्स्तुस्वञ्जाम्' ( ८।३।७० ) से षत्व होता हैं। उपस्कर्ता। उपस्कर्तुम्, उपस्कर्तव्यम्।

भूषण अर्थ में—इसका क्या फल हैं? उपकरोति [ भलाई करता है—अर्थ होने से सुट् नही होता है। ]

सम्पूर्वक 'कृ' से कहीं-कहीं अभूषण अर्थ में भी सुट् इष्ट है—संस्कृतम् अन्नम्।

**विमर्श**—काशिकाकार ने सम् + कर्ता में सुट् करके 'सम्पुंकानां सत्वम्' वचन से म् का सकार और पूर्व का अनुनासिक करके संस्कर्ता रूप बनाया है। सिद्धान्तकौमुदी-कार की प्रक्रिया भिन्न और लम्बी है। सम् + स्कर्ता यहाँ 'समः सुटि' ( पा० सू० ८।३।५ ) सूत्र से म् का रु और "खरवसानयोर्विसजनीयः" सूत्र से र् का विसर्ग, रु के पूर्व का वैकल्पिक अनुनासिक, पक्ष में अनुस्वार—१. सँः + स्कर्ता, २. संः + स्कर्ता बनाने के बाद 'सम्पुंकानां सो वक्तव्यः' इस से विसर्ग का स् किया गया है—सँस्स्कर्ता, संस्स्कर्ता। इनमें 'समो त्रा लोपमेके' इस भाष्यवचन से म् का लोप = स् का लोप होने से एक सकार वाले भी दो रूप होते हैं। अनेक द्वित्व करते हुए १०८ रूप दिखाये गये हैं—

"लोपस्यापि सप्रकरणस्थात्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम्। द्विसकारं तूक्तमेव। तत्र "अनचि च" इस सकारस्य द्वित्व-पक्षे त्रिसकारमपि रूपद्वयम्।

अनुस्वार-विसर्ग-जिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वेनानुस्वारस्याप्यच्त्वात्। अनुनासिकवतां त्रयाणां "शरः खयः" इति कद्वित्वे षट्। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश। एषामष्टादशानां तकारस्य द्वित्वे, वचनान्तरेण पुनर्द्वित्वे चैकतं द्वितं त्रितमिति चतुष्पञ्चाशत्। अणोऽनुनासिकत्वेऽष्टोत्तरशतम्।" ( विसर्गनीयस्य सः" सूत्र पर सिद्धान्तकौमुदी ) ॥ १३७ ॥

## २५७८. समवाये च ॥ १३८ ॥ ( २५५१ )

**समवायः = समुदायः, तस्मिंश्चार्थे करोतौ सम्पर्युपेभ्यः कात्पूर्वः सुडागमो भवति । तत्र नः संस्कृतम् । तत्र नः परिष्कृतम् । तत्र नः उपस्कृतम् । समुदितमित्यर्थः ॥**

## २५७९. उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ १३९ ॥ ( २५५२ )

**सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा = प्रतियत्नः । विकृतमेव वैकृतम्, प्रज्ञादित्वादण् ( ५.४.३८ )। गम्यमानार्थस्य वाक्यस्य स्वरूपेणोपादानं वाक्यस्याध्याहारः। एतेष्वर्थेषु गम्यमानेषु करोतौ धातौ परत उपात् सुट् कात्पूर्वो भवति। प्रतियत्ने तावत्—एधो दकस्योपस्कुरुते। काण्डगुणस्योपस्कुरुते ।**

**वैकृते—उपस्कृतं भुङ्क्ते। उपस्कृतं गच्छति।**

**न्यासः**

**समवाये च ॥ समवायः समुदाय इति। समवपूर्वादिणो भावे 'एरच्' इत्यच्। समवाय इति सङ्घात इत्यर्थः। समुदित इत्यर्थ इति। भावे निष्ठा ॥ १३८॥**

**उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ सत इत्यादि** लब्धसत्ताकस्यार्थस्य पूर्वोत्पन्नेभ्यो गुणेभ्यो योऽन्यो गुणस्तद्गुणान्तरम्, तदाधीयत उत्पाद्यते येन तद् गुणान्तराधानम् । तत्पुनः किमर्थम् ? इत्याह–**आधिक्यायेत्यादि**। किं तत् ? इत्याह–**समीहेति**। तदेवं विद्यमानस्य वस्तुन आधिक्याय वृद्धये **वृद्धस्य** चैव तादवस्थ्याय तस्या वृद्धावस्थाया अपरिहाणाय गुणान्तराधानं ययाधीयते समीहया चेष्टया स प्रतियत्न इत्युच्यते। **विकृतमिति**। जातविक्रियमित्यर्थः। **गम्यमानार्थस्य वाक्यस्य स्वरूपेणेति**। 'समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते'

**पदमञ्जरी**

**समवाये च** ॥ उदाहरणेषु भावे निष्ठा। एवं **समुदितमित्य**त्रापि ॥ १३८ ॥

**उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ सत इत्यादि**। लब्धसत्ताकस्यार्थस्य पूर्वं ये गुणास्तेभ्योऽन्ये गुणा आधीयन्ते। येन तद्गुणान्तराधानं तत्पुनः किमर्थम् ? इत्याह—**आधिक्यायेति**। आधिक्यम् = वृद्धिः। **वृद्धस्य वा तादवस्थ्यायेति**। तस्य वृद्धियुक्तावस्थायाः प्रच्युतिपरिहारायेत्यर्थः। समीहा = चेष्टा। **अगम्यमानार्थस्येति**। अर्थप्रकरणादिना। **वाक्यस्येति**। वाक्यैकदेशस्येत्यर्थः। **एधो दकस्येति**। जातिद्वन्द्वः, **'कृञः प्रतियत्ने'**

**भावबोधिनी**

समवाय = समुदाय, इस अर्थ में 'कृ' रहने पर सम्, परि, उप से परे ककार से पूर्व सुट् = स् आगम होता है। उदा०—तत्र नः संस्कृतम्। तत्र नः परिष्कृतम्। तत्र नः उपस्कृतम्। सभी में समुदित—यह अर्थ है। [ पूर्ववत् सुट् और षत्वादि होते हैं। ] ॥ १३८ ॥

सत् = विद्यमान का गुणान्तराधान = अधिकता के लिए अथवा बढ़े हुए की तदवस्थता ( वैसा ही रखने ) के लिए ईहा = प्रतियत्न है। [ अर्थात् विद्यमान किसी पदार्थ की अधिकता के लिए अथवा बढ़े हुए पदार्थ की वैसी ही स्थिति रखने के लिए जिस चेष्टा या इच्छा से गुणान्तर का आधान किया जाता है, वही प्रतियत्न कहा जाता है। ] विकृत ही वैकृत है, इसमें "प्रज्ञादिभ्यश्च" सूत्र से अण् करके बना है। गम्यमान अर्थ वाले वाक्य का स्वरूप से उपादान = कह देना वाक्य का अध्याहार है। ये तीन अर्थ प्रतीयमान रहने पर 'करोति' धातु परे रहते 'उप' के बाद ककार से पूर्व सुट् होता है। उदा०—प्रतियत्न में—एधो दकस्योपस्कुरुते। काण्डगुणस्योपस्कुरुते। [ काष्ठ जल का उपस्कार करती है, उसमें अपना गुण डाल देती हैं। ] वैकृत में उदा०—उपस्कृतं भुङ्क्ते। उपस्कृतं गच्छति। [ यहाँ

**वाक्याध्याहारे—उपस्कृतं जल्पति। उपस्कृतमधीते।**
**एतेष्विति किम् ? उपकरोति ॥**

## २५८०. किरतौ लवने ॥ १४० ॥ ( २५३९ )

**'उपात्' इत्येव। उपादुत्तरस्मिन्किरतौ धातौ लवनविषये सुट् कात्पूर्वो भवति। उपस्कारं मद्रका लुनन्ति। उपस्कारं काश्मीरा लुनन्ति। विक्षिप्य लुनन्तीत्यर्थः।**

**ॐणमुलत्र वक्तव्यःॐ ( ? )। लवन इति किम् ? उपकिरति देवदत्तः ॥**

### न्यासः

इति प्रतीयमानोऽर्थः प्रकरणादिवाक्यस्यैकदेशो वाक्यशब्देनोक्तः। गम्यमानार्थस्यापि सुखप्रतिपत्तये स्वरूपेणोपादानं वाक्याध्याहारः ॥ १३९ ॥

**किरतौ लवने ॥ लवनविषय इत्यादि।** अनेन लवनं किरतेर्नाभिधेयतया विशेषणम्, अपि तु तदर्थस्य विषयभावेनेति दर्शयति। केन पुनरत्र णमुल् यावता 'आभीक्ष्ण्ये णमुल् च' इत्यादिना शास्त्रेण स आभीक्ष्ण्यादावप्यर्थे विधीयते। न चात्र सोऽर्थो विवक्षितः, नापि प्रतीयत इत्याह—**णमुलत्रेत्यादि। वक्तव्य इति।** व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'कृत्यल्युटो बहुलम्' इत्यतो बहुलवचनाद् भविष्यति ॥ १४० ॥

### पदमञ्जरी

इति षष्ठी, 'प्रतियत्नप्रकथनोपयोगेषु कृञः' इत्यात्मनेपदम्। **उपस्कृतं भुङ्क्त इति।** क्रियाविशेषणम्, विकृतं भुङ्क्त इत्यर्थः। **उपस्कृतं जल्पतीति।** साध्याहारं यथा तथा जल्पतीत्यर्थः।

अथैवं कस्मान्न कृतम्—'सम्प्ररिभ्यां करोतौ भूषणसमवाययोः, उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च' इति ? सूत्रकारं पृच्छ ॥ १३९ ॥

**किरतौ लवने ॥ किरतौ [1]लवनविषय इति।** अर्थद्वारकं किरतेर्लवनविषयत्वम्, लवनविषये विक्षेपे यः किरतिर्वर्त्तते तत्रेत्यर्थः। तदाह—**विक्षिप्य लुनन्तीत्यर्थं इति।** साक्षात्तु विषये किरतेर्लवनमेवार्थः स्यात्।

**णमुलत्र वक्तव्य इति।** आभीक्ष्ण्यादेर्णमुलर्थस्याभावात् ॥ १४० ॥

### भावबोधिनी

क्रियाविशेषण बनता है—विकृत रूप से खाता है। विकृत रूप से जाता है।] वाक्याध्याहार में उदा०—उपस्कृतं जल्पति। उपस्कृतम् अधीते। [ अध्याहार-सहित बोलता है, पढ़ता है।]

उक्त अर्थों में ही क्यों—उपकरोति। [ यहाँ उक्त कोई अर्थ न होने से सुट् नहीं होता है।]

**विमर्श**—'सम्प्रतिभ्यां करोतौ भूषणसमवाययोः, उपात् प्रतियत्न-वाक्याध्याहारेषु च'—ऐसा क्यों नहीं बनाया गया ? इसका उत्तर हरदत्त ने अपनी पदमंजरी में अति उत्तम दिया है—"सूत्रकारं पृच्छ।" ॥ १३९ ॥

'उपात्' इसकी अनुवृत्ति होती है। 'उप' से उत्तरवर्ती 'किरति' रहने पर लवन ( काटना ) विषय में ककार से पूर्व सुट् होता है। उदा०—उपस्कारं मद्रका लुनन्ति। उपस्कारं काश्मीराः लुनन्ति। विक्षेप करके ( फैला कर ) काटते हैं—यह अर्थ है।

ॐ इस अर्थ में णमुल् कहना चाहिए। ॐ [ क्योंकि आभीक्ष्ण्यादि कोई अर्थ न होने से सामान्यतया णमुल् की प्राप्ति नहीं है। अतः णमुल् का भी विधान अपेक्षित है।]

लवनविषय में—इसका क्या फल है ? उपकिरति देवदत्तः। [ यहाँ सुट् नहीं होता है। क्योंकि लवन अर्थ विषय नहीं है।]॥ १४० ॥

---

१. 'किरतौ धातौ' इति काशिकासम्मतः पाठः

## २५८१. हिंसायां प्रतेश्च ॥ १४१ ॥ ( २५४० )

'किरतौ' इत्येव । उपात्प्रतेश्चोत्तरस्मिन्किरतौ विषये सुट् कात्पूर्वो भवति हिंसायां विषये । उपस्कीर्णं हुं ते वृषल भूयात् । प्रतिस्कीर्णं हुं ते वृषल भूयात् । तथा ते वृषल ! विक्षेपो भूयाद् यथा हिंसामनुबध्नातीत्यर्थः ।

हिंसायामिति किम् ? प्रतिकीर्णम् ॥

## २५८२. अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ १४२ ॥ ( २६८८ )

'किरतौ' इत्येव । अपादुत्तरस्मिन्किरतौ चतुष्पाच्छकुनिषु यदालेखनं तस्मिन् विषये सुट् कात्पूर्वो भवति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्ष्यार्थी । अपस्किरते श्वा आश्रयार्थी ( म० भा० ) । आलिख्य विक्षिपतीत्यर्थः ।

चतुष्पाच्छकुनिष्विति किम् ? अपकिरति देवदत्तः ।

### न्यासः

**हिंसायां प्रतेश्च ॥** **हिंसायां विषय इति ।** एतेन किरतेर्नाभिधेयत्वेन हिंसा विशेषणम् । अपि तु तदर्थस्य विषयभावेनेति दर्शयति । **प्रतिस्कीर्णमिति ।** 'ॠत इद्धातोः' इतीत्वम्, रपरत्वञ्च, 'रदाभ्याम्' इत्यादिना निष्ठानत्वम्, 'हलि च' इति दीर्घत्वम् । **तथेत्यादिना** किरतेरर्थस्य हिंसाविषयतां दर्शयति । **अनुबध्नातीति ।** अनुगच्छतीत्यर्थः ॥ १४१ ॥

**अपाच्चतुष्पाच्छकुनिष्वालेखने ॥** **तस्मिन् विषय इत्यादि ।** अनेनाप्यालेखनं किरतेर्नाभिधेयतया विशेषणम्, अपि तु तदर्थस्य विषयभावेनेति दर्शयति । **अपस्किरत इति ।** 'तुदादिभ्यः शः' इति शः, पूर्ववदित्वम्, रपरत्वम् । **आलिख्येत्यादिना** लेखनस्य किरत्यर्थस्य विषयतामुद्भावयति । आलिख्येति आकृष्येत्यर्थः ।

चतुष्पाच्छकुनिसाधनस्य लेखनस्य सामान्येनोपादानादिहापि प्राप्नोति—अपकिरति श्वौदनपिण्डमाशित इति, अत इदमालेखनविशेषणमाह—**हर्षजीविकेत्यादि ।** हर्षः=प्रमोदः जीविका=प्राणधारणोपायः । कुलायः=आश्रयः ।

### पदमञ्जरी

**हिंसायां प्रतेश्च ॥** **हिंसायां विषय इति ।** न त्वभिधेयायाम् । विक्षेप एव त्वभिधेयः, तदेव दर्शयति—**तथेति ।** उदाहरणे नपुंसके भावे क्तः, हुंशब्दः कोपे । परिनिविभ्य एव सुटः षत्वम्, न प्रतेः ॥ १४१ ॥

**अपाच्चतुष्पाच्छकुनिष्वालेखने ॥** **तस्मिन्विषय इति ।** न त्वभिधेये । विक्षेप एव त्वभिधेयः, तदाह—**आलिख्य विक्षिपतीत्यर्थ** इति ।

### भावबोधिनी

'किरतौ' इसकी अनुवृत्ति है । उप और प्रति के बाद किरति-विषय में हिंसा के विषय में ककार से पूर्व सुट् होता है । उदा०—उपस्कीर्णं हुं ते वृषल ! भूयात् । प्रतिस्कीर्णं हुं ते वृषल ! भूयात् । वृषल, तुम्हारा विक्षेप ( काटना ) ऐसा हो, जो हिंसा का अनुगमन करे, हिंसा करा सके—यह अर्थ है ।

हिंसा में—इसका क्या फल है ? प्रतिकीर्णम् । [ यहाँ सामान्यप्रतीति होने से सुट् नहीं होता है । ] ॥ १४१ ॥

'किरतौ' की अनुवृत्ति है । 'अप' से उत्तरवर्त्ती किरति धातु रहने पर चतुष्पात्=चौपाये पशु और शकुनि=पक्षियों में जो आलेखन=कुरेदना, खोदना, उस विषय में ककार से पूर्व सुट् होता है । उदा०—अपस्किरते वृषभो हृष्टः । [ प्रसन्न बैल मिट्टी आदि खींचकर=सींगों से खोदकर फेंकता है । ] अपस्किरते कुक्कुटो भक्ष्यार्थी । [ भोजन चाहने वाला मुर्गा जमीन खोदकर फेंकता है । ] अपस्किरते श्वा आश्रयार्थी । [ आश्रय=निवास-स्थान चाहने वाला कुत्ता मिट्टी खोदकर फेंकता है । ] आलिख्य=खोदकर या खींचकर फेंकता है—यह अर्थ है ।

**❀ हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् ❀ ( म० भा० ६.१.१४२ वा० १ ) । इह मा भूत्— अपकिरति श्वा ओदनपिण्डमाशितः ।**

**❀ हर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदस्योपसंख्यानम् ❀ ( ? ) ॥**

## २५८३. कुस्तुम्बुरूणि जातिः ॥ १४३ ॥ ( १०५८ )

**'कुस्तुम्बुरूणि' इति सुट् निपात्यते जातिश्चेद्भवति । कुस्तुम्बुरुर्नामौषधिजातिः = धान्यकम् । तत्फलान्यपि कुस्तुम्बुरूणि ।**

**सूत्रनिर्देशे नपुंसकलिङ्गमविवक्षितम् ।**

**जातिरिति किम् ? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि । तुम्बुरुशब्देनात्र तिन्दुकीफलान्युच्यन्ते, समासेन तेषां कुत्सा ॥**

### न्यासः

किं पुनः कारणं हर्षादिष्वात्मनेपदं भवति, न त्विह प्रत्युदाहरणे ? इत्याह—**हर्षजीविकाकुलायकरणेष्वेवेत्यादि** ॥ १४२ ॥

**कुस्तुम्बुरूणि जातिः** ॥ ननु च सूत्रे नपुंसकलिङ्गेन निर्देशान्नपुंसकलिङ्गतायां फलजातावेव भवितव्यम्, नान्यलिङ्गतायाम्, औषधजातौ बहुवचन एव भवितव्यम्, नान्यत्र, बहुवचनेन निर्देशात्; तत् कथं कुस्तुम्बुरुरित्यत्र पुंल्लिङ्गतायामेकवचने च भवति ? इत्यत आह-**सूत्रनिर्देश इत्यादि** । नपुंसकग्रहणमुपलक्षणमात्रम् । बहुवचनमपि ह्यतन्त्रमेव सूत्रे । तथा चोक्तम्-'सूत्रे लिङ्गवचनमतन्त्रम्, तस्याविवक्षितत्वात्' इति ॥ १४३ ॥

### पदमञ्जरी

**हर्षजीविकेत्यादि** । हर्षः = प्रमोदः, जीविका = प्राणपरित्राणोपायः, कुलायः = आश्रयः ।

किं पुनरुदाहरण एवात्मनेपदं भवति, न प्रत्युदाहरणे ? अत आह— **हर्षजीविकेत्यादि** ॥ १४२ ॥

**कुस्तुम्बुरूणि जातिः** ॥ सूत्रे नपुंसकलिङ्गेन बहुवचनेन च निर्देशात् फलजातावेव सुटा भवितव्यम्, न त्वोषधिजातौ ? इत्याशङ्क्याह—**सूत्रनिर्देश इति** । नपुंसकलिङ्गग्रहणं बहुवचनस्याप्युपलक्षणम् ॥ १४३ ॥

### भावबोधिनी

चतुष्पात् और शकुनियों में ही—इसका क्या फल है ? अपकिरति देवदत्तः । [ यहाँ देवदत्त उक्त दोनों से भिन्न है । अतः सुट् नहीं होता है । ]

❀ हर्ष, जीविकाकरण और कुलायकरण = घोसला बनाना—अर्थों में यह होता है—ऐसा कहना चाहिए । ❀ [ यदि प्रसन्नता, जीविकानिर्वाह और रहने का स्थान बनाना प्रतीत हो, तभी यह सुट् होता है । ] यहाँ पर न होने लगे—अपकिरति श्वा ओदनपिण्डम् आशितः । [ उक्त कोई अर्थ नहीं है । अतः सुट् नहीं होता है । ]

❀ हर्ष, जीविका, कुलायकरण अर्थों में ही कृ धातु से आत्मनेपद कहना चाहिए । ❀ [ इस नियम से इन्हीं अर्थों में आत्मनेपद होता है । अन्य अर्थों में परस्मैपद हो जाता है । ] ॥ १४२ ॥

'कुस्तुम्बुरूणि' यहाँ सुट् निपातित होता है, यदि जाति अर्थ हो तो । कुस्तुम्बुरु नाम की एक ओषधिजाति = धान्यक होती है । उसके फल भी—'कुस्तुम्बुरु' हैं ।

सूत्र-निर्देश में नपुंसकलिङ्ग अविवक्षित है । [ इसी प्रकार बहुवचन भी अविवक्षित है । अतः नपुंसकलिङ्ग और बहुवचन से भिन्न में भी हो जाता है । ]

जाति—इसका क्या फल है ? कुत्सितानि तुम्बुरूणि—इस अर्थ में—कुतुम्बुरूणि । तुम्बुरु शब्द से यहाँ तिन्दुकी फल ( = लौकियाँ ) कहे जाते हैं, समास से उनकी कुत्सा = निन्दा [ प्रतीत होती ] है ॥ १४३ ॥

## २५८४. अपरस्पराः क्रियासातत्ये ॥ १४४ ॥ ( १०५९ )

'अपरस्परा' इति सुट् निपात्यते क्रियासातत्ये गम्यमाने। अपरस्पराः सार्था गच्छन्ति। सन्ततमविच्छेदेन गच्छन्तीत्यर्थः।

क्रियासातत्य इति किम्? अपरपराः सार्थाः गच्छन्ति। अपरे परे च सकृदेव गच्छन्तीत्यर्थः। नात्र गमनस्य सातत्य-प्रबन्धो विवक्षितः।

किमिदं सातत्यमिति? सततस्य भावः सातत्यम्।

कथं सततम्? समस्तते विकल्पेन मकारलोपो विधीयते।

**न्यासः**

**अपरस्पराः क्रियासातत्ये ॥ अपरस्परा इति।** अपरे च परे चेति द्वन्द्वः। सन्ततशब्दाद् भावप्रत्यय उत्पन्ने सान्तत्यमिति भवितव्यमित्यभिप्रायेणाह—**किमिदमित्यादि।** सततशब्दादेवायं भावप्रत्यय उत्पन्न इति दर्शयन्नाह—**सततस्य भाव इत्यादि। कथं सततमिति।** एवं मन्यते—समो मकारलोपस्य लक्षणं तावदिह शास्त्रे नास्ति। अथ सातत्य इत्येतदेव निपातनम्, ततशब्दे परतः समो मकारस्य लोपो भविष्यतीत्यस्यार्थस्य ज्ञापनं कल्प्येत, एवं सति सन्ततमिति न सिध्यति? इत्यत आह—**समस्तते विकल्पेनेत्यादि।** अयमभिप्रायः—सातत्यशब्दं पूर्वाचार्यलक्षणप्रसिद्धमुच्चारयता पूर्वाचार्यलक्षणमप्याश्रितम्। अतस्तेन समो मकारस्यात्र लोपो विधीयते। एवञ्च कृत्वाऽवश्यम्प्रभृतीनामपि कृत्यादिषु लोपः सिद्धो भवति। अतस्तदेव पूर्वाचार्यलक्षणं दर्शयति—

**पदमञ्जरी**

**अपरस्पराः क्रियासातत्ये ॥ अपरस्परा इति।** अपरे च परे चेति द्वन्द्वः, निपातनादल्पाच्तरस्य परनिपातः। **सार्था गच्छन्तीति।** सार्थभूता गच्छन्तीत्यर्थः। **'सततमविच्छेदेनेति।** न कदाचिदस्मिन् महापथे गमनं विच्छिद्यत इत्यर्थः। अयं चार्थः सुटा द्योत्यते। **किमिदमिति।** 'अस्मादेव निपातनात् मलोपः' इत्युच्यमाने सततमिति न सिद्ध्यति, सूत्रे ष्यञन्तोच्चारणादिति प्रश्नः। **कथमिति** मलोपस्य लक्षणं न दृश्यते। अथ 'सातत्ये' इत्येतदेव निपातनं सामान्येन ततशब्दे परतः समो मकारस्य लोपो भवतीत्यस्यार्थस्य ज्ञापकं कल्प्यते, सन्ततमिति न सिद्ध्येत्, 'बाधकत्वान्निपातनानाम्' ( नी० परि० १०९ ) इति मन्यमानस्य प्रश्नः।

**समस्तते विकल्पेनेति।** अयमभिप्रायः—सातत्यशब्दं पूर्वाचार्यलक्षणसिद्धमुच्चारयता पूर्वाचार्यलक्षणमाश्रितम्, अतस्तेन समो मकारस्य लोपो विधीयत इति, एवञ्च कृत्वावश्यंप्रभृतीनामपि कृत्यादिषु मकारलोपः

**भावबोधिनी**

क्रियासातत्य = काम का सदैव होते रहना प्रतीत रहने पर 'अपरस्परा' यहाँ सुट् निपातित किया है। उदा०—अपरस्पराः सार्था गच्छन्ति। लगातार बिना रुके हुए चलते जाते हैं—यह अर्थ है।

क्रिया के सातत्य में—इसका क्या फल है? अपरपराः सार्था गच्छन्ति। अपर और पर एक ही बार जाते हैं, चलते हैं—यह अर्थ है। यहाँ गमन का सातत्यप्रबन्ध ( सदैव होते रहना ) नहीं विवक्षित है।

यह सातत्य क्या है? सतत का भाव = होना—सातत्य है।

सतत—यह कैसे होता है? सम् से उत्तर 'तत' रहने पर मकार का लोप किया जाता है।

कृत्य प्रत्यय परे 'अवश्यम्' के म् का लोप होता है, काम और मनस् शब्द परे रहते तुमुन् के म् का लोप होता है, हित और तत शब्द परे रहते सम् के मकार का लोप विकल्प से होता है। मांस के अन्त्य अ का लोप पच् धातु युट् = ल्युट् अथवा घञ् प्रत्यय-विशिष्ट परे रहने पर विकल्प से होता है। [ क्रमशः उदा०—अवश्य कार्यम् =

---

१. 'सन्ततम्' इति काशिका पाठः।

लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि ।
समो वा हिततयोर्मांसस्य पचि [1]युड्घञोः[2] ॥

## २८८९. गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४५ ॥ ( १०६० )

**गोष्पदमिति सुट् निपात्यते, तस्य च षत्वं सेवितेऽसेविते प्रमाणे च विषये । गोष्पदो देशः । गावः पद्यन्ते यस्मिन् देशे स गोभिः सेवितो देशो गोष्पद इत्युच्यते । असेविते—अगोष्पदान्यरण्यानि । असेविते**

**न्यासः**

**लुम्पेदित्यादि** । अन्त्यमिति शेषः । अवश्यंशब्दस्य कृत्यप्रत्ययान्ते परतो लुम्पेत्, अन्त्यलोपमस्य कुर्यादित्यर्थः । अवश्यकर्त्तव्यम् । तुमुन्प्रत्ययान्तस्याप्यन्त्यं लुम्पेत्, काममनसोश्च शब्दयोः परतः—कर्तुं कामोऽस्येति कर्तुकामः, हर्तुं मनोऽस्येति हर्तुमनाः ।

सम्शब्दस्य चान्त्यं लुम्पेद् विकल्पेन हिततयोः शब्दयोः परतः—सहितम्, सततम्, सन्ततम् ; 'कुगतिप्रादयः' इति समासः ।

मांसशब्दस्यान्त्यं लुम्पेत्, क्व ? **पचि** । 'डुपचष् पाके' इत्येतस्मिन् धातौ । किंविशिष्टे ? **युड्घञोरिति** ; ल्युटि घञि च प्रत्यये परतो यः पचिस्तस्मिन्नित्यर्थः । अत्रापि वाग्रहणं सम्बध्यते । मांस्पचनम्, मांसपचनम् । मांस्पाकः, मांसपाकः । 'कृद्योगा च षष्ठी समस्यते' इति समासः । समासेऽयं लोपः पूर्वाचार्याणामभिप्रायः, संहितायाञ्च । तेन वाक्ये विच्छिद्य पाठे न भवति ॥ १४४ ॥

**गोष्पदं सेवितासेवितप्रमाणेषु** ॥ **तस्य च षत्वमिति** । अनादेशप्रत्ययसकारत्वात् सुटः षत्वं न प्राप्नोतीत्यतस्तदपि निपात्यते । **गावः पद्यन्त** इत्यादिना देशस्य सेवितत्वं दर्शयति । **असेवित इत्यादि** ।

**पदमञ्जरी**

सिद्धो भवति, तदेव पूर्वाचार्यलक्षणं पठन्ति—**लुम्पेदित्यादि** । अन्त्यमिति शेषः । कृत्यप्रत्ययान्ते परतोऽवश्यं-शब्दस्यान्त्यं लुम्पेत्, लोपमस्य कुर्यादित्यर्थः । 'शे मुचादीनाम्' इति नुम् । अवश्यकार्यमित्युदाहरणम् । **तुमिति वृत्तभङ्गभयात्षष्ठी न कृता** । तुम्प्रत्ययान्तस्यान्त्यं लुम्पेत्, काममनसोः शब्दयोः परतः-कर्तुं कामोऽस्य कर्तुकामः, कर्तुं मनोऽस्य कर्तुमनाः, तुमप्यत्रोपसंख्यायते, अक्रियोपपदत्वादित्याहुः । **संशब्दस्यान्त्यं लुम्पेत्, वा = विकल्पेन**, हिततयोः शब्दयोः परतः सहितम्, संहितम्, सततम्, संततम् । गतिसमासः । मांसशब्दस्याप्यन्त्यं लुम्पेत्, क्व ? **पचि**, पचतिधातौ । किंविशिष्टे ? **युड्घञोः**, युटि घञि च परयो यः पचिस्तस्मिन्नित्यर्थः, मांस्पचनम्, मांस्पाकः, कर्मणि षष्ठ्याः समासः । संहितायां समासे चैष मलोप इत्याहुः ।

अथ सन्ततशब्दात् ष्यञ् भवति वा न वा सान्तत्यमिति, नेत्याहुः ॥ १४४ ॥

**गोष्पदं सेवितासेवितप्रमाणेषु** ॥ **गावः [3]पद्यन्तेऽस्मिन्निति** । 'पुंसि संज्ञायाम्' इत्यधिकरणे घः, कर्त्तरि षष्ठ्या समासः । **अगोष्पदान्यरण्यानीति** । ननु च सूत्रे गोष्पदशब्द उपात्तः, तत् किमिदम् ? इत्यत आह—

**भावबोधिनी**

अवश्यकार्यम् । कर्तुं कामः अस्य सः—कर्तुकामः, हर्तुं कामः अस्य सः—हर्तुकामः । सहितम्, संहितम्, सततम् सन्ततम् । मांस्पचनम्, मांसपचनम्, मांस्पाकः, मांसपाकः । ] ॥ १४४ ॥

'गोष्पदम्' यहाँ सुट् निपातित होता है, सेवित, असेवित और प्रमाण अर्थों में उसका षत्व भी होता है । उदा०—गोष्पदो देशः । गायें जिस देश = स्थान में चलती हैं, वह देश गायों द्वारा सेवित—'गोष्पद' ऐसा कहा जाता है ।

---

१. 'युट्' इति ल्युटः पूर्वाचार्याणां संज्ञा ।

२. 'समो हिततयोर्वा लोपः' इति भाष्ये दर्शनात् छन्दोऽनुरोधाच्च 'हिततयो' रित्यशुद्धः पाठः । पदमञ्जर्यामपि एवमेव पाठः शुद्धः ।

३. 'पद्यन्ते यस्मिन्' इति काशिका पाठः ।

**गोष्पदशब्दो न सम्भवतीत्यगोष्पदशब्दार्थं निपातनम्। यद्येवम्, नार्थ एतेन, गोष्पदप्रतिषेधादगोष्पदं भविष्यति ? सत्यमेतत्; यत्र तु सेवितप्रसङ्गोऽस्ति तत्रैव स्याद्—गोष्पदमिति। यत्र त्वत्यन्तासम्भव एव, तत्र न स्याद्—अगोष्पदान्यरण्यानीति; असेवितग्रहणात्तत्रापि भवति। यानि हि महान्त्यरण्यानि येषु गवामत्यन्तासम्भवः, तान्येवमुच्यन्ते।**

**न्यासः**

ननु च गोष्पदशब्दः सूत्र उपात्तः, तत् कस्मादसेवितेऽगोष्पदादीनीत्याद्युदाह्रियते ? इत्याह—**असेवित** इत्यादि। क्रियते चेदमसेवितग्रहणम्, न च तत्र गोष्पदशब्दः सम्भवति; तस्मादसेवितेऽगोष्पदार्थं निपातनं विज्ञायते। **यद्येवमिति**। यद्यसेवितेऽगोष्पदार्थं निपातनमित्यर्थः। **नार्थ एतेनेति**। असेवितग्रहणेन। कथं तेन विना सिध्यति ? इत्याह—**गोष्पदप्रतिषेधादित्यादि**। **सत्यमेवैतदिति**। गोष्पदप्रतिषेधादित्यादि यदुक्तं तस्य सत्यतामाह, न तु 'नार्थ एतेन' इत्यस्यार्थः। यदि तर्हि सत्यमेवैतत्, तत् किमर्थं सेवितग्रहणमिह क्रियते ? इत्याह—**यत्र त्वित्यादि**। नञ्समासेऽगोष्पद इत्येष तत्पुरुषः स्वभावादुत्तरपदार्थसदृशमर्थमाचष्टे, अब्राह्मणवत्। ततश्च न गोष्पदमगोष्पदमिति तत्पुरुषे कृते यत्र सेवितस्य सेवनस्य प्रसङ्गोऽस्ति तत्रैवागोष्पदमित्येतत् स्यात्, न तु यत्रात्यन्तासम्भव एव सेवितस्य तत्र। तथा हि—स एव गोष्पददेशस्य सदृशः, नेतरः। **असेवितग्रहणात् तथापि भवतीति**। अपिशब्दो न केवलं यत्र सेवितप्रसङ्गोऽस्ति तत्रैवागोष्पदमित्यमुमर्थं द्योतयति। कस्मात् ? पुनरत्रासेवितग्रहणात्। तत्रापि भवतीत्यत आह—**यानि हीति**। **एवमिति**। असेवितग्रहणार्थकः प्रकारः प्रत्यवमृश्यते। असेवितग्रहणे हि सति मा भूत् तस्य वैयर्थ्यमिति बहुव्रीहिरयं भावसाधनेनासेवितशब्देन विज्ञास्यते। अविद्यमानं सेवितमस्मिन्निति बहुव्रीहिश्चात्यन्ताभावेऽपि भवतीति येषु गवामत्यन्तासम्भवस्तान्यरण्यान्यासेवितशब्देनोच्यन्ते। ततश्च तत्राप्यगोष्पदमिति भवति।

**गोष्पदपूरमिति**। 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति णमुल्। ननु च गोष्पदमिति षष्ठीसमासोऽयम्, तस्य च गोसम्बन्धि पदमर्थः, न तु प्रमाणम्, तत् कथं गोष्पदमात्रं क्षेत्रमित्यादि उदाहरणं

**पदमञ्जरी**

**असेवित इत्यादि**। क्रियते चेदमसेवितग्रहणम्, न च तत्र गोष्पदशब्दः सम्भवति, तस्मादसेविते गोष्पदशब्दार्थनिपातनं विज्ञायते। **नार्थ एतेनेति**। असेवितग्रहणेन। कथं तेन विना सिद्धिः ? तत्राह—**गोष्पदप्रतिषेधादिति**। **सत्यमिति**। गोष्पदप्रतिषेधादिति यदुक्तम्, तत् सत्यं मन्यते, न तु नार्थ एतेनेति। तद् यदि सत्यम्, किमर्थं तर्ह्यसेवितग्रहणम् ? इत्याह—**यत्र त्विति**। नञ्समासो हि तत्पुरुषः स्वभावादुत्तरपदार्थसदृशमर्थमाचष्टे—अब्राह्मणवत्, ततश्च न गोष्पदमगोष्पदमिति नञ्समासे कृते यत्र सेवितस्य सेवनस्य प्रसङ्गोऽस्ति, तत्रैवागोष्पदमिति स्यात्, स एव गोष्पदस्य देशस्य सदृशः; यत्र त्वत्यन्तासम्भव एव सेवितस्य तत्र न स्यात्। असेवितग्रहणसामर्थ्यात्तु बहुव्रीहिराश्रीयते, स चात्यन्ताभावेऽपि भवति। तेन येषु गवामत्यन्तासम्भवः, तान्यरण्यान्यासेवितशब्देनोच्यन्ते। ततश्च तत्राप्यगोष्पदमिति भवति। अत्यन्तासम्भवं स्पष्टयति—**यानि हि महान्त्यरण्यानीति**।

**भावबोधिनी**

असेवित में—अगोष्पदानि अरण्यानि। [ वे जंगल जहाँ गाएँ नहीं जाती हैं। ] असेवित अर्थ में गोष्पद शब्द सम्भव नही है—इसलिए 'अगोष्पद' शब्द की सिद्धि के लिए निपातन है। यदि ऐसा है तो इस वचन की आवश्यकता नही हैं, क्योंकि गोष्पद के प्रतिषेध से ही 'अगोष्पद' ऐसा हो जायगा ? यह सत्य है; परन्तु जहाँ सेवित होने का प्रसङ्ग है, वहीं होगा—गोष्पदम्। जहाँ अत्यन्त असम्भव ही है, वहाँ नहीं हो सकता—अगोष्पदानि अरण्यानि। असेवित के ग्रहण से वहाँ भी होता है। जो बड़े-बड़े जंगल हैं जिनमें गायों का होना अत्यन्त असम्भव हैं, उन्हें ही 'अगोष्पदानि अरण्यानि' ऐसा कहा जाता है।

**प्रमाणे—गोष्पदमात्रं क्षेत्रम्, गोष्पदपूरं वृष्टो देवः। नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयते, किं तर्हि ? क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम्।**

**सेवितासेवितप्रमाणेष्विति किम् ? गोः पदं गोपदम् ॥**

## २९८६. आस्पदं प्रतिष्ठायाम् ॥ १४६ ॥ ( १०६१ )

**आत्मयापनाय स्थानम्=प्रतिष्ठा, तस्यामास्पदमिति सुट् निपात्यते। आस्पदमनेन लब्धम्।**

### न्यासः

प्रमाणे युज्यते ? इत्यह आह—नात्रेत्यादि। न ह्यत्र स्वार्थप्रतिपादनार्थमेव गोष्पदमित्युपादीयते। किं तर्हि ? क्षेत्रादेरियत्तां परिच्छेत्तुम्। तस्मात् क्षेत्रादेरियत्ता तेन परिच्छिद्यते=प्रमीयत इति भवति प्रमाणम्। न चात्र प्रमाणशब्देनायाम उच्यते, किं तर्हि ? परिच्छेदमात्रम्। कुत एतत् ? निपातनसामर्थ्यात्। निपातनं हि वस्त्वप्रसिद्धमप्युपादत्ते ॥ १४५ ॥

**आस्पदं प्रतिष्ठायाम् ॥ आत्मयापनायेति।** आत्मयापनम्=प्राणधारणम्। तदर्थं यत् स्थापनं तत् प्रतिष्ठेत्युच्यते। **आस्पदमिति।** आङः परस्य पदस्य सुट् निपात्यते। **आपदमिति।** 'आङ् मर्यादावचने'

### पदमञ्जरी

तत्र केचिदाहुः—यत्र गवामत्यन्तासम्भवः, तत्रैवागोष्पदशब्दः प्रयोक्तव्यः, न त्वसम्भव इति। अन्ये त्वविशेषेणेच्छन्ति। न चैवमसेवितग्रहणस्य वैयर्थ्यम्, असति ह्यस्मिन्नत्यन्तासम्भवे न स्यात्। **गोष्पदपूरमिति।** 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति णमुल्। ननु च गोष्पदमिति षष्ठीसमासोऽयम्, तस्य गोः सम्बन्धि पदमर्थः, न तु प्रमाणम् ? तत्राह—**नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयत इति।** तथा च गोष्पदपूरं वृष्टो देव इति। असत्यपि गोष्पदपूरणे प्रयुज्यते, यथा—चेलक्नोपं वृष्टो देव इत्यसत्यपि चेलकोपे ॥ १४५ ॥

**आस्पदं प्रतिष्ठायाम् ॥ आत्मयापनायेति।** प्राणधारणम्=आत्मयापनम्, तदर्थं यत्स्थानम्, सा प्रतिष्ठा।

### भावबोधिनी

प्रमाण में—गोष्पदमात्रं क्षेत्रम्। गोष्पदपूरं वृष्टो देवः। इनमें गोष्पद शब्द अपने अर्थ को प्रतिपादित करने के लिए नहीं है, तो किस लिए ? क्षेत्र=खेत और वृद्धि वर्षा को इयत्ता का परिच्छेद करने के लिए। [ कितना बड़ा खेत है, कितनी वर्षा हुई है—इसको बताने के लिए—गोष्पद का प्रयोग है—गाय के पैर के बराबर खेत है, बारिस हुई है। ]

सेवित, असेवित और प्रमाण—इनसे ही—इसका क्या फल है ? गोः पदम्—गोपदम्। [ यहाँ सामान्य सम्बन्ध अर्थ है। अतः सुट् नहीं होता है। ]

**विमर्श**—न गोष्पदम्=अगोष्पदम्—ऐसा हो ही सकता है तब सूत्र में दोनों के उल्लेख का क्या तात्पर्य है ? नञ् तत्पुरुष उत्तरपदार्थप्रधान होता है। अतः जहाँ सेवित=सेवन का प्रसङ्ग है, वहीं उसका निषेध कहा जा सकता है। परन्तु जहाँ कथमपि सेवन का प्रसङ्ग नहीं है, जैसा कि बड़े-बड़े जंगलों में होता है, वहाँ अगोष्पद नहीं बन सकता है। अतः वहाँ के लिए तत्पुरुष न मानकर बहुव्रीहि समझना चाहिए—अविद्यमानं सेवितम्=सेवनं येषु तानि—अगोष्पदानि अरण्यानि। इसी अर्थ की प्रतीति के लिए अगोष्पद का भी ग्रहण किया गया है।

यह सुट् न आदेश है और न प्रत्यय। अतः षत्व की प्राप्ति न होने से षत्वविधान भी आवश्यक है ॥ १४५ ॥

आत्मयापन=प्राणधारण के लिए स्थान=प्रतिष्ठा है, इस विषय में 'आस्पदम्' यहाँ सुट् निपातित होता है। [ आङ् पूर्वक पद् धातु से अधिकरण अर्थ में घ=अ और नपुंसकलिङ्ग निपातन से होता है। ] उदा०—आस्पदम् अनेन लब्धम्। [ आङ्=आ+पद, सुट्=स् इसने जीविका-निर्वाह का स्थान प्राप्त कर लिया। ]

प्रतिष्ठायामिति किम् ? आ पदात्—आपदम् ॥

**२५८७. आश्चर्यमनित्ये ॥ १४७ ॥ ( १०६९ )**

अनित्यतया विषयभूतयाऽद्भुतत्वमिह लक्ष्यते, तस्मिन्नाश्चर्यं निपात्यते । 'चरेराङि चागुरौ' ( वा० २१५ ) इति यत्प्रत्यये कृते निपातनात्सुट् । आश्चर्यं यदि स भुञ्जीत । आश्चर्यं यदि सोऽधीयीत । चित्रमद्भुतमित्यर्थः ।

अनित्य इति किम् ? आचर्यं कर्म शोभनम् ॥

**न्यासः**

इत्याङः कर्मप्रवचनीयत्वम्, तद्योगे 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी, तदन्तेन 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावसमासः ॥ १४६ ॥

आश्चर्य्यमनित्ये ॥ यद्यनित्येऽशाश्वतिक आश्चर्यमिति निपात्यते, ततो घटादिष्वपि स्यादित्येतं दोषं परिजीहिर्षुराह—अनित्यतयेत्यादि । अद्भुतम्=चित्रमित्युच्यते । यल्लोकेऽद्भुतं तच्चित्रम्, तस्य भावोऽद्भुतत्वम् । तस्य चान्यत्राभावादनित्यता विषयभूता, न हि तत्र ततोऽन्यत्र सम्भवति । तस्मात् तया विषयभूतयाऽद्भुतत्वमुपलक्ष्यते । आश्चर्यं यदि स भुञ्जीतेति । 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इत्यनवक्लृप्तावसम्भावनायां लिङ् । भोजनं कस्यचिद् विशिष्टकालादावदृष्टपूर्वम् । अतस्तत्र भवद् तदद्भुतं भवति ॥ १४७ ॥

**पदमञ्जरी**

आस्पदमिति । आङ्पूर्वात्पदेः पूर्ववदधिकरणे घः, लोकाश्रयत्वादस्मादेव निपातनाद्वा नपुंसकलिङ्गता । आपद-मित्यव्ययीभावसमासः ॥ १४६ ॥

आश्चर्यमनित्ये ॥ यद्याश्चर्यमनित्ये निपात्यते, घटादावतिप्रसङ्गः ? इत्यत आह—अनित्यतयेत्यादि । लोके यदनुचितमदृष्टपूर्वमुपलभ्यते, तदनित्यतया व्याप्तं कादाचित्कत्वम्, अतोऽनित्यता विषयभूता भवति । तया विषयभूतया अद्भुतत्वं विस्मयहेतुत्वमुपलक्ष्यते । उदाहरणे 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इत्यनवक्लृप्ताव-सम्भावनायां लिङ् । रुग्णस्य मन्दकर्णस्य[1] चाविशिष्टे कालादौ भोजनमध्ययनं चादृष्टपूर्वं[2] दृश्यमानमद्भुतं भवतीति । आचर्यमिति । 'चरेराङि चागुरौ' ( वा० २१५ ) इति यत् । आचर्यम्=अनुष्ठेयमित्यर्थः ॥ १४७ ॥

**भावबोधिनी**

प्रतिष्ठा अर्थ में—इसका क्या फल है ? आ पदात्—आपदम् [ इसमें पञ्चम्यर्थ में अव्ययीभाव समास है । प्रतिष्ठा = जीविकानिर्वाह के लिए स्थान अर्थ नही है । अतः सुट् नहीं होता है । ] ॥ १४६ ॥

विषयभूत अनित्यता के कारण यहाँ अद्भुतत्व लक्षित होता है, उस विषय में 'आश्चर्यम्' यह निपातित होता है । 'चरेराङि चागुरौ' ( वार्त्तिक ) इससे आङ्पूर्वक चर धातु से यत् प्रत्यय करने पर [ आ चर्+य, में ] निपातन से सुट्=स् होता है । उदा०—आश्चर्यं यदि स भुञ्जीत । आश्चर्यं यदि सोऽधीयीत । चित्र=अद्भुत—यह अर्थ है । [ आ सुट्=स्+चर्+य, श्चुत्व । यदि वह भोजन कर ले तो आश्चर्य=अद्भुत है । ]

अनित्ये—इसका क्या फल है—आचर्यं कर्म शोभनम् । [ यहाँ अद्भुतत्व की प्रतीति न होने से सुट् नहीं होता है । आचर्यम्=अनुष्ठानयोग्य । ] ॥ १४७ ॥

---

१. 'मन्दस्य' इति पाठा० । २. अपूर्वस्य इति पाठा० ।

## २५८८. वर्चस्केऽवस्करः ॥ १४८ ॥ ( १०६३ )

कुत्सितं वर्चो वर्चस्कम् = अन्नमलम्, तस्मिन्नभिधेयेऽवस्कर इति निपात्यते । अवपूर्वस्य किरतेः कर्मणि 'ऋदोरप्' ( ३.३.५७ ) इत्यप्, निपातनात्सुट् । अवकीर्यत इत्यवस्करः = अन्नमलम्, तत्सम्बन्धाद्देशोऽपि तथोच्यते । वर्चस्क इति किम् ? अवकरः ॥

## १५८९. अपस्करो रथाङ्गम् ॥ १४९ ॥ ( १०६४ )

'अपस्कर' इति निपात्यते रथाङ्गं चेद्भवति । अपपूर्वात्किरतेः 'ऋदोरप्' ( ३.३.५७ ) इत्यप्, निपातनात् सुट् । अपस्करो रथावयवः । रथाङ्गमिति किम् ? अपकरः ॥

### न्यासः

**वर्चस्केऽवस्करः** ॥ **कुत्सितं वर्चः वर्चस्कमिति** । 'कुत्सिते' इति कना निर्देशो दीप्तौ मा भूदित्येवमर्थः । दीप्तावपि हि वर्चःशब्दो वर्त्तत इति तत्रापि स्यात् । यदि वर्चस्केऽवस्करशब्दो निपात्यते तदा तत्सम्बन्धिदेशे न प्राप्नोति । तत्रापि च लोकेऽवस्करशब्दः प्रयुज्यत इत्यत आह—**तत्सम्बन्धादित्यादि** । यथा यष्टीः प्रवेशयेति यष्टिसम्बन्धात् पुरुषा अपि यष्टिशब्देनोच्यन्ते, तथा अवस्करसम्बन्धादवस्करशब्देन देशः ॥ १४८ ॥

**अपस्करो रथाङ्गम्** । **रथावयव** इति । अनेनादिशब्दस्यावयववचनमाचष्टे ॥ १४९ ॥

### पदमञ्जरी

**वर्चस्केऽवस्करः** ॥ कुत्सितं वर्चो वर्चस्कम्, 'कुत्सिते' इति कन्, 'सोऽपदादौ' इति सत्वम् । कना निर्देशो दीप्तौ मा भूदिति, दीप्तावपि हि वर्चःशब्दो वर्त्तते । **अन्नमलमिति** । भाण्डेषु यल्लग्नं काष्ठादिनाऽपकृष्य काकादिभ्यो विकीर्यते तदन्नमलम् । **अवकीर्यत इति** । भूमाववक्षिप्यत इत्यर्थः । **तत्सम्बन्धाद् देशोपीति** । यत्र भाण्डानि परिमृज्यन्ते देशे स देशः । तथा च याज्ञवल्क्यः[1]—"सम्मार्जितावस्करया व्यये चामुक्तहस्तया" इति । अपर आह—पुरीषं वर्चस्कं तद्देशश्चेति । **अवकर इति** । ब्रह्मचारिणः स्त्रियां रेतः सेकः = अवकरः, यतोऽवकीर्णो भवति ॥ १४८ ॥

**अपस्करो रथाङ्गम्** ॥ अत्र सूत्रे तृतीय उपसर्गः, पूर्वत्र [ सूत्रे ] षष्ठः ॥ १४९ ॥

### भावबोधिनी

कुत्सित वर्चः—वर्चस्क = अन्नमल, इसके अभिधेय रहने पर 'अवस्करः' यह निपातित होता है । 'अव' पूर्वक 'कॄ' धातु से कर्म अर्थ में 'ऋदोरप्" ( पा० सू० ३।३।५७ ) सूत्र से अप् प्रत्यय, निपातन से सुट् होता है । अवकीर्यते इस अर्थ में अवस्करः = अन्नमल, इसके सम्बन्ध के कारण देश = स्थान भी उसी प्रकार से कह दिया जाता है । [ पकाते समय जो अन्न बटलोई आदि में लगा रह जाता है, मनुष्यों के खाने योग्य नही रहता है उसे लकड़ी या करछुल आदि से निकाल कर कौवा आदि को खिलाया जाता है, वह भी अन्नमल = अवस्कर है । वह जिस स्थान पर फेंका जाता है, जहाँ भोजनपात्र साफ किये जाते हैं वह स्थान भी 'अवस्कर' कहा जाता है । ] ॥ १४८ ॥

यदि रथ का अंग = अवयव हो तो 'अपस्कर' यह निपातित होता है । अप पूर्वक 'कॄ' धातु से "ऋदोरप्" सूत्र से अप् = अ प्रत्यय, [ ऋ का गुण, रपर ] उदा०—अपस्करः = रथ का अवयव ।

रथ का अवयव—इसका क्या फल है ? अपकरः [ ब्रह्मचारी का स्त्री में रेतःसेक = अपकर कहा जाता है । ] ॥ १४९ ॥

---

१. किन्तु याज्ञवल्क्यस्मृतौ तु—'संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी' ( आचारा० ८३ ) इति पाठ उपलभ्यते ।

## २५९०. विष्किरः शकुनिर्विकिरो वा[1] ॥ १५० ॥ ( १०६५ )

**'विकिर' इति किरतेर्विपूर्वस्य 'इगुपधज्ञाप्रीकिरः कः' (३.१.१३५) इति कप्रत्यये विहिते सुट् निपात्यते शकुनिश्चेद्भवति, विकिरशब्दाभिधेयो वा शकुनिर्भवति।**

**सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते।**

**'विष्किरो वा शकुनौ' इति वाग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणमिह—तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत् ॥**

### न्यासः

**विष्किरः शकुनिर्विकिरो वा ॥** ननु च 'विष्किरः शकुनौ वा' इत्येतावतैव सुड्विकल्पः सिद्धः, तत्र किमर्थं विकिरग्रहणम् ? इत्यत आह—**शकुनावेव वा विकिरशब्दस्य प्रयोगो यथा स्यादन्यत्र मा भूदित्येवमर्थं विकिरग्रहणम्** ॥ १५० ॥

### पदमञ्जरी

**विष्किरः शकुनिर्विकिरो वा ॥ विष्किरो वेत्यादि।** शकुनावभिधेये विष्किर इति वा सुण्निपात्यत इत्येतावतैव सुड्विकल्पः सिद्ध इत्यर्थः। **विकिरग्रहणमित्यादि।** असति तस्मिन् कप्रत्ययान्तस्य विकिरशब्दस्य शकुनौ विकल्पार्थमेवेदं वचनं स्यादिति विकिरशब्दस्यान्यत्र प्रयोगो न निवर्त्तितः स्यादिति। पुनर्विकिरग्रहणे तु सति भवति। यथा तु भाष्यं तथा 'विष्किरः शकुनौ वा' इत्येतावत् सूत्रम् ॥ १५० ॥

### भावबोधिनी

'विकिर' यह विपूर्वक 'कॄ' धातु से "इगुपधज्ञाप्रीकिरः कः" सूत्र से क = अ प्रत्यय, [ इत्व, रपर—वि + किर ] सुट् निपातित होता है, यदि शकुनि = पक्षी हो तो अथवा विकिर शब्द का वाच्य शकुनि हो तो भी।

सभी विष्किर शकुनि भक्षणीय हैं केवल कुक्कुट को छोड़ कर।

'विष्किरो वा शकुनौ' इस प्रकार 'वा' के ग्रहण से ही सुट् का विकल्प सिद्ध रहने पर 'विकिर' का यहाँ ग्रहण [ ज्ञापित करता है ]—इस विकिर का भी शकुनि से भिन्न अर्थ में प्रयोग न हो सके।

**विमर्श**— काशिकाकार ने 'विष्किरः शकुनिर्विष्किरो वा' ऐसा सूत्र स्वरूप लिखा है। किन्तु भाष्य में 'विष्किरः शकुनौ वा' ऐसा ही सूत्रस्वरूप है।

काशिका के पाठ के साथ वार्तिककार का मत मिश्रित है, क्योंकि भाष्यकार ने—"विष्किरः शकुनौ विकिरो" इस वार्तिक पर लिखा है—"विष्किरः शकुनौ विकिरो वेति वक्तव्यम्। शकुनौ वेत्युच्यमाने शकुनौ वा स्यादन्यत्रापि नित्यम्।"

इससे ऐसा स्पष्ट है कि काशिकाकार का पाठ पाणिनीय सूत्रस्वरूप से कुछ भिन्न है। इसीलिए उद्द्योतकार ने लिखा है—"विष्किरः शकुनिर्विकिरो वा' इत्यनार्षः पाठः।"

यहाँ एक बात और ध्यान देने योग्य है कि भाष्य में प्रस्तुत सूत्र के बाद 'आश्चर्यमनित्ये' यह सूत्र पठित हैं जब कि काशिका में प्रस्तुत सूत्र के दो सूत्रों से पहले 'आश्चर्यमनित्ये' सूत्र पठित है। सिद्धान्तकौमुदी में भी काशिका पाठ के समान ही है। अतः निर्णय सागर प्रेस से प्रकाशित महाभाष्य पञ्चम भाग पृ० १४१ में सम्पादक के प्रमाद से ही "विष्किरः शकुनौ वा" यह सूत्र पहले और 'आश्चर्यमनित्ये'- यह सूत्र बाद में है। उसमें उल्लिखित संख्या से भी यही तथ्य पुष्ट होता है कि "आश्चर्यमनित्ये" ६।१।४० पहले और "विष्किरः शकुनौ वा" ६।१।१५० बाद में ही होना चाहिए था ॥ १५० ॥

---

१. 'विष्किरः शकुनौ वा' इति पाठोऽन्येषां व्याख्यातॄणाम्।

## २५९१. ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ १५१ ॥ ( ३५२७ )

**चन्द्रशब्द उत्तरपदे ह्रस्वात्परः सुडागमो भवति मन्त्रविषये। 'सुश्चन्द्रो (तै० सं० ४.४.४.६) युष्मान्'। ह्रस्वादिति किम् ? 'सूर्याचन्द्रमसाविव' ( ऋ० ५.५१.१५ )। मन्त्र इति किम् ? सुचन्द्रा पौर्णमासी। उत्तरपदं समास एव भवतीति प्रसिद्धम्, तत इह न भवति—शुक्रमसि, चन्द्रमसि ॥**

## २५९२. प्रतिष्कशश्च कशेः ॥ १५२ ॥ ( १०६६ )

**'कश गतिशासनयोः' ( धा० पा० १०२५ ) इत्येतस्य धातोः प्रतिपूर्वस्य पचाद्यचि कृते सुट् निपात्यते, तस्यैव षत्वम्।**

**'ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः'।**

### न्यासः

**ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥** पूर्वं कात्पूर्वग्रहणादभक्तः सुडित्युक्तम्। इह कात्पूर्वत्वं न सम्भवति, आगमलिङ्गञ्चास्य टित्वमस्ति, तत आगम एव सुड् विज्ञायत इत्याह—**सुडागमो भवतीति**। स च भवन् उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति ह्रस्वादिति पञ्चम्याः, चन्द्रोत्तरपद इति च सप्तम्याः षष्ठ्यां प्रकल्पितायां चन्द्रशब्दस्यैव भवति। **सुश्चन्द्र इति**। प्रादिसमासः। **सूर्याचन्द्रमसाविति**। द्वन्द्वः, 'देवताद्वन्द्वे च' इत्यानङ्। अथेह कस्मान्न भवति—शुक्लमसि, चन्द्रमसीति, अत्रापि ह्रस्वात् परश्चन्द्रशब्द उत्तरपदमस्ति ? इत्यत आह—**उत्तरपदमित्यादि**। शुक्लमसि, चन्द्रमसीति वाक्ये। तस्मादिह चन्द्रशब्द उत्तरपदग्रहणेन न गृह्यत एव। यस्मादुत्तरपदं समास एव प्रसिद्धम् ॥ १५१ ॥

**प्रतिष्कशश्च कशेः ॥ प्रतिगतः कशां प्रतिकशोऽश्व इति**। प्रादिसमासः। ननु च कशाशब्दोऽपि कशेरेव धातोः पचाद्यचमुत्पाद्य साध्यते, तदिहापि सुटा भवितव्यम् ? इत्यत आह—**यद्यपीत्यादि**। कशेरेव धातोर्य-

### पदमञ्जरी

**ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ सुडागमो भवतीति**। पूर्वं कात्पूर्वग्रहणादभक्तः सुडित्युक्तम्, इह तु कात्पूर्वत्वं न सम्भवति, आगमलिङ्गं च टित्वमस्तीत्यागम एव सुडुक्त इति भावः। स च भवन् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' ( शा० परि० ९७ ) इति चन्द्रशब्दस्यैव भवति। **सूर्याचन्द्रमसाविति**। द्वन्द्वः, 'देवताद्वन्द्वे च' इत्यानङ्।

**उत्तरपदमित्यादि**। स्वनिकायप्रसिद्धिरेवेषा ॥ १५१ ॥

**प्रतिष्कशश्च कशेः ॥ अत्र यद्यपीत्यादि**।

### भावबोधिनी

'चन्द्र' शब्द उत्तर पद रहने पर ह्रस्व से परे सुट् का आगम होता है मन्त्रविषय में। उदा०—सुश्चन्द्रो युष्मान्। [ सु + चन्द्रः, सुट् = स् आगम, श्चुत्व। ]

ह्रस्व से परे—इसका क्या फल है ? सूर्याचन्द्रमसाविव। [ यहाँ दीर्घ से परे है। अतः सुट् नहीं होता है। ]

मन्त्र-विषय में—इसका क्या फल है ? सुचन्द्रा पौर्णमासी। [ यह लौकिक प्रयोग है। ]

उत्तरपद [ पारिभाषिक रूप से ] समास में ही होता है, ऐसा प्रसिद्ध है, इसलिए यहाँ नहीं होता है—शुक्रमसि चन्द्रमसि। [ असि पद के बाद होने पर भी पारिभाषिक उत्तर पद नहीं है। अतः सुट् नहीं है। ] ॥ १५१ ॥

'प्रति' उपसर्ग जिसके पूर्व है, ऐसी 'कश गतिशासन अर्थों में है' इस धातु को, पचाद्यच् करने पर, सुट् निपातित होता है उसी का षत्व होता है। उदा०—

ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः। [ प्रति + कश् + अच् = अ, सुट् = स्, षत्व—प्रतिष्कशः। ]

वार्त्तापुरुषः, सहायः, पुरोयायी वा प्रतिष्कश इत्यभिधीयते ।

कशेरिति किम् ? प्रतिगतः कशां प्रतिकशोऽश्वः ।

अत्र यद्यपि कशेरेव कशाशब्दः, तथापि कशेरिति धातोरुपादानं तदुपसर्गस्य प्रतेः प्रतिपत्त्यर्थम् । तेन धात्वन्तरोपसर्गान्न भवति ॥

## २५९३. प्रस्कण्वहरिश्चन्द्रावृषी ॥ १५३ ॥ ( १०६७ )

प्रस्कण्व, हरिश्चन्द्र–इति सुट् निपात्यते, ऋषी चेदभिधेयौ भवतः । प्रस्कण्व ऋषिः । हरिश्चन्द्र ऋषिः । हरिश्चन्द्रग्रहणममन्त्रार्थम् ।

ऋषी इति किम् ? प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥

### न्यासः

दुपादानं तत् तस्यैव कशेर्य उपसर्गः प्रतिशब्दस्तस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थम् । न च कशेः प्रतिरुपसर्गः, किं तर्हि ? गमेः । तेन धात्वन्तरोपसर्गान्न भवति ॥ १५२ ॥

**प्रस्कण्वहरिश्चन्द्रावृषी ॥** प्रस्कण्वहरिश्चन्द्राविति । प्रकृष्टः कण्वोऽस्येति प्रस्कण्वः । हरिश्चन्द्रोऽस्येति हरिश्चन्द्रः । व्युत्पत्तिमात्रमेतत् कृतम्, न त्वत्रावयवार्थोऽस्ति । रूढिशब्दौ ह्येतौ प्रत्यस्तमितावयवार्थौ क्वचिदेव ऋषिविशेषे वर्तेते । ननु च हरिश्चन्द्रे 'ह्रस्वाच्चन्द्रोत्तरपदे' इत्यनेनैव सुट् सिद्धः, तत्किमर्थं हरिश्चन्द्रग्रहणम् ? इत्यत आह—**हरिश्चन्द्रग्रहणमित्यादि ।**

**प्रकण्व इति ।** प्रगतः कण्वोऽस्मादिति प्रकण्वः । हरिरिव चन्द्रोऽस्येति हरिचन्द्रः ॥ १५३ ॥

### पदमञ्जरी

**कशेरिति ।** यद्धातोरुपादानं तस्य नान्यत्प्रयोजनमिति भावः ॥ १५२ ॥

**प्रस्कण्वहरिश्चन्द्रावृषी ॥ हरिश्चन्द्रो राजर्षिः । प्रकण्वो देश इति ।** कण्वम्=पापम्, तत्प्रगतं यस्मात्स एवमुच्यते । **हरिः चन्द्रो यस्य मुग्धस्य स हरिचन्द्रः ॥ १५३ ॥**

### भावबोधिनी

वार्तापुरुष, सहाय अथवा पुरोयायी ( आगे चलने वाला ) 'प्रतिष्कशः' ऐसा कहा जाता है ।

कश् धातु को—इसका क्या फल है ? प्रतिगतः कशाम्—प्रतिकशः अश्वः । [ यहाँ 'प्रति' का सम्बन्ध गम् के साथ है और 'कशा' का प्रयोग है √कश् धातु का नहीं है । अतः सुट् नहीं होता है । ]

यहाँ यद्यपि 'कश' धातु का ही कशा शब्द है, तथापि 'कश' इस धातु का उपादान होने के कारण उसी के उपसर्ग 'प्रति' का ज्ञान कराने के लिए है । अतः अन्य किसी धातु का उपसर्ग होने से यहाँ नहीं होता है । [ क्योंकि प्रतिगतः कशाम् में गम् के साथ 'प्रति' उपसर्ग हैं 'कश्' = कशा के साथ नहीं । अतः सुट् नहीं होता है । ] ॥ १५२ ॥

यदि ऋषि अर्थ हो तो 'प्रस्कण्व' और 'हरिश्चन्द्र' शब्दों में सुट् निपातित होता है । उदा०—प्रस्कण्वः ऋषिः । [ प्र + कण्वः, सुट् = स् ] । हरिश्चन्द्रः ऋषिः । [ हरि + चन्द्रः, सुट् = सः, श्चुत्व । ]

हरिश्चन्द्र का ग्रहण मन्त्रभिन्न स्थल के लिए है ।

ऋषि हों—इसका क्या प्रयोजन है ? प्रकण्वः माणवकः । हरिचन्द्रः माणवकः । [ यहाँ माणवक = ब्रह्मचारी है । ऋषि नहीं है । हरिचन्द्र ब्रह्मचारी है, ऋषि नहीं है । अतः सुट् नहीं होता है । ] ॥ १५३ ॥

## २५९४. मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ २५४ ॥ ( १०६८ )

**मस्कर, मस्करिन्—इत्येतौ यथासंख्यं वेणौ परिव्राजके च निपात्येते। मकरशब्दो ह्यव्युत्पन्नं प्रातिपदिकम्, तस्य वेणावभिधेये सुट् निपात्यते, परिव्राजके त्विनिरपि। मस्करो वेणुः। मस्करी परिव्राजकः।**

**वेणुपरिव्राजकयोरिति किम्? मकरो ग्राहः, मकरी समुद्रः।**

**केचित्पुनरत्र माङ्युपपदे करोतेः करणेऽच्प्रत्ययमपि निपातयन्ति, माङश्च ह्रस्वत्वम्, सुट् च। मा क्रियते येन=प्रतिषिध्यते, स मस्करो वेणुः। वेणुग्रहणं च प्रदर्शनार्थम्। अन्यत्रापि भवति— मस्करो दण्ड इति।**

**न्यासः**

**मस्करमस्करिणौ वेणुपरिव्राजकयोः॥ परिव्राजके त्विनिरपीति।** निपात्यत इत्यपेक्षते। किं पुनः कारणं न प्राप्नोतीति? मत्वर्थाभावात्। अविद्यमानमस्करोऽपि परिव्राजको मस्करीत्युच्यते; मस्करिशब्दस्य तत्रैव रूढत्वात्। **अच्प्रत्ययमपि निपातयन्तीति** कर्त्तर्युच्यमानः करणे न प्राप्नोतीत्यच्प्रत्ययमपि निपातयन्ति। यदि चेह वेणौ मस्करशब्दो निपात्यते तदा दण्डे न प्राप्नोति, तत्रापि चासौ लोके प्रयुज्यते? इत्याह— **वेणुग्रहणमित्यादि।** येन निवार्यते तदुपलक्षणार्थं वेणुग्रहणम्। दण्डेनापि निवार्यत इत्यत्रापि भवत्येव।

**पदमञ्जरी**

**मस्करमस्करिणौ वेणुपरिव्राजकयोः॥ परिव्राजके त्विनिरपीति।** मत्वर्थाभावादिनिरप्राप्तः, अतः सोऽपि निपात्यते, न हि परिव्राजको मकरेण तद्वान्, मस्करेण तु वेणुना तद्वान् भवति; दण्डधारणात्, ततः किम्? मस्करशब्दादिनिना सिद्धम्। एवमपि संयोगे मत्वर्थीयविधानान्मस्करसंयुक्त एव मस्करीत्युच्येत, मा भूदेवं परिव्राजकमात्रवचनो यथा स्यादितीनिर्निपात्यते, व्युत्पत्तेरदर्शनाद्वा नात्र स्पष्टं निपात्यम्, तद्दर्शयति— **केचिदिति। माकरणशील इति।** प्रतिषेधशील इत्यर्थः। **कर्मापवादित्वादिति।** कर्मशब्देनेह काम्यकर्माणि विवक्षितानि, न नित्यनैमित्तिकानि, तानि हि मुमुक्षोरपि कर्त्तव्यानि। यथाऽऽहुः—

**मोक्षार्थी न प्रवर्त्तेत ततः काम्यनिषिद्धयोः।**
**नित्यनैमित्तिके कुर्यात् प्रत्यवायनिवृत्तये॥** इति।

**भावबोधिनी**

मस्कर और मस्करिन्—ये शब्द क्रमशः वेणु और परिव्राजक ( बौद्ध संन्यासी ) अर्थों में निपातित होते हैं। मकर शब्द अव्युत्पन्न ( रूढ ) प्रातिपदिक है, वेणु अर्थ रहने पर उसको सुट् आगम निपातित होता है और परिव्राजक अर्थ में 'इनि' प्रत्यय भी निपातित् होता है। उदा०—मस्करो वेणुः। मस्करी परिव्राजकः। [ मकर में ककार से पूर्व सुट् होता है—मस्करः। इनि = इन् प्रत्यय, भसंज्ञा, अलोप, विभक्तिकार्य—मस्करी। ]

वेणु और परिव्राजक अर्थों में इसका क्या फल है? मकरः = ग्राहः, मकरी = समुद्रः। [ यहाँ ग्राह और समुद्र अर्थों में सुट् नहीं होता है। मकराः सन्ति अस्मिन्—इसमें मत्वर्थीय इनि तो होता ही है। ]

कुछ विद्वान् तो इनमें माङ् उपपद कृ धातु से करण अर्थ में अच् प्रत्यय का भी निपातन करते हैं और माङ् का ह्रस्व करते हैं, सुट् आगम करते हैं। मा क्रियते = येन प्रतिषिध्यते—इस अर्थ में मस्करः वेणुः। वेणु का ग्रहण प्रदर्शन के लिए है। अन्य अर्थों में भी होता है—मस्करः दण्डः। परिव्राजक अर्थ में भी—माङ् उपपद 'कृ' धातु से ताच्छील्य ( उस प्रकार के स्वभाव वाला ) अर्थ में 'इनि' प्रत्यय निपातित होता है और माङ् का ह्रस्वत्व तथा सुट् प्रत्यय पूर्व के समान होते है। माकरणशीलः = प्रतिषेध कराने वाला मस्करी—कर्मों का अपवादी ( सांसारिक कर्मों को न करिये ऐसा कहने वाला ) होने से परिव्राजक कहा जाता है। वह इस प्रकार कहता हैं—सासारिक कर्म मत करो, तुम्हारे लिए शान्ति श्रेयस्करी है। [ इस प्रकार सांसारिक कर्मों को करने से रोकने वाला संन्यासी परिव्राजक कहा जाता है। ]

परिव्राजकेऽपि माङ्युपपदे करोतेस्ताच्छील्य इनिर्निपात्यते, माङो ह्रस्वत्वं सुट् च तथैव। माकरणशीलो मस्करी कर्मापवादित्वात्परिव्राजक उच्यते। स ह्येवमाह—मा कुरुत कर्माणि, शान्तिर्वः श्रेयसीति ॥

**२५९५. कास्तीराजस्तुन्दे नगरे ॥ १५५ ॥ ( १०६९ )**

कास्तीर, अजस्तुन्द—इत्येतौ शब्दौ निपात्येते नगरेऽभिधेये। ईषत्तीरमस्य, अजस्येव तुन्दमस्येति व्युत्पत्तिरेव क्रियते, नगरं तु वाच्यमेतयोः। कास्तीरं नाम नगरम्। अजस्तुन्दं नाम नगरम्।

नगर इति किम् ? कातीरम्। अजतुन्दम् ॥

**२५९६. कारस्करो वृक्षः ॥ १५६ ॥ ( १०७० )**

'कारस्कर' इति सुट् निपात्यते, वृक्षश्चेद्भवति। कारं करोतीति 'दिवाविभानिशाप्रभाभास्करान्त' ( ३.२.२१ ) इति टप्रत्ययः। कारस्करो वृक्षः।

वृक्ष इति किम् ? कारकरः।

**न्यासः**

कर्मापवादित्वादिति। सांसारिकं फलं कर्म। तदपवदितुं = प्रतिषेद्धुं शीलं यस्य स कर्मापवादी, तस्य भावः कर्मापवादित्वम्। स ह्येत्यादिना तदेव कर्मापवादित्वं दर्शयति ॥ १५४ ॥

कास्तीराजस्तुन्दे नगरे ॥ १५५ ॥

कारस्करो वृक्षः ॥ केचिदिति। यदि तर्हि सूत्रमेतत् केचिन्नाधीयते तत् कथं तेषां कारस्करशब्दो वृक्षे

**पदमञ्जरी**

तानि कर्माण्यपवदितुं = प्रतिषेद्धुं शीलमस्य स कर्मापवादी। परमहंसास्तु कर्ममात्रमपवदन्ति। मा कुरुतेति। न कर्त्तव्यानीत्यर्थः। कर्मणि लुङ् ॥ १५४ ॥

कास्तीराजस्तुन्दे नगरे ॥ केचिन्नगरे इति प्रथमाद्विवचनान्तमाहुः। वृत्तौ तु सप्तम्यन्तं व्याख्यातम्। कातीरमिति। 'ईषदर्थे च' इति काभावः ॥ १५५ ॥

कारस्करो वृक्षः ॥ पारस्करप्रभृतिष्वेवेति। नेदं सूत्रमधीयत इत्यर्थः ॥ १५६ ॥

**भावबोधिनी**

**विमर्श**—प्रस्तुत सूत्र में मस्करी = परिव्राजक अर्थ में निपातित है। इस आधार पर पाश्चात्य विद्वान् सूत्रकार पाणिनि को गौतम बुद्ध के बाद का मानते हैं, क्योंकि बौद्ध संन्यासियों को 'मस्करी' कहा जाता है ॥ १५४ ॥

कास्तीर और अजस्तुन्द—ये दो शब्द नगर अर्थ अभिधेय रहने पर निपातित होते हैं। ईषत् तीरम् अस्य, अजस्य इव तुन्दम् अस्य ( थोड़ा तीर = तट है, जिसका। बकरे की तोंदी के समान तोंदी है, जिसकी— ) यह केवल व्युत्पत्ति ही की जाती है, [ अतः यह अर्थ नहीं लिया जाता है ] इनका वाच्यार्थ तो नगर ही होता है। उदा०—कास्तीरं नाम नगरम्। अजस्तुन्दं नाम नगरम्। [ का + तीर, अज + तुन्द, सुट् = स् होता है। ]

नगर अर्थ में ? इसका क्या फल है ? कातीरम्। अजतुन्दम्। [ यहाँ व्युत्पत्ति में प्रदर्शित ही अर्थ है, नगर नहीं। अतः सुट् नहीं होता है। ] ॥ १५५ ॥

कारस्कर—यह निपातित होता है यदि वृक्ष हो तो। उदा०—कारं करोति—इस अर्थ में "दिवाविभा-निशाप्रभा-भास्करान्त०" ( पा० सू० ३।२।२१ ) सूत्र से ट = अ प्रत्यय होता है—कारस्करो वृक्षः [ कार + कर, सुट् = स् ]

**केचित्[1] पारस्करप्रभृतिष्वेव कारस्करो वृक्ष इति पठन्ति ॥**

## २५९७. पारस्करप्रभृतीनि च संज्ञायाम् ॥ १५७ ॥ ( १०७१ )

**पारस्करप्रभृतीनि च शब्दरूपाणि निपात्यन्ते संज्ञायां विषये। पारस्करो देशः। कारस्करो वृक्षः। रथस्पा नदी। किष्कुः प्रमाणम्। किष्किन्धा गुहा।**

**❀ तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ❀ ( ग० सू० १६० )। तस्करश्चोरः। बृहस्पतिर्देवता।**

### न्यासः

सिध्यति? इत्याह-**पारस्करप्रभृतिष्वेवेत्यादि** ॥ १५६ ॥

**पारस्करप्रभृतीनि च संज्ञायाम्** ॥ पारस्करप्रभृतयो रूढिशब्दा यथाकथञ्चिद् व्युत्पाद्याः नात्रावयवार्थं प्रत्यभिनिवेष्टव्यम्। पारं करोतीति पारस्कः, 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टः। रथं पातीति **रथस्पा**। 'आतोनुपसर्गे कः'। कार्यं करोतीति करोतेर्डुः, कार्यस्य च किरादेशः—**किष्कुः**। किमप्यन्तर्दधातीति दधातेः पूर्ववत् कः, किमो द्विर्वचनम्, पूर्वस्य च मकारस्य लोपः—**किष्किन्धा**।

**तद्बृहतोरित्यादि**। तद्, बृहत्—इत्येतयोर्यथाक्रमं करपतिशब्दयोः परतश्चोरे देवतायाञ्चाभिधेयायां सुड् भवति, अन्त्यस्य च तकारस्य लोपः। तत् करोतीति 'कियत्तद्बहुषु' इत्यज्विधानम्, **तस्करश्चौरः**,

### पदमञ्जरी

**पारस्करप्रभृतीनि च संज्ञायाम्** ॥ रूढिशब्दा एते यथाकथञ्चिद्व्युत्पाद्याः। पारङ्करोतीति **पारस्करः**, 'कृञो हेतु' इत्यादिना टः। रथं यातीति रथष्या[2]। 'आतोऽनुपसर्गे कः'। षत्वमप्यत्र निपात्यते। अन्ये तु सकारमेव पठन्ति। किं करोति करोतेर्डुः, किमोऽन्त्यलोपः, सुट्, **किष्कुः**। किमपि धत्ते **किष्किन्धा**। पूर्ववत्कः, किमो द्विर्वचनं पूर्वस्य मलोपः, सुट, उभयत्राप्यत्र षत्वमपि निपात्यते। तत्करोतीति **तस्करः**। अत्र हि तच्छब्देन चोरकर्म प्रसिद्धं निन्द्यं परामृश्यते।

**प्रात्तुम्पताविति**। 'तुप तुम्प हिंसार्थौ' ( धा० पा० १३०९, १३१० ) इत्येतस्मिन्धातौ परतः प्रशब्दात्परः सुड् भवति धात्वर्थस्य चेद् गौः कर्त्ता भवति, प्रस्तुम्पतीति यत्ने तिबन्ते सुट्। स्वशब्देन धातुग्रहणात्तदादावपि भवति प्रस्तुम्पतो गावौ, प्रस्तुम्पन्ति गाव इति।

### भावबोधिनी

वृक्ष अर्थ में—इसका क्या फल है? कारकरः। [ यहाँ सुट् नहीं होता है। ]

कुछ विद्वान् "पारस्करप्रभृतीनि च" इस अग्रिम सूत्र के गणपाठ में ही 'कारस्करो वृक्षः' ऐसा पाठ मानते हैं। [ उनके अनुसार यह सूत्र नहीं है—ऐसा समझना चाहिए। सिद्धान्तकौमुदी भी ऐसा कहा गया है। अतः यह स्वतन्त्र सूत्र होना विवादग्रस्त है।

अग्रिम सूत्र के उदाहरण के रूप में महाभाष्य में 'कारस्करो वृक्षः' ऐसा स्पष्ट उल्लेख है। अतः भाष्य के अनुसार भी यह स्वतन्त्र सूत्र नहीं प्रतीत होता है ] ॥ १५६ ॥

संज्ञा-विषय रहने पर 'पारस्कर' आदि शब्दरूप निपातित होते हैं। उदा०—पारस्करो देशः। कारस्करो वृक्षः। रथस्पा नदी। किष्कुः प्रमाणम्। किष्किन्धा गुहा।

[ ये पूर्वोक्त संज्ञा शब्द रूढ हैं तथापि इनकी व्युत्पत्ति करनी चाहिए—( १ ) पारस्करः—पारं करोति—इस अर्थ में 'कृञो हेतुताच्छील्यानुलोम्येषु' सूत्र से कृ + ट = अ प्रत्यय, ऋ का गुण, रपर, उपपदसमास, प्रस्तुत सूत्र से सुट् =

१. इतोऽग्रे 'नेदं सूत्रमधीयते' इति पाठो दृश्यते स न्यास-पदमञ्जर्यसम्मतः।

२. 'रथस्पा' इति काशिका।

**चोरदेवतयोरिति किम् ? तत्करः। बृहत्पतिः।**

**संज्ञाग्रहणादुपाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहणं प्रपञ्चार्थम्।**

**❀ प्रात्तुम्पतौ गवि कर्तरि ❀ ( ग० सू० १६१ )। तुम्पतौ धातौ प्रशब्दात्परस्सुट् भवति गवि कर्तरि। प्रस्तुम्पति गौः।**

**गवीति किम् ? प्रतुम्पति वनस्पतिः।**

**पारस्करप्रभृतिराकृतिगणः।**

**न्यासः**

तत्करोऽन्यः। बृहतां पतिर्बृहस्पतिर्देवता, बृहत्पतिरन्यः। अथ किमर्थश्चौरदेवतयोरित्युपाधिरुपादीयते, यावता संज्ञाग्रहणादेव तत्परिग्रहः सिद्धः, न ह्यन्यस्य तस्करबृहस्पतिशब्दौ संज्ञा ? इत्यत आह— **संज्ञाग्रहणमित्यादि।**

**प्रात्तुम्पतावित्यादि।** 'तुप तुम्प तृप्तौ' इति अत्र परतः प्रशब्दात् परस्य सुड् भवति गवि कर्त्तरि।

**पदमञ्जरी**

**चित्तचित्तयोरिति।** 'चिती संज्ञाने' ( धा० पा० ३९ ), क्तिन्, 'नपुंसके भावे क्तः'।

**भावबोधिनी**

स्। ( २ ) कारस्करः—कारं करोति—आदि प्रक्रिया पूर्व सूत्र की व्याख्या में देखें। ( ३ ) रथस्पा—रथं पाति— इस में "आतोऽनुपसर्गे कः" सूत्र से क = अ प्रत्यय, "आतो लोप इटि च" से धातु के आ का लोप, टाप् = आ, सुट्।

पदमंजरीकार ने—रथस्या पाठ माना है—रथं याति। क प्रत्यय, सुट् और षत्व निपातन माने हैं। किन्तु महाभाष्य में 'रथस्पा' यही पाठ है।

( ४ ) किष्कुः—कार्यं करोति—इस अर्थ में कृ धातु से डु = उ प्रत्यय, 'कार्य' का किर् आदेश, रेफ का सत्व, षत्व। पदमंजरीकार किम् करोति—यह व्युत्पत्ति मानकर किम् + कुः में, अन्त्य लोप, सुट्, षत्व निपातन करते हैं।

( ५ ) किमपि अन्तर्हितं धत्ते—इस में किम् + धा + क = अ, आलोप, किम् का द्वित्व, पूर्व के म् का लोप—कि किम् धा, सुट्, षत्व म् का अनुस्वार, परसवर्ण—किष्किन्धा। ]

❀ 'तत्' और 'बृहत्' के बाद 'कर' और 'पति' शब्द हों, क्रमशः चोर और देवता अर्थों में सुट् आगम और त् का लोप होता हैं। ❀ उदा०—तस्करः [ तत् = चौर्यादिकं करोति— इस अर्थ में तत् सुट् + कर, त् लोप—तस्करः = चोर। अन्यत्र 'तत्करः' होता है। ] बृहस्पतिः देवता। [ बृहतां पतिः—इसमें बृहत् सुट् = स् पति, त् का लोप—बृहस्पतिः = देवता। अन्यत्र बृहत्पतिः। ]

चोर और देवता अर्थों में—इसका क्या फल है ? तत्करः। बृहत्पतिः। [ भिन्न अर्थ होने से सुट् और त् लोप नहीं होते हैं। ]

'संज्ञायाम्' इसका ग्रहण होने से उपाधि ( अर्थ विशेष ) का परिग्रहण सिद्ध ही रहने पर गणपाठ में चोर और देवता का ग्रहण प्रपञ्चार्थ ( स्पष्ट बोधनार्थ ) है।

❀ प्र शब्द से परे तुम्पति धातु रहने पर गाय कर्ता रहने पर सुट् होता है। ❀ उदा०—प्रस्तुम्पति गौः। [ प्र + तुम्पति, सुट् ]।

गाय—इस का क्या फल है ? प्रतुम्पति वनस्पतिः। [ यहाँ नहीं होता है। धातुपाठ में 'तृप तृम्फ तृप्तौ' ऐसा है और 'तुप, तुम्प, तुफ, तुम्फ हिंसायाम्' ऐसा पाठ है। अतः यहाँ पदमंजरीकार का अर्थ ही प्रामाणिक है। न्यास कार का अर्थ अप्रामाणिक है। ये धातुएँ पास-पास पठित हैं। अतः प्रमादात् ऐसा लिखा प्रतीत होता है। ]

पारस्कर-प्रभृति—आकृतिगण हैं। [ अतः अन्य अपठित शब्द भी उदाहरण होते हैं। ]

**अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः।** प्रायश्चित्तम्। प्रायश्चित्तिः। **यदुक्तम्—'प्रायस्य चित्तिचित्तयोः सुडस्कारो वा' ( म० भा ) इति, तत्संगृहीतं भवति ॥**

## २५९८. अनुदात्तं पदमेकवर्जम् ॥ १५८ ॥ ( ३६५० )

**परिभाषेयं स्वरविधिविषया। यत्रान्यः स्वर उदात्तः स्वरितो वा विधीयते, तत्रानुदात्तं पदमेकं वर्जयित्वा भवतीत्येतदुपस्थितं द्रष्टव्यम्। अनुदात्ताच्कमनुदात्तम्। कः पुनरेको वर्ज्यते ? यस्यासौ स्वरो**

**न्यासः**

**प्रस्तुम्पति गौः।** प्रतुम्पत्येवान्यः। **यदुक्तमिति** तु भाष्ये। यदि तर्हि पारस्करप्रभृतिराकृतिगणः, 'प्रतिष्कशश्च कशेः' इत्यारभ्य पूर्वं सूत्रं न पठितव्यम्, तस्याप्यनेनैव संग्रहात् ? सत्यमेतत्; प्रपञ्चार्थं तु पठितव्यम् ॥ १५७ ॥

**अनुदात्तं पदमेकवर्जम् ॥ एकवर्जमिति।** एकं वर्जयित्वेत्यर्थः। 'द्वितीयायाञ्च' इति णमुल्प्रत्ययः। यद्ययमधिकारार्थः स्यात्, ततः षाष्ठिक एव स्वरः संगृहीतः स्यात्। ये त्वन्ये स्वराः 'समानोदरे शयित ओ चोदात्तः', अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्येवमादयः सप्ताध्याय्याम् ते न संगृहीताः स्युः। परिभाषायां त्वस्यां तेऽपि संगृहीता भवन्ति। सा ह्येकदेशे स्थितापि सकलं शास्त्रमभिज्वलयति, यथा वेश्म प्रदीप इवेत्यालोच्याह—**परिभाषेयमिति।** विध्यङ्गशेषभूता चेयम्। परिभाषा हि कार्यवाक्यानां शेषभावगता। यस्य पदावयवस्य स्वरित उदात्तो वा विधीयते तत्र शेषमनुदात्तं भवति। **स्वरविधिविषयेति।** स्वरविधि-

**पदमञ्जरी**

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।
तपो निश्चयसंयोगात्प्रायश्चित्तमिति स्मृतम् ॥ १५७ ॥

**अनुदात्तं पदमेकवर्जम् ॥ एकवर्जमिति।** एकं वर्जयित्वेत्यर्थः। 'द्वितीयायां च' इति णमुल्। तत्र हि परीप्सायामिति प्रायिकम्। अत्र यदि पदमिति जातावेकवचनं स्यात्तदैकवर्जमित्येकशब्देनापि प्रत्यासत्त्या पदमेवोच्येत, ततश्चायमर्थो भवति—वाक्ये पदान्यनुदात्तानि भवन्ति, एकं पदं वर्जयित्वेति। अनुदात्तशब्दश्चेदानीं लौकिकः, लोके ह्यचामनुदात्तादिगुणयोगे हलपि तदनुरक्तत्वात्तद्धर्मा गृह्यत इति अज्झलसमुदायरूपं पदमेवा-नुदात्तमिति सामानाधिकरण्येन व्यपदिशति। अत्र पक्षे किमेकं वर्जनीयमिति नियमकारणाभावात् सर्वेषामेव पदानां पर्यायेण वर्जनात्स्वरनियमो न स्यात्। तस्मात्पदमिति व्यक्तिनिर्देशः, विवक्षितं चैकत्वम्। अनुदात्त-

**भावबोधिनी**

पारस्करप्रभृति में अविहित लक्षण सुट् समझना चाहिए। उदा०—प्रायश्चित्तम्। प्रायश्चित्तिः। [ प्राय + चित्त, प्राय + चित्ति, सुट् = स्, श्चुत्व ] जैसा कि कहा गया है—"प्राय को चित्ति और चित्त पर सुडस्कार = सुट् विकल्प से होता है।' यह भी संगृहीत हो जाता है। [ "प्रतिष्कशे ( ६।१।१५२ से लेकर 'कारस्करो वृक्षः' ( ६।१।१५६ ) तक के सूत्र पढ़ने की आवश्यकता नहीं है, इसी पारस्करगण से संगृहीत हो जाते हैं। उक्त सूत्र केवल प्रपञ्चार्थ हैं। ] ॥ १५७ ॥

यह स्वर-विधि-विषयक परिभाषा ( सूत्र ) है। जिस ( पद ) में उदात्त अथवा स्वरित कोई दूसरा स्वर किया जाता है वहाँ 'एकं वर्जयित्वा अनुदात्तं पदं भवति' ( एक को छोड़ कर पद अनुदात्त स्वरवाला हो जाता है )—ऐसा उपस्थित होना समझना चाहिए। [ उपस्थित होता है—इस कथन से स्वर-विधायक सूत्रों के साथ प्रस्तुत सूत्र की एकवाक्यता होती है। अनुदात्ताः अस्य सन्ति—इसमें मत्वर्थक अच् प्रत्यय 'अर्श—आदिभ्योऽच्' से करने पर—अनुदात्तम् = अनुदात्त अचों वाला पद—ऐसा होता है—] अनुदात्ताच्क = अनुदात्त। किस एक को छोड़ा जाता है ? जिसका यह [ उदात्त या स्वरित ] स्वर किया जाता है। कहा जायगा—"धातोः" ( पा० सू० ६।१।१६२ )

**विधीयते । वक्ष्यति—'धातोः' ( ६.१.१६२ ) अन्त उदात्तो भवतीति; गोपायति, धूपायति । धातोरन्त्यमचं वर्जयित्वा परिशिष्टमनुदात्तं भवति । धातुस्वरं श्नास्वरो बाधते—लुनाति, पुनाति । श्नास्वरं तस्स्वरः—लुनीतः, पुनीतः । तस्स्वरमाम्स्वरः—लुनीतस्तराम, पुनीतस्तराम् ॥**

**न्यासः**

विषयोऽस्या इति विग्रहः । **यत्रान्य इति** । अनुदात्तापेक्षमन्यत्वम् । **तत्रानुदात्तं पदमिति** । ननु च 'नीचैरनुदात्तः' इत्यनुदात्तशब्दो विशिष्टगुणेऽवसङ्गीतः, तत्राज्झललक्षणञ्च पदम्, पदशब्दस्यार्थस्तत्, कथमत्र सामानाधिकरण्यम् ? नैष दोषः; अनुदात्ताच्कमनुदात्तं पदभिमहाभिमतम्, तेन पद एवानुदात्तशब्दो वर्त्तते । कथम् ? मत्वर्थीयाकारान्तत्वात् । अनुदात्ता अस्य सन्तीत्यनुदात्तम् । अर्शआदेराकृतिगणत्वादत्राच् । एकवर्जमित्युक्तम्, स त्वेको न ज्ञायते यो वर्जनीयः, तस्याभिव्यक्तये पृच्छति—**कः पुनरित्यादि** । यस्य चोदात्तः स्वरितो वा विधीयते स एवैको वर्ज्यते । यदि ह्यसावपि न वर्ज्यते तस्य तत् स्वरविधानमनर्थकं स्यात् । **गोपायति, धूपायतीति** । 'गुपू रक्षणे', 'धूप सन्तापे', गुपूधूप' इत्यादिनायप्रत्ययान्तस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञा, 'धातोः' इति धातोश्चान्तोदात्तत्वम्, आयप्रत्ययान्तस्यान्त्यकाराकारस्य धातुस्वरत्वम् । **धातुस्वरं श्नास्वरो बाधत**

**पदमञ्जरी**

**शब्दश्च 'नीचैरनुदात्तः' इत्यविशेषे परिभाषिक इति तस्यैव ग्रहणं युक्तम् । एकशब्देनापि सन्निधानादजेवोच्यते । कथं तर्ह्यज्झलसमुदायरूपस्य पदस्याज्मात्रवाचिनानुदात्तशब्देन सामानाधिकरण्यम् ? अवयवावयविनोरभेदोपचारात् अर्शआद्यच्प्रत्ययान्तत्वाद्वाऽनुदात्ताच्कं पदमेवानुदात्तम् । यद्येवम्, अनुदात्तशब्देनापि पदमेव प्राधान्येनोच्यते अज्गुणाभावेनेति पुनरप्येकशब्दस्य संख्येयापेक्षायां प्रधानभूतपदमेव संख्येयं प्राप्नोति ? उच्यते; पदमित्येकत्वं विवक्षितमित्युक्तम्, तत्रैकं पदमनुदात्ताच्कं भवत्येकं पदं वर्जयित्वेति नायमर्थः सम्भवतीति सामर्थ्याद् गुणभूतोऽप्यजेवैकशब्देनोच्यते ।**

**यद्वा, पदशब्दोऽपि लक्षणया तत्स्थेष्वक्षु वर्त्तते, तत्राचां पदस्थत्वाव्यभिचारादेकत्वविवक्षार्थमेव पदग्रहणम् । सर्वथा त्वयमर्थो विवक्षितः—एकस्मिन्पदे वर्त्तमाना अचोऽनुदात्ता भवन्ति एकमचं वर्जयित्वेति । एवं स्थिते यदीदं स्वतन्त्रं लक्षणं स्यात्तदा नियमो वा स्याद्—एकमचं वर्जयित्वा, परिशिष्टमनुदात्तमेव भवतीति विधिर्वा ।**

**तत्राद्ये पक्षे येषामचां लक्षणान्तरेणोदात्तः स्वरितो वा विधीयते, तत्रानियमप्रसङ्गाभावात्तव्द्यतिरिक्तविषयमेवेदं भवति । अस्ति हि तत्रानियमप्रसङ्गः; अस्वरस्याच उच्चारणासम्भवात् । एकवर्जमिति । यस्य यस्योदात्तस्वरितविधानं स स वर्ज्य इत्यर्थो भवति । ततश्चत्वार इत्यादावागमादीनां पृथक् स्वरप्रसङ्गः, आमलकीज इत्यत्र ङीषः प्रत्ययाद्युदात्तत्वम्, 'गतिकारकोपपदात्कृत्' इति जशब्तस्योदात्तत्वम्, 'दीर्घकाशतुष्भ्राष्ट्रवटं जे' इति पूर्वपदाद्युदात्तत्वम्, 'अन्त्यात्पूर्वं बह्वचः' इति लकाराकारस्योदात्तत्वमिति युगपदुदात्तचतुष्टयप्रसङ्गः । ननु च नाप्राप्ते कृत्स्वर आरभ्यमाणेन 'दीर्घकाश' इत्याद्युदात्तत्वेनापोदितत्वादेव कृत्स्वरो न भविष्यति, तथाऽऽद्युदात्तत्वं कुटीज इत्यादौ सावकाशम्, उपसरज इत्यादौ सावकाशेन 'अन्त्यात्पूर्वं बह्वचः'**

**भावबोधिनी**

धातु का अन्त उदात्त होता है—गोपायति, धूपायति । धातु के अन्त्य अच् को छोड़ कर शेष पद अनुदात्त अचों वाला हो जाता है । धातु के स्वर को श्ना विकरण का स्वर बाधित करता है—लुनाति, पुनाति । [ अतः श्ना का स्वर छोड़ कर शेष अनुदात्त होते हैं । ] श्ना के स्वर को तस् का स्वर बाधित करता है—लुनीतः, पुनीतः । [ यहाँ तस् उदात्त है शेष अनुदात्त होते हैं । ] तस् के स्वर को आम् का स्वर बाधित कर लेता है—लुनीतस्तराम्, पुनीतस्तराम् । [ यहाँ आम् का स्वर छोड़कर शेष अनुदात्त होते हैं । ]

**आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च।**
**पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः॥ ( म० भा०, श्लोकभाष्यम् )**

**न्यासः**

**इति।** सतिशिष्टस्वरत्वात्, सतिशिष्टस्य बलीयस्त्वात्। तथा ह्युक्तम्—'सतिशिष्टस्वरो बलीयानिति वक्तव्यम्' इति। **लुनाति, पुनातीति।** 'प्वादीनां ह्रस्वः' इति ह्रस्वः, श्नाप्रत्ययस्य च प्रत्ययस्वरेणाद्युदात्तत्वम्। **श्नास्वरमिति।** बाधत इति सम्बध्यते। ननु परत्वात् तिबादिषु कृतेषु विकरणैर्भवितव्यम्, अतः सति सार्वधातुकस्वरे श्नास्वरस्य शिष्यमाणत्वात् तस्य सतिशिष्टत्वम्, एवञ्च श्नास्वरेणैव बाधा युक्ता तस्स्वरस्य? एवं मन्यते यत् 'तास्यनुदात्तेन्ङिदुपदेश' इत्यादिना तासेः परस्य लसार्वधातुकत्वं शास्ति, तज्ज्ञापयति—शिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरेण बाध्यत इति। **लुनीतः, पुनीत इति।** 'ई हल्यघोः' इतीत्वम्। **तस्स्वरमाम्स्वर इति।** बाधत इति सम्बन्धः। बाधकत्वे तस्य हेतुः शतिशिष्टत्वमेव। **लुनीतस्तरामिति।** 'तिङश्च' इति तसन्तात्तरप्, तदन्तात् 'किमेत्तिङव्यय' इत्यादिनाऽऽमुप्रत्ययः।

**पदमञ्जरी**

इत्यनेन परत्वाद्बाधिष्यत इति कथमुदात्तचतुष्टयप्रसङ्गः? उच्चते; विरोधे समानफलत्वे बाध्यबाधकभावः, विप्रतिषेधोऽपि विरोध एव, तच्चोभयं स्वरेषु नास्तीति कृत्कृत्यप्रत्ययसंज्ञानामिव समावेशप्रसङ्गः। सत्यपि विप्रतिषेधे ङीष उदात्तत्वे कृते पश्चात् 'अन्त्यात्पूर्वं बह्वचः' इत्येतस्मिन्प्रवृत्तेऽपि पूर्वकृतस्य ङीष उदात्तस्यानिवृत्तेरनिष्टमेव। यदि च यस्य यस्योदात्तस्वरितविधानम्, तं तं वर्जयित्वा परिशिष्टमनुदात्तमेवेत्यर्थः स्यात्, तदा पदमेकवर्जमिति द्वयमपि व्यर्थं स्यात्। सामान्येनाचोऽनुदात्ता इत्येवास्तु, प्रत्ययाद्युदात्तत्वादिविषये तैर्बाधितत्वादेवानुदात्तत्वं न भविष्यति। तस्मात्पदमेकवर्जमिति वचनान्नायं स्वतन्त्रो नियमः।

अथ विधिः? तदा येषामचां लक्षणान्तरेणोदात्तः स्वरितो वा न विधीयते, तेष्वप्यनुदात्तस्य पक्षे प्राप्तत्वाद्विधिरनुपपन्न इति लक्षणान्तरेण येषामुदात्तः स्वरितो वा विहितः, त एकस्मिन्पदे वर्तमाना अनुदात्ता भवन्त्येकमचं वर्जयित्वेत्यर्थः स्यात्। क एक वर्ज्य इति न ज्ञायेत! अथापि परनित्यादिभिर्व्यवस्था? एवमपि सतिशिष्टेनापि व्यवस्था न स्यात्। कथमौपगवत्वमित्यत्र द्वे प्रत्ययाद्युदात्तत्वे? तत्रैकस्यानुदात्तत्वं विधीयमानं कस्य भवतु? उदात्तस्वरितव्यतिरिक्तानां चाचामनियमप्रसङ्ग एवावतिष्ठेत। तदेवं स्वतन्त्रेऽस्मिन् विधौ नियमे वा नेष्टं सिद्धचति।

अथाधिकारः स्यात्तदा 'कर्षात्वतो घञोऽन्तः' इत्यत्रास्योपस्थाने सत्ययमर्थो भवति—कर्षशब्दस्याकारवतोऽन्त उदात्तो भवति, तमेकं वर्जयित्वा तस्मिन्पदे वर्त्तमानाः परिशिष्टा अचोऽनुदात्ता भवन्तीति।

**भावबोधिनी**

आगम, विकार = आदेश, प्रकृति और प्रत्यय के पृथक् स्वर की निवृत्ति के लिए है अर्थात् आगम आदि का अलग-अलग स्वर न होने लगे—इस कारण एक को छोड़कर पद शेष के अनुदात्त स्वरों वाला किया जाता है।

**विमर्श**—प्रस्तुत सूत्र परिभाषा रूप है। अधिकार सूत्र होने पर इसी अध्याय के आगे तक संबद्ध होता। अतः इस को सभी सूत्रों में सम्बद्ध करना चाहिए। एकवर्जम्, यहाँ एकं वर्जयित्वा—इस अर्थ में 'द्वितीयायाञ्च' सूत्र से णमुल् = अम् प्रत्यय, उपपदसमास है। अतः एक को छोड़कर—यह अर्थ है। चूँकि पदम् और अनुदात्तम् में सामानाधिकरण्य है और वह अनुदात्तत्व पद में न होकर अचों में होता है, अतः मत्वर्थक अच् प्रत्यय कर के अनुदात्तम् = अनुदात्त अचों वाला पद होता है—ऐसा अर्थ बनता है।

अब प्रश्न है—एक को छोड़ कर—इस से किस एक को लिया जाय? इस पर काशिकाकार ने "यस्यासौ स्वरो विधीयते।" यह अस्पष्ट उत्तर दिया है। इसमें 'असौ' इस सर्वनाम से यही समझना चाहिए—जिस का उदात्त अथवा स्वरित किया जाता है उसी को छोड़ कर शेष अनुदात्त होते हैं।

**आगमस्य—'चतुरनडुहोरामुदात्तः' ( ७.१.९८ ) चत्वारः, अनड्वाहः। आगमस्वरः प्रकृतिस्वरं बाधते।**

**न्यासः**

किमर्थं पुनरयमेकवर्जपदस्वरो विधीयते? इत्याह **आगमस्येत्यादि**। आगमादीनां पृथक् स्वरो मा भूदित्येवमर्थकं वर्जयित्वा पदानुदात्तत्वं विधीयते। **आगमस्वरः प्रकृतिस्वरं बाधत इति**। सत्यस्मिन्नेकवर्जं पदं स्वरे। असति त्वस्मिन् प्रकृतेरागमस्य च पृथगेव स्वरः स्यात्। **चत्वार इति**। प्रकृतिस्वरः पुनराद्यु-

**पदमञ्जरी**

एवमन्यत्रापि—यत्र यत्रोपस्थानं तत्र तत्र सूत्रविहितं स्वरं वर्जयित्वा परिशिष्टस्यानुदात्तविधानम्। एकग्रहणमपि तत्र विधीयमानस्य स्वरस्योपलक्षणार्थम्। तेन 'तवै चान्तश्च युगपत्', 'उभे वनस्पत्यादिषु युगपत्' इत्यादौ द्वयोरपि वर्जनं भवति। इन्द्राबृहस्पती इत्यत्र बृहस्पतिशब्दे वनस्पत्यादित्वाद् द्व्युदात्ते इन्द्रशब्देन द्वन्द्वे 'देवताद्वन्द्वे च' इति द्वयोरपि प्रकृतिस्वरत्वमिति त्रयाणां वर्जनं भवतीत्येवं षाष्ठिके स्वरे न कश्चिद्दोषः।

'आद्युदात्तश्च', 'समानोदरे शयित ओ चोदात्तः' 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यादिषु प्रदेशान्तरवर्तिषु स्वविधिष्वस्यानुपस्थानात्तेषु परिशिष्टस्यानुदात्तत्वं न स्यात्, एकवर्जमिति च व्यर्थं स्यात्। कथमनुदात्तं पदमित्येवाधिकारोऽस्तु, न चैवं तत्तत्सूत्रविहितस्यापि स्वरस्यानुदात्तप्रसङ्गः, तद्विधानसामर्थ्यात्। तदेवं पक्षान्तरसम्भवात्परिभाषेयमिति निश्चित्याह—**परिभाषेयमिति**। लिङ्गवती चेयम्, स्वरविधिश्च लिङ्गमित्याह—**स्वरविधिविषयेति**।

**यत्रान्य इति**। अनुदात्तापेक्षमन्यत्वम्। **उदात्तः स्वरितो वेति**। अनुदात्तस्यानुदात्तवर्जनं व्यर्थमिति तद्विरोधाद् उदात्तः स्वरितो वा परिसंख्येयः, तद्विधावेवास्योपस्थानमिति भावः। उपस्थितमित्यनेन स्वरविधिभिरस्यैकवाक्यता दर्शिता। **कः पुनरिति**। वर्ज्यविशेषस्य सूत्रेऽनिर्देशात्प्रश्नः। **यस्य स्वरो[1] विधीयत इति**। यत्रेदमुपतिष्ठते तत्र यः स्वरो विधीयते स उच्यते। **असाविति**। यदि ह्यसावमपि न वर्ज्येत तस्य तत्स्वरविधानमनर्थकं स्यात्। **धातुस्वरं श्नास्वरो बाधत इति**। सतिशिष्टेन व्यवस्थाया वक्ष्यमाणत्वात्। **श्नास्वरं तस्स्वर इति**। बाधत इत्यनुषङ्गः। अत्रापि हेतुर्वक्ष्यते, विकरणस्वरस्तु सतिशिष्टोऽपि' इत्यत्र। **तस्स्वरमाम्स्वर इति**। पूर्ववदनुषङ्गः। सतिशिष्टत्वं हेतुः।

**आगमस्येत्यादि**। उपलक्षणमेतत्। अनेन हि तत्तल्लक्षणाभिनिर्वृत्तानां बहूनामुदात्तस्वरितानां समावेशानिवृत्तिः प्रयोजनमस्येत्युच्यते। न चैतावदेव प्रयोजनम्, येषामपि केनापि स्वरित उदात्तो वा न विधीयते,

**भावबोधिनी**

यहाँ ध्यान रखना चाहिए कि किसी पद में अनेक उदात्त या स्वरित हो सकते हैं उसमें किसे छोड़ा जाय? इसका समाधान इस से करना चाहिए—'सतिशिष्ट-स्वर-बलीयस्त्वमन्यत्र विकरणेभ्यः।' अर्थात् पूर्व में अनुशिष्ट स्वरों के बाद जिसका अनुशासन किया जाता है वही स्वर बलवत्तर होता है, उसी को छोड़ कर शेष सभी अनुदात्त कर देने चाहिए। उदाहरणार्थ—गोपायति–यहाँ धातु का अन्त्य उदात्त छोड़ कर शेष अनुदात्त हो जाते हैं। परन्तु विकरण-स्वर धातुस्वर का बाध करता है अतः—'लुनाति' में श्ना = विकरण को उदात्त छोड़ कर शेष अनुदात्त होते हैं। श्ना-स्वर को भी प्रत्ययस्वर बाध लेता है अतः लुनीतः में तस् उदात्त छोड़ कर शेष अनुदात्त होता है। इस तस् के स्वर को भी आम् प्रत्यय का स्वर बाध कर लेता है अतः—लुनीतस्तराम् में आम् को उदात्त छोड़ कर शेष अनुदात्त होते हैं। यह स्थिति अन्यत्र भी समझनी चाहिए।

भाष्य में प्रदर्शित कारिका यहाँ भी उद्धृत है, उसकी व्याख्या आगे की जा रही है।

( अनु० ) आगम का ( पृथक् स्वर नहीं होता है )—"चतुरनडुहोरामुदात्तः" ( पा० सू० ७।१।९८ ) चत्वारः, अनड्वाहः। [ चतुर् + जस्, अनडुह् + जस् में आम् आगम मित् होने से अन्त्य अच् से पूर्व में होता है—चतु आ र् +

१. 'यस्यासौ स्वरो' इति काशिकापाठः।

**विकारस्य—अस्थनि, दधनि इत्यनङ्स्वरः ( ७.१.७५ ) प्रकृतिस्वरं बाधते। प्रकृतेः—गोपायति, धूपायति। प्रकृतिस्वरः प्रत्ययस्वरं बाधते। प्रत्ययस्य—कर्त्तव्यम्, हर्त्तव्यम्। प्रत्ययस्वरः प्रकृतेः स्वरस्य बाधकः।**

**न्यासः**

दात्तत्वम्। तथा हि 'चतेरुरन्' इत्युरन्प्रत्ययान्तश्चतुःशब्दो व्युत्पाद्यत इति स नित्स्वरेणाद्युदात्तो भवति। **अनड्वाह इति**। अनुडुहोऽप्येवं व्युत्पत्तिः क्रियते। 'अन प्राणने', अस्मात् 'सर्वधातुभ्योऽसुन्' इत्यसुन्प्रत्ययान्तत्वादनःशब्दो नित्स्वरेणाद्युदात्तः। अनो वहतीत्यनसि वहेः क्विप्, 'उश्चानसः' इत्यनस्युपपदे वहेर्धातोः क्विप्, अनश्चोकारादेशः। वहेर्यजादित्वात् सम्प्रसारणम्, उपपदसमासः, 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वरत्वम्। तस्मादनुडुहोऽप्येवं व्युत्पादितस्य स्याद्युदात्तत्वम्। विकारः=आदेशः। **अनङ्स्वरः प्रकृतेरिति**। दध्यस्थिशब्दावाद्युदात्तौ। **तथा हि** 'असु क्षेपणे', 'असिसञ्जिभ्यां क्थिन्' इति। क्थिन्प्रत्ययान्तत्वान्नित्स्वरेणास्थिशब्द आद्युदात्तः। दधिशब्दोऽपि किन्प्रत्ययान्तत्वादाद्युदात्त एव। धाधातोः 'आदृगमहन' इति 'किकिनौ लिट् च' इति किन्प्रत्ययः, तत्र द्विर्वचने कृत आकारलोपे च दधीति भवति। 'अस्थिदधि' इत्यादिनाऽनङि कृते तस्य यः स्वरः स च कर्त्तव्यः, तस्याप्यसत्यस्मिन्नस्थिदधिशब्दयोरनङश्च पृथगेवोदात्त्वं तु स्यात्। अस्मिंस्तु सत्यनङ एव भवति। **प्रकृतेरित्यादि। गोपायति, धूपायतीति**। अत्र प्रकृतेर्गुपेर्धूपेश्च 'धातोः' इत्यन्तोदात्तत्वे आयप्रत्ययादेरप्याकारस्य प्रत्ययाद्युदात्तत्वम्। गोपायधूपायशब्दयोरपि 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां कृतायाम् 'धातोः' इत्यन्तोदात्तत्वमेव प्राप्नोति। एवं पृथक् स्वरप्रसङ्गे यकाराकारस्यैव धातुस्वरो भवति, न गुपिधूप्योः, नापि प्रत्ययाकारस्य। **कर्त्तव्यमिति**। धातोरन्तोदात्तत्वे प्रत्ययाद्युदात्तत्वे च प्राप्ते प्रत्ययाद्युदात्तत्वमेव भवति, न तु धातुस्वरः। अथानियमेनैकस्वरस्य वर्ज्यमानता कस्मान्न भवति,

**पदमञ्जरी**

यथाऽनेकाक्षु प्रत्ययेषु धातुषु वाऽऽद्यन्तव्यतिरिक्तानामचां तेषामप्यनुदात्तनियमस्यैतदधीनत्वात्।

**चत्वार इति**। 'चतेरुरन्' ( द० उ० ८.७८ ) इति चतुर्शब्द आद्युदात्तः। **अनड्वाह इति**। 'अनसि वहेः क्विब् उश्चानसः' ( द० उ० ९.१७० ) इति क्विप्, यजादित्वात् सम्प्रसारणम्, अनःशब्दोऽसन्प्रत्ययान्त आद्युदात्तः, 'गतिकारकोपपदात्कृत्' इत्युत्तरपदप्रकृतिस्वरेण धातोरन्त उदात्तः। **अस्थनीति**। 'असिसञ्जिभ्यां क्थिन्' ( द० उ० १.१० ) इत्याद्युदात्तोऽस्थिशब्दः, दधिशब्दः 'नब्विषयस्यानिसन्तस्य' ( फि० सू० २६ ) इत्याद्युदात्तः। नबिति नपुंसकाख्या। यस्यासौ स्वरो विधीयते स वर्ज्यते इत्युक्तम्। सर्वेषां चागमादीनां स्वरो

**भावबोधिनी**

अस्, अनडु आह् + अस्, यण् करने पर रूप बनते हैं। ] यहाँ आगम स्वर प्रकृतिस्वर का बाध कर लेता है। [ अतः उसको उदात्त छोड़ कर शेष अनुदात्त हो जाते हैं। यदि यह परिभाषा न होती तो प्रकृति का और आगम का अलग-अलग स्वर रह जाता। ] विकार का—अस्थनि, दधनि—इनमें [ इकार का ] अनङ् आदेश का स्वर प्रकृतिस्वर का बाध करता है, [ 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' सूत्र से अनङ् उदात्त होता है, यह प्रकृति के आद्युदात्त का बाध कर सतिशिष्ट स्वर होने से उदात्त बचता है। ] प्रकृतिः-स्वर—गोपायति, धूपायति। [ इनमें 'गुपूधूपविच्छिपणिपनिभ्य आयः' सूत्र से आय प्रत्यय करने के बाद पुनः धातु संज्ञा करने पर—गोपाय यह अन्तोदात्त हो जाता है। अब यहाँ 'आय' में प्रत्यय का स्वर आद्युदात्त और 'गोपाय' में धातुसंज्ञा के कारण पुनः अन्तोदात्त स्वर 'गोपाय' इस प्रकृति का होता है। अतः यह 'आय' प्रत्यय के स्वर का बाध कर देता है। अतः 'गोपाय' प्रकृति का अन्तोदात्त ही रहता है। ] प्रत्यय का—कर्त्तव्यम्, हर्त्तव्यम्। प्रत्यय-स्वर प्रकृति के स्वर का बाध कर लेता है। [ 'कृ' धातु प्रकृति अन्तोदात्त है, प्रत्यय तव्यत् आद्युदात्त है, यहाँ प्रत्यय का आद्युदात्त स्वर ही बलवान होने से बचता है। अन्य अनुदात्त हो जाते हैं। ]

**परनित्यान्तरङ्गापवादैः स्वरैर्व्यवस्था, सतिशिष्टेन च। यो हि यस्मिन् सति शिष्यते, स तस्य बाधको भवति। तथा हि—गोपायतीत्यत्र धातुस्वरापवादः प्रत्ययस्वरः, तेनैन धातुस्वरेण प्रत्ययान्तस्य धातोः सतिशिष्टत्वाद् बाध्यते।**

**न्यासः**

न ह्यत्र सूत्रे कश्चिद् व्यवस्थाहेतुरुपात्तः, न च विना व्यवस्थाहेतुना सा लभ्यते इत्याह=**परनित्यान्तरङ्गेत्यादि**। यत्र परादिस्वराः प्राप्नुवन्ति, तद्विपक्षाश्च, तत्र परादीनां बलीयस्त्वात् तत एव वर्ज्यं न, इतरे तु निवर्त्यन्ते। यत्र तु परनित्यान्तरङ्गापवादेऽपि क्वचिदिष्टं न सिध्यति, तत्र सतिशिष्टेन व्यवस्था भवति, तस्य हि बलीयस्त्वमुक्तम्। अतः सतिशिष्टेतरस्वरप्राप्तौ सतिशिष्ट एव वर्ज्यते, नेतरः। कथं पुनः सतिशिष्टे न व्यवस्था ? इत्यत आह—**यो हीत्यादि**। कथमेतज् ज्ञायते ? इत्याह—**तथा हीत्यादि**। **गोपायतीति**। अत्रायप्रत्ययस्य प्रत्ययस्वरेणाद्युदात्तत्वम्। स च स्वरो धातुस्वरस्यापवादोऽपि सन्नायप्रत्ययान्तस्य धातुसंज्ञायां कृतायां पुनस्तेन धातुस्वरेण सतिशिष्टेन बाध्यते।

**पदमञ्जरी**

विधीयत इत्यविशेषेण वर्जनप्रसङ्ग इत्यत आह-**परनित्यान्तरङ्गापवादैरिति**। स तस्मिन्योगे सर्वेषामेव तेषां स्वकस्वरवर्ज्यमन्यमनुदात्तं चिकीर्षता परस्परविरोध उपजायते, परत्वादिभिर्युक्त्यैव व्यवस्था। **सतिशिष्टेन चेति**। व्यवस्थेत्यपेक्षते। एतदेव विवृणोति—**यो हीति**। सामान्यनोक्तमुदाहारणानिष्टं करोति-**तथा हीति**। एतच्च सतिशिष्टस्य बाधकत्वं न्यायतस्सिद्धम्। कथमुदात्तस्वरितविधिभिरेकवाक्यतापन्नयाऽनया शेषनिघातः क्रियत इत्युक्तम्, ततः, किम् ? उत्सर्गस्यापवादस्य वा या चरमा प्रवृत्तिस्तस्यामिदमुपतिष्ठते, एवञ्च तस्यैव लक्षणस्य या चरमा प्रवृत्तिस्तत्रास्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते, तद्यथौपगवत्वमिति। अत्र हि, आद्युदात्तश्च' इत्यस्य प्रतिप्रत्ययमावृत्तौ त्वप्रत्यये यदा प्रवर्त्तते तदाऽनया निघातः क्रियते। यदि सतिशिष्टस्वरो बाधकः, विकरणस्वरोऽपि लसार्वधातुकस्वरस्य बाधकः प्राप्नोति ? तत्राह-**विकरणस्वरस्त्विति**। एवं मन्यते-यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति तज्ज्ञापकमुक्तस्यार्थस्य; अन्यथा यद्यपि लावस्थायां तासिर्विधीयते, तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु च लादेशेषु कृतेशेषु पश्चात्तासिरिति तत्स्वरस्य सतिशिष्टत्वाच्छेषनिघातेनैव सिद्धेरनर्थकं तत्स्यादिति।

**भावबोधिनी**

[ प्रश्न यह है कि किसी भी एक को उदात्त या स्वरित छोड़ कर अन्य अनुदात्त कर दिये जाँय क्योंकि सूत्र में किसी विशेष को छोड़ना नहीं लिखा है— ] 'पर, नित्य, अन्तरङ्ग और अपवाद स्वरों से तथा सतिशिष्ट स्वर से व्यवस्था करनी चाहिए'। [ अतः परादि में उत्तरोत्तर की बलवत्ता और सतिशिष्ट स्वर की बलवत्ता मान कर उस स्वर को छोड़ कर शेष का अनुदात्तत्व करना चाहिए। पूर्वविहित स्वरों के रहते हुए जिस स्वर का विधान किया जाता है वह सतिशिष्ट स्वर माना जाता है। यह बलवान् होने से उदात्त या स्वरित ही रहता है। ] क्योंकि जिस स्वर के रहते हुए दूसरा स्वर अनुशिष्ट होता है वह पूर्वतः विद्यमान का बाधक होता है। उदाहरणार्थ—गोपायति—यहाँ [ 'धातोः' सूत्र से 'गुप' ] धातु के अन्तोदात्त का अपवाद [ "गुपूधूप०" सूत्र से विहित ] प्रत्ययस्वर है [ अतः 'गोपाय' में आय का स्वर बलवान होता है। ] परन्तु उसी धातुस्वर से प्रत्ययान्त ( गोपाय ) धातु के सतिशिष्ट होने से [ वह आय प्रत्यय का स्वर ] बाधित कर लिया जाता है। [ भाव यह कि पहले जिस स्वर का विधान करना है उसका विधायक शास्त्र पर, नित्य, अन्तरङ्ग या अपवाद की श्रेणी में है तो उत्तरोत्तर की बलवत्ता मान कर स्वर का विधान होता है। बलवत्तर ही शेष बचता है, अन्य अनुदात्त हो जाते हैं। इसी प्रकार पहले किसी स्वर

**का॒र्ष्णो॑त्त॒रा॒स॒ङ्गपु॒त्र इत्यत्र च समासस्वरापवादो बहुव्रीहिस्वरः सतिशिष्टेन समासान्तोदात्तत्वेन बाध्यते। विकरणस्वरस्तु सतिशिष्टोऽपि सार्वधातुकस्वरं न बाधते। लु॒नी॒त इति तस एव स्वरो भवति।**

**❀ विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम् ❀ ( म० भा० ६.१.१५८ वा० १२ )। अ॑तिस्र इत्यत्र 'तिसृभ्यो जसः' ( ६.१.१६६ ) इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते।**

**❀ विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम् ❀ ( म० भा० वा० १३ )। अचत्वारः,**

**न्यासः**

**कार्ष्णोत्तरासङ्गपुत्र इति।** बहुव्रीहिं कृत्वा तत्पुरुषः कर्त्तव्यः। **बहुव्रीहिस्वर इति।** 'बहुव्रीहौ प्रकृत्या' इत्यादिनोक्तः।

पूर्वकं ज्ञापकं चेतसि कृत्वाऽऽह—**विकरणस्वरस्त्वित्यादि।**

**विभक्तिस्वरादित्यादि।** 'निपाता आद्युदात्ताः' इति नञुदात्तः। तत्र तत्पुरुषसमासे कृते 'तत्पुरुषे तुल्यार्थ' इत्यादिना प्रकृतिस्वरादुदात्तत्वमेव भवति। यदा तु नञ्स्वराद् विभक्तिस्वरः प्राप्नोति नञ्स्वरश्चेष्यते, तस्माद् विभक्तिस्वरो बलीयानिति वक्तव्यम्। बलीयस्त्वे सति किं भवति ? इत्याह—**अतिस्र इत्यत्रेत्यादि।** 'तिसृभ्यो जसः' इत्यनेन विभक्तेरुदात्तत्वं विधीयते। तद्बलीयस्त्वात् सतिशिष्टमपि नञ्स्वरेण बाध्यते। विभक्तिस्वरस्य तु—तिस्रः, तिसृष्वित्येषोऽवकाशः।

**विभक्तिनिमित्तस्वराच्चेत्यादि।** विभक्तिर्निमित्तं यस्य स स्वरो विभक्तिनिमित्तस्वरः। **यस्य विभक्ति-**

**पदमञ्जरी**

**विभक्तिस्वरादिति।** सतिशिष्टत्वाद्विभक्तिस्वरे प्राप्ते वचनम्। **नञ्स्वरेणेति।** 'तत्पुरुषे तुल्यार्थ' इति प्रकृतिभावविहितेन।

**विभक्तिनिमित्तस्वरादिति।** विभक्तिर्निमित्तं यस्य तस्य य स्वरस्तस्मादित्यर्थः। **वाक्ये हीत्यादि।** देवदत्तशब्द आमन्त्रितस्वरेणाद्युदात्तः, गामित्याद्युदात्तः, गमेर्डोः ( द० उ० २.११ ) प्रत्ययस्वरः, 'औतोऽम्शसोः' इत्यात्वमेकादेशः, 'एकादेश उदात्तेनोदात्तः', 'निपाता आद्युदात्ताः' ( फि० सू० ८० ) 'उपसर्गाश्चाभिवर्जम्'

**भावबोधिनी**

का विधान कर चुकने के बाद जिस स्वर का विधान किया जाता है वह सतिशिष्ट स्वर बलवत्तर होने से बचा रहता है, शेष अनुदात्त हो जाते हैं। ]

और 'कार्ष्णोत्तरासङ्गपुत्रः' यहाँ समासस्वर के अपवाद बहुव्रीहि-स्वर को सतिशिष्ट समासान्तोदात्तत्व द्वारा बाधित कर लिया जाता है। [ कार्ष्णः उत्तराङ्गः यस्य सः—यह बहुव्रीहि करने के बाद 'पुत्र' के साथ तत्पुरुष होता है। यहाँ पहले 'समासस्य' ( ६।१।२२३ ) से आन्तोदात्त प्राप्त है किन्तु 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( ६।२।१ ) से पूर्वपद का प्रकृतिस्वर होता है। पुनः तत्पुरुष करने पर "समासस्य" सूत्र से जो आन्तोदात्त होता है वह सतिशिष्ट स्वर है अतः बहुव्रीहि के स्वर का बाध कर लेता है। अतः केवल अन्त उदात्त बचता है अन्य अनुदात्त हो जाते हैं। ] विकरण का सतिशिष्ट होता हुआ भी सार्वधातुक प्रत्यय के स्वर का बाध नहीं करता है—लुनीतः—यहाँ तस् का ही स्वर ( उदात्त ) होता है। [ लू + तस् के बाद श्ना = ना विकरण होता है अतः तस् के स्वर के रहते श्ना का स्वर होने से यह सतिशिष्ट है। किन्तु विकरणों में यह बलवत्ता नहीं मानी जाती है। अतः तस् का प्रत्यय-स्वर ही उदात्त, शेष अनुदात्त हो जाते हैं। ]

❀ विभक्ति-स्वर की अपेक्षा नञ्स्वर बलवत्तर होता है ऐसा कहना चाहिए। ❀ उदा०—अतिस्रः—इसमें 'तिसृभ्यः जसः" ( पा० सू० ६।१।१६६ ) से सतिशिष्ट भी विभक्ति-स्वर पहले नञ् स्वर होने के बाद जस् विभक्ति आने पर उसका स्वर उदात्त सतिशिष्ट होने से बलवत्तर है। किन्तु प्रस्तुत वार्तिक से नञ् स्वर ही बलवत्तर माना जाता है,

**अनंनड्वाह इति । यस्य विभक्तिनिमित्तमामस्तस्य यदुदात्तत्वं तन्नञ्स्वरेण बाध्यते ।**

**न्यासः**

**निमित्तमाम इति ।** आमो विभक्तिनिमित्तत्वम् 'पथिमथोः सर्वनामस्थाने' इत्यतः सर्वनामस्थानग्रहणानुवृत्तेः । तस्य यदुदात्तत्वमित्यादिना बलीयस्त्वस्य फलं दर्शयति । **विभक्तिनिमित्तस्वरस्य—चत्वारः, अनड्वाह** इत्येषोऽवकाशः ।

**वाक्ये हीत्यादि ।** देवदत्तशब्द आमन्त्रितस्वरेणाद्युदात्तत्वम्, **गोशब्दो** हि प्रातिपदिकस्वरेणान्तोदात्तः, तस्य 'औतोऽम्शसोः' इत्याकारोऽपि स्थानिवद्भावेनोदात्त एव । तथा विभक्त्या सहैकादेशेऽपि, एकादेश उदात्तेनोदात्तः' इति वचनात् । अभिशब्दोऽन्तोदात्तः, तस्य 'निपाता आद्युदात्ताः, उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तविधाने वर्जितत्वात् प्रातिपदिकस्वर एव भवति । आङुपसर्गस्वरेणाद्युदात्तः । अजित्येष तु लोडन्तः 'तिङ्ङतिङः' इति निघातेनानुदात्तः । शुक्लशब्दो हि प्रातिपदिकस्वरेणान्तोदात्त इति तस्य 'एकादेश उदात्ते-नोदात्तः' इति टापा सहैकादेशे कृतेऽन्तोदात्त एव भवति । एवममिपूर्वत्वे कृते वेदितव्यम् ।

**पदमञ्जरी**

(फि० सू० ८१) इत्याद्युदात्तत्वे वर्जितत्वादभेः फिषित्यनेनान्तोदात्तत्वम् । फिषिति प्रातिपदिकस्य पूर्वाचार्याणां संज्ञा । आङ् उपसर्गस्वरेणाद्युदात्तः । अजेर्लोट्, 'तिङ्ङतिङः' इति निघातः, **शुक्लशब्दः** प्रातिपदिकस्वरेणान्तोदात्तः । टापा विभक्त्या च 'एकादेश उदात्तेनोदात्तः' । तदेवं पदग्रहणाद्वाक्ये पृथगेव स्वरो भवति ।

ननु च यदि वाक्येऽपि शेषनिघातः स्यात्, ततश्च सतिशिष्टस्वरत्वादीनां व्यवस्थापकानां तत्रासम्भवात्क एको वर्जनीय इति न ज्ञायेत ? सत्यम्; विशेषाग्रहणात्पर्यायेण वर्जनं भविष्यति । यदि तर्हि पदग्रहणं क्रियते, एवं सति यावत् पदसंज्ञा न भवति, तावच्छेषनिघातेन न भवितव्यम्, ततश्च कुवल्या विकारः कौवलमित्यत्रा-दात्तादेश्चेत्यञ्न प्राप्नोति, यतः कुवलशब्दोऽयं ग्रामादित्वेनाद्युदात्तः, **गौरादित्वान्ङीषि** विहितेऽपि पदव्यपदेशा-भावादाद्युदात्तत्वं न परित्यजति ? इत्यत आह--**परिमाणार्थं चेति ।** पदमत्र **गौणमभिप्रेतम्,** यस्य पदसंज्ञा भविष्यति न मुख्यम्; पदाधिकारे पुनः पदग्रहणात् । किं चोदात्तस्वरितविधिभिरेकीभूय शेषनिघातः क्रियत इत्युक्तम्, तस्यां च दशायां युष्मदस्मदोर्ङसि, ङयि चेत्यादावेव पदत्वं निष्पन्नं भवति, न पुनः 'धातोः' इत्यादिषु धात्वाद्युपदेशानन्तरं प्रवर्त्तमानेषु । अतश्च तैरेकीभूतस्य पदशब्दस्य तदेकदेशेऽपि भविष्यति वृत्तिः । यद्येवम्, यत्र यत्रास्योपस्थानं तत्र तत्र सर्वं पदम्, ततोऽपि चान्यत्र न्यूनं न कार्यित्वेन संनिहितमिति तत्रैवाक्षु परिशिष्ट-मनुदात्तं भविष्यति, नार्थो वाक्यनिवृत्त्यर्थेन पदग्रहणेन ? उच्यते; असति पदग्रहणे धातोरन्त उदात्तो भवति परिशिष्टमनुदात्तमित्युक्ते धातोरेव यत्परिशिष्टं तदनुदात्तमिति गम्येत; एवम् 'आद्युदात्तश्च' इत्यादौ, ततश्च धातुप्रत्यययोः पृथक्स्वरः स्यादेव । अत एकपदे भविष्यतां सर्वेषामेवानुदात्तत्वं यथा स्यादित्येवमर्थं पदग्रहणम् ।

**भावबोधिनी**

उसका प्रकृतिस्वर उदात्तत्व है, उसे छोड़ कर शेष अनुदात्त होते हैं । ]

❀ और विभक्ति-निमित्तस्वर से भी नञ्स्वर बलवत्तर होता है, ऐसा कहना चाहिए । ❀ [ विभक्तिः निमित्तं यस्य तस्य यः स्वरः—विभक्तिनिमित्तस्वरः, तस्मात्—ऐसा विग्रह है । उदा०—अचत्वारः । अननड्वाहः । जिस आम् आगम की निमित्त विभक्ति है उसको जो उदात्तत्व उसे नञ् स्वर से बाधित कर दिया जाता है । [ चतुर + जस् = अस्, अनडुह + जस् = अस् इन में 'चतुरनडुहोरामुदात्तः'' सूत्र से आम् उदात्त आगम होता है यह विभक्ति को मान कर होने से सतिशिष्ट है । परन्तु 'न चत्वारः'—अचत्वारः, न अनड्वाहः—अननड्वाहः इनमें नञ् का प्रकृतिस्वर उदात्तत्व ही बलवत्तर होने से शेष बचता है, अन्य अनुदात्त हो जाते हैं । ]

**पदग्रहणं किम्? देवदत्त गामभ्याज शुक्लां दण्डेनेति वाक्ये हि प्रतिपदं स्वरः पृथग् भवति। परिमाणार्थं चेदं पदग्रहणं पदाधिकारस्य निवृत्तिं करोति। तेन प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेव शिष्टस्यानुदात्तत्वं भवति। तथा च—कुवल्या विकारः कौवलमित्यत्रानुदात्तादिलक्षणोऽञ् सिद्धो भवति। तथा गर्भिणीशब्दश्चानुदात्तादिलक्षणस्याञो बाधनार्थं भिक्षादिषु पठ्यते।**

**न्यासः**

तदेवं पदग्रहणाद् वाक्य एकैकस्मिन् पदे पृथगेव स्वरो भवति। यद्यनुदात्तं पदमेकवर्जं भवति, एवं सति यावत् पदसंज्ञा न भवति तावदेकं वर्जयित्वा परिशिष्टस्यानुदात्तत्वेन भवितव्यम्, ततश्च कुवल्या विकारः कौवलमित्यत्र 'अनुदात्तादेश्च' इत्यनेनाञ् प्रत्ययो न स्यात्। यतः कुवलशब्दोऽयम् 'ग्रामादीनाञ्च' इत्याद्युदात्तः, गौरादित्वान् ङीषि विहितेऽपि पदव्यपदेशाभावादाद्युदात्तत्वं न परित्यजतीत्याह—**परिमाणार्थञ्चेदमित्यादि।** पदमत्र गौणमभिप्रेतम्, न मुख्यम्; अन्यथा पदाधिकारे सति पुनः पदग्रहणमनर्थकं स्यात्। तस्मादुत्तरकालं यस्य पदसंज्ञा भविष्यति, तदिह पदमभिप्रेतमिति वेदितव्यम्। असति पदग्रहणे न ज्ञायते—कियतामचामनुदात्तत्वं भवतीति। पदग्रहणे तु सत्येकस्मिन् पदे यावन्तोऽचस्तावतामनुदात्तत्वं भवतीत्येषोऽर्थो ज्ञायते, तस्मात् परिमाणार्थमिति। न तु सुबन्तस्य तिङन्तस्य वा प्रतिपादनार्थम्। तेन प्रागेव पदव्यपदेशादनुदात्तत्वेन भवितव्यमिति न भवति पूर्वोक्तदोषप्रसङ्गः। स्यादेतत्—यद्यपि पदमित्यनेन मुख्यं पदं न प्रत्याय्यते, तथापि पदाधिकारेण तदिह सन्निधाप्यत इति तदवस्थ एव स दोषः? इत्यत आह—**पदाधिकारस्य निवृत्तिं करोतीति।** एतत् पदग्रहणं गौणमर्थं प्रतिपादयन् मुख्यपदाधिकारं निवर्त्तयति। तेन किमिष्टं भवति? इत्याह—**तेनेत्यादि। तथा चेति।** एवञ्च सतीत्यर्थः। प्रागेव पदव्यपदेशात् स्वरविधानतुल्यकालमेव परिशिष्टस्यानुदात्तत्वं भवतीति। अमुमेवार्थं द्रढयितुमाह—**गर्भिणीत्यादि।** गर्भोऽस्या अस्तीतीनिः, 'ऋन्नेभ्यो ङीप्' इति ङीप्। **गर्भशब्दोऽयं** कुवलशब्दवदाद्युदात्तः। तत्र यदीनिप्रत्ययस्योदात्तत्वसमकालमेवानुदात्तत्वं भवति ततो गर्भिणीशब्दस्यानुदात्तादित्वाद् 'अनुदात्तादेरञ्' इत्यञ् प्राप्नोतीति तद्बाधनार्थं युज्यते तस्य भिक्षादिषु पाठ। तस्य तूत्तरकालं

**पदमञ्जरी**

**पदाधिकारस्य निवृत्तिं करोतीति।** **गौणार्थमेतत्पदग्रहणं** मुख्यपदाधिकारस्य निवृत्तिं कारयति। तेन किं सिद्धं भवति? तत्राह—**तेनेति।** ज्ञापकमप्यस्मिन्नर्थे दर्शयति—**गर्भिणीशब्दश्चेति।** गर्भोऽस्या अस्तीति मत्वर्थीय इनिः, ङीप्। गर्भशब्दो ग्रामादिः। तत्र यदीनिप्रत्ययस्योदात्तविधिसमकालमेवानुदात्तत्वं भवति, ततो गर्भिणीशब्दस्यानुदात्तादित्वाद् 'अनुदात्तादेः' इत्यञि प्राप्ते तद्बाधनार्थं युज्यते तस्य भिक्षादिषु पाठः। अथ पदसंज्ञाया उत्तरकालं शिष्टस्यानुदात्तत्वं भवेत्, ततो गर्भिणीशब्द आद्युदात्तः स्यात्, ततश्चाञो बाधनार्थं भिक्षादिषु न पठितव्यः स्यात्।

**भावबोधिनी**

पदग्रहण किस लिए है? 'देवदत्त गाम् अभ्याज शुक्लां दण्डेन"—इस वाक्य में प्रत्येक पद का स्वर अलग-अलग होता है। और यह पदग्रहण परिमाण की प्रतीति के लिए है, इस कारण इस में 'पद' के अधिकार (अनुवृत्ति) की निवृत्ति करा देता है। [ इस प्रकार गौण अर्थ के लिए यह पदग्रहण मुख्य पद की निवृत्ति करा देता है। ] इस कारण पदव्यपदेश (पद ऐसा व्यवहार) से पहले ही स्वरविधि के साथ साथ शिष्ट (उदात्त या स्वरित को छोड़ कर बचे हुए) का अनुदात्तत्व हो जाता है और इस प्रकार—कुवल्या विकारः—इसमें कौवलम् यहाँ अनुदात्तादिलक्षणम् [ "अनुदात्तादेश्च ४।३।१४० से ] अञ् सिद्ध होता है। और 'गर्भिणी' शब्द से प्राप्त अनुदात्तादिलक्षण अञ् का बाध करनेके लिए भिक्षादि गण में पाठ किया गया है।

**कुवलगर्भशब्दावाद्युदात्तौ ॥**

**न्यासः**

पदसंज्ञायामुपजातायामवशिष्टस्यानुदात्तत्वं स्यात् । एवं सति गर्भिणीशब्द आद्युदात्तः स्यात् । ततश्चाणो बाधनार्थं भिक्षादिषु न पठ्येत, पठ्यते च । तस्मात् ततो विज्ञायते—प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेवावशिष्टस्यानुदात्तत्वं भवतीत्यभिप्रायः ।

किं पुनः कारणं लब्धायां पदसंज्ञायामवशिष्टस्यानुदात्तत्वे विधीयमाने कुवलीशब्दादञ् न सिध्यति, कथञ्च गर्भिणीशब्दस्यानुदात्तादिलक्षणस्याञो बाधनार्थो भिक्षादिषु पाठः प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेवावशिष्टस्यानुदात्तत्वं भवतीत्यस्यार्थस्य ज्ञापकः ? इत्याह—**कुवलगर्भशब्दावित्यादि** । आद्युदात्तत्वे ह्यनयोर्यदि पदसंज्ञायां सत्यामवशिष्टस्यानुदात्तत्वं स्यात्, कुवलीशब्दस्य च स्यात्, ततश्च कुवलीशब्दाद् विकारेऽर्थेऽञ्न स्यात् ।

गर्भिणीशब्दस्याद्युदात्तत्वादञ् प्राप्नोति, ततस्तद्बाधनार्थं भिक्षादिषु न पठ्येत, पठ्यते च, तस्मादवसीयते—प्रागेव पदव्यपदेशादवशिष्टस्यानुदात्तत्वं भवति ॥ १५८ ॥

**पदमञ्जरी**

**कुवलगर्भशब्दावाद्युदात्ताविति** । तत्र चोक्त एव प्रकारः, ततः कुवलशब्दादञ्सिद्धये आश्रयणीयम् । गर्भिणीशब्दश्च ज्ञापकमुपपद्यत इति भावः । अत्रेदं चोद्यते—उदात्तस्वरितविधिभिरेकीभूतमप्येतन्नियमार्थं चेद् विहितस्वररहितेष्वेव स्यात्, विध्यर्थं चेद् विहितस्वरेष्वेव स्याद्—इति प्रागुक्तो दोषस्तदवस्थ एव ? उच्यते; उक्तं पदग्रहणमेकस्मिन्पदेऽन्तर्भूतानां सर्वेषामनुदात्तत्वमिति, अतो यथैतदुपपद्यते तथा विधिरूपेण, नियमरूपेण, उभयरूपेण वा प्रवृत्तिर्भविष्यति ।

नन्वेवमप्येकवर्जमिति व्यर्थम्, तद्धि यत्र सूत्रे येन व्यापारेण यस्य स्वरो विधीयते तस्य मा भूदित्येवमर्थम्, यदि च तस्यापि स्यादनर्थकमेव तत्स्यात् ? उच्यते; 'एकवर्जम्' इति वचनात्परिभाषात्वनिर्णयः । तद्धि स्वातन्त्र्येऽधिकारे च न कर्तव्यम् । परिभाषात्वे तु प्रवृत्तिविषयज्ञानार्थं कर्तव्यमिति सर्वमवदातम् ॥ १५८ ॥

**भावबोधिनी**

कुवल और और गर्भ शब्द आद्युदात्त हैं ।

**विमर्श**—कुवलशब्द 'ग्रामादीनां च' ( गणसूत्र ) से आद्युदात्त है 'षिद्गौरादिभ्यश्च'' सूत्र से ङीष् करने पर अन्तोदात्त हो जाता है क्योंकि 'प्रत्ययस्वर' से ङीष् उदात्त है । यहाँ पद बनने के पहले ही शेष का अनुदात्त हो जाता है । अतः 'कुवली' शब्द अनुदात्तादि और अन्तोदात्त हो जाता है । फलतः कुवल्याः विकारः—इस अर्थ में 'अनुदात्तादेश्च'' ( ४।३।१४ ) से अञ् प्रत्यय होकर—कौवलम् बनता है ।

'गर्भ' शब्द भी आद्युदात्त है । गर्भः अस्ति अस्याः—इस अर्थ में 'इनि' प्रत्यय, ङीप् = ई प्रत्यय होते हैं । यहाँ भी पूर्व के समान ही 'इनि' प्रत्यय के उदात्तत्व के समय ही शेष अर्थात् 'गर्भ' का अनुदात्तत्व भी हो जाता है । फलस्वरूप 'गर्भिणी' शब्द अनुदात्तादि हो जाता है । तब 'अनुदात्तादेरण्' ( ४।२।४४ ) से अनुदात्तादि मानकर होने वाला अञ् प्राप्त होता है, उसको रोकने के लिए भिक्षादिगण ( भिक्षादिभ्योऽण् ४।२।३० ) में गर्भिणी शब्द का पाठ है । यदि पदसंज्ञा के बाद अवशिष्टों का अनुदात्तत्व किया जाय तब तो 'गर्भिणी' आद्युदात्त ही रहेगा, फलतः अञ् का बाध करने के लिए भिक्षादिगण में पाठ की आवश्यकता नहीं पड़ती है । चूँकि वहाँ पाठ किया गया है अतः यह ज्ञापित होता है—पदव्यपदेश के पहले ही स्वरविधि के समानकाल = साथ-साथ में ही अवशिष्ट अनुदात्त भी हो जाते हैं । तभी गर्भिणी को अनुदात्त मानकर प्राप्त अञ् के बाध के लिये भिक्षादिगण में उसका पाठ चरितार्थ होता है ॥ १५८ ॥

## २५९९. कर्षात्वतो घञोऽन्त उदात्तः ॥ १५९ ॥ ( ३६८० )

**कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तो भवति । कर्षः । पाकः । त्यागः । रागः । दायः । धायः । 'ञ्नित्यादिर्नित्यम्' ( ६.१.१९७ ) इत्यस्यापवादः ।**

**कर्ष इति विकृतनिर्देशः कृषतेर्निवृत्त्यर्थः । तौदादिकस्य घञन्तस्य कर्ष इत्याद्युदात्त एव भवति ॥**

**न्यासः**

**कर्षात्वतो घञोऽन्त उदात्तः ॥ कर्षात्वत इति ।** कर्षश्चात्वांश्चेति कर्षात्वत्—समाहारद्वन्द्वः । आकारोऽस्यास्तीत्यात्वात् । **कर्षतेर्धातोरिति ।** 'कृष विलेखने' इत्यस्याकारवतश्चेति सम्बध्यते । कर्षतिना धातुना साहचर्यादात्वतोऽपि धातोरेव ग्रहणम् । **घञ इति** प्रत्ययग्रहणम्, अतः प्रत्ययग्रहणपरिभाषया तदन्तस्य कार्यं ज्ञायत इत्याह—**घञन्तस्येति ।** एतच्च कर्षतेरात्वतश्च समानाधिकरणं विशेषणम् । **पाक** इत्यादि । 'अत उपधायाः' इति वृद्धौ कृतायां धातोराकारवत्त्वम् । **दायः, धाय इति ।** 'आतो युक् चिण् कृतोः' इति युक् ।

किमर्थं पुनः प्रकृते विकृतस्य ग्रहणं क्रियते, न 'कृषातः' इत्येवोच्येत ? इत्यत आह—**कर्ष इति विकृतिनिर्देश इत्यादि ।** कृषिर्विलेखनार्थो भ्वादौ तुदादौ च पठ्यते, तत्र यस्य विकरणे परतो गुणात्मको विकारो भवति तस्यैव भौवादिकस्य ग्रहणमिष्यते, नेतरस्य । एतच्च विकृतनिर्देशे सति लभ्यते । तस्मात् कृषतेस्तौदादिकस्य निवृत्तिर्यथा स्यादित्येवमर्थो विकृतनिर्देशः । कस्मात् पुनस्तौदादिकस्य निवृत्तिरिष्यते ? इत्यत आह—**तौदादिकस्येत्यादि**[1] ।

अथ किमर्थं मतुपा निर्देशः क्रियते, न कर्षात इत्येवोच्येत ? नैवं शक्यम्; विहितविशेषणस्याकारस्य ग्रहणं विज्ञायेत—आकारान्ताद् यो विहित इति । तथा च दाय इत्यादावेव स्यात्, पाक इत्यादौ न स्यात् । मतुब्ग्रहणे तु सति न दोषः ।

अन्तग्रहणमुत्तरार्थम्, इह हि 'अलोऽन्त्यस्य' इति भविष्यति ॥ १५९ ॥

**पदमञ्जरी**

**कर्षात्वतो घञोऽन्त उदात्तः ॥** आदस्यास्तीत्यात्वान्, 'तसौ मत्वर्थे' इति भसंज्ञा, कर्षश्चात्वांश्चेति समाहारद्वन्द्वः । **विकृतनिर्देश इति ।** विकरणान्तस्येदमनुकरणम्, न तु घञन्तनिर्देश इति भावः । अथ किमर्थो मतुब्निर्देशः, यावता न क्वचिदप्याकारात्परो घञस्तीति सामर्थ्यात्तद्वतो ग्रहणं भविष्यति ? उच्यते; घञाक्षिप्तो धातुरात इत्यनेन विशेष्येत, तत्र तदन्तविधौ ज्ञायमाने आनन्तर्यस्यासम्भवाद्विधानं विशेष्येत—आकारान्ताद्यो विहित इति, ततश्च दाय इत्यादावेव स्यात्, पाक इत्यादौ तु न स्यात्; मतुब्निर्देशात्तु सर्वत्र भवतीति । लाक्षणिकस्याप्यात्वतो ग्रहणमिष्यते; वृषादिषु कामपामपदानां पाठात् ।

'अलोऽन्त्यस्य' इत्येव सिद्धेऽन्तग्रहणमुत्तरार्थम् ॥ १५९ ॥

**भावबोधिनी**

कर्ष धातु का और आकारवान् घञ् प्रत्ययान्त का अन्त उदात्त होता है । उदा०—कर्षः । [ कृष् + घञ् = अ, गुण, रपर ] पाकः [ पच् + घञ् ] । रागः [ रञ्ज् + घञ् ] । दायः [ दा + घञ् ] । धायः [ धे = धा + घञ्, इन दोनों में "आतो युक् चिण् कृतोः" सूत्र से युक् = य् करने पर दा य् अ, धा य् अ ] यह 'ञ्नित्यादिर्नित्यम्' से प्राप्त आद्युदात्तत्व का अपवाद है ।

कर्ष—इस प्रकार का विकृत [ गुणसहित ] निर्देश [ तुदादिगणीय ] कृष् की निवृत्ति के लिए है । [ अतः भ्वादिगणीय कृष् का घञ् प्रत्ययान्त अन्तोदात्त और ] तुदादि-गणीय घञन्त कर्षः—आद्युदात्त ही होता है ॥ १५९ ॥

---

१. अतः परं महिशूरसंस्करणे 'हलस्येति कृद्योगे कर्तरि षष्ठी' इत्यधिकः पाठः ।

## २६००. उञ्छादीनां च ॥ १६० ॥ ( ३६८१ )

**'उञ्छ' इत्येवमादीनामन्त उदात्तो भवति ।**

**उञ्छः, म्लेच्छः, जञ्जः, जल्पः—एते घञन्ता इति, ञित्स्वरः प्राप्तः । जपः, व्यधः—इत्यबन्तौ, तयोर्धातुस्वरः प्राप्तः । केचित्तु वध इति पठन्ति । युगः । युजेर्घञन्तस्य निपातनादगुणत्वं विशिष्टविषये च निपातनमिदमिष्यते । कालविशेषे रथाद्युपकरणे च युगशब्दस्य प्रयोगः, अन्यत्र हि योग एव भवति ।**

**❀ गरो दूष्येऽबन्तः ❀ ( ग० सू० १६२ ) गरशब्दोऽबन्तः, स दूष्य एवान्तोदात्तः । गरः = विषम् । अन्यत्राद्युदात्त एव ।**

**❀ वेदवेगवेष्टबन्धाः करणे ❀ ( ग० सू० १६३ ) । 'हलश्च' ( ३.३.१२१ ) इति घञन्ताः, एते करणेऽन्तोदात्ता भवन्ति । भावे आद्युदात्ता एव ।**

### न्यासः

**उञ्छादीनां च ॥ उञ्छः, म्लेच्छः, जञ्जः, जल्प इति ।** 'उछि उञ्छे', 'म्लेच्छ अव्यक्तायां वाचि', 'जज जजि युद्धे', 'जप जल्प व्यक्तायां वाचि' । जञ्जेः कुत्वाभावो निपातनात् । **जपो व्यध इत्यबन्ताविति ।** तत्र 'व्यधजपोरनुपसर्गे' इत्यबन्तत्वम् । वधशब्दो हि 'हनश्च वधः' इति । **तयोर्धातुस्वरः प्राप्त इति ।** 'धातोः' इत्युदात्तत्वम् । **व्यध इति ।** 'व्यध ताडने' । अत्रापि व्यधजपोरित्यबन्तत्वम्, पूर्ववद्धातुस्वरः प्राप्तः । **कालविशेष इति ।** कृतद्वापरादौ । **रथाद्युपकरणे चेति ।** आदिशब्देन हलादेर्ग्रहणम् । **गर इति ।** 'गॄ निगरणे' । 'ॠदोरप्' इत्यबन्तः । विषमित्यनेन दूष्यशब्दस्य विशेषे वृत्तिं दर्शयति । **अन्यत्राद्युदात्त एवेति ।** धातुस्वरेण । **वेद-वेग-वेष्ट-बन्धा इति ।** 'विद ज्ञाने', 'विचिर् पृथग्भावे', वेष्ट वेष्टने', 'बन्ध बन्धने' । **परिष्टुदित्यादि ।** 'ष्टुञ् स्तुतौ', 'यु मिश्रणे', 'द्रु गतौ'—एभ्यो यथायोगं पर्याद्युपसर्गपूर्वेभ्यः क्विप्, प्रादिसमासः । **अन्यत्र मध्योदात्त इति ।**

### पदमञ्जरी

**उञ्छादीनां च ॥** 'उछि उञ्छे' ( धा० पा० २१५ ), 'म्लेच्छ अव्यक्ते शब्दे' ( धा० पा० २०५ ) । 'जजि युद्धे' ( धा० पा० २४३ ), अत्र कुत्वाभावो निपातनात् । 'जल्प व्यक्तायां वाचि' ( धा० पा० ३९८ ) 'व्यध ताडने' ( धा० पा० ११८१ ), 'व्यधजपोरनुपसर्गे' इत्यप् । **वध इति ।** 'हनश्च वधः' इत्यप् । **कालविशेष इति ।** कृतद्वापरादौ । 'घॄ गॄ निगरणे' ( धा० पा० १४१० ), 'ॠदोरप्' ।

**विषमित्यनेन** दूष्यशब्दस्य विशेषे वृत्तिं दर्शयति । 'विद ज्ञाने' ( धा० पा० १०६४ ), 'ओविजी भयचल-

### भावबोधिनी

'उञ्छ' आदि शब्दों का अन्त उदात्त होता है ।

उञ्छः, म्लेच्छः, जञ्जः, जल्पः—ये घञन्त हैं, ञित् स्वर [ आद्युदात्तत्व ] प्राप्त है । जपः, व्यधः—ये अप्-प्रत्ययान्त हैं [ क्योंकि "व्यधजपोरनुपसर्गे" सूत्र से अप् होता है । ] इनका [ "धातोः" से आद्युदात्त ] धातुस्वर प्राप्त है । कुछ लोग 'वधः' यह पढ़ते हैं । युगः । 'युज्' घञन्त के निपातन से अगुणत्व और विशिष्ट विषय में यह निपातन इष्ट है । कालविशेष [ सत्ययुग, कलियुग आदि ] और रथादि के उपकरण में 'युग' शब्द का प्रयोग होता है । अन्य अर्थों में 'योगः' ही होता है ।

❀ दूष्य अर्थ में अबन्त गरः । ❀ 'गरः' शब्द अप्-प्रत्ययान्त है, यह दूष्य अर्थ में ही अन्तोदात्त होता है । गर = विष । अन्य अर्थ में [ धातुस्वर से ] आद्युदात्त ही होता है । [ गर से लच् प्रत्यय करने पर 'गरलम्' बनता है । ]

❀ स्तुयुद्रुवश्छन्दसि ❀। ( ग० सू० १६४ ) उपसमस्तार्थमेतत्। परिष्टुत्। संयुत्। परिद्रुत्।

❀ वर्तनिः स्तोत्रे ❀ ( ग० सू० १६५ )। स्तोत्रम् = साम, तत्स्थो वर्तनिशब्दोऽन्तोदात्तो भवति, अन्यत्र मध्योदात्तः।

❀ श्वभ्रे दरः ❀ ( ग० सू० १६६ )। श्वभ्रेऽभिधेये दरशब्दोऽन्तोदात्तः। अन्यत्राबन्तत्वादाद्युदात्तः।

❀ साम्बतापौ भावगर्हायाम् ❀ ( ग० सू० १६७ )। अन्तोदात्तौ, अन्यत्राद्युदात्तौ।

**न्यासः**

वर्तनिशब्दो हि 'अर्त्तिसृधृ' इत्यतोऽनिप्रत्ययेऽनुवर्त्तमाने 'वृतेश्च' इत्यनेन 'वृतु वर्तने' इत्येतस्मादनिप्रत्ययमुत्पाद्य व्युत्पाद्यते। तस्मात् प्रत्ययस्वरेण मध्योदात्तो भवति। दर इति। 'दॄ विदारणे' ऋकारान्तत्वादबन्तः।

**साम्बतापौ भावगर्हायामिति**। सहाम्बया वर्तत इति साम्बः, 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति प्रकृतिस्वरेण सहशब्दस्य 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वे प्राप्ते भावगर्हायामन्तोदात्तत्वं विधीयते। साम्बो भिक्षते। भिक्षणमत्र भावगर्हा। तपनं तापः, 'तप सन्तापे' इत्यस्माद् घञ्। आद्युदात्तत्वे प्राप्ते वचनम्। तापो दस्यूनां धार्मिकेषु। भावगर्हायामिति किम्? साम्बस्तिष्ठति, तापो महान् ग्रीष्मस्य। अनयोराद्युदात्तत्वमेव।

**पदमञ्जरी**

नयोः' ( धा० पा० १२८९ ), 'वेष्ट वेष्टने' ( धा० पा० २५५ ), 'बन्ध बन्धने' ( धा० पा० १५०८ ), 'ष्टुञ् स्तुतौ' ( धा० पा० १०४३ ), 'यु मिश्रणे' ( धा० पा० १०३३ ), 'द्रु गतौ' ( धा० पा० ९४५ )।

**उपसमस्तार्थमेतदिति**। केवलानां धातूनां क्विबन्तानां धातुस्वरेणैव सिद्धत्वात्। **परिष्टुदिति**। सम्पदादित्वात्क्विप्, तेन प्रादिसमासः, 'पूर्वपदात्' इति षत्वम्। अव्ययपूर्वपदप्रकृतिस्वरे प्राप्तेऽन्तोदात्तत्वम्। सोपपदात्तु क्विपि कृत्स्वरेणैव सिद्धम्।

**अन्यत्र मध्योदात्त इति**। स हि 'वृत्तु वर्तने' ( धा० पा० ७५८ ) इत्यस्मादिनिप्रत्ययेन व्युत्पाद्यते। 'दॄ विदारणे' ( धा० पा० १४९३ )।

**साम्बतापौ भावगर्हायामिति**। साम्बो भिक्षते, अम्बया सह भिक्षणं गर्हितम्। बहुव्रीहौ पूर्वपदप्रकृति-

**भावबोधिनी**

❀ वेद, वेग, वेष्ट, बन्ध—करण अर्थ में। ❀ "हलश्च" से घञ् प्रत्यान्त हैं, ये करण अर्थ में ही अन्तोदात्त होते हैं। [ विद्यते = ज्ञायते अनेन—इति वेदः यही अन्तोदात्त होता है। ] भाव अर्थ में तो आद्युदात्त ही [ "ञ्नित्यादिर्नित्यम्" सूत्र से ] होता है।

❀ स्तु, यु द्रु—वेद में [ अन्तोदात्त होते हैं ]। ❀ उपसमास-स्थलीय प्रयोग के लिए यह है [ क्योंकि केवल धातु तो धातुस्वर से ही अन्तोदात्त हो जाता है। ] उदा०—परिष्टुत्। [ परि + स्तु + क्विप् ] संयुत्। [ सम् + यु + क्विप् ]। परिद्रुत्। [ परि + द्रु + क्विप् सभी में क्विप् का सर्वापहारी लोप, तुक् = त् आगम, उपपद-समास करने पर रूप बनते हैं। अन्तोदात्त होता है। ]

❀ वर्तनि शब्द स्तोत्र में [ अन्तोदात्त होता है। ] ❀ स्तोत्र = साम, इसमें वर्तमान वर्तनि शब्द अन्तोदात्त होता है, अन्यत्र मध्योदात्त होता है। [ वृत + अनि में प्रत्यय आद्युदात्त होने से निष्पन्न शब्द मध्योदात्त हो जाता है। ]

❀ श्वभ्र में दर शब्द। ❀ श्वभ्र अर्थ रहने पर दर शब्द अन्तोदात्त होता है। अन्य अर्थ में अप् प्रत्ययान्त होने से आद्युदात्त होता है। [ रन्ध्र, विवर और आकाश अर्थों में श्वभ्र का प्रयोग होता है। यहाँ 'दर' से क्या अभिप्रेत है, स्पष्ट नहीं है। ]

❀ उत्तमशश्वत्तमशब्दौ सर्वत्र ❀ ( ग० सू० १६८ )। केचित्तु 'भावगर्हायाम्' इति अत्राप्यनुवर्तयन्ति।

❀ भक्षमन्थभोगदेहाः ❀ ( ग० सू० १६९ )। एते घञन्ताः। भक्षिर्ण्यन्तोऽपि घञन्त एवः 'एरच्' ( ३.३.५६ ) अण्यन्तानाम् इति वचनात् ॥

## २६०१. अनुदात्तस्य च यत्रोदात्तलोपः ॥ १६१ ॥ ( ३६५१ )

'उदात्त' इति वर्तते। यस्मिन्ननुदात्ते परत उदात्तो लुप्यते, तस्यानुदात्तस्यादिरुदात्तो भवति। कुमार

**न्यासः**

**उत्तमशश्वत्तमाविति**। एतौ तमप्प्रत्ययान्तौ। पित्त्वात् प्रत्ययस्यानुदात्तत्वे उच्छब्दस्य 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वमित्यत आद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थमुत्तमशब्दः पठ्यते। शश्वच्छब्दोऽपि प्रातिपदिकस्वरेणान्तोदात्तः, ततो मध्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थमेव पठ्यते। **सर्वत्रेति**। भावगर्हायाम्, अन्यत्र च।

**भक्ष-मन्थ इत्यादि**। 'भक्ष भक्षणे,' 'मन्थ विलोडने,' 'भुज कौटिल्ये' 'दिह उपचये'। ननु भक्षिश्चु-रादित्वाण्ण्यन्त इति तत् 'एरच्' इत्यचा भवितव्यम्, तत् कथमसौ घञन्तः? इत्याह—**भक्षिर्ण्यन्तोऽपीत्यादि**। अत्रैव कारणमाह—**एरजण्यन्तानामिति** ॥ १६० ॥

**अनुदात्तस्य च यत्रोदात्तलोपः ॥ कुमारीति**। 'वयसि प्रथमे' इति ङीप्, यस्येति च' इत्यकारलोपः।

**पदमञ्जरी**

स्वरस्यापवादः। तापो दस्यूनाम्। धार्मिकेषु दस्युकर्तृकस्तापो गर्हितः। 'कर्षात्त्वतः' इत्येव सिद्धे भावगर्हाया अन्यत्राऽऽद्युदात्तार्थं वचनम्।

**उत्तमशश्वत्तमाविति**। तमबन्तावेतौ। द्रव्यप्रकर्षविवक्षायामामभावः, पित्त्वादनुदात्ते प्राप्ते पाठः। **सर्वत्रेति**। भावगर्हायाम्, अन्यत्र च। छन्दसि, भाषायां चेत्यन्ये।

'भक्ष अदने' ( धा० पा० १५५७ ) चुरादिः, 'मन्थ विलोडने', ( धा० पा० ४२ ) 'भुज कौटिल्ये', ( धा० पा० १४१७ ) 'दिह उपचये' ( धा० पा० १०१५ )। **एरजण्यन्तानामिति**। ये तु अनार्षमेतद्विचन-मित्याहुः, तेषां भक्षशब्दस्य पाठे प्रयोजनं मृग्यम् ॥ १६० ॥

**अनुदात्तस्य च यत्रोदात्तलोपः ॥ कुमारशब्दोऽन्तोदात्त इति**। फिषित्यनेन। अन्यत्रापि प्रातिपदिक-

**भावबोधिनी**

❀ साम्ब और ताप शब्द भावगर्हा में। ❀ आन्तोदात्त होते हैं, अन्यत्र आद्युदात्त होते हैं। [ अम्बया सह वर्तते—इसमें साम्बः। साम्बो भिक्षते। बहुव्रीहि में पूर्वपद 'सह' का प्रकृतिस्वर आद्युदात्त होता है। किन्तु गर्ह में अन्तोदात्त हो जाता है। तापः—( तप् + घञ् ) इसमें 'कर्षात्त्वतो घञोऽन्त उदात्तः' इसी से अन्तोदात्तत्व सिद्ध रहने पर यह वचन भावगर्हा से भिन्न अर्थ में आद्युदात्तत्व ज्ञापित करने से लिए हैं। यहाँ "आद्युदात्तत्वे प्राप्ते वचनम्" यह न्यासकार का लेख उचित नही प्रतीत होता है। ]

❀ उत्तम और शश्वत्तम शब्द सर्वत्र अन्तोदात्त होते हैं। ❀ कुछ विद्वान् यहाँ भी 'भावगर्हा में'—इसकी अनुवृत्ति करते हैं। [ अतः अन्यत्र आद्युदात्त होते हैं। ]

❀ भक्ष, मन्थ, भोग, देह। ❀ ये घञन्त हैं। भक्ष् धातु का ण्यन्त भी घञन्त ही होता है, क्योंकि ❀ "अणिजन्त इकारान्त से ही अच् होता है।" ❀ ऐसा वचन है। [ अतः णि = इ को मानकर इकारान्त न होने से अच् नही होता है, घञ् ही होता है। इन सभी में घञ् प्रत्यय है। किन्तु आकार नहीं हैं। अतः 'कर्षात्वतो घञोऽन्त" सूत्र से प्राप्ति न होने के कारण यह वचन है। ] ॥ १६० ॥

'उदात्त' इसकी अनुवृत्ति होती है। जिस अनुदात्त के परे रहते उदात्त का लोप होता है, उस अनुदात्त का आदि

**ई कुमारी। कुमारशब्दोऽन्तोदात्तः, तस्य ङीप्यनुदात्ते उदात्तो लुप्यते। अनुदात्तो ङीब् उदात्तः, 'भस्य टेर्लोपः' (७.१.८८)। पथः। पथा। पथे। पथिन्-शब्दोऽन्तोदात्तः। 'कुमुदनडवेतसेभ्यो ड्मतुप्' (४.२.८७)। कुमुद्वान्। नड्वान्। वेतस्वान्। कुमुदादयोऽन्तोदात्ताः। ड्मतुबनुदात्तः।**

**अनुदात्तस्येति किम्? प्रासङ्गं वहति प्रासङ्ग्यः। प्रासङ्गशब्दः थाथादिस्वरेण (६.२.१४४) अन्तोदात्तः। तस्य यति 'तित्स्वरितम्' (६.१.१८५) इति स्वरिते उदात्तो लुप्यते? नैतदस्ति; स्वरिते हि विधीयमाने**

**न्यासः**

**कुमारशब्दोऽन्तोदात्त इति।** प्रातिपदिकस्वरेण। एवमुत्तरत्राप्यन्तोदात्तता वेदितव्या। **ङीबित्यनुदात्त इति।** पित्त्वात्।

**प्रासङ्ग्य इति।** 'तद् वहति' इत्यादिना प्राग्घितीयो यत्। **प्रासङ्गशब्द** इत्यादि। 'षन्ज सङ्गे' इत्यस्माद् घञमुत्पाद्य प्रासङ्गशब्दो व्युत्पाद्यते, तस्य 'गतिकारकोपपदात्' इति 'तत्पुरुषे' इति वर्त्तमाने 'थाथघञ्क्ता-जबित्रकाणाम्' इत्यन्तोदात्तत्वं विहितम्, अतोऽसावन्तोदात्तः। **नैतदस्तीति।** 'उदात्तो लुप्येत' इति यदुक्तं तस्य प्रतिषेधः। कस्मान्नैतदस्तीत्याह—**स्वरिते हीत्यादि।** स्वरविधिसमकालमेव शिष्टस्यानुदात्तत्वं भवतीति प्रातिपदिकमेतत्। तस्मात् स्वरिते विधीयमाने परिशिष्टस्यानुदात्तत्वेन भवितव्यम्। तत् कुत उदात्तलोपः! न कुतश्चिदित्यर्थः। **तदेतदित्यादि।** यस्मादेवमनुदात्तग्रहणस्य प्रत्युदाहरणं न सम्भवति, तस्मादनुदात्तग्रहण-मेतदादेरनुदात्तस्योदात्तत्वं यथा स्यादित्येवमर्थम्; अन्यथा ह्यस्यानर्थक्यमेव स्यात्।

किं पुनः कारणमादेरनुदात्तस्योदात्तो न सिध्यति, यतस्तदर्थमनुदात्तग्रहणं क्रियते? इत्याह—**अन्त इति हीत्यादि।** अवधारणमात्रं द्रष्टव्यम्। अन्तस्यैव स्यात्, नादेरित्यर्थः। क्व पुनरादेरुदात्तार्थमनुदात्तग्रहणं

**पदमञ्जरी**

स्यान्तोदात्तत्वमनेनैव द्रष्टव्यम्! **पथिन्शब्दोऽन्तोदात्त इति।** 'पतेस्थ च' (द० उ० ६.६३) इतीन्प्रत्ययान्तत्वात्। **कुमुदादयोऽन्तोदात्ता इति।** कुमुदशब्दो मूलविभुजादित्वात्कप्रत्ययान्तः, नडशब्दोऽव्युत्पन्नः, 'वी गत्यादिषु' (धा० पा० १०४८) अस्मादसच् तुडागमश्च। वेतसश्चित्स्वरेणान्तोदात्तः।

**प्रासङ्ग्य इति।** प्रासज्यत इति प्रासङ्गः, कर्मणि घञन्तः, 'तद्वहति' इति 'प्राग्घिताद्यत्' इति यत्। **नैतदस्तीति। उदात्तो लुप्यत इति।** यत्तस्य प्रतिषेधः। कथं नैतदस्तीति? इत्याह—**स्वरिते हीति।** 'प्रागेव पदसंज्ञायाः स्वरविधिसमकालमेव शेषनिघातो भविष्यति' इत्युक्तं पुरस्तात्। **तत् कुत उदात्तलोप इति।**

**भावबोधिनी**

उदात्त हो जाता है। उदा०—कुमार+ई (ङीप्) कुमारी। कुमार शब्द ['फिषोऽन्त उदात्तः' इस फिट् सूत्र से] अन्तोदात्त है, इसका अनुदात्त ङीप्=ई परे रहते उदात्त लुप्त होता है, [प्रस्तुत सूत्र से] अनुदात्त ङीप् उदात्त हो जाता है। भसंज्ञक के टि का लोप होता है—पथः। पथा। पथे। पथिन्—शब्द अन्तोदात्त है। [पथिन्+शस्=अस्, "अनुदात्तौ सुप्पितौ" सूत्र से सुप् विभक्ति अनुदात्त होती है। इसके परे रहते पूर्ववर्त्ती भसंज्ञक उदात्त इ (=इन् टि) का लोप हो जाता है। अतः अनुदात्त शस् आदि का आदि उदात्त हो जाता है। अतः पथः आदि अन्तोदात्त हैं।] 'कुमुदनडवेतसेभ्यो ड्मतुप्" सूत्र से ड्मतुप् प्रत्यय करने पर—कुमुद्वान्। नड्वान्। वेतस्वान् बनते हैं। यहाँ कुमुद आदि अन्तोदात्त हैं। [और पित् होने से] ड्मतुप्=मत् अनुदात्त है। [डित् के कारण अन्त अ का लोप होता है अतः अनुदात्त भी—'मत्' उदात्त हो जाता है। अतः इन सभी में 'वा' का आ उदात्त है।]

अनुदात्त का—इसका क्या फल है? प्रासङ्गं वहति—इस अर्थ में—प्रासङ्ग्यः। प्रासङ्ग शब्द थाथादि (थाथघञ्० पा० सू० ६।२।१४४) स्वर से अन्तोदात्त है। यत् इस स्वरित परे रहते पूर्व के उदात्त अ का लोप

**परिशिष्टमनुदात्तम्, तत् कुत उदात्तलोपः ? तदेतदनुदात्तग्रहणमादेरनुदात्तस्योदात्तार्थम् ।**

**'अन्तः' इति हि प्रकृतत्वादन्तस्य स्यात्—मा हि धुक्षाताम्, मा हि धुक्षाथाम् ।**

**न्यासः**

क्रियते ? इत्याह—**मा हि धुक्षातामित्यादि ।** दुहेर्लुङ्, आत्मनेपदमातामाथाम्, ततश्च 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशः, 'तस्यानुदात्त' इत्यादिना लसार्वधातुकस्यानुदात्तत्वम्, 'क्सस्याचि' इत्यकारलोपः, क्सस्याकारः प्रत्ययस्वरेणोदात्तः, दादेर्धातोर्घः', 'खरि च' इति चर्त्वम्—घकारस्य ककारः, षत्वम् । अत्रासत्यनुदात्तग्रहण आतामाथामाकारस्यादिभूतस्यानुदात्तत्वं न स्यात्, सति त्वस्मिन्नाकारस्यादिभूतस्योदात्तत्वं स्यात् । हिशब्दस्य प्रयोगे 'हि च' इति निघातप्रतिषेधो न स्यात् । निघाते हि तिङन्तस्यासत्युदात्तलोपो न स्यात् ।

**पदमञ्जरी**

न कुतश्चिदित्यर्थः । **तदेतदित्यादि ।** यस्मादेवमनुदात्तग्रहणस्य व्यावर्त्यं न सम्भवति, तस्मादेतदनुदात्तग्रहणमादेरनुदात्तार्थम् ।

अथासत्यनुदात्तग्रहणे कस्य स्यात् ? इत्यत आह—**अन्त इति । मा हि धुक्षातामिति ।** दुहेर्माङि लुङात्मनेपदम्, आतामाथामौ, च्लेः क्सः । 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वम्, क्सः प्रत्ययस्वरेणान्तोदात्तः, 'क्सस्याचि' इत्यकारलोपः । माङः प्रयोगोऽडागमनिवृत्त्यर्थः, अटि हि सति पदमाद्युदात्तं भवति, हिशब्दप्रयोगः 'हि च' इति निघातप्रतिषेधार्थः । अत्रासत्यनुदात्तग्रहणे आतामाथामोर्द्वितीयस्याच उदात्तः स्यात्, अन्ताधिकारात्; सति त्वस्मिन्नादेर्भवति । इदं तु वक्तव्यम्, 'यत्रोदात्तलोपः' इत्युच्यमाने कथमन्त्यस्य प्रसङ्गः, न हि तदुदात्तालोपस्य निमित्तमिति ? उच्यते; आदेरपि तर्हि न प्राप्नोति, तस्यानुदात्तलोपं प्रत्यनिमित्तत्वात्, 'क्सस्याचि' इत्यजादौ प्रत्यये विधानात् । तस्माद्यत्र प्रत्यय उदात्तलोपस्तत्सम्बन्धिनोऽनुदात्तस्योदात्तो भवतीति सूत्रार्थेऽन्ताधिकारादन्त्यस्य प्रसङ्गः । यदि तु निमित्तत्वानादरेण यत्रानुदात्ते परतः उदात्तलोपः, तस्योदात्तो

**भावबोधिनी**

होता है ? नहीं, ऐसा नहीं है, क्योंकि स्वरित के विधान-काल में परिशिष्ट का अनुदात्त हो जाता है । [ अतः पूर्व का भी अनुदात्त ही होता है ] तब उदात्त का लोप कैसे होता है ? तब यह अनुदात्त का ग्रहण आदि—अनुदात्त का उदात्त करने लिए है । [ अतः जहाँ आदि का उदात्त अनुदात्त करना है । वहाँ के लिए यह अनुदात्त—ग्रहण है । अन्यथा इसका कोई भी व्यावर्त्य न होने से वैयर्थ्य स्पष्ट है । ]

'अन्तः' यह तो प्रकृत ही है अतः अन्त का ही [ उदात्तत्व ] होने लगेगा—मा हि धुक्षाताम्, मा हि धुक्षाथाम् । [ दुह् + लुङ् = आताम् "शल इगुपधादनिटः क्सः" सूत्र से च्लि का क्स = स, "तास्यनुदात्तेत्०" ( पा० सू० ६।१।१८६ ) से लसार्वधातुक अनुदात्त होता है । दुह् + स + आताम्, क्स का अ प्रत्ययस्वर से अन्तोदात्त है, "क्सस्याचि" सूत्र से क्स के उदात्त अ का लोप आताम् के अनुदात्त के परे होता है—दुह् स् आताम् "दादेर्धातोः" से ह् का घ् "एकाचो बशो भष्" से भष्भाव द् का ध्, "खरि च" से घ् का क्—धुक् स् आताम्, स् का ष, क् + ष् = क्ष् धुक्षाताम् । माङ् के योग में अट् आगम का प्रतिषेध—मा हि धुक्षाताम् । यदि सूत्र में 'अनुदात्तस्य' का ग्रहण न होता तो उसके फलस्वरूप 'आताम्' 'आथाम्' का आदि आ उदात्त न होकर 'अन्तः' के अधिकार के कारण अन्त = द्वितीय आकार उदात्त होने लगता । इस लिए 'अनुदात्तस्य' का ग्रहण ज्ञापनार्थ और आदि का ही उदात्त करने के लिए है । 'हि' के योग में "हि च" ( पा० सू० ८।१।३४ ) से निघात का प्रतिषेध नहीं हो पाता । माङ् का प्रयोग अट् आगम के प्रतिषेध के लिए है क्योंकि अट् होने पर पद आद्युदात्त होने लग जाता । फलतः अनुदात्त आ का लोप होने लगता, उदात्त का नहीं । यही सब देख कर सूत्रकार ने 'अनुदात्तस्य' का ग्रहण किया है । ]

**यत्रेति किम् ? भार्गवः, भार्गवौ, भृगवः । प्राक् सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक् ।**
**उदात्तग्रहणं किम् ? बैदी । और्वी[1] ॥**

## २६०२. धातोः ॥ १६२ ॥ ( ३६७१ )

**'अन्तः' इत्येव । धातोरन्त उदात्तो भवति । पचति । पठति । ऊर्णोति । गोपायति । याति ॥**

**न्यासः**

माङ्प्रयोगोऽप्यटः 'न माङ्योगे' इति प्रतिषेधो यथा स्यात् । अटि हि तस्योदात्तत्वाच्छेषस्यानुदात्तत्वं स्यात्, तथा च सत्यनुदात्तस्याकारलोपः स्यात्, नोदात्तस्य ।

**भृगव इति ।** भृगोरपत्यानि 'ऋष्यन्धकवृष्णि' इत्यादिना ऋष्यण्, तस्य 'अत्रिभृगुकुत्स' इत्यादिना बहुषु लुक् । ननु चात्रापि विभक्तावुत्पन्नायामुदात्तस्य लोपः, तस्मादिहापि भवितव्यमेव ? इत्यत आह— **प्राक् सुबुत्पत्तेरित्यादि ।** न हि गोत्रप्रत्ययस्य लुग्विधौ विभक्तिर्निमित्तत्वेनाश्रीयते । तस्मात् प्रागेव गोत्रप्रत्ययस्य लुक्, ततो नात्रानुदात्तत्वम् । **बैदी, औवींति ।** बिदस्यापत्यम्, उर्वस्यापत्यमिति 'अनृष्यान्तर्य्ये बिदादिभ्योऽञ्' इत्यञ्, ञित्स्वरेणाद्युदात्तः, 'टिड्ढाणञ्' इति ङीप् ॥ १६१ ॥

**धातोः ॥ ऊर्णोतीति ।** अदादित्वाच्छपो लुक् ॥ १६२ ॥

**पदमञ्जरी**

भवतीति सूत्रार्थः, तदा नान्त्यस्य प्रसङ्गः ।

**भृगव इति ।** 'अत्रिभृगुकुत्स' इत्यादिना बहुषु लुक् । तत्र बहुष्वित्यर्थग्रहणम्, न बहुवचनस्य । **वैदीति ।** बिदाद्यञन्तात् 'शार्ङ्गरवाद्यञो ङीन्' ॥ १६१ ॥ १६२ ॥

**भावबोधिनी**

यत्र [ = जिस अनुदात्त के परे रहते ]—इसका क्या फल है ? भार्गवः, भार्गवौ, भृगवः । इसके बहुवचन में सुप् ( अनुदात्त ) के आने के पहले ही अपत्यार्थक प्रत्यय ( "ऋष्यन्धक०" से विहित अण् ) का लोप हो जाता है । [ अतः अनुदात्त का उदात्त नहीं होता है । ]

उदात्तग्रहण किस लिए है ? बैदी । और्वी । [ बिदस्य अपत्यम्, उर्वस्य अपत्यम्—अर्थ में "अनृष्यानन्तर्ये बिदादिभ्योऽञ्" (४.१.१०४) सूत्र से अञ् होने पर "ञ्नित्यादिर्नित्यम्" से आद्युदात्त होने पर शेषनिघात से अन्य अनुदात्त हैं अतः स्त्री अर्थ में "शार्ङरवाद्यञो" ( पा० सू० ४.१.७३ ) से ङीन् = ई करने पर बैद + ई, और्व + ई में अनुदात्त अ का लोप है, उदात्त का नहीं । पदमंजरीकार ने ङीन् माना है और न्यासकार ने ङीप् । चूँकि अनुदात्त परे उदात्त के लोप का प्रत्युदाहरण है इस से न्यासकार का मत उचित प्रतीत होता है । वास्तव में पदमंजरीकार का मत ही संगत है । क्योंकि 'उदात्त' के लोप का प्रत्युदाहरण है वह उदात्त परे रहते हो अथवा अनुदात्त परे रहते—यह अलग विषय है । ] ॥१६१॥

'अन्तः' की अनुवृत्ति होती है । धातु का अन्त उदात्त होता है । उदा०—पचति । पठति । ऊर्णोति । गोपायति । [ यहाँ पहले 'गुपू' अन्तोदात्त है, आय प्रत्यय करने पर सनाद्यन्त मान कर 'गोपाय' भी अन्तोदात्त हो जाता है । ] याति । [ ऊर्णोति, याति में "अदिप्रभृतिभ्यः शपः" से शप् का लुक् होता है । ] ॥ १६२ ॥

---

१. 'मौञ्जायना' इत्यधिकमस्मिन्पुस्तके ।

## २६०३. चितः ॥ १६३ ॥ ( ३७१० )

**चितोऽन्त उदात्तो भवति। 'भञ्जभासमिदो घुरच्' ( ३.२.१६१ ) भङ्गुरम्। भासुरम्। मेदुरम्। 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' ( २.४. ७० ), कुण्डिनाः।**

**चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्यान्त उदात्त इष्यते। बहुपटवः। उच्चकैः॥**

### न्यासः

**चितः॥ भङ्गुरमित्यादौ** प्रत्ययस्वरस्यापवादोऽन्तोदात्तत्वं विधीयते। **कुण्डिना इति।** अत्र तु स्थानिवद्भावः स्वरस्य। कुण्डिनीशब्दस्यायमादेशः, स च प्रत्ययस्वरेण मध्योदात्त इति तदादेशोऽपि मध्योदात्त एव स्यात्। कुण्ढमस्यास्तीतोनिः, तदन्तात् स्त्रियाम् 'ऋन्नेभ्यो ङीप्' इति ङीप्। कुण्डिन्या अपत्यानि बहूनीति गर्गादित्वाद् यञ्, तस्य बहुषु लुक्। परिशिष्टस्य कुण्डिनजादेशः।

**चिति प्रत्यय इत्यादि।** कथं पुनः प्रकृतिप्रत्ययसमुदास्यान्तोदात्तत्वं लभ्यते? यथा लभ्यते तथाख्यायते—इह चित इति समुदायसम्वन्धेऽवयवादेषा षष्ठी। चितोऽवयवस्य यः सम्बन्धी यः समुदायस्तस्यान्तोदात्तत्वं भवतीत्यर्थः। अथ वा–चित इति मत्वर्थीयाच्प्रत्ययान्तमेतच् चिद्स्यास्तीति चितः, तस्यान्तोदात्तत्वं भवतीत्यर्थः। तेन प्रकृतिप्रत्ययसमुदायस्यान्तोदात्तत्वं सिध्यति। यदि तर्हि चित इति मत्वर्थीयाकारप्रत्ययान्तमेतत्, तर्हि षष्ठी प्राप्नोति, चितस्येति निर्देशेन भवितव्यम्? नैष दोषः; 'छन्दोवत् सूत्राणि भवन्ति' इति सुब्व्यत्ययेन षष्ठ्याः प्रसङ्गे प्रथमा भविष्यति। **बहुपटव इति।** ईषदसमाप्ताः पटव इति 'विभाषा सुपो बहुच पुरस्तात्तु'

### पदमञ्जरी

**चित्तः॥ भङ्गुरमिति।** 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। **कुण्डिना इति।** कुण्डशब्दान्मत्वर्थीय इनिः, स्त्रियां ङीप्, कुण्डिनीशब्दो मध्योदात्तः, कुण्डिन्या अपत्यानि बहूनि, गर्गादियञो बहुषु लुक्, परिशिष्टस्य कुण्डिनजादेशः।

**चिति प्रत्यये इति।** ननु च नात्र चितीति प्रत्ययग्रहणं कुण्डिनजादेरपि ग्रहणात्? तस्मादयमत्रार्थः—यत्र चित्प्रत्ययस्तत्र समुदायस्येष्यत इति। कथं पुनरेतल्लभ्यते? चित इत्यवयवादेषा षष्ठी, न कार्यिणः, चितोऽवयवस्य सम्बन्धी यः समुदायः स कार्यी। अथ वा—चिदस्यास्तीति चितः, अर्शआदेराकृतिगणत्वादच् प्रत्ययः, षष्ठ्यर्थे प्रथमा, तेन चिद्वतः समुदायस्येत्यर्थः। अत्र च लिङ्गम्—अकः चित्करणम्, अन्यथा तस्यैका-

### भावबोधिनी

चित् (चकार को इत्संज्ञावाले) का अन्त उदात्त होता है। उदा०—भञ्जभासमिदो घुरच्" (पा० सू० ३.२.१६१) घुरच्—उर प्रत्यय होता है, [ इसमें 'च्' की इत्संज्ञा है। अतः चित् है। ] अन्तोदात्त होता है। "आगस्त्य-कौण्डिन्ययोरगस्तिकुडिनच्" ( पा० सू० २।४।७० ) से कुडिनच् आदेश होने से चित् है अतः अन्तोदात्त होता है—] कुण्डिनाः।

चित् प्रत्यय में प्रकृति और प्रत्यय समुदाय का अन्त उदात्त इष्ट है ( केवल प्रत्यय का नहीं )। बहुपटवः। उच्चकैः। [ "अव्ययसर्वनाम्नामकच् प्राक् टेः" ( ५.३.७१ ) सूत्र से 'उच्चकैः' में अकच् चित् होता है और "विभाषा सुपो बहुच् पुरस्तात्तु" ( पा० सू० ५.३.६८ ) से 'बहुपटवः' बहुच् चित् प्रत्यय पूर्व में होता है। इनमें प्रकृति-प्रत्यय-समुदाय अन्तोदात्त हो जाता है। ]

**विमर्श**—प्रस्तु सूत्र के भाष्य में एक वार्तिक है "चितः सप्रकृतेर्बह्वकजर्थम्" अर्थात् बहुच् और अकच् का संग्रह करने के लिए प्रकृति-प्रत्यय समुदाय का अन्तोदात्त होता है। परन्तु भाष्यकार ने उक्त वार्तिक का खण्डन कर

**२६०४. तद्धितस्य ॥ १६४ ॥ ( ३७११ )**

**'चितः' इत्येव । चितस्तद्धितस्यान्त उदात्तो भवति । 'गोत्रे कुञ्जादिभ्यश्च्फञ्' (४.१.१८) कौञ्जायनाः । किमर्थमिदम् ? परमपि ञित्स्वरं बाधित्वाऽन्तोदात्तत्वमेव यथा स्यादिति ॥**

**२६०५. कितः ॥ १६५ ॥ ( ३७१२ )**

**'तद्धितस्य' इत्येव । तद्धितस्य कितोऽन्त उदात्तो भवति । 'नडादिभ्यः फक्' ( ४.१.९९ ), नाडायनः । चारायणः । 'प्राग्वहतेष्ठक्' ( ४.४.१ ) आक्षिकः । शालाकिकः ॥**

**न्यासः**

इति बहुच् । **उच्चकैरिति** । 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच् ॥ १६३ ॥

**तद्धितस्य ॥ कौञ्जायना इति** । ''कुञ्जादिभ्यश्च्फञ्' इति च्फञन्ताद् 'व्रातच्फञोरस्त्रियाम्' इत्यागतस्य ञप्रत्ययस्य 'तद्राजस्य बहुषु' इत्यादिना लुक् ।

**किमर्थमिति** । पूर्वेणैव सिद्धमिति मन्यमानस्य प्रश्नः । **परमपीत्यादि** । च्फञो हि चकारः 'व्रातच्फञोर-स्त्रियाम्' इत्यत्र विशेषणेन चरितार्थः । ञकारोऽपि वृद्धौ । यद्येवं नोच्येत तदा परत्वान् ञित्स्वरः स्यात् । तस्मात्तमपि बाधित्वान्तोदात्तत्वमेव यथा स्यादित्येवमर्थं क्रियते ॥ १६४ ॥

**कितः ॥** प्रत्ययस्वरस्यापवादोऽयम् । **आक्षिकः, शालाकिक इति** । 'तेन दीव्यति' इत्यर्थे ठक् ॥ १६५ ॥

**पदमञ्जरी**

च्त्वादनर्थकं तत्स्यात् । कुण्डिनजादेर्व्यपदेशिवद्भावेन चिद्वत्त्वम् ॥ १६३ ॥

**तद्धितस्य ॥ कौञ्जायना इति** । कुञ्जस्यापत्यानि बहूनि, 'गोत्रे कुञ्जादिभ्यश्च्फञ्', 'व्रातच्फञोरस्त्रियाम्' इति ञ्यः, 'ञ्यादयस्तद्राजाः', 'तद्राजस्य बहुषु' लुक् ।

**किमर्थमिति** । पूर्वेण सिद्धमिति प्रश्नः । **परमपीति** । चकारः 'व्रातच्फञोरस्त्रियाम्' इत्यत्र विशेषणेन चरितार्थः । ञकारोऽपि वृद्ध्यर्थः, तत्रासत्यस्मिन्परत्वाद् ञित्स्वरः ॥ १६४ ॥ १६५ ॥

**भावबोधिनी**

दिया है । उनके अनुसार 'चितः' इसके मतुप् का लोप समझना चाहिये, अतः चितः = चित्वतः । अथवा पूर्ववर्ती व्याकरण में कार्यी का प्रथमन्ततया निर्देश होता था अतः यहाँ भी चित्वान् समुदाय चित् है । अनुपपत्ति का परिहार 'व्यपदेशिवद्-भाव' से कर लेना चाहिए । इसी लिए काशिकाकार ने उक्त वार्त्तिक नहीं लिखा है ॥ १६३ ॥

'चितः' इसकी अनुवृत्ति होती है । चित् तद्धित का अन्त उदात्त होता है । ''गोत्रे कुञ्जादिभ्यश्च्फञ् ( पा० सू० ४।१।९८ ) से च्फञ् = फ = आयन यह चित् प्रत्यय होकर ] कौञ्जायनाः । [ यह अन्तोदात्त है । ]

यह वचन किस लिए है ? पर भी ञित् स्वर का बाध करके [ आद्युदात्त न करके ] अन्तोदात्त ही जिस प्रकार से हो सके । [ उसके लिये यह सूत्र बनाया गया है । ] ॥ १६४ ॥

'तद्धितस्य' की अनुवृत्ति है । कित् तद्धित प्रत्यय का अन्त उदात्त होता है । 'नडादिभ्यः फक्'' (पा० सू० ४.१.९९) नाडायनः । चारायणः । [ इनमें फक् कित् तद्धित होने से अन्तोदात्त है । ] ''प्राग्वहतेष्ठक्'' ( पा० सू० ४.४.१ ) आक्षिकः । शालाकिकः । [ ठक् यह कित् प्रत्यय है अतः अन्तोदात्त होता है । ] ॥ १६५ ॥

## २६०६. तिसृभ्यो जसः ॥ १६६ ॥ ( ३७१३ )

**तिसृभ्य उत्तरस्य जसोऽन्त उदात्तो भवति । तिस्रस्तिष्ठन्ति । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( ८.२.४ ) इत्यस्यापवादः ।**

**शसि 'उदात्तयणो हल्पूर्वात्' ( ६.१.१७४ ) इति सिद्धे, अन्यत्र बहुवचने 'षट्त्रिचतुर्भ्यो हलादिः'**

**न्यासः**

**तिसृभ्यो जसः ॥ तिस्रस्तिष्ठन्तीति ।** 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिस्रादेशः, 'अचि र ऋतः' इति ऋकारस्य रादेशः । **उदात्तस्वरितयोरित्यादि ।** त्रिशब्दः प्रातिपदिकस्वरेणान्तोदात्त इति तदादेशोऽपि तिसृशब्दोऽन्तोदात्त एव । तत्र ऋकारस्यान्तोदात्तस्य स्थाने विहितो रेफ उदात्तयण् न भवति । ततः परस्य जसः 'उदात्तस्वरितोः' इत्यादिना स्वरितः प्राप्नोति, अतोऽस्यायमपवादः ।

अथ जस्ग्रहणं किमर्थम्, तिसृकेऽप्यत्र मा भूदिति चेत् ? स्यादेतत्—त्रिशब्दात् संज्ञायां कनि कृते तत्र च 'तिसृभावे कन्युपसंख्यानाम्' इति तिस्रादेशे तिसृकेत्यत्रापि स्यात् असति जस्ग्रहण इति ? नैतदस्ति; नित्स्वरोऽत्र बाधको भविष्यति । नाप्राप्ते स्वरान्तरे तिसृस्वर आरभ्यते, स यथैव 'अनुदात्तौ सुप्पितौ' इत्येतत्स्वरं बाधते तथा नित्स्वरमिति चेत् ? नैतदस्ति; यस्माद् येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते 'अनुदात्तौ सुप्पितौ' इत्येतस्मिन् तिसृस्वर आरभ्यते, नित्स्वरे पुनः प्राप्ते चाप्राप्ते च । अथ वा—'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' इत्येव तिसृस्वरः 'अनुदात्तौ सुप्पितौ' इत्येतं बाधिष्यते, न नित्स्वरम् । शसादिनिवृत्त्यर्थं तर्हि जस्ग्रहणमिति चेत् ? एतदपि नास्ति; शसि तावद् भवितव्यमेवान्तोदात्तेन—'उदात्तयणो हल्पूर्वात्' इति । अन्यानि

**पदमञ्जरी**

**तिसृभ्यो जसः ॥** अर्थगतं बहुत्वं शब्दे आरोप्य बहुवचननिर्देशः । **तिस्र इति ।** अन्तोदात्तस्य त्रिशब्दस्य स्थाने तिसृशब्द आदेशः स्थानिवद्भावादन्तोदात्तः । 'अनुदात्तौ सुप्पितौ' इति जसनुदात्तः, तत्राऽचि परतः 'अचि र ऋतः' । 'जसः' इति किमर्थम् ? तिसृका, स्वार्थे क प्रत्ययः, 'तिसृभावे संज्ञायां कनि' ( वा० ८३७ ) इति तिस्रादेशः ? नित्स्वरोऽत्र बाधको भविष्यति । नाप्राप्ते स्वरान्तरे तिसृस्वर आरभ्यते, स यथैव 'सुप्पितावनुदात्तौ' इत्येतं बाधते एवं नित्स्वरमपि बाधेत ? नैष दोषः; येन नाप्राप्ते इत्येतस्य बाधनं भविष्यति, न चाप्राप्ते 'अनुदात्तौ सुप्पितौ' इत्येतस्मिन् तिसृस्वर आरभ्यते, तिसृकेत्यत्रापि हि टापा सहैकादेशस्य स्थानिवद्भावात्पित्स्वरः प्राप्नोति । अथ वा 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते' ( व्या० परि० १० ) इति तिसृस्वरः 'अनुदात्तौ सुप्पितौ' इत्येतमेव बाधिष्यते, न नित्स्वरम्; बहुवचनविषयत्वाद् द्विवचनैकवचने न स्तः । शसि तु भवितव्यम् 'उदात्तयणो हल्पूर्वात्' इति । अन्याः सर्वा हलादयो विभक्तयस्तत्र 'षट्त्रिचतुर्भ्यो हलादिः' 'झल्युपोत्तमम्' इत्यनेन स्वरेण भवितव्यम्, तत्रान्तरेणापि जस्ग्रहणं जस एव भविष्यति ? अत आह—

**भावबोधिनी**

'तिसृ से उत्तरवर्ती जस् का अन्त उदात्त होता है । उदा०—तिस्रः तिष्ठन्ति । [ त्रि + जस् = अस् "त्रिचतुरोः स्त्रियां तिसृचतसृ" ( पा० सू० ७.२.९९ ) से तिसृ आदेश, तिसृ + अस् "अचि र ऋतः" सूत्र से ऋ का र आदेश तिस्रः । यहाँ 'अनुदात्तौ सुप्पितौ' (३,१.४) सूत्र से जस् अनुदात्त था उसका उदात्त किया गया है । ] "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" (पा० सू० ८.२.४) सूत्र का अपवाद है । [ अतः उदात्त तिसृ से परे जस् अनुदात्त का स्वरित न होकर उदात्त ही हो, इसके लिए सूत्र है । ]

शस् परे होने पर "उदात्तयणो हल्पूर्वात्" ( ६.१.१७४ ) इसी से उदात्त के सिद्ध रहने पर और अन्य विभक्तियों में "षट्त्रिचतुर्भ्यो हलादिः" (पा० सू० ६.१.१७९) से विधान है अतः केवल जस् ही बचता है [ तब उसके ग्रहण की आवश्यकता

( ६.१.१७९ ) इति विधानाज्जसेव लभ्यत इति जस्ग्रहणमुपसमस्तार्थमेक इच्छन्ति, अतितिस्रावित्यत्र स्वरो मा भूदिति ॥

**२६०७. चतुरः शसि ॥ १६७ ॥ ( ३६८२ )**

**चतुरः शसि परतोऽन्त उदात्तो भवति। चतुरः पश्य[1] ।**

**न्यासः**

सर्वाणि बहुवचनानि हलादीनि, तत्र 'षट्त्रिचतुर्भ्यो हलादिः' इति 'झल्युपोत्तमम्' इत्युदात्तत्वेन भवितव्यम् । बहुवचनविषयत्वाच्च तिसृशब्दस्य द्विवचनैकवचने न स्तः । तत्रान्तरेण जस्ग्रहणं जस एव भविष्ययीत्यत आह—**जस्ग्रहणमित्यादि** । एके भाष्यकारादयः । असति **जस्ग्रहणे** तिसृ अतिक्रान्ताविति प्रादिसमासे कृते अतितिस्रावित्यत्रापि स्यात्, तन्मा भूदित्येष दोष इत्युपसमस्तार्थं जस्ग्रहणमिच्छन्ति ॥ १६६ ॥

**चतुरः शसि** ॥ 'चतेरुरन्' इत्युरन्प्रत्ययान्तत्वाच्चतुःशब्द आद्युदात्तः, तस्य हि शसि परतोऽनेनान्तोदात्तत्वं विधीयते ।

अथेह कस्मान्न भवति—चतस्रः पश्येति, चतस्रादेशेऽपि चतुरः कृते स्थानिवद्भावेन न प्राप्नोवि ? इत्यत

**पदमञ्जरी**

**जस्ग्रहणमुपसमस्तार्थमिति** । समासेऽपि तिसृशब्दात्परो जस् भविष्यति । **अतितिस्राविति** । अत्र 'अतेरकृत्पदे' इत्यत्र 'अतेर्धातुलोप इति वक्तव्यम्' ( वा० ७१२ ) इति वचनात्प्राप्तमन्तोदात्तत्वं बाधित्वा विभक्तेरुदात्तत्वं स्यात् । जस्ग्रहणात्तु 'उदात्तस्वरितयोर्यणः' इति स्वरितो भवति । अतितिस्र इत्यत्र त्वनेन जस उदात्तत्वं भवत्येव ॥ १६६ ॥

**चतुरः शसि** ॥ अनुकरणत्वेनार्थपरत्वाभावादेकवचनम् । इह चतस्रः पश्य—इत्यत्र चतस्रादेशे कृते स्थानिवद्भावादयं स्वरः प्राप्नोति ? तत्राह—**चतस्रादेश इति** । स्थानिवद्भावादेवाद्युदात्तत्वे सिद्धे पुनराद्युदात्तत्वनिपातनमस्य स्वरस्य बाधनार्थमिति भावः । यथैव तर्हि निपातनस्वरः शस्स्वरं बाधते, एवम् 'षट्त्रिचतुर्भ्यो हलादिः' इत्येतमपि विभक्तिस्वरं बाधेत—चतसृणामिति ? ज्ञापकात्सिद्धम्, यदयम् 'षट्त्रिचतुर्भ्यो हलादिः' इति हलादिग्रहणं करोति, तज्ज्ञापयति—'न निपातनस्वरो विभक्तिस्वरं बाधते' इति । तद्धि तत्र न कर्तव्यम्, कथम् ? सर्वेषामपि बहुवचनविषयत्वाद् द्विवचनैकवचने न सम्भवतः । न चोपसमस्ते सम्भवः; विहितविशेषणाश्रयणात् । तत्र षड्भ्यस्तावत् जश्शसोर्लुका भवितव्यम् । अन्याः सर्वा हलादयो विभक्तयः । स्त्रीशब्देऽपि जसि न भवितव्यम्; असर्वनामस्थानमित्यधिकारात्, शसि भवितव्यम् 'एकादेश उदात्तेनोदात्तः' इति, अन्या हलादयः । तिसृशब्देऽपि जसि 'तिसृभ्यो जसः' इनि भवितव्यम्, शस्यपि 'उदात्तयणो हल्पूर्वात्' इति, अन्या हलादयः । चतुर्-शब्देऽपि जस्यसर्वनामस्थान इति निषेधः, शसि 'चतुरः शसि' इत्ययमेव भवति, अन्यास्तु हलादयः । तदेतद्धलादिग्रहणं चतस्रः पश्येत्यत्र मा भूदित्येतदर्थमेव कृतम् । यदि

**भावबोधिनी**

नहीं थी फिर भी ग्रहण है ] अतः जस् के ग्रहण को कुछ विद्वान् उपपद समासस्थल के लिए चाहते हैं—'अतितिस्रौ' यहाँ स्वर न होने लगे । [ इसके लिए 'जसः' का ग्रहण है । प्रकृत में 'औ' है । अतः सूत्र लागू नहीं होता है । यहाँ भाष्य की पंक्तियाँ उद्धृत हैं । अतितिस्रः में ही होता है । ] ॥ १६६ ॥

शस् परे रहते चतुर् शब्द अन्तोदात्त होता है । उदा०—चतुरः पश्य । [ चतुर् शब्द आद्युदात्त है, शस् अनुदात्त है । प्रस्तुतसूत्र 'चतुरः' का अन्त उदात्त करता है । ]

---

१. 'चतुरो देहि' इत्यपि पुस्तकान्तरे ।

**चतस्रादेशे आद्युदात्तनिपातनाद् यणादेशस्य च पूर्वविधौ स्थानिवत्त्वादयं स्वरो न भवति—चतस्रः पश्येति॥**

## २६०८. सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६८ ॥ ( ३७१४ )

**'सौ' इति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणम्। तत्र सौ य एकाच् तस्मात्परा तृतीयादिर्विभक्तिरुदात्ता भवति। वाचा, वाग्भ्याम्, वाग्भिः। वाग्भ्यः। याता, याद्भ्याम्, याद्भिः।**

**न्यासः**

आह—**चतस्रादेश इत्यादि**। चतस्रादेशे कृत आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः शसि स्वरस्य बाधक इत्याद्युदात्तत्वनिपातनाच्चतस्रः पश्येत्यत्रायं स्वरो न भवति। अथ वा-परत्वाद् 'अचि र ऋतः' इति रादेशे कृत ऋकारस्य तावन्न भवितव्यम्। अकारस्यापि 'अचः परस्मिन् पूर्वविधौ' इति यणादेशस्य स्थानिवद्भावादृकारेण व्यवधाने सति न भवितव्यमेव। ननु च 'न पदान्तद्विर्वचन' इत्यादिना स्वरविधौ प्रतिषिद्धयते स्थानिवद्भावः? नैतदस्ति; उक्तं हि तत्र 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्' इति, ना चायं लोपाजादेशः ॥ १६७ ॥

**सावेकाचस्तृतीयादिर्विभक्तिः**॥ साविति प्रथमैकवचनस्येदं ग्रहणं स्यात्? सप्तमीबहुवचनस्य वा? उभयोर्वा? तत्र यदि प्रथमैकवचनस्य ग्रहणं स्यात्, त्वया त्वयीत्यत्रापि स्यात्। भवति हि युष्मच्छब्दस्य 'त्वाहौ सौ' इति त्वादेशे कृते प्रथमैकवचने परत एकाच्त्वम्। सामान्येनोभयग्रहणेऽप्येष दोषः। सप्तमीबहुवचनस्य ग्रहणे नायं दोषः प्रसज्येत, युष्मास्वित्यत्र युष्मच्छब्दस्यानेकाच्त्वमित्येतत् सर्वं हृदि कृत्वाऽऽह—**साविति सप्तमीबहुवचनस्य ग्रहणमिति**। **याद्भ्यामिति**। याच्छब्दाच्छत्रन्तात् तृतीया। **राज्ञ इति**। भवति राजञ्शब्दो भसंज्ञके परतो लोपे कृत एकाच्, न तु सौ राजस्विति; तत्रानेकाच्त्वात्। **वाक्तरा, वाक्तमेति**। तरसमबिति

**पदमञ्जरी**

च निपातस्वरेण विभक्तिस्वरो बाध्येत हलादिग्रहणमनर्थकं स्यात्। चतस्रः पश्येत्यत्र निपातनस्वरेणैव बाधितत्वाद् विभक्तिस्वरस्याप्रसङ्गात् किं तन्निवृत्त्यर्थेन हलादिग्रहणेन? तत्क्रियमाणम्—विभक्तिस्वरस्य बलीयस्त्वं ज्ञापयतीति चतसृणामित्यत्र विभक्तिस्वरः सिद्धः। **यणादेशस्य चेति**। 'अचि र ऋतः' इति रादेशस्यास्मात्स्वरात्पूर्वं परत्वात्कृतस्य। एतदुक्तं भवति—परत्वादादेशे कृते ऋकारस्य तावन्न भवति, तशब्दाकारस्यापि न भवति; रादेशस्य स्थानिवद्भावादिति। न च स्वरविधौ स्थानिवत्त्वनिषेधः, 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति वचनात् ॥ १६७ ॥

**सावेकाचस्तृतीयादिविभक्तिः ॥ साविति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणमिति**। न प्रथमैकवचनस्य; व्याख्यानात्। प्रयोजनं तूत्तरत्र वक्ष्यति। **पातेति**।[1] पातेर्लटः शत्रादेशः। **राज्ञेति**। 'सौ' इत्येतस्मिन्नसत्येकाचः

**भावबोधिनी**

[ स्त्रीलिङ्ग में ] चतसृ आदेश में आद्युदात्तत्व का निपातन होता है और यणादेश [ "अचि र ऋतः" से ऋ का आदेश ] पूर्व की विधि में स्थानिवत् हो जाता है इस कारण यह स्वर नहीं होता है—चतस्रः पश्य। [ अतः 'चतुरः' ऐसा उल्लेख सार्थक है। ] ॥ १६७ ॥

'सौ' यह सप्तमी बहुवचन के 'सु' शब्द का ग्रहण हैं। उस सु परे रहते जो एकाच् शब्द है उसके बाद वाली तृतीयादि [ तृतीया के आगे वाली सप्तमी तक ] विभक्ति उदात्त हो जाती है। उदा०—वाचा + [ वाच् + टा = आ ]। वाग्भ्याम्। वाग्भिः। वाग्भ्यः। याता [ ❀ शतृ प्रत्ययान्त यातृ के रूप—यात् + आ ] याद्भ्याम्। याद्भिः। [ सभी विभक्तियाँ = प्रत्यय उदात्त हो जाते हैं। पदमंजरी में—'पाता' उदा० है। ]

---

१. 'याता' इति काशिकायां न्यासे च।

**साविति किम् ? राज्ञा । राज्ञे । एकाच इति किम् ? हरिणा । गिरिणा । राजसु । तृतीयादिरिति किम् ? वाचौ । वाचः । विभक्तिरिति किम् ? वाक्तरा । वाक्तमा ।**

**सप्तमीबहुवचनस्य ग्रहणादिह न भवति—त्वया, त्वयीति ॥**

## २६०९. अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ १६९ ॥ ( ३७१५ )

**'एकाचः' इति वर्तते, 'तृतीयादिर्विभक्तिः' इति च । नित्यशब्दः स्वर्यते, तेन नित्याधिकारविहितः समासः पर्युदस्यते । नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच्च तस्मात्परा तृतीयादिर्विभक्ति-रन्यतरस्यामुदात्ता भवति । परमवाचा, परमवाचे । परमत्वचा, परमत्वचे । यदा विभक्तिरुदात्ता न भवति तदा समासान्तोदात्तत्वमेव । परमवाचा । परमवाचे । परमत्वचा । परमत्वचे ।**

### न्यासः

भवति वा तृतीयादिः, न तु विभक्तिः ।

अथ कस्मात् सप्तमीबहुवचनग्रहणम् ? इत्याह—**सप्तमीबहुवचनस्येत्यादि । त्वया, त्वयीति ।** युष्मदस्मदोः 'मपर्यन्तस्य', 'त्वमावेकवचने' इति त्वादेशः । परिशिष्टस्य 'योऽचि' इति यकारः ॥ १६८ ॥

**अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥** यदि विग्रहाभावेन यो नित्यसमासः, स इह नित्यसमास-ग्रहणेन गृह्येत, तत्तोऽवाचा, सुवाचा ब्राह्मणेनेत्यत्रापि विकल्पेन स्यादित्येतच्चेतसि कृत्वाऽऽह—**नित्यशब्दः स्वर्यत इति ।** स्वरितत्वमस्य क्रियत इत्यर्थः, तेन किं भवति ? इत्याह—**तेनेत्यादि ।** स्वरित्वेन ह्यधिकारगतिर्भवति ।

### पदमञ्जरी

परा तृतीयादिविभक्तिरुदात्ता भवतीत्यर्थो भवति, भवति चायमल्लोपे कृते एकाच् । ननु च विहितविशेषणं विज्ञास्यते एकाचो या विहिता तृतीयादिरिति ? न; प्रमाणाभावात् । **सप्तमीबहुवचनस्य ग्रहणादिति ।** प्रथमैकवचने तु 'त्वाहौ सौ' इति त्वादेशे कृते युष्मच्छब्द एकाच् भवति, शेषे लोपे कृतेऽकारान्तत्वात् 'सावर्ण' इति प्रतिषेधो भविष्यति । तदिह प्रथमैकवचनाग्रहणे को हेतुरिति चिन्त्यम् ॥ १६८ ॥

**अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ नित्यशब्दः स्वर्यते इति ।** स्वरितत्वमस्य क्रियत इत्यर्थः । तत्र स्वरितो गुणः क्रियारूपेण निर्दिष्टः, स्वरितत्वे सति किं भवति ? इत्याह—**तेनेति ।** 'स्वरितेना-धिकारः' इत्यत्रायमप्यर्थो व्याख्यातः—स्वरितेन लिङ्गेन यदत्राधिकारः स प्रत्येतव्य इति, ततो नित्याधिकार-

### भावबोधिनी

सौ [ = सप्तमी एकवचन में ।—इसका क्या फल है ? राज्ञा । राज्ञे । [ राजसु—ऐसा अनेकाच् रहता है । ] एकाच् से परे—इसका क्या फल है ? हरिणा । गिरिणा । राजसु । [ यहाँ अनेकाच् से परे हैं । ] तृतीयादि क्या फल है ? वाचौ । वाचः । [ यहाँ प्रथमा, द्वितीया हैं । ] विभक्ति हो—इसका क्या फल है—वाक्तरा । वाक्तमा । [ यहाँ तृतीयादि है किन्तु विभक्तिसंज्ञक नहीं है । अतः सूत्र नहीं लगता है । ]

सप्तमी बहुवचन का ग्रहण करने से इसमें नहीं होता है—त्वया, त्वयि । [ ये एकाच् हैं किन्तु सप्तमी बहुवचन में नहीं हैं । अतः इनमें भी विभक्ति उदात्त नहीं होती है । ] ॥ १६८ ॥

'एकाचः' और 'तृतीयदिर्विभक्तिः' इनकी अनुवृत्ति होती है । "नित्य" शब्द स्वरित होता है, इस कारण नित्य के अधिकार में विहित समास का पर्युदास ( निषेध ) होता है । नित्यसमास से भिन्न अनित्य समास में जो उत्तरपद अन्तोदात्त और एकाच् है उससे परवर्त्ती तृतीया आदि विभक्तियाँ विकल्प से अनुदात्त होती हैं । उदा०—परमवाचा । परमवाचे । परमत्वचा । परमत्वचे । [ इनमें परम के साथ कर्मधारय समास है । वह नित्य नहीं है । अतः विकल्प से

**अन्तोदात्तादिति किम् ? अवाचा। सुवाचा। सुत्वचा तत्पुरुषोऽयम्। तत्र 'तत्पुरुषे तुल्यार्थतृतीया-सप्तम्युपमानाव्यय' ( ६.२.२ ) इति पूर्वपदप्रकृतिस्वरः।**

**उत्तरपदग्रहणमेकाच्त्वेनोत्तरपदं विशेषयितुम्, अन्यथा हि समासविशेषणमेतत्स्यात्। तत्र शुनः ऊर्क् श्वोर्ज्जा—इत्यत्रैवायं विधिः स्यात्।**

**अनित्यसमास इति किम् ? अग्निचिता। सोमसुता। 'उपपदमतिङ्' ( २.२.१९ ) इत्ययं नित्याधिकारे समासो विधीयते, तत्र 'गतिकारकोपपदात् कृत्' ( ६.२.१३९ ) इत्युत्तरपदप्रकृतिस्वरेण चित्-शब्द उदात्तः।**

### न्यासः

तेन नित्याधिकारे यो विहितः समासः स एव नित्यसमास इति, अत्र स च प्रतिषिध्यते। **परमवाचेति**। 'सन्महत्' इत्यादिना समासः। स च नित्याधिकारविहितसमासो न भवतीत्यनित्यसमासः। **सुवाचेति**। 'कुगति' इत्यादिना समासः। **अव्ययपूर्वपदप्रकृतिस्वर इति**। स पुनरुदात्तः; 'निपाताश्चाद्युदात्ता' 'उपसर्गाश्चाभिवर्जम्' इति वचनात्। यथात्रोत्तरपदस्यान्तोदात्तत्वं नास्ति, एवमनित्यसमासत्वमपि; 'कुगति' इत्यादावपि नित्यग्रहणानुवृत्तेः। एवं सति 'मयूरव्यंसकादयश्च' इत्यनेनात्र समासो द्रष्टव्यः; मयूरव्यंसकादेराकृतिगणत्वात्।

**अन्यथा हीति**। यद्युत्तरपदग्रहणं न क्रियेत, तदैकाज्ग्रहणं समासविशेषणं स्यात्। तत्र को दोषः स्यात् ? इत्याह—**तत्रेत्यादि**। ऊर्क्शब्दः सम्पदादित्वात् क्विबन्तः।

**अग्निचिता, सोमसुतेति**। 'अग्नौ चेः', 'सोमे सुञः' इति क्विप्। **अयं नित्याधिकारे समासो विधीयत इति**। तत्र 'नित्यं क्रीडाजीविकयोः' इत्यतो नित्यग्रहणानुवृत्तेः। **तत्रेत्यादि**। 'गतिकारकोपपदात् कृत्' इत्यने-

### पदमञ्जरी

विहितः समासोऽत्र प्रतिषिध्यते। **अवाचेति**। नञ्समासः। **तत्पुरुषोऽयमिति**। न बहुव्रीहिः। तेन 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वं न भवति, अव्ययपूर्वपदप्रकृतिस्वर एव भवतीति भावः। प्रायेण तु **सुवाचा, सुत्वचा इति** पाठः। तत्र प्रत्युदाहरणदिगियं दर्शितेति व्याख्येयम्, न पुनरत्र प्रसङ्गः; प्रादिसमासस्य नित्यसमासत्वात्।

अथोत्तरपदग्रहणं किमर्थम्, यावता 'अनित्यसमासे' इत्याधारसप्तमी विज्ञास्यते—अनित्यसमासस्यान्तोदत्तादेकाचः परा तृतीयादिर्विभक्तिरिति, तच्चोत्तरपदमेव ? तत्राह—**उत्तरपदग्रहणमिति**। अयं भावः—सत्सप्तमी विज्ञायेत, ततश्च समासस्याश्रयत्वात्तस्यैवैकाच्त्वमन्तोदात्तत्वं च विशेषणं स्यादिति।

### भावबोधिनी

विभक्ति उदात्त होती है। ] पक्ष में जब विभक्ति उदात्त नहीं होती है तब 'समासस्य" ( ६.१.२२३ ) सूत्र से समास का अन्तोदात्त ही होता है।

अन्तोदात्त से परे—इसका क्या फल है ? अवाचा। सुवाचा। सुत्वचा। [ न वाक्—इस नञ् समास का तृतीया एकवचन—अवाचा। शोभना वाक्—इस प्रादिसमास का तृतीया का रूप है। ] यहाँ तत्पुरुष है। इनमें 'तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्युपमानाव्यय०" (पा० सू० ६.२.२ ) से पूर्व पद का प्रकृतिस्वर होता है। [ अतः इनमें अन्तोदात्त से परे विभक्ति न होने से उदात्तत्व नहीं होता है। ]

उत्तरपद का ग्रहण एकाच्त्वेन उत्तरपद को विशेषित करने के लिए है अर्थात् एकाच् जो उत्तरपद—ऐसा सिद्ध करने के लिए है। अन्यथा 'एकाच्' यह समास का विशेषण होने लगेगा। इसमें—शुनः ऊर्क्—श्वोर्जा इनमें ही यह सूत्र लागू हो सकेगा। [ क्योकि समास करने पर 'श्वोर्ज्' यह एकाच् है। किन्तु परमवाच् आदि में नहीं हो सकेगा। ]

**यस्तु विग्रहाभावेन नित्यसमासस्तत्र भवत्येव विकल्पः—अवाचा ब्राह्मणेन, सुवाचा ब्राह्मणेनेति। 'बहुव्रीहौ नञ्सुभ्याम्' ( ६.२.१७२ ) इत्युत्तरपदान्तोदात्तत्वं भवति ॥**

**२६१०. अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ १७० ॥ ( ३७१६ )**

**अञ्चेः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये। 'इन्द्रो दधीचो अस्थभिः' ( ऋ० १.८४.१३ )। 'चौ' ( ६.१.२२२ ) इति पूर्वपदान्तोदात्तत्वं प्राप्तम्।**

**'तृतीयादिः' इति वर्तमाने शसोऽपि परिग्रहार्थमसर्वनामस्थानग्रहणम्। इहापि यथा स्यात्—प्रतीचो बाहून्प्रतिभङ्ग्ध्येषामिति ॥**

**न्यासः**

नोत्तरपदस्य प्रकृतिस्वरो विधीयते। उत्तरपदं च धातुस्वरेणान्तोदात्तम्, तेन चिच्छब्द उदात्तो भवति। एवं सोमसुच्छब्दोऽपि।

**यस्त्वित्यादि।** 'नित्यशब्दः स्वर्य्यते' इति यदुक्तम्, तस्यानेन प्रयोजनं दर्शयति। **अवाचा, सुवाचेति।** अत्राकारेण पूर्वपदेन सुशब्देन च विग्रहो नोपपद्यते, तयोरिह प्रयोगाभावान्नित्यसमासावेतौ, न तु नित्याधिकारविधानात् ॥ १६९ ॥

**अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ इन्द्रो दधीच इति।** दध्यञ्चतीति 'ऋत्विक्' इत्यादिना क्विन्, अनुनासिकलोपः, षष्ठेयकवचनम्, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घः।

**तृतीयादिरित्यादि।** यदि सर्वनामस्थानग्रहणं क्रियते तदा शसो न स्यात्; तस्यातृतीयादित्वात्। अथापि तृतीयादिग्रहणं निवर्त्त्येत, एवमपि सर्वनामस्थानेऽपि स्यात्। **प्रतीच इति।** पूर्वेण तुल्यम् ॥ १७० ॥

**पदमञ्जरी**

**अग्निचिता, सोमसुतेति।** 'अग्नौ चेः', 'सोमे सुञः' इति क्विप्।

'नित्यशब्दः स्वर्यते' इति यदुक्तम्, तस्य प्रयोजनमाह— **यस्त्विति** ॥ १६९ ॥

**अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ दधीच इति।** दध्यञ्चतीति 'ऋत्विक्' इत्यादिना क्विन्, अनुनासिकलोपः, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घत्वम्।

**शसोऽपि परिग्रहार्थमिति।** शसादिग्रहणं तु न कृतम्, नपुंसके शसि मा भूत्, सुटि च यथा स्यादिति ॥ १७० ॥

**भावबोधिनी**

अनित्य समास में—इसका क्या फल है ? अग्निचिता। सोमसुता। [ अग्निं चिनोति, सोमं सुनोति—आदि में ] "उपपदमतिङ्" ( पा० सू० २.२.१९ ) यह समास नित्य इस अधिकार में विहित है, उसमें 'गतिकारकोपपदात् कृत्" ( ६.२.१३९ ) इस सूत्र से उत्तरपद के प्रकृतिस्वर से 'चित्' [ सुत् ] शब्द उदात्त है।

किन्तु जो नित्य समास विग्रहाभाव के कारण होता है, उसमें तो विकल्प होता ही है—अवाचा ब्राह्मणेन, सुवाचा ब्राह्मणेन। इनमें 'बहुव्रीहौ नञ् सुभ्याम्" ( पा० सू० ६.२.१७२ ) से उत्तरपद का अन्तोदात्तत्व होता है। [ इनमें अ और सु इन पूर्वपदों के साथ विग्रह नहीं होता है अपितु 'अविद्यमाना' और 'शोभना' के साथ अस्व-पद विग्रह है। इस कारण—अविग्रहः अस्वपदविग्रहो वा नित्यसमासः—लक्षण के अनुसार नित्य समासत्व समझना चाहिए। ] ॥ १६९ ॥

अञ्च् धातु के बाद आने वाली असर्वनामस्थान विभक्ति वेदविषय में उदात्त होती है। उदा०—इन्द्रो दधीचो अस्थभिः। [ दधि अञ्चति इस विग्रह में क्विन्, सर्वापहारी लोप, अनुनासिक ञ् का लोप, दधि + अच् + ङस् = अस्, 'अचः" सूत्र से अकार लोप "चौ" सूत्र से दीर्घ दधीच् + अस्; विसर्गादि करने पर दधीचः ] "चौ" ( ६.१.१२२ ) इस सूत्र से पूर्व पद का अन्तोदात्त प्राप्त है। [ यह सूत्र विभक्ति का उदात्तत्व करता है। ]

२६११. ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ॥ १७१ ॥ ( ३७१७ )

ऊठ्, इदम्, पदादि, अप्, पुम्, रै, दिव्—इत्येतेभ्योऽसर्वनामस्थानविभक्तिरुदात्ता भवति। ऊठ्—प्रष्ठौहः, प्रष्ठौहा।

❀ ऊठ्युपधाग्रहणं कर्तव्यम् ❀ (?)। इह मा भूत्—अक्षद्युवा। अक्षद्युवे।

इदम्—आभ्याम्, एभिः। 'अन्तोदात्तात्' इत्यधिकारादन्वादेशे न भवति—अथो आभ्यां निपुणमधीतमिति।

**न्यासः**

ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः॥ प्रष्ठौह इति। 'वहश्च' इति ण्विः, 'वाह ऊठ्' इत्यूठ 'एत्येधत्यूठ्सु' इति वृद्धिः।

ऊठ्युपधाग्रहणमिति। 'उपधाभूत ऊड् गृह्यते येन तदुपधाग्रहणम्' इति व्याख्यानं कर्त्तव्यमित्यर्थः। किमर्थम्? इत्याह—इह मा भूदिति। तत्रेदं व्याख्यानम्—'अन्तोदात्तात्' इत्यादिसूत्रादिहान्यतरस्यांग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते, तेनोपधाभूतादेव भवितव्यमिति तस्यैव ग्रहणं युक्तमिति। अक्षद्युवेति। अक्षैर्दीव्यतीति क्विप्, 'च्छ्वोः शूडनुनासिके च' इति वकारस्योठ्, यणादेशः।

आभ्यामिति। इदमस्त्यदाद्यत्वम्, 'हलि लोपः' इतीद्रूपस्य लोपः। अथो आभ्यामिति। 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' इत्यशादेशः।

**पदमञ्जरी**

ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः॥ प्रष्ठौह इति। 'छन्दसि सहः', 'वहश्च' इति ण्विः। वाह ऊठि 'एत्येधत्यूठ्सु' इति वृद्धिः।

ऊठ्युपधाग्रहणमिति। उपधाभूत ऊठ् गृह्यते, न त्वन्त्य इत्यर्थः। पञ्चमीनिर्देशादन्त्यस्यैव ग्रहणे प्राप्ते वचनम्।

अन्तोदात्तादित्यधिकारादन्वादेशे न भवतीति। अत एव हेतोः 'सावेकाचः' इत्यनेनापि न भवति। यदि स्यात्, इहान्तोदात्ताधिकारो व्यर्थः स्यात्। ननु च यदीमे नानुशसो अभ्यवर्षादिति शसोऽन्वादेशेन मा भूदिति प्रयोजनम्, 'एकाचः' इत्यधिकारादेव सिद्धम्, तथा च तदस्मै तश्यं तदस्य प्रियं प्रेम्णा तदेषाम् इत्यादि सर्वानुदात्तं पदमधीयते।

**भावबोधिनी**

तृतीयादिः—इसकी अनुवृत्ति रहने पर 'शस्' ( द्वितीयाबहुवचन ) का भी परिग्रहण कराने के लिए सूत्र में असर्वनाम-स्थान का ग्रहण हैं। [ क्योंकि सु से लेकर औट् तक ही सर्वनाम-स्थान-संज्ञक विभक्तियाँ हैं। ] यहाँ भी हो सके—प्रतीचो बाहून् प्रतिभङ्ग्धि एषाम्'। [ इसमें 'प्रतीचः' का शस् भी उदात्त होता है। ] ॥ १७० ॥

ऊठ्, इदम्, पद् आदि, अप्, पुम्, रै, दिव्—इनसे परे असर्वनामस्थान विभक्ति उदात्त होती है। उदा०—ऊठ्—प्रष्ठौहः। प्रष्ठौहा। [ प्रष्ठं वहति—इस अर्थ में 'वहश्च' सूत्र से ण्वि प्रत्यय, सर्वापहारी लोप, "वाह ऊठ्" से व् का ऊठ्, आ का पूर्वरूप—प्रष्ठ+ऊह्, 'एत्येधत्यूठ्सु" सूत्र से वृद्धि प्रष्ठौह्+शस्=अस्। ऊठ् से परे विभक्ति उदात्त होती है। ]

❀ ऊठ् ग्रहण में उपधा का ग्रहण करना चाहिए। ❀ जिससे यहाँ न हो सके—अक्षद्युवा। अक्षद्युवे। [ इनमें अक्षदूयू+टा=आ, यहाँ अन्त में है उपधा में ऊठ् नहीं मिलता है। अतः सूत्र लागू नहीं होता है। ]

**पदादयः**—'पद्दन्नोमास्' ( ६.१.६३ ) इत्येवमादयो निश्पर्यन्ता इह गृह्यन्ते। 'निपदश्चतुरो जहि' ( खि० २.१६.१ )। 'या दतो धावति' ( तै० सं० २.५.१.७ )। असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव भवति। 'ग्रीवायां बद्धो अपि कक्ष आसनि' ( ऋ० ४.४०.४ )। 'मत्स्यं न दीन उदनि क्षियन्तम्' ( ऋ० १०.६८.८ )।

**अप्**—अपः पश्य। अद्भिः। अद्भ्यः।

**पुम्**—पुंसः, पुम्भ्याम्, पुम्भ्यः। पुंसा, पुंसे।

**रै**—रायः पश्य। राभ्याम्। राभिः।

**दिव्**—दिवः पश्य। दिवा। दिवे॥

### न्यासः

**निश्पर्यन्ता इह गृह्यन्त इति।** एतदपि पूर्ववद् व्यवस्थितविभाषया लभ्यते, तस्यां हि सत्यां निश्पर्यन्तेभ्य एव भवितव्यम्। तेषामेव ग्रहणं युक्तमिति त एव गृह्यन्ते। **निपद इति।** शसि परतः पादस्य पदादेशः। **दत इति।** अत्रापि दन्तशब्दस्थ ददादेशः। **आसन्निति।** अत्रासन्शब्दस्य सप्तम्येकवचनेऽसन्नित्ययमादेशः। **उदन्निति।** अत्राप्युदकशब्दस्योदन्नादेशः। **अद्भिरिति।** पकारस्य तकारः, तस्य जश्त्वम्—दकारः। **राभ्यामिति।** 'रायो हलि' इत्यात्वम्॥ १७१॥

### पदमञ्जरी

**पदादयो निश्पर्यन्ता गृह्यन्त इति।** 'पदन्नोमास्' इति सूत्रे निर्दिष्टाः, तत्र एकाच इत्यनुवृत्तेर्निशः परे न गृह्यन्ते। यका त्वल्लोपे कृते एकाचो भवन्ति, तदोदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं सिद्धम्। येऽप्याद्युदात्तानां स्थाने विधीयन्ते आदेशास्ते तत्रैवान्तोदात्ता निपात्यन्ते। वृत्तावप्येतदेवोक्तं द्रष्टव्यम्। **आसनीति।** आस्यशब्दस्यासनादेशः। यत्रैकाचस्तेषां शसर्थं ग्रहणम्॥ १७१॥

### भावबोधिनी

इदम्—आभ्याम्। एभिः। [ इदम् का त्यदाद्यत्व, पररूपत्व के बाद—इद + भ्याम्, "हलि लोपः" सूत्र से 'इद्' का लोप, 'सुपि च' से दीर्घ—आभ्याम्। विभक्ति उदात्त होती है। ] अन्तोदात्तात्—इसका अधिकार= अनुवृत्ति है, इसलिए अन्वादेश के विषय में विभक्ति उदात्त नहीं होती है—अथो आभ्यां निपुणमधीतम्। [ इसमें इदम् का अश् आदेश "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" ( २.४.३२ ) सूत्र से होता है। यह अश् आदेश अनुदात्त है। अतः अन्तोदात्त से परे विभक्ति नहीं है। ]

पद् आदि—पद् दत् नस् मास्—आदि से लेकर 'निश्' पर्यन्त का यहाँ ग्रहण होता है। [ अतः अन्य के विषय में यह सूत्र नहीं लगता है। भाष्य में ऐसा कोई संकेत नहीं है। किन्तु व्यवस्थित विभाषा के बल से ऐसा मान लिया जाता है। ] उदा०—निपदश्चतुरो जहि। या दतो धावति। [ इनमें निपाद + शस्, पाद का पद्, दन्त + शस्, दन्त का दत्, विभक्ति उदात्त होती है। ] असन् आदि से परे विभक्ति अनुदात्त ही होती है। उदा०—ग्रीवायां बद्धो अपि कक्ष आसनि। [ आस्य + ङि=इ, आसन् आदेश ] मत्स्यं नदी न उदनि क्षियन्तम्। [ उदक + ङि, उदन् आदेश। ङि=इ अनुदात्त ही है। ]

अप्—अपः पश्य। अद्भिः। अद्भ्यः [ अपो भि" सूत्र से अप् के प् का त्, जश्त्व से द् होने पर तृतीया, चतुर्थी बहुवचन के रूप हैं। आप् (=जल) का प्रयोग बहुवचन स्त्रीलिङ्ग में ही होता है। ]

पुम्—पुंस [ द्वितीया बहुवचन ]। पुम्भ्याम्। पुम्भिः। पुंसा। पुंसे। [ इसमें बहुवचन का सम्बन्ध नहीं है। ]

रै—रायः पश्य [ द्वितीया बहुवचन ]। राभ्याम्। राभिः। [ "रायो हलि" से ऐ का आत्व ]

दिव्—दिवः पश्य [ द्वितीया बहुवचन ] दिवा। दिवे [ सभी में विभक्ति उदात्त होती है। ]॥ १७१॥

## २६१२. अष्टनो दीर्घात् ॥ १७२ ॥ ( ३७१८ )

**अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति । अष्टाभिः । अष्टाभ्यः । अष्टासु । घृतादिपाठादष्टन्-शब्दोऽन्तोदात्तः, तत्र 'झल्युपोत्तमम्' ( ६.१.१८० ) इत्येतस्यापवादो विभक्तेरेवोदात्तत्वं विधीयते ।**

**दीर्घादिति किम् ? अष्टसु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीत ( म० भा० ) ।**

**इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्संज्ञां ज्ञापयति; अन्यथा ह्यात्वपक्षे**

**न्यासः**

**अष्टनो दीर्घात् ॥ अष्टाभिरित्यादि । 'अष्टन आ विभक्तौ' इत्यात्वम् ।**

**अष्टस्विति ।** ननु चात्रापि भवितव्यमेवात्वेन, न हि तद्विधौ विकल्पप्रतिपादकं वचनमस्ति, नापि प्रकृतम् ? इत्यत आह—**इदमेवेत्यादि ।** यदि हि नित्यमात्वं स्यादिह दीर्घग्रहणमनर्थकं स्यात्, व्यावर्त्याभावात् । **कृतात्वस्य च षट्संज्ञामिति ।** इदमेव हि दीर्घग्रहणमष्टनो ज्ञापयतीति सम्बन्धनीयम् । कथं पुनर्ज्ञापयति ? इत्याह—**अन्यथा हीत्यादि ।** दीर्घग्रहणं ह्येवमर्थं क्रियते—यत्रात्वं नास्ति तत्रायं स्वरो मा भूदिति । यदि कृतात्वस्याष्टनः षट्संज्ञा न स्यात्, तदात्वपक्षे षट्संज्ञायामसत्यां सावकाशोऽष्टनः स्वरः, तत्रापि षट्स्वरः प्राप्नोतीति कृत्वा । ततश्च यदि दीर्घग्रहणं न क्रियेत, तदानवकाशत्वाद् यदात्वपक्षेऽष्टनः स्वरो न भवति, तदेतरस्मिन्नपि पक्षे

**पदमञ्जरी**

**अष्टनो दीर्घात् ॥ घृतादिपाठादन्तोदात्त इति ।** तेनोत्तरार्थमनुवर्तमानस्य 'अन्तोदात्तात्' इत्यस्य नेहापि विरोध इति भावः । **अष्टस्विति ।**

ननु चात्र दीर्घग्रहणमनर्थकम्, यावता 'अष्टन आ विभक्तौ' इत्यनेन भवितव्यम्, तद्विधौ विकल्पस्याभावात् ? इत्यत आह—**इदमेवेति ।** नित्ये ह्यात्वे व्यावर्त्याभावादिह दीर्घग्रहणमनर्थकं स्यात् । **कृतात्वस्य च षट्संज्ञामिति ।** इदमेव दीर्घग्रहणमष्टनो ज्ञापयतीति सम्बन्धः । कथमेतत् ? इत्यत आह—**अन्यथा हीति ।** आत्वाभावपक्षेऽयं स्वरो मा भूदित्येतदर्थं हि दीर्घग्रहणम् । यदि च कृतात्वस्याष्टनः षट्संज्ञा न स्यात्, तदाऽऽत्वपक्षे सावकाशमिममष्टनः स्वरमनात्वपक्षे षट्संज्ञायां सत्याम् 'झल्युपोत्तमम्' इति षट्स्वरः परत्वाद्बाधिष्यते—इत्यनर्थकं दीर्घग्रहणं स्यात् । यदा तु कृतात्वस्याष्टनः षट्संज्ञा भवति, तदा नाप्राप्ते षट्स्वरे आरभ्यमाणोऽष्टनः स्वरोऽनात्वपक्षेऽपि स्यादिति तन्निवृत्तये क्रियमाणमर्थवद्भवति । कथं पुनरेकेन यत्नेनोभयं शक्यं ज्ञापयितुम् ?

**भावबोधिनी**

दीर्घान्त अष्टन् शब्द से परे असर्वनामस्थान विभक्ति उदात्त होती है । उदा०—अष्टाभिः । अष्टाभ्यः । अष्टासु । [ इनमें 'अष्टन आ विभक्तौ' ( ७.२.८४ ) सूत्र से आत्व आदेश करके दीर्घ करने पर अष्टा + भिः आदि में विभक्ति उदात्त होती है । ] घृतादिगण में पाठ के कारण अष्टन् शब्द अन्तोदात्त है, उसमें 'झल्युपोत्तमम्'' ( पा० सू० ६।१।१८० ) इसका अपवाद विभक्ति का ही उदात्तत्व किया जाता है । [ ''झल्युपोत्तमम्'' झलादि विभक्त्यन्त पद का उपोत्तम उदात्त करता है । प्रस्तुत सूत्र विभक्ति को उदात्त करता है । ]

दीर्घ ( अष्टन् ) से—इसका क्या फल है ? ''अष्टसु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीत ।'' [ यहाँ दीर्घ नहीं है । परन्तु 'अष्टन आ विभक्तौ' से आत्व होता ही है तब इस दीर्घ का व्यावर्त्य कुछ नहीं होगा ? ] इस सूत्र में किया गया दीर्घ का ग्रहण ही अष्टन् शब्द के आत्व का विकल्प ज्ञापित करता है, और किये गये आत्व आदेश वाले की षट् संज्ञा भी ज्ञापित करता है । यदि ऐसा ( ज्ञापन ) नहीं माना जायगा तब तो आत्व पक्ष में सावकाश [ चरितार्थ होने वाले ] अष्टन् के स्वर को अनात्वपक्ष पक्ष में परवर्ती होने के कारण षट् स्वर [ षट्त्रिचतुर्भ्यो हलादिः, ६।१।१७९ और

**सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन ! ॥**

**२६१३. शतुरनुमो नद्यजादी ॥ १७३ ॥ ( ३७१९ )**

**'अन्तोदात्तात्' इति वर्तते । अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिर्विभक्तिरसर्वनामस्थानमुदात्ता भवति । तुदती, नुदती । लुनती, पुनती । तुदता, नुदता । लुनता, पुनता ।**

**अनुम इति किम् ? तुदन्ती, नुदन्ती । अत्राप्यदुपदेशादिति लसार्वधातुकानुदात्तत्वे ( ६.१.१८६ ) एकादेशः, तस्य 'एकादेश उदात्तेनोदात्तः' ( ८.२.५ ) इत्युदात्तत्वम्, तस्य पूर्वत्रासिद्धत्वं ( ८.२.१ ) नेष्यत इति शत्रन्तमन्तोदात्तं भवति ।**

**न्यासः**

स्यात् । अतस्तन्निवृत्तये दीर्घग्रहणं क्रियमाणमर्थवद् भवति । कृतात्वस्याष्टनः षट्संज्ञायाम्—अष्टानामित्यत्र **'षट्चतुर्भ्यश्च'** इति नुट् सिद्धो भवति ॥ १७२ ॥

**शतुरनुमो नद्यजादी ॥ तुदती, नुदतीति** । तुदादित्वाच्छः । **लुनती, पुनतीति** । **'श्नाभ्यस्तयोरातः'** इत्याकारलोपः । प्रत्ययस्वरेण शत्रन्तमिहान्तोदात्तं वेदितव्यम् ।

**तस्येत्यादि** । कथं पुनरिष्यमाणमपि न भवति ? 'न मु ने' इत्यत्र नेति योगविभागात् ।

**पदमञ्जरी**

को दोषः ! अन्यथानुपपत्त्या ह्यनेकोऽप्यर्थो ज्ञाप्यते, तेनैतदुभयमन्तरेणानुपपद्यमानमुभयमपि ज्ञापयति ॥ १७२ ॥

**शतुरनुमो नद्यजादी ॥ तुदती, नुदतीति** । तुदादित्वाच्छः, 'आच्छीनद्योर्नुम्' विकल्पितः । तत्र नुमभावपक्षे उदाहरणम्, नुम्पक्षे प्रत्युदाहरणम् ।

**तुदन्तीति** । 'श्नाभ्यस्तयोरातः' इत्याकारलोपः अत्र प्रत्ययस्वरेण शत्रन्तमन्तोदात्तम् । तत्रेत्यादिना प्रत्युदाहरणस्य व्यङ्गविकलतां परिहरति—**तत्र[1] पूर्वत्रासिद्धमिति नेष्यते इति** । अत्र च ज्ञापकमयमेव 'अनुम' इति प्रतिषेधः, न हि किञ्चिदेकादेशस्वरमन्तरेण शत्रन्तं सनुम्कमन्तोदात्तमस्ति ।

**भावबोधिनी**

'ज्ञल्युपोत्तमम्'' ६।१।१८० से विहित ] के द्वारा बाधित कर लिया जायगा, इसलिए दीर्घग्रहण का कोई लाभ नहीं होगा । [ अतः ज्ञापक मानना और सामान्य षट्संज्ञक सम्बन्धी स्वर का अपवाद मानना आवश्यक है । ] ॥ १७२ ॥

"अन्तोदात्तात्" इसकी अनुवृत्ति है । अनुम् [ जिसमें नुम् नहीं होता है ऐसा ] जो शतृ प्रत्यय, तदन्त अन्तोदात्त से परे नदी [ ई, ऊ ] और अजादि असर्वनामस्थान विभक्ति उदात्त होती है । [ "यू स्त्र्याख्यौ" ( १.४.३ ) से विहित पारिभाषिक 'नदी' शब्द है । वृत्ति में 'च' छूट गया है, क्योंकि नदी और अजादि विभक्ति ये दो लिये जाते हैं । ] उदा०—तुदती, नुदती [ तुद् + श = अ + शतृ = अत् + ङीप = ई है । यहाँ "आच्छीनद्योर्नुम्" से जब नुम् नहीं होता है तब नदी = ई उदात्त होती है । जब कि ङीप् = ई पित् होने से अनुदात्त है । ] लुनती, पुनती । [ लु + श्ना = ना + शतृ = अत् + ङीप् = ई, "श्नाभ्यस्तयोरातः" ( ६.४.११२ ) सूत्र से आ का लोप, ई अनुदात्त को उदात्त करता है । ] तुदता, नुदता । लुनता, पुनता । [ सभी में तृतीया एकवचन उदात्त हो जाता है । ]

अनुम्=नुम्रहित शतृ से परे—इसका क्या फल है ? तुदन्ती, नुदन्ती । [ इनमें वैकल्पिक नुम् पक्ष में यह सूत्र नहीं लगता है । ङीप् का स्वर ही रहता है । ] इन में भी अदुपदेश वाली धातु से परे ल का सार्वधातुक [ तुद् + लट्= शतृ=अत् ] अनुदात्त होने पर [ तुद + अत् में उदात्त + अनुदात्त का ] एकादेश होता है । यह [ पररूप एकादेश ] "एकादेश उदात्तेनोदात्तः" ( ८.२.५ ) सूत्र से उदात्त होता है, इसका पूर्वत्रासिद्धत्व इष्ट नहीं है, इसलिए शत्रन्त अन्तोदात्त होता है ।

---

१. तस्य—इति काशिकायाम् ।

**नद्यजादी इति किम् ? तुदद्भ्याम्, नुदद्भ्याम् । तुदद्भिः, नुदद्भिः ।**

**अन्तोदात्तादित्येव—ददती । दधतः । 'अभ्यस्तानामादिः' ( ६.१.१८९ ) इत्याद्युदात्तावेतौ ।**

**❀ बृहन्महतोरुपसंख्यानम् ❀ ( म० भा० ) । बृहती, महती । बृहता, महता ॥**

## २६१४. उदात्तयणो हल्पूर्वात् ॥ १७४ ॥ ( ३७२० )

**उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी अजादिर्याऽसर्वनामस्थानविभक्तिरुदात्ता [सा] भवति । कर्त्री, हर्त्री । प्रलवित्री, प्रसवित्री । कर्त्रा, हर्त्रा, प्रलवित्रा, प्रसवित्रा । तृजन्ता एतेऽन्तोदात्ताः ।**

**न्यासः**

**बृहन्महतोरित्यादि ।** उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—**'ङ्याश्छन्दसि'** इत्यतः सिंहावलोकितन्यायेन बहुलग्रहणमुपतिष्ठते, तेन बृहन्महद्भ्यामपि भवतीति ॥ १७३ ॥

**उदात्तयणो हल्पूर्वात् ॥** 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति प्राप्ते वचनम् । **तृन्नन्तोऽयमाद्यु-**

**पदमञ्जरी**

**बृहन्महतोरुपसंख्यानमिति ।** शतृवद्भावादेव सिद्धे नियमार्थमिदम्—पृषदादीनां मा भूदिति । **'गौरादिषु** बृहन्महन्तोः पाठोऽनर्थकः' इति स्त्रीप्रकरण एवोक्तम् ॥ १७३ ॥

**उदात्तयणो हल्पूर्वात् ॥** 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति प्राप्ते वचनम् । **बहुतितवा ब्राह्मण्येति ।** स्त्रीलिङ्गोपादानं नाभावनिवृत्त्यर्थम् । 'तनोतेर्डउः सन्वच्च' ( द० उ० १.१६० ) इति, 'चालनी

**भावबोधिनी**

नदी और अजादि विभक्ति उदात्त होती है—इसका क्या फल है ? तुदद्भ्याम्, नुदद्भ्याम् । [ इनमें उदात्त नहीं होता है । ]

अन्तोदात्त से ही परे—इसका क्या फल है ? ददती । दधतः । "अभ्यस्तानामादिः" सूत्र से ये दोनों शब्द आद्युदात्त हैं ।

❀ बृहत् और मरुत् से परे भी नदी और अजादि असर्वनामस्थान विभक्ति उदात्त कहनी चाहिए । ❀ बृहती, महती । बृहता, महता । [ ई, टा=आ उदात्त है । ]

**विमर्श**—तुदन्ती नुदन्ती—इन में तुद और नुद धातुएँ अदुपदेशवाली हैं । इतः इनसे किया जाने वाला लट् = शतृ प्रत्यय "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" ( ६।१।१८६ ) से अनुदात्त हो जाता है । इस प्रकार तुद + शतृ=अत् में उदात्त + अनुदात्त का पररूप एकादेश होता है । यह एकादेश 'एकादेश उदात्तेनोदात्तः" ( पा० सू० ८।२।५ ) इस त्रिपादीस्थ सूत्र से उदात्त किया जाता है । अतः प्रस्तुत सपादसप्ताध्यायीस्थ सूत्र की दृष्टि में असिद्ध हो जायगा—'पूर्वत्रासिद्धम्' । तब उदात्त से परे नदी = ई नहीं होगी, उसका उदात्तत्व कैसे होगा ? इस प्रश्न का उत्तर यह है कि वह एकादेश वाला स्वर असिद्ध नहीं होता है । इसमें ज्ञापक हैं—प्रस्तुत सूत्र में 'अनुमः' का ग्रहण और 'न मुने' सूत्र में 'न' इसका योगविभाग । अतः अनुम्-ग्रहण चरितार्थ है । ॥ १७३ ॥

उदात्त के स्थान में जो यण् हल् पूर्व वाला है, उससे परे नदी और अजादि असर्वनामस्थान विभक्ति उदात्त होती है । उदा०—कर्त्री, हर्त्री । प्रलवित्री, प्रसवित्री । [ कर्तृ + ङीप्=ई, हर्तृ + ई, प्रलवितृ + ई, प्रसवितृ + ई, इनमें ऋ उदात्त है उसका यण् र् किया जाता है, इसके पूर्व में हल् है अतः ङीप्=ई उदात्त हो जाती है । इनमें 'उदात्त-स्वरितयोर्यणः स्वरितोऽनुदात्तस्य" ( ८.२.४) से प्राप्त स्वरित नहीं होता है । ] कर्त्रा, हर्त्रा, प्रलवित्रा, प्रसवित्रा । [ कर्तृ+टा=आ में यण् करने पर विभक्ति उदात्त हो जाती है । ] तृच् प्रत्ययान्त ये सभी अन्तोदात्त हैं ।

**उदात्तग्रहणं किम्? कर्त्री, हर्त्री। कर्त्रा, हर्त्रा। तृन्नन्तोऽयमाद्युदात्तः। हल्पूर्वादिति किम्? बहुतितवा ब्राह्मण्या[1]।**

*** नकारग्रहणं कर्त्तव्यम् * ( म० भा० )। वाक्पत्नीयं कन्या॥**

## २६१५. नोङ्धात्वोः॥ १७५॥ ( ३७२१ )

**ऊङो धातोश्च य उदात्तयण् हल्पूर्वः, तस्मात्परा [2]तृतीयादिविभक्तिर्नोदात्ता भवति। ब्रह्मबन्ध्वा,**

### न्यासः

**दात्त इति।** निस्स्वरेण। **बहुतितवेति।** बहवस्तितवो यस्या इति बहुव्रीहिः, तया बहुतितवेति। तितउशब्दोऽयम् 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यन्तोदात्तः।

**नकारग्रहणं कर्त्तव्यमिति।** नकारो गृह्यते येन तन्नकारग्रहणं व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्—इहापि पूर्ववद् बहुलग्रहणमनुवर्तते। तेनोदात्तस्य स्थाने यो नकारस्ततोऽपि न भविष्यतीति। अथवा—नकारस्यात्र प्रश्लेषः—हल्पूर्वात् 'नोङ्धात्वोः' इति, तथा चायमर्थो भवति—उदात्तयण उदात्तनकाराच्चेति। तेनोदात्तनकारादपि भविष्यतीति। **वाक्पत्नीति।** पतिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। तत्र 'विभाषा सपूर्वस्य' इति नकारान्तादेशः, 'ऋन्नेभ्यो ङीप्' इति ङीप्॥ १७४॥

**नोङ्धात्वोः॥ ब्रह्मबन्ध्वेति।** ब्रह्मा बन्धुरस्या इति विगृह्य बहुव्रीहिः। तस्माद् 'ऊङुतः' इत्यूङ्।

### पदमञ्जरी

तितउः पुमान्' ( इत्यमरः २.९.२६ ), ततो बहुव्रीहिः, 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्युत्तरपदान्तोदात्तः, तत्र 'उदात्तस्वरितयोः' इति विभक्तेः स्वरितत्वम्।

**नकारग्रहणं च[3] कर्त्तव्यमिति।** उदात्तस्थाने यो नकारस्ततोऽपि परस्या नद्या उदात्तत्वं वक्तव्यमित्यर्थः। तदर्थं केचिद् 'उदात्तहलो हल्पूर्वात्' इति पठनीयमिति मन्यन्ते। **वाक्पत्नीति।** तत्पुरुषः। 'पत्यावैश्वर्य्ये' इति पूर्वपदप्रकृतिस्वरस्य 'न भूवाक्चिद्दिधिषु' इति प्रतिषेधात्समासान्तोदात्तत्वे 'विभाषा सपूर्वस्य' इति नकारः॥ १७४॥

**नोङ्धात्वोः॥ ऊङो धातोश्च य उदात्तयण् हल्पूर्व इति।** अनेन पूर्वस्याः प्राप्तेरयं प्रतिषेध इति

### भावबोधिनी

उदात्त—इसका ग्रहण किस लिए है? कर्त्री, हर्त्री। कर्त्रा, हर्त्रा। ये तृन्-प्रत्ययान्त आद्युदात्त हैं। [ अतः ऋ अनुदात्त है उसका यण् उदात्त का यण् नहीं है। इनमें नदी और विभक्ति उदात्त नहीं होती है। ]

हल्पूर्व—इसका क्या फल है? बहुतितवा ब्राह्मण्या। [ बहवः तितवः यस्याः सा—इस बहुव्रीहि बहुतितउ शब्द से टा = आ, और उ का यण् व् करने पर बहुतितव् + आ होता है। यहाँ यण् है किन्तु उसके पूर्व में हल् नहीं अपि तु अच् है। अतः विभक्ति उदात्त नहीं होती है। ]

* नकार का ग्रहण करना चाहिए। * वाक्पत्नीयं कन्या। [ तत्पुरुष समास के बाद "विभाषा सपूर्वस्य" ( ४.१.३४ ) से नकारान्त आदेश और "ऋन्नेभ्यो ङीप्" सूत्र से ङीप् = ई होता है। पति शब्द अन्तोदात्त है, अतः न् भी उदात्त है, इससे परे ङीप् = ई उदात्त हो जाती है। ]॥ १७४॥

ऊङ् का और धातु का जो उदात्त का यण् हल्पूर्ववाला, उससे परे तृतीयादि विभक्तियाँ उदात्त नहीं होती हैं। उदा०—ब्रह्मबन्ध्वा, ब्रह्मबन्ध्वे। वीरबन्ध्वा, वीरबन्ध्वे। [ इनमें ब्रह्मा बन्धूरस्याः सा—इस बहुव्रीहि के बाद "ऊङुतः"

---

१. 'वहति नावा ब्राह्मण्या' इति मुद्रितः पाठो व्याख्याद्वयपर्यालोचनेनासाधुरेव।

२. 'अजाद्यसर्वनामस्थानविभक्तिः' इति मुद्रितः पाठः।    ३. 'च' इति काशिकायां नास्ति।

ब्रह्मबन्ध्वे । वीरबन्ध्वा, वीरबन्ध्वे । ऊङ् प्रत्ययस्वरेणोदात्तः । तेन सह य एकादेशः सोऽप्युदात्त इति उदात्त-यण्वकारः, तस्मादुदात्तत्वे प्रतिषिद्धे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४) इति विभक्तिः स्वर्यते ।

धातुयणः खल्वपि—सकृल्ल्वा । सकृल्ल्वे । खलप्वे । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य 'ओः सुपि' ( ६.४.८३ ) इति यणादेशः ॥

## २६१६. ह्रस्वनुड्भ्यां मतुप् ॥ १७६ ॥ ( ३७२२ )

'अन्तोदात्तत्' इत्येव । ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुब् उदात्तो भवति । अग्निमान् । वायुमान् । कर्तृमान् । हर्तृमान् । नुटः खल्वपि—अक्षण्वता । शीर्षण्वता ।

### न्यासः

तेन सह य एकादेशः सोऽप्युदात्त इति । 'एकादेश उदात्तेनोदात्तः' इति वचनात् । स्वर्यत इति । स्वरितः क्रियत इत्यर्थः । कृदुत्तरपदेत्यादि । ऊकारोऽत्र धातुस्वरेणान्तोदात्तः । सः 'गतिकारकोपपदात्' इत्युदात्तस्तिष्ठति प्रकृतिस्वरेण ॥ १७५ ॥

ह्रस्वनुड्भ्यां मतुप् ॥ पित्वान् मतुपोऽनुदात्तत्वे प्राप्तेऽयं विधिरारभ्यते । अक्षण्वतेति । अक्षमस्यास्तीति मतुप्, 'छन्दस्यपि दृश्यते' इत्यनङ्, 'अनो नुट्' इति नुडागमः, पूर्वस्य नकारस्य 'नलोपः प्रातिपदिकान्तस्य' इति लोपः । शीर्षण्वतेति । शीर्षन्निति शीर्षन्शब्दः 'शीर्षं च्छन्दसि' इति निपातितः ।

### पदमञ्जरी

दर्शयति । तस्मात्परा तृतीयादिविभक्तिरिति । यद्यपि पूर्वसूत्रे 'नद्यजादी' इत्यनुवर्त्तते न 'तृतीयादिः' इति, तथाप्यत्र बाहुल्येन तृतीयादेरेव सम्भवादिदमुक्तम् । तथा हि—ऊङ्धातुयणः परा नदी तावन्न सम्भवति, नाप्यूङ्यणः शस् सम्भवति, धातुयणस्तु सम्भवति ॥ १७५ ॥

ह्रस्वनुड्भ्यां मतुप् ॥ अक्षण्वतेति । 'छन्दस्यपि दृश्यते' इत्यनङ्, 'अनो नुट्' इति नुडागमः, पूर्वस्य नकारस्य लोपः । शीर्षण्वतेति । 'शीर्षञ्छन्दसि' इति निपातितः ।

वसुशब्द आद्युदात्त इति । वसेरुप्रत्ययः, 'धान्ये नित्' ( द० उ० १.९४ ) इत्यधिकारे । अथेह कस्मान्न भवति—मरुतोऽस्य सन्ति मरुत्वानिति ? मरुच्छब्दो हि 'मृग्रोरुतिः' ( द० उ० ६.१ ) इति उतिप्रत्ययान्तत्वात्प्रत्ययस्वरेणान्तोदात्तः । न च तकारेण व्यवधानम्, 'स्वरविधौ व्यञ्जनस्याविद्यमानत्वात्'

### भावबोधिनी

सूत्र से ऊङ् करने पर ब्रह्मबन्धू+टा=आ, यण्, प्राप्त उदात्त का निषेध होने से विभक्तियाँ अनुदात्त ही रहती हैं । ] ऊङ् यह प्रत्ययस्वर से अन्तोदात्त है । इसके साथ जो एकादेश होता है वह भी उदात्त है इस प्रकार उदात्त के स्थान पर यण् वकार है उससे परे उदात्तत्व का प्रतिषेध होने पर 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य'' ( पा० सू० ८।२।४ ) सूत्र से विभक्ति स्वरित होती है ।

धातु के यण् से परे भी निषेध का उदा०—सकृल्ल्वा । सकृल्ल्वे । खलप्वा । खलप्वे । [ सकृत् लुनाति और खलं पुनाति—इनमें क्विप्, सर्वापहारी लोप होता है । ] क्विबन्त कृदुत्तरपद के प्रकृतिस्वर से अन्तोदात्त ऊ के स्थान पर 'ओः सुपि'' ( पा० सू० ६।४।८३ ) से यण् आदेश होता है ॥ १७५ ॥

'अन्तोदात्तात्' इसकी अनुवृत्ति है । ह्रस्वान्त अन्तोदात्त और नुट् से परे मतुप् उदात्त होता है । उदा०—अग्निमान् । वायुमान् । कर्तृमान् । हर्तृमान् । [ इन में ह्रस्व अन्त में है और अन्तोदात्त भी है । अतः परवर्ती मतुप् उदात्त हो जाता है । ] नुट् से परे मतुप् का उदा०—अक्षण्वता । शीर्षण्वता [ अक्षम् अस्ति अस्य—इस में मतुप्=मत्,

**'अन्तोदात्तात्' इत्येव—वसुमान् ( तै० सं० १.६.६.२ )। वसुशब्द आद्युदात्तः, तस्मान्मतुप् अनुदात्त एव भवति।**

**अत्र च 'स्वरविधौ व्यञ्जनमविद्यमानवत्' ( व्या० परि० ३७ ), इत्येषा परिभाषा नाश्रीयते; नुड्ग्रहणात्। तेन मरुत्वानित्यत्र न भवति।**

**❀ रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् ❀ ( म० भा० )। आरेवान्।**

**न्यासः**

वसुशब्द आद्युदात्त इति। स हि 'भृमृशीतॄचरित्सरितनिमिमस्जिभ्य उः' इति वर्त्तमाने 'धान्ये नित्' इत्यतो निद्ग्रहणे 'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इति व्युत्पाद्यते। तेन नित्स्वरेणाद्युदात्तो भवति।

अथेह कस्मान्न भवति—मरुतोऽस्य सन्ति मरुत्वानिति, मरुच्छब्दोऽपि 'मृग्रोरुतिः' इत्युतिप्रत्ययान्तत्वात् प्रत्ययस्वरेणान्तोदात्त इत्यस्त्यत्र प्राप्तिः, अतो नकारेण व्यवधानान्न भवतीति चेत्? न; तस्य लुप्तत्वात्। अथापि स्वरसिद्धौ नलोपस्यासिद्धत्वम्? एवमपि 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति नास्ति व्यवधानम्? इत्यत आह—**स्वरविधावित्यादि**। कथं पुनर्ज्ञायते—नाश्रीयत इति? नुड्ग्रहणात्। नुडागमो ह्ययं मतुप

**पदमञ्जरी**

( व्या० परि० ३७ )? इत्यत आह—**अत्रेति**। कथं पुनर्ज्ञायते नाश्रीयते इति? नुड्ग्रहणात्। तद्धचक्षण्वतेत्यादौ यथा स्यादित्येवमर्थम्, अन्यथा नकारस्य लुप्तस्यापि स्वरविधावसिद्धेर्नकारेण व्यवधानान्न स्यादिति। यदि चात्र व्यञ्जनमविद्यमानवत्स्यान्, ततोऽसिद्धलोपस्यापि तस्याविद्यमानत्वादेव स्वरः सिद्ध इति नुड्ग्रहणमनर्थकं स्यात्? नैतद्युक्तमुच्यते; यदि हि नकारलोपस्यासिद्धत्वेऽपि नकारोऽविद्यमानवत्स्यात्, स्वरविधौ नकारलोपस्यासिद्धवद्वचनमनर्थकं स्यात्। तस्यान्नलोपविषयेऽविद्यमानवद्भावो न प्रवर्त्तत इति कर्त्तव्यमेव नुड्ग्रहणम्। एवं तर्हीष्टिरेवेयम्—'अत्र स्वरेऽविद्यमानवत्परिभाषा न प्रवर्त्तते' इति।

**रेशब्दाच्चेति** पाठः। **आरेवानिति**। रयि अस्यास्तीति मतुपि 'रयेर्मतौ बहुलम्' ( वा० ६६५ ) इति सम्प्रसारणम्, पूर्वत्वम्, आद्गुणः, ततो ह्रस्वाभावाद्वचनम्।

**भावबोधिनी**

'छन्दस्यपि दृश्यते" से अनङ् अक्षन् + मत्, "अनो नुट्" सूत्र से नुट् = न् आगम अक्षन् न् मत्, 'पूर्ववर्ती न्' का 'नलोपः प्रातिपदिकान्तस्य" सूत्र से लोप, नुट् के न् का णत्व, म का व—अक्षण्वत् + टा = आ। इसमें मतुप् उदात्त होता है।] शिरः अस्ति अस्य—इसमें "शीर्षन् छन्दसि" सूत्र से शीर्षन् आदेश निपातित होने पर शीर्षन् + मत् वत्व, णत्व, शीर्षण्वत् + टा = आ ]

अन्तोदात्त से परे—इसका सम्बन्ध है अतः—वसुमान्, यहाँ 'वसु' शब्द आद्युदात्त है, उससे परे मतुप् अनुदात्त ही होता है। [ उदात्त नहीं होता है। ]

और यहाँ पर 'स्वरविधि में व्यञ्जन अविद्यमानवत् होता है' इस परिभाषा का आश्रयण नहीं किया जाता है क्योंकि नुट् का ग्रहण है। [ यदि व्यञ्जन अविद्यमानवत् माना जाता तो नुट् होने या न होने का कोई अन्तर नहीं आता। सूत्र में नुट् का ग्रहण व्यर्थ होता। अतः यहाँ व्यञ्जन अविद्यमानवत् नहीं होता है। ]

❀ और रे शब्द से परे मतुप् का उदात्तत्व कहना चाहिए। ❀ उदा०—आरेवान् एतु नो विशः। [ आङ् रयि + मत्, 'रयेर्मतौ बहुलम्' से य् का सम्प्रसारण, इ का पूर्वरूप र + इ + मत्, 'आद्गुणः' से गुण—रे + मत्, ह्रस्व से परे न होने के कारण यह वार्त्तिक बनाया गया है, इससे मतुप् = वान् उदात्त होता है—रेवान्। ]

**❀ त्रेश्च प्रतिषेधो वक्तव्यः ❀ ( म० भा० ६.१.१७६ )। 'त्रिवतीर्याज्यानुवाक्या भवति' ( काठ० सं० ११.१ ) इति।**

## २६१७. नामन्यतरस्याम् ॥ १७७ ॥ ( ३७२३ )

**ह्रस्वग्रहणमनुवर्तते, मतुब्ग्रहणं च, तेन मतुपा ह्रस्वो विशेष्यते। मतुपि यो ह्रस्वस्तदन्तादन्तोदात्ता- दन्यतरस्यां नाम् उदात्तो भवति। अग्नीनाम्। अग्नीनाम्। वायूनाम्। वायूनाम्। कर्तॄणाम्। कर्तॄणाम्।**

**मतुपा ह्रस्वविशेषणं किम्? भूतपूर्वेऽपि ह्रस्वे यथा स्यात्, अन्यथा हि साम्प्रतिक एव स्यात्—**

**न्यासः**

एव भक्त इति तद्ग्रहणेनैव गृह्यते। यद्येषा परिभाषाऽऽश्रीयेत, तदा नकारस्य व्यञ्जनस्याविद्यमानत्वाद् ह्रस्वादित्येव सिध्यतीति नुड्ग्रहणं न कुर्यात्, कृतं च। ततो ज्ञायते—नेयमिह परिभाषाश्रीयत इति।

**वक्तव्य इति।** व्याख्येयमित्यर्थः। उत्तरत्रापि वक्तव्यशब्दस्यायमेवार्थः। व्याख्यानं तु पूर्ववद् बहुल- ग्रहणानुवृत्तिमाश्रित्य कर्त्तव्यम् ॥ १७६ ॥

**नामन्यतरस्याम् ॥ नामिति।** सनुट्कस्य षष्ठीबहुवचनस्य ग्रहणम्।

किं पुनः कारणं मतुपा ह्रस्वो विशेष्यते? इत्याह—**अन्यथा हीत्यादि।** सम्प्रति भवः साम्प्रतिकः, अध्यात्मादित्वाट्ठञ्। **तिसृणामिति।** अत्र 'न तिसृचतसृ' इति दीर्घत्वप्रतिषेधात् साम्प्रतिक एव ह्रस्वो विद्यते। न तु साम्प्रतिके सति भूतपूर्वगतिर्युक्ता। अत्र यदि मतुपा ह्रस्वो न विशेष्येत, इह नैव स्याद्-अग्नीनामिति। 'नामि' इति दीर्घत्वे कृते न स्यात्; ह्रस्वाभावात्। तस्माद् भूतपूर्वेऽपि ह्रस्वे यथा स्यादित्येवमर्थं मतुपा ह्रस्वो

**पदमञ्जरी**

**त्रिवतीरिति।** 'छन्दसीरः' इति वत्वम्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥ १७६ ॥

**नामन्यतरस्याम् ॥ मतुबिति चेति।** तच्चार्थात्सप्तम्यन्तं सम्पद्यते।

**अन्यथा हि साम्प्रतिक एव स्यादिति।** साम्प्रतिकाभावे हि भूतपूर्वगतिर्भवति, न तु तस्मिन्सत्यपि; ततस्तिसृणाम्, चतसृणामित्यत्र 'न तिसृचतसृ' इति दीर्घप्रतिषेधात्साम्प्रतिक एव ह्रस्वो विद्यते इति तत्रैव स्यात्; अग्नीनाम्, वायूनामित्यादौ परत्वान्नित्यत्वाच्च दीर्घत्वे कृते ह्रस्वाभावान्न स्यात, तस्मान्मतुपा ह्रस्वो विशेष्यते। यद्येवम्, 'मतौ बह्वचोऽनजिरादीनाम्', 'शरादीनां च' इति येषां मतौ दीर्घत्वमुच्यते तेषां न स्यात्? नैष दोषः; संज्ञायामिति वर्त्तते, ततश्चातुर्थिक एव मतौ दीर्घत्वम्, नतु 'तदस्यास्त्यस्मिन्' इत्यत्र; तत्र मतौ ह्रस्वान्त- त्वाद्भविष्यति। एवमपि तिसृणाम्, चतसृणामित्यत्र न स्यात्, तिसृचतसृभावस्यैव तत्राभावात्? इष्टमेवैतत्

**भावबोधिनी**

❀ और त्रि से परे मतुप् के उदात्तत्व का प्रतिषेध कहना चाहिए। ❀ उदा०—त्रिवतीर्याज्यानुवाक्या भवन्ति। [ त्रि + मत्, ङीप् और वत्व करने पर 'त्रिवतीः' यह द्वितीया बहुवचन का रूप है। उदात्तत्व का प्रतिषेध होने पर अनुदात्त होता है। ] ॥ १७६ ॥

ह्रस्व-ग्रहण की और मतुप्ग्रहण की अनुवृत्ति होती है, उस मतुप् से ह्रस्व को विशेषित किया जाता है। मतुप् परे रहते जो ह्रस्व, तदन्त अन्तोदात्त से परवर्ती 'नाम्' विकल्प से उदात्त होता है। उदा०—अग्नीनाम्। वायूनाम्। कर्तॄणाम्। [ इनमें मतुप् प्रत्यय होने पर ह्रस्व रहता है—अग्निमान्, वायुमान् आदि। ]

मतुप् द्वारा ह्रस्व विशेषित करना किस लिए है? भूतपूर्व भी ह्रस्व में जिस प्रकार उदात्त हो सके। अन्यथा

तिसृणाम्, चतसृणामिति । सनुट्कस्य ग्रहणं किम् ? धेन्वाम् । शकट्याम् । 'उदात्तयणो हल्पूर्वात्' ( ६.१.१७४ ) इत्ययमन्तोदात्तः ।

ह्रस्वादित्येव—कुमारीणाम् । अन्तोदात्तादित्येव—त्रपूणाम् । वसूनाम् ॥

## २६१८. ङ्याश्छन्दसि बहुलम् ॥ १७८ ॥ ( ३७२४ )

ङ्यन्ताच्छन्दसि विषये नामुदात्तो भवति बहुलम् । 'देवसेनानामभिभञ्जतीनाम्' ( ऋ० १०.१०३.८ ) । 'बह्वीनां पिता' ( ऋ० ६.७५.५ ) । न च भवति—नदीनां पारे । 'जयन्तीनां मरुतः' ( ऋ० १०.१०३.८ ) ।

## २६१९. षट्त्रिचतुर्भ्यो हलादिः ॥ १७९ ॥ ( ३७२५ )

'अन्तोदात्तात्' इत्येतन्निवृत्तम् । षट्संज्ञकेभ्यः, त्रि, चतुर्—इत्येताभ्यां च परा हलादिर्विभक्तिरुदात्ता भवति । षड्भिः, षड्भ्यः, षण्णाम् । 'पञ्चानाम्' ( तै० सं० १.६.१.२ ) । सप्तानाम् ( ऋ० ८.२८.५ ) ।

### न्यासः

विशेष्यते । धेन्वाम्, शकट्यामिति । यदि सनुट्कस्य ग्रहणं न क्रियेत तदानीं सप्तम्यादेशस्याप्यामो ग्रहणं स्यात्, ततश्च धेन्वामित्यादावपि स्यात् । सनुट्कस्य ग्रहणे तु न भवति, तस्मिन्नसति धेनुशकटिशब्दयोः प्रातिपदिकस्वरेणान्तोदात्तयोरन्त्यस्य यणादेशे कृते 'उदात्तयणः' इत्यादिनान्तोदात्तो नित्यो भवति ।

त्रपूणामिति । त्रपुशब्दो वसुशब्दवदाद्युदात्तः ॥ १७७ ॥ ङ्याश्छन्दसि बहुलम् ॥ १७८ ॥

षट्त्रिचतुर्भ्यो हलादिः ॥ अन्तोदात्तादित्येतन्निवृत्तमिति । यद्येतदनुवर्तेत, पञ्चानाम्, सप्तानाम्

### पदमञ्जरी

संगृहीतम् । अत्र हि 'षट्त्रिचभ्यो हलादिः' इति नित्यमेव विभक्तेरुदात्तत्वमिष्यते । धेन्वाम्, शकट्यामिति । 'धेट इच्च' ( द० उ० १.१४५ ) इति नुप्रत्ययान्तो धेनुशब्दोऽन्तोदात्तः, शकटिशकट्योरक्षरमक्षरं पर्यायेण' ( फि० सू० ४.१ ) इति शकटीशब्दोऽपि पक्षेऽन्तोदात्तः । त्रपुशब्दो वसुशब्दश्चाद्युदात्तः ॥ १७७ ॥ १७८ ॥

षट्त्रिचतुर्भ्यो हलादिः ॥ अन्तोदात्तादिति निवृत्तमिति । यद्येतदनुवर्तेत पञ्चानाम्, नवानाम्, चतुर्णामित्यत्र न स्यात्; 'न्रः संख्यायाः' ( फि० सू० २.५ ) इत्याद्युदात्तत्वात्, क तर्हि स्यात् ? सप्तानाम्, अष्टानाम् । सप्ताष्टशब्दौ घृतादित्वादन्तोदात्तौ । 'न्रः' इति रेफनकारान्ताया इत्यर्थः ।

### भावबोधिनी

साम्प्रतिक [ उसी समय के ] ह्रस्व में ही होता—तिसृणाम्, चतसृणाम् । नुट् सहित आम् = नाम् का ग्रहण किस लिए है ? धेन्वाम् । शकट्याम् । [ इन में धेनु + ङि शकटी + ङि में "ङेराम्नद्याम्नीभ्यः" ( ७।३।११६ ) से ङि का आम् होने से आम् तो है किन्तु नुट्-सहित न होने से प्रस्तुत सूत्र नहीं लगता है । ] "उदात्तयणो हल्पूर्वात्" ( ६।१।१७४ ) सूत्र से अन्तोदात्त होता है ।

ह्रस्व से ही परे—कुमारीणाम् । [ यहाँ दीर्घ से परे होने से उदात्त नहीं होता है । ] अन्तोदात्त से ही परे—त्रपूणाम्, वसूनाम् । [ त्रपु और वसु शब्द का आद्युदात्त हैं । अतः इनसे परे 'नाम्' उदात्त नहीं होता है । ] ॥ १७७ ॥

वेदविषय में ङ्यङन्त से परे 'नाम्' शब्द बहुलरूप से उदात्त होता है । उदा०—देवसेनानाम् अभिभञ्जतीनाम् । बह्वीनां पिता । [ ङीबन्त का आम् उदात्त होता है । ] और नहीं भी होता है—नदीनां पारे । जयन्तीनां मरुतः । [ उदात्त न होने पर विभक्ति होने से अनुदात्त होता है । ] ॥ १७८ ॥

'अन्तोदात्तात्' इसकी निवृत्ति है । षट् संज्ञकों से और त्रि, चतुर् इन दोनों से परे रहने वाली हलादि विभक्ति उदात्त होती है । उदा०—षड्भिः । षड्भ्यः । षण्णाम् । पञ्चानाम् । सप्तानाम् । [ इन में षष्, पञ्चन् और सप्तन्

त्रि-'त्रिभिः' ( ऋ० १.३४.११ ), त्रिभ्यः, 'त्रयाणाम्' ( तै० सं० ३.४.३.८ ) । चतुर्—चतुर्भ्यः ( तै० सं० ७.२.११.१ ), चतुर्णाम् ( ऋ० ८.७४.१३ ) ।

हलादिरिति किम् ? चतस्रः ( ऋ० १.६२.६ ) पश्य ॥

## २६२०. झल्युपोत्तमम् ॥ १८० ॥ ( ३६८३ )

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति । त्रिप्रभृतीनामन्त्यमुत्तमम्, तत्समीपे च यत्तदुपोत्तमम् । 'पञ्चभिस्तपस्तपति' ( तै० सं० ५.२.७.५ ) । सप्तभिः परान् जयति । तिसृभिश्च वहसे त्रिंशता ( अथर्व० ७.४.१ ) । चतुर्भिः ( वाज० सं० २३.१३ ) ।

झलीति किम् ? पञ्चानाम् ( तै० सं० १.६.१.२ ) । सप्तानाम् ( ऋ० ८.२८.५ ) । उपोत्तममिति किम् ? षड्भिः ( ऋ० २.१८.४ ) । षड्भ्यः ( तै० सं० ७.२.१३.१ ) ॥

## २६२१. विभाषा भाषायाम् ॥ १८१ ॥ ( ३६८४ )

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति विभाषा भाषायां विषये । पञ्चभिः । पञ्चभिः । सप्तभिः । सप्तभिः । तिसृभिः । तिसृभिः । चतुर्भिः । चतुर्भिः ।

### न्यासः

चतुर्णामित्यत्र न स्यात् । पञ्चादीनां शब्दानाम् 'न्नः संख्यायाः' इत्युदात्तत्वात् । 'न्रः' इति रेफनकारान्तयोः संख्याशब्दयोर्ग्रहणम् ॥ १७९ ॥

झल्युपोत्तमम् ॥ त्रिप्रभृतीनामन्त्यमुत्तममिति । उत्तमशब्दस्याव्युत्पन्नस्येह ग्रहणम् । स च स्वभावात् त्रिप्रभृतीनामन्त्यमाहेति कृत्वा । तत्समीपे यत् तदुपोत्तममिति । 'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभावः ॥१८०॥

### पदमञ्जरी

चतस्रः पश्येति । यथैतदिह हलादिग्रहणस्य व्यावर्त्यं तथा 'चतुरः शसि' इत्यत्रावोचाम ॥ १७९ ॥

झल्युपोत्तमम् । झलादौ विभक्तौ परतः षट्त्रिचतुर्णां त्रिप्रभृत्यक्षराभावात् झलादिविभक्त्यन्तस्य पदस्य ग्रहणम्, यदाह—विभक्त्यन्ते पदे उपोत्तममुदात्तम्भवतीति ॥ १८० ॥ १८१ ॥

### भावबोधिनी

सभी "ष्णान्ता षट्" से षट्संज्ञक हैं । ] त्रि—त्रिभिः, त्रिभ्यः, त्रयाणाम् । चतुर्—चतुर्भ्यः, चतुर्णाम् । [ इनमें विभक्ति उदात्त होती है । ]

हलादि विभक्ति—इसका क्या फल है ? चतस्रः पश्य । [ चतुर् + शस्, चतसृ आदेश, यहाँ अजादि विभक्ति होने से उदात्त नहीं होती है । ] ॥ १७९ ॥

षट्संज्ञक, त्रि और चतुर्—इनसे परे जो झलादि विभक्ति, तदन्त पद में उपोत्तम उदात्त होता है । तीन आदि का जो अन्त्य है वह उत्तम है, इसके समीप का जो है वह उपोत्तम है । [ जिसमें तीन या अधिक स्वर हैं उसमें अन्त्य से पहले वाला अच् उदात्त होता है । ] उदा०—पञ्चभिः तपः तपति । सप्तभिः परान् जयति । त्रिसृभिश्च वहसे त्रिंशता । चतुर्भिः । [ इन पञ्चभिः, सप्तभिः, तिसृभिः, चतुर्भिः में अन्त्य से पहले वाला अकार, ऋकार, उकार उदात्त हो जाता है । ]

झलादि विभक्ति परे रहते—इसका क्या फल है ? पञ्चानाम् । सप्तानाम् । [ पञ्चन्+आम्, सप्तन् + आम्—यहाँ अजादि विभक्ति परे है । ] उपोत्तम ( = तीन या अधिक में अन्त्य से पूर्व ) इसका क्या फल है ? षड्भिः, षड्भ्यः । [ यहाँ दो ही अच् हैं । उपोत्तम नहीं है । अतः पूर्व सूत्र से विभक्ति ही उदात्त होती है । ] ॥ १८० ॥

षट्संज्ञक, त्रि, चतुर्—इनसे परे जो झलादि विभक्ति, तदन्त पद में उपोत्तम विकल्प से उदात्त होता है, भाषा

## २६२२. न गोश्वन्सावववर्णराडङ्क्रुङ्कृद्भ्यः ॥ १८२ ॥ ( ३७२६ )

**गो, श्वन्, साववर्णः=सौ प्रथमैकवचने यदवर्णान्तम्, राड्, अङ्, क्रुङ्, कृद्—इत्येतेभ्यो यदुक्तं तन्न भवति। गवा'। गवे'। गोभ्या'मिति। 'सावेकाचस्तृतीयादिर्विभक्तिः' ( १.१६८ ) इति प्राप्तिः प्रतिषिध्यते। सुगुना'। सुगवे'। सुगुभ्यांम्। 'अन्तोदात्तादुत्तरपदात्' ( ६.१.१६९ )। इति प्राप्तिः।**

**श्वन्—शुना'। शुने'। श्वभ्या'म्। परमशुना'। परमशुने'। परमश्वभ्या'म्। पूर्ववत्प्राप्तिः।**

**साववर्णः=सौ प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणम—येभ्यः। तेभ्यः। केभ्यः।**

### न्यासः

**विभाषा भाषायाम्** ॥ पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ १८१ ॥

**न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः** ॥ **सविति**। प्रथमैकवचनस्य सुशब्दस्य ग्रहणं वा स्यात्? सप्तमीबहुवचनस्य वा? तत्र यदि सप्तमीबहुवचनस्य ग्रहणं स्यात्, केभ्यः, तेभ्य इत्यत्र न स्यात्, किंतच्छब्दयोः सप्तमीबहुवचने परतो नावर्णान्तत्वमुपपद्यते; कृतेऽपि त्यदाद्यत्वे 'बहुवचने झल्येत्' इत्येत्वविधानात्। प्रथमैकवचनस्य तु ग्रहणे सत्यत्रापि भवति। तस्मादसप्तम्या एव ग्रहणं युक्तमिति मत्वाऽऽह–**प्रथमैकवचने यदवर्णान्तमिति**। अनन्तरमिह प्रतिषेध्यं न भवतीति सर्वस्य षाष्ठिकस्वरस्य प्रतिषेधोऽयं विज्ञायत इत्याह–**इत्येतेभ्यो यदुक्तं तन्न भवतीति**। **सुगुनेति**। शोभना गावोऽस्येति सुगुः, 'गोस्त्रियोः' इत्यादिना ह्रस्वः, 'नञ्सुभ्याम्' इत्युत्तरपदस्यान्तोदात्तत्वम्।

**शुनेति**। 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणम्। **पूर्ववत् प्राप्तिरिति**। शुना, श्वभ्यामित्यत्र 'सावेकाचः' इत्यादिना प्राप्तिः। **परमशुनेति**। अत्रापि 'अन्तोदात्तादुत्तरदात्' इत्यन्तोदात्तत्वं तु समासस्वरेण।

### पदमञ्जरी

**न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः** ॥ 'सौ' इति यदि सप्तमीबहुचनस्य ग्रहणं स्यात्, तेभ्यः, केभ्य इत्यत्र न स्यात्, तत्किंशब्दयोः सप्तमीबहुवचने परतस्त्यदाद्यत्वे कृते 'बहुवचने झल्येत्' इत्येत्वविधानात्; ताभिर्याभिरित्यादावेव स्यात्, तासु यास्वित्यत्रावर्णान्तत्वात्। तस्मात्प्रथमैकवचनस्य ग्रहणमित्याह—**सौ प्रथमैकवचन इति**। अनन्तरस्य प्रतिषेध्यस्यासम्भवात्सर्वस्यैव षाष्ठिकस्वरस्य प्रतिषेधो विज्ञायते इत्याह—**इत्येभ्यो यदुक्तं तन्न भवतीति**। एवं च वृक्षवानित्यादौ 'ह्रस्वनुड्भ्यां मतुप्' इत्यपि प्रतिषेधो भवति, उदात्तनिवृत्तिस्वरस्य प्रतिषेधो नेष्यते। **सुगुनेति**। बहुव्रीहौ 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः, 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम्।

**शुनेति**। ननु च नलोपे कृते साववर्णान्तमेतत्? न; स्वरविधौ नलोपस्यासिद्धत्वात्। न चायं स्वरविधिः, स्वरप्रतिषेधोऽयम्? एवं तर्हि शुनः प्रतिषेधं कुर्वन्नेतज्ज्ञापयति—अस्मिन्प्रतिषेधे नलोपोऽसिद्धो भवतीति। तेन

### भावबोधिनी

विषय में। [ अर्थात् लौकिक प्रयोग में भी उपोत्तम उदात्त होता है। ] उदा०—पञ्चभिः। सप्तभिः। तिसृभिः। चतसृभिः। [ इनमें उपोत्तम उदात्त है। पक्ष में विभक्ति भी उदात्त होने से दोनों रूप होते हैं। ] ॥ १८१ ॥

गो, श्वन्, साववर्ण = सु प्रथमा एकवचन परे रहते जो अवर्णान्त, राड्, अङ्, क्रुङ्, कृद्—इनसे जो पहले कहा गया है वह नहीं होता है। उदा०—( १ ) गवा। गवे। गोभ्याम्। इनमें "सावेकाचस्तृतीयादिः" ( ६।१।१६८ ) से प्राप्त ( विभक्ति का उदात्तत्व ) प्रतिषिद्ध हो जाता है। सुगुना, सुगवे, सुगुभ्याम्—इनमें "अन्तोदात्तादुत्तरपदाद्०" ( ६।१।६९ ) से ( विभक्ति का वैकल्पिक अनुदात्तत्व ) प्राप्त है। [ उसका प्रतिषेध हो जाता है। ]

( २ ) श्वन्—शुना। शुने। श्वभ्याम्। परमशुना। परमश्वभ्याम्। [ इनमें भी अकेले में 'सावेकाचः" से और परम के साथ "अन्तोदात्तात्" से उदात्तत्व की ] पूर्व के समान प्राप्ति है। [ प्रतिषेध हो जाता है। ]

( ३ ) साववर्ण = सु प्रथमा एकवचन परे जो अवर्णान्त उसका ग्रहण है—येभ्यः। तेभ्यः। केभ्यः [ यद्, तद्,

**राट्—राजतिः क्विबन्तः । राजा॑ । परमराजः ।**

**अङ्—अञ्चतिः क्विबन्तः, तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्, यत्रास्य नलोपो नास्ति तत्र प्रतिषेधो यथा स्यात् । 'नाञ्चेः पूजायाम्' ( ६.४.६० ) इति प्रतिषिध्यते नलोपः । प्राञ्चा॑ । प्राङ्भ्या॑म् । नलोपविषये तु भवत्येव विभक्तेरुदात्तत्वम् । प्राचा । प्राचे । प्राग्भ्याम् ।**

**क्रुङ् क्विन्नन्त एव— क्रुञ्चा॑ । परमक्रुञ्चा॑ ।**

**कृत्—करोतिः कृतिर्वा क्विबन्तः । कृता॑ । परमकृता॑ ॥**

### न्यासः

**राजा । परमराज इति** । अत्रापि पूर्ववत् प्राप्तिः ।

**अञ्चतिः क्विन्नन्त इति** । यद्येवम्, तर्हि यत्र नकारलोपेन न भवितव्यं तस्यैव सनकारस्य ग्रहणं कर्त्तव्यम्, किमर्थं सनकारस्य ग्रहणम् ? इत्याह—**तस्येत्यादि** । एतदपि किमर्थम् ? इत्याह—**यत्रास्येत्यादि** । ननु च सर्वत्रैव लोपेन भवितव्यम्, तत् कथं नलोपस्याभावः ? इत्याह—**नाञ्चेरित्यादि । प्राञ्चेति** । पूर्ववत् प्राप्तिः । प्राञ्चतीति क्विन् । **प्राचेति** । पूर्ववल्लोपदीर्घत्वे ।

**क्रुञ्चेति** । 'क्रुच क्रुञ्च कौटिल्याल्पीभावयोः', क्विन्, क्रुञ्चेति निपातनान्नलोपाभावः । **परमक्रुञ्चेति** । समासस्वरेणान्तोदात्तत्वम् ।

**परमकृतेति** । अत्रापि । **कृतिर्वेति** । 'कृती छेदने' इत्येषः ॥ १८२ ॥

### पदमञ्जरी

नृशब्दात्सप्तम्येकवचने नरीत्यत्र 'सावेकाचः' इति विभक्तेरुदात्तत्वं भवति, पितृमानित्यादौ 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वं भवति, अन्यथा 'सावर्णे' इति प्रतिषेधः स्यात् ।

**प्राचेति** । पूर्ववन्नलोपदीर्घादि । **क्रुञ्चेति** । 'कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः' ( धा० पा० १८५,१८६ ), 'ऋत्विक्' इत्यादिना क्विन्, तत्रैव सूत्रे क्रुञ्चेति निपातनान्नलोपाभावः । **कृतिर्वेति** । 'कृती छेदने' ( धा० पा० १४३५ ) ॥ १८२ ॥

### भावबोधिनी

किम् में सु परे रहते य+सु, त+सु, क+सु होता है । अतः इनमें प्राप्त उदात्तत्व का प्रतिषेध है । ]

( ४ ) राट्—क्विप्प्रत्ययान्त राज् का रूप है । राजा । परमराजः । [ इनमें भी पूर्ववत् प्राप्ति है । ]

( ५ ) अङ्—क्विप् प्रत्ययान्त अञ्च् धातु है, उसका नकार ( नकार )-सहित का ग्रहण विषय का अवधारण करने के लिए है—जहाँ पर इस अञ्च् का नलोप नहीं होता है वहीं पर जिस प्रकार हो सके । 'नाञ्चेः पूजायाम्' ( ६।४।६० ) सूत्र से नलोप का प्रतिषेध होता है । उदा०—प्राञ्चा । प्राङ्भ्याम् । [ यहाँ उदात्तत्व का प्रतिषेध होता है । ] किन्तु नलोप के विषय में तो विभक्ति का उदात्तत्व होता है—प्राचा । प्राचे । प्राग्भ्याम् । [ यहाँ 'सावेकाचस्तृतीयादिः'' से विभक्ति उदात्त होती है । ]

( ६ ) क्रुङ् क्विन् प्रत्ययान्त ही लिया जाता है—क्रुञ्चा । परमक्रुञ्चा । [ ''ऋत्विक्दधृक्'' ३।२।५९ से क्विन् प्रत्ययान्त है । ]

( ७ ) कृत्—कृ धातु अथवा कृत् ( कृती छेदने ) यह क्विबन्त है । कृता । परमकृता । [ कृ से क्विप् करने पर 'ह्रस्वस्य पिति कृति तुक्'' से तुक्=त् होने पर कृत् हो जाता है और कृती=कृत् है ही । अतः समान रूप होने से दोनों का ग्रहण है । ] ॥ १८२ ॥

## २६२३. दिवो झल् ॥ १८३ ॥ ( ३७२७ )

दिवः परा झलादिर्विभक्तिर्नोदात्ता भवति। द्युभ्या॑म्। द्युभिः। 'सावेकाचः' ( ६.१.१६८ ) इति 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' ( ६.१.१७१ ) इति वा प्राप्तिः प्रतिषिध्यते।

झलिति किम्? दि॒वा ॥

## २६२४. नृ चान्यतरस्याम् ॥ १८४ ॥ ( ३७२८ )

'नृ' इत्येतस्मात्परा झलादिर्विभक्तिरन्यतरस्यां नोदात्ता भवति। नृभ्या॑म्। 'नृभिः' (ऋ० १०.१९.७.४)। 'नृभ्यः' ( ऋ० १.४३.२ )। 'नृषु' ( ऋ० १.१८०.८ )।

झलित्येव—न्रा। न्रे ॥

## २६२५. तित्स्वरितम् ॥ १८५ ॥ ( ३७९९ )

तित्स्वरितं भवति। सन्नन्ताद्यत्—चि॒की॒र्ष्य॑॑म्, जि॒ही॒र्ष्य॑॑म्। 'ऋहलोर्ण्यत्' ( ३.१.१२४ )—का॒र्य॑॑म्,

**न्यासः**

**दिवो झल्** ॥ १८३ ॥

**नृ चान्यतरस्याम्** ॥ नृशब्दात् 'सावेकाचः' इति, 'न गोश्वन्साववर्ण' इति नित्ये प्रतिषेधे च प्राप्ते विभाषेयमारभ्यते ॥ १८४ ॥

**तित् स्वरितम्** ॥ **चिकीर्ष्यम्, जिहीर्ष्यमिति**। सन्नन्ताद् यत्, 'अतो लोपः' ॥ १८५ ॥

**पदमञ्जरी**

**दिवो झल्** ॥ **झलादिरिति**। कथं पुनरसति सप्तमीनिर्देशे तदादिविधिर्भवति; केवलझलात्मिकाया विभक्तेर-भावात्, अस्तु तर्हि तदन्तविधिः, का पुनर्झलन्ता विभक्तिः, शसादिः सकारान्ता? एवं तर्हि 'षट्त्रिचतुर्भ्यो हलादिः' इत्यत आदिग्रहणमनुवर्तते, दिवः परा विभक्तिर्नोदात्ता भवति, कीदृशी? यस्या झलादिरिति।

अयं योगः शक्योऽवक्तुम्। कथम्? एवं वक्ष्यामि—'अष्टनो दीर्घात्, दिवो झलादिः, शतरनुमो नदी च' इति, 'ऊडिदम्' इत्यादौ च दिवो ग्रहणं न करिष्यामि? एवमपि 'नृ चान्यतरस्याम्' इत्युत्तरसूत्रे तत्र झल्ग्रहणं कर्तव्यम्, 'नदी च' इति चकारश्च क्रियत इति नास्ति लाघवे विशेषः ॥ १८३ ॥ १८४ ॥

**तित्स्वरितम्** ॥ इह कस्मान्न भवति 'ॠत इद्धातोः' आस्तीर्णम्, विस्तीर्णम्, तत्कालग्रहणार्थतया चरितार्थ-त्वादिति चेत्? न; अनेकप्रयोजनदर्शनादनुबन्धानाम्। तद्यथा आक्षिक इत्यादौ ठकि सति स्वरो वृद्धिश्च भवति।

**भावबोधिनी**

दिव् से परे झलादि विभक्ति उदात्त नहीं होती है। उदा०—द्युभ्याम्। द्युभि.। इनमें 'सावेकाचः" (६।१।१६८) इससे अथवा 'ऊडिदम्पदादि०" ( ६।१।१७१ ) से विभक्ति का उदात्तत्व प्राप्त है, उसका प्रतिषेध हो जाता है।

झल् = झलादि—इसका क्या फल है? दिवा। [ यहाँ अजादि होने से निषेध नहीं होता है। ] ॥ १८३ ॥

'नृ' इससे परे रहने वाली झलादि विभक्ति विकल्प से उदात्त नहीं होती है। [ अतः पक्ष में 'सावेकाचः" आदि सूत्रों से उदात्त भी होती है। ] उदा०—नृभ्याम्। नृभिः। नृभ्यः। नृषु।

झलादि ही—न्रा। न्रे। [ इनमें अजादि विभक्ति परे है अतः विकल्प नहीं होता है। नित्य उदात्तत्व होता है। ] ॥ १८४ ॥

तित् = त् की इत्संज्ञावाला स्वरित होता है। उदा०—सनाद्यन्त [ चिकीर्ष, जिहीर्ष—से 'अचो यत्" सूत्र से

हार्य॑म् । प्रत्ययाद्युदात्तस्यापवादः ॥

**२६२६. तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ १८६ ॥ (३७३०)**

**तासेरनुदात्तेतो ङितोऽकारान्तोपदेशाच्च शब्दात्परं लसार्वधातुकमनुदात्तं च भवति ह्नुङ्, इङ्—इत्येताभ्यां परं वर्जयित्वा । तासेस्तावत्—कर्ता॑, कर्त्ता॑रौ, कर्त्ता॑रः । प्रत्ययस्वरापवादोऽयम् ।**

**न्यासः**

**तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः** ॥ तासिप्रभृतीनां समाहारद्वन्द्वेन निर्देशः । **अदुपदेशादिति** । उपदिश्यत इत्युपदेशः, शास्त्रवाक्येषु खिलपाठे च यः प्रथममुच्चार्यते स इत्यर्थः । अच्चासावुपदेशश्चेत्यदुपदेशः । कर्मसाधनस्योपदेशशब्दस्याश्रयणम्, भावसाधनस्य वा, नानेन सामानाधिकरण्यानुपपत्तेः । **लसार्वधातुकमिति** । षष्ठीसमासः । **अदुपदेशादिति** । पूर्ववत् कर्मसाधनेनोपदेशशब्देन कर्मधारयः । वर्णग्रहणं सर्वत्र तदन्तविधि प्रयोजयतीत्यकारान्तोपदेशादित्यर्थः । **कर्तेति** । करोतेर्लुट्, आत्मनेपदप्रथमपुरुषः, तस्य डारौरसः । एकवचने टेर्लोपः । द्विवचनबहुवचनयोः 'रि च' इति सकारस्य ।

**पदमञ्जरी**

एवं तर्हि नायमिकारस्तपरः, किं तर्हि? दपरः । यद्येवम्, ऋकारस्य स्थाने आन्तर्य्यतो दीर्घः प्राप्नोति ? 'भाव्यमानोऽण् सवर्णान्न गृह्णाति ( व्या० परि० ३५ ) । यद्येवम्, 'अदसोऽसेर्दादु दो मः' अमूभ्याम् दीर्घस्य स्थाने दीर्घो न स्यात् ? नैष दोषः; ज्ञापितमेतत् 'दिव उत्' ऋत उत्' इति तपरकरणेन—'भाव्यमानोऽप्युकारः सवर्णान् गृह्णति' ( चां० परि० ४४ ) इति । तयोरेव तह्य्र्ुकारयोः स्वरितत्वप्रसङ्गः ? तावपि तर्हि न तपरौ, किं तर्हि ? दपरौ । कथं तर्हि ज्ञापकम् ? 'तपरस्तत्कालस्य' इत्यत्र दकारोऽपि चर्त्वभूतो निर्दिश्यते 'अणुदित्सवर्णस्य चाप्रत्ययस्तपरस्तत्कालस्य' इति, यदि दकारोऽपि निर्दिश्यते 'ऋदोरप्' इत्यत्रापि तद्ग्रहणादिहैव स्याद्यवः, स्ववः; लवः, पव इत्यत्र न स्यात्; 'तादपि परस्तपरः' इति तादपि परस्य तपरत्वात् । एवं तर्हि 'ऋदोरप्' इत्यत्र धकारो जश्त्वभूत उच्चारणार्थो निर्दिश्यते, तत्र जश्त्वस्यासिद्धत्वान्नायमृकारो दपरः । ये तु 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' ( हेम० परि० ५९ ) इति परिभाषां पठन्ति, तेषाम् 'ऋत इद्धातोः' इत्यादौ सत्यपि तित्त्वेनास्य स्वरस्य प्रसङ्गः । 'तपरस्तत्कालस्य' इत्यत्र दकारोऽपि न प्रश्लेष्टव्यः ।

तस्यास्तु परिभाषाया भाष्यवार्तिकयोरिह ।
अदर्शनादयं यत्नो महानस्माभिरादृतः ॥ १८५ ॥

**तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः** ॥ तास्यादीनां समाहारद्वन्द्वः । **अदुपदेशादिति** । उपदिश्यत इत्युपदेशः, तस्याकारेण विशेषणात्तदन्तविधिः, अच्चासावुपदेशश्चादुपदेशः, उपदिश्यमानदशायां यदवर्णान्तं तस्मादित्यर्थः । **अकारोपदेशादिति** । अकारान्तादुपदेशादित्यर्थः । **कर्त्तेत्यादि** । लुडात्मनेपदे प्रथमपुरुषस्य डारौरसः, तासिः । एकवचने टिलोपः, इतरत्र 'रि च' इति सलोपः ।

**भावबोधिनी**

यत् = य यह तित् प्रत्यय होता है, स्वरित होता है—] चिकीर्ष्यम्, जिहीर्ष्यम् । "ऋहलोर्ण्यत्" ( से ण्यत् करने पर ) कार्यम् । हार्यम् । [ स्वरित होता है । ] यह प्रत्यय के आद्युदात्तत्व [ सामान्य स्वर ] का अपवाद है ॥ १८५ ॥

तास्, अनुदात्तेत्, ङित्, अदुपदेश, (जिसके अन्त में अकार का उपदेश है)—इन शब्दों से परे लकार का सार्वधातुक प्रत्यय अनुदात्त होता है, ह्नुङ् और इङ् इन दो को छोड़कर । तास् का उदा०—कर्ता, कर्तारौ, कर्तारः । [ कृ + लुट्, आत्मनेपद में त, "लुटः प्रथमस्य डारौरसः" सूत्र से डा = आ आदेश, "स्यतासी लृलुटोः" से तास् कृ + तास् + आ,

**अनुदात्तेतः—आस—आस्ते । वस—वस्ते ।**

**ङित्—षूङ्—सूते । शीङ्—शेते ।**

**अदुपदेशात्—तुदतः । नुदतः । पचतः । पठतः । अनुबन्धस्यानैकान्तिकत्वादकारान्तोपदेश एव शप् ।**

**पचमानः । यजमानः । यद्यत्र मुक् अकारमात्रस्य स्यात्, तदा लसार्वधातुकमदुपदेशादनन्तरमिति सिद्धो निघातः । अथाकारान्तस्याङ्गस्य, तथापि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वादसिद्ध इति सिद्धम् ।**

**न्यासः**

**आस्ते** इत्येवमादिषु **शेते** इत्येवम्पर्यन्तेष्वदादित्वाच्छपो लुक् । **वस्त इति** 'वस आच्छादने' ।

**सूत इति** । 'षूङ् प्राणिगर्भविमोचने' । **शेत इति** । 'शीङः सार्वधातुके गुणः' इति गुणः ।

**तुदतः, नुदत इति** । तसन्ते एते । एवं **पचतः, पठत** इत्येते अपि । ननु च व्यञ्जनान्तोऽयमुपदेशे शप्, नाकारान्तः, तत् कथमिहानुदात्तत्वं भवति ? इत्याह— **अनुबन्धस्येत्यादि** । एकान्तः = एकदेशः, नैकान्तोऽनेकान्तः, तद्ग्रहणे न गृह्यत इति यावत्, अनेकान्तस्य भावोऽनेकान्तत्वम् । ततो हेतोरकारान्तोपदेश एव शप्, न व्यञ्जनान्तः । तेन पचते—इत्यादावनुदात्तत्वं भवतीति भावः । अकारान्तत्वं तु शबकारस्य व्यपदेशिवद्भावात् । **पचमानः, यजमान इति** । शानच् । कथं पुनरिहानुदात्तत्वम्, यावता मुकाऽत्र व्यवधानम् ? इत्याह—**यद्यत्रेत्यादि** । मुगागमोऽयमकारमात्रस्य वा स्याद् ? अकारान्ताङ्गस्य वा ? तत्र यद्यकारमात्रस्य तदाऽदुपदेशग्रहणेनैव तस्य ग्रहणमिति लसार्वधातुकमदुपदेशादनन्तरमेव भवति, व्यवधानाभावात्, न हि स्वावयवो व्यवधायको भवति । तेनान्तरङ्गत्वात् सिद्धो निघातः । **अथेत्यादिना** द्वितीये पक्षे निघातस्यासिद्धत्वात् प्रतिपादयति—**तथापीति** । एवमपीत्यर्थः । लसार्वधातुकस्येत्यस्य सिद्धो निघात इति वक्ष्यमाणेन सम्बन्धः ।

**पदमञ्जरी**

आस्ते इत्यादावदादित्वाच्छपो लुक् ।

तुदत इत्यादीनि तसन्तानि । कथं पुनः शबुपदेशेऽदन्तो भविष्यति, यावता पकारान्तोऽयं तत्र ? इत्यत आह **अनुबन्धस्यानेकान्तत्वादकारान्तोपदेश एवेति** । 'उदीचामाङः' इति कृतात्वनिर्देशाज्ज्ञापकादनुमीयते—कार्येष्वनुबन्धाः श्रूयमाणा अपि न प्रतिबन्धका इति । **पचमानो यजमान इति** । लटः शानच् । नन्वत्र मुका व्यवधानम् ? अत आह— **यद्यत्रेति** । **स्यादिति** । सम्भावने लिङ् । अङ्गस्य योऽकारस्तस्य मुगित्याश्रयणादस्य पक्षस्य सम्भवः । **तदा लसार्वधातुकमदुपदेशादनन्तरमिति** । स्वावयवेन व्यवधानाभावादुपदेशग्रहणाच्च मुकि सत्यर्द्धमात्राव्यवधानेऽपि प्रवर्त्तते निघातः । 'आतो ङितः' इतीयादेशस्तु न भवति; अत इत्यत्र तपरकरणात् । अनन्तरयोगे पञ्चमी मृग्या, परमिति वाऽध्याहारः । **अथाकारान्तस्याङ्गस्येति** । अकारेणाङ्गस्य विशेषणादिति भावः । **लसार्वधातुकस्येति** । 'सिद्धम्' इति वक्ष्यमाणेन सम्बन्धः, निघात इवि चानुषङ्गः, तथा च लसार्व-

**भावबोधिनी**

ऋ का गुण, रपर, टि = आस् का लोप—कर्त् आ । यहाँ तास् से परे प्रत्यय आ अनुदात्त होता है । ] यह प्रत्यय स्वर का अपवाद है ।

अनुदात्तेत् से परे—आस्—आस्ते । वस्—वास्ते । [ √आस उपवेसने । √वस आच्छादने—इनमें अनुदात्त अ की इत्संज्ञा होने से आत्मनेपदी हैं । इनके बाद 'ते' अनुदात्त होता है । ]

ङित्—षूङ्—सूते । शीङ्—शेते । [ इनमें ङ् इत् होने से आत्मनेपदी है । प्रत्यय उदात्त है । ]

अदुपदेशवाली से परे—तुदतः । नुदतः । पचतः । पठतः । [ इनमें उपदेशावस्था में 'अ' है । ] अनुबन्ध अनैकान्तिक = अनवयव होता है इस लिए अकारान्त उपदेश में ही शप् होता है । पचमानः । यजमानः । [ पच् + लट् = शानच् = आन, शप् = अ, पच् + अ + आन, "आने मुक्" से मुक् = म् = आगम् । यज् + शप् = अ + लट् = शानच् = आन, मुक् = म ] यदि इनमें केवल अकार को मुक् आगम किया जायगा तो अदुपदेश से अनन्तर ( अव्यवहित ) लसार्व-

**चित्स्वरोऽप्यनेन लसार्वधातुकानुदात्तत्वेन परत्वाद् बाध्यते।**

**तास्यादिभ्य इति किम्? चिनुतः। चिन्वन्ति। ङिदयं श्नुः पूर्वस्य कार्यं प्रति न तु परस्य। उपदेशग्रहणं किम्? इह च यथा स्यात्—पचावः, पचाम इति। इह च मा भूत्—ह_तः, ह_थ इति। लग्रहणं**

**न्यासः**

**असिद्ध इति** अस्यापि मुगित्यनेन प्रकृतेन। इतिकरणो हेतौ। तदयमर्थः—यस्माल्लसार्वधातुकानुदात्ते बहिरङ्गत्वान्मुगसिद्धः, तस्मादेवमपि सार्वधातुकस्यानुदात्तत्वम्। बहिरङ्गत्वं तु मुको बह्वपेक्षत्वात्। स ह्यकारान्तविशिष्टमङ्गमाश्रयति, आनश्च प्रत्ययविशेषम्। अङ्गावयवमदुपदेशं लसार्वधातुकमात्रं निघातः। तस्मादसावन्तरङ्गः। स्वरविधित्वाच्च, उक्तं हि स्वरविधेर्भाष्येऽन्तरङ्गत्वम्। ननु चाद्ये पक्षे मुकि कृते निघातो न सिध्यति, अदुपदेशादिति तपकरणात्, मुकि च कृते कालस्यातिरिच्यमानत्वात्? नैष दोषः; यद्येवमपि कृतेऽर्धमात्राधिका भवति, तथाप्युपदेशग्रहणात् सिध्यत्येव, उपदेशे मात्रिकस्यैवोच्चारणात्। **चित्स्वरोऽप्यनेनेत्यादि**। चित्स्वरस्यावकाशः—'चलनशब्दार्थादकर्मकाद् युच्' चलनम्, चोपनमिति, तास्यादिभ्योऽनुदात्तस्यावकाशः—आस्ते, शेत इति; इहोभयं प्राप्नोति—पचमानो यजमान इति, परत्वाल्लसार्वधातुकानुदात्तत्वमेव चित्स्वरं बाधित्वा प्रवर्त्तते।

**चिनुतः, चिन्वन्तीति**। ननु 'सार्वधातुकमपित्' इति श्नुरपि ङिदेव, तत्कथमिदं प्रत्युदाहरणमुपपद्यते? इत्याह—**ङिदयमित्यादि**। 'सार्वधातुकमपित्' इत्यनेन पूर्वस्य कार्यमतिदिश्यते, न परस्य। तथा चोक्तम्—सिद्धं

**पदमञ्जरी**

धातुकस्य निघातः सिद्ध इत्यर्थः। **असिद्ध इति**। प्रकृतत्वान्मुगिति गम्यते। **बहिरङ्गत्वादिति**। बहिरङ्गत्वं तु मुको बह्वपेक्षत्वात्। स हि अकारान्तविशिष्टमङ्गमाश्रयति आनञ्च प्रत्ययविशेषम्। अयं तु स्वरोऽदुपदेशमात्रं लसार्वधातुकमात्रं चापेक्षत इत्यन्तरङ्गः। **चित्स्वरोऽपीत्यादि**। चित्स्वरस्यावकाशः—चलनः, 'चलनशब्दार्थादकर्मकाद्युच्', अस्यावकाशः—आस्ते, शेते इति; पवमान इत्यादौ परत्वादयं निघातश्चित्स्वरं बाधते। ननु चैकस्य द्विकार्ययोगे विप्रतिषेधः, न चात्रैको द्विकार्ययुक्तः, कथम्? आदेरनुदात्तत्वमन्त्यस्य चित्स्वरः, नात्रादेरनुदात्तत्वम्, किं तर्हि? सङ्घातः कार्यी। अत्र ज्ञापकमुत्तरत्र वक्ष्यामः। ततश्चानस्य सर्वानुदात्तत्वेन भवितव्यम्, न त्वादेरित्यस्त्येव विरोध इति परत्वादयं बाधते इति युक्तमेव।

**चिनुतः, चिन्वन्तीति**। ननु च 'सार्वधातुकमपित्' इति श्नुरपि ङिदेव तत्कथमिदं प्रत्युदाहरणम्? अत आह—**ङिदयं श्नुःपूर्वस्य कार्यं प्रतीति**। तत्र हि ङिति यत्कार्यं तदतिदिश्यते, यदाह—'सिद्धं तु पूर्वस्य कार्यावि-

**भावबोधिनी**

धातुक होगा इस लिए निघात सिद्ध होता है। यदि अकारान्त अङ्ग को मुक् आगम किया जाय? तब भी ल—सार्वधातुक का अनुदात्तत्व करने के विषय में बहिरङ्ग होने से [ मुक् ] असिद्ध ही होगा, इस लिए निघात सिद्ध है। [ यदि केवल अकार को मुक् आगम करते है तब 'यदागमाः' नियम से अकार से ही उस मुक् का भी ग्रहण हो जायगा अतः उसके रहने पर अकार से अव्यहित ही लसार्वधातुक प्रत्यय होगा, अनुदात्त होने में बाधा नहीं है। यदि अकारान्त अङ्ग को मुक् आगम माना जायगा तब 'अ' का अवयव न होने से अदुपदेश से परे लसार्वधातुक नही, निघात कैसे होगा? इसका समाधान यह है कि स्वरविधि और मुगागमविधि में स्वरविधि अन्तरङ्ग और मुगागम बहिरंग होने से असिद्ध हो जायगी अतः व्यवधान न होने से निघात में बाधा नहीं है। ] शानच् के चित्स्वर को भी परवर्त्ती होने के कारण ल-सार्वधातुक-अनुदात्तत्व द्वारा बाध लिया जाता हैं।

**किम् ? कतीह पचमानाः । सार्वधातुकमिति किम् ? शिश्ये । शिश्याते । शिश्यिरे । अह्न्विङोरिति किम् ? ह्नुते । यदधीते ॥**

### न्यासः

ध्रु पूर्वस्य कार्यातिदेशादिति । तस्मात् पूर्वस्य कार्यं प्रति ङित्त्वं भवति, न तु परस्येति किमत्र नोपपद्यते ! **इह चेत्यादि । पचावः, पचाम** इत्यत्र हि 'अतो दीर्घो यञि' इति दीर्घत्वे कृते न स्यात् असत्युपदेशग्रहणे । तस्मिंस्तु सति शबकारोऽपि मात्रिक एवोपदिष्ट इति यद्यप्युत्तरकालं दीर्घत्वं भवति तथापि निघातो भवतीति । **इह च मा भूदिति हतः, हथ इति ।** अत्र 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपे सत्युपदेशात्परं लसार्वधातुकं भवति, तत्रासत्युपदेशग्रहण इहापि स्यात् । अस्मिंस्तु सति न भवति, न हि हन्तिरवर्णान्तः उपदिश्यते, किं तर्हि ? व्यञ्जनान्तः । **पचमाना इति ।** 'ताच्छील्यवयोवचनशक्तिषु चानश्' न च स लादेशः, अपि तु प्रत्ययः । लसार्वधातुकत्वं त्वस्य न विद्यते । **शिश्य इति ।** शीङो ह्यात्मनेपदे रूपम्, 'एरनेकाचः' इत्यादिना यणादेशः । 'लिट् च' इत्यार्धधातुकमेतत् । **शिश्याते इति ।** लिड्याताभि रूपम् । नानुदात्तत्वम्, असार्वधातुकसंज्ञाविधानात् । **ह्नुते, यदधीत इति ।** 'ह्नुङ् अपनयने', 'इङ् अध्ययने' । यच्छब्दस्य प्रयोगः 'निपातैर्यद्यदि' इति निघातप्रतिषेधो यथा स्यात् ॥ १८६ ॥

### पदमञ्जरी

देशादिति' । नायं स्थितः सिद्धान्तः, 'आतो ङितः' इत्यत्र वक्ष्यति—'"सार्वधातुकमपित्' इत्यत्र ङित इव ङिद्वदित्यङ्गीक्रियते" इत्याति । अत्र तु पक्षे परिहारः–उपदेशग्रहणमुभाभ्यामपि सम्बध्यते–ङिदुपदेशात्, अदुपदेशादिति । **पचावः, पचाम इति ।** असत्युपदेशग्रहणे परत्वान्नित्यत्वाच्च दीर्घे कृते तपरकरणान्न स्यात् । ननु च तपरकरणं न करिष्यते ? यदि तु न क्रियते—यातः, वात इत्यत्रापि प्राप्नोति । **हतः, हथ इति ।** अत्र 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपे कृते सत्यकारात्परं लसार्वधातुकं भवति, तथाप्युपदेशग्रहणान्न भवति । न हि हन्तिरदन्त उपदिश्यते । अथ योऽत्रादन्तो हशब्दस्तदाश्रयमनुदात्तत्वं कस्मान्न भवति ? तावतोऽनुपदेशात्, समुदायपरो हि हन्त्युपदेशः । **कतीह पचमाना इति ।** 'पूङ्यजोः शानन्', तत्र च 'लटः' इति निवृत्तत्वान्न लादेशोऽयम् **शिश्य इति ।** 'एरनेकाचः' इति यणादेशः, 'लिट् च' इत्यार्द्धधातुकमेतत् । **यदधीत इति ।** यच्छब्दप्रयोगः 'निपातैर्यद्यदि' इति निघातप्रतिषेधार्थः ॥ १८६ ॥

### भावबोधिनी

तास् आदि से ही—इसका क्या फल ? चिनुतः चिन्वन्ति । [ इनमें सूत्रनिर्दिष्ट कोई नहीं है । ] श्नु प्रत्यय [ 'सार्वधातुकमपित्'' सूत्र से ] ङित् है किन्तु अपने से पूर्व के कार्य के प्रति, न कि अपने से परे कार्य के प्रति । [ अतः ये प्रत्युदाहरण ही हैं ङित् के उदा०—नहीं हो सकते । ] उपदेशग्रहण किस लिए है ? यहाँ भी हो सके—पचावः, पचामः । [ इनमें उपदेशकाल में अ है । ] इनमें न हो सके—हतः हथः । [ इनमें न् लोप के बाद अ होने से अकारान्त है । इसका ग्रहण नहीं होता है । ] लकार [ अनुदात्त होता है ]—इसका ग्रहण किस लिए है ? कतीह पचमानाः । [ पच् धातु से लट् का शानच् नहीं अपि तु "ताच्छील्यवयोवचनशक्तिषु चानश्" सूत्र से चानश् प्रत्यय ही होता है । अतः लसार्वधातुक न होने से निघात न होकर चित् स्वर होता है । ] सार्वधातुक—यह किस लिये हैं ? शिश्ये । शिश्याते । शिश्यिरे । [ यहाँ लिट् यह सार्वधातुक नहीं है । अतः निघात । नहीं होता है । ] ह्नुङ् और इङ् को छोड़ कर—इसका क्या फल है ? ह्नुते । यदधीते । [ यत् का प्रयोग "निपातैर्यद्यदि" सूत्र से नितात का प्रतिषेध करने के लिए है । ] ॥ १८६ ॥

## २६२७. आदिः सिचोऽन्यतरस्याम् ॥ १८७ ॥ ( ३७३१ )

'उदात्तः' इति वर्तते । सिजन्तस्यान्यतरस्यामादिरुदात्तो भवति । मा हि कार्ष्टाम् । मा हि कार्ष्टाम् । एकोऽत्राद्युदात्तः, अपरोऽन्तोदात्तः । मा हि लाविष्टाम् , मा हि लाविष्टाम् । एकोऽत्राद्युदात्तः, अपरो मध्योदात्तः । सिचश्चित्करणादागमानुदात्तत्वं हि बाध्यते ।

❀ सिच आद्युदात्तत्वेऽनिटः पितः पक्षे उदात्तत्वं वक्तव्यम् ❀ ( म० भा० ६.१.१८७ वा० ) । मा हि कार्षम् मा हि कार्षम । अनिट इति किम् ? मा हि लाविषम् । मध्योदात्त एवाद्युदात्ताभावपक्षे भवति ॥

## २६२८. स्वपादिर्हिंसामच्यनिटि ॥ १८८ ॥ ( ३६७२ )

लसार्वधातुकग्रहणं यदनुवर्तते, तद् 'अच्यनिटि' इति सम्बन्धादिह सप्तम्यन्तमुपजायते । स्वपादिरा

### न्यासः

आदिः सिचोऽन्यतरस्याम् ॥ मा हि कार्ष्टामिति । हेः, माङश्च प्रयोगे प्रयोजनं पूर्वमेवोक्तम् । अपरोऽन्तोदात्त इति । प्रत्ययस्वरेण । अपरो मध्योदात्त इति । प्रत्ययस्वरेणैव । ननु च वलादिरिह प्रत्ययः, इट् चागमः, आगमानाञ्चानुदात्तत्वं भवति, तस्मादिहाप्यन्तोदात्तेनैव भवितव्यम्, तत् कथं मध्योदात्तत्वम्? इत्याह— सिचश्चित्करणादित्यादि । सिचश्चित्करणेनागमानुदात्तत्वे बाधिते चित्स्वर एव भवतीति युक्तं मध्योदात्तत्वम् ।

सिच आद्युदात्त इत्यादि । सिच आद्युदात्तत्वे कर्त्तव्येऽनिटो विद्यमाने सिचः परो यश्चित्प्रत्ययस्तस्योदात्तत्वं वक्तव्यम् । मा हि कार्षमिति । पक्षे सर्वानुदात्तत्वं पदं मा भूदित्येवमर्थमिदम् । पक्षे तूदात्तत्वेन मुक्ते सर्वानुदात्तमेव पदं भवति ॥ १८७ ॥

स्वपादिर्हिंसामच्यनिटि ॥ सार्वधातुकग्रहणमित्यादि । 'अचि' इत्येतत् सप्तम्यन्तं लसार्वधातुकस्य

### पदमञ्जरी

आदिः सिचोऽन्यतरस्याम् ॥ मा हि कार्ष्टामिति । हेः, माङश्च प्रयोगे पूर्वमेव प्रयोजनमुक्तम् । अपरो मध्योदात्त इति । ननु च वलादिरिह प्रत्ययः, इडागमः, 'आगमाश्चानुदात्ता भवन्ति' ( व्या० परि० १९५ ), तस्मादिहाप्यन्तोदात्तत्वेन भवितव्यम् ? अत आह—सिचश्चित्करणादिति ।

अनिटः पित इति । अनिटः सिचः परः पित्पक्षे उदात्तो भवति, पक्षे त्वनुदात्तः, तेन मा हि कार्षमिति तिङन्तं पक्षे आद्युदात्तम्, पक्षे त्वन्तोदात्तम्, अन्यथा धातुस्वरेण नित्यमाद्युदात्तं स्यात् । मध्योदात्त एवेति । सिचः स्वरेण, एवकारेण न त्वन्तोदात्त इति दर्शयति ॥ १८७ ॥

स्वपादिर्हिंसामच्यनिटि ॥ स्वपादिरा वृत्कारणादिति । आ गणान्तादित्यर्थः । तत्र 'ञिष्वप् शये'

### भावबोधिनी

'उदात्तः' इसकी अनुवृत्ति है । सिजन्त का आदि विकल्प से उदात्त होता है । उदा०—मा हि कार्ष्टाम् । मा हि कार्ष्टाम् । इनमें एक आद्युदात्त है और दूसरा अन्तोदात्त है । मा हि लाविष्टाम्, मा हि लाविष्टाम् । इनमें एक आद्युदात्त है और दूसरा मध्योदात्त है । सिच् के चित् करण से आगम का अनुदात्तत्व बाधित कर लिया जाता है । [ इस लिए मध्योदात्त होना ठीक ही है । ]

❀ सिच् के आद्युदात्तत्व में अनिट् पित् का पक्ष में उदात्तत्व कहना चाहिए । ❀ उदा०—मा हि कार्षम् । [ यहाँ मिप् यह पित् है । अतः यह आद्युदात्त और पक्ष में मध्योदात्त होता है । ] अनिट् इसका क्या फल है ? मा हि लाविषम् । आद्युदात्तत्व के अभाव पक्ष में मध्योदात्त ही होता हैं । ॥ १८७ ॥

जो लसार्वधातुक-ग्रहण अनुवृत्त होता है वह 'अचि अनिटि' इसके साथ सम्बन्ध के कारण यहाँ सप्तम्यन्त बन

**वृत्करणात् । स्वपादीनां हिंसेश्चाजादावनिटि लसार्वधातुके परतोऽन्यतरस्यामादिरुदात्तो भवति । स्वपन्ति । स्वपन्ति । श्वसन्ति श्वसन्ति । हिंसेः खल्वपि—हिंसन्ति । हिंसन्ति । प्रत्ययस्वरेण पक्षे मध्योदात्तः ।**

**अचीति किम् ? स्वप्यात् । हिंस्यात् । अनिटीति किम् ? स्वपितः । श्वसितः ॥**

**ङित्यजादावयं विधिरिष्यते । इह न भवति—स्वपानि । हिनसानि ॥**

**२६२९. अभ्यस्तानामादिः ॥ १८९ ॥ ( ३६७३ )**

**अभ्यस्तानामजादावनिटि लसार्वधातुके परत आदिरुदात्तो भवति । ददति, ददतु । दधति, दधतु । जक्षति, जक्षतु । जाग्रति, जाग्रतु ।**

**न्यासः**

समानाधिकरणं विशेषणम्, न च प्रथमान्तस्य सप्तम्यन्तेन सामानाधिकरण्यमुपपद्यते । तस्माद् 'अचि' इत्यनेन सम्बन्धाद् विशेषणविशेष्यलक्षणाल्लसार्वधातुकग्रहणादित्याह— **सप्तम्यन्तमुपजायते । स्वपादिरा वृत्करणादिति ।** यद्येतदेवम्, तथापि 'ञिष्वप् शये', 'श्वस प्राणने', 'अन च' इत्येत एव ये, ते इह स्वपादिग्रहणेन गृह्यन्ते । परेऽपि ये जक्षित्यादयोऽभ्यस्तसंज्ञाः, तेषु परत्वाद् 'अभ्यस्तानामादिः' इत्यनेन नित्यमाद्युदात्तत्वं भवति । **हिंसन्तीति ।** 'तृह हिसि हिंसायाम्', रुधादित्वाच्च श्नम्, 'श्नसोरल्लोपः' इत्यकारलोपः, 'श्नान्नलोपः' इति परस्य नकारस्य । **स्वप्यादिति ।** लिङ्, अदादित्वाच्छपो लुक् । **स्वपित इति ।** 'रुदादिभ्यः सार्वधातुके' इतीट् ॥ १८८ ॥

**अभ्यस्तानामादिः ॥** प्रत्ययस्वरेण प्राप्ते तदपवादोऽभ्यस्तानां धातूनामादेर्विधीयते । दधतीत्यादौ 'श्नाभ्यस्तयोरातः' इत्याकारलोपः, 'उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञा । **जक्षति, जाग्रतीति** । अत्रापि 'जक्षित्यादयः

**पदमञ्जरी**

( धा० पा० १०६८ ), 'श्वस प्राणने' ( धा० पा० १०६९ ), 'अन च' ( धा० पा० १०७० ) इत्येतेभ्यः परे जक्षित्यादयोऽभ्यस्तसंज्ञकाः, तेषु परत्वाद् 'अभ्यस्तानामादिः' इति स्वरो भवति, ये तु ततः परे 'षस् स्वप्ने' ( धा० पा० १०७८ ), 'वश कान्तौ' ( धा० पा० १०८० ), 'ह्नुङ् अपनयने' ( धा० पा० १०८२ ), 'चर्करीतम्' ( धा० पा० १०८१ ), इति; तत्र चर्करीतमभ्यस्तम् । अन्ये तु 'षसिवसी छान्दसौ', छन्दसि च दृष्टानुविधानम् । ह्नुङोऽप्ययं स्वरो न भवति 'अह्नुविङोः' इत्यनुवृत्तेः । पारिशेष्यादादितस्त्रिष्वेवायं स्वरः । **हिंसन्तीति ।** 'हिसि हिंसायाम्' ( धा० पा० १४५६ ), रुधादिः, 'श्नान्नलोपः', 'श्नसोरल्लोपः' ॥ १८८ ॥

**अभ्यस्तानामादिः ॥ आदिरिति वर्त्तमान इति ।** 'आदिः सिचोऽन्यतरस्याम्' इत्यतः । **पुनरादिग्रहणं**

**भावबोधिनी**

जाता हैं । स्वप आदि वृत् करण ( = गण) के अन्त तक हैं । स्वप आदि का और हिंस धातु का अजादि अनिट् लसार्वधातुक परे रहते विकल्प से आदि उदात्त होता है । उदा०—स्वपन्ति । श्वसन्ति । [ आदि उदात्त होता है । ] हिंस—हिंसन्ति । पक्ष में प्रत्यय स्वर से मध्योदात्त होता है । [ अतः दो-दो रूप होते हैं । ]

अच् परे—इसका क्या फल है ? स्वप्यात् । हिंस्यात् । [ इनमें अच् परे नहीं है । ] अनिट् परे—इसका क्या फल है ? स्वसितः । स्वपितः । [ इट् परे है । इनमें आद्युदात्त नहीं होता है ]

ङित् अजादि परे यह विधि इष्ट हैं । यहाँ नहीं होती है—स्वपानि । हिंनसानि । [ यहाँ लोट् में "आडुत्तमस्य पिच्च" से पित् है । अतः ङित् न होने से यह विधि नहीं लागू होती है । ] ॥ १८८ ॥

अजादि अनिट् लसार्वधातुक परे रहते अभ्यस्तों का आदि उदात्त होता है । उदा०—ददति, ददतु । दधति,

**अचीत्येव—दद्यात् । अनिटीत्येव—जक्षितः । 'आदिः' इति वर्तमाने पुनरादिग्रहणं नित्यार्थम् ॥**

## २६३०. अनुदात्ते च ॥ १९० ॥ ( ३६७४ )

**अविद्यमानोदात्ते च लसार्वधातुके परतोऽभ्यस्तानामादिरुदात्तो भवति । अनजाद्यर्थ आरम्भः । ददाति । जहाति । दधाति । जिहीते । मिमीते ( तै० सं० ७.१.९.६ ) ।**

**अनुदात्त इति बहुव्रीहिनिर्देशो लोपयणादेशार्थः ( म० भा० ) । मा हि स्म दधात् । दधात्यत्र ॥**

**न्यासः**

षट्' इति सर्वत्र 'अदभ्यस्तात्' इति झेरदादेशः । **जक्षित इति** । पूर्ववदिट् । अथादिग्रहणं किमर्थम्, यावता 'आदिः सिचोऽन्यतरस्याम्' इत्यत आदिरित्यनुवर्त्तते ? इत्यत आह—**आदिरिति वर्तमान इत्यादि** । पूर्वकं ह्यादिग्रहणमन्यतरस्यांग्रहणेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । तस्मान्नित्यार्थं पुनरादिग्रहणं क्रियते ॥ १८९ ॥

**अनुदात्ते च** ॥ अनजाद्यर्थमिदम् । अजादौ त्वनुदात्ते पूर्वेणैव सिद्धम् । **जिहीते, मिमीत इति** । अत्र 'तास्यनुदात्तेत्' इत्यादिना लसार्वधातुकस्यानुदात्तत्वम् । 'भृञामित्' इत्यभ्यासस्येत्वम् ।

'अनुदात्ते' इति शास्त्रीयस्यानुदात्तस्यायं निर्देश इति—कस्यचिद् भ्रान्तिः स्यात्, अतस्तन्निरासार्थमाह—**अनुदात्त इति बहुव्रीहिनिर्देश इति** । अविद्यमानमुदात्तमस्मिन्नित्यनुदात्तम् । किमर्थं पुनर्बहुव्रीहिनिर्देशः ? इत्याह—**लोपयणादेशार्थं इति** । लोपयणादेशयोः कृतयोरप्याद्युदात्तत्वं यथा स्यात् । **मा हि स्म दधात् । दधात्यत्रेति** । स्मशब्दस्य प्रयोगः स्मोत्तरे लङ् यथा स्यात् । अत्र यदि शास्त्रीयस्यायं निर्देशः स्यात्, 'इतश्च' इतीकारलोपे कृते यणादेशे चोदात्तं न स्यात्; शास्त्रीयस्यानुदात्तस्याभावात् । बहुव्रीहिनिर्देशे चात्रापि

**पदमञ्जरी**

**नित्यार्थमिति** । अन्यथा आदिग्रहणसम्बद्धमन्यतरस्यांग्रहणमनुवर्तेत ॥ १८९ ॥

**अनुदात्ते च** ॥ अनजाद्यर्थमिदम् । **जिहीते,** । **मिमीत इति** । 'ई हल्यघोः', ङित्वाल्लसार्वधातुकानुदात्तत्वम् । 'अविद्यमानोदात्ते' इति वदता 'अनुदात्त इति बहुव्रीहिनिर्देशोऽयम्' इत्युक्तम् । तत्र प्रयोजनमाह—**अनुदात्त इति । बहुव्रीहिनिर्देश इत्यादि** । न विद्यते उदात्तो यस्मिन्नित्यनुदात्तः । **मा हि स्म दधादिति** । शास्त्रीयेऽनुदात्ते गृह्यमाणे नित्यत्वादन्तरङ्गत्वाद्वा इकारलोपे कृतेऽचोऽनुदात्तस्य परस्याभावादाद्युदात्तत्वं न स्यात्, बहुव्रीहौ

**भावबोधिनी**

दधतु । [ दा और धा धातुओं के लोट् में शप् का श्लु और द्वित्व करने से अभ्यस्त संज्ञा होती है । आदि उदात्त होता है । ] जक्षति, जक्षतु । जाग्रति, जाग्रतु । [ इनमें "जक्षित्यादयः षट्" से अभ्यस्त संज्ञा होती है । ]

अच् परे रहते ही—दद्यात् । [ यहाँ अच् परे नहीं है । ] अनिट् परे ही—जक्षितः [ यहाँ इट् परे है । ] 'आदिः' यह तो पूर्व सूत्र ( "आदिः सिचोऽन्यतरस्याम्" ६।१।१८७ ) से ही अनुवृत्त है फिर भी 'आदि' का ग्रहण नित्य करने के लिये है । [ क्योंकि वहाँ विकल्प है । ] ॥ १८९ ॥

अविद्यमान उदात्त वाले लसार्वधातुक के परे रहते अभ्यस्तों का आदि उदात्त होता है । जहाँ अजादि नहीं है, वहाँ के लिए यह सूत्र बनाया गया है । उदा०—ददाति । दधाति । जहाति । जिहीते । मिमीते । [ इनमें आदि उदात्त होता है । ]

'अनुदात्ते' इसमें बहुव्रीहि का निर्देश [ अविद्यमानः उदात्तः यस्मिन् तस्मिन् ] लोप और यणादेश के लिए है । मा हि दधात् । दधात्यत्र । [ यदि शास्त्रीय अनुदात्त लिया जायगा तो इकार का लोप कर देने पर अनुदात्त अच् परे नहीं

## २६३१. सर्वस्य सुपि ॥ १९१ ॥ ( ३६८५ )

**सर्वशब्दस्य सुपि परत आदिरुदात्तो भवति । सर्वे॑ः, सर्वौ॑, सर्वे॑ । सुपीति किम् ? स॒र्वत॑रः । स॒र्वत॑मः ।**

**❀ प्रत्ययलक्षणेनाप्ययं स्वर इष्यते ❀ सर्व॑स्तोमः (तै० सं० ५.४.१२.३) इति । ❀ सर्वस्वरोऽनच्कस्येति वक्तव्यम् ❀ ( म० भा० ६.१.१९१ वा १ ) । स॒र्व॒कः । चित्स्वरेणान्तोदात्तो भवति ॥**

### न्यासः

भवति; उदात्तस्येहाविद्यमानत्वात् ॥ १९० ॥

**सर्वस्य सुपि ॥** 'इण्शीभ्यां वन्' इति प्रकृत्य 'सर्वनीधृष्वरिष्वलष्वशिवपट्वप्रेष्वा अस्वतन्त्रे' इति सर्वशब्दोऽन्तोदात्तो निपातितः । तेन तस्य सुप्याद्युदात्तत्वं विधीयते । अन्तोदात्तत्वनिपातनं तु सर्वस्य विकारः सार्व इत्यत्र 'अनुदात्तादेरञ्' यथा स्यात् ।

**प्रत्ययलक्षणेनापीत्यादि ।** कथं पुनरिष्यमाणोऽपि लभ्यते, यावता सर्वस्तोम इत्यत्र 'सुपो धातुप्रातिपदिकयोः' इति लुमता लुप्तम्, ततश्च 'न लुमताङ्गस्य' इति प्रत्ययलक्षणस्य प्रतिषेधेन भवितव्यम् ? नैष दोषः; पूर्वसूत्राच्चकारोऽनुवर्तते, स च समुच्चयार्थः । तेन प्रतिषेधविषयेऽप्येष स्वरो भविष्यति । **सर्वस्वरोऽनकच्कस्येत्यादि ।** योऽयं सर्वशब्दस्य स्वरो विधीयते स तस्याविद्यमानाकच्कस्य भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'आदिः सिचोऽन्यतरस्याम्' इत्यतोऽन्यतरस्यांग्रहणमिह मण्डूकप्लुतिन्यायेनानुवर्त्तते, सा च व्यवस्थितविभाषा, तेनानकच्कस्य भवति ॥ १९१ ॥

### पदमञ्जरी

विज्ञाते तु भवति । **दधात्यत्रेति ।** अत्र यणादेशस्य बहिरङ्गत्वेनासिद्धत्वादपि स्वरः सिद्धः ॥ १९० ॥

**सर्वस्य सुपि ॥** सर्वशब्द उणादिषु अन्तोदात्तो निपातितः, सर्वस्य विकारः सार्व इत्यनुदात्तादिलक्षणोऽञ् यथा स्यादिति ।

**प्रत्ययलक्षणेनापीत्यादि ।** 'न लुमताङ्गस्य' इत्यत्रैतदुपपादितम् । **सर्वस्वरोऽनकचकस्येति**[1] ॥ १९१ ॥

### भावबोधिनी

रहेगा, अतः आद्युदात्त नहीं होगा । इसी प्रकार यणादेश में भी अनुदात्त परे नहीं रहेगा । यणादेश के बहिरङ्ग होने से असिद्ध हो जाने से आद्युदात्त हो जाता है । ] ॥ १९० ॥

सुप् प्रत्यय परे रहते 'सर्व' शब्द का आदि उदात्त हो जाता है । उदा०—सर्वः, सर्वौ, सर्वे । [ आद्युदात्त ही सर्व शब्द सुप् परे भी आद्युदात्त ही रहता । ]

सुप् प्रत्यय परे—इसका क्या फल है ? सर्वतरः । सर्वतमः । [ यहाँ तरप् तमप् है, सुप् नहीं है । ]

❀ प्रत्ययलक्षण से भी यह स्वर इष्ट है 'सर्वस्तोम' के लिए । ❀ [ समास से पूर्व की विभक्ति प्रत्ययलक्षण से मान कर आदि उदात्त होता है । ]

❀ सर्व शब्द का स्वर अनच्क ( अकच्-रहित ) का कहना चाहिए । ❀ उदा०—सर्वकः । [ आदि उदात्त नहीं होता है । 'तन्मध्यपतित' न्याय से अकच्विशिष्ट सर्व ही माना जाता है । निषेध होता है । ] चित् स्वर से [ "चितः" ६।१।१६३ से ] अन्तोदात्त हो जाता है ।

**विमर्श**—'प्रत्ययलक्षणेनाप्ययं स्वर इष्यते सर्वस्तोम इति" ऐसा कोई वचन प्रस्तुत सूत्र के भाष्य में नहीं है । "न लुमताङ्गस्य" (१।१।६३) सूत्रभाष्य में "सर्वामन्त्रित-सिज्लुक्स्वरवर्जम्" ऐसा वार्त्तिक है और "सर्वस्वरः । सर्वस्तोमः । 'सर्वस्य सुपि" ( ६।१।१९१ ) इत्याद्युदात्तत्वं यथा स्यात् ।" भाष्य में है । काशिकाकार ने वही यहाँ प्रस्तुत किया है ॥ १९१ ॥

---

१. प्रकाशितसंस्करणेषु प्रतीकत्वेनेदं निर्दिष्टमतोऽस्याग्रे पदमञ्जर्याः कश्चनांशस्त्रुटितः प्रमादात्परित्यक्तो वेति प्रतीयते ।

## २६३२. भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ॥ १९२ ॥ ( ३६७५ )

भी, ह्री, भृ, हु, मद, जन, धन, दरिद्रा, जागृ—इत्येतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्ययात्पूर्वमुदात्तं भवति। बिभेति। जिह्रेति 'बिभर्ति' ( तै० आ० ३.११.४ )। 'जुहोति' ( तै० ब्रा० २.१.८.३ )। ममत्तु नः परिज्मा ( तै० सं० २.१.११.१ )। मदेः 'बहुलं छन्दसि' इति विकरणस्य श्लुः। जजनदिन्द्रम्' ( तै० आ० ३.२.१ )। 'जन जनने' ( धा० पा० ११०६ ) इत्यस्य पञ्चमे लकारे रूपम्। धन धान्ये' ( धा० पा० ११०५ ) इत्यस्य पञ्चमे लकारे—दधनत् ( तै० ब्रा० २.८.२५ )। दरिद्राति। जागर्ति।

**न्यासः**

**भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति** ॥ 'अनुदात्ते च' इत्याद्युदात्ते प्राप्ते प्रत्ययात् पूर्वस्य भीह्रीप्रभृतीनामुदात्तो विधीयते। **बिभेति, जिह्रेतीति**। 'ञिभी भये', 'ह्री लज्जायाम्'। **बिभर्त्तीति**। बिभर्तेः पूर्ववदभ्यासस्येत्वम्। **ममत्त्विति**। 'मदी हर्षे', 'एरुः', दिवादित्वाच्छ्यन्, तस्य श्लुः। **जननमिन्द्रमिति**। जनेर्लेट्, तस्य मिप्, इत्यादिनेकारलोपः, 'लेटोऽडाटौ' इत्यट्, जुहोत्यादित्वाच्छपः श्लुः, द्विर्वचनम्।

**पदमञ्जरी**

**भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति** ॥ आद्युदात्तस्यापवादोऽयम्। **जागरामिति** सौत्रो निर्देशः। अत्र मदिर्दिवादिः, दरिद्राजाग्रावदादी, अन्ये जुहोत्यादयः। **पञ्चमे लकार इति**। लस्येत्यत्र दर्शितक्रमे पञ्चमकलकारो लेट्। लेट्शब्दस्तु वृत्तिकारदेशे जुगुप्सितः, यथाऽत्र द्रविडदेशे नीवीशब्दः। **दधनदिति**। 'इतश्च लोपः परस्मैपदेषु', 'लेटोऽडाटौ' इत्यट्। **दरिद्रतीति**। अत्र परत्वाकारलोपे कृते इकारस्योदात्तत्वप्रसङ्गः।

अथ प्रत्ययग्रहणं किमर्थम्, यावता भ्यादिभ्यः परः पित्प्रत्यय एव सम्भवति, ननु चायमस्ति—'आडुत्तमस्य पिच्च', बिभयाति, अत्रापि लोडुत्तमस्यैव पित्वं विधीयते, न त्वाट इति, आट्सहितो लोडुत्तमः पिद्भवति स च प्रत्यय एव। अत एव लोडादेशात्पितः पूर्वमाड् भवति, प्रत्ययात्तु पूर्वो न भवति, आट्-सहितस्याप्रत्ययत्वादिति तन्निवृत्त्यर्थं प्रत्ययग्रहणमिति—न वाच्यम्, कथम्? यथैव प्रत्ययत्वमाट्सहितस्य, तथा पित्त्वमपि तस्यैव? इदं तर्हि प्रयोजनम्—प्रत्ययात्पूर्वस्याच्च उदात्तत्वं यथा स्यात्सङ्घातस्य मा भूदिति, एतदेव ज्ञापकम्—स्वरविधौ सङ्घातः कार्यीति, तेन 'तास्यनुदात्तेत्' इति निघातः 'पचमानः' इत्यादौ चित्स्वरं

**भावबोधिनी**

भी, ह्री, भृ, हु, मद, जन, धन, दरिद्रा, और जागृ—इनके अभ्यस्तों का पित् लकार के सार्वधातुक प्रत्यय परे रहते प्रत्यय से पूर्व उदात्त होता है। उदा०—बिभेति। [ ञि भी भये—इसका रूप है। ] जिह्रेति। [ ह्री लज्जायाम्—का रूप है। ] बिभर्ति। [ भृञ् भरणे का रूप है। ] जुहोति। [ हु दानादानयोः—का रूप है। ] ममत्तु नः परिज्मा। ''मद से 'बहुलं छन्दसि'' सूत्र से विकरण का श्लु होता है। [ इसीलिये द्वित्व, हलादि शेष होता है। 'मदी हर्षे' का लट् प्रथम पुरुष एकवचन का रूप है। ] 'जजनदिन्द्रम्'। 'जन' इस धातु के पञ्चम लकार लेट् का रूप है। [ जन + लेट् = तिप्, इकारलोप ''लेटोऽडाटौ'' सूत्र से अट् आगम, जुहोत्यादि होने से शप् का श्लु द्वित्वादि करने पर रूप बना है। ] 'धन धान्ये' इसका पञ्चम लकार लेट् में 'दधनत्' रूप होता है। [ धन + लेट् = तिप्, इलोप, अट् आगम, श्लु, द्वित्वादि होने पर रूप है। ] दरिद्राति। [ दारिद्रा + लट् = तिप्, ] जागर्ति। [ जागृ + लट् = तिप, शप् लोप, गुण, रपर। दारिद्रा और जागृ ये दो ''जक्षित्यादयः षट्'' ( ६।१।६ ) से अभ्यस्त संज्ञक हैं। ]

भ्यादीनामिति किम् ? दर्दाति । पितीति किम् ? दरि॑द्रति ॥

## २६३३. लिति ॥ १९३ ॥ ( ३५८३ )

**लिति [ = लकारेत्संज्ञके ] प्रत्ययात्पूर्वमुदात्तं भवति । चि॒कीर्ष॑कः । जि॒हीर्ष॑कः । भौ॒रि॒कि॒वि॑धम् । भौलिकिवि॑धम् । ऐषुकारि॒भ॑क्तम् ॥**

### न्यासः

क्वचित्—**जननदिति** पठ्यते, तत् तिबन्तमेव वेदितव्यम् । **दधनदिति** । एतदपि पञ्चमे लकारे तिपि रूपम् । पूर्ववदडादिकार्यं विधेयम् । **दरिद्रतीति** । पूर्ववज्झेरदादेशो विधीयते, पूर्ववच्चाकारलोपः ॥ १९२ ॥

**लिति** ॥ **लकारेत्संज्ञक इति** । लकार इत्संज्ञको यस्य स तथोक्तः । **चिकोर्षक इति** । सन्नन्ताण्ण्वुल् । तत्र 'अतो लोपः' इत्यकारलोपे कृते ण्वुलः पूर्वस्येकारस्योदात्तत्वम् । **भौरिकविधमिति** । 'भौरिक्याद्यैषु-कार्य्यादिभ्यो विधलभक्तलौ' इति विधलप्रत्ययः । भौरिकिर्विषयो देश इति । **ऐषुकारिभक्तमिति** । ऐषुकारिर्विषयो देश इति । पूर्वसूत्रेणैव भक्तल् प्रत्ययः ॥ १९३ ॥

### पदमञ्जरी

परत्वाद्बाधत इति यदुक्तं तदुपपन्नं भवति । अथ पूर्वग्रहणं किमर्थम्, प्रत्यये पितीति वक्तव्यम्, तत्र 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति पूर्वस्यैव भविष्यति ? इदं तर्हि प्रयोजनम्—पिति पूर्वं कार्यभाग्यथा स्यात्, पिदन्तं मा भूदिति । कथं पुनः सप्तमीनिर्द्देशे तदन्तस्य प्रसङ्गः ? एतदेव ज्ञापयति—स्वरविधौ सप्तम्यस्तदन्तसप्तम्य इति । किं सिद्धं भवति ? 'उपोत्तमं रिति', रित्प्रत्ययान्ते उपोत्तममुदात्तं भवति, न तु रिति परतः पूर्वस्य; 'चङ्यन्य-तरस्याम्' चङन्तस्य । यद्येवम्, 'चतुरः शसि' इति शसन्तस्य प्राप्नोति, शस्ग्रहणसामर्थ्यान्न भविष्यति । यदि हि 'चतुरः शसि' इत्यनेन शस उदात्तत्वमिष्टं स्यात्, ततः 'ऊडिदम्' इत्यस्यानन्तरम् । 'चतुरश्च' इति ब्रूयात्, तत्रासर्वनामस्थानग्रहणानुवृत्त्या 'षट्त्रिचतुर्भ्यो हलादिः' इति हलादेरुदात्तत्वविधानाच्च शस एव भविष्यति ॥ १९२ ॥

**लिति** ॥ प्रत्ययात्पूर्वमिति वर्त्तते, तेन लिदन्ते स्वरप्रसङ्गो न चोदनीयः ॥ १९३ ॥

### भावबोधिनी

[ इनमें 'अनुदात्ते च' ( ६।१।१९० ) से आद्युदात्तत्व प्राप्त है, इस सूत्र से प्रत्यय से पूर्व का जो है उसी का उदात्तत्व किया जाता है । ]

भी आदि का—इसका क्या फल है ? ददाति । [ अभ्यस्त होने पर भी पूर्वोक्त में नहीं है । ] पित् प्रत्यय परे—इसका क्या फल है ! दरिद्रति । [ दरिद्रा + झि = अति, आलोप होता है । पित् परे न होने से सूत्र नहीं लगता है । ] ॥ १९२ ॥

लिति = लकार की इत्संज्ञावाले प्रत्यय के परे रहते प्रत्यय से पूर्व का उदात्त होता है । उदा०—चिकीर्षकः । जिहीर्षकः । [ चिकीर्ष + ण्वुल् = वु = अक, जिहीर्ष + ण्वुल् = वु = अक, लकार की इत्संज्ञा वाले प्रत्यय से पूर्व का उदात्त होता है—चिकीर्ष + अक, 'अतो लोपः' से र्ष के अ का लोप होने से 'ई' उदात्त होता है । ] भौरिकिविधम् भौलिकिविधम् । ऐषुकारिभक्तम् । [ इनमें "भौरिक्याद्यैषु कार्यादिभ्यो विधल्-भक्तलौ" ( ४.२.५४ ) सूत्र से 'विधल्' और 'भक्तल्' प्रत्यय होते हैं । इनमें ल् की इत्संज्ञा है अतः प्रत्यय से पूर्व का उदात्त होता है । ] ॥ १९३ ॥

## २६३४. आदिर्णमुल्यन्यतरस्याम् ॥ १९४ ॥ ( ३६७७ )

णमुलि परतोऽन्यतरस्यामादिरुदात्तो भवति। लोलूयं लोलूयमलोलूयं लोलूयम्। पोपूयं पोपूयम्। पोपूयं पोपूयम्[1]। आम्रेडिताबदनुत्तत्वे कृते पूर्वो लोलूयंशब्द एकत्राद्युदात्तः, अपरत्र लित्स्वरेण मध्योदात्तः॥

## २६३५. अचः कर्तृयकि ॥ १९६ ॥ ( ३६७८ )

'उपदेशे' इति वर्तते। अजन्ता ये उपदेशे धातवस्तेषां कर्तृयकि अन्यतरस्यामादिरुदात्तो भवति। लूयते केदारः स्वयमेव, लूयते केदारः स्वयमेव। स्तीर्यते केदारः स्वयमेव, स्तीर्यते केदारः स्वयमेव। यदाऽऽद्युदात्तत्वं

### न्यासः

**आदिर्णमुल्यन्यतरस्याम्** ॥ लित्स्वरे प्राप्ते णमुलि परत आद्युदात्तत्वं विकल्पेन विधीयते। तेन मुक्ते पक्षे लित्स्वरोऽपि भवत्येव। अनेकाचश्च धातवो विकल्पं प्रयोजयन्तीति। ये त्वेकाचस्तेषां लित्स्वरेणानेन वा विशेषो नास्ति। **लोलूयंलोलूयम्, पोपूयम्पोपूयमिति**।[2] यदन्ताण्णमुल्, तस्य 'आभीक्ष्ण्ये द्वे भवतः, इति द्विर्वचनम्। 'अनुदात्तं च' इत्याम्रेडितस्यानुदात्तत्वम् ॥ १९४ ॥

**अचः कर्तृयकि। कर्तृयकीति**। सार्वधातुकं कर्तृशब्देनोक्तम्। अभिधानेऽभिधेयोपचारात्। तत्र यः कर्त्तरि यक् स कर्तृयक्, 'सप्तमी' इति योगविभागात् समासः। **लूयते केदारः स्वयमेवेति**। लुनाति केदारं देवदत्तः, केदारो लवनक्रियया व्याप्तुमिष्टतमत्वात् कर्म। यदा तु सौकर्य्यात् तस्यैव कर्तृत्वं विवक्ष्यते तदासौ कर्त्ता भवति;

### पदमञ्जरी

**आदिर्णमुल्यन्यतरस्याम्** ॥ **लोलूयंलोलूयमिति**। एकाक्षु धातुषु लित्स्वरस्य, अस्य च विशेषाभावादनेकाजुदाहृतः। **आम्रेडितानुदात्तत्वे कृत इति**। 'अनुदात्तं च' इत्यनेन ॥ १९४ ॥

**अचः कर्तृयकि** ॥ कर्तृवाचिनि सार्वधातुके विहितो यक् कर्तृयक्। **उपदेश इति वर्त्तत इति**। 'अदुपदेशात्' इत्यत्र यदुपदेशग्रहणं तदुपसमस्तमपि स्वरितत्वप्रतिज्ञानादिह सम्बद्धयते, तच्चार्थात्सप्तम्यन्तं सम्पद्यत इति मत्वोक्तम्, न तु सप्तम्यन्तमुपदेशग्रहणं प्रकृतमस्ति। यदि तूपदेशग्रहणं नानुवर्त्तेत, कार्यत इत्यादौ रपरत्वे सति न स्यात्, तस्मादुपदेश इत्यनुवर्त्यम्।

### भावबोधिनी

णमुल् परे रहते आदि विकल्प से उदात्त होता है। उदा०—लोलूयं लोलूयम्, पोपूयं पोपूयम्। [ यङन्त—लोलूय, पोपूय से णमुल् = अम्, "आभीक्ष्ण्ये द्वे भवतः" वचन से द्वित्व होता है। णमुल् से पूर्व का आदि उदात्त हो जाता है। एकाच् धातुओं में पूर्ववर्ती "लिति" सूत्र से ही निर्वाह है। अतः यह अनेकाच् के लिए है। न्यास के प्रकाशित व्याख्यान में "यदन्ताण्णमुल्" ऐसा है, यह अशुद्ध है। "यङन्ताण्णमुल्" यही शुद्ध है।] आम्रेडित का अनुदात्तत्व कर देने पर 'लोलूयम्' शब्द एक में आद्युदात्त होता है, दूसरा लित् स्वर से मध्योदात्त होता है। [ 'अनुदात्तं च" इस सूत्र से आम्रेडित अनुदात्त होता है। आदि विकल्प से उदात्त होता है अतः मध्योदात्त वाले भी दो-दो रूप होते हैं—लोलूयं लोलूयम्। पोपूयं पोपूयम्। इस प्रकार चार-चार रूप होते हैं।] ॥ १९४ ॥

'उपदेशे' इसकी अनुवृत्ति होती है। उपदेश में अजन्त जो धातुयें, कर्तृयक् परे रहते, उनका आदि उदात्त विकल्प से होता है। [ कर्तृवाची सार्वधातुक प्रत्यय परे रहते जो किया जाता है वह—कर्तृयक् होता है—कर्तरि यक् = कर्तृयक् ] उदा०—लूयते केदारः स्वयमेव। स्तीर्यते केदारः स्वयमेव। [ देवदत्तः केदारं लुनाति। देवदत्तः किं लुनाति, केदारः स्वयमेव लूयते—इस प्रकार व्यापारसौकर्य के लिए कर्म ही कर्ता बना दिया जाता है इस कर्मकर्ता का

---

१. मुद्रितपुस्तकेऽयं प्रयोगो नास्ति। २. यङन्ताण्णमुल्—इतिपाठः साधुः।

**न भवति, तदा लसार्वधातुकनिघाते कृते [1]अदुपदेशभक्तयक एव स्वरो भवति ।**

**जनादीनामुपदेश एवात्वं द्रष्टव्यम्, तत्राप्ययं स्वर इष्यते । जायते स्वयमेव । सायते स्वयमेव । खायते स्वयमेव ।**

**अच इति किम् ? भिद्यते स्वयमेव । कर्तृग्रहणं किम् ? लूयते केदारो देवदत्तेन ॥**

**न्यासः**

'कर्मवत् कर्मणा तुल्यक्रियः' इत्यतिदेशात् यगात्मनेपदञ्च । **स्तीर्य्यत इति ।** 'स्तृ आच्छादने', 'ऋत इद्धातोः', 'हलि च' इति दीर्घः । **लसार्वधातुकनिघाते कृत इति । [1]अदुपदेशभक्तयक एव स्वरो भवतीति ।** प्रत्ययलक्षणः ।

अथेह कथं भवति—जायते स्वयमेव, सायते स्वयमेव, खायते स्वयमेवेति, यावता 'ये विभाषा' इत्यात्वे कृते सत्युत्तरकालं जनादयोऽजन्ता भवन्ति, न तूपदेश ? इत्याह— **जनादीनामित्यादि ।** जनादीनां ह्यात्वविधावनुदात्तोपदेशग्रहणमनुवर्त्तते । तेन तेषामुपदेश एवात्वं द्रष्टव्यम् । **जायते स्वयमेवेति ।** कथं पुनरकर्मकर्ता, यावता जनिरकर्मकः ? अन्तर्भावितण्यर्थः सकर्मको भवतीत्यदोषः ।

**लूयते केदारो देवदत्तेनेति ।** अत्र शुद्धकर्मण्यात्मनेपदविधानात् कर्तृयग्न भवति ॥ १९५ ॥

**पदमञ्जरी**

यद्येवम्, जायते स्वयमेवेत्यादौ न स्यात्, 'ये विभाषा' इत्यात्वे सत्युत्तरकालमजन्ता जनादयः, न तूपदेशे ? इत्यत आह—**जनादीनामिति ।** 'ये विभाषा' इत्यत्र 'अनुदात्तोपदेशे' इत्यत उपदेशग्रहणमनुवर्तते, सा च विषयसप्तमीति उपदेश एव जनादीनामात्वं भवति । **जायते स्वयमेवेति ।** अन्तर्भावितण्यर्थो जनिः कर्मकर्तृविषयः । दृश्यते चान्तर्भावितण्यर्थस्य प्रयोगः, यथा— एकं द्वादशधा जज्ञे इति ॥ १९५ ॥

**भावबोधिनी**

"कर्मवत् कर्मणा तुल्यक्रियः" सूत्र से अतिदेश के कारण यक् और आत्मने-पदादि होते हैं—लूयते । ] जब इस सूत्र से आदि उदात्त नहीं होता है तब लसार्वधातुक का निघात कर देने पर अदुपदेशभक्त यक् [ अदुपदेश धातु के अवयव यक् ] का ही स्वर होता है अर्थात् 'ते' प्रत्यय मानकर यक् का उदात्त होता है । लूयते केदारः स्वयमेव । स्तीर्यते केदारः स्वयमेव । दो-दो रूप होते हैं । ]

जन् आदि धातुओं का उपदेश में ही आत्व समझना चाहिए क्योंकि उन में भी यह स्वर इष्ट है । [ उपदेश में अजन्त धातु से परे कर्तृयक् रहने पर—यह तभी लागू होगा जब जन् आदि में बाद में होने वाला आत्व आदेश भी उपदेशकालिक मान लिया जाय । ] जायते स्वयमेव । सायते स्वयमेव । खायते स्वयमेव । [ इन में भी कर्मकर्ता की पूर्वोक्त प्रक्रिया होती है । जन्, सन्, खन् में 'ये विभाषा' ( ६।४।४३ ) से विकल्प से न् का आत्व होता है । परन्तु इन्हें उपदेशकाल में ही अजन्त मान कर प्रस्तुत सूत्र से स्वर करना इष्ट है । ]

अचः ( अजन्त )—इसका क्या फल है ? भिद्यते स्वयमेव । [ भिदिर् अजन्त नहीं है । ] कर्तृग्रहण किस लिए है ? लूयते केदारो देवदत्तेन । [ यहाँ शुद्ध कर्म में यक् किया गया है, कर्मकर्ता में नहीं । अतः प्रस्तुत सूत्र नहीं लगता है । ] ॥ १९५ ॥

---

१. १. अयं पाठो न्यासानुसारी । अन्यत्र 'अदुपदेशभक्त' इति न दृश्यते ।

## २६३६. थलि च सेटीडन्तो वा ॥ १९६ ॥ ( ३७२२ )

**सेटि थलि इट् वा उदात्तो भवति अन्तो वा आदिर्वाऽन्यतरस्याम्। लुलविथ लुलविथ, लुलविथ।**

**यदा नैते त्रयः स्वराः, तदा 'लिति' ( ६.१.१९३ ) प्रत्ययात्पूर्वमुदात्तं भवति। तेनैते चत्वारः स्वराः पर्यायेण भवन्ति।**

**सेटीति किम् ? ययाथ। 'लिति' प्रत्ययात्पूर्वमुदात्तम्—इत्ययमेवात्र स्वरो भवति।**

## २६३७. ञ्नित्यादिर्नित्यम् ॥ १९७ ॥ ( ३६८६ )

**ञिति निति च नित्यमादिरुदात्तो भवति। 'गर्गादिभ्यो यञ्', ( ४.१.१०५ ) गार्ग्यः। वात्स्यः।**

**न्यासः**

**थलि च सेटीडन्तो वा ॥** 'अन्यतरस्याम्' इत्यनुवर्त्तमाने वाग्रहणं कार्यिणो विकल्पार्थम्। अन्यतरस्यां ग्रहणेन कार्यं विकल्प्यते, बाग्रहणेन तु कार्यिणः। तेनेडादयः पर्यायेण कार्यं प्रतिपद्यन्ते। **लुलविथेति।** क्रादिनियमादिट्। **ययाथेति।** 'अचस्तास्वत्थल्यनिटो नित्यम्' इतीटो वा प्रतिषेधः ॥ १९६ ॥

**ञ्नित्यादिर्नित्यम् ॥ वासुदेवक इति।** वासुदेवो भक्तिरस्येत्यर्थे वुन्।

**पदमञ्जरी**

**थलि च सेटीडन्तो वा ॥** 'अन्यतरस्याम्' इति वर्त्तमाने वाग्रहणं कार्यिविकल्पार्थम्। अन्यतरस्यांग्रहणेन कार्यं विकल्प्यते, वाग्रहणेन कार्यिणः। तेनेडादयः पर्यायेण कार्यं प्रतिपद्यन्ते। ननु च 'अन्तश्च तवै युगपत्' इत्यादौ युगपद्ग्रहणादेवान्यत्र पर्यायः सिद्धः? सत्यम्; अदेरपि प्राप्ते वाग्रहणम्; अन्यथा श्रुतयोरिडन्तयोरेव कार्यित्वं विकल्पेत, वाग्रहणे तु सति यद्येवं विकल्पोऽर्थः, अथापि समुच्चयः, सर्वथादेरपि भवति।

**सेटीति किमिति।** इड्ग्रहणादेव थल् सेट् ग्रहीष्यत इति प्रश्नः। **ययाथेति।** अयमभिप्रायः—इड्ग्रहणं यदेडागमः क्रियते तदा तस्योदात्तार्थं स्यात्, ततश्च यथा लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तविधाने ययिथेत्यादौ चतुर्थाभावेऽपि पर्यायेणोदात्तत्रयं भवति, एवमिडभावेऽपि स्यादिति ॥ १९६ ॥

**ञ्नित्यादिर्नित्यम् ॥ प्रत्ययस्वरापवाद इति।** बाहुल्यादेवमुक्तम्। 'श्रोत्रियंश्छन्दोऽधीते' इति, अत्र हि वाक्यार्थे पदवचनमित्यत्र पक्षे न प्रत्ययस्वरप्रसङ्गः।

**भावबोधिनी**

सेट् ( इट् सहित ) थल परे रहते इट् विकल्प से उदात्त होता है, आदि अथवा अन्त विकल्प से उदात्त होता है। उद०—लुलविथ। [ लु + लिट् = सिप् = थल्, द्वित्व, इट्, गुण अव् आदेश। ] पूर्वोक्त रीति से इट्, आदि, अन्त—तीनों पर्याय से उदात्त होते हैं। ] परन्तु जब ये तीनों स्वर नहीं होते हैं तब "लिति" इस पूर्वोक्त सूत्र से प्रत्यय से पूर्व उदात्त होता है। इस कारण ये चार स्वर पर्याय से होते हैं। [ अतः लुलविथ में चार प्रकार के स्वरों का प्रयोग होता है। ]

सेटि—इसका क्या फल है ? ययाथ। [ यह अनिट् है। ] 'लिति" इससे प्रत्यय से पूर्व उदात्त होता है—यही स्वर यहाँ पर होता है।

**विमर्श**—'अन्यतरस्याम्' की अनुवृत्ति सम्भव रहने पर भी 'वा' का ग्रहण कार्यी का भी विकल्प करने के लिए है। इस कारण इट्, आदि, अन्त—इन तीनों का भी विकल्प होने पर "लिति" सूत्र से प्रत्यय से पूर्व उदात्त होता है। अतः एक विकल्प कार्य का और दूसरा कार्यिओं का विकल्प बताता है। इस लिए पर्याय से एक बार तीनों कार्यी उदात्त होते हैं। पक्ष में लित् से पूर्व उदात्त होता है। इस प्रकार चार प्रकार से स्वर हों—इसी लिए 'वा' का ग्रहण है ॥ १९६ ॥

जित् [ ञ् की इत्संज्ञावाला ] और नित् [ न् की इत्संज्ञावाला ] परे रहने पर नित्य आदि उदात्त होता। उदा०—'गर्गादिभ्यो यञ्" से यञ् प्रत्यय होने पर—गार्ग्यः। वात्स्यः। [ आदि उदात्त होता है। ] "वासुदेवार्जुनाभ्यां वुन्" सूत्र

**'वासुदेवार्जुनाभ्यां वुन्' ( ४.३.९८ ) -- वासुदेवकः, अर्जनकः । प्रत्ययस्वरापवादोऽयं योगः ।**

**प्रत्ययलक्षणमत्र नेष्यते, तेन गर्गाः, बिदाः, चञ्चाः-इत्यत्र यञि कनि च लुप्ते न भवति ॥**

**२६३८. आमन्त्रितस्य च ॥ १९८ ॥ ( ३६५३ )**

**आमन्त्रितस्यादिरुदात्तो भवति । देवदत्त ! देवदत्तौ, देवदत्ताः । अत्र 'कारकाद्दत्तश्रुतयोरेवाशिष' ( ६.२.१४८ ) इति प्राप्तिर्बाध्यते ।**

**लुमतापि लुप्ते प्रत्ययलक्षणमत्रेष्यते । सर्पिरागच्छ, सप्तागच्छतेति ॥**

**न्यासः**

यथेह गर्गा, विदा इति 'यञञोश्च' इति बहुषु लुकि कृते, चञ्चेव चञ्चेत्यत्र च 'इवे प्रतिकृतौ' इत्युत्पन्नस्य कनः 'लुम् मनुष्ये' इति लुपि कृते कस्मान्न भवति, लुप्तेऽपि प्रत्यये 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यस्ति प्राप्तिः ? इत्यत आह --**प्रत्ययलक्षणमत्र नेष्यत इति** । तत् कथं पुनरिष्यमाणो न भवति ? 'संज्ञाया-मुपमानम्' इत्यत्र वक्ष्यमाणाज्ज्ञापकात् । अथ वा--'न लुमताङ्गस्य' इत्यनेन यन्नाम किञ्चिदङ्गस्य कार्यमङ्गा-धिकारे विहितमेव, तेन प्रतिषेधादिह प्रत्ययलक्षणं स्वीकार्यं न भविष्यति । एवमुत्तरत्रापि प्रत्ययलक्षणाभावो वेदितव्यः । **यञि कनि च लुप्त इति** । चकाराद् विदाद्यञि च ॥ १९७ ॥

**आमन्त्रितस्य च ॥ देवदत्तेति** । ददातेः 'क्तिच्क्तौ च संज्ञायाम्' इत्याशिषि क्तः, 'दो दद् घोः' इति धातोर्ददादेशः । दत्तशब्दस्य देवशब्देन 'कर्तृकरणे कृता बहुलम्' इति समासः । **सर्पिरागच्छेति** । 'स्वमोर्नपुंसकात्' इति विभक्तेर्लुक् । **सप्तागच्छतेति** । अत्रापि 'षड्भ्यो लुक्' इति च ॥ १९८ ॥

**पदमञ्जरी**

**प्रत्ययलक्षणमत्र नेष्यत इति** । ननु च 'न लुमताङ्गस्य' इति प्रतिषेधादेव प्रत्ययलक्षणं न करिष्यते, किमुच्यते--प्रत्ययलक्षणमत्र नेष्यत इति ? एवमन्यतो ज्ञापितमेतत्--'स्वरविधौ सप्तम्यस्तदन्तसप्तम्यः' इति । ततश्च यथा पूर्वसूत्रे थलन्तं कार्यि; तथात्रापि ञ्निदन्तं कार्यि, न तु ततः पूर्वमङ्गमित्यनङ्गकार्यत्वात्प्रतिषेधो न सिद्ध्यतीति । **यञि कनि चेति** । चकाराद्विदाद्यञि च ॥ १९७ ॥

**आमन्त्रितस्य च** ॥ अत्र 'कारकाद्दत्तश्रुतयोरेवाशिषि' इति प्राप्तिः प्रतिषिद्ध्यते, शेषनिघातेन बाध्यत इत्यर्थः । **प्रत्ययलक्षणमत्रेष्यत इति** । षष्ठीनिर्देशेन तत्कार्यस्य स्पष्टत्वात् । **सर्पिरिति** । 'सृपेरिसिः' ( द० उ० ९.३० ), सर्पिःशब्दोऽन्तोदात्तः, 'स्वमोर्नपुंसकात्' इति सोर्लुक् । सप्तशब्दो घृतादित्वादन्तोदात्तः, 'षड्भ्यो लुक्' इति जसो लुक् ॥ १९८ ॥

**भावबोधिनी**

से वुन् प्रत्यय करने पर--वासुदेवकः । अर्जुनकः । [ वुन् में न् इत् होने से नित् है । आदि उदात्त होता है । ] यह [ "प्रत्ययाश्च" से प्राप्त ] प्रत्ययस्वर का अपवाद है ।

इसमें प्रत्ययलक्षण नहीं माना जाता है, इस लिए--गर्गाः, विदाः, चञ्चाः--इनमें यञ् और कन् का लोप हो जाने पर उन को मान कर यह स्वर नहीं होता है ॥ १९७ ॥

आमन्त्रित का आदि उदात्त होता है । उदा०--देवदत्त ! देवदत्तौ ! देवदत्ताः ! [ यहाँ "साऽमन्त्रितम्" (२।३।४८) से सम्बोधन प्रथमा की आमन्त्रित संज्ञा होती है । अतः इन सभी का आदि उदात्त हो जाता है । ] इनमें "कारकाद्दत्त-श्रुतयोरेवाशिषि" ( पा० सू० ६.२.१४८ ) इस की प्राप्ति का बाध है ।

यहाँ लुमान् से किया गया भी लोप रहने पर, प्रत्ययलक्षण इष्ट है--सर्पिरागच्छ, सप्तागच्छत । [ सर्पिः नपुंसक है अतः सुलुक् होने पर भी प्रत्ययलक्षण से आमन्त्रित मान कर स्वर होता है । सप्तन् + जस् में "षड्भ्यो लुक्" से जस् का लुक् हो जाने पर भी प्रत्ययलक्षण से आमन्त्रित्व-प्रयुक्त स्वर हो जाता है । ]॥ १९८ ॥

## २६३९. पथिमथोः सर्वनामस्थाने ॥ १९९ ॥ ( ३६८७ )

**पथिमथिशब्दावौणादिकाविनिप्रत्ययान्तौ प्रत्ययस्वरेणान्तोदात्तौ, तयोः सर्वनामस्थाने परत आदिरुदात्तो भवति । पन्थाः, पन्थानौ, पन्थानः । मन्थाः, मन्थानौ, मन्थानः ।**

**सर्वनामस्थान इति किम् ? पथः पश्य । मथः पश्य । उदात्तनिवृत्तिस्वरेणान्तोदात्तो भवति । प्रत्ययलक्षणमत्रापि नेष्यते ।**

**पथिप्रियः—इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः पथिशब्दः ॥**

## २६४०. अन्तश्च तवै युगपत् ॥ २०० ॥ ( ३६८८ )

**तवैप्रत्ययान्तस्यान्तः, चशब्दादादिश्च युगपदुदात्तौ भवतः । कर्त्तवै । हर्त्तवै । प्रत्ययाद्युदात्तत्वापवादः ।**

### न्यासः

**पथिमथोः सर्वनामस्थाने ॥ पथिमथिशब्दावित्यादि ।** 'गमेरिनिः' इत्यत इनिप्रत्यये वर्त्तमाने 'मन्थ' इतीनिप्रत्ययः, अतो मथिन्शब्दो व्युत्पाद्यते, 'परमे कित्' इत्यतः किद्ग्रहणानुवृत्तेर्मन्थेरनुनासिकलोपः । **'पतस्थ च'** इति पथिन्शब्दोऽपीनिप्रत्ययान्त इति तेनैतौ प्रत्ययस्वरेणान्तोदात्तौ । **पन्था इति ।** 'पथिमथ्यृभुक्षामात्' इत्याकारान्तादेशः, 'इतोऽत् सर्वनामस्थाने' इतीकारस्यात्वम्, 'थो न्थः' इति थस्य न्थादेशः ।

**पथः पश्येति ।** 'भस्य टेर्लोपः' इति टिलोपः । तत्र कृते 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यन्तोदात्तत्वम् । **पथिप्रिय इति ।** पन्थाः प्रियो यस्येति बहुव्रीहिः । 'वा प्रियस्य' इति प्रियशब्दस्य पक्षे परनिपातः ॥ १९९ ॥

**अन्तश्च तवै युगपत् ॥ कर्तवा इति ।** 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति तवैप्रत्ययः । किं पुनः कारणं

### पदमञ्जरी

**पथिमथोः सर्वनामस्थाने ॥ पथिमथिशब्दावित्यादि ।** 'गमेरिनिः' ( द० उ० ६.५७ ), 'पुषः कित्' ( द० उ० ८.७१ ), 'मन्थः', 'पतेःस्थश्च' ( द० उ० ६.६३ ), इतीनिप्रत्ययः, मन्थः कित्त्वादुपधालोपः—पन्थाः, मन्था इति । 'पथिमथ्यृभुक्षामात्' इत्यादिकार्यम् ।

**पथः पश्येति ।** भस्य टेर्लोपः । प्रत्ययलक्षणमत्रापि नेष्यते । अतिप्रसङ्गस्तु पूर्ववत् ॥ १९९ ॥

**अन्तश्च तवै युगपत् ॥ कर्त्तवै इति ।** 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति तवै प्रत्ययः । किं पुनः कारणं पर्याय-

### भावबोधिनी

पथिन् और मथिन् शब्द औणादिक इन् प्रत्ययान्त हैं, प्रत्ययस्वर से अन्तोदात्त हैं, इन दोनों का सर्वनामस्थान-संज्ञक प्रत्यय परे रहते आदि उदात्त होता है । उदा०—पन्थाः, पन्थानौ, पन्थानः । मन्थाः, मन्थानौ, मन्थानः । [ पथिन् और मथिन् के प्रथमा के तीनों वचनों के रूपों में आदि उदात्त हो जाता है । ]

सर्वनामस्थान परे—इसका क्या फल है ? पथः पश्य । मथः पश्य । [ द्वितीया बहुवचन है, सर्वनामस्थान नहीं है । ] इसमें उदात्त-निवृत्त-स्वर से अन्तोदात्त होता है । [ पथिन् + शस् = अस्, टि लोप के बाद "अनुदात्तस्य च यत्रोदात्तलोपः" सूत्र से अन्तोदात्त हो जाता है । ] यहाँ भी प्रत्ययलक्षण इष्ट नहीं है ।

पथिप्रियः—इस ( बहुव्रीहि ) में पूर्वपद के प्रकृतिस्वर से 'पथि' शब्द अन्तोदात्त है ॥ १९९ ॥

'तवै' प्रत्यय जिसके अन्त में है उसका अन्त, और 'च' शब्द से आदि भी—ये दोनों एक साथ उदात्त होते है । उदा०—कर्त्तवै । हर्तवै । यह प्रत्यय के आद्युदात्तत्व का अपवाद है । [ "कृत्यार्थे तवै केन् केन्यत्वनः" (पा० सू० ३.४.१४) सूत्र से 'तवै' प्रत्यय होता है । यहाँ आदि और अन्त दोनों एक साथ उदात्त होते हैं । ]

युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । 'एकवर्जम्' इति वचनाद्यौगपद्यं न स्यात् ॥

## २६४१. क्षयो निवासे ॥ २०१ ॥ ( ३६८९ )

क्षयशब्दो निवासेऽभिधेये आद्युदात्तो भवति । क्षियन्ति = निवसन्त्यस्मिन्निति क्षयः, 'पुंसि संज्ञायां घः प्रायेण' ( ३.३.११८ ) इति घप्रत्ययान्तस्य प्रत्ययस्वरः प्राप्तः । क्षये जागृहि प्रपश्यन् । ( ऋ० १०.११८.१ )

निवास इति किम् ? क्षयो वर्तते दस्यूनाम् । 'एरच्' ( ३.३.५६ ) इत्ययमजन्तः ॥

## २६४२. जयः करणम् ॥ २०२ ॥ ( ३६९० )

जयशब्दः करणवाची आद्युदात्तो भवति । जयन्ति तेनेति जयः । 'पुंसि संज्ञाया घः प्रायेण' (३.३.११८) इति घ, तस्य प्रत्ययस्वरः प्राप्तः । जयोऽश्वः ।

करणमिति किम् ? जयो वर्तते ब्राह्मणानाम् । अत्रापि 'एरच्' ( ३.३.५६ ) इत्ययमजन्तः ॥

### न्यासः

पर्यायनिवृत्तये यत्नः क्रियते ? इत्याह—एकवर्जमित्यादि ॥ २०० ॥

क्षयो निवासे ॥ क्षय इति । 'क्षि निवासगत्योः' इत्यस्येदं रूपमिति ॥ २०१ ॥

जयः करणम् ॥ जय इति । 'जि ज्रि अभिभवे' ( धा० पा० १०१२, १०१३ ) इत्यस्य जयते रूपमेतत् ।

जयो ब्राह्मणानामिति । भावे 'एरच्' ॥ २०२ ॥

### पदमञ्जरी

निवृत्तये यत्नः क्रियते ? इत्याह—एकवर्जमिति हीत्यादि[1] ॥ २०० ॥

क्षयो निवासे ॥ 'क्षि निवासगत्योः' (धा० पा० १४०७)—इत्यस्माद् अधिकरणे घः । क्षयो दस्यूनामिति । क्षयेरच्, कर्त्तरि षष्ठी ॥ २०१ ॥ २०२ ॥

### भावबोधिनी

युगपद्—इसका ग्रहण पर्याय की निवृत्ति के लिए है । और [ "अनुदात्तं पदमेकवर्जम्" के ] "एकवर्जम्" एक को छोड़कर—इस वचन से यौगपद्य न होने लगे । [ एक उदात्त शेष अनुदात्त न होने लगे—इस लिए 'युगपत्' का ग्रहण किया गया है । ] ॥ २०० ॥

निवास' अर्थ रहने पर 'क्षय' शब्द आद्युदात्त होता है । क्षियन्ति = निवसन्ति अस्मिन्—इस अर्थ में 'क्षयः' बना है । 'पुंसि संज्ञायां घः प्रायेण' ( पा० सू० ३.३.११८ ) से घ-प्रत्ययान्त का प्रत्ययस्वर अन्तोदात्त प्राप्त है । [ उसको बाधकर यह आद्युदात्त होता है । ] उदा०—क्षये जागृहि प्रपश्यन् ।

निवास—यह किस लिये है ? क्षयो वर्तते दस्यूनाम् । यहाँ 'एरच्' ( पा० सू० ३.३.५६ ) सूत्र से अच् प्रत्ययान्त [ क्षि क्षये धातु का ] रूप है । [ अतः आद्युदात्त नहीं होता है । ] ॥ २०१ ॥

'जय' शब्द करणवाची आद्युदात्त होता है । जयन्ति तेन—जयः । "पुंसि संज्ञायां घः प्रायेण" (पा० सू० ३.३.११८) सूत्र से 'घ' प्रत्यय है । उसका प्रत्ययस्वर प्राप्त है । उदा०—जयः अश्वः । [ जिससे जीता जाय वह घोड़ा—जयः है । ]

करण—इसका क्या फल है ? जयो वर्तते ब्राह्मणानाम् । यहाँ भी 'एरच्' ( ३.३.५३ ) सूत्र से अच् प्रत्ययान्त है । [ भाव अर्थ में अच् प्रत्यय होने से करण अर्थ की प्रतीति नहीं होती है । ] ॥ २०२ ॥

---

१, 'हि' इति नास्ति काशिकायाम् ।

## २६४३. वृषादीनां च ॥ २०३ ॥ ( ३६९१ )

'वृष' इत्येवमादीनामादिरुदात्तो भवति । वृषः । जनः । ज्वरः । ग्रहः । हयः । गयः । सर्वे एते पचाद्यच्प्रत्ययान्ताः । गय इत्यत्र गायतेर्निपातनादेत्वम् ।

नयः । तयः । अयः । अंशः । वेदः । अशः । दवः । एतेऽपि तथैवाच्प्रत्ययान्ताः । सूदः— इगुपधात् ( ३.१.१३५ ) इति कप्रत्ययान्तः । गुहा— भिदादिः, अङ्प्रत्ययान्तः ( ३.३.१०४ ) ॥

**न्यासः**

वृषादीनाञ्च ॥ वृषः जनः, ज्वरः, ग्रहः हयः, गय इति । 'वृषु मृषु सेचने', 'जनी प्रादुर्भावे', 'ज्वर रोगे', 'ग्रह उपादाने', 'हि गतौ', 'कै गै शब्दे'— सर्व एतेऽच्प्रत्ययान्ता इति । पचादित्वात् । एतेन चित्स्वरे प्राप्ते पाठ एषामिति दर्शयति ।

नयः, तयः, अयः, अंशः, वेदः, सूदः, अश इति । 'णीञ् प्रापणे', 'तायृ सन्तानपालनयोः' क्वचित् तय इत्यस्य स्थाने चय इति पठ्यते, स चिनोतेर्द्रष्टव्यः । 'इण् गतौ' । अथ वा— अय वय मय चय इत्यादेः । 'अंश समाधाने', विद ज्ञाने', 'षूद क्षरणे', 'अश भोजने' सूद इगुपधेति कप्रत्ययान्त इति । एतेऽपीति यदुक्तम्, तस्यायमपवादः । गुहेति । 'गुहू संवरणे' ।

**पदमञ्जरी**

वृषादीनां च ॥ 'वृषु सेचने' ( धा० पा० ७०६ ), 'जनी प्रादुर्भावे' ( धा० पा० ११४९ ), 'ज्वर रोगे' ( धा० पा० ७७६ ), 'हि गतौ' ( धा० पा० १२५७ ), 'कै गै रै शब्दे' ( धा० पा० ९१६, १७, ९ ) । एते सर्वेऽच्प्रत्ययान्ता इति । पचादित्वात् । बाहुल्याच्चेदमुक्तम् । वृषः—इत्यत्रेगुपधलक्षणः कः । 'णीञ् प्रापणे' ( धा० पा० ९०१ ), 'तायृ सन्तानपालनयोः' ( धा० पा० ४८९ ) । केचित्तय इति पठन्ति, 'अय पय तय गतौ' ( धा० पा० ४७४, ४७६, ४७९ ), 'क्वचिच्चयशब्दः पठ्यते, स चिनोतेर्द्रष्टव्यः । 'इण गतौ' ( १०४५ ), 'अंश समाधाने' ( १९१८ ), 'विद ज्ञाने' ( १०६४ ), 'षूद निरासे' ( २५ ), 'दु दाहे' ( ९४४ ) । 'वद व्यक्तायां वाचि' ( १००९ ), 'अत सातत्यगमने' ( ३८ ) । केचिदेतौ न पठन्ति । 'गुहू संवरणे' ( ८९६ ), 'शम उपशमे' ( १२०१ ), 'अण रण शब्दे' ( ४४४, ४४५ ) ।

**भावबोधिनी**

'वृष' आदि का आदि उदात्त होता है । उदा०—वृषः । जनः । ज्वरः । ग्रहः । हयः । गयः । ये सभी पचादि मान कर अच् प्रत्ययान्त हैं । गयः—[ √गै धातु का ] निपातन से एत्व [ = गे] हो जाता है । [ अतः गे + अच् = एकार का अय् होता है । अन्यथा 'गै' का आय् करने पर 'गायः' बनता है । ]

[ वृष् = सेचनार्थक, जनी प्रादुर्भावार्थक, ज्वर रोगार्थक, ग्रह उपादानार्थ, हि गत्यर्थक, गै शब्दार्थक है । इनमें 'नन्दिग्रहपचादिभ्यो ल्युणिन्यचः'' ( ३.१.१३४ ) सूत्र से पचादि को आकृतिगण मानकर कर्ता अर्थ में अच् = अ प्रत्यय है । ''चितः'' ( ६.१.१६९ ) सूत्र से अन्तोदात्तत्व की प्राप्ति में आद्युदात्त किया जा रहा है । ]

नयः । तयः । अयः । अंशः । वेदः । सूदः । अशः । दवः । ये शब्द भी पूर्ववत् पचादि मानकर अजन्त ही हैं । सूदः—यह 'इगुपधात्' ( ६.१.१३ ) से 'क' ( अ ) प्रत्ययान्त है । गुहा—यह भिदादि है [ ''षिद्भिदादिभ्योऽङ्'' ( ६.३.१०४ ) से ] अङ् प्रत्ययान्त है ।

[ नी प्रापणार्थक, ताय् सन्तान और पालन अर्थवाली, इण् गत्यर्थक अथवा 'अय गत्यर्थक' 'अंश समाधानार्थक, 'विद ज्ञानार्थक, 'अश भोजनार्थक, दु दाहार्थक हैं—इन में पचादिगणीय मान कर अच् प्रत्यय होता है । [ कहीं-कहीं वद व्यक्त-वदनार्थक और अत सातत्यगमनार्थक भी पठित हैं । षूद निरासार्थक, गूहू संवरणार्थक हैं । ]

**❀ शमरणौ संज्ञायां सम्मतौ भावकर्मणोः ❀** ( ग० सू० १७० ) **शमो॑। भावे। रणः॑ कर्मणि। अजन्तावेतौ निपातनाद् भावकर्मणोर्भवतः। मन्त्रः॑ पचाद्यजन्तः। शान्तिः॑—इति क्तिजन्तः। कामः॑, यामः॑—घञन्तावेतौ।**

**आरा॑, धारा॑, कारा॑—भिदादयः। वहः॑—गोचरादिषु घप्रत्ययान्तः। कल्पे॑ः—अजन्तः। पादः॑—घञन्तः। तत्र क्वचित्प्रत्ययस्वरः प्राप्तः, क्वचित् 'कर्षात्वतो घञोऽन्त उदात्तः'** ( ६.१.१५९ ) **इति। वृषादिराकृतिगणः। अविहितमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम्॥**

### न्यासः

**शमरणौ संज्ञायामिति।** 'शमु उपशमे', 'अण रण' इति शब्दार्थः। संज्ञाया अन्यत्रान्तोदात्तावेव भवतः। **सम्मतौ भावकर्मणोरिति।** शमरणाविति वर्त्तते। सम्मतावर्थे विवक्षिते शमरणौ भावकर्मणोर्यथाक्रममाद्युदात्तौ भवतः। **मन्त्र इति।** 'मत्रि गुप्तभाषणे'। केचित्तु—**संमतौ भावकर्मणोर्मन्त्र इति** पठन्ति। तस्य मन्त्रे विषयीभूत इत्येषोऽर्थो वेदितव्यः। **शान्तिरिति।** 'शमु उपशमे', **'क्तिच्क्तौ च संज्ञायाम्'** इति क्तिच्। **कामः, याम इति।** 'कमु कान्तौ', 'यम उपरमे'। **घञन्ताविति।** 'कर्षात्वतो घञोऽन्त उदात्तः' इत्येतस्मिन् प्राप्तेऽस्य पाठः।

**कल्प इति।** 'कृपू सामर्थ्ये'। **पाद इति।** 'पद गतौ'। **वृषादिराकृतिगण इति।** तदेव चाकृतिगणत्वं ज्ञापयितुं चकारः कृतः॥ २०३॥

### पदमञ्जरी

**सम्मतौ भावकर्मणोरिति।** शमरणाविति वर्त्तते, सम्मतावर्थे शमरणौ भावकर्मणोर्यथाक्रममाद्युदात्तौ भवतः। 'मत्रि गुप्तभाषणे' ( १६७९ )। **शान्तिरिति।** शमेः क्तिचि 'कमु कान्तौ' ( धा० पा० ४४३ ), 'यमु उपरमे' ( ९८४ )। केचिद्यमशब्दं न पठन्ति।

'ऋ शब्दे गतौ' ( धा० पा० ९३६ ), 'धृञ् धारणे' ( धा० पा० ९०० ), 'कॄ विक्षेपे' ( धा० पा० १४०९ ), भिदादिषु निपातनाद्वृद्धिः। 'वह प्रापणे' ( धा० पा० १००४ ), 'कृपू सामर्थ्ये' ( धा० पा० ७६२ ), 'पद गतौ' ( धा० पा० ११६९ )॥ २०३॥

### भावबोधिनी

❀ शम और रण संज्ञा में क्रमशः भाव तथा कर्म अर्थों में आद्युदात्त होते हैं ❀ शमः—भाव अर्थ में और रणः कर्म अर्थ में, ये दोनों अजन्त भाव कर्म में निपातन से होते हैं। 'मन्त्र' पचादि—अजन्त है। शान्तिः—यह क्तिच्-प्रत्ययान्त है। कामः, यामः—ये दोनों घञन्त हैं।

[ शम् उपशमार्थक, रण शब्दार्थक है। मत्रि गुप्तभाषणार्थक है। शम उमशमार्थक से संज्ञा में क्तिच् है। कमु कान्ति = इच्छा अर्थवाला और यम उपरमार्थक है। इनमें अलग-२ स्वरों की प्राप्ति में आद्युदात्त ही होता है। ]

आरा, धारा, कारा—ये भिदादि के अन्तर्गत हैं [ अतः 'षिद्भिदादिभ्योऽङ्'' २।३।१०४ सूत्र से अङ् प्रत्यय होता है। इनमें निपातन से वृद्धि होती है। अतः ऋ, धृ, कॄ से अङ् प्रत्यय, वृद्धि, रपर टाप् करने के बाद आद्युदात्त हो जाता है। ] वहः—गोचरादि में घ-प्रत्ययान्त हैं। [ ''गोचरसंचर'' ( पा० सू० ३।३।११९ ) सूत्र से घ-प्रत्ययान्त निपातित हैं ] कल्पः—अजन्त है। [ सामर्थ्य अर्थवाली कृप् से अच् प्रत्यय है। ] पादः—यह घञन्त है। [ गत्यर्थक पद धातु से घञ्, उपधावृद्धि है। ] इनमें कहीं पर प्रत्ययस्वर ( अन्तोदात्त ) प्राप्त है और कहीं ''कर्षात्वतो घञोऽन्त उदात्तः'' से प्राप्त है। वृषादि आकृतिगण है। जिसका आद्युदात्तत्व विहित नहीं है, वह वृषादि शब्दों में समझना चाहिए। [ और उसका आद्युदात्त करना चाहिए। ]॥ २०३॥

## २६४४. संज्ञायामुपमानम् ॥ २०४ ॥ ( ३६९२ )

उपमानशब्दः संज्ञायामाद्युदात्तो भवति। चञ्चा। वध्रिका। खरकुटी। दासी। उपमानशब्दा एते उपमेयस्य संज्ञाः। तत्र 'इवे प्रतिकृतौ' ( ५.३.९६ ) इति यः कन् तस्य 'लुम्मनुष्ये' ( ५.३.९८ ) इति लुप्।

यद्येवम्, किमर्थमिदमुच्यते, प्रत्ययलक्षणेन सिद्धमाद्युदात्तत्वम्? एतदेव ज्ञापयति—क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवतीति। तथा च पूर्वत्रोदाहृतम्।

संज्ञायामिति किम्? अग्निर्माणवकः। उपमानमिति किम्? देवदत्तः॥

## २६४५. निष्ठा च द्व्यजनात् ॥ २०५ ॥ ( ३६९३ )

निष्ठान्तं च द्व्यच् संज्ञायां विषये आद्युदात्तं भवति स चेदादिराकारो न भवति। दत्तः। गुप्तः। बुद्धः। प्रत्ययस्वरापवादः।

### न्यासः

संज्ञायामुपमानम् ॥ यद्येवमिति। यदि कनो लुबित्यर्थः, कनोऽपि लुपि सत्यपि प्रत्ययलक्षणेनैव सिद्धमेषां हि नित्स्वरेणाद्युदात्तत्वम्, तदपार्थकमित्यभिप्रायः। एतदेवेत्यादि। यदि हि क्वचित् स्वरविधौ प्रत्ययलक्षणं स्यात्, कर्त्तव्यमेवेदं वचनं स्यात्। प्रत्ययलक्षणेन सिद्धत्वात्, कृतञ्च। तस्मादेतज्ज्ञापयति—प्रत्ययलक्षणमिह स्वरविधौ न भवतीति। क्वचिद्ग्रहणं क्वचित्तु भवतीति प्रदर्शनार्थम् तथा हि 'सर्वस्य सुपि' इत्यत्रोक्तम्—प्रत्ययलक्षणेनाप्ययं स्वर इष्यत इति। तथा चेत्यादिना ज्ञापनस्य प्रयोजनमाह।

अग्निर्माणवक इति। भवत्यग्निशब्द उपमानम्। तथा ह्यग्निरिवेति गम्यते, नासौ माणवकस्य संज्ञा॥ २०४॥

निष्ठा च द्व्यजनात् ॥ गुप्त इति। 'गुपू रक्षणे'। बुद्ध इति। 'बुध अवगमने'।

### पदमञ्जरी

संज्ञायामुपमानम् ॥ यद्येवमिति। यद्यत्र कनो लुबित्यर्थः। एतदेवेत्यादि। ज्ञापकाभावे तु सप्तमीनिर्देशेऽपि प्रत्ययलक्षणप्रतिषेधो न स्यात्, 'स्वरविधौ सप्तम्यस्तदन्तसप्तम्यः' इति ज्ञापनेन तदन्तस्य कार्यित्वात्। क्वचिदिति। वचनात्क्वचिद्भवत्येव, यथा—'सर्वस्य सुपि' इत्यत्र॥ २०४॥

निष्ठा च द्व्यजनात् ॥ इहाद्यात्तः अद्यात्त इत्येकादेशस्य बहिरङ्गत्वादसिद्धत्वाद् 'अनात्' इति प्रतिषेधा-

### भावबोधिनी

उपमानवाचक शब्द संज्ञा अर्थ में आद्युदात्त होता है। उदा०—चञ्चा। वध्रिका। खरकुटी। दासी। ये उपमान-वाचक शब्द उपमेय की संज्ञा है। इनमें 'इवे प्रतिकृतौ'' इस सूत्र से जो कन् होता है उसका लुप् = लोप ''लुम्मनुष्ये'' सूत्र से हो जाता है। [ इसके उदाहरणों के विषय में 'लुम्मनुष्ये'' ( ५।३।९८ ) सूत्र की काशिका में विवरण दिया जा चुका है। वहीं देखें ]

यदि ऐसा है तो यह सूत्र किसलिये कहा जा रहा है, प्रत्ययलक्षण से ही आद्युदात्तत्व सिद्ध है? यही ज्ञापित करता है—यहाँ स्वरविधि में कहीं-कहीं प्रत्यय-लक्षण नहीं भी होता है। जैसा कि यहीं पहले उदाहरणों में दिखाया गया है।

संज्ञा की प्रतीति में— इसका क्या फल है? अग्निर्माणवकः। [ अग्नि उपमान है किन्तु संज्ञा नहीं है। अतः आद्युदात्त नहीं होता है। ] उपमान हो—इसका फल है? देवदत्तः। [यह अकेला है किसी का उपमान नहीं है।] ॥२०४॥

निष्ठाप्रत्ययान्त जो दो अचों वाला वह संज्ञा विषय में आद्युदात्त होता है यदि वह आदि आकार न हो तो। उदा०—दत्तः। गुप्तः। बुद्धः। यह प्रत्ययस्वर का अपवाद है।

निष्ठेति किम् ? देवः । भीमः । द्व्यजिति किम् ? चिन्तितः । रक्षितः । अनादिति किम् ? त्रातः । आप्तः । संज्ञायामिति किम् ? कृतम् । हृतम् ॥

२६४६. शुष्कधृष्टौ ॥ २०६ ॥ ( ३६९४ )

'आदिरुदात्तः' इति वर्तते । शुष्क, धृष्ट—इत्येतावाद्युदात्तौ भवतः । शुष्कः । धृष्टः ।

असंज्ञार्थ आरम्भः ॥

२६४७. आशितः कर्ता ॥ २०७ ॥ ( ३६९५ )

आशितशब्दः कर्तृवाची आद्युदात्तो भवति । आशितो देवदत्तः । अशेरयमाङ्-पूर्वादविवक्षिते कर्मणि कर्तरि क्तः, तत्र 'थाथघञ्' ( ६.२.१४४ ) इति प्राप्तः स्वरो बाध्यते ।

**न्यासः**

देव इति । देवशब्दः पचाद्यजन्तत्वादन्तोदात्तः । भीमशब्दोऽपि मगन्तत्वात् प्रत्ययस्वरेण । 'इषियुधि' इत्याद्यधिकृत्य 'भियः षुग्वा' इति मक्प्रत्ययान्तो व्युत्पाद्यते । चिन्तित इति । 'चिति स्मृत्याम्', चौरादिकः, 'निष्ठायां सेटि' इति णिलोपः । रक्षित इति । 'रक्ष पालने' । त्रातः, आप्त इति । त्रैङ् पालने', 'आप्लृ व्याप्तौ ॥ २०५ ॥

शुष्कधृष्टौ ॥ शुष्क इति । 'शुष शोषणे', 'शुष कः' इति क्तस्य कादेशः । धृष्ट इति । 'ञिधृषा प्रागल्भ्ये', ष्टुत्वम् । कत्वष्टुत्वयोरसिद्धत्वादिह निष्ठान्तत्वं वेदितव्यम् ।

असंज्ञार्थ आरम्भ इति । संज्ञायां पूर्वेणैव सिद्धत्वात् ॥ २०६ ॥

आशितः कर्ता ॥ आशेरिति । 'अश भोजने' इत्यस्मात् कर्त्तरि क्तो निपात्यते 'गत्यर्थाकर्मक' इत्यादिना ।

**पदमञ्जरी**

भावः ।[1] भीष्मशब्दः 'भियः षुक्च' ( द० उ० ७.३५ ) इति मक्प्रत्ययान्तः ।

चिन्तित इति । 'चिति स्मृत्याम्' ( धा० पा० १५३५ ) चुरादिः ॥ २०५ ॥ २०६ ॥

आशितः कर्त्ता ॥ अशेरिति । 'अश भोजने' ( धा० पा० १५२३ ) इत्यस्मात् । आङ्पूर्वादविवक्षिते कर्मणीति । उक्तं हि—

'प्रासिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' ( वा० प० ३.७.८८ ) इति ।

कर्तरि क्त इति । 'गत्यर्थाकर्मक' इत्यादिना । भाष्ये तु 'कर्त्तरि क्तो निपात्यते' इति स्थितम् । यदि तर्ह्याङ्पूर्वकस्याशेराशित इति रूपम्, अवग्रहः प्राप्नोति, तस्मात् 'उपधादीर्घत्वमपि निपात्यते' ( कात्या० वा० ३७८७ ) इति वार्तिककारः । वृत्तिकारस्तु—'संहितापाठ एव नित्यः, पदपाठस्तु पौरुषेयः, ततश्च न लक्षणेन

**भावबोधिनी**

निष्ठा—इसका क्या फल है ? देवः । भीमः [ निष्ठा प्रत्यय नहीं है । ] दो अचों वाला—इसका क्या फल है ? चिन्तितः । रक्षितः । [ क्त प्रत्ययान्त होने पर भी तीन अचों वाला है । ] अनात्—इसका क्या फल है ? त्रातः । आप्तः । [ इनमें आदि आ ही है । ] संज्ञा में—यह किस लिए है ? कृतम्, हृतम् । [ संज्ञा न होने से यह स्वर नहीं होता है ] ॥ २०५ ॥

'आदिः उदात्तः' इनकी अनुवृत्ति होती है । शुष्क और धृष्ट—ये आद्युदात्त होते हैं । उदा०—शुष्कः । धृष्टः । [ शुष + क्त = त, "शुषः कः" सूत्र से निष्ठा का 'क' होता है । ]

संज्ञा से भिन्न के लिए यह सूत्र बनाया गया हैं ॥ २०६ ॥

---

१. काशिकायां 'भीमः' इति दृश्यते ।

कर्त्तरीति किम् ? आशितमन्नम् । आशितं देवदत्तेन । पूर्वत्र कर्मणि क्तः, उत्तरत्र भावे ॥

२६४८. रिक्ते विभाषा ॥ २०८ ॥ ( ३६९६ )

रिक्तशब्दे विभाषा आदिरुदात्तो भवति । रिक्तः रिक्तः 'संज्ञायाम् ( ६.१.२०४ ) 'निष्ठा च द्व्यजनात्' ( ६.१.२०५ ) इत्यनेन पूर्वविप्रतिषेधेन नित्यमाद्युदात्तः ॥

२६४९. जुष्टार्पिते चच्छन्दसि ॥ २०९ ॥ ( ३६९७ )

जुष्ट, अर्पित–इत्येते शब्दरूपे छन्दसि विषये विभाषा आद्युदात्ते भवतः। जुष्टः जुष्टः। अर्पितः। अर्पितः।

**न्यासः**

पूर्ववत् कर्मणि क्त इति । 'तयोरेव' इत्यादिना । उत्तरत्र भाव इति । 'नपुंसके भावे क्तः' इति ॥ २०७ ॥

रिक्ते विभाषा ॥ क्ति इति । 'रिचिर् विरेचने' । प्रत्ययस्वरे प्राप्त आदेर्विभाषोदात्तत्वं विधीयते । संज्ञायामित्यादि । 'निष्ठाच द्व्यजनात्' इत्यस्यावकाशः—दत्तः, गुप्त इति, अस्यावकाशोऽसंज्ञायाम्—रिक्तो घट इति; यदा तु रिक्तशब्दः कस्यचित् संज्ञा भवति, तदोभयोः प्राप्तौ पूर्वविप्रतिषेधेन 'निष्ठा च द्व्यजनात्' इति नित्यमाद्युदात्तो भवति । न च पूर्वविप्रतिषेधो वक्तव्यः, परशब्दस्येष्टवाचित्वात् ॥ २०८ ॥

जुष्टार्पिते चच्छन्दसि ॥ जुष्ट इति । 'जुषी प्रीतिसेवनयोः' । अर्पित इति । अर्त्तेर्णिच्, 'अर्त्तिह्री'

**पदमञ्जरी**

पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्' इति मन्यते । अपर आह—अशेर्ण्यन्तस्य प्रयोज्यकर्त्तरि 'गतिबुद्धिप्रत्यवसानार्थ' इति कर्मसंज्ञके निष्ठायामाशित इति रूपम्, स एवात्र भूतपूर्वगतया कर्त्ता विवक्षित इति ॥ २०७ ॥

रिक्ते विभाषा ॥ रिक्त इति । 'रिचिर्विरेचने' ( धा० पा० १४४१ ), । संज्ञायामित्यादि । 'निष्ठा च द्व्यजनात्' इत्यस्यावकाशः—दत्तः, गुप्तः, अस्यावकाशोऽसंज्ञायाम्—रिक्तो घट इति; संज्ञायामुभयप्रसंगे पूर्वविप्रतिषेधः ॥ २०८ ॥

जुष्टार्पिते चच्छन्दसि ॥ अर्पित इति । 'जुषी प्रीतिसेवनयोः' ( धा० पा० १२८८ ), 'श्वीदितो निष्ठायाम्'

**भावबोधिनी**

कर्तृवाची आशित शब्द आद्युदात्त होता है । उदा०—आशितः देवदत्त । यह आङ्पूर्वक अश धातु से कर्म के अविवक्षित रहने पर कर्ता अर्थ में क्त प्रत्यय हुआ है । उसमें "थाथघञ्" ( पा० सू० ६।२।१४४ ) से प्राप्त स्वर का बाध होता है ।

कर्ता अर्थ में—इसका क्या फल है ? आशितम् अन्नम् । आशितं देवदत्तेन । इनमें पहले वाले में कर्म अर्थ में 'क्त' है और दूसरे वाले में भाव में 'क्त' है । [ अतः कर्ता अर्थ न होने से आदि उदात्त न होकर प्राप्त स्वर ही होता है । ] ॥ २०७ ॥

रिक्त शब्द विकल्प से आदि उदात्त होता है । उदा०—रिक्तः । रिक्तः । संज्ञाविषय में 'निष्ठा च द्व्यजनात्" ( ६।१।२०५ ) इस सूत्र द्वारा पूर्व विप्रतिषेध से नित्य ही आद्युदात्त होता है । [ अन्य अर्थ में विकल्प से आद्युदात्त होता है । पक्ष में "थाथघञ्" ( ६।२।१४४ ) से अन्तोदात्त होता है । 'विप्रतिषेधे परम्' इस सूत्र में 'पर' शब्द परवर्त्ती का वाचक नहीं है अपि तु 'इष्ट' अर्थ का । अतः कहीं पूववर्त्ती और कहीं परवर्त्ती जो भी इष्ट हो, वही किया जाना चाहिए । इसी लिए यहाँ पूर्वविप्रतिषेध लिखा गया है । ] ॥ २०८ ॥

जुष्ट और अर्पित—ये शब्दरूप वेद विषय में विकल्प से आद्युदात्त होते हैं । उदा०—जुष्टः । अर्पितः ।

**छन्दसीति किम् ? भाषायां प्रत्ययस्वरेणान्तोदात्तावेतौ ॥**

## २६५०. नित्यं मन्त्रे ॥ २१० ॥ ( ३६९८ )

**जुष्ट, अर्पित-इत्येते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते भवतः। जुष्टं देवानाम्। अर्पितं पितॄणाम्। पूर्वेणात्र विकल्पः प्राप्तः।**

**केचिदत्र 'जुष्ट'—इत्येतदेवानुवर्तयन्ति। अर्पितशब्दस्य विभाषा मन्त्रेऽपीच्छन्ति। अन्तोदात्तोऽपि ह्ययं मन्त्रे पठ्यते—'तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिता' ( ऋ० १.१६४.४८ ) इति ॥**

## २६५१. युष्मदस्मदोर्ङसि ॥ २११ ॥ ( ३६९९ )

**युष्मदस्मदी मदिक्प्रत्ययान्तेऽन्तोदात्ते, तयोर्ङसि परत आदिरुदात्तो भवति। तवं स्वम्। ममं स्वम् ॥**

### न्यासः

इत्यादिना पुक् ॥ २०९ ॥

**नित्यं मन्त्रे ॥ केचिदत्रेत्यादि।** किं पुनः कारणं जुष्टशब्द[1] एवानुवर्त्तयन्ति ? इत्याह-**अर्पितशब्दस्येत्यादि।** अत्रापि किं कारणम् ? इत्याह ? **अन्तोदात्तोऽपीत्यादि।** तमेवान्तोदात्तस्य पाठमन्त्रं दर्शयितुमाह—**तस्मिन् साकं त्रिशतेत्यादि।** आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं विस्पष्टार्थम्, उत्तरार्थञ्च ॥ २१० ॥

**युष्मदस्मदोर्ङसि ॥ युष्मदस्मदी मदिक्प्रत्ययान्ते** इति। 'युष्यसिभ्यां मदिक्' इति मदिक्प्रत्ययमुत्पाद्य तयोर्व्युत्पादनात्। एतेन युष्मदस्मदोः प्रत्ययस्वरेणान्तोदात्तत्वं दर्शयति। **तव, ममेति।** 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यशादेशः, 'तवममौ ङसि' इति युष्मदस्मदोर्मपर्यन्तस्य तवममौ, शेषे लोपे कृते 'अतो गुणे' पररूपत्वम्। युष्मदस्मदोरादेशस्य स्थानिवद्भावादन्तोदात्तत्वम्। एवञ्च यो ह्यशादेशेन सहैकादेशः, सोऽपि

### पदमञ्जरी

इतीट्प्रतिषेधः। **अर्पित इति।** 'अर्तिह्री' अर्त्तेर्णिच्, अर्त्यादिना पुक् ॥ २०९ ॥

**नित्यं मन्त्रे ॥** आरम्भसामर्थ्यादेव सिद्धे नित्यग्रहणमुत्तरार्थम् ॥ २१० ॥

**युष्मदस्मदोर्ङसि ॥** 'युष्यसिभ्यां मदिक्' ( द० उ० ६.५० ), युषिः सौत्रो धातुः। **तव, ममेति। 'युष्मदस्मद्भ्यां ङसोऽश्'**, 'तवममौ ङसि' इति मपर्यन्तस्य तवममादेशः, शेषे लोपः, 'अतो गुणे' इति पररूपत्वम्,

### भावबोधिनी

[ जुषी प्रीतिसेवनार्थक है, ऋ से णिच् करने पर "अर्ति-ह्री-ब्लीरी-क्नूयी-क्ष्माय्यातां पुङ्णौ" सूत्र से पुक् करने पर 'अर्पि' बना कर क्त प्रत्यय, इट् होता है। ]

वेद विषय में—इसका क्या फल है ? भाषा में ये दोनों प्रत्ययस्वर से अन्तोदात्त हैं ॥ २०९ ॥

जुष्ट और अर्पित—ये दोनों शब्दरूप मन्त्रविषय में नित्य आद्युदात्त होते हैं। उदा०—जुष्टं देवानाम्। अर्पितं पितॄणाम्। इनमें पूर्व सूत्र से विकल्प प्राप्त है।

कुछ विद्वान् इसमें 'जुष्ट' इसी की अनुवृत्ति मानते हैं। अर्पित शब्द का मन्त्र में भी विकल्प चाहते हैं। क्योंकि यह ( अर्पित ) मन्त्र में अन्तोदात्त भी पठित हैं—"तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः।" ॥ २१० ॥

युष्मद् और अस्मद् शब्द मदिक् प्रत्ययान्त अन्तोदात्त हैं, इनका ङस् परे रहते आदि उदात्त होता है। उदा०—तव स्वम्। मम स्वम्। [ युष्मद् + ङस्, अस्मद् + ङस् में युष्मद् और अस्मद् अन्तोदात्त हैं, इनके परे ङस् का अश् = अ आदेश "युष्मदस्मद्भ्यां ङसोऽश्" सूत्र से। "तवममौ ङसि" इस सूत्र से मपर्यन्त भाग का तव और मम आदेश—तव अद् + अ, मम अद् + अ, 'शेषे लोपः' से अद् का लोप करने से बाद "अतो गुणे" से पररूप होता है। यहाँ आदेशभूत

---

1. अत्र 'जुष्टशब्दम्' इति अथवा 'जुष्ट इति' एवमेव पाठः साधीयान्, अनुवर्त्तनक्रियायाः कर्मत्वादिति बोध्यम्।

## २६५२. ङयि च ॥ २१२ ॥ ( ३७०० )

**'युष्मदस्मदोः' इति वर्तते, 'आदिरुदात्तः' इति च । 'ङे' इत्येतस्मिंश्च परतो युष्मदस्मदोरादिरुदात्तो भवति । 'तुभ्यम्' ( तै० सं० १.३.१४.३ ) । मह्यम् ।**

**पृथग्योगरणं यथासंख्यशङ्कानिवृत्त्यर्थम् ॥**

### न्यासः

'एकादेश उदात्तेनोदात्तः' इत्युदात्त एवेत्यनेन क्रमेण विभक्तिस्वरे प्राप्त इदमुच्यते ॥ २११ ॥

**ङयि च ॥ तुभ्यम् मह्यमिति ।** 'ङे प्रथमयोरम्' इत्यम्भावः, 'तुभ्यमह्यौ ङयि' इति युष्मदस्मदोस्तुभ्यमह्यावादेशौ ।

किमर्थं पृथगयं योगः क्रियते ? इत्यत आह—**पृथग्योगकरणमित्यादि** । एकयोगे हि कार्यिणोः, निमित्तयोश्च समानत्वाद् यथासंख्यमत्र भवितव्यमिति कस्यचिदाशङ्का स्यात् । अतः पृथग्योगकरणं यथासंख्यनिरासार्थमिति प्रदर्शनार्थम् । ततश्चास्वरितत्वादेव यथासंख्यं न भविष्यति । आशङ्कातः कस्यचिन्मन्दबुद्धेः स्यादिति तन्निरासार्थं पृथग्योगकरणम् । अयमपि पूर्ववदेव विभक्तिस्वरापवादः ॥ २१२ ॥

### पदमञ्जरी

'एकादेश उदात्तेनोदात्तः' इति विभक्तेरुदात्तत्वे प्राप्ते इदमुच्यते ॥ २११ ॥

**ङयि च ॥ तुभ्यम्, मह्यमिति ।** 'ङे प्रथमयोरम्', तुभ्यमह्यौ ङयि' ।

अथ किमर्थो योगविभागः, न 'युस्मदस्मदोर्ङेङसोः' इत्येवोच्येत, एवं हि चकारो न कर्त्तव्यो भवति ? अत आह—**पृथग्योगकरणमिति** । आशङ्काग्रहणेनास्वरितत्वादेव यथासंख्यं न भविष्यतीति शक्यं वक्तुमिति दर्शयति । अत्रापि पूर्ववद्विभक्तिस्वरः प्राप्तः ॥ २१२ ॥

### भावबोधिनी

तव, मम अन्तोदात्त हैं । और अनुदात्त अश् के साथ पररूप एकादेश भी अन्तोदात्त ही है, इस प्रकार विभक्ति का उदात्तत्व प्राप्त है वहाँ आदि उदात्त होता है । ] ॥ २११ ॥

"युष्मदस्मदोः" और 'आदिरुदात्तः' इनकी अनुवृत्ति है । और ङे परे रहते भी युष्मद् तथा अस्मद् का आदि उदात्त होता है । उदा०—तुभ्यम् । मह्यम् ।

यथासंख्य की शंका निवृत्त करने के लिए ये दोनों सूत्र अलग-अलग बनाये गये हैं ।

**विमर्श**—युष्मद् + ङे, अस्मद् + ङे—इनमें 'ङे प्रथमयोरम्' सूत्र से ङे का अम् आदेश और "तुभ्यमह्यौ ङयि" सूत्र से 'तुभ्य' तथा 'मह्य' आदेश करने पर तुभ्य + अम्, मह्य + अम्, यहाँ अन्तोदात्त प्रकृति और अनुदात्त प्रत्यय का पररूप एकादेश उदात्त ही होता है परन्तु प्रस्तुत सूत्र से वैसा रोक कर आद्युदात्त किया जाता है ।

'युष्यदस्मस्मदोर्ङेङसोः' ऐसा एक ही सूत्र न बन कर दो अलग-अलग सूत्र क्यों बनाये गये ? इसका समाधान यह है कि यहाँ प्रकृति दो हैं और प्रत्यय भी दो हैं । इनमें यथासंख्य का भ्रम हो सकता था—युष्मद् का ङे परे तथा अस्मद् का ङस् परे जो रूप है, वह आद्युदात्त होने लगता । वैसा न हो, दोनों शब्दों के दोनों विभक्तियों के रूपों में आद्युदात्त हो सके—इसी लिये अलग-अलग दो सूत्र बनाये गये हैं ॥ २१२ ॥

## १६५३. यतोऽनावः ॥ २१३ ॥ ( ३७०१ )

'निष्ठा च द्व्यजनात्' ( ६.१.२१५ ) इत्यतो द्व्यज्ग्रहणमनुवर्त्तते। यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति, न चेन्नौशब्दात्परो भवति। 'अचो यत्' ( ३.१.९७)—चेयम्, जेयम्। 'शरीरावयवाद्यत्' ( ५.१.६ )—कण्ठ्यम्, ओष्ठ्यम्। 'तित्स्वरितम्' ( ६.१.१८५ ) इत्यस्यापवादः।

अनाव इति किम् ? नाव्यम्।

द्व्यच इत्येव—चिकीर्ष्यम्। ललाट्यम्॥

## २६५४. ईडवन्दवृशंसदुहां ण्यतः ॥ २१४ ॥ ( ३७०२ )

इड, वन्द, वृ, शंस, दुह्—इत्येतेषां यो ण्यत् तदन्तस्यादिरुदात्तो भवति। ईड्यम्। वन्द्यम्। वार्यम्।

**न्यासः**

**यतोऽनावः ॥ कण्ठ्यम्, ओष्ठ्यमिति।** भवार्थे तद्धितः। **नाव्यमिति।** नावा तार्यमित्यस्मिन्नर्थे 'नौवयोधर्मः' इत्यादिना यत्। अत्र 'वान्तो यि प्रत्यये' इत्यवादेशे कृते व्यञ्जनस्य स्वरविधावविद्यमानत्वात् ततः पूर्वस्य स्यादिति नावः प्रतिषेधः क्रियते। **ललाट्यमिति।** 'शरीरावयवाद्यत्' इति यत्॥ २१३॥

**ईडवन्दवृशंसदुहां ण्यतः॥** 'ईड स्तुतौ', 'वदि अभिवादनस्तुत्योः', 'वृङ् सम्भक्तौ', 'शंस स्तुतौ', 'दुह प्रपूरणे'—एतेभ्यो धातुभ्यः 'ऋहलोर्ण्यत्' इति ण्यत् प्रत्ययः। कस्मिन् पुनः प्राप्त इदमारभ्यते?

**पदमञ्जरी**

**यतोऽनावः॥** अत्र 'अनावः' इति प्रतिषेधो ज्ञापयति—'स्वरविधौ व्यञ्जनमविद्यमानवत्' ( व्या० परि० ३७ ), इति; अन्यथा य आदिर्नकारो नासौ स्वरयोग्यः, यश्च स्वरयोग्य अकारो नासावादिरिति प्रतिषेधोऽनर्थकः स्यात्॥ २१३॥

**ईडबन्दवृशंसदुहां ण्यतः॥** 'ईड स्तुतौ' ( धा० पा० १०१९ ), 'वदि अभिवादनस्तुत्योः' ( धा० पा० ११ ), 'वृङ् सम्भक्तौ' ( धा० पा० १५०९ ), 'शंसु स्तुतौ' ( धा० पा० ७२८ ), 'दुह प्रपूरणे' ( धा० पा० १०१४ )।

**भावबोधिनी**

'निष्ठा च द्व्यजनात्' ( ६।१।२०५ ) से द्व्यज्ग्रहण की अनुवृत्ति है। यत् प्रत्ययान्त दो अचों वाले ( शब्दरूप ) का आदि उदात्त होता हैं यदि वह 'यत्' 'नौ' शब्द से परे न हो तो। "अचो यत्" ( ३.१.९७ ) अजन्त धातु से यत् प्रत्यय होता है— ) चेयम्। जेयम्। [ चि + यत्, जि + यत्, गुण करने पर रूप है। आदि उदात्त होता है। ] 'शरीरावयवाद्यत्' ( ५.१.६ ) शरीर के अवयववाचक से यत् होता है ) कण्ठ्यम्। ओष्ठ्यम्। [ कण्ठ+यत्, ओष्ठ + यत्, भसंज्ञा, अलोप। ] 'तित्स्वरितम्' ( पा० सू० ६.१.१८५ ) का अपवाद है। [ यत् में त् इत् होने से स्वरित की प्राप्ति है। उसका अपवाद आदि उदात्त है। ]

नौ से परे न हो—इसका क्या फल ? नाव्यम्। [ नावा तार्यम्—इस अर्थ में "नौ-वयोधर्म०" से यत् है इसमें आदि उदात्त न होकर स्वरित ही होता है। ]

दो अचों वाले का ही—चिकीर्ष्यम्, ललाट्यम्। [ चिकीर्ष और ललाट इस में यत् होने पर दो से अधिक अच् हैं अतः यह सूत्र नहीं लगता है। स्वरित होता है। ) ॥ २१३ ॥

ईड, वन्द, वृ, शंस्, दुह—इनका जो ण्यत् प्रत्यय, तदन्त ( ण्यदन्त ) का आदि उदात्त होता है। उदा०—ईड्यम्। वन्द्यम्। वार्यम्। शंस्यम्। दोह्या धेनुः। [ ईड् स्तुत्यर्थक, वदि = वन्द अभिवादन और स्तुति अर्थवाली, वृङ्

शंस्यम् । दोह्या धेनुः । द्वयनुबन्धकत्वाद् ण्यतो यद्ग्रहणेन ग्रहणं नास्तीति 'तित्स्वरितम्' ( ६.१.१८५ ) इत्येतत् प्राप्तम् । वार्यमिति—'वृङ् सम्भक्तौ' इत्यस्यायं ण्यत् । क्यब्विधौ हि वृञ एव ग्रहणमिष्यते ॥

**२६७७. विभाषा वेण्विन्धानयोः ॥ २१५ ॥ ( ३७०३ )**

**वेणु, इन्धान—इत्येतयोर्विभाषा आदिरुदात्तो भवति । वेणुः, वेणुः । इन्धानः, इन्धानः । इन्धानः ।**

**वेणुशब्दोऽयम् 'अजिवृरीभ्यो नित्' ( उ० सू० ३२५ ) इति णुप्रत्ययान्तो नित्वान्नित्यमाद्युदात्तः प्राप्तः ।**

**इन्धानशब्दोऽपि यदा चानशन्तदा चित्त्वादन्तोदात्तः । अथ शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः । तदेवमिन्धाने सर्वथाऽप्राप्तमाद्युदात्तत्वं पक्षे विधीयते ।**

**न्यासः**

इत्याह—द्वयनुबन्धनकत्वादित्यादि । अथ कथं पुनर्वार्यमित्यत्र ण्यप्रत्ययः, यावता 'एतिस्तुशासु' इत्यादिना विशेषविहितेन क्यपा भवितव्यम् ? इत्याह—**वार्य्यमित्यादि** । ननु च वृङोऽपि क्यपैव भवितव्यम्, 'वृ' इति सामान्यनिर्देशात् ? इत्याह—**क्यब्विधौ हीत्यादि** ॥ २१४ ॥

**विभाषा वेण्विन्धानयोः ॥ णुप्रत्ययान्त इति ॥** तद्विधौ 'स्थो णुः' इत्यतो णुग्रहणानुवृत्तेः । **यदि चानशन्त इति ।** 'ताच्छील्यवयोवचनशक्तिषु चानश्' इत्यनेन । **अथ शानजन्त इति ।** 'लटः शतृशानचौ' इत्यादिना । **लसार्वधातुकनिघाते कृत इति ।** 'तास्यनुदात्तेत्' इत्यादिना । **इन्धान इति ।** अस्यानुदात्तत्वात् । **'उदात्तनिवृत्तिस्वरेणेति ।** 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ।

**वेणुरित्यादि ।** 'संज्ञायामुपमानम्' इत्यस्यावकाशः-चञ्चा, वर्ध्रिकेति, अस्या विभाषाया अवकाशः—

**पदमञ्जरी**

कथं वार्यं इत्यत्र ण्यत्, यावता 'एतिस्तुशासु' इत्यादिना विशेषविहितेन क्यपा भाव्यम् ? अत आह—**वार्यं इत्यादि ।** अथ वृङोऽपि क्यबेव कस्मान्न भवति ? अत आह—**क्यब्विधौ हीत्यादि ।** एतच्च तत्रैव प्रतिपादितम् ॥ २१४ ॥

**विभाषा वेण्विन्धानयोः ॥ णुप्रत्ययान्त इति ।** 'तिष्ठतेर्णुः' इति तत्रानुवर्तते । **उदात्तनिवृत्तिस्वरेणेति ।** 'श्नसोरल्लोपः' इति श्नसोऽकारस्योदात्तस्य लोपात् ।

**भावबोधिनी**

सम्भक्ति अर्थवाली, शंस् स्तुति अर्थवाली और दुह प्रपूरण अर्थ वाली है—इनसे यथासंभव भाव या कर्म अर्थों में 'ऋहलोर्ण्यत्' सूत्र से ण्यत् = य प्रत्यय करने पर उक्त रूप बनते हैं । इनमें स्वरित प्राप्त है । आदि उदात्त किया जाता है । ]

ण् और त्—इन दो अनुबन्धों वाला होने से ण्यत् का ग्रहण यत् ( इस एक अनुबन्धवाले ) से नहीं होता है [ अतः "यतोऽनावः" से आदि उदात्त की प्राप्ति नहीं है ] "तित् स्वरितम् की प्राप्ति है, उसमें यह सूत्र आदि उदात्त करता है । वार्यम्—इसमें 'वृङ् सम्भक्तौ' इस का ण्यत् है । क्योंकि [ 'एति-स्तु-शास्-वृदृजुषः क्यप्' से होने वाली ] क्यप् विधि में 'वृञ्' ( वरणार्थक ) का ही ग्रहण इष्ट है । [ अतः वार्यम् यह उदाहरण ठीक है । ] ॥ २१४ ॥

वेणु और इन्धान—इनका विकल्प से आदि उदात्त होता है । उदा०—वेणुः । वेणुः । इन्धानः । इन्धानः ।

यह 'वेणु' शब्द "अजिवृरीभ्यो नित्" ( उणादिसूत्र ) से णु प्रत्ययान्त है और नित् होने से नित्य आद्युदात्त प्राप्त है । [ यह वैकल्पिक करता है । पक्षे में प्रत्यय स्वर अन्तोदात्त होता है । ]

इन्धान—शब्द भी जब [ 'ताच्छील्यवयोवचन-शक्तिषु' सूत्र से ] चानश्=आन प्रत्ययान्त है तब चित् होने से [ "चितः" सूत्र से ] अन्तोदात्त है और जब शानच् प्रत्ययान्त है तब [ लकार का शानच् होने के कारण ] ल—

वेणुरिव वेणुरित्युपमानं यदा संज्ञा भवति, तदा 'संज्ञायामुपमानम्' ( ६.१.२०४ ) इति नित्यमाद्युदात्तत्वमिष्यते ॥

**२६५६. त्यागरागहासकुहश्वठक्रथानाम् ॥ २१६ ॥ ( ३७०४ )**

त्याग, राग, हास, कुह, श्वठ, क्रथ—इत्येतेषां विभाषा आदिरुदात्तो भवति। त्यागः, त्यागः। रागः, रागः। हासः, हासः—एते घञन्ताः, तेषां पक्षे 'कर्षात्वतो घञोऽन्त उदात्तः' ( ७.१.१५९ ) इत्युदात्तत्वमेव भवति। कुहः, कुहः। श्वठः, श्वठः। क्रथः, क्रथः—एते पचाद्यजन्ताः ॥

**२६५७. उपोत्तमं रिति ॥ २१७ ॥ ( ३७३३ )**

रिदन्तस्योपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमं तस्य समीपे यत्तदुपोत्तमम्। करणीयम्। हरणीयम्। पटुजातीयः। मृदुजातीयः। प्रत्ययस्वरापवादोऽयम् ॥

**न्यासः**

अनुपमानो वेणुशब्दः, शुष्को वने वेणुरिति वेति; यदा वेणुरिवेत्युपमानवेणुशब्दः कस्यचित् संज्ञा भवति तदा 'संज्ञायामुपमानम्' इति तस्याद्युदात्तत्वमिष्यते, तच्च पूर्वविप्रतिषेधाल्लभ्यते ॥ २१५ ॥

त्यागरागहासकुहश्वठक्रथानाम् ॥ 'कुह विस्मापने', 'शठ श्वठ सम्यगवभाषणे'—एतौ चौरादिकौ। 'श्रथ श्लथ क्रथ क्लथ हिंसार्थाः' ॥ २१६ ॥ उपोत्तमं रिति ॥ २१७ ॥

**पदमञ्जरी**

वेणुरित्यादि। 'संज्ञायामुपमानम्' इत्यस्यावकाशः—चञ्चा वध्रिका, विभाषाया अवकाशः—अनुमानभूतो वेणुः शुष्क उपवने; वेणुरिति संज्ञायामुपमाने पूर्वविप्रतिषेधः ॥ २१५ ॥

त्यागरागहासकुहश्वठक्रथानाम् ॥ 'कुह विस्मापने' ( धा० पा० १९०१ ), 'श्वठ क्रथ भाषणे' ( धा० पा० १८५५ ) चौरादिकावदन्तौ। निघातस्यैवायमपवादो युक्तः? नैतदेवम्; यद्ययं निघातस्यापवादः स्यात्, तत्रैवायं ब्रूयात्—'अनुदात्तं पदमेकवर्जम्, न हि स्वार्थम् ॥ २१६ ॥ २१७ ॥

**भावबोधिनी**

सार्वधातुक का अनुदात्तत्व होने पर उदात्तनिवृत्तिस्वर [ 'अनुदात्तस्य च यत्रोदात्तलोपः' सूत्र ] से मध्योदात्त है [ क्योंकि 'इन्धान' में श्ना के आ का लोप 'श्नसोरल्लोपः' से होता है। ] इस प्रकार इन्धान शब्द में आदि उदात्तत्व की सर्वथा अप्राप्ति रहते यह पाक्षिक आद्युदात्तत्व किया जा रहा है।[ फलतः तीन रूप होते हैं। ]

वेणुः इव वेणुः—यह उपमान जब संज्ञा है तब "संज्ञायामुपमानम्" ( ६।१।२०४ ) से नित्य ही आद्युदात्तत्व इष्ट है। [ इसमें विकल्प नहीं होता है। ] ॥ २१५ ॥

त्याग, राग, हास, कुह, श्वठ, क्रथ—इन का विकल्प से आदि उदात्त होता है। त्यागः, रागः, हासः—ये घञन्त हैं, इन का पक्ष में "कर्षात्वतो घञोऽन्त उदात्तः" सूत्र से [ अन्त ] उदात्तत्व ही होता है। कुहः, श्वठः, क्रथः—ये पचादि—अजन्त है। [ चित् होने से पक्ष में अन्तोदात्त होता है। 'त्यज्' हानार्थक, रञ्ज = रागार्थक, हस हासार्थक कुह विस्मापनार्थक, श्वठ भाषणार्थक, क्रथ भाषण और हिंसार्थक हैं। इनसे भाव में घञ् प्रत्यय करने पर उक्त रूप बनते हैं। ] ॥ २१६ ॥

रिदन्त का उपोत्तम उदात्त होता है। तीन या अधिकों का अन्त्य उत्तम है उसके समीप जो है वह उपोत्तम है। [ वह उदात्त होता है। ] उदा०—करणीयम्। हरणीयम्। [ कृ + अनीयर् हृ + अनीयर् में र् इत है अतः रित् होने से उपोत्तम उदात्त होता है। ] पटुजातीयः। मृदुजातीयः। [ जातीयर् प्रत्यय में र् इत् हैं। अतः यह उपोत्तम को उदात्त करता है। ] यह प्रत्ययस्वर ( अन्तोदात्त ) का अपवाद है ॥ २१७ ॥

## २६५८. चङ्यन्यतरस्याम् ॥ २१८ ॥ ( ३६७९ )

चङन्तेऽन्यतरस्यामुपोत्तममुदात्तं भवति। मा हि चीकरताम्। मा हि चीकरताम्। 'न माङ्योगे' ( ६.४.७४ ) इत्यटि प्रतिषिद्धे 'हि च' ( ८.१.३४ ) इति निघातेऽदुपदेशादिति लसार्वधातुकानुदात्तत्वे ( ६.१.१८६ ) कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तो भवति।

उपोत्तमग्रहणाद् द्व्यचोर्न भवति—'मा हि दधत्' ॥

## २६५९. मतोः पूर्वमात्संज्ञायां स्त्रियाम् ॥ २१९ ॥ ( ३७०५ )

मतोः पूर्व आकार उदात्तो भवति तच्चेन्मत्वन्तं स्त्रीलिङ्गे संज्ञा भवति। उदुम्बरावती। पुष्करावती। वीरणावती। शरावती। 'शरादीनां च' ( ६.३.१२० ) इति दीर्घः।

### न्यासः

चङ्यन्यतरस्याम् ॥ मा हि चीकरतामिति। 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यभ्यासस्येत्त्वम्। अटि प्रतिषिद्ध इति। यद्यटः प्रतिषेधो यस्य तस्यैव स्वरः स्याद्धात्वकारस्य। 'हि च' इति निघात इति। प्रतिषिद्ध इत्यपेक्षते। यदि निघातो न प्रतिषिध्येत, तदा चङन्तस्योदात्तस्याभाव एव स्यात्।

मा हि दधदिति। 'विभाषा धेट्श्व्योः' इति चलेश्चङ् ॥ २१८ ॥

मतोः पूर्वमात् संज्ञायां स्त्रियाम् ॥ उदुम्बरावतीति। उदुम्बरा अस्यां सन्तीति चातुरर्थिको मतुप्, 'मतोर्बह्वचोऽनजिरादीनाम्' इति दीर्घत्वम्। शरावतीति। अत्र 'शरादीनाञ्च' इति। मतोरिति किम्?

### पदमञ्जरी

चङ्यन्यतरस्याम् ॥ उदाहरणे एकवचनातिक्रमणे हेतुर्मृग्यः। मा हि दधदिति। 'विभाषा धेट्श्व्योः' इति च्लेश्चङादेशः ॥ २१८ ॥

मतोः पूर्वमात्संज्ञायां स्त्रियाम् ॥ मतोः पूर्व आकार इति। अर्थव्याख्यानमेतत्। सूत्रे तु शब्दरूपापेक्षया नपुंसकनिर्देशः। केचित्तु सूत्रे पूर्वशब्दं पुंल्लिङ्गमेव पठन्ति। उदाहरणे चातुरर्थिकः 'नद्यां मतुप्', 'मतो

### भावबोधिनी

चङन्त शब्द में उपोत्तम विकल्प से उदात्त है। उदा०—मा हि चीकरताम्। "न माङ्योगे" सूत्र से अट् का प्रतिषेध होने पर "हि च" सूत्र से निघात कर देने पर अदुपदेश से परे ल-सार्वधातुक का [ "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" ( ६।१।१८६ से ) ] अनुदात्तत्व करने पर चङ् का ही स्वर प्राप्त रहते पक्ष में धातु का अकार उदात्त होता है।

उपोत्तम का ग्रहण होने से दो अचों का नहीं होता है—मा हि दधत्। [ क्योंकि तीन या अधिक में ही उपोत्तम माना जाता है। 'अचीकरत् अचीकरताम् आदि णिजन्त कृ के लुङ् के रूपों में माङ् का योग होने से अट् नहीं होता है—मा हि चीकरताम् होता है। ] ॥ २१८ ॥

मतुप् से पूर्ववर्ती आकार उदात्त होता है यदि वह मतुबन्त स्त्रीलिङ्ग में होता है। उदा० उदुम्बरावती। [ उदुम्बराः सन्ति अस्याम् इस अर्थ में चातुरर्थिक मतुप् होता है। 'मतोर्बह्वचोऽनजिरादीनाम्" सूत्र से दीर्घ होता है। यही दीर्घ आ मतुप् से पूर्व होने से उदात्त होता है। ] पुष्करावती। [ पुष्कराणि सन्ति अस्याम्—यहाँ भी पूर्वोक्त सारी प्रक्रिया होती है। ] वीरणावती शरावती। [ शराः सन्ति अस्याम्—मतुप् के बाद ] "शरादीनाञ्च" से दीर्घ होता है।

आदिति किम् ? इक्षुमती । द्रुमवती । संज्ञायामिति किम् ? खट्वावती । स्त्रियामिति किम् ? शरावान् । मतोरिति किम् ? गवादिनी ॥

२६६०. अन्तोऽवत्याः ॥ २२० ॥ ( ३७०६ )

'संज्ञायाम्' इत्येव। अवतीशब्दान्तस्य संज्ञायामन्त उदात्तो भवति। अजिरवती। खदिरवती। हंसवती। कारण्डवती[1] । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् ।

'अवत्या' इति किमुच्यते, न वत्या इत्येवमुच्येत ? नैवं शक्यम्; इहापि स्यात्—राजवती । स्वरविधौ

**न्यासः**

**गवादिनीति** । 'मतोः' इत्यस्मिन्ननुच्यमाने तत्सम्बद्धं पूर्वग्रहणमपि नोच्येत, संज्ञाशब्दस्याकारमात्रस्योदात्तत्वं प्रसज्येत । पूर्वग्रहणं मतोरनन्तरस्यास्य यथा स्यात् । इह मा भूत्—सानुमतीति । लक्षणप्रतिपदोक्तपरिभाषया चेहैव स्यात्—श्यामावती, उदुम्बरावतीत्यादि न स्यात् । पूर्वग्रहणात् पूर्वमात्रस्य भवति ॥ २१९ ॥

**अन्तोऽवत्याः ॥ अजिरवतीत्यादि । पूर्ववन्मतुप् । पित्त्वादनुदात्तत्वं प्राप्तमिति ।** ततस्तस्यायमपवाद इति शेषः । अथावत्या इत्युच्यमाने राजवतीत्येतस्मान्न भवति, अस्ति ह्येतदपि नलोपे कृतेऽवतीशब्दान्तम् ? इत्याह—**स्वरविधावित्यादि** । कथमुदाहरणम्, यावता मतोर्वत्वस्यासिद्धत्वादत्रावतीशब्दान्तत्वं नास्ति ? इत्याह—**वत्वं पुनरित्यादि** । पुनःशब्देन नलोपाद्विशेषं दर्शयति । लोपो ह्यसिद्धः, वत्वं पुनः सिद्धम् । कुतः ? आश्रयात् । आश्रयः

**पदमञ्जरी**

बह्वचोऽनजिरादीनां च' इति दीर्घत्वम् । **मतोरिति किम् ? गवादिनीति** । मतोरित्यस्मिन्नसति पूर्वग्रहणमपि न क्रियेतेति संज्ञाशब्दसम्बन्धिन आकारमात्रस्य प्रसङ्गः । पूर्वग्रहणं मतोरनन्तरस्य पूर्वस्य यथा स्यात्, इह मा भूत्—सानुमतीति ॥ २१९ ॥

**अन्तोऽवत्याः ॥** इहासन्देहार्थम् 'वत्या अन्तः' इत्यवचनादकारप्रश्लेषो निश्चितः ।

तत्र प्रयोजनं पृच्छति—**अवत्या इति किमुच्यत इति** । अथावत्या इत्युच्यमानेऽपि राजवतीत्यत्र कस्मान्न भवति, भवति ह्येतदपि नलोपे कृतेऽवतीशब्दान्तम् ? अत आह—**स्वरविधावित्यादि** । ननु चोदाहरणे-

**भावबोधिनी**

आत् = आकार—इसका क्या फल है ? इक्षुमती । द्रुमवती । [ इन में उ और ह्रस्व अ मतुप् से पूर्व है । अतः यह सूत्र नहीं लगता है । ] संज्ञा में—इसका क्या फल है ? खट्वावती । [ यह सामान्य शब्द है । ] स्त्रीलिङ्ग में—इसका क्या फल है ? शरावान् । [ यहाँ भी पूर्वोवत रीति से मतुप् और दीर्घ है । किन्तु स्त्रीलिङ्ग न होने से यह सूत्र नहीं लगता है । ] मतुप् से पूर्व—इसका क्या फल है ? गवादिनी । [ मतुप् नहीं है । पूर्व का ग्रहण होने से मतुप् से अव्यवहित पूववर्ती आ का ही उदात्त होता है । अतः 'सानुमती'—में आ उदात्त नहीं होता है । ] ॥ २१९ ॥

'संज्ञायाम्' इसकी अनुवृत्ति है । संज्ञा में अवती-शब्दान्त का अन्त उदात्त होता है । उदा०—अजिरवती । खदिरवती । हंसवती । कारण्डवती । [ इन में मतुप् के बाद स्त्रीलिङ्ग में ङीप् होता है । ] ङीप् के पित् होने से अनुदात्तत्व प्राप्त है [ "अनुदात्तौ सुप्पितौ" इस सूत्र से । उसमें यह अन्त उदात्त करता है । ]

अवत्याः—यह क्यो कहा गया है, 'न वत्याः' ऐसा क्यों नहीं कहा जाता है ? नहीं, ऐसा संभव नहीं है, यहाँ भी होने लगेगा—राजवती । क्योंकि स्वरसम्बन्धी विधि में न् लोप के असिद्ध हो जाने कारण यह 'अवती' शब्द नहीं रह

---

१. 'वेत्रवती' इत्यधिकं पुस्तकान्तरे ।

नलोपस्यासिद्धत्वान्नायमवतीशब्दः, वत्वं पुनराश्रयात्सिद्धम् ॥

## २६६१. ईवत्याः ॥ २२१ ॥ ( ३७०७ )

ईवतीशब्दान्तस्यान्त उदात्तो भवति स्त्रियां संज्ञायां विषये । अहीवती । कृषीवती । मुनीवती[1] ।

## २६६२. चौ ॥ २२२ ॥ ( ३६५२ )

'चौ' इत्यञ्चतिर्लुप्तनकारो गृह्यते । तस्मिन्परतः पूर्वस्यान्त उदात्तो भवति । दधीचः पश्य । दधीचा । दधीचे । मधूचः पश्य । मधूचा । मधूचे । उदात्तनिवृत्तिस्वरापवादोऽयम् ।

### न्यासः

स्वरविधौ निमित्तत्वेनोपादानमित्यर्थः । अवतीशब्दस्यान्तोदात्तत्वं ब्रुवता वत्वमाश्रितम्, तस्मादाश्रयात् तस्य सिद्धत्वम्, अन्यथैवं वचनमनर्थकं स्यात् । न हि वत्वस्य सिद्धत्वमन्तरेणावतीशब्दान्तं किञ्चिदस्ति ॥ २२० ॥

ईवत्याः ॥ अयमपि पित्त्वानुदात्तस्यैवापवादः । अहीवतीत्यादि । 'शरादीनाञ्च' इति दीर्घः, 'संज्ञायाम्' इति च वत्वम् ॥ २२१ ॥

चौ ॥ उदात्तनिवृत्तिस्वरापवादोऽयमिति । दधीच इति । दध्यञ्चतीति क्विन्, 'गतिकारकोपपदात्'

### पदमञ्जरी

ऽपि मतोर्वत्वस्यासिद्धत्वादवतीशब्दान्तत्वं नास्ति ? इत्याह—वत्वं पुनरिति । पुनःशब्दो नलोपाद्विशेषं द्योतयति ॥ २२० ॥

ईवत्याः ॥ अहीवतीत्यादौ पूर्वं दीर्घः, 'संज्ञायाम्' इति वत्वम् । योगविभागश्चिन्त्यप्रयोजनः ॥ २२१ ॥

चौ ॥ उदात्तनिवृत्तिस्वरापवादोऽयमिति । कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्याञ्चत्यकारस्य विभक्तिनिमित्तकः 'अचः' इति लोपः ।

### भावबोधिनी

जाता हैं, वत्व तो आश्रय के कारण सिद्ध है । [ क्योंकि 'अवती' ऐसा कहने वाले पाणिनि को वत्व की असिद्धि इष्ट नहीं है । यदि वत्व भी असिद्ध हो जाता तो प्रस्तुत सूत्र ही अनर्थक जाता । अतः केवल न्-लोप ही असिद्ध मानना चाहिए । ] ॥ २२० ॥

ईवतीशब्दान्त शब्द का स्त्रीलिङ्ग में सज्ञा विषय में अन्त उदात्त होता है । उदा०—अहीवती । कृषीवती । मुनीवती । [ संज्ञा शब्द होने पर भी व्युत्पत्ति के लिए विग्रह और मतुप् ङीप् करना चाहिए । इनमें पहले 'शरादीनां च'' सूत्र से दीर्घ करने के बाद ''संज्ञायाम्'' सूत्र से म् का व् होता है । इस सूत्र से ङीप् वाला ई उदात्त होता है । ] ॥ २२१ ॥

'चौ' यह लुप्तनकारवाली अञ्च धातु ली जाती है । लुप्त नकारवाली अञ्च् धातु परे रहते उससे पूर्ववर्त्ती का अन्त उदात्त हो जाता है । उदा०—दधीचः पश्य । दधीचा । दधीचे । मधूचः पश्य । मधूचा । मधूचे । यह उदात्तनिवृत्तिस्वर का अपवाद है ।

❀ चौ—इसमें अतद्धित में ऐसा कहना चाहिए । ❀ उदा०—दाधीचः । माधूचः । यहाँ प्रत्ययस्वर ही होता है ।

**विमर्श**—दधि अञ्चति—इस विग्रह में 'ऋत्विक्' आदि सूत्र से क्विन् प्रत्यय और सर्वापहारी लोप के बाद दधि + अञ्च् । ''अनिदितां हल उपधायाः क्ङिति'' ( ६।४।२४ ) से न् = ञ् का लोप, दधि + अच्, ''अचः''

---

१. 'कपीवती'—इत्यधिकमेकस्मिन्पुस्तके ।

❀ चावतद्धित इति वक्तव्यम् ❀ ( म० भा० ६.१.२२२ वा० १ ) दाधीचः। माधूचः। प्रत्ययस्वर एवात्र भवति।

२६६३. समासस्य ॥ २२३ ॥ ( ३७३४ )

समासस्यान्त उदात्तो भवति। राजपुरुषः। ब्राह्मणकम्बलः। कन्यास्वनः। पटहशब्दः। नदीघोषः। राजपृषत्। ब्राह्मणसमित्।

**न्यासः**

इत्युत्तरपदप्रकृतिस्वरेणाञ्चेरकार उदात्तः। विभक्तावजादावसर्वनामस्थाने 'अचः' इत्यकारलोपे कृते सति 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तनिवृत्तिस्वरः प्राप्नोति, अतस्तस्यायमपवादः।

**चावतद्धित इत्यादि ॥** यदीदमञ्चेः पूर्वस्यान्तोदात्तत्वं विधीयते, तदा तद्धिते भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानञ्चेदम्—अन्यतरस्यांग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा, तेन तद्धिते न भविष्यतीति ॥ २२२ ॥

**समासस्य ॥** राजपुरुष इत्यादिषूदाहरणेषु समासपदानां तस्मिंस्तस्मिन् स्वरे प्राप्ते सतीदमारभ्यते, स आख्यायते। राजशब्दे तावत् 'कनिन् युवृषितक्षिराजि' इति कनिन्-प्रत्ययान्तत्वान् नित्स्वरेणाद्युदात्तत्वम्। एवं पुरुषेऽपि, स हि 'पुरः कुषन्' इति कुषन्प्रत्ययान्तो व्युत्पाद्यते। ब्रह्मण इदम्—इति 'तस्येद'मिति ब्राह्मण-शब्दोऽणन्तः प्रत्ययस्वरेणान्तोदात्तः। 'कलस्तृपश्च' इति 'वृषादिभ्यश्चित्' बहुलवचनात् 'कमेर्दुक्' इति

**पदमञ्जरी**

**चावतद्धित इति वक्तव्यमिति।** चौ यः स्वरः स तद्धिते परतो न भवतीत्यर्थः; अन्यथा योऽनुदात्तः प्रत्ययः—दधीचः पश्येत्यादौ, तत्र यथोदात्तनिवृत्तिस्वरं बाधते, तथा दाधीच इत्यादौ प्रत्ययस्वरमपि सतिशिष्टः स्वरो बाधेत, तस्मादतद्धित इति वक्तव्यम्, अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्यायमपवादो भवति ॥ २२२ ॥

**समासस्य ॥ राजदृषदिति।** ननु च योऽत्र समासस्यान्तो दकारो नासौ स्वरभाक्, यश्च ततः पूर्वोऽकारो नासौ समासस्यान्तः ? इत्याह—**'स्वरविधाविति।** न स्वरस्यैव विधिः, किं तर्हि ? योऽपि 'अनुदात्तादेरञ्'

**भावबोधिनी**

( ६।४।१३८ ) से अ का लोप—दधि + च् "चौ" ( ६।३।१३८ ) से पूर्ववर्ती अण् का दीर्घ—दधीच् + शस् = अस्, स् का रुत्व विसर्ग—दधीचः। दधीच् + टा = आ। इसी प्रकार मधु + अञ्चति में भी न् लोप, अलोप, दीर्घ आदि के बाद रूप बनते हैं। दधि + अञ्च् में "गतिकारकोपपदात्' से उत्तरपद का प्रकृतिस्वर होने से अञ्च् का अ उदात्त है, विभक्ति परे रहते उदात्त का लोप होने से "अनुदात्तस्य च यत्रोदात्तलोपः" सूत्र से अनुदात्त ( अस् ) का उदात्त प्राप्त होता है, उसको बाधकर पूर्व का ई और ऊ उदात्त हो जाता है। उदात्तनिवृत्तिस्वर = उदात्त के लोप को मान कर होने वाला = अनुदात्त का उदात्त प्राप्त है। वह न होकर मध्य-उदात्त हो जाता है। यह तद्धित प्रत्यय होने पर नहीं लागू होता है। अतः दधि + अञ्च् + अण् = दधीच् + अण् वृद्धि करने पर प्रत्ययस्वर होना चाहिए ॥ २२२ ॥

समास का अन्त उदात्त होता है। उदा०—राजपुरुषः। ब्राह्मणकम्बलः। कन्यास्वनः। पटहशब्दः। नदीघोषः। राजपृषत्। ब्राह्मणसमित्। [ इनमें तत्पुरुष समास है। अतः अन्त उदात्त होता है। ]

**'स्वरविधौ व्यञ्जनमविद्यमानवत्' ( व्या० प० ३७ ) इति हलन्तेष्वयन्तोदात्तत्वं भवति। नानापदस्वरस्यापवादः॥**

**न्यासः**

कम्बलशब्दो व्युत्पाद्यते; तेनायं चित्स्वरेणान्तोदात्तः। कन्याशब्दोऽन्तस्वरितः, 'अघ्न्यादयश्च' इति निपात्यते। अथवा 'कनी दीप्तिकान्तिगतिषु' इत्यस्मात् 'ऋहलोर्ण्यत्' इति ण्यत्, 'कन्यायाः कनीन च' इति निपातनाद् वृद्ध्यभावः। तित्स्वरेणायमन्तस्वरितः सम्पद्यते। स्वन-शब्दः 'स्वनहसोर्वा' इत्यबन्तत्वाद् धातुस्वरेणाद्युदात्तः। पटत् पटद् ध्वन्यते—इति पटहशब्दः पृषोदरादित्वादन्तोदात्तः। 'शब्द' शब्दः 'शाशपिभ्यां ददनौ' इति दन् प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः। पचादिषु 'नदट्' इति पठ्यते, तेन 'टिड्ढाणञ्' इति ङीपि कृते तत्र च 'यस्येति च' इत्यकारलोपकृत उदात्तनिवृत्तिस्वरेणान्तोदात्तो नदीशब्दो भवति। घोषशब्दो घञन्तत्वान् नित्स्वरेणाद्युदात्तः। पृषत् समिच्छब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ।

अथ राजपृषद्, ब्राह्मणसमिदित्यत्र कथमन्तो भवति, यावता योऽत्र समासस्यान्तो नासौ स्वरभाक्, यस्तु तस्मात् पूर्वः स तकारेण व्यवहितः? इत्याह—**स्वरविधावित्यादि**। **हलन्तेऽपीति**। समासस्येदं विशेषणम्। **अन्तोदात्तत्वमिति**। समासे येऽचः पूर्वे तदपेक्षया परस्याचोऽन्तत्वं वेदितव्यम्। तेन **नानापदस्वरस्यापवाद** इति। समासे हि पदानां पृथक् स्वरो भवति, यदीदं नोच्येत, ततो नाना पृथक् पदानां स्वरः प्राप्नोति।

**पदमञ्जरी**

( ४.२.४४ ) इत्यादिः, सोऽपि स्वरविधिः, स्वराश्रयत्वात्। तेन सोऽपि विधिर्व्यञ्जनादौ व्यञ्जनान्ते च भवति। अत्र च ज्ञापकम्—'नोत्तरपदेऽनुदात्तादौ' ( ६.२.१४२ ) इत्युक्त्वा पृथिव्याः प्रतिषेधः।

[1]**नानास्वरापवाद इति**। यद्यपि 'अनुदात्तं पदमेकवर्जम्' ( ६.१.१५८ ) इत्यस्ति, तथापि वर्जने विशेषाश्रयणात् पर्यायेण नानास्वरप्रसङ्गः। तत्र राजशब्दः 'कनिन्युवृषितक्षि०' ( द० उ० ६.५१ ) इत्यादिना कनिन् प्रत्ययान्तत्वादाद्युदात्तः; 'पुरः कुषन्' ( द० उ० ९.१४ ) पुरुषः, ब्रह्मणोऽपत्यं ब्राह्मणः—अणन्तः, 'कलतृपश्च' ( द० उ० ८.१०७ ), 'वृषादिभ्यश्चित्' ( द० उ० ८.१०९ ) 'कमेर्बुक् च' ( द० उ० ८.११४ ),—कम्बलः। 'कन्याराजन्यशिष्यामनुष्याणामन्तः' ( फि० सू० ४.८ ) इति कन्याशब्दोऽन्तस्वरितः, 'स्वनहसोर्वा' ( ३.३.६२ ) इत्यप्, धातुस्वरः, पटत् पटद् [2]हन्यते इति पटहः, पृषोदरादिरन्तोदात्तः, 'शाशपिभ्यां दनौ' ( द० उ० ६.४८ ) [ इति दन् प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः 'शब्द' शब्दः।[3] ], पचादिषु नदट् इति पठ्यते, टित्वान् ङीप्—नदी; उदात्तनिवृत्तिस्वरः, पोषशब्दो [ घोषशब्दो[3] ] घञन्तः, 'शृदृभसोऽदिः' ( द० उ० ६४२ ), दृणातेः षुग् ह्रस्वश्च' ( द० उ० ६.४५ ) दृषत्, प्रत्ययस्वरः, समिध्यते ययेति समित्, सम्पदादित्वात् क्विप्, कृदुत्तरपदप्रकृतिस्वरः—

**भावबोधिनी**

"स्वर की विधि में व्यञ्जन अविद्यमान के समान समझना चाहिए। ❀ इस लिए हलन्त शब्दों में भी ( हल् से पूर्व का अच् ) अन्त उदात्त होता है। [ भिन्न-भिन्न पदों को मान कर प्राप्त होने वाले ] नाना = अनेक

---

१. मूले न्यासे च 'नानापद स्वरापवाद' इति पाठः।

२. न्यासे तु 'ध्वन्यते' इति पाठः।

३–३. कोष्ठकान्तर्गतः पाठः आवश्यकत्वादत्र निवेशितः, प्रकाशिते तु नास्ति।

॥ इति श्रीवामनविरचितायां काशिकावृत्तौ षष्ठस्याध्यायस्य प्रथमः पादः ॥

——०——

**न्यासः**

अतस्तदपवादोऽयमुच्यते ॥ २२३ ॥

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां षष्ठस्याध्यायस्य प्रथमः पादः ॥

——:०:——

**पदमञ्जरी**

एते नानास्वराः, तेषामपवादः ॥ २२३ ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां षष्ठस्याध्यायस्य प्रथमः पादः ॥

——:०:——

**भावबोधिनी**

स्वरों का अपवाद यह अन्त उदात्त है। [ अतः केवल अन्त का उदात्त होता है। शेष में 'अनुदात्तं पदमेकवर्जम्' आदि सूत्रों की प्रवृत्ति होती है ] ॥ २२३ ॥

॥ इस प्रकार श्री वामनविरचित काशिकावृत्ति में षष्ठ अध्याय का प्रथम पाद समाप्त हुआ ॥

॥ इस प्रकार जयशङ्करलाल त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिका के षष्ठ अध्याय का प्रथम पाद समाप्त हुआ ॥

**व्याख्याय काशिकाषष्ठाध्यायस्यादिमपादकम् ।**
**शिवाभ्यामर्पयत्युत्कस्त्रिपाठी जयशङ्करः ॥**

——:०:——

# अथ षष्ठाध्याये द्वितीयः पादः

## २६६४. बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ १ ॥ ( ३७३५ )

पूर्वपदग्रहणमत्र पूर्वपदस्थे स्वरे उदात्ते स्वरिते वा वर्तते। बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति = स्वभावेनावतिष्ठते, न विकारमनुदात्तत्वमापद्यते। समासान्तोदात्तत्वे हि सति 'अनुदात्तं पदमेकवर्जम्' ( ६.१.१५८ ) इति सोऽनुदात्तः स्यादिति समासान्तोदात्तत्वापवादोऽयमारभ्यते।

**न्यासः**

बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ पूर्वपदग्रहणमित्यादि। प्रकृतिभावो ह्यत्र तस्य युज्यते विधातुम्, यस्यानुदात्तलक्षणो विकारः प्राप्नोति। न च पूर्वपदस्याज्झलसमुदायस्यासौ प्राप्नोति, किं तर्हि ? स्वरितस्य, उदात्तस्य वा। तत्र यदीह पूर्वपदग्रहणं पूर्वपद एव वर्तते, अपार्थकमेवेदं वचनं स्यात् ! तस्मात् पूर्वपदस्थे स्वर उदात्ते स्वरिते वा पूर्वपदग्रहणं वर्तत इति विज्ञायते। भवति हि तात्स्थ्यात् ताच्छब्द्यम्, यथा—मञ्चाः क्रोशन्तीति। स्वभावेनावतिष्ठत इति। अनेन प्रकृत्या भवतीत्यस्यार्थमाचष्टे। तमेव वाक्यान्तरेण स्पष्टीकर्तुमाह—न विकारमनुदात्तत्वमापद्यत इति। कथं पुनरनुदात्तलक्षणो विकारः प्राप्नोति, यन्निवृत्तये प्रकृतिभावोऽय-

**पदमञ्जरी**

बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ इह यस्य विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः। न च कृत्स्नस्य पूर्वपदस्य शेषनिघातलक्षणो विकारः प्राप्तः, किन्तु तत्स्थयोरुदात्तस्वरितयोरेव, तस्मात्तयोरेव पूर्वपदशब्दो वर्तते, तदाह—पूर्वपदग्रहणमित्यादि। समासान्तोदात्तत्वे हीत्यादिना विकारप्राप्तिं दर्शयति। समासान्तोदात्तत्वापवादोऽयमिति। नाप्राप्ते तस्मिन्नारम्भात्। ननु च यत्र सामान्यविधिप्रवृत्तिमनपेक्ष्य विशेषविधिप्रवृत्तिस्तत्रापवादत्वम्, यथा—'कर्मण्यण्' 'आतोऽनुपसर्गे कः' इति; इह तु सत्यां विकारप्राप्तौ प्रकृतिभावो विधेयः, विकारप्राप्तिश्च समासस्येत्यस्मिन् प्रवृत्त इति कथं तत्प्रवृत्त्यपेक्षस्तदपवाद, अतः समासस्येत्यस्मिन्प्रवृत्ते प्राप्तस्य शेषनिघातस्यैवायमपवादो युक्तः ? नैतदेवम्; यद्ययं निघातापवादः स्यात्, तत्रैवायं ब्रूयाद्—'अनुदात्तम्पदमेकवर्जम् बहुव्रीहौ पूर्वपदम्' इति। नन्वेवमुच्यमाने समपाद इत्यादौ स्वाभाविकस्यापि पूर्वपदानुदात्तस्य

**भावबोधिनी**

प्रणम्य गुरुपादाब्जं ध्यात्वा साम्बं महेश्वरम्।<br>षष्ठाध्याये द्वितीयाङ्घ्रिं व्याचष्टे जयशङ्करः॥

अब छठें अध्याय में द्वितीय पाद [ प्रारम्भ हो रहा है ]—

इस सूत्र में पूर्वपद का ग्रहण पूर्वपद में स्थित स्वर = उदात्त अथवा स्वरित [ अर्थ ] में वर्तमान ( प्रयुक्त ) है। बहुव्रीहि समास में पूर्वपद का जो स्वर है वह प्रकृतिरूप से = अपने ही रूप से रहता है, अनुदात्तत्व रूप विकार ( परिवर्तन ) को नहीं प्राप्त करता है। कारण यह है कि "समासस्य" ( पा. सू. ६।१।२२३ ) सूत्र से समास का अन्तोदात्तत्व करने पर "अनुदात्तं पदमेकवर्जम्" ( पा. सू. ६।१।१५८ ) सूत्र से वह ( पूर्वपद ) अनुदात्त होने लगता, इस कारण समास के अन्तोदात्तत्व का अपवाद यह ( प्रकृति-स्वर-विधान ) आरब्ध किया जा रहा है।

**कार्ष्णोत्तरासङ्गाः। कृष्णो मृगः, तस्य विकारः कार्ष्णः, 'प्राणिरजतादिभ्योऽञ्' ( ४.३.१५४ ) इत्यञ्प्रत्ययान्तो ञित्स्वरेणाद्युदात्तः।**

**यूपवलजः। यूपशब्द उणादिषु 'कुसुयुभ्यश्च' ( उणादि ३१३ ) इति पप्रत्ययान्तः। तत्र च 'दीर्घः' इति, 'नित्' इति च वर्त्तते, तेनाद्युदात्तः।**

**न्यासः**

मारभ्यते ? इत्याह—**समासान्तोदात्तत्वे हि सतीत्यादि। समासान्तोदात्तत्वापवादोऽयमिति।** नाप्राप्ते तस्मिन्नारम्भात्। **कृष्णो मृग इति।** कृष्णगुणत्वात्। **आद्युदात्त इति।** ञित्स्वरेण।

**तत्र चेत्यादि।** तत्र 'स्तुवो दीर्घश्च' इति दीर्घग्रहणमनुवर्तते। 'सुशृभ्यां निच्च' इत्यतो निच्चेति च। **तेनाद्युदात्त इति।** नित्स्वरेण।

**पदमञ्जरी**

प्रतिषेधप्रसङ्गः, किं कारणम् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' ( व्या० प० १९ ) इति। तस्मात्समासस्येत्यस्यानन्तरमारभ्यमाणस्तस्यैवायमपवादः। ननु चोक्तम्—'कथं तत्प्रवृत्त्यपेक्षस्तदपवादः' इति ? उच्यते; निदानोच्छेदेन निदानिन उच्छेदः शक्यते कर्तुम्, समासान्तोदात्तत्वं च शेषनिघातलक्षणस्य पूर्वपदविकारस्य निदानम्, अतस्तदभावद्वारेण निदानभूतस्य[1] समासान्तोदात्तस्यैवास्मिन् विषयेऽप्रवृत्तिराख्यायते। नन्वेवं नानापदस्वरप्राप्तौ समासस्येत्यस्यारम्भात्तदप्रवृत्तौ द्वयोरपि पूर्वोत्तरपदयोः प्रकृतिस्वरप्रसङ्गः, तथा हि सति 'न बहुव्रीहेः' इति समासान्तोदात्तत्वमेव प्रतिषेधेत्, अस्तु वा समासान्तोदात्तत्वम्, अस्तु वा शेषनिघातः; पश्चात्तु प्रकृत्येत्यनेन स्वरविशेषमुपलक्ष्य स स्वरः पूर्वपदस्य विधीयते, शेषनिघातात्प्राक् पूर्वपदस्य प्रकृत्या यः स्वरस्तत्स्वरकं पूर्वपदं बहुव्रीहौ भवतीति; यदि वा 'प्रकृत्या' इत्यनेन स्वरविशेषे उपलक्षिते सत्ययमर्थो भवति—बहुव्रीहौ पूर्वपदस्य स्वाभाविको यः स्वर आद्युदात्तत्वादिकः स भवतीति, एवं च यथा पूर्वपदस्यादिरुदात्तो भवतीत्युक्तेन समासस्येत्येतत्प्रवृत्त्यपेक्षा, तादृगेतदिति युज्यते तदपवादता।

**कृष्णो मृग इति।** यस्याजिनं कृष्णाजिनमित्युच्यते।

**भावबोधिनी**

**विमर्श**—जिसका कोई विकार प्राप्त होता है उसका प्रकृतिभाव कराने के लिए यह सूत्र है। जब 'समासस्य' इस सामान्यसूत्र से समासमात्र का अन्तोदात्त होता है तब 'अनुदात्तं पदमेकवर्जम्' उसे छोड़कर शेष का निघात करता है। इसी निघात का अपवाद यह सूत्र है। चूँकि सम्पूर्ण पूर्वपद का निघात नहीं प्राप्त होता है अपि तु उसके स्वरित अथवा उदात्त का ही प्राप्त होता है। इस लिए 'पूर्वपदम्' का पूर्वपद में स्थित उदात्त और स्वरित में तात्पर्य समझना चाहिए। इनका कोई विकार नहीं होता है, अपने रूप में ही रहते है, अनुदात्तत्व नहीं होता है। यह आगे उदाहरणों में स्पष्ट हो जायगा।

( अनु० ) उदा०—कार्ष्णोत्तरासङ्गः। कृष्ण = एक मृगविशेष, उसका विकार = कार्ष्णः होता है [ कृष्णस्य विकारः इस अर्थ में ] "प्राणिरजतदिभ्योऽञ्" ( पा. सू. ४।३।१५४ ) सूत्र से अञ् प्रत्ययान्त [ कृष्ण + अञ्, आदिवृद्धि, रपर ] होने से 'ञित्' स्वर के कारण [ "ञ्नित्यादिर्नित्यम्" सूत्र से ] आद्युदात्त है। [ कार्ष्णः उत्तरासङ्गः यस्य सः—इस अर्थ में बहुव्रीहि समास, विभक्तिलोप, सवर्णदीर्घ करने पर—कार्ष्णोत्तरासङ्गः बनता है। यहाँ पूर्वपद = कार्ष्णः का प्रकृतिस्वर = आद्युदात्त ही रहता है, अनुदात्त नहीं होता हैं। ] "द्वौ प्रवारोत्तरासङ्गौ"..........अमरकोश २।६।११७ के अनुसार ओढ़ने वाला चादर उत्तरासङ्ग है। कृष्णाजिन को चादर बनाकर ओढ़ने वाला पुरुष। ]

यूपवलजः। यूप शब्द उणादि में "कुसुयुम्यश्च" ( उ. ३१३–१४ ) से पप्रत्ययान्त है। इस सूत्र में 'दीर्घ होता है' इसकी और 'नित् होता है' इनकी अनुवृत्ति होती है इसलिये [ "ञ्नित्यादिर्नित्यम्" सूत्र से ] आद्युदात्त है। [ यूपः

---

१. केचिदत्र 'निदानिभूतस्य' इति पाठं स्वीकुर्वन्ति।

**ब्रह्मचारिपरिस्कन्दः। ब्रह्मचारिन्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः।**

**स्नातकपुत्रः। स्नातशब्दः कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः।**

**अध्यापकपुत्रः। लित्स्वरेणाध्यापकशब्दो मध्योदात्तः।**

**श्रोत्रियपुत्रः। श्रोत्रियशब्दो नित्त्वादाद्युदात्तः।**

**मनुष्यनाथः। मनुष्यशब्दः 'तित्स्वरितम्' (६.१.१८५) इति स्वरितान्तः। उदात्तग्रहणं स्वरितग्रहणं**

**न्यासः**

**मनुष्यशब्दस्तित्स्वरितमितीति। मनोर्जातावञ्यतौ षुक्च' इति यत्प्रत्ययान्तत्वात्। उदात्तग्रहण-**

**कृदुत्तरपदेत्यादि।** ब्रह्मचारीति 'व्रते' इति णिनिः, उपपदसमासः। तत्र 'गतिकारकोपदात् कृत्' इति ब्रह्मचारीतिशब्दः कृत्स्वरेणान्तोदात्तः।

**स्नातकशब्दः कन्प्रत्ययान्त इति।** यावादित्वात्। यावादिषु 'स्नात वेदसमाप्तौ' इति पठ्यते। **आद्युदात्त इति।** नित्स्वरेण।

**श्रोत्रियशब्दो नित्त्वादाद्युदात्त इति।** 'श्रोत्रियँश्छन्दोऽधीते' इति निपात्यते, तेन नित्स्वरेणाद्युदात्तः।

**पदमञ्जरी**

**ब्रह्मचारिन्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्त इति।** तथा चाधीयते—'ब्रह्मचारी चरति विषयद्विषाम्।'[1] कस्य ब्रह्मचार्यसीत्यादौ णिनिः, पूर्वपदाद्युदात्तत्वं तु न भवति, प्रवृद्धादिषु पाठादाकृतिगणो हि स इष्यते। वृत्तौ तु कृदुत्तरपदप्रकृतिस्वरेणेत्युपलक्षणम्। अपर आह—छन्दसि 'परादिश्च परान्तश्च' (का० वा०) इत्यन्तोदात्तत्वम्। वृत्तेस्त्वयमर्थः—ब्रह्मेव चरति ब्रह्मचारीत्युपमानमत्र पूर्वपदम्, तत. किम्? 'उपमानं शब्दार्थप्रकृतावेव' इति नियमात्कृदुत्तरपदप्रकृतिस्वर एव भवतीति। **स्नातकशब्दः कन्प्रत्ययान्त इति।** यावादिषु 'स्नात वेदसमाप्तौ' (ग० सू० १४८) इति पठ्यते।

'मनोर्जातावाञ्यतौ षुक्च', मनुष्यः। यदि तर्ह्ययं प्रकृतिभावः समासान्तोदात्तत्वं बाधते, सर्वानुदात्तेऽपि पूर्वपदे बाधेत, तत्रापि ह्यस्य प्रवृत्तिर्न केनचिद्वार्यते, विशेषविधिश्च प्रवर्तमानः सत्यपि सम्भवे सामान्यविधेर्बाधको भवति, तक्रदानमिव दधिदानस्य? इत्यत आह—**उदात्तग्रहणमित्यादि।** न्यायतोऽप्ययमर्थः सिद्धः, कथं यस्य

**भावबोधिनी**

वलजः यस्य सः—बहुव्रीहि है। 'वलजः क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना" अमर ३।३।३१ के अनुसार नगर का फाटक या द्वार अर्थ है। यूप ही जिसका वलज है ऐसा। यहाँ पूर्वपद यूप का प्रकृतिस्वर आद्युदात्त ही रहता है।]

ब्रह्मचारि-परिस्कन्दः। यहाँ ब्रह्मचारिन् शब्द कृदुत्तरपदप्रकृतिस्वर [ "गतिकारकोपदात्०" सूत्र ] से अन्तोदात्त है। [ ब्रह्मचारी परिस्कन्दः यस्य यस्मिन् वा—इस में बहुव्रीहि है। परिस्कन्द = दूसरे के द्वारा परिपालित। बहुव्रीहि में ब्रह्मचारिन् अन्तोदात्त ही है।]

स्नातकपुत्रः। स्नातक—शब्द [ "यावादिभ्यः कन्" सूत्र से ] कन्-प्रत्ययान्त है, नित्स्वर के कारण आद्युदात्त है। [ स्नातकः पुत्रः यस्य सः—यह बहुव्रीहि है। स्नातक का प्रकृतिस्वर आद्युदात्त ही रहता है।]

अध्यापक-पुत्रः। [ अधि + इ णिच्—आत्व, पुक् यण् अध्यापि + ण्वुल् = अक = अध्यापकः ] लित् स्वर से अध्यापक शब्द मध्योदात्त है। [ "लिति" ६।१।१९३ सूत्र से प्रत्यय से पूर्व का उदात्त अर्थात् मध्योदात्त होता है।]

श्रोत्रियपुत्रः। श्रोत्रिय शब्द नित् होने से आद्युदात्त है। [ 'श्रोत्रियँश्छन्दोऽधीते' सूत्र से घन्प्रत्ययान्त निपातित होता है। श्रोत्रियः पुत्रः यस्य सः—इस में पूर्वका प्रकृतिस्वर = आद्युदात्त रहता है।]

---

१. वेविषद्विषः—इति पाठ उपलभ्यते।

चात्रानुवर्त्तते, तेन सर्वानुदात्ते पूर्वपदे विधिरेव नास्तीति समासान्तोदात्तत्वं भवति ।

'समभाग इति समशब्दो हि सर्वानुदात्तः ॥

**न्यासः**

मित्यादि । तत्रोदात्तग्रहणम् 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यतोऽनुवर्तते । स्वरितग्रहणमिति । 'तित् स्वरितम्' इत्यतः । ततः किं सिद्धं भवति ? इत्याह—तेनेत्यादि । उदात्तस्वरितानुवृत्तेर्ह्येतदेव प्रयोजनम्—यत्रोदात्तः स्वरितो वास्ति तत्रैव यथा स्यात् ।

समशब्दो हि 'सुनोतेर्डमप्' इति डमप्प्रत्ययान्तो व्युत्पाद्यते, तेन धातोष्टिलोपे कृते प्रत्ययस्य पित्त्वात्

**पदमञ्जरी**

विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, विकारप्राप्तिश्चोदात्तस्वरितयोरेव, अत एव पूर्वमुक्तमुदात्ते स्वरिते वा वर्तत इति ।

समभाग इति । समशब्दः 'सूत्रो डमप्' इति व्युत्पादितः सर्वानुदात्तः । नन्वत्रासत्यपि समासान्तोदात्तत्वे भागशब्दस्य 'कर्षात्वतः' इति अन्तोदात्तत्वात् समभागशब्दोऽन्तोदात्त एव भविष्यति । तस्मादुदाहरणदिगियं दर्शिता, समपाद इत्युदाहर्तव्यम्, पादशब्दो वृषादित्वादाद्युदात्तः ।

किमर्थं पुनरिदमुच्यते ? पूर्वपदप्रकृतिस्वरो यथा स्यात्, समासान्तोदात्तत्वं मा भूदिति, 'नञ्सुभ्याम्' इत्येतन्नियमार्थं भविष्यति—यदि बहुव्रीहावन्तोदात्तत्वं भवति नञ्सुभ्यामेवेति । न चैवं नानापदस्वरप्राप्तौ समासान्तोदात्तत्वविधानान्नियमेन तस्मिन्व्यावर्त्तितेऽपि पूर्वोत्तरपदयोर्द्वयोरपि पर्यायेण प्रकृतिस्वरप्रसङ्गः, 'शितेर्नित्याबह्वच्' इत्यस्य नियमार्थत्वात्—यदि बहुव्रीहावुत्तरपदं प्रकृत्या भवति शितेरेव परमिति ? उच्यते; 'नञ्सुभ्याम्' इत्येष तावन्नियमो नोपपद्यते; अनुदरः, सूदर इत्यादौ 'उदाराश्वेषु क्षेपे' इति पूर्वपदान्तोदात्तस्य प्राप्तस्य बाधनाद्विधिसम्भवात् । 'शितेर्नित्याबह्वच्' इत्येतदपि—शितेर्नित्याबह्वजेवेत्यनेन नियमेन शीतिललाटादिष्वेदोत्तरपदप्रकृतिस्वरं निवर्तयेत्, न चित्रगुप्रभृतिष्वित्यारभ्यमेवैतत् ।

बहुव्रीहिग्रहणं तु शक्यमकर्तुम्; तत्पुरुषे कस्मान्न भवति ? 'तत्पुरुषे तुल्यार्थ' इत्यादिनियमार्थं भविष्यति—तत्पुरुषे तुल्यार्थाद्येवेति, गन्तव्यपण्यमेव वाणिजे, गवादिष्वेवोत्तरपदेषु द्विगावित्यादि । द्वन्द्वे कस्मान्न भवति ? 'राजन्यबहुवचने' इत्येतन्नियमार्थं भविष्यति—द्वन्द्वे भवति राजन्यबहुवचनद्वन्द्व एवेति । अव्ययीभावे कस्मान्न भवति ? 'परिप्रत्युपापावर्ज्यमान' इत्यादि नियमार्थं भविष्यति—परिप्रत्युपापा एवाव्ययीभाव इति । विपरीतस्तु नियमः सर्वत्र न भविष्यति; 'नानिष्टार्था शास्त्रप्रवृत्तिरिति' ( भो० प० १०७ ) । एवमप्यसति बहुव्रीहिग्रहणे समासान्तोदात्तस्य पूर्वपदप्रकृतिस्वरस्य चैकविषयत्वाद्विरोधाच्च तुल्यश्वेतः, पञ्चारत्निरित्यादौ पर्यायः प्राप्नोति ? तत्पुरुषादिषु तुल्यार्थादीन्येव पूर्वपदानि प्रकृतिस्वराणि भवन्ति नान्यानि' इत्येव हि नियमः कृतः, न 'तुल्यार्थादिपूर्वपदेषु तत्पुरुषादिषु पूर्वपदप्रकृतिस्वरत्वमेव' इति । अथाप्यगृह्यमाणविशेषत्वादुभयनियमः—

**भावबोधिनी**

मनुष्यनाथः । मनुष्य शब्द "तित् स्वरितम्" ( पा. सू. ६।१।१८५ ) से स्वरितान्त है । क्योंकि 'मनोर्जातावञ्यतौ षुक् च' सूत्र से विहित यत् प्रत्यय के तित् होने से स्वरितान्त है । मनुष्यः नाथः यस्य सः—यहाँ बहुव्रीहि में उक्त स्वर ही रहता है । ]

इस सूत्र में उदात्तग्रहण और स्वरितग्रहण की अनुवृत्ति होती है, इसलिए सर्वानुदात्त पूर्वपद में विधि ही नहीं है, इस कारण समासान्त का उदात्तत्व होता है ।

समभागः । सम शब्द सर्वानुदात्त है । [ समः भागः यस्य सः—इसमें 'सम' के सभी अनुदात्त हैं क्योंकि 'सु'

---

१. अत्र 'समपादः' इत्युदाहर्त्तव्यमिति पदमञ्जरीकारः ।

**२६६९. तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ २ ॥ ( ३७३६ )**

**तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तमुपमानवाचि अव्ययं द्वितीयान्तं कृत्यान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवति। तुल्यार्थं—तुल्य॑श्वेतः। तुल्य॑लोहितः। तुल्य॑महान्। स॒दृक्च्छ्वेतः। स॒दृग्लो॑हितः। स॒दृग्महान्। स॒दृशश्वेतः। स॒दृशलोहितः। स॒दृशमहान्। एते 'कृत्यतुल्याख्या अजात्या' ( २.१.६८ ) इति कर्मधारयाः। तत्र तुल्यशब्दः 'यतोऽनावः' ( ६.१.२१३ ) इत्याद्युदात्तः। सदृक्शब्दः 'समानान्ययोश्च' ( का० वा० ) इति क्विन्प्रत्ययान्तः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। सदृशशब्दोऽपि कञन्तो मध्योदात्तः। तुल्यार्थः।**

**न्यासः**

सर्वानुदात्तो भवति ॥ १ ॥

**तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ यतोऽनाव इत्याद्युदात्त इति। 'नौवयोधर्म'** इत्यादिना यत्प्रत्ययान्तस्य तुल्यशब्दस्य व्युत्पादितत्वात्—तुलया सम्मितं तुल्यमिति। **सदृक्शब्द इत्यादि।**

**पदमञ्जरी**

तत्पुरुषादिषु तुल्यार्थादीन्येव, तेषु पूर्वपदप्रकृतिस्वरत्वमेवेति; तथा च 'बह्वन्यतरस्याम्' इति वर्तमाने 'दिष्टिवितस्त्योश्च' इति विकल्पो विधीयते, पञ्चदिष्टिः, पञ्चवितस्तिरित्यादौ 'इगन्ते द्विगौ' इति नित्यपूर्वपद-प्रकृतिस्वरो मा भूदिति ? तथापि चित्रगुरित्यादौ बहुव्रीहौ पर्यायप्रसङ्गः, ज्ञापकात्सिद्धम्, यदयम् 'द्वित्रिभ्यां पाद्दन्मूर्द्धसु' इति द्विपादित्यादावन्तोदात्तविकल्पं शास्ति, तज्ज्ञापयति—'न बहुव्रीहावन्तोदात्तत्वं पर्यायेण भवति' इति। एवमप्युदात्तविषयमेव ज्ञापकं स्यात्—'बहुव्रीहावन्तोदात्तत्वं पर्यायेण भवति' इति। किञ्च स्यात् ? उदात्तस्वरितयोस्तु पूर्वोत्तरपदस्थयोः पर्यायप्रसङ्गः। न च स्वरिते य उदात्तस्तदाश्रयं ज्ञापकं युज्यते, अचो ह्युदात्तसंज्ञा, न च वर्णैकदेशो गृह्यते। अथ वर्णत्वावर्णत्वकृतं भेदमुत्सृज्योदात्तश्रुतिपरं ज्ञापकं वर्ण्येत, तदा बहुव्रीहिग्रहणं शक्यमकर्तुम् ॥ १ ॥

**तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ सदृक्शब्दोऽपीत्यादि। कृदुत्तरपदप्रकृति-स्वरेणेत्येतदपेक्षते।**

**भावबोधिनी**

धातु से डमप् = अम प्रत्यय, टिलोप—सम में पित् होने से सर्वानुदात्तत्व है "अनुदात्तौ सुप्पितौ" सूत्र से ] ॥ १ ॥

तत्पुरुष समास में तुल्य अर्थवाला, तृतीयान्त, सप्तम्यन्त, उपमानवाचक, अव्यय, द्वितीयान्त और कृत्य-प्रत्ययान्त जो पूर्वपद है वह प्रकृति-स्वरवाला होता है, पूर्वपद का स्वर नहीं बदलता है। उदा०—( १ ) तुल्यार्थ—तुल्यश्वेतः। तुल्यलोहितः। तुल्यमहान्। सदृक्च्छ्वेतः। सदृग्लोहितः। सदृग्महान्। सदृशश्वेतः। सदृशलोहितः। सदृशमहान्। ये सभी शब्द "कृत्यतुल्याख्या अजात्या" ( पा० सू० २।१।६८ ) से कर्मधारय हैं। इनमें 'तुल्य' शब्द "यतोऽनावः" ( पा० सू० ६।१।२१३ ) से आद्युदात्त है। [ "समासस्य" से अन्तोदात्त के बाद पूर्वपद अनुदात्त न होकर प्रकृति-स्वरवाला = आद्युदात्त रहता है। ] सदृक् शब्द "समानान्ययोश्च" ( का० वा० ३।२।६०।१ ) से क्विन् प्रत्ययान्त है, कृदुत्तरपद के प्रकृतिस्वर से [ "गतिकारकोपपदात्" सूत्र से ] अन्तोदात्त है। [ अतः कर्मधारय 'सदृक्श्वेतः' आदि में पूर्वप्रद का प्रकृतिस्वर ही रहता हैं। ] 'सदृश' शब्द भी कञ्-प्रत्ययान्त मध्योदात्त है। तुल्यार्थ [ के उदा०—समाप्त हुये ]।

**विमर्श**—समान उपपद दृश धातु से "त्यदादिषु दृशेरनालोचने कञ् च" सूत्र में "समानान्ययोश्च" वार्तिक के

**तृतीया**—शङ्कुलया खण्डः शङ्कुलाखंण्डः। किरिणा काणः किरिकाणः। शङ्कुपूर्वाल्लातेः 'घञर्थे कविधानम्' ( का० वा० ) इति वा कप्रत्ययान्तः शङ्कुलाशब्दोऽन्तोदात्तः। किरिशब्दोऽपि किरतेः 'कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च' ( उणादि ५९२ ) इतीकारप्रत्ययः, किदौणादिकः, तेनासावन्तोदात्तः। तृतीया।

**सप्तमी**—अक्षेषु शौण्डः अक्षशौंण्डः। पानंशौण्डः। 'अशेर्देवने' ( उणादि० ६४० ) इति सप्रत्ययान्तोऽक्षशब्दोऽन्तोदात्तः। पानशब्दो ल्युडन्तो लित्स्वरेणाद्युदात्तः। सप्तमी।

**उपमान**—शस्त्रीश्यामा। कुमुदश्येनी। हंसगद्गदा। न्यग्रोधपरिमण्डला। दूर्वाकाण्डश्यामा। शरकाण्डगौरी। 'उपमानानि सामान्यवचनैः' ( २.१.५५ ) इति समासः। शस्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः। कुमुशब्दोऽपि कौ मोदते इति मूलविभुजादित्वात् ( का० वा० ) कप्रत्ययान्तः, 'नब्विषयस्यानिसन्तस्य' ( फि० सू० २६ ) इति वाऽऽद्युदात्तः। हंसशब्दः 'वृतॄवदिहनिकमिकषिभ्यः सः' ( उणादि० ३४९ ) इति सप्रत्ययान्तः। न्यग्रोहतीति न्यग्रोधः, पचादित्वाद् अच्प्रत्ययान्तः, तस्य 'न्यग्रोधस्य च केवलस्य' ( ७.३.५ )

**न्यासः**

'त्यदादिषु दृशेरनालोचने कञ्च' इत्यत्र 'समानान्ययोश्चेति वक्तव्यम्' इत्युपसंख्यानं कृतम्, तेन सदृक्छब्दः कञन्तः। 'दृग्दृशवतुषु' इति समानस्य सभावः। **सदृशशब्दोऽपीत्यादि**। कृदुत्तरपद-प्रकृतिस्वरेणेत्यपेक्षते।

**इकारः प्रत्यय इति**। तत्र 'अच इः' इत्यत इकारप्रत्ययानुवृत्तेः। **किदिति**। 'भुजेः किच्च' इत्यतः किद्ग्रहणानुवृत्तेः।

**पदमञ्जरी**

**कुमुदशब्दोऽपीत्यादि**। तत्र यदा कप्रत्ययान्तस्तदा थाथादिस्वरेणान्तोदात्तः, तथा च 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्य कुमुद्वानित्युदाहृतम्, उक्तं च—कुमुदादयोऽन्तोदात्ता इति। यदा त्वव्युत्पन्नं तदा 'नब्विषयस्यानिसन्तस्य' ( फि० सू० २.३ ) इत्याद्युदात्त इत्युक्तम्। अपर आह—जलजे नपुंसकविषयः कुमुदशब्दः; यस्तु वानरविशेषे कुमुदशब्दः स पुंल्लिङ्गः, तत्रेह जलजवाच्युदाहृतः, 'अनुदात्तस्य च' इत्यत्र तु वानरवचन इति।

**भावबोधिनी**

अनुसार क्विन् और कञ् प्रत्यय होते हैं। क्विन् का सर्वापहारी लोप, ''दृग्दृशवतुषु'' सूत्र से 'समान' का 'स' आदि प्रक्रिया के बाद 'सदृक्' यह बनता हैं। कृदुत्तरपद का प्रकृतिस्वर होने से स–दृक् में ऋ आद्युदात्त अर्थात् 'सदृक्' अन्तोदात्त फलित होता है क्योंकि एक 'ऋ' ही अच् है। परन्तु स–दृश में उत्तरपद का प्रकृतिस्वर होने से 'दृश' का आद्युदात्त अर्थात् 'स–दृश' का मध्योदात्त फलित होता है। इसलिए क्विन् और कञ् दोनों में ही ''ञ्नित्यादिर्नित्यम्'' से आद्युदात्त ही है।

( अनु० ) तृतीयान्त पूर्वपद का उदा०—शङ्कुलया खण्डः = शङ्कुलाखण्डः। किरिणा काणः = किरिकाणः। [ इनमें ''तृतीया तत्कृतार्थेन० सूत्र से तृतीयातत्पुरुष है। ] शङ्कु पूर्वक 'ला' धातु से ''घञर्थे क–विधानम्'' इस वार्तिक से विकल्प से क=अ—प्रत्ययान्त शङ्कुला शब्द [ प्रत्ययस्वर से ] अन्तोदात्त है। [ तृतीया तत्पुरुष में भी इसका प्रकृतिस्वर रहता है। ] किरि—शब्द भी ''कॄगॄशॄपॄ-कुटिभिदिच्छिदिभ्यश्च'' ( उ० ५९२ ) सूत्र द्वारा 'कॄ' धातु से 'इ'कार प्रत्यय, कित् औणादिक होता है इसलिए किरि यह अन्तोदात्त है। [ समास में भी प्रकृतिस्वर के कारण अन्तोदात्त ही रहता है। ] तृतीया समाप्त।

सप्तमी के उदा०—अक्षेषु शौण्डः—इसमें अक्षशौण्डः। [ पानेषु शौण्डः—इसमें ] पानशौण्डः। 'अशेर्देवने' ( उणा० ६४० ) से सप्रत्ययान्त 'अक्ष' शब्द अन्तोदात्त है। 'पान' शब्द ल्युट् प्रत्ययान्त होने से लित् स्वर से आद्युदात्त है। [ सप्तमी समास में प्रकृतिस्वर ही रहता है। ] सप्तमी समाप्त।

उपमान के उदा०—शस्त्रीश्यामा। ( शस्त्री इव श्यामा )। कुमुदश्येनी ( कुमुदमिव श्येनी ) हंसगद्गदा

**इति निपातनाद् हकारस्य धकारः, मध्योदात्तत्वं च। दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषावुत्तर-पदाद्युदात्तौ। उपमान।**

**अव्यय—अब्राह्मणः। अवृषलः। कुब्राह्मणः। कुवृषलः। निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः। एतान्यव्ययान्याद्युदात्तानि।**

**✽ अव्यये नञ्कुनिपातानामिति वक्तव्यम् ✽ ( का० वा० ६।२।२।३ )। इह मा भूत्—स्नात्वाकालक इति। अव्यय।**

**न्यासः**

**सप्रत्ययान्तोऽक्षशब्द इति।** 'अशेर्देवने' इत्यत्र 'वृतॄवदिहनिकमिकषिभ्यः सः' इत्यतः सप्रत्ययानुवृत्तेः।

**नब्विषयस्येति।** नपुंसकलिङ्गविषयस्येत्यर्थः। **मध्योदात्तत्वञ्चेति। न्यग्रोधस्य च केवलस्येति। निपातनादित्यनेन** सम्बन्धः।

**अब्राह्मण इति।** नञ्समासः। **कुब्राह्मण इत्यादौ** 'कुगतिप्रादयः' इति। **एतान्यव्ययान्याद्युदात्तानीति।** 'निपाता आद्युदात्ताः' इति वचनात्, एषाञ्च निपातत्वात्। तत्र नञ्कुशब्दयोः 'चादयोऽसत्त्वे' इति चादिषु पाठान्निपातत्वम्, निरतिशब्दयोस्तु 'प्रादयः' इति, तयोः प्रादिषु पाठात्।

**अव्यय इत्यादि।** अव्यये पूर्वपदे प्रकृतिभावे कर्तव्ये नञ्प्रभृतीनामेव भवतीत्येदर्थरूपं व्याख्येयम्। तत्रेदं व्याख्यानम्—'चङ्यन्तरस्याम्' इत्यतोऽन्तरस्यांग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा, तेन नञ्कुनिपाता-

**पदमञ्जरी**

**दूर्वाकाण्डशरकाण्डशब्दावित्यादि।** आद्यप्राप्तिप्रदर्शनमेतत्, 'षट् च काण्डादीनि' इत्युत्तरपदाद्युदात्तत्वेन तत्र भाव्यम्।

**नञ्कुनिपातानामिति।** निपातत्वादेव सिद्धे नञ्ग्रहणम् अकरणिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थम्। तथा चाव्यर्थात्यत्रापि कृता सह निर्दिष्टो यत्र नञ्, तत्रापि नञ एव स्वरो भवति, तथा विभक्तिस्वरान्नञ्स्वरो

**भावबोधिनी**

( हंस इव गद्गदा ) न्यग्रोधपरिमण्डला ( न्यग्रोध इव परिमण्डला )। दूर्वाकाण्डश्यामा ( दूर्वाकाण्डम् इव श्यामा ) शरकाण्डगौरी ( शरकाण्डमिव गौरी )—इनमें 'उपमानानि सामान्यवचनैः' ( पा० सू० २।१।५५ ) से समास होता है। [ अब पूर्वपद के प्रकृतिस्वर स्पष्ट दिये जाते हैं—] 'शस्त्री' शब्द ङीष् प्रत्ययान्त अन्तोदात्त है। 'कुमुद' शब्द भी कौ = पृथिवी में मोदते = खिलता है—इस विग्रह में 'मूलविभुजादिभ्यः कः' ( का० वा० ) से क=अ प्रत्ययान्त है, अथवा "नब्विषयानिसन्तस्य" ( फि० सू० २६ ) से अन्तोदात्त है। 'हंस' शब्द "वृ-तृ-वदिहनिकमिकषिभ्यः" ( उणादि० ३४९ ) से स-प्रत्ययान्त है। [ अतः अन्तोदात्त है। ] न्यग्रोहति—इस विग्रह में न्यग्रोधः, यहाँ पचादि मानकर अच् प्रत्ययान्त है और इसका 'न्यग्रोधस्य च केवलस्य' ( पा० सू० ७।३।५ ) सूत्र-निर्देश से निपातन से हकार का धकार ( न्यग् रोह् ='न्यग् रोध्+अ ) होता है। और मध्योदात्त होता है [ न्यग् + रोध में ओकार उदात्त है। ] दूर्वाकाण्ड और शरकाण्ड शब्द षष्ठीतत्पुरुष हैं इनमें उत्तर पद ( कण्ड ) आद्युदात्त है। ] उपमान समास।

अव्यय के उदा०—अब्राह्मणः। अवृषलः। [ न ब्राह्मणः, न वृषलः। ] कुब्राह्मणः। कुवृषलः। [ कुत्सितः ब्राह्मणः। कुत्सितः वृषलः ] निष्कौशाम्बिः। निर्वाराणसिः। [ निष्क्रान्तः कौशाम्ब्याः, निष्क्रान्तः वाराणस्याः ] अतिखट्वः। अतिमालः। [ खट्वामतिक्रान्तः, मालाम् अतिक्रान्तः। इनमें पूर्वपद नञ्, निर्, अति, कु-अव्यय हैं। ] ये अव्यय [ "निपाता आद्युदात्ताः" से ] आद्युदात्त हैं।

"अव्यय में नञ्, कु और निपातों का ही प्रकृतिस्वर कहना चाहिए।" जिससे इसमें न होने लगे—स्नात्वाकालकः। [ "मयूरव्यंसकादयश्च" से समास होता है। ] अव्यय समास।

द्वितीया—मुहूर्त्तसुखम् । मुहूर्त्तरमणीयम् । सर्वरात्रकल्याणी । सर्वरात्रशोभना । 'अत्यन्तसंयोगे च' ( २.२.२९ ) इति द्वितीयासमासः । मुहूर्त्तशब्दः पृषोदरादिरन्तोदात्तः । सर्वरात्रशब्दोऽप्यचप्रत्ययान्तः । द्वितीया ।

कृत्य—भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । हरणीयचूर्णम् । भोज्यशब्दो ण्यदन्तोऽन्तस्वरितः । पानीयहरणीयशब्दयोः 'उपोत्तमं रिति' ( ६.१.२१७ ) इति ईकार उदात्तः ॥

**३६६६. वर्णो वर्णेष्वनेते ॥ ३ ॥ ( ३७३७ )**

'प्रकृत्या पूर्वपदम्,' 'तत्पुरुषे' इति च वर्त्तते। वर्णं=वर्णवाचि पूर्वपदं वर्णवाचिष्वेवोत्तरपदेषु एतशब्दवर्जितेषु परतस्तत्पुरुषे समासे प्रकृतिस्वरं भवति। कृष्णसारङ्गः, लोहितसारङ्गः। कृष्णकल्माषः, लोहितकल्माषः। 'कृषेर्वर्णे' ( उणादि० २९१ ) इति कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्तः। लोहितशब्दोऽपि 'रुहे रश्च लो वा' ( उणादि० ३८१ ) इतीतन्प्रत्ययान्त आद्युदात्तः।

**न्यासः**

नामेव भविष्यतीति। **स्नात्वाकालक इति।** मयूरव्यंसकादित्वात् समासः। 'क्त्वातोसुन्कसुनः' इति पूर्वपदस्याव्ययत्वम्।

**मुहूर्तसुखमित्यादौ** 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। **सर्वरात्रशब्दोऽप्यचप्रत्ययान्त इति।** सर्वा च रात्रिश्चेति 'पूर्वकालैक' इत्यादिना समासे 'अहःसर्वैक' इत्यादिनाच्प्रत्ययविधानात् ॥ २ ॥

**वर्णो वर्णेष्वेनेते ॥ रुहे रश्च लो वेतीति।** अत्र 'हृश्याभ्यामितन्' इतीतनोऽनुवर्तनात्। **परमकृष्ण इति।**

**पदमञ्जरी**

बलीयान् भवति। कुग्रहणं तु चादिषु पाठाभावात्, पठितव्यस्त्वसौ, अन्यथाऽव्ययसंज्ञा न स्यात्; स्वरादिष्वपि पाठाभावात्। **स्नात्वाकालक इति।** मयूरव्यंसकादिरयम्। यद्येवम्, स तत्रैवान्तोदात्तः पठिष्यते? एवमपि परिगणनं कर्तव्यम्, सामिकृतम्, स्वयन्धौतमित्यादौ प्रकृतिस्वरो मा भूदिति! इह कस्मान्न भवति—परमं कारकं परमकारकम्, परमेण कारकेण परमकारकेण, परमे कारके परमकारके इति? न हि विशेषणसमासः प्रथमान्तानामेवेति नियमोऽस्ति। तेन द्वितीयाद्यन्तं पूर्वपदमिति चोद्यम्। परिहारस्तु लक्षणप्रतिपदोक्तपरिभाषया तृतीयादीनां प्रतिपदं यः समासस्तत्रायं स्वरः। अयं तु विभक्तिविशेषमनुपादाय विशेषणसमास इति ॥ २ ॥

**वर्णो वर्णेष्वनेते ॥** 'अनेते' इति प्रतिषेधाद्बहुवचननिर्देशाच्चोत्तरपदे स्वरूपग्रहणं न भवति, तत्साहचर्यात्

**भावबोधिनी**

द्वितीया के उदा० मुहूर्तसुखम्। मुहूर्तरमणीयम्। सर्वरात्रकल्याणी। सर्वरात्रशोभना। [ इनमें पूर्वपद द्वितीयान्त हैं उनका ] ''अत्यन्तसंयोगे च'' इससे द्वितीयासमास होता है। मुहूर्तशब्द पृषोदरादि अन्तोदात्त है। सर्वरात्र शब्द भी अच् प्रत्ययान्त है। [ अतः अन्तोदात्त है। ] द्वितीया समास।

कृत्य प्रत्ययान्त के उदा०—भोज्योष्णम्। भोज्यलवणम्। पानीयशीतम्। हरणीयचूर्णम्। भोज्य शब्द [ भुज् धातु से 'ऋहलोर्ण्यत्'' सूत्र से ] ण्यत्=य प्रत्ययान्त है [ तित् होने से ] स्वरित है। पानीय और हरणीय शब्दों में [ पा+अनीयर्, हृ+अनीयर् ] 'उपोत्तमं रिति ( पा० सू० ६।१।१२७ ) सूत्र से ईकार उदात्त है। [ कृत्यप्रत्यय समास ] ॥ २ ॥

'प्रकृत्या पूर्वपदम्' और 'तत्पुरुषे' इनकी अनुवृत्ति होती है। वर्ण=वर्णवाची पूर्वपद वर्णवाची ही उत्तरपद, एत शब्द को छोड़कर, परे रहते तत्पुरुष समास में प्रकृतिस्वर होता है। [ जब दोनों वर्ण=रंगवाचक हैं, एत शब्द नहीं है, तब पूर्वपद का प्रकृतिस्वर होता है। ] उदा०—कृष्णसारङ्गः। लोहितसारङ्गः। कृष्णकल्माषः, लोहितकल्माषः।

**वर्ण इति किम् ? परमकृष्णः ।**

**वर्णेष्विति किम् ? कृष्णतिलाः । अनेत इति किम् ? कृष्णैतः । लोहितैतः ॥**

## २६६७. गाधलवणयोः प्रमाणे ॥ ४ ॥ ( ३७३८ )

**प्रमाणवाचिनि तत्पुरुषे समासे गाध, लवण—इत्येतयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवति । शम्बगाधमुदकम् । अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः । गोलवणम् । अश्वलवणम् । यावद् गवे दीयते तावदित्यर्थः । षष्ठीसमासा एते । तत्र 'शमेर्बन्' ( उणादि० ५४३ ) इति बन्प्रत्ययान्तत्वाच्छम्बशब्दः आद्युदात्तः । अरित्रशब्दः 'अर्त्तिलूधूसू' ( ३.२.१८४ ) इतीत्रप्रत्ययान्तो मध्योदात्तः । गोशब्दो डोप्रत्ययान्तः**

**न्यासः**

अत्र समासान्तोदात्तत्वमेव ॥ ३ ॥

**गाधलवणयोः प्रमाणे ॥ शम्बगाधमिति ।** गाध्यत इति गाधः, 'गाधृ प्रतिष्ठालिप्सयोः', अर्धर्चादित्वात् पक्षे नपुंसत्वम् । **अर्तिलूधूसू इति ।** अनेन सूत्रैकदेशेन 'अर्तिलूधूसूखनसहचर इत्रः' इत्येतत्सूत्रमुपलक्ष्यते । **मध्योदात्त इति ।** प्रत्ययस्वरेण । **अशूप्रुषीति ।** 'अशूप्रुषिलटिकणिघटिविशिभ्यः कन्' इति सूत्रमुपलक्षयति । ननु चायामः=प्रमाणम्, 'आयामस्तु प्रमाणं स्यात्' इति वचनात्; न च शम्बगाधमित्यादिस्तत्पुरुषः प्रमाणवाची, किं तर्हि, इयत्तावाची ? इत्याह—**प्रमाणमित्यादि ।** इयतो भाव इयत्ता, स परिच्छिद्यते येन स **इयत्तापरिच्छेदः,**

**पदमञ्जरी**

पूर्वपदेऽपि । **कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्त इति ।** फिषि तु **'कृष्णस्यामृगाख्या चेत्' ( फि० सू० १.११ )** ति छन्दस्यन्तोदात्तत्वम्, अन्यत्राद्युदात्तत्वं व्यवस्थितम् ॥ ३ ॥

**गाधलवणयोः प्रमाणे ॥ शम्बगाधमिति ! 'गाधृ प्रतिष्ठायाम्' ( धा० पा० ४ ) गाध्यत इति गाधः,**

**भावबोधिनी**

'कृषेर्वर्णे' ( उ० २९१ ) से कृष्ण शब्द नक् प्रत्ययान्त अन्तोदात्त है । और रोहित शब्द भी 'रुहे रश्च लो वा' ( उ० ३८१ ) से इतन् प्रत्ययान्त [ नित् होसे से ] आद्युदात्त है ।

वर्ण—इसका क्या फल है ? परमकृष्णः । [ इसमें पूर्वपद वर्णवाची नहीं हैं । ]

वर्णवाची परे हो—इसका क्या फल है ? कृष्णतिलाः [ इसमें उत्तरपद वर्णवाची नहीं है । ]

एत—परे न हो—इसका क्या फल है ? कृष्णैतः । लोहितैतः । [ कृष्ण + एत, लोहित + एत है । अतः सूत्र नहीं लागू होता है । ] ॥ ३ ॥

प्रमाणवाची तत्पुरुष समास में गाध और लवण ये उत्तरपद रहने पर पूर्वपद का प्रकृतिस्वर ही होता है । उदा०—शम्बगाधम् उदकम् । अरित्रगाधम् उदकम् । [ शम्ब = वज्र के प्रमाण वाला, अरित्र = नौका की पतवार के प्रमाण वाला जल ] शम्ब और गाध के प्रमाण का जल—यह अर्थ है । गोलवणम् । अश्वलवणम् । जितना गाय को दिया जाता है उतना, ( जितना घोड़े को दिया जाता है उतना )—यह अर्थ है । ये षष्ठी तत्पुरुष समास हैं । [ अरित्रम् = नौकाष्ठम्, तस्य गाधम् = स्पृश्यमानं तलम्—इस रीति से तत्पुरुष हैं । ] इन में 'शम् से वन् प्रत्यय होता है' ( उणादि० २३५ ) से वन् प्रत्ययान्त ( नित् ) होने से 'शम्ब' शब्द आद्युदात्त है । 'अरित्र' शब्द 'अर्तिलूधूसहवनचर इत्रः" ( पा. सू. ३।२।१८४ ) से इत्र-प्रत्ययान्त [ प्रत्यय के आद्युदात्त होने से ] मध्योदात्त है । गो शब्द [ "गमेर्डो" उणादि सूत्र से ] डो = ओप्रत्ययान्त अन्तोदात्त है । 'अश्व' शब्द 'अशप्रुषिलटिकणि-घटिवाशिभ्यः' ( उणादि १५७ ) से कन् प्रत्ययान्त

( उणादि० २३५ ) अन्तोदात्तः। अभ्रशब्दः 'अशूप्रुषि' ( उणादि० ११७ ) इति क्वन्प्रत्ययान्त आद्युदात्तः। प्रमाणम् = इयत्तापरिच्छेदमात्रमिह द्रष्टव्यम्, न पुनरायाम एव। स्वरव्यङ्ग्यं च प्रमाणविशेषविषयत्वमेतेषाम्।

प्रमाण इति किम्? परमगाधम्। परलवणम्॥

## २६६८. दायाद्यं दायादे॥ ५॥ ( ३७३९ )

तत्पुरुषे समासे दायादशब्द उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं भवति। विद्यादायादः। धनदायादः। 'संज्ञायां समजनिषद' ( ३.३.९९ ) इति विद्याशब्दः क्यप्प्रत्ययान्तः। 'उदात्तः' इति च तत्र वर्त्तते, तेनायमन्तोदात्तः 'कृपवृजिमन्दिनिधाञ्भ्यः क्युः' ( उणादि० २४८ ) इति बहुलवचनात् केवलादपि धाञः क्युप्रत्ययः, तेन धनशब्दः प्रत्ययस्वरेणाद्युदात्तः।

### न्यासः

स एवात्र प्रमाणं वेदितव्यम्; न पुनरायाम एव। तत् कथम्? प्रमीयतेऽनेनेति प्रमाणमिति क्रियाशब्दोऽत्र प्रमाण-शब्दो गृह्यते, न तु रूढिशब्दः लक्ष्यानुरोधात्। तेन येनेयत्ता परिच्छद्यते तत् सर्वं प्रमाणम्। **स्वरव्यङ्ग्यं चेति**। अस्य स्वरे योऽयं प्रकृतिभावो विधीयते तेन व्यङ्ग्यं द्योत्यमित्यर्थः। **एतेषामिति**। शम्बगाधादीनाम्॥ ४॥

**दायाद्यं दायादे**॥ दायः=भागः, अंश इत्यर्थः। दायमादत्त इति दायादः। मूलविभुजादित्वात् कः दायादस्य कर्म दायाद्यम् किं पुनस्तत्? दाय एव। स हि दायादिरादीयमानः कर्म भवति। **उदात्त इति च तत्र वर्तत इति**। 'मन्त्रे वृष' इत्यादेः सूत्रात्। ननु च निपूर्वः सूत्रे धातुरुदात्तः, कथं केवलाद् भवति? इत्याह—**बहुलवचनादित्यादि**। **अथेत्यादि**। वक्ष्यमाणोऽभिप्रायः। येनाभिप्रायेण पृष्टावांस्तमाविष्कर्तुमाह—**यद्येवमित्यादि**। यदि 'स्वामीश्वराधिपति' इत्यादिना षष्ठी विधीयते सप्तम्येव हि विधातव्या, न षष्ठी, तस्याः

### पदमञ्जरी

अर्द्धर्चादिः। इयत्तायाः परिच्छित्तिः=**इयत्तापरिच्छेदः**। क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते, न त्वायाममाने रूढ इत्यर्थः॥ ४॥

**दायाद्यं दायादे**॥ दातव्यो दायः=भागः, अंश इत्यर्थः। दायमादत्ते दायादः, 'मूलविभुजादित्वात्कः' ( ग० पा० ४१ ) दायादस्य भावो दायाद्यम्। किं पुनस्तत्? दायस्यादानं तत्सम्बन्धो वा। इह तु लक्षणयाऽऽदीय-माने दाय एव दायाद्यशब्दो वर्तते।

### भावबोधिनी

आद्युदात्त है [ नित् होने से ]। प्रमाण = इयत्ता का परिच्छेदमात्र ही लेना चाहिए, आयाम नही। [ अर्थात् सामान्य-रूप से नापना ही प्रतीत कराना इष्ट है। ] इन गाध आदि का प्रमाणविशेष का विषय होना स्वर से व्यङ्ग्य है। [ पूर्वपद के प्रकृतिस्वर द्वारा इन गाध आदि की प्रमाणविशेषविषयता प्रतीत करायी जाती है। ]

प्रमाण = इयत्तापरिच्छेद में—इसका क्या फल है? परमगाधम्। परमलवणम्। [ यहाँ प्रमाण की प्रतीति न होने से पूर्वपद का प्रकृतिस्वर न होकर अन्तोदात्त को छोड़कर शेष का निघात हो जाता है। ]॥ ४॥

तत्पुरुष समास में दायाद शब्द उत्तर पद रहने पर दायाद्यवाची पूर्वपद का प्रकृतिस्वर होता है। उदा०—विद्या-दायादः। धनदायादः। 'संज्ञायां समजनिषद०'' ( पा. सू. ३।३।९९ ) सूत्र से 'विद्या' ( विद् + क्यप् = य टाप् ) क्यप् प्रत्ययान्त है। इस सूत्र में 'उदात्तः' इसकी अनुवृत्ति होती है, इस कारण यह अन्तोदात्त है। यद्यपि टाप् पित् होने से अनुदात्त है। परन्तु उदात्त के साथ एकादेश होने से 'आ' उदात्त ही रहता है। ] 'कृ पॄवृजिमन्दिनिधाञ्भ्यः क्युः'' ( उणादि० २४८ ) इस में बहुल वचन के कारण केवल ( =निरहित ) भी धाञ् धातु से क्यु=अन प्रत्यय होता है।

अथ विद्यादायाद इति केन षष्ठी? **'स्वामीश्वराधिपतिदायाद'** ( २.३.३९ ) इति। **यद्येवम्, 'प्रतिपदविधाना च षष्ठी न समस्यते'** ( का० वा० ) इति समासप्रतिषेधः प्राप्नोति? एवं तर्हि शेषलक्षणा ( २.३.५० ) एवात्र षष्ठी, तस्यास्तु सप्तमी विधीयमाना बाधिका मा विज्ञायीति पुनरभ्यनुज्ञायते।

दायाद्यतिमति किम्? परमदायादः। अत्र समासान्तोदात्तत्वमेव भवति॥

## २६६९. प्रतिबन्धि चिरकृच्छ्रयोः ॥ ६ ॥ ( ३७४० )

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं प्रकृतिस्वरं भवति। गमनचिरम्। गमनकृच्छ्रम्। व्याहरणचिरम्। व्याहरणकृच्छ्रम्। गमनव्याहरणशब्दो ल्युडन्तौ, तयोर्लित्स्वरः। गमनं

**न्यासः**

'शेषे' इत्येव सिद्धत्वात्? इत्यत आह—**तस्यास्त्वित्यादि**। यदि सप्तम्येव विधीयते, ततोऽसौ विशेषविहितत्वात् षष्ठ्या बाधिका विज्ञायेत, न त्वेवं विज्ञायेतेति पुनरनयैव शेषलक्षणषष्ठ्यभ्यनुज्ञायते, न त्वपूर्वा विधीयते, तेनाप्रतिपदविहितत्वाद् भवत्येव समासः। **परमादायाद इति**। अत्र पूर्वपदं पूजावाचि, न दायाद्यवाचि॥ ५॥

**प्रतिबन्धि चिरकृच्छ्रयोः**॥ कार्यसिद्धं प्रतिबध्नाति विहन्तीति प्रतिबन्धि। ताच्छील्य आवश्यके वा णिनिः। **विशेषणसमासे कृत इति**। ननु च विशेषणसमासः सामानाधिकरण्ये भवति; न चेदं सामानाधिकरण्यम्,

**पदमञ्जरी**

**अथेत्यादि**। वक्ष्यमाणोऽभिप्रायः। तमेवाविष्करोति—**यद्येवमिति**। **शेषलक्षणैवेति**। सामान्यलक्षणैवात्र षष्ठी, न प्रतिपदमित्येवशब्दस्यार्थः। यदि शेषलक्षणैवात्र षष्ठी, किमर्थं पुनस्तत्र विधानम्? इत्याह—**तस्यास्त्विति**। सप्तमी तावद्विधेया, अप्राप्तत्वात्। तत्र यदि सैव विधीयेत, ततोऽसौ विशेषविहितत्वात् षष्ठ्या बाधिका विज्ञायेत, मैवं विज्ञायीति पुनः सैव शेषलक्षणा षष्ठ्यभ्यनुज्ञायते, न त्वपूर्वा विधीयत इत्यर्थः॥ ५॥

**प्रतिबन्धि चिरकृच्छ्रयोः**॥ कार्यसिद्धिं प्रतिबध्नातीति **प्रतिबन्धि**, आवश्यके णिनिः। **विशेषणसमास इति**। ननु च सामानाधिकरण्ये सति स भवति, न चेह तदस्ति; **गमनशब्दस्य** गतिवाचित्वात् चिरशब्दस्य च

**भावबोधिनी**

इसलिए 'धन' शब्द प्रत्ययस्वर से आद्युदात्त है [ धा + अन, कित् होने से आलोप, अन आद्युदात्त होने से 'धन' आद्युदात्त हो ही जाता है। ]

प्रश्न है कि 'विद्यादायादः' यहाँ किस सूत्र से षष्ठी-समास होता है? उत्तर है "स्वामीश्वराधि-पतिदायाद०" ( पा० सू० २।३।३९ ) सूत्र से। यदि ऐसा है तब तो 'प्रतिपदविधानवाली षष्ठी = षष्ठ्यन्त का समास नहीं होता है' इस वचन से समास का प्रतिषेध प्राप्त होता है? यदि ऐसी स्थिति आती है तब तो यहाँ शेषलक्षण ( "षष्ठी शेषे" सूत्रविहित ) ही षष्ठी है, इस षष्ठी की विधीयमान सप्तमी बाधिका न समझी जाय, इस लिए पुनः उस षष्ठी की अभ्यनुज्ञा = स्वीकृति की जाती है। [ इस लिए प्रतिपदविहित नहीं माननी चाहिए। अतः षष्ठी और सप्तमी समास में कोई अनुपपत्ति नहीं आती है। ]

दायाद्य = दायाद का भाव या कर्म हो—इसका क्या फल है? परमदायादः। [ यहाँ दायाद्यवाची नहीं अपितु पूजा, सम्मान का वाचक है। अतः ] इसमें समास का अन्तोदात्तत्व ही होता है। [ और उसे छोड़ कर शेष का निघात होता है। ]॥ ५॥

तत्पुरुषसमास में चिर तथा कृच्छ्र उत्तरपद रहने पर प्रतिबन्धिवाचक पूर्वपद प्रकृतिस्वरवाला होता है। [ प्रतिबन्धि = प्रतिबन्धक, नष्ट करने वाला ] उदा०—गमनचिरम्। गमनकृच्छ्रम्। व्याहरणचिरम्। व्याहरणकृच्छ्रम्। गमन तथा व्याहरण शब्द [ गम् + ल्युट् = अन, वि आ हृ + ल्युट् = अन ] ल्युट् प्रत्ययान्त हैं इनमें [ "लिति" सूत्र से ]

**च यच्चिरं चेति विशेषणसमासोऽयम् ( २.१.५७ ), मयूरव्यंसकादिः ( २.१.७२ ) वैष द्रष्टव्यः। गमनं हि कारणविकलतया चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते।**

**प्रतिबन्धीति किम् ? मूत्रकृच्छ्रम्।**

## २६७०. पदेऽपदेशे ॥ ७ ॥ ( ३७४१ )

**अपदेशः = व्याजः, तद्वाचिनि तत्पुरुषे समासे पदशब्द उत्तरपदे पूर्वपदं प्रकृतिस्वरं भवति। मूत्रपदेन प्रस्थितः। उच्चारपदेन प्रस्थितः। मूत्रशब्दः 'सिचिमुच्योष्ट्रेरूच' ( उणादि० ६१२ ) इति ष्ट्रन्प्रत्ययान्तः, मूत्रयतेर्वा घञन्त आद्युदात्तः। उच्चारशब्दोऽपि घञन्तः 'थाथघञ्क्ताजबित्रकाणाम्' ( ६.२.१४४ ) इत्यन्तोदात्तः। विशेषणसमासोऽयम्, मयूरव्यंसकादिर्वा।**

**अपदेश इति किम् ? विष्णोः पदम् विष्णुपदम् ॥**

### न्यासः

कथं पुनरत्र पूर्वपदं प्रतिबन्धि भवति ? इत्याह—**गमनमित्यादि**। अचिरकालभाविनि गगने कार्यसिद्धिर्निष्पद्यते। **कृच्छ्रयोगि चेति**। कृच्छ्रम् = दुःखम्, तद्योगिनि गमने गन्ता प्राप्यमर्थं दुःखेनाभिहन्यमानो न प्राप्नोति। तस्माच्चिरकालभावि कृच्छ्रयोगि वा यद् गमनं तत् कार्यसिद्धेः प्रतिबन्धि जायते ॥ ६ ॥

**पदेऽपदेशे ॥ व्याज इति**। छद्मेत्यर्थः। **मूत्रपदेनेति**। मूत्रव्याजेनेत्यर्थः। **ष्ट्रन्प्रत्ययान्त इति**। 'सिचिमुच्योष्ट्रेरूच्च' इत्यत्र ष्ट्रन्नित्यस्यानुवृत्तेः। **मूत्रयतेरिति**। 'मूत्र प्रस्रवणे'। **उच्चारशब्दोऽपि घञन्तः। थाथादीत्यादि**। घञन्तत्वात् ॥ ७ ॥

### पदमञ्जरी

कालवाचित्वात् ? नैषः दोषः; चिरकालभाविनि गमनेऽत्रचिरशब्दो वर्तते। **मयूरव्यंसकादिर्वैष इति**। गमनमत्र विशेष्यम्, तद्विशेषणे तु चिरकृच्छ्रे, अतो विशेष्यस्य पूर्वनिपातार्थं मयूरव्यंसकादित्वमेष्टव्यमिति भावः। पूर्वपदस्य प्रतिबन्धिवाचित्वमुपपन्नयति। **गमनं हीत्यादि**। कारणवैकल्याद्धि चिरकालभावि गमनं कृच्छ्रयोगि च, कृच्छ्रम् = दुःखम्, तद्योगि च कार्यसिद्धेः प्रतिबन्धि जायते ॥ ६ ॥

**पदेऽपदेशे ॥ उच्चारः = पुरीषक्रिया ॥ ७ ॥**

### भावबोधिनी

लित् स्वर होता है। गमनं च यत् चिरं च—इस विग्रह में विशेषण ( कर्मधारय ) समास है अथवा "मयूर-व्यंसकादयश्च" सूत्र से यह समास समझना चाहिए। कारण यह है कि कारणवैकल्य से चिरकाल में होने वाला अथवा कष्ट से युक्त गमन प्रतिबन्धी हो जाता है। [ इस कारण कार्यसिद्धि का प्रतिबन्धक हो जाता है। इनमें ल्युडन्त पूर्वपद का लित् प्रत्यय अन से पूर्व का उदात्त प्रकृतिस्वर रहता है। ]

प्रतिबन्धी—इसका क्या फल है ? मूत्रकृच्छ्रम्। [ इसमें प्रतिबन्धकता की प्रतीति नहीं है। ] ॥ ६ ॥

अपदेश = व्याज, बहाना, इसके वाचक तत्पुरुष समास में पद शब्द उत्तरपद रहने पर पूर्वपद प्रकृतिस्वरवाला ही रहता है। उदा०—मूत्रपदेन प्रस्थितः। उच्चारपदेन प्रस्थित। [ पेशाब करने के बहाने से चला गया, शौच करने के बहाने से चला गया ] मूत्र शब्द "सिचिमुच्योष्टेरू च" ( उणादि० ६१२ ) से ष्ट्रन् = त्र-प्रत्ययान्त है अथवा मूत्रि इसका घञन्त आद्युदात्त [ "ञ्नित्यादिर्नित्यम्" सूत्र से ] है। उच्चार शब्द भी घञन्त है अतः "थाथघञ्क्ता-जबित्रकाणाम्" ( पा० सू० ६।२।१४४ ) से अन्तोदात्त है। इसमें विशेषण ( कर्मधारय ) समास है अथवा "मयूर-व्यंसकादयश्च" से समास है। [ मूत्रपदेन = मूत्रव्याजेन उच्चारपदेन = पुरीषक्रियाछद्मना प्रस्थितः यह प्रतीति होती है। ]

अपदेश = व्याज, बहाना अर्थ में—इसका क्या फल है ? विष्णोः पदम्, विष्णुपदम्। [ इसमें यथार्थकथन है। अतः पूर्वपद का प्रकृतिस्वर न होकर अन्तोदात्त और शेष का निघात होता है। ] ॥ ७ ॥

## २६७१. निवाते वातत्राणे ॥ ८ ॥ ( ३७४२ )

**निवातशब्दे उत्तरपदे वातत्राणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। कुटयेव निवातं कुटीनिवातम्। शमीनिवातम्। कुड्यनिवातम्। वातस्याभावो निवातम्, 'अर्थाभाव' ( २.१.६ ) इत्यव्ययीभावः[1]। निरुद्धो वातोऽस्मिन्निति वा निवातमिति बहुव्रीहिः। तत्र कुड्यादिहेतुके निवाते कुड्यादयो वर्तमानाः समानाधिकरणेन निवातशब्देन सह समस्यन्ते। कुटी-शमीशब्दौ गौरादिङीषन्तावन्तोदात्तौ। कुड्यशब्दोऽपि 'कवतेर्यत् डक्किच्च' ( उणादि-सूत्रम् ) इति यत्प्रत्ययान्त आद्युदात्त इत्येके। ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपरे।**

**वातत्राण इति किम् ? राजनिवाते वसति। सुखं मातृनिवातम्। निवातशब्दोऽयं पार्श्ववाची रूढिशब्दः, तत्रोभयत्र षष्ठीसमासः ॥**

## २६७२. शारदेऽनार्तवे ॥ ९ ॥ ( ३७४३ )

**ऋतौ भवमार्तवम्। अनार्तववाचिनि शारदशब्दे उत्तरपदे तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति।**

### न्यासः

**निवाते वातत्राणे ॥** कुड्यादिहेतुक इत्यादि। कुड्यादिहेतुके वर्तन्ते; कार्ये कारणोपचारात्। भवति कारणे कार्योपचारः, यथा—'सर्वमिदं पुरातनं कर्म भुज्यते' इति। **कवतेरिति। 'कु शब्दे'। आद्युदात्त इति।** 'यतोऽनावः' इत्यनेन। ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपर इति। ते 'कवतेर्ड्यक्' इति सूत्रमधीयते ॥ ८ ॥

**शारदेऽनार्तवे ॥ रज्जुशारदम्, दृषच्छारदमिति। योगविभागात् समासः। शारदशब्दोऽयं प्रत्यग्र-**

### पदमञ्जरी

**निवाते वातत्राणे ॥ ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपरे इति। 'कवतेर्ड्यक्'** ( द० उ० ८.२० ) इति सूत्रमधीयते। डकारस्येत्संज्ञा न भवति; गुणप्रतिषेधार्थात्ककारानुबन्धात् ॥ ८ ॥

**शारदेऽनार्तवे ॥** उदाहरणे रज्जूद्धृते रज्जुशब्दो दृषत्पिष्टेषु दृषच्छब्दः, ततः कर्मधारयेऽस्वपदविग्रहः।

### भावबोधिनी

वात=वायु से रक्षा करना अर्थ का वाचक निवात शब्द उत्तरपद रहने पर तत्पुरुष समास में पूर्वपद प्रकृतिस्वर वाला होता है। उदा०—कुटी एव निवातम्—कुटीनिवातम्। [ शमी एव निवातम्— ] शमीनिवातम्। [ कुड्यम् एव निवातम्— ] कुड्यनिवातम्। [ इनमें पूर्वपद का प्रकृतिस्वर ही रहता है। ] वात का अभाव=निवात है, अर्थाभाव में [ "अव्ययं विभक्ति-समृद्धि०" इस सूत्र से ] अव्ययीभाव समास है। अथवा—निरुद्धः वातः अस्मिन्—इस अर्थ में निवातम्—यह बहुव्रीहि है। यहाँ कुड्यादि-हेतुक निवात [ दीवाल आदि के कारण होने वाले वायु के अभाव ] अर्थ में वर्तमान कुड्यादि शब्द समानाधिकरण निवातशब्द के साथ समास प्राप्त करते हैं। कुटी और शमी शब्द गौरादिङीषन्त अन्तोदात्त हैं। कुड्यशब्द भी 'कवतेर्यत् डक्किच्च ( उणादि० सूत्र ) से यत्-प्रत्ययान्त आद्युदात्त है—ऐसा कुछ लोग मानते हैं। ड्यक् प्रत्ययान्त अन्तोदात्त है, ऐसा दूसरे लोग मानते हैं।

वात से त्राण अर्थ में—इसका क्या फल है ? राजनिवाते वसति। सुखं मातृनिवातम्। यहाँ यह निवात शब्द पार्श्ववाची=समीपवाचक रूढ़ है। इन दोनों में षष्ठीतत्पुरुष है। [ पूर्वपद का प्रकृतिस्वर नहीं होता है। ] ॥ ८ ॥

ऋतु में होनेवाला=आर्तव। अनार्तव का वाचक शारद शब्द उत्तरपद रहने पर तत्पुरुष समास में पूर्वपद प्रकृति-स्वरवाला होता है। उदा०—रज्जुशारदम् उदकम्। दृषत्शारदाः सक्तवः। [ रज्जु शब्द रज्जु=रस्सी से निकाला गया, और

---

१. 'अव्ययं विभक्ति' इत्यादिनेति भावः।

रज्जुंशारदमुदकम् । दृषत्शारदाः सक्तवः । शारदशब्दोऽयं प्रत्यग्रवाची, तस्य नित्यसमासः, अस्वपदविग्रह इष्यते । सद्यो रज्जूद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारदमुच्यते । रज्जुशब्दः 'सृजेरसुम् च' ( उणादि १५ ) इति उप्रत्ययान्त आदिलोपश्च । 'धान्ये नित्' इति च तत्र वर्त्तते, तेनाद्युदात्तः । दृषत्-शब्दः 'दृणातेः षुग् ह्रस्वश्च' ( उणादि १३६ ) इति अदिक्प्रत्ययान्तोऽन्तोदात्तः ।

अनार्त्तव इति किम् ? परमशारदम् । उत्तमशारदम् । शरदि ऋतुविशेषे भवं यत्तदिह शारदम् ॥

२६७३. अध्वर्युकषाययोर्जातौ ॥ १० ॥ ( ३७४४ )

अध्वर्यु, कषाय—इत्येतयोर्जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । प्राच्याध्वर्युः । कठाध्वर्युः । कलापाध्वर्युः ।

एते समानाधिकरणसमासा जातिवाचिनो नियतविषयाः । तत्र प्राच्यशब्दो यत्प्रत्ययान्त आद्युदात्तः ।

न्यासः

**वाचीति** । प्रत्यग्रम् = अभिनवम्, अचिरकालभावीत्यर्थः । एतेन नानार्थवाचित्वं शारदशब्दस्य दर्शयति **नित्यसमास इति** । महाविभाषायाः प्रकृताया व्यवस्थितविभाषात्वात् । **अनुपहतमिति** । रजोभिः । अनुपहतत्वं तु सद्य उद्धृतत्वात् । **उप्रत्ययान्त इति** । 'सृजेरसुम् च' इत्यत्र 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' इत्यत उकारप्रत्ययानुवृत्तेः । **आदिप्रत्ययान्त इति** । 'दृणातेः षुग् ह्रस्वश्च' इत्यत्र 'शृदृभसोऽदिः' इत्यतोऽदिप्रत्ययानुवृत्तेः ।

**परमशारदमिति** । शरदि भवं शारदम् । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति सूत्रेणोत्पन्नोऽयं शब्दः ॥ ९ ॥

**अध्वर्युकषाययोर्जातौ** ॥ **जातिवाचिनो नियतविषया इति** । नियतो विषयो येषामिति विग्रहः । नियतविषयत्वं तु जातिविशेषत्व एव वर्तमानत्वात् । अध्वर्युप्रभृतीनाम् 'गोत्रञ्च चरणैः सह' इति चरणत्वाज्जातित्वम् । **यत्प्रत्ययान्त इति** । 'द्युप्रागपागुदक्प्रतीचो यत्' इति । **कठशब्दः पचाद्यचि व्युत्पादित** । 'कठ

पदमञ्जरी

'सृजेरसुम् च' ( द० उ० १०० ) इत्यत्र 'स्कन्देः सलोपश्च' ( द० उ० ९९ ) इत्यतः सलोप इति वर्तते, तेन सृजेरन्त्यादचः परोऽयमसुम्, सलोपे यणादेशेऽसुमः सकारस्य जश्त्वे च रज्जुरिति भवति ॥ ९ ॥

**अध्वर्युकषाययोर्जातौ** ॥

भावबोधिनी

दृषत् शब्द दृषत्=पत्थर से पीसा गया=अर्थ के वाचक है । कर्मधारय है । ] यहाँ शारद शब्द प्रत्यग्र=ताजा अर्थवाची है, इसका नित्य समास होता है, इसमें अस्वपद विग्रह इष्ट है । तत्काल = उसी समय रस्सी से निकाला गया उदक, ताजा, धूलि आदि से रहित स्वच्छ जल 'रज्जुशारदम्' कहा जाता है । रज्जु शब्द ''सृजेरसुम् च'' (उणादि १५) से उ-प्रत्ययान्त और आदिलोप वाला है । [ सृज्+उ, सलोप ऋज् + उ, असुम्, = अस् आगम यणादि करने पर रज्जु बनता है । ] उस सूत्र में ''धान्ये नित्'' इसकी अनुवृत्ति होती है, इसलिए आद्युदात्त है । दृषत् शब्द ''दृणातेः षुक् ह्रस्वश्च'' ( उणादि० १३६ ) से अदिक् = अत् प्रत्ययान्त अन्तोदात्त है ।

अनार्तव—यह किस लिए है ? परमशारदम् । उत्तमशारदम् । शरद् = एक ऋतुविशेष है, उसमें होनेवाला जो है वह यहाँ 'शारद' है । [ अतः सूत्र नहीं लागू होता है । ] ॥ ९ ॥

अध्वर्यु और कषाय इनके जातिवाची तत्पुरुष समास में रहने पर पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—प्राच्याध्वर्युः । कठाध्वर्युः । कलापाध्वर्युः ।

ये समानाधिकरण समास जातिवाची नियतविषय वाले हैं । इनमें 'प्राच्य' शब्द यत्प्रत्ययान्त आद्युदात्त है ।

कठशब्दः पचाद्यचि व्युत्पादितः, ततः कठेन प्रोक्तमिति 'वैशम्पायनान्तेवासिभ्यश्च' ( ४.३.१०४ ) इति णिनिः, तस्य 'कठचरकाल्लुक्' ( ४.३.१०७ ) इति लुक्। कलापिना प्रोक्तमिति 'कलापिनोऽण्' ( ४.३.१०८ ) तस्मिन् 'इनण्यनपत्ये' ( ६ ४.१६४ ) इति प्रकृतिभावे प्राप्ते 'नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलि-जाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्' ( का० वा० ) इति टिलोपः। तदेवं कलापशब्दोऽन्तोदात्तः। सर्पिर्मण्डकषायम्। उमापुष्पकषायम्। दौवारिककषायम्। षष्ठीसमासव्युत्पादिता रूढिशब्दा एते। तत्र सर्पिर्मण्डशब्दः, उमापुष्पशब्दश्च षष्ठीसमासावन्तोदात्तौ। दौवारिकशब्दोऽपि 'द्वारे नियुक्तः' इति ठकि सत्यन्तोदात्त एव।

जाताविति किम्? परमाध्वर्युः परमकषायः॥

## २६७४. सदृशप्रतिरूपयोः सादृश्ये ॥ ११ ॥ ( ३६४५ )

सदृश, प्रतिरूप—इत्येतयोरुत्तरपदयोः सादृश्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। पितृसदृशः। मातृसदृशः। पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातितौ।

### न्यासः

कृच्छ्रजीवने' इत्यस्मात्। तदेवमिति। यस्मादेवं कालापशब्दोऽणन्तः, तस्मात् प्रत्ययस्वरेणान्तोदात्तः। ठकि सत्यन्तोदात्त इति। 'कितः' इत्यनेन॥ १०॥

सदृशप्रतिरूपयोः सादृश्ये॥ पितृसदृश इति। 'तुल्यार्थैः' इत्यादिना षष्ठी, तृतीया च, 'पूर्वसदृश' इत्यादिना समासः। पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातिताविति। 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृ-पितृदुहितृ' इत्यत्र।

### पदमञ्जरी

नियतविषया इति। वरणविशेषनियता इत्यर्थः॥ १०॥

सदृशप्रतिरूपयोः सादृश्ये[1]॥ सदृशग्रहणमनर्थकम्; तृतीयासमासवचनात्। सदृशशब्देन तृतीयासमास उच्यते—'पूर्वसदृशसमोनार्थ' इति, तत्र तृतीयापूर्वपदं प्रकृतिस्वरं भवतीत्येव सिद्धमत आह-षष्ठीसमासार्थं चेति।

### भावबोधिनी

कठ शब्द पचादिअच् प्रत्यय में बना है, उसके बाद 'कठेन प्रोक्तम्' इस अर्थ में 'वैशम्पायनान्तेवासिभ्यश्च' सूत्र से णिनि होता है, इसका "कठचरकाल्लुक्" ( ४।३।१०७ ) सूत्र से लुक् हो जाता है। [ अतः अन्तोदात्त है। ] 'कलापिना प्रोक्तम्' इस अर्थ में "कलापिनोऽण्" (३।४।१०८) से अण् प्रत्यय, इस के परे रहते 'इनण्यनपत्ये' (पा. सू. ६।४।१।१६४) से प्रकृतिभाव प्राप्त होनेपर 'नान्तस्य टिलोपे सब्रह्मचारि-पीठसर्पि-कलापिकौथुमितैतिलि-जाजलिलाङ्गलिशिलालिशिखण्डिसूकर-सद्मसुपर्वणा-मुपसंख्यानम्" ( का. वा. ) से टिलोप होता है। इस प्रकार 'कलाप' शब्द अन्तोदात्त है।

सर्पिर्मण्डकषायम्। उमापुष्पकषायम्। दौवारिककषायम्। ये शब्द षष्ठीसमास में व्युत्पादित रूढि शब्द हैं। इनमें 'सर्पिर्मण्ड" शब्द और 'उमापुष्प' शब्द षष्ठीसमास वाले अन्तोदात्त हैं। दौवारिक शब्द भी 'द्वारे नियुक्तः' इस अर्थ में ठक प्रत्यय करने पर अन्तोदात्त ही है। [ क्योंकि 'कितः" सूत्र तद्धित कित् का अन्तोदात्त करता है।]

जाति में—इसका क्या फल है? परमाध्वर्युः। परमकषायः। [ यहाँ शास्त्रीय या लौकिक जाति प्रतीत नहीं होती है। ]॥ १०॥

सदृश और प्रतिरूप ये उत्तर पद रहने पर सादृश्यवाची तत्पुरुष समास में पूर्वपद प्रकृति-स्वरवाला रहता है। उदा०—पितृसदृशः। मातृसदृशः। पितृ शब्द और मातृशब्द उणादि में अन्तोदात्त निपातित होते हैं। [ इनमें षष्ठ्यन्त

---

१. मुद्रितपुस्तके 'सदृशप्रतिरूपयोर्जातौ' इति सूत्रप्रतीकं प्रमादजम्।

**षष्ठीसमासार्थं च सदृशग्रहणमिह तदलुकि षष्ठ्याः प्रयोजति—दास्याः सदृशः, वृषल्याः सदृश इति। अत्र दासी-वृषलीशब्दयोरन्तोदात्तत्वाद् 'उदात्तयणो हल्पूर्वात्' ( ६.१.१७४ ) इति विभक्तिरन्तोदात्ता। पितृप्रतिरूपः। मातृप्रतिरूपः।**

**सादृश्ये इति किम् ? परमसदृशः। उत्तमसदृशः। समासार्थोऽत्र पूज्यमानता, न सादृश्यम् ॥**

**न्यासः**

अथ सदृशग्रहणं किमर्थम्, यावता मातृसदृशः पितृसदृश इत्यत्र 'तत्पुरुषे तुल्यार्थ' इत्येव सिद्धम् ? इत्यत आह—**षष्ठीसमासार्थञ्चेत्यादि**। तुल्यार्थे हि प्रयोगे षष्ठ्यपि विधीयते। तत्र यदा मातृसदृश इति षष्ठीसमासः क्रियते, तदापि यथा स्यादित्येवमर्थं सदृशग्रहणम्। सति त्वस्यारम्भे तृतीयासमासेऽपि सदृशग्रहणं कर्तव्यमित्यत आह—**इहेत्यादि**। **दास्याः सदृशः, वृषल्याः सदृश इति**। अत्र 'षष्ठ्या आक्रोशे' इत्यलुकि कृते षष्ठीसमासस्तत्सदृशग्रहणं प्रयोजयति; अलुकि सति रूपविशेषस्य विद्यमानत्वात्। यदि षष्ठीसमासार्थं सदृशग्रहणमिह क्रियते, तृतीयासमासो न कर्तव्यः; विशेषाभावात् ? नैतदस्ति; तत्रापि हि कर्तव्य एव यत्र षष्ठ्यर्थे नास्ति तदर्थः, यथा विद्यया सदृशो विद्यासदृश इति, नह्यत्र षष्ठ्यर्थो विद्यते, किं तर्हि ? तृतीयार्थः विद्यया हेतुना सदृश इत्यर्थः। **अत्रेत्यादि**। तत्र दासीशब्दस्य ङीबुदात्तनिवृत्तिस्वरेणान्तोदात्तार्थः। **'दशि सेवने'** इति 'दंशेष्टनौ न आ च' इति टप्रत्ययान्तो नकारस्य चाकारादेशः। 'टिड्ढाणञ्' इति ङीप्, यस्येतिलोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तत्वम्। वृषलीशब्दः 'जातेरस्त्रीविषयात्' इति ङीषन्तोऽन्तोदात्तो भवति प्रत्ययस्वरेण ॥ ११ ॥

**पदमञ्जरी**

तुल्यार्थयोगे षष्ठ्यपि विधीयते, तत्र यदा तस्याः षष्ठ्याः समासः क्रियते, तदापि यथा स्यादित्येवमर्थं सदृशग्रहणम्। ननु चानभिधानात्पष्ठीसमासो न भविष्यति; त्रैशब्द्यं हि नः साध्यम्—मातुः सदृशः, मात्रा सदृशः, मातृसदृश इति; एतच्च बिनापि षष्ठीसमासेन सिद्ध्यत्येव ? अत आह—**इहेत्यादि**। अलुकि सति रूपविशेषस्य विद्यमानत्वादवश्यकर्तव्यः षष्ठीसमासः, तदर्थं चेह सदृशग्रहणं कर्तव्यम्। यद्येवम्, तृतीयासमासे सदृशग्रहणं न कर्तव्यम्, षष्ठीसमास एवास्तु ? यत्र तर्हि षष्ठ्यर्थो नास्ति तदर्थं तत्र सदृशग्रहणम्, यथा—विद्यया सदृशो विद्यासदृश इति। न यत्र षष्ठ्यर्थोऽस्ति, किन्तु तृतीयार्थः, विद्यया हेतुना सदृश इत्यर्थः, अन्यो देवदत्तादिरत्र प्रतियोगी। अपर आह—तृतीयासमासोऽप्यलुकि प्रयोजयति—मनसः संज्ञायां मनसासदृश इति। **अत्रेत्यादि**। 'दशि[1] दंशनस्पर्शनयोः' ( धा० पा० १६७५ ) 'दंशेष्टो न आ च' ( द० उ० ९.१०३ ) इति टप्रत्ययः, नकारस्य चाकारः, टित्वान्ङीप्, यस्येतिलोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वम्। वृषलशब्दाज्जातिलक्षणो ङीष् ॥ ११ ॥

**भावबोधिनी**

और तृतीयान्त के साथ समास होता है। ]

और षष्ठी-समास के लिए सदृशग्रहण यहाँ उसके अलुक् में षष्ठी का प्रयोग करवाता है—दास्याः सदृशः, वृषल्याः सदृशः। [ इनमें 'षष्ठ्या अक्रोशे'' ( पा. सू. ६।३।२१ ) से षष्ठी का अलुक् होने से षष्ठी सुनाई देती है। ] दासी और वृषली शब्द अन्तोदात्त हैं इसलिए 'उदात्तयणो हल्पूर्वात्' ( पा. सू. ६।१।१७४ ) सूत्र से विभक्ति अन्तोदात्त होती है।

पितृप्रतिरूपः। मातृप्रतिरूपः। [ यहाँ भी षष्ठीसमास है। पितृ और मातृ शब्द का प्रकृतिस्वर रहता है। ]

---

१. 'दसि दंशजे दर्शने च' इति द० उ० ९.१०३

२६७५. द्विगौ प्रमाणे ॥ १२ ॥ ( ३७४६ )

द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । प्राच्यसप्तशमः[1] । गान्धारिसप्तशमः । सप्त शमाः प्रमाणमस्येति मात्रच उत्पन्नस्य 'प्रमाणे लो' ( का० वा० ) 'द्विगोर्नित्यम्' ( का० वा० ) इति लुक् । प्राच्यश्चासौ सप्तशमश्चेति प्राच्यसप्तशमः । प्राच्यशब्द आद्युदात्तः, गान्धारिशब्दः कर्दमादित्वादाद्युदात्तः, मध्योदात्तो वा ।

द्विगाविति किम् ? व्रीहिप्रस्थः । प्रमाण इति किम् ? परमसप्तशमः ॥

२६७६. गन्तव्यपण्यं वाणिजे ॥ १३ ॥ ( ३७४७ )

वाणिजशब्द उत्तरपदे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं भवति । मद्रवाणिजः । काश्मीरवाणिजः । गान्धारिवाणिजः । मद्रादिषु गत्वा व्यवहरन्तीत्यर्थः । सप्तमीसमासा एते । तत्र

**न्यासः**

**द्विगौ प्रमाणे ॥ प्राच्यसप्तशम इति ।** षष्ठीसमासः **प्राच्यशब्द आद्युदात्त इति ।** यत्प्रत्ययान्तत्वात् 'यतोऽनावः' इति । **गान्धारिशब्दः कर्दमादित्वादाद्युदात्तो मध्योदात्तो वेति ।** 'कर्दमादीनाञ्च' इत्यत्रादिग्रहणं चानुवर्तते, तत्र यदादेरुदात्तो विधीयते तदाऽऽद्युदात्तो भवति; यदा तु द्वितीयस्य तदा मध्योदात्तः ।

**व्रीहिप्रस्थ इति ।** षष्ठीसमासः । **परमसप्तशम इति ।** सप्तानां शमानां समाहारः सप्तशमम् । मूलोदाहरणे तु तद्धितार्थे द्विगोरुत्तरपदत्वम् ॥ १२ ॥

**गन्तव्यपण्यं वाणिजे ॥ गमनीयम्=गन्तव्यम् । पण्यम्=व्यवहर्तव्यमिति । मद्रवाणिज इति । मद्रेषु**

**पदमञ्जरी**

**द्विगौ प्रमाणे ॥** 'कर्दमादीनाञ्च' ( फि० सू० ३.१० ) इत्यत्र[2] मकरकुक्कुटपारेवते ( फि० सू० ३.८ ) त्यादेः सूत्रादादिग्रहणमनुवर्तते 'अथ द्वितीयं प्रागीषात्' ( फि० सू० ३.१ ) इत्यतो द्वितीयग्रहणम् । **परमसप्तसममिति ।** समाहारे द्विगुः, पात्रादित्वान्नपुंसकत्वम्, मूलोदाहरणे तु तद्धितार्थे द्विगुरुत्तरपदम् ॥ १२ ॥

**गन्तव्यपण्यं वाणिजे ॥** वणिगेव वाणिजः, प्रज्ञादित्वादण् । **सप्तमीसमासा एव इति ।** 'सप्तमी' इति

**भावबोधिनी**

सादृश्य में—इसका क्या फल है ? परमसदृशः । उत्तमसदृशः । इनमें समास का अर्थ पूज्यमानता है, सादृश्य नहीं । [ अतः पूर्वपद का प्रकृतिस्वर न होकर निघात होता है । ] ॥ ११ ॥

द्विगु उत्तरपद में प्रमाणवाचक तत्पुरुष समास में पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—प्राच्यसप्तशमः । गान्धारिसप्तशमः । यहाँ 'सप्त शमाः प्रमाणम् अस्य' इस अर्थ में उत्पन्न मात्रच् प्रत्यय का 'प्रमाणे लो' "द्विगोर्नित्यम्" ( का० वा० ) से लुक् होता है । प्राच्यश्चासौ सप्तशमश्च—इसमें प्राच्यसप्तशमः । प्राच्य शब्द आद्युदात्त है । गान्धारि शब्द कर्दमादि होने से आद्युदात्त है अथवा मध्योदात्त है ।

द्विगु में—इसका क्या फल है ? व्रीहिप्रस्थः । [ यहाँ द्विगु नहीं है । ] प्रमाण में—इसका क्या फल है ? परमसप्तशमः । [ यहाँ उत्कृष्टता है प्रमाण नहीं । अतः पूर्वपद का प्रकृतिस्वर नहीं होता है । ] ॥ १२ ॥

वाणिज शब्द उत्तरपद रहने पर तत्पुरुष समास में गन्तव्यवाचक और पण्यवाचक पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—मद्रवाणिजः । काश्मीरवाणिजः । गान्धारिवाणिजः । मद्र आदि देशों में जाकर व्यवहार करते हैं—

---

१. मुद्रितपदमञ्जर्यां समशब्दो दन्त्यादिः, न्यासे पुनस्तालव्यादिः, स एव युक्तः; 'शमस्तु चतुरङ्गुलः' इति यादवकोशप्रामाण्यात् ।

२. वरूढ इति फिषि ।

**मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः। काश्मीरशब्दोऽपि पृषोदरादिषु मध्योदात्तः। गान्धारिशब्दः कर्दमादिषु पठ्यते, तत्र 'कर्दमादीनां वा' इति पक्षे आद्युदात्तो भवति, द्वितीयो वा।**

**पण्य—गोवाणिजः। अश्ववाणिजः। गोशब्दोऽन्तोदात्तः। अश्वशब्द आद्युदात्तः।**

**गन्तव्यपण्यमिति किम्? परमवाणिजः। उत्तमवाणिजः॥**

### २६७७. मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥ १४ ॥ ( ३७४८ )

**मात्रा, उपज्ञा, उपक्रम, छाया—एतेषूत्तरपदेषु नपुंसकवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। भिक्षामात्रं न ददाति याचितः। समुद्रमात्रं न सरोऽस्ति किञ्चन।**

**मात्रशब्दोऽयं वृत्तिविषय एव तुल्यप्रमाणे वर्त्तते। तत्र भिक्षायास्तुल्यप्रमाणमित्यस्वपदविग्रहः षष्ठीसमासः। तत्र भिक्षाशब्दः 'गुरोश्च हलः' ( ३.३.१०३ ) इत्यप्रत्ययान्तोऽन्तोदात्तः। समुद्रशब्दोऽपि फिषि 'पाटलापालङ्काम्बासागरार्थानाम्' ( फि० सू० २ ) इत्यन्तोदात्त एव।**

**न्यासः**

यो व्यवहरति स एवमुच्यते। सप्तमीसमास इति। 'सप्तमी' इति योगविभागात्। **रक्प्रत्ययान्तत्वादिति।** 'स्फायितञ्चि' इत्यादिना मदे रकं विधाय व्युत्पादितत्वात्॥ १३॥

**मात्रोपज्ञोपक्रमच्छाये नपुंसके॥ तुल्यप्रमाणं वर्तत इति।** तुल्यं प्रमाणं यस्येति विग्रहः। **अस्वपदविग्रह इति।** स्वपदविग्रहः कस्मान्न भवति? तादृशं हि वाक्यं कर्तव्यं यथा समासार्थः प्रतीयते। **भिक्षामात्रमिति।** अस्य च भिक्षायास्तुल्यप्रमाणमित्येषोऽर्थः। न चायं स्वपदविग्रहेण शक्यः प्रातिपादयितुम्; मात्रशब्दस्य तुल्यप्रमाणवृत्तित्वात्। स हि समास एव तुल्यप्रमाणे वर्तते, न वाक्ये। अत एवोक्तम्—**मात्रशब्दोऽयं**

**पदमञ्जरी**

योगविभागात्। गोवाणिजादयस्तु षष्ठीसमासाः॥ १३॥

**मात्रोपज्ञोपक्रमच्छाये नपुंसके॥** फिषिति ( फि० सू० १.१ ) आदिमेन योगेन **शान्तनवीयं** चतुष्कं

**भावबोधिनी**

यह अर्थ है। ये सप्तमी-समास हैं। इनमें मद्र शब्द रक् प्रत्ययान्त होने से अन्तोदात्त है। काश्मीर शब्द भी पृषोदरादि में मध्योदात्त है। गान्धारि शब्द कर्दमादि में पढ़ा जाता है, इसमें "कर्दमादीनां वा" इस वचन से विकल्प से आद्युदात्त होता है, अथवा द्वितीय उदात्त होता है।

पण्य के उदा०—गोवाणिजः। अश्ववाणिजः। गो शब्द अन्तोदात्त है। अश्व शब्द आद्युदात्त है।

गन्तव्य और पण्य—इसके ग्रहण का क्या फल है? परमवाणिजः। उत्तमवाणिजः। [ इनमें गन्तव्य अथवा व्यवहर्त्तव्य की प्रतीति नहीं होती है। अतः पूर्वपद का प्रकृतिस्वर नहीं होता है। ]॥ १३॥

मात्रा, उपज्ञा, उपक्रम और छाया—ये उत्तरपद रहने पर नपुंसकवाचक तत्पुरुष समास में पूर्वपद प्रकृतिस्वरवाला होता है। उदा०—भिक्षामात्रं न ददाति याचितः। समुद्रमात्रं न सरोऽस्ति किञ्चन। [ इनमें भिक्षा और समुद्र का प्रकृतिस्वर होता है। ]

यह मात्र शब्द समासरूपवृत्तिविषय में ही तुल्य प्रमाण अर्थ में वर्तमान है। यहाँ 'भिक्षायाः तुल्यप्रमाणम्' यह अ-स्व-पद विग्रह वाला षष्ठीतत्पुरुष है। इसमें 'भिक्षा' शब्द "गुरोश्च हलः" ( पा० सू० ३।३।१०३ ) से अ प्रत्ययान्त अन्तोदात्त है। समुद्र शब्द भी फिट् = प्रातिपदिक में "पाटलापालङ्काम्बासागरार्थानाम्" ( फिट् सू० २ ) इससे अन्तोदात्त ही है।

उपज्ञा—पाणिनोपज्ञम् अकालकं व्याकरणम्। व्याड्युपज्ञं दुष्करणम्। आपिशल्युपज्ञं गुरुलाघवम्। षष्ठीसमासा एते। तत्र पणिनोऽपत्यमित्यणन्तः पाणिनशब्दः प्रत्ययस्वरेणान्तोदात्तः। व्याडिरिञन्तत्वादाद्युदात्तः। तद्वदापिशलिः।

उपक्रम—आढ्योपक्रमं प्रासादः। दर्शनीयोपक्रमम्। सुकुमारोपक्रमम्। नन्दोपक्रमाणि मानानि। एतेऽपि षष्ठीसमासा एव। तत्रैत्यैनं ध्यायन्तीत्याढ्यः। 'घञर्थे कविधानम्' (का० वा०) इति कप्रत्ययः। आङ्पूर्वाद् ध्यायतेः पृषोदरादित्वाद् ह्रस्य ढत्वम्। तदयमाढ्यशब्दस्थाथादिस्वरेण (६.२.१४४) अन्तोदात्तः। दर्शनीयशब्दो रित्त्वादुपोत्तमोदात्तः। सुकुमारशब्दो 'नञ्सुभ्याम्' (६.२.१७२) इत्यन्तोदात्तः। नन्दशब्दः पचाद्यचि व्युत्पादितः। उपज्ञोपक्रमान्तस्य तत्पुरुषस्य नपुंसकलिङ्गता 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' (२.४.२१) इति।

छाया—इषुच्छायम्। धनुश्छायम्। इषुशब्दः 'इषेः किच्च' (उणादि० १३) इत्युप्रत्ययान्तः, तत्र च 'धान्ये नित्' (उणादि० ९) इति वर्त्तते, तेनाद्युदात्तः। धनुःशब्दोऽपि 'नब्विषयस्यानिसन्तस्य' (फि० सू० २६)

**न्यासः**

वृत्तिविषय इत्यादि। वृत्तिरिह समासवृत्तिरेव विषयः। अप्रत्ययान्तोऽन्तोदात्त इति। टापा सहैकादेश उदात्तेनोदात्तत्वात्।

उप्रत्ययान्त इति। 'इषेः किच्च' इत्यत्र 'भृमृशृ' इत्यादेः सूत्रादुप्रत्ययानुवृत्तेः। १४॥

**पदमञ्जरी**

सूत्रमुपलक्षयति। तत्र समुद्रशब्दः सागरार्थत्वादन्तोदात्तः॥ १४॥

**भावबोधिनी**

उपज्ञा के उदा०—पाणिनोपज्ञम् अकालकं व्याकरणम्। व्याड्युपज्ञं दुष्करणम्। आपिशल्युपज्ञं गुरुलाघवम्। ये षष्ठसमास हैं। इसमें पणिनः अपत्यम्—इस अर्थ में अण्प्रत्ययान्त पाणिन शब्द प्रत्यय-स्वर से अन्तोदात्त है। 'व्याडि' यह इञन्त होने से आद्युदात्त है। इसी प्रकार 'आपिशलि' भी [ इञन्त होने से आद्युदात्त है ]।

**विमर्श**—सामान्यतया 'पाणिनि' शब्द का प्रयोग ही देखा जाता है। परन्तु यहाँ काशिकाकार के अनुसार 'पाणिन' यह अकारान्त रूप भी है। इन दोनों को अलग शब्द मानना उचित नहीं है। क्योंकि पाणिनि ने अपने व्याकरण में कालसम्बन्धी प्राचीन मतों का निराकरण किया है। अतः उनका व्याकरण ही 'अकालक' माना जाता है। पस्पशाह्निक में भाष्यकार ने पाणिनिना प्रोक्तम्—पाणिनीयम् ऐसा व्याकरण पदार्थ के विवेचन के प्रसङ्ग में कहा है।

(अनु०) उपक्रम के उदा०—आढ्योपक्रमं प्रासादः। दर्शनीयोपक्रमम्। सुकुमारोपक्रमम्। नन्दोपक्रमाणि मानानि। ये सभी षष्ठी-समास हैं। इनमें—'एत्य एनम् ध्यायन्ति' इस अर्थ में 'आढ्यः' बनता है 'घञर्थ में 'क' का विधान है' (का० वा०) इससे क = अ प्रत्यय, आङ् ध्या (ध्यै) धातु से पृषोदरादि होने से 'ध्' का 'ढ्' होता है [—आध्या = ढ्या + क = अ, आलोप = आढ्यः।] इस प्रकार यह 'आढ्य' शब्द 'थाथादि' स्वर से अन्तोदात्त है। दर्शनीय शब्द रित् होने से उपोत्तम (अन्त्य के पूर्व का) उदात्त है [''उपोत्तमं रिति'' सूत्र से ]। सुकुमार शब्द 'नञ्सुभ्याम्' (पा. सू. ६।२।१७२) से अन्तोदात्त है। नन्द शब्द पचादि मानकर अच् करने पर बनता है। [ अतः अन्तोदात्त है। जिस तत्पुरुष के अन्त में उपज्ञा और उपक्रम शब्द रहते हैं उसका नपुंसक लिङ्ग होता है ''उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' (पा. सू. २।४।२१) इस [ निर्देश ] से।

छाया के उदा०—इषुच्छायम्। धनुश्छायम्। इषु शब्द 'इषेः किच्च' (उणादि १३) से 'उ' प्रत्ययान्त है, उस सूत्र मे 'धान्ये नित्' इसकी अनुवृत्ति होती है, इसलिए आद्युदात्त ही है। 'धनुः' शब्द भी 'नब्विषयस्यानिसन्तस्य'

इत्याद्युदात्त एव । इषूणां छायेति षष्ठीसमासः । 'छाया बाहुल्ये' ( २.४.२२ ) इति नपुंसकलिङ्गता ।
नपुंसक इति किम् ? कुड्यच्छाया ॥

२६७८. सुखप्रिययोर्हिते ॥ १५ ॥ ( ३७४९ )

सुख, प्रिय—इत्येतयोरुत्तरपदयोर्हितवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । गमनसुखम् । वचनसुखम् । व्याहरणसुखम् । सुख ।

प्रिय –गमनप्रियम् । वचनप्रियम् । व्याहरणप्रियम् ।

समानाधिकरणसमासा एते । तत्र सुखप्रियशब्दौ तद्धेतावायत्यां प्रीतिकरे वर्तेते । तद्धि हितं यदायत्यां प्रीतिं करोति । गमनादिषु ल्युडन्तेषु लित्स्वरः ।

हित इति किम् ? परमसुखम् । परमप्रियम् ॥

न्यासः

सुखप्रिययोर्हिते ॥ तत्र सुखप्रियशब्दावित्यादि । तच्छब्देन सुखप्रिययोः प्रत्यवमर्शः, तयो सुखप्रिययोः हेतुरायत्याम्=जन्मान्तरे प्रीतिकरः । तत्र सुखप्रियशब्दौ वर्तेते । किं कारणमेवं व्याख्यायते ? इत्याह—तद्धि हितमित्यादि । हि तथा चेत्यर्थः । तत्पुरुषे प्रकृतिभावोऽयं विधीयते । एष हि तत्पुरुषो हितवाची भवति, यदि सुखप्रियशब्दावुत्तरपदे हितहेतौ वर्तेते । हितञ्च किम् ? यदायत्यां प्रीतिं करोति । कथं पुनः सुखप्रियशब्दौ तद्धेतौ वर्तेते ? कारणे कार्योपचाराद्, यथा—नड्वलोदकं पादरोग इति ॥ १५ ॥

पदमञ्जरी

सुखप्रिययोर्हिते ॥ समानाधिकरणसमासा एते इति । गमनादीनां विशेषणत्वात्पूर्वनिपातं मन्यते । अथ तु सुखप्रिययोर्विशेषणत्वं तदा मयूरव्यंसकादित्वमेष्टव्यम् । आयत्यामिति । परिणामे, आगामिकाले, भाविकाले इति यावत् ॥ १५ ॥

भावबोधिनी

( फि० सू० २६ ) से आद्युदात्त ही है । इषूणां छाया—यह षष्ठी-तत्पुरुष समास है । "छाया बाहुल्ये" ( पा. सू. २।४।२२ ) से नपुंसकलिङ्ग होता है ।

नपुंसक में—इसका क्या फल है ? कुड्यच्छाया । [ यहाँ नपुंसक न होने के पक्ष में पूर्वपद का प्रकृतिस्वर नहीं रहता है, शेषनिघात हो जाता है । ] ॥ १४ ॥

सुख तथा प्रिय—ये उत्तरपद होने पर हितवाचक तत्पुरुष समास में पूर्वपद प्रकृतिस्वर वाला होता है । उदा०—गमनसुखम् । वचनसुखम् । व्याहरणसुखम् । सुख का उदा०—समाप्त ।

प्रिय का उदा०—गमनप्रियम् । वचनप्रियम् । व्याहरणप्रियम् ।

ये समानाधिकरण समास हैं । इनमें सुख और प्रिय शब्द इनके हेतु आयति=परिणाम भावीकाल में सुख करने वाले अर्थ में वर्तमान हैं । वह हित-वाचक है, जो आयति=भविष्य में प्रीति करता है, सुख उत्पन्न कराता है । गमन आदि में ल्युट् प्रत्यय होने से लित् स्वर [ प्रत्यय से पूर्व का उदात्त ] होता है ।

हित अर्थ में—इसका क्या फल है ? परमसुखम् । परमप्रियम् । [ यहाँ उत्कृष्ट अर्थ की प्रतीति है । ] ॥ १५ ॥

## २६७९. प्रीतौ च ॥ १६ ॥ ( ३७५० )

प्रीतौ गम्यमानायां सुख, प्रिय—इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। ब्राह्मणसुखं पायसम्। छात्त्रप्रियोऽनध्यायः। कन्याप्रियो मृदङ्गः।

सुखप्रिययोः प्रीत्यव्यभिचारादिह प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थम्। ब्राह्मणच्छात्त्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ। कन्याशब्दः स्वरितान्तः।

प्रीतावििति किम्? राजसुखम्। राजप्रियम्॥

## २६८०. स्वं स्वामिनि ॥ १७ ॥ ( ३७५१ )

स्वामिन्शब्द उत्तरपदे तत्पुरुषे समासे स्ववाचि पूर्वपदं प्रकृतिस्वरं भवति। गोस्वामी। अश्वस्वामी। धनंस्वामी। अश्वधनगवां कथित एव स्वरः। स्वमिति किम्? परमस्वामी॥

### न्यासः

**प्रीतौ च॥** अथ प्रीतौ चेतीदं ग्रहणं किमर्थम्, यावता सुखप्रिययोः प्रीत्यव्यभिचारात्। एवं प्रीतौ गम्यमानायां भविष्यति? इत्यत आह—**सुखप्रिययोः प्रीत्येत्यादि।** प्रीतिग्रहणमन्तरेणापि सिद्धे सुखप्रिययोः प्रीत्यव्यभिचाराद् यदिह प्रीतिग्रहणं क्रियते, तदतिशयिता या प्रीतिस्तस्यां यथा स्यादित्येवमर्थम्। **ब्राह्मणच्छात्त्रशब्दौ प्रत्ययस्वरेणान्तोदात्ताविति।** ब्राह्मणशब्दोऽणन्तः। छात्त्रशब्दः 'छत्त्रादिभ्यो णः' इति णप्रत्ययान्तः। **कन्याशब्दः स्वरितान्त इति।** अघ्न्यादिषु तथा भूतस्यैव पाठात्।

**राजसुखं राजप्रियमिति।** अत्र यद्यपि सुखप्रिययोः प्रीत्यव्यभिचारित्वात् प्रीतिर्गम्यते, तथाप्यतिशयेन या प्रीतिः सा न गम्यत इति भवति प्रत्युदाहरणम्॥ १६॥

**स्वं स्वामिनि॥ १७॥**

### पदमञ्जरी

**प्रीतौ च॥** इह तु 'सुखप्रिययोः' इत्येतावत्सूत्रं कृत्वा 'हिते च' इति वक्तव्यम्, तत्राद्ये सूत्रे सुखप्रिययोः प्रीत्यव्यभिचारादेव प्रीतौ गम्यमानायां भविष्यति? तत्राह—**सुखप्रिययोरित्यादि।** ब्राह्मणशब्दोऽणन्तः। छात्त्रशब्दः 'छत्त्रादिभ्यो णः' इति णप्रत्ययान्तः। **कन्याशब्दः स्वरितान्त इति।** 'तिल्यशिक्यमत्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' ( फि० सू० ४.८ ) इति फिषि पाठात्॥ १६॥ १७॥

### भावबोधिनी

प्रीति गम्यमान रहने पर सुख और प्रिय उत्तरपद होने पर तत्पुरुष समास में पूर्वपद प्रकृतिस्वर वाला होता है। उदा०—ब्राह्मणसुखं पायसम्। छात्त्रप्रियोऽनध्यायः। कन्याप्रियः मृदङ्गः।

सुख और प्रिय का प्रीति के साथ कभी व्यभिचार नहीं होता है, इसलिए इस सूत्र में प्रीति का ग्रहण उस प्रीति के अतिशय का ज्ञान कराने के लिए है। ब्राह्मण और छात्र शब्द प्रत्यय-स्वर से अन्तोदात्त हैं। कन्याशब्द स्वरितान्त है। [ प्रकृतिस्वर ये ही रहते हैं। ]

प्रीति में—इसका क्या फल है? राजसुखम्। राजप्रियम्। [ इनमें अतिशय प्रीति नहीं प्रतीत होती है। अतः प्रकृतिस्वर नहीं होता है ]॥ १६॥

स्वामिन् शब्द उत्तर पद रहने पर तत्पुरुष समास में स्ववाची पूर्वपद प्रकृतिस्वरवाला होता है। उदा०—गोस्वामी। अश्वस्वामी। धनस्वामी। अश्व, धन, और गो के स्वर पहले कहे जा चुके हैं। [ गो शब्द अन्तोदात्त है, अश्व शब्द आद्युदात्त है, धन शब्द प्रत्ययस्वर से आद्युदात्त है। ]

स्ववाची—इसका क्या फल है? परमस्वामी। [ परम शब्द स्वामी का ही विशेषण है। ]॥ १७॥

## २६८१. पत्यावैश्वर्ये ॥ १८ ॥ ( ३७५२ )

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं भवति । गृहपतिः । सेनापतिः । नरपतिः । धान्यपतिः । 'गेहे कः' ( ३.१.१४४ ) इति प्रकृतिस्वरेणान्तोदात्तो गृहशब्दः । सह इनेन वर्त्तते इति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( ६.२.१ ) इति सेनाशब्द आद्युदात्तः । 'नॄ नये' ( धा० पा० १९४६ ) एतस्माद् 'ऋदोरप्' ( ३.३.५७ ) इति अप्प्रत्ययान्त आद्युदात्तो नरशब्दः । धान्यमन्तः स्वरितम् ।

ऐश्वर्यमिति किम् ? ब्राह्मणो वृषलीपतिः । वृषल्या भर्तेत्यर्थः ॥

## २६८२. न भूवाक्चिद्दिधिषु ॥ १९ ॥ ( ३७५३ )

पत्यावैश्वर्ये ॥ धान्यमन्तःस्वरित इति । ण्यदन्तत्वात् तित्स्वरेण ।

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भू, वाक्, चित्, दिधिषू—इत्येतानि पूर्वपदानि प्रकृतिस्वराणि न भवन्ति । पूर्वेण प्राप्तः स्वरः प्रतिषिध्यते । भूपतिः । वाक्पतिः । चित्पतिः । दिधिषूपतिः । षष्ठीसमासा एते समासस्वरेणान्तोदात्ता भवन्ति ॥

### न्यासः

वृषल्या भर्तेत्यर्थ इति । वृषल्याः कामयितेति यावत् ॥ १८ ॥

न भूवाक्चिद्दिधिषु ॥ 'भुवः संज्ञान्तरयोः' इति क्विपा भूशब्दो धातुस्वरेणान्तोदात्तः । एवं वाक्शब्दः, वचः 'क्विब्वचिप्रच्छि' इत्यादिना क्विप् । चिदिति । 'चिती संज्ञाने' इत्यस्माद् 'अन्येभ्योऽपि दृश्यते' इति क्विप् । 'नृतिशृध्योः कूः' इत्यधिकृत्य 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' इति दिधिषूशब्दः कूप्रत्ययान्तोऽन्तोदात्त इति ॥ १९ ॥

### पदमञ्जरी

पत्यावैश्वर्ये ॥ धान्यमन्तःस्वरितमिति । अनन्तरपठितेन फिट्सूत्रेण । गवादीनां तु पूर्वमेव स्वरकथनम् ॥ १८ ॥

न भूवाक्चिद्दिधिषु ॥ भूवादीनां समाहारद्वन्द्वे नपुंसकह्रस्वत्वम्, अत्र पूर्वपदप्रकृतिस्वरप्रतिषेधाद् वृत्तिकारेण पूर्वपदानां स्वरो व्याख्यातः । तत्रादितस्त्रयः क्विबन्ताः । 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' ( द० उ० १.१७६ ) इति कूप्रत्ययान्तो दिधिषूशब्दो निपातितः ॥ १९ ॥

### भावबोधिनी

पति शब्द उत्तरपद रहने पर ऐश्वर्यवाचक तत्पुरुष में पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—गृहपतिः । सेनापतिः । नरपतिः । धान्यपतिः । "गेहे कः" ( पा० सू० ३।१।१४४ ) सूत्र से [ क = अ प्रत्यय करने पर ] प्रकृतिस्वर से अन्तोदात्त है—गृह शब्द । सह इनेन वर्तते—इस अर्थ में बहुव्रीहि समास में 'बहुव्रीहौ प्रकृत्या पूर्वपदम्" ( पा० सू० ६।२।१ ) से [ पूर्वपद का प्रकृतिस्वर होने से ] 'सेना' शब्द आद्युदात्त है । 'नॄ' नये इस धातु से "ऋदोरप्" ( पा० सू० ३।३।५७ ) से अप् प्रत्ययान्त आद्युदात्त 'नर' शब्द है । धान्य शब्द अन्त स्वरितवाला है । [ क्योंकि नित् का सम्बन्ध हैं । ]

ऐश्वर्य—इसका क्या फल है ? ब्राह्मणो वृषलीपतिः । वृषली का भर्ता = चाहने वाला—यह अर्थ है । [ अतः ऐश्वर्य की प्रतीति न होने से पूर्वपद का प्रकृतिस्वर नहीं होता है । ] ॥ १८ ॥

पति शब्द उत्तरपद में रहने पर ऐश्वर्यवाचक तत्पुरुष समास में भू, वाक्, चित्, दिधिषू—ये पूर्वपद प्रकृतिस्वर वाले नहीं होते हैं । पूर्ववर्त्ती सूत्र से प्राप्त स्वर का प्रतिषेध होता है । उदा०—भूपतिः । वाक्पतिः । चित्पतिः । दिधिषूपतिः । ये षष्ठी-तत्पुरुष समास वाले समासस्वर से अन्तोदात्त होते हैं । [ फलतः पूर्वपद शेषनिघात से अनुदात्त ही रहता है । ] ॥ १९ ॥

## २६८३. वा भुवनम् ॥ २० ॥ ( ३७५४ )

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भुवनशब्दः पूर्वपदं वा प्रकृतिस्वरं भवति। भुवनपतिः ( तै० ब्रा० ३.७.६.१ ) भुवनपतिः। पूर्वपदप्रकृतिस्वरपक्षे आदिरुदात्तः। 'रञ्जेः क्युन्' ( उणादि० २४६ ) इति वर्त्तमाने 'भूसूधूभ्रस्जिभ्यश्छन्दसि' ( उणादि० २४७ ) इति क्युन्प्रत्ययान्तो भुवनशब्द आद्युदात्तो व्युत्पादितः।

कथं भुवनपतिरादित्य इति ? 'उणादयो बहुलम्' ( ३.३.१ ) इति बहुलवचनाद्भाषायामपि प्रयुज्यते ॥

## २६८४. आशङ्काबाधनेदीयस्सु संभावने ॥ २१ ॥ ( ३७५५ )

'प्रकृत्या पूर्वपदम्', 'तत्पुरुषे' इति वर्त्तते। आशङ्क, आबाध, नेदीयस् इत्येतेषूत्तरपदेषु सम्भावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। अस्तित्वाध्यवसायः = सम्भावनम्। गमनाशङ्कं वर्त्तते। गमनमाशङ्क्यते इति सम्भाव्यते। वचनाशङ्कम्। व्याहरणाशङ्कम्।

आबाध— गमनाबाधम्। वचनाबाधम्। व्याहरणाबाधम्। गमनं बाध्यत इति सम्भाव्यते।

### न्यासः

वा भुवनम् ॥ २० ॥ आशङ्काबाधनेदीयस्सुः सम्भावने ॥ 'शकि शङ्कायाम्' इत्येतस्माद् 'गुरोश्च हलः' 'इत्यकारप्रत्ययः'। केचित्तु घञन्तस्य शङ्कशब्दस्य ग्रहणमिति वर्णयन्ति। 'बाधृ लोडने' इत्यस्मादाङ्पूर्वाद् घञि आबाधः। अत्यर्थमन्तिकं नेदीयः। अन्तिकशब्दस्य 'अन्तिकबाढयोर्नेदसाधौ' इतीयसुनि परतो नेदादेशः।

### पदमञ्जरी

वा भुवनम् ॥ भुवनशब्दो भाषायां बहुलवचनात्साधुः ॥ २० ॥

आशङ्काबाधनेदीयस्सु सम्भावने ॥ 'शकि शङ्कायाम्', ( धा० पा० ८६ ) 'बाधृ विलोडने', (धा० पा० ५) आङ्पूर्वाभ्यां कर्मणि घञ्। अतिशयेनान्तिको नेदीयः, अन्तिकबाढयोर्नेदसाधौ'। अस्तित्वाध्यवसायः = अस्तित्व-

### भावबोधिनी

पति शब्द उत्तरपद रहने पर ऐश्वर्यवाचक तत्पुरुष समास में पूर्वपद = भुवन शब्द विकल्प से प्रकृतिस्वरवाला होता है। उदा०—भुवनपतिः। पूर्वपद के प्रकृतिस्वरपक्ष में आदि उदात्त होता है। "रञ्जेः क्युन्" ( उणादि २४६ ) से क्युन् की अनुवृत्ति रहते 'भूसूधूभ्रस्जिभ्यश्छन्दसि" ( उणादि० २४७ ) से क्यु = अन प्रत्ययान्त भुवन शब्द आद्युदात्त बनाया गया है।

भुवनपतिः आदित्यः—ऐसा प्रयोग कैसे होता है ? 'उणादयो बहुलम्' ( पा० सू० ३।३।१ ) इस में बहुलवचन के द्वारा भाषा = लौकिक संस्कृत में भी [ भुवन शब्द का ] प्रयोग होता है। [ अतः यहाँ कोई अनुपपत्ति नहीं है। ] ॥२०॥

'प्रकृत्या पूर्वपदम्' और तत्पुरुषे' इनकी अनुवृत्ति होती है। आशङ्क, आबाध, नेदीयस्—ये उत्तरपद रहने पर सम्भावनवाची तत्पुरुष समास में पूर्वपद प्रकृतिस्वर वाला होता है। अस्तित्व का अध्यवसाय = सम्भावन है। उदा०— गमनाशङ्कं वर्त्तते। गमन की आशंका की जाती है—ऐसी सम्भावना है। वचनाशङ्कम्। व्याहरणाशङ्कम्। [ इनमें भी वचनमाशङ्क्यते इति सम्भाव्यते। व्याहरणम् आशङ्क्यते इति सम्भाव्यते—ऐसा सम्बन्ध करना चाहिए। क्रियाविशेषण होने से नपुंसक लिङ्ग है। ]

आबाध के उदा०—गमनाबाधम्। वचनाबाधम्। व्याहरणाबाधम्। गमन आबाधित होता है—ऐसी सम्भावना

नेदीयस्—गमननेदीयः[1]। व्याहरणनेदीयः। गमनमतिनिकटतरमिति[2] सम्भाव्यते। सम्भावन इति किम्? परमनेदीयः। पूर्वपदानि ल्युडन्तान्युक्तस्वराणि॥

२६८९. पूर्वे भूतपूर्वे॥ २२॥ ( ३७५६ )

पूर्वशब्दे उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। आढ्यो भूतपूर्व आढ्यपूर्वः। पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्त्तते तत्र, 'विशेषणं विशेष्येण' ( २.१.५७ ) इति समासः। मयूरव्यंसकादि ( २.१.७२ ) र्वा द्रष्टव्यः। दर्शनीयपूर्वः। सुकुमारपूर्वः।

**न्यासः**

**अस्तित्वाध्यवसाय इति**। अस्तित्वनिश्चय इत्यर्थः। **गमनाशङ्कमिति**। षष्ठीसमासः। क्रियाविशेषणत्वान्नपुंसकलिङ्गम्, लोकाश्रयत्वाद्वा लिङ्गस्य॥ २१॥

**पूर्वे भूतपूर्वे॥ आढ्यो भूतपूर्व इति**। यः पूर्वमाढ्य आसीत् स एवमुच्यते। समासे गम्यमानार्थत्वाद् भूतशब्दो न प्रयुज्यते, यथा दध्योदन इत्यत्रोपसिक्तशब्दः।

**परमपूर्व इति** अत्र 'सन्महत्' इत्यादिना समासः। **अत्र परमश्चासौ पूर्वश्चेति समास इति**। इतिकरणोऽर्थनिर्देशार्थः। परमश्चासौ पूर्वश्चेति योऽयं वाक्यार्थः पूज्यमानतालक्षणः, तस्मिन्निह प्रत्युदाहरणे समास इत्यर्थः। **न तु परमो भूत इति**। तुशब्दोऽवधारणे। परमो भूतपूर्व इति योऽयं वाक्यार्थः परमपूर्वकाललक्षणः, तस्मिन्नेवात्र समास इत्यर्थः। किं कारणम्? इत्याह—**तथा चेत्यादि**। चशब्दो हि हीत्यर्थे। अयं समासो न भवति। एवं सत्युदाहरणमेवेदं भवति, न प्रत्युदारणम्; पूर्वशब्दस्य भूतपूर्ववाचित्वात्। यस्तु प्रायेण पुस्तकेषु पाठोऽत्र

**पदमञ्जरी**

निश्चयः। **गमनाशङ्कादयो** विशेषणसमासाः, **मयूरव्यंसकादयो वा**॥ २१॥

**पूर्वे भूतपूर्वे॥ आढ्यो भूतपूर्व इति**। यः पूर्वमाढ्य आसीत्स एवमुच्यते। **अत्रेत्यादि**। **परमश्चासौ पूर्वश्चेति**। सोऽयं वाक्यार्थः पूज्यमानतालक्षणः, तस्मिन्निह प्रत्युदाहरणे समास इत्यर्थः। **न त्विति**। **परमो**

**भावबोधिनी**

की जाती है। [ वचन आबाधित होता है, ऐसी सम्भावना की जाती है। व्याहरण आबाधित होता है—ऐसी संभावना की जाती है। ]

नेदीयस् के उदा०—गमननेदीयः। व्याहरणनेदीयः। गमन अति निकटतर है—ऐसी सम्भावना की जाती है। [ तरप् प्रत्यय के साथ अति का प्रयोग उचित नहीं प्रतीत होता है। इसीलिये सिद्धान्तकौमुदी में—गमनम् आशङ्क्यते, आबाध्यते, निकटतरम्—इति वा सम्भाव्यते—ऐसा अर्थ लिखा गया है। देखें प्रस्तुत सूत्र पर सि० कौ० ]

सम्भावन—यह किस लिए है? परमनेदीयः [ यहाँ सम्भावन नहीं यथार्थकथन है। ]॥ २१॥

पूर्वशब्द उत्तरपद रहने पर भूतपूर्ववाची तत्पुरुष समास में पूर्वपद प्रकृतिस्वरवाला होता है। उदा०—आढ्यः भूतपूर्वः—आढ्यपूर्वः। पूर्व शब्द समास वृत्तिविषय में भूतपूर्व अर्थ में वर्तमान है, इसमें 'विशेषणं विशेष्येण बहुलम्" ( पा० सू० २।१।५७ ) से समास होता है। अथवा मयूरव्यंसकादि ( समास ) देखना चाहिए। दर्शनीयपूर्वः। सुकुमारपूर्वः। [ यहाँ भी पूर्व शब्द भूतपूर्व अर्थ में वर्तमान है। समास के बाद पूर्वपद का प्रकृतिस्वर होता है। 'दर्शनीय' रित् होने से उपोत्तम उदात्त है। सुकुमार शब्द "नञ्सुभ्याम् ( पा० सू० ६।२।७२ ) से अन्तोदात्त है। ]

---

१. अत्र 'वचननेदीयः'—इति पुस्तकान्तरेऽधिकम्। २. '०मन्तिकतमम्—इति पाठा०।

भूतपूर्व इति किम् ? परमपूर्वः । उत्तमपूर्वः । अत्र परमश्चासौ पूर्वश्चेति समासः, न तु परमो भूतपूर्व इति । तथा च सत्युदाहरणमेव भवति ॥

## २६८६. सविधसनीडसमर्यादसवेशसदेशेषु समीप्ये ॥ २३ ॥ ( ३७५७ )

सविध, सनीड, समर्याद, सवेश, सदेश—इत्येतेषूत्तरपदेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । मद्रसविधम् । गान्धारिसविधम् । काश्मीरसविधम् । मद्रसनीडम् । गान्धारिसनीडम् । काश्मीरसनीडनम् । मद्रसमर्यादम् । गान्धारिसमर्यादम् । काश्मीरसमर्यादम् । मद्रसवेशम् । गान्धारिसवेशम् । काश्मीरवेसशम् । मद्रसदेशम् । गन्धारिसदेशम् । काश्मीरसदेशम् । पूर्वपदान्युक्तस्वराणि ।

सविधादीनां सह विधयेत्येवमादिका व्युत्पत्तिरेव केवलम् । समीपवाचिनस्त्वेते समुदायः । मद्राणां सविधम्=समीपमित्यर्थः ।

**न्यासः**

परमश्चासौ भूतपूर्वश्चेति विग्रहो न तु परमो भूतपूर्व इति; स प्रमादपाठो वेदितव्यः; वाक्यद्वयेऽपि भूतपूर्वयोर्गम्यमानत्वात् ॥ २२ ॥

**सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये** ॥ स विधया सविधः, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्य' इति सहस्य सभावः एवं सनीडादिष्वपि बहुव्रीहिभावश्च वेदितव्यः । **मद्रसविधमित्यादयः** षष्ठीसमासाः ।

ननु च सह विधयेत्येवमादावर्थे सविधादयः शब्दा व्युत्पाद्यन्ते, तत् कथमेषां समीप्ये वृत्तिः ? इत्याह—**सह विधयेत्येवमादिकेत्यादि** । आदिशब्देन सह नीडेन सह मर्यादयेत्येवमादीनां ग्रहणम् । एवकारोऽवधारणार्थोऽभि-

**पदमञ्जरी**

**भूतपूर्व इति** । योऽयं वाक्यार्थः पूर्वं परम आसीदीत्येवंरूपः, न तस्मिन् तत्र समास इति यावत्, किं कारणम् ? इत्याह—**तथा चेति** । चो ह्यर्थे ॥ २२ ॥

**सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये** ॥

**भावबोधिनी**

भूतपूर्व—इसका क्या फल है ? परमपूर्वः । उत्तमपूर्वः । इनमें परमश्चासौ पूर्वश्च ऐसा [ विग्रह करके ] समास हैं न कि 'परमो भूतपूर्वः' ऐसा; क्योंकि ऐसा होने पर तो उदाहरण ही बन जाता है । [ प्रत्युदा० नहीं बन सकता । ] ॥ २२ ॥

सविध, सनीड, समर्याद, सवेश और सदेश—ये उत्तरपद रहने पर सामीप्यवाची तत्पुरुष समास में पूर्वपद प्रकृतिस्वरवाला होता है । [ सह विधया—इस प्रकार की विग्रह में "तेन सहेति तुल्ययोगे" सूत्र से बहुव्रीहि समास और 'वोपसर्जनस्य' सूत्र से सह का 'स' आदेश—सविध आदि नपुंसक लिङ्ग में हैं । इसी प्रकार सभी शब्द हैं । सभी समीप्य अर्थ में हैं । ] उदा०—( १ ) मद्रविधम् । गान्धारिसविधम् । काश्मीरसविधम् ( २ ) मद्रसनीडम् । गान्धारिसनीडम्, काश्मीरसनीडम् ( ३ ) मद्रसमर्यादम् । गान्धारिसमर्यादम् । काश्मीरसमर्यादम् । ( ४ ) मद्रसवेशम् । गान्धारिसवेशम् । काश्मीरसवेशम् । ( ५ ) मद्रसदेशम् । गान्धारिसदेशम् । कश्मीरसदेशम् । इनके पूर्व पदों के स्वर ( ६।१।१३ में ) कहे जा चुके हैं । [ मद्र अन्तोदात्त है । काश्मीर मध्योदात्त है और गान्धारिशब्द आद्युदात्त अथवा मतभेद से मध्योदात्त है । यही स्वर रहता है । ]

सविध आदि शब्दों की 'सह विधया' ऐसी व्युत्पत्ति ही है । [ उसका अर्थ लेना आवश्यक नहीं है ] क्योंकि ये समुदाय ( समस्त ) शब्द समीप अर्थ के ही वाचक हैं । मद्राणां सविधम् = मद्र देश के समीप—यह अर्थ है ।

**सामीप्य इति किम्? सह मर्यादया वर्तते समर्यादं क्षेत्रम्। देवदत्तस्य समर्यादं देवदत्तसमर्यादम्। देवदत्तसमया ॥**

## २६८७. विस्पष्टादीनि गुणवचनेषु ॥ २४ ॥ ( ३६९८ )

**विस्पष्टादीनि पूर्वपदानि गुणवचनेषूत्तरपदेषु प्रकृतिस्वराणि भवन्ति। विस्पष्टकटुकम्। विचित्रकटुकम्। व्यक्तकटुकम्। विस्पष्टलवणम्। विचित्रलवणम्। व्यक्तलवणम्। विस्पष्टं कटुकमिति विगृह्य 'सुप्सुपा' ( १.१.४ ) इति समासः।**

**विस्पष्टादयो ह्यत्र प्रवृत्तिनिमित्तस्य विशेषणम्[1]। कटुकादिभिश्च शब्दैर्गुणवद् द्रव्यमभिधीयते इत्यसामानाधिकरण्यम्, अतो नास्ति कर्मधारयः।**

**न्यासः**

धेयव्यवच्छेदं करोति—व्युत्पत्तिनिमित्तमेव, नाभिधेयमिति। **समीपवाचिनस्त्वेत इति।** अत्रापि तुशब्दोऽवधारणार्थ एव। समीपवाचिन एव, न तु सह विधयेत्येवमादिवाक्यार्थवाचिन इति ॥ २३ ॥

**विस्पष्टादीनि गुणवचनेषु ॥ विस्पष्टकटुकमिति।** कटुशब्दात् संज्ञायां कन्। **सुप्सुपेति समास इति।**

अथ 'विशेषणं विशेष्येण बहुलम्' इति विस्पष्टकटुकमित्यत्र विगृह्य कस्मात् कर्मधारय एव न क्रियते? इत्याह—**विस्पष्टादयो ह्यत्रेत्यादि।** कर्मधारयो हि सामानाधिकरण्ये सति भवति, न चेह सामानाधिकरण्यमस्ति। तस्माद् विस्पष्टादयोऽत्र कटुकादेः शब्दस्य यत् प्रवृत्तिनिमित्तं कटुकत्वादि तस्य विशेषणम्, न तद्वतो द्रव्यस्य। कटुकादिभिश्च शब्दैः कटुकस्यास्तिलक्षणो यस्यास्ति तद्गुणवद् द्रव्यमभिधीयते। ततो वैयधिकरण्ये नास्ति कर्मधारयः। तस्माद् यथोक्तेन विधिना समासोऽत्र कर्तव्यः।

**पदमञ्जरी**

उदाहरणेषु षष्ठीसमासः, मद्रादीनां पूर्वमेव स्वर उक्तः ॥ २३ ॥

**विस्पष्टादीनि गुणवचनेषु ॥ विस्पष्ट इति।** 'स्पश बाधनस्पर्शनयोः' ( धा० पा० १४२२ ) इत्यस्य निष्ठायाम् 'वा दान्त' इत्यादिना स्पष्टशब्दो निपातितः, विशब्देन गतिसमासः। 'चित्र चित्रीकरणे' ( धा० पा० १९१७ ) चुरादिः, तस्मादेरच्, विशेषेण चित्रं विचित्रम्, प्रादिसमासः। 'चिती संज्ञाने' ( धा० पा० ३९ ), विगतं चितमस्य विचित्तः, 'अञ्जू व्यक्त्यादिषु', ( धा० पा० १४५८ ) तस्य विपूर्वस्य निष्ठाया गतिस्वरः, तत्रेकारस्य यो अण् स उदात्तयण् भवति।

**भावबोधिनी**

सामीप्य अर्थ में—इसका क्या फल है? सह मर्यादया वर्तते—समर्यादं क्षेत्रम्। [ यहाँ मर्यादा = सीमा अर्थ में है। ] देवदत्तस्य समर्यादम्—देवदत्तसमर्यादम्। [ यहाँ भी उक्त अर्थ है, सामीप्य नहीं। ] सविध आदि परे ही—इसका क्या फल है? देवदत्तसमया। [ सामीप्य अर्थ होने पर भी सूत्रोक्त शब्दों में से नहीं है। अतः पूर्वपद प्रकृतिस्वर नहीं होता है। ] ॥ २३ ॥

गुणवाचक शब्द उत्तरपद रहने पर विस्पष्ट आदि पूर्वपद प्रकृतिस्वर वाले होते हैं। उदा०—विस्पष्टकटुकम्। विचित्रकटुकम्। व्यक्तकटुकम्। विस्पष्टलवणम्। विचित्रलवणम्। व्यक्तलवणम्। इनमें 'विस्पष्टं कटुकम्'—ऐसा विग्रह करके 'सह सुपा' सूत्र से समास करना चाहिए।

विस्पष्ट आदि शब्द यहाँ पर प्रवृत्ति-निमित्त के विशेषण हैं और कटुक आदि शब्दों से गुणवान् द्रव्य का अभिधान होता है, इसलिए सामानाधिकरण्य ( समानार्थ-बोधकता ) नहीं है, इस कारण "विशेषणं विशेष्येण बहुलम्" सूत्र से कर्मधारय समास नहीं होता है। [ अतः समास-सामान्य ही समझना चाहिए। ]

---

१. 'न द्रव्यस्य'—इत्यधिकं पुस्तकान्तरे।

**विस्पष्टशब्दो** 'गतिरनन्तरः' ( ५.१.४९ ) इत्याद्युदात्तः, **विचित्रशब्दो**ऽप्यव्ययस्वरेण। **विचित्तशब्दमन्ये** पठन्ति, सोऽपि बहुव्रीहिस्वरेणाद्युदात्त एव। **व्यक्तशब्दः** 'उदात्तस्वरितयोर्यणः 'स्वरितोऽनुदात्तस्य ( ८.६.४ ) इत्यादिस्वरितः।

**ये चात्रापरे पठ्यन्ते, तत्र सम्पन्नशब्दस्थाथादिस्वरेणान्तोदात्तः। पटु-पण्डितशब्दौ प्रत्ययस्वरेणान्तोदात्तौ। कुशलशब्दः कृत्स्वरेणान्तोदान्तः। चपलशब्दश्चित्स्वरेणान्तोदात्तः, 'चुपेरच्चोपधायाः ( उणादि०**

**न्यासः**

**विस्पष्ट इति।** 'स्पश बाधनस्पर्शनयोः' इत्यस्य निष्ठायाम् 'दस्तस्पष्टच्छन्नज्ञप्ताः' इति स्पष्टशब्दो निपातितः, तस्य विशब्देन गतिसमासः। **विचित्रशब्द इत्यादि।** 'चित्र चित्रीकरणे', चुरादिः, तस्माद् घञ्, विशेषेण चित्रं विचित्रम्, प्रादिसमासः। **अव्ययस्वरेणेति।** 'तत्पुरुषे तुल्यार्थ' इत्यादिना विहितेन। अव्ययं पुनरत्र विशब्दः, तस्य च 'निपाता आद्युदात्ता' इत्याद्युदात्तत्वम्। **विचित्तशब्दमिति।** 'चिती संज्ञाने' इत्यस्य निष्ठायां चित्तम्। विगतं चित्तमस्येति बहुव्रीहिः। **बहुव्रीहिस्वरेणेति।** 'बहुव्रीहौ प्रकृत्या' इति विहितेन। **व्यक्तशब्द इत्यादि।** अञ्जेर्विपूर्वस्य निष्ठायां गतिस्वर उदात्तः, तत्रेकारस्य स्थाने यो यण् स उदात्तयण् भवति, ततः परस्याकारस्यानुदात्तस्य स्वरितः। **सम्पन्नशब्द इत्यादि।** पदेः सम्पूर्वस्य निष्ठायां सम्पन्नशब्दः कर्त्तरि चेति। **पटुपण्डितशब्दौ प्रत्ययस्वरेणेति।** अन्तोदात्तग्रहणमेकवचनान्तं यत् प्रकृतं तस्य विपरिणामं कृत्वाऽन्तोदात्ताविति सम्बन्धः कर्त्तव्यः। पाटयतेः 'फलिपाटिनमिजनीनां गुक् पाटिनाकिधश्च' इत्युप्रत्ययः,

**पदमञ्जरी**

**सम्पन्नशब्दस्थाथादिस्वरेणेति।** गतिस्वरस्तु न भवति, किं कारणम्, 'कर्मणि' इति तत्रानुवर्तते, अयं तु कर्तरि क्तः। **पटुपण्डितशब्दौ प्रत्ययस्वरेणेति।** अन्तोदात्त इत्यपेक्षते। यदेकवचनान्तं प्रकृतम्, तस्य वचनविपरिणामं कृत्वाऽन्तोदात्ताविति सम्बन्धः कर्तव्यः। पाटयतेः 'फलिपाटिनमिजनीनां गुक्पटिनाकिधश्च' ( द० उ० १.१०३ ) इत्युप्रत्ययः, पटिश्चादेशः, इकार उच्चारणार्थः, पटुः। 'पडि गतौ' ( धा० पा० २८१ ), निष्ठा, पण्डितः।

**भावबोधिनी**

विस्पष्ट शब्द "गतिरनन्तरः" ( पा. सू. ६।२।४९ ) से आद्युदात्त है। [ वि गतिसंज्ञक के बाद स्पृश + क्त = स्पष्ट है, अतः यह स्वर होता है। ] विचित्र शब्द भी [ "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय-द्वितीयाकृत्याः" ( ६।२।२० ) सूत्र से विहित ] अव्ययस्वर से आद्युदात्त है। दूसरे विद्वान् विचित्त शब्द पढ़ते हैं, वह भी [ 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' सूत्र से प्रकृतिस्वर से ] आद्युदात्त ही हैं। व्यक्त शब्द [ = वि + अक्त में यण् ] "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" ( पा. सू. ८।२।४ ) सूत्र से आदि स्वरित है।

और जो दूसरे शब्द यहाँ गण में पढ़े गये हैं उनमें 'सम्पन्न' शब्द 'थाथादि०" (पा. सू. ६।२।१४४ से विहित) से अन्तोदात्त है। 'पटु' और 'पण्डित' शब्द प्रत्ययस्वर से अन्तोदात्त हैं। [ 'पाटि' से उ प्रत्यय, पटि आदेश इसमें इकार उच्चारणार्थक है—पटुः। गति = ज्ञान अर्थवाली 'पडि' धातु से इकार की इत्संज्ञा, नुम्, परसवर्ण, क्त = निष्ठा प्रत्यय इट्—पण्ड् इ त + पण्डितः ] 'कुशल'—शब्द [—कुशान् लाति = आदत्ते = इस अर्थ में 'ला' से 'क' = अ प्रत्यय, आलोप, उपपदसमास, "गतिकारकोपपदात् कृत्" ( पा. सू. ६।१।१३९ से ) कृत्स्वर से अन्तोदात्त है। 'चपल' शब्द चित् स्वर से [ "चितः" इस सूत्र से ] अन्तोदात्त है, क्योंकि "चुपेरच्चोपधायाः" ( उणादि० ११६ ) में चित् की अनुवृत्ति होती है। चुप् + कल = अल, उकार का अकार—चपल ] 'निपुण' शब्द "थाथादिस्वर' ( ६।२।१४४ से विहित ) से अन्तोदात्त है क्योंकि 'नि' उपपद 'पुण्' धातु से इगुपध' मानकर क = अ प्रत्यय होता है।

११६ ) इत्यत्र हि चिदिति वर्तते । निपुणशब्दस्थाथादिस्वरेणान्तोदात्तः, पुणेरिगुपधलक्षणः कप्रत्ययोऽयम् ।

विस्पष्टादीनीति किम् ? परमलवणम् । उत्तमलवणम् । गुणवचनेष्विति किम् ? विस्पष्टब्राह्मणः ।

विस्पष्ट । विचित्र । व्यक्त । सम्पन्न । कटु । पण्डित । कुशल । चपल । निपुण । विस्पष्टादि ॥

२६८८. श्रज्यावमकन्पापवत्सु भावे कर्मधारये ॥ २५ ॥ ( ३७५९ )

श्र, ज्य, अवम, कन्—इत्येतेषु पापशब्दवति चोत्तरपदे कर्मधारये समासे भाववाचि पूर्वपदं प्रकृतिस्वरं भवति । गमनश्रेष्ठम् । गमनश्रेयः । ज्य—वचनज्येष्ठम्, वचनज्यायः । अवम—गमनावमम्, वचनावमम् । कन्—गमनकनिष्ठम्, गमनकनीयः । पापवत्—गमनपापिष्ठम्, गमनपापीयः । ल्युडन्तान्येतानि पूर्वपदानि

न्यासः

पटिशब्दश्चादेशः—पटुः । 'पडि गतौ', अस्मान्निष्ठायां पण्डितः । कुशल इति । कुशाँल्लातीति 'ला दाने' इत्यस्माद् 'आतोऽनुपसर्गे कः' इति कः, उपपदसमासः, 'गतिकारकोपपदात् कृत्' इत्युत्तरपदप्रकृतिस्वरः । चपलशब्दश्चित्स्वरेणेति । अन्तोदात्त इत्यपेक्षते । कथमयमन्तोदात्तश्चित्स्वरेण ? इत्याह—'कलस्तृपश्च' इत्यतः कलप्रत्ययेऽनुवर्तमाने 'चुपेरच्चोपधायाः' इति 'चुप मन्दायां गतौ' इत्यस्मात् कलप्रत्ययान्तो व्युत्पाद्यते । तत्र 'वृषादिभ्यश्चिद्ग्रहणमनुवर्तते । तेन चित्स्वरेणान्तोदात्तः । निपुणशब्द इत्यादि । अन्तोदात्त इति । प्रकृतेन सम्बन्धः । पुणेरिति । 'पुण कर्मणि शुभे' इत्यस्मात् 'इगुपधाज्ञाप्रीकिरः क' इति कप्रत्ययः ॥ २४ ॥

श्रज्यावमकन्पापवत्सु भावे कर्मधारये ॥ गमनश्रेष्ठमिति । ल्युट् च' इति ल्युट् विशेषणसमासः । अतिशयेन प्रशस्यः श्रेयः इष्ठन्नीयसुनोः 'प्रशस्यस्य श्रः' इति श्रादेशः । वचनज्येष्ठमिति । अत्रापि तयोरेव प्रत्यययोः परतः प्रशस्यशब्दस्य ज्यादेशः । गमनकनिष्ठम्, गमनकनीय इति । इष्ठन्नीयसुनोः परतो युवशब्दस्याल्पशब्दस्य च 'युवाल्पयोः कनन्यतरस्याम्' इति कनादेशः । ननु च श्रज्यकनाम्' इति कथम् ? इतिकरणो हेतौ ।

पदमञ्जरी

कुशान् लातीति कुशलः, 'ला आदाने' ( धा० पा० १०५८ ) । चपलशब्दश्चित्स्वरेणेति । अन्तोदात्त इत्यपेक्षते । चिदिति वर्तत इति । 'वृषादिभ्यश्चित्' ( द० उ० ८.१०९ ) इत्यतः । निपुणशब्द इत्यादि । पूर्ववत्सम्बन्धः । 'पुण कर्मणि शुभे' ( धा० पा० १३३३ ) ॥ २४ ॥

श्रज्यावमकन्यापापवत्सु भावे कर्मधारये । उदाहरणेषु मयूरव्यंसकादित्वाद्विशेष्यस्य पूर्वनिपातः । इष्ठेयसुनोः

भावबोधिनी

विस्पष्ट आदि—इसका क्या फल है ? परमलवणम् । उत्तमलवणम् । [ यहाँ नहीं होता है । ] गुणवाचक परे ही—इसका क्या फल है ? विस्पष्ट ब्राह्मणः । [ ब्राह्मण यह जातिवाचक है, गुणवाचक नहीं । ]

[ इस गण में पठित शब्द—] विस्पष्ट । विचित्र । व्यक्त । सम्पन्न । कटु । पण्डित । कुशल । चपल । निपुण । ये विस्पष्ट आदि हैं ॥ २४ ॥

श्र, ज्य, अवम, कन्—ये और पाप शब्दवाला उत्तरपद होने पर कर्मधारय समास में भाववाचक पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—श्र के—गमनश्रेष्ठम् । गमनश्रेय । ज्य के—वचनश्रेष्ठम्, वचनज्यायः । अवम के—गमनावमम्, वचनावमम् । कन् के—गमनकनिष्ठम्, गमनकनीयः । पापवान् के—गमनपापिष्ठम् । गमनपापीयः । ये पूर्वपद ल्युट् प्रत्ययान्त हैं, लित् स्वर से आद्युदात्त हैं । [ 'लिति' ६।१।१९३ सूत्र लित् से पूर्व का आद्युदात्त करता है, चूँकि गम् + ल्युट् = अन आदि में प्रत्यय से पूर्व प्रकृति में आदि एक ही अच् है, अतः आद्युदात्त लिखा गया । ]

श्र, ज्य, कन्—ये आदेश गृहीत होते हैं, अतः सामर्थ्य से इनसे युक्त शब्दरूप का ग्रहण होता है । [ चूँकि श्र,

लित्स्वरेणाद्युदात्तानि । श्रज्यकनामादेशानां ग्रहणमिति सामर्थ्यात्तद्वदुत्तरपदं गृह्यते ।

श्रादिष्विति किम् ? गमनशोभनम् । भाव इति किम् ? गम्यतेऽनेनेति गमनम्, तत् श्रेयो गमनश्रेयः । कर्मधारये इति किम् ? गमनस्य[1] श्रेयो गमनश्रेयः ॥

## २६८९. कुमारश्च ॥ २६ ॥ ( ३७६० )

कुमारशब्दः पूर्वपदं कर्मधारये समासे प्रकृतिस्वरं भवति । कुमारश्रमणा । कुमारकुलटा । कुमारतापसी । कुमारशब्दोऽन्तोदात्तः ।

अत्र केचिल्लक्षणप्रतिपदोक्तपरिभाषया ( व्या० प० ३ ) 'कुमारः श्रमणादिभिः' ( २.१.७० ) इत्यत्रैव समासे स्वरमेतमिच्छन्ति । केचित्पुनरविशेषेण सर्वत्रैव कर्मधारये ॥

### न्यासः

यस्माच्छ्ज्यकनामिहादेशानां ग्रहणं ते चाजादौ प्रत्यये प्रशस्यादीनां विधीयन्त इति केवलानामसम्भवः । तस्मात् सामर्थ्यात् तद्वदुत्तरपदं गृह्यते ।। २५ ।।

कुमारश्च ॥ कुमारश्रमणेति । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति कुमारीशब्दोऽत्र समस्यते । एवं हि श्रमणाशब्देन स्त्रीलिङ्गेन सामानाधिकरण्यमुपपद्यते; नान्यथा । कुमारशब्दोऽन्तोदात्त इति । 'कुमार क्रीडायाम्' इत्यस्मात् पचाद्यचि व्युत्पादितत्वात् ।

केचित् पुनरित्यादि । कथं पुनर्लक्षणप्रतिपदोक्तपरिभाषायां सत्यामविशेषेणेति लभ्यते ? एवं मन्यते—चकारोऽत्र क्रियते । सचास्यैव विधेः समुच्चयार्थः । तेन सर्वत्राविशेषेण भवति । एवं हि समुच्चयो भवति, नान्यथेति । ये तु 'कुमारः श्रमणादिभिः' इत्यत्रैव समासमिच्छन्ति, ते पूर्वविध्यपेक्षया चकारमिह समुच्चयार्थं वर्णयन्ति ॥ २६ ॥

### पदमञ्जरी

'प्रशस्यस्य श्रः', 'ज्य च', 'युवाल्पयोः कनन्यतरस्याम्' । पापिष्ठ इति । 'विन्मतोर्लुक्' ॥ २५ ॥

कुमारश्च ॥ कुमारश्रमणेति । लिङ्गविशिष्टपरिभाषया कुमारीशब्दस्य समासे पुंवद्भावः 'कुमार क्रीडायाम्' ( धा० पा० १८७७ ) इत्यस्मात्पचाद्यच्, कुमारः । केचित्पुनरित्यादि । चकारो ह्यत्र क्रियते, अस्यैव विधेः समुच्चयार्थः ॥ २६ ॥

### भावबोधिनी

ज्य कन् प्रत्यय परे ही किये जाते हैं, अतः अकेले का ग्रहण सम्भव नहीं है । ]

श्र आदि परे—इसका क्या फल है ? गमनशोभनम् । [ यहाँ नहीं होता है । ] भाववाचक में—इसका क्या फल है ? गम्यतेऽनेन—इति गमनम्, तत् श्रेयः = गमनश्रेयः । [ यहाँ नहीं होता है, क्योंकि यहाँ भाव नहीं करणवाचक पूर्वपद है । ] कर्मधारय में—इसका क्या फल ? गमनस्य श्रेयः—गमनश्रेयः । [ षष्ठीतत्पुरुष में नहीं होता है । ] ॥ २५ ॥

पूर्वपद कुमार शब्द कर्मधारय समास में प्रकृतिस्वरवाला होता है । उदा०—कुमारश्रमणा । कुमारकुलटा । कुमारतापसी । कुमार शब्द अन्तोदात्त है । [ क्योंकि 'कुमार' क्रीडायाम्' से पचादि मानकर अच् होता है, अतः 'चितः' से अन्तोदात्त है । विग्रह में कुमारी शब्द है, पुंवद्भाव होने से कुमार रह जाता है । ]

कुछ विद्वान् 'लक्षण-प्रतिपदोक्त' परिभाषा द्वारा 'कुमारः श्रमणादिभिः'' ( पा० सू० २।१।७० ) इसमें जो समास हैं, उन्हीं में यह स्वर चाहते हैं । दूसरे विद्वान सामान्य रूप से सर्वत्र कर्मधारय में कुमार का प्रकृतिस्वर मानते है । [ इसमें 'च' का ग्रहण हेतु है । ] ॥ २६ ॥

---

१. अत्र गमनं श्रेयः—इति प्रकाशितपाठोऽसङ्गतः, एवं विग्रहे कर्मधारयस्य सत्त्वात् । षष्ठ्यन्तस्यैव प्रत्युदाहरणे औचित्याच्च ।

## २६९०. आदिः प्रत्येनसि ॥ २७ ॥ ( ३७६१ )

'कर्मधारये' इति वर्त्तते । प्रतिगत एनसा, प्रतिगतमेनो वा यस्य स प्रत्येनाः । तस्मिन्नुत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो भवति । कुमा॑रप्रत्येनाः ।

'उदात्तः' इत्येतदत्र सामर्थ्याद्वेदितव्यम् । पूर्वपदप्रकृतिस्वर एव ह्ययमादेरुपदिश्यते ॥

## २६९१. पूगेष्वन्यतरस्याम् ॥ २८ ॥ ( ३७६२ )

पूगाः = गणाः, तद्वाचिन्युत्तरपदे कर्मधारये समासे कुमारस्यान्यतरस्यामादिरुदात्तो भवति । कुमा॑रचातकाः । कुमारचा॑तकाः । कुमा॑रलोहध्वजाः । कुमारलो॑हध्वजाः । कुमा॑रबलाहकाः । कुमारब॑लाहकाः । कुमा॑रजीमूताः । कुमारजी॑मूताः ।

[ कुमारचातकाः । कुमारलोह_ध्वजाः । कुमारबलाह_काः । कुमारजीमूताः । ]

**न्यासः**

**आदिः प्रत्येनसि ॥ प्रतिगत एनसेति ।** अनेन 'अवाद्रयः क्रुष्टाद्यर्थे तृतीयया' इति तत्पुरुषत्वं प्रत्येनः शब्दस्य दर्शयति । **प्रतिगतमेनो वा यस्येति ।** अनेन बहुव्रीहित्वम् । **कुमारप्रत्येना इति ।** 'अत्वसन्तस्य चाधातोः' इति दीर्घः ।

ननु च नेह सूत्र उदात्तग्रहणमस्ति, तत् कथमुदात्तस्वरो लभ्यते ? इत्याह—**उदात्त इत्येतदिहेत्यादि ।**

**पदमञ्जरी**

**आदिः प्रत्येनसि ॥ प्रतिगत एनसेति ।** 'अवादयः क्रुष्टाद्यर्थे तृतीयया' ( कात्या० वा० १३३७ ) इति तत्पुरुषः । द्वितीये तु विग्रहे बहुव्रीहिः कथं पुनरन्तरेणोदात्तग्रहणमुदात्तस्वरो लभ्यते ? इत्याह—**उदात्त इत्येतदिति ।**

**भावबोधिनी**

'कर्मधारये' इसकी अनुवृत्ति होती है । उदा०—प्रतिगतः एनसा, प्रतिगतम् एनः वा यस्य सः—प्रत्येनाः । इस 'प्रत्येनस्' शब्द के उत्तरपद रहने पर कर्मधारय में 'कुमार' शब्द का आदि उदात्त होता है । कुमारप्रत्येनाः । [ प्रतिगतः एनसा—इस विग्रह में 'अवादयः क्रुष्टाद्यर्थे तृतीयया' से तृतीयातत्पुरुष है और 'प्रतिगतम् एनः यस्य सः—इसमें बहुव्रीहि है । इसके बाद कर्मधारय करने पर आदि उदात्त होता है । ]

'उदात्त' यह तो यहाँ सामर्थ्य से होता है, ऐसा समझना चाहिए । क्योंकि पूर्वपद का प्रकृतिस्वर ही यह आदि कहा जा रहा है ।

**विमर्श**—यहाँ भाव यह है कि इस सूत्र में उदात्त का ग्रहण नहीं है, तब उसका विधान कैसे होता है ? यह तो सामर्थ्यवश समझा जाता है । वह सामर्थ्य क्या है ? यहाँ पूर्वपद का प्रकृतिस्वर ही सम्बद्ध होता है । अतः प्रकृतिस्वर के रूप में जो स्वर होने वाला है । वह आदि का ही हो—यह तात्पर्य है । चूँकि कुमार का प्रकृतिस्वर अन्त उदात्त होना है, उस अन्त के स्थान पर आदि हो—इसी के लिए 'आदिः' का ग्रहण है ॥ २७ ॥

पूग = गण, समूह, गणवाचक उत्तरपद रहने पर कर्मधारय समास में पूर्वपद कुमार का आदि विकल्प से उदात्त होता है । उदा०—कुमारचातकाः३ । कुमारलोहध्वजाः३ । कुमारबलाहकाः३ ॥ कुमारजीमूताः३ । [ इनमें प्रयुक्त चातक आदि शब्दों के अर्थ का विशेष विवेचन 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' ( ५।३।११२ ) की व्याख्या में पहले ( षष्ठ भाग में ) किया जा चुका है । वहीं देखना चाहिए । प्रत्यय और लुक् के बाद भी उस का अर्थ मान कर समास होता है । यही कुछ बातें लिखीं जा रही हैं—]

चातकादयः पूगशब्दाः, तेभ्यः 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' ( ५.३.११२ ) इति ञ्यः प्रत्ययः, तस्य 'तद्राजस्य बहुषु' ( २.४.६२ ) इति लुक्। अत्र यदाऽऽद्युदात्तत्वं न भवति, तदा 'कुमारश्च' ( ६.२.२६ ) इति पूर्वपदप्रकृतिस्वरत्वमेके कुर्वन्ति। ये तु तत्र प्रतिपदोक्तस्य ग्रहणमिच्छन्ति तेषां समासान्तोदात्तत्वमेव भवति ॥

## २६९२. इगन्तकालकपालभगालशरावेषु द्विगौ ॥ २९ ॥ ( ३७६३ )

इगन्त उत्तरपदे कालवाचिनि, कपाल, भगाल, शराव—इत्येतेषु च द्विगौ समासे पूर्वपदं प्रकृतिस्वरं भवति। इगन्त—पञ्चारत्निः। दशारत्निः। पञ्चारत्नयः प्रमाणमस्य, दशारत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः, 'प्रमाणे लो' ( का० वा० ) 'द्विगोर्नित्यम्' ( का० वा० ) इति मात्रचो लोपः। इगन्त।

**न्यासः**

किं पुनस्तत्सामर्थ्यम्? इत्याह—**पूर्वपदेत्यादि**। न हि प्रकृतिस्वरादन्य एव स्वर उच्यते। किं तर्हि? प्रकृतिस्वर एव; यतः प्रकृत्येति वर्तते। तत्रैवमभिसम्बन्धः क्रियते—प्रकृतिभावेन कुमारशब्दस्य यः स्वरः प्राप्तः स आदेर्भवतीति। एवञ्च सामर्थ्यादुदात्तो लभ्यते। स एव हि कुमारशब्दस्य प्रकृतिभावेन स्वरः ॥ २८ ॥

**पूगेष्वन्यतरस्याम्** ॥ २९ ॥ **इगन्तकालकपालभगालशरावेषु द्विगौ** ॥ **तद्धितार्थे द्विगोर्यबिति**। 'मासाद्वयसि' इत्यनुवर्तमाने 'द्विगोर्यप्' इति यप्। **ठञो लुगिति**। प्राग्वतीयस्य। **पञ्चकपाल इति**। पञ्चसु कपालेषु संस्कृतः पुरोडाश इति 'संस्कृतं भक्षाः इत्यण्, तस्य 'द्विगोः' इत्यादिना लुक्।

**एते समासा इति**। पञ्चकपाल इत्येवमादयो दशशरावपर्यन्ताः। **कृताणप्रत्ययलोपा इति**। कृतोऽण्प्रत्ययलोपो येषां ते तथोक्ताः। पञ्चदशशब्दावत्र 'न्नः संख्यायाः' इत्याद्युदात्तौ।

**पदमञ्जरी**

सामर्थ्यमेव दर्शयति—**पूर्वपदेति**। प्रकृत्येति हि वर्त्तते, तत्रैवमभिसम्बन्धः—पूर्वत्र कुमारशब्दे प्रकृतिभावेन यः स्वरः स्थापितः सोऽत्रादेर्भवतीति ॥ २७ ॥ २८ ॥

**इगन्तकालकपालभगालशरावेषु द्विगौ** ॥ **कृताण्प्रत्ययलोपा इति**। कृतोऽण्प्रत्ययलोपो येषां ते तथोक्ताः। **द्विगाविति किं परमशराव इति**। षष्ठीसमासोऽयम्। बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यमेव। इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानम्—पञ्चारत्न्यो दशारत्न्यः, यण्गुणयोः कृतयोरिगन्ते द्विगावित्येष स्वरो न प्राप्नोति?

**भावबोधिनी**

चातक आदि पूग शब्द है, इन से 'पूगाञ्ञ्योऽग्रामणीपूर्वात्'' सूत्र से ञ्य प्रत्यय होता है, इसका लुक् 'तद्राजस्य बहुषु तेनैवास्त्रियाम्'' सूत्र से होता है। यहाँ जब आद्युदात्तत्व नहीं होता है, तब 'कुमारश्च' इस सूत्र से प्रकृतिस्वरत्व का विधान कुछ लोग मानते हैं। जो लोग उस सूत्र में प्रतिपदोक्त कुमार का ग्रहण मानते हैं, उनके मत में तो समास का अन्तोदात्तत्व ही होता है। [ इसलिए (१) एक रूप पूर्वपद के आद्युदात्तवाला, (२) दूसरा पूर्वपद के प्रकृतिस्वर अन्तोदात्त वाला, ( ३ ) तीसरा समास के अन्तोदात्तत्ववाला। यही प्रक्रिया उदाहरण के सभी शब्दरूपों में मानकर तीन प्रकार से स्वर—विधान समझने चाहिए ] ॥ २८ ॥

इगन्त और कालवाचक, कपाल, भगाल, शराव—ये शब्द उत्तरपद रहने पर द्विगु-समास में पूर्वपद प्रकृतिस्वर वाला होता है। क्रमशः उदा०—(१) इगन्त—पञ्चारत्निः। दशारत्निः। पञ्च अरत्नयः प्रमाणम् अस्य, दश अरत्नयः प्रमाणम् अस्य - यहाँ तद्धितार्थ में [ 'तद्धितार्थोत्तरपरसमाहारे च'' पा० सू० २।१।५१ से ] द्विगु समास है और [ ''प्रमाणे द्वयसच्' आदि सूत्र से विहित ] मात्रच् प्रत्यय का लोप ''प्रमाणे लो' 'द्विगोर्नित्यम्'' इस से हो जाता है। [ यहाँ इगन्त अरत्नि उत्तरपद है।

प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया।
सरत्निः स्यादरत्निस्तु निष्ककण्ठेन मुष्टिना ॥ ( अमरकोश २।८६ ) इगन्त समास ]

**काल—पञ्चमास्यः। दशमास्यः। पञ्च मासान्भृतो भूतो भावी वा ( ५.१.८० ) इति तद्धितार्थे द्विगोर्यप् ( ५।१।८२ )। पञ्चवर्षः। दशवर्षः। 'वर्षाल्लुक् च' ( ५.१.८८ ) इति ठञो लुक्। काल।**

**कपाल—पञ्चकपालः। दशकपालः। कपाल।**

**भगाल—पञ्चभगालः। दशभगालः। भगाल।**

**शराव—पञ्चशरावः। दशशरावः।**

**'संस्कृतं भक्षाः' ( ४.२.१६ ) इति तद्धितार्थे एते समासाः 'द्विगोर्लुगनपत्ये' ( ४.१.८८ ) इति कृताण् प्रत्ययलोपा द्रष्टव्याः।**

**इगन्तादिष्विति किम्? पञ्चभिरश्वैः क्रीतः पाञ्चश्वः दशाश्वः। द्विगाविति किम्? परमारत्निः। परमशरावः।**

**न्यासः**

**पञ्चाश्व इति।** तद्धितार्थे समासः। 'आर्हादगोपुच्छ' इत्यादिना ठक्। 'अध्यर्धपूर्व' इत्यादिना लुक्। **पञ्चशराव इति।** पञ्च शरावाण्यस्मिन्निति बहुव्रीहिः।

अथेह कथं भवति—पञ्चारत्न्यो दशारत्नय इति, यावता यणादेशे कृते गुणे च नात्रेगन्तमुत्तरपदम्?

**पदमञ्जरी**

इत्यत आह—**यणुणयोरित्यादि।** प्राक्सुबुत्पत्तेः स्वरो भवन्नन्तरङ्गः, यण्गुणौ तु सुबपेक्षत्वाद्बहिरङ्गौ। **स्थानि-**

**भावबोधिनी**

(२) काल के उदा०—पञ्चमास्यः। दशमास्यः। पञ्च मासान् भृतो भूतो भावी वा—इन तद्धितार्थों में द्विगु से 'यप्' प्रत्यय करने पर [ —पञ्चमास + य, दशमास + य, भ संज्ञा, अलोप करने पर ] रूप बनते हैं। पञ्चवर्षः, दशवर्षः। [ यहाँ भी पूर्वोक्त तद्धितार्थों में द्विगु समास और ठञ् प्रत्यय होता है। ] "वर्षाल्लुक् च" से लुक् हो जाता है। [ 'न्रः संख्यायाः' इस फिट् सूत्र से पञ्चन् और दशन् शब्द आद्युदात्त हैं। पूर्वपद के प्रकृतिस्वर में यह आद्युदात्त रहता है। ] काल के उदा०—समास।

(३) कपाल के उदा०—पञ्चकपालः। दशकपालः। [ पञ्चषु कपालेषु संस्कृतः इसमें "संस्कृतं भक्षाः" सूत्र से अण् और 'द्विगोः' सूत्र से उसका लुक्। पूर्वपद का प्रकृतिस्वर = आद्युदात्त है। ]

(४) भगाल के उदा०—पञ्चभगालः। दशभगालः [ पञ्चसु भगालेषु संस्कृतः, दशसु भगालेषु संस्कृतः—इस अर्थ में पूर्ववत् प्रत्यय और उसका लोप होता है। भगाल = खोपड़ी। श्मशानादि पर पाँच खोपड़ियों में जिसका संस्कार किया गया है वह 'पञ्चभगालः। यहाँ भी पूर्वपद आद्युदात्त है। ]

(५) शराव—पञ्चशरावः। दशशरावः। [ यहाँ भी पञ्चसु शरावेषु संस्कृतः, दशसु शरावेषु संस्कृतः—इसमें पूर्ववत् प्रत्यय और लोप होता है। शराव = मिट्टी का प्याला। ]

"संस्कृतं भक्षाः" इससे होने वाले तद्धितार्थ में ये द्विगु समास हैं, इनमें किये गये अण् प्रत्यय का लोप 'द्विगोर्लुगनपत्ये" सूत्र से समझना चाहिए।

इगन्तादि उत्तरपद रहने पर ही—इसका क्या फल है? पञ्चभिः अश्वैः क्रीतः—इस अर्थ में पञ्चाश्वः। दशाश्वः। [ यहाँ भी तद्धितार्थ में समास, ठक् प्रत्यय और उसका लुक् है। इगन्तादि परे नहीं है। अतः अन्तोदात्त होता है। ]

द्विगु में—इसका क्या फल है? परमारत्निः। परमशरावः।

**विमर्श**—इनमें पदमञ्जरीकार षष्ठीतत्पुरुष का समर्थन करते हैं क्योंकि बहुव्रीहि मानने पर तो पूर्वपद का प्रकृतिस्वर होता ही है। अतः प्रत्युदाहरण बनाने के लिए षष्ठीतत्पुरुष ही मानना उचित है। किन्तु न्यासकार ने परमशरावः

**पञ्चारत्न्यो दशारत्न्य इति** [1]**पञ्चारत्नयो दशारत्नय इति च यण्गुणयोर्बहिरङ्गलक्षणयोरसिद्धत्वात् ( म० भा० ) स्थानिवद्भावाद्वा द्विगुस्वर इगन्तलक्षणः प्रवर्त्तते ॥**

## २६९३. बह्वन्यतरस्याम् ॥ ३० ॥ ( ३७६४ )

**बहुशब्दः पूर्वपदमिगन्तादिषूत्तरपदेषु द्विगौ समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । पूर्वेण नित्ये प्राप्ते विकल्पः । बह्वरत्निः । बह्वरत्निः । बहुमास्यः । बहुमास्यः । बहुकपालः । बहुकपालः । बहुभगालः । बहुभगालः ।**

**न्यासः**

इत्याह—**पञ्चारत्न्य इत्यादि** । यद् यण्गुणौ ह्यजादौ विभक्तौ परत ताविह बहिरङ्गौ, स्वरस्त्वन्तरङ्गः; प्राग् विभक्त्युत्पत्तेर्भावात्, असिद्धं बहिरङ्गमन्तरङ्गे' तेन पञ्चारत्न्य इत्यत्रापि द्विगुस्वर इगन्तलक्षणः प्रवर्तते । **स्थानिवद्भावाद्वेति** । 'अचः परस्मिन् पूर्वविधौ' इति पूर्वस्वरे कर्तव्ये यो गुणः स्थानिद्भावेनेगन्तलक्षणः प्रवर्तते[2] । ननु च स्वरविधौ 'न पदान्त' इत्यादिना स्थानिद्भावः प्रतिषिध्यते ? नैतदस्ति; 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्, इत्युक्तत्वात्, नचैवमिको यण्गुणौ लोपाजादेशौ । पञ्चारत्न्य इति अरत्निशब्दोऽत्र 'कृदिकारादक्तिनः', 'सर्वतोऽक्तिन्नर्थादित्येके' इति बह्वादिषु पाठान्ङीषन्तः । इहापि पूर्ववत् तद्धितार्थे द्विगुः, मात्रचस्तु लोपः ॥ २९॥

**बह्वन्यतरस्याम् ॥** पूर्वेणेगन्तादिषूत्तरपदेषु बहुशब्दस्यापि नित्यं प्रकृतिस्वरे प्राप्ते विकल्पोऽयमुच्यते । **बह्वरत्निरिति** । पूर्ववत् समासादि । **बहुमास्य इति** । पूर्ववद् यप् । बहुकपालदयः समासाः, इहापि 'संस्कृतं

**पदमञ्जरी**

**वद्भावाद्वेति** । न चात्र स्वरविधौ न स्थानिवत्त्वम्; अलोपाजादेशत्वात् । **पञ्चारत्न्य इति** । छान्दसोऽयं प्रयोगः । तत्र 'जसि च' इति गुणो न भवति; 'जसादिषु छन्दसि वा वचनम्' ( कात्या० वा० ४५९६ ) इति वचनात् ॥२९॥

**बह्वन्यतरस्याम् ॥ बहुशब्दोऽन्तोदात्त इति** । 'कुर्भ्रश्च' ( द० उ० १.१०७ ) इति वर्तमाने 'लङ्घिबंह्योर्न'

**भावबोधिनी**

पाठ न मानकर 'पञ्चशरावः' पाठ लिया है और 'पञ्च शरावाण्यस्मिन्' ऐसा बहुव्रीहि माना है। यहाँ पदमञ्जरीकार का कथन उचित प्रतीत होता है।

आगे 'पञ्चारत्न्यो दशारत्न्य इति च' ऐसा पाठ ही सभी संस्करणों में है किन्तु यहाँ यण् और गुण दोनों के उदाहरण होने चाहिए। तभी पाठ संगत होता है। इसी लिए महाभाष्य में यह स्पष्ट लिखा "इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानं कर्त्तव्यम्—पञ्चारत्न्यः दशारत्न्यः। पञ्चारत्नयः, दशारत्नयः।" यण्घटित रूप की उपपत्ति में प्रदीपकार ने लिखा है— "पञ्चारत्न्य इति। पञ्चारत्नयः प्रमाणमेषामिति तद्धितार्थे द्विगुः। प्रमाणे लो द्विगोर्नित्यम्' इति मात्रचो लुक्। जस्, 'जसि च' इति गुणः 'जसादिषु छन्दो वा वचनम्' इति वचनान्न भवति, तयोर्यणादेशः।" अतः यण् और गुण दोनों के उदाहरण देने आवश्यक हैं। इसीलिये इस संस्करण में दोनों के उदाहरण दिये जा रहे हैं—

( अनु० ) 'पञ्चारत्न्यो दशरत्न्यः' और 'पञ्चारत्नयः' 'दशारत्नयः' इनमें यण् और गुण बहिरङ्गलक्षण हैं [ क्योंकि अजादि परनिमित्त को मानकर होते हैं स्वर अन्तरंग है क्योंकि जसादि के पहले ही होता है ] अतः ये असिद्ध हो जाते हैं [ इसलिये अरत्नि इगन्त ही रहता है ] अथवा 'अचः परस्मिन्" से स्थानिवद्भाव हो जाने से इगन्त मान कर होने वाला द्विगुस्वर होता ही है। [ अतः एकवचन और बहुवचन सर्वत्र पूर्वपद का ही प्रकृतिस्वर रहता है। ] ॥ २९ ॥

इगन्त आदि पूर्वोक्त शब्द उत्तरपद पहने पर द्विगु समास में 'बहु' शब्द पूर्वपद विकल्प से प्रकृतिस्वर वाला होता है। पूर्वसूत्र से नित्य प्राप्त रहते यह विकल्प किया जा रहा है। [ पूर्व की तरह यहाँ भी सब उदाहरण होते हैं— )

१. प्रकाशितेषु सर्वसंस्करणेषु गुणस्योदाहरणभूतः 'पञ्चारत्नयः दशारत्नयः' इति पाठो न दृश्यते। महाभाष्ये तूपलभ्यते। अत एतत्परित्यागः प्रमादमूलक एवेति बोध्यम्। त्रिपाठी।

२. अत्रत्यः पाठस्त्रुटितो भ्रष्टो वा प्रतीयते।

**बहुशरावः । बहुशरावः । बहुशब्दोऽन्तोदात्तः, तस्य प्रकृतिस्वरे कृते यत्र यणादेशस्तत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( ८.२.४ ) इत्येष स्वरो भवति ॥**[1]

## २६९४. दिष्टिवितस्त्योश्च ॥ ३१ ॥ ( ३७६५ )

**दिष्टि-वितस्ति—इत्येतयोरुत्तरपदयोर्द्विगौ समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति । पञ्चदिष्टिः पञ्चदिष्टिः । पञ्चवितस्तिः पञ्चवितस्तिः । दिष्टिवितस्त्योः प्रमाणे, तेनात्र मात्रचो लुक् ॥**

## २६९५. सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ३२ ॥ ( ३७६६ )

**सप्तम्यन्तं पूर्वपदं सिद्ध, शुष्क, पक्व, बन्ध—इत्येतेषूत्तरपदेषु प्रकृतिस्वरं भवति, सा चेत्सप्तमी कालान्न**

### न्यासः

भक्षाः' इत्यत्रापि तद्धितार्थे कृतेऽण्प्रत्ययलोपा द्रष्टव्याः । **बहुशब्दोऽन्तोदात्त इति** । स हि 'कुर्भ्रश्च' इत्यनुवर्तमाने 'बहिमहि वृद्धौ' इत्यस्मात् 'लङ्घिबंह्योर्नलोपश्च' इति कुप्रत्ययं विधाय व्युत्पाद्यते, तेन प्रत्ययस्वरेणान्तोदात्तः । **यत्र यणादेश इति** । बह्वरत्निरित्यत्र ॥ ३० ॥

**दिष्टिवितस्त्योश्च** ॥ अबह्वर्थोऽयमारम्भः । **पञ्चदिष्टिरिति** । पञ्चारत्निरित्यनेन तुल्यम् ॥ ३१ ॥

**सप्तमीसिद्धशुष्कपक्वबन्धेष्वकालात्** ॥ **साङ्काश्यसिद्ध इति** । 'सिद्धशुष्कपक्वबन्धैश्च' इति समासः ।

### पदमञ्जरी

( द० उ० १.११४ ) लोपश्च इति कुप्रत्यये व्युत्पादितत्वात् ॥ ३० ॥ ३१ ॥

**सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्** ॥ **ण्यप्रत्ययान्ताविति** । वुञ्छणादिषु 'सङ्काशादिभ्यो ण्यः' । अवतेः

### भावबोधिनी

उदा०—बह्वरत्निः२ । बहुमास्यः२ । बहुकपालः२ । बहुभगालः२ । बहुशरावः२ । [ इन सभी में प्रमाण और संस्कृत अर्थों में तद्धितप्रत्यय और उसका लुक्, द्विगु समास है । ] बहुशब्द अन्तोदात्त है । [ क्योंकि बह् से कु = उ प्रत्ययस्वर है । ] इसका प्रकृतिस्वर करने में जहाँ ( बह्वरत्निः ) यणादेश हो जाता है वहाँ 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य'' ( ८।२।४ ) से स्वरित स्वर हो जाता है । [ सभी उदाहरणों के दो दो रूप हैं । ]

**विमर्श**—प्रस्तुतसूत्र विकल्प से पूर्वपद का प्रकृतिस्वर करता है । अतः उदाहरण के लिए दोनों रूप होने चाहिए थे । परन्तु कई संस्करणों में केवल एक ही रूप हैं । कई ने दो रूप दिए हैं किन्तु स्वर के चिह्न नहीं दिये हैं । वास्तव में अलग-अलग स्वर-चिह्नित दोनों पाठ होना उचित है । अतः सभी उदाहरण दो बार मानने चाहिए । इनमें एक रूप में पूर्वपद का प्रकृतिस्वर होता है दूसरे में समास का अन्तोदात्त है । यण् होने पर पूर्वपद का अन्त स्वरित होता है ॥ ३० ॥

दिष्टि और वितस्ति—ये 'उत्तरपद रहने पर द्विगु समास में पूर्वपद विकल्प से प्रकृतिस्वरवाला होता है । उदा०—पञ्चदिष्टिः पञ्चदिष्टिः । पञ्चवितस्तिः, पञ्चवितस्तिः । [ एक में पूर्वपद का प्रकृतिस्वर है दूसरे में अन्तोदात्त है । ] दिष्टि और वितस्ति—ये प्रमाणवाचक है अतः [ प्रमाण अर्थ में होने वाले ] मात्रच् का लुक् हो जाता है । [ इसलिए मात्रच् न सुनाई देने पर भी उसका अर्थ प्रतीत होता है । [ पूर्वपद का प्रकृतिस्वर न होने पर समास अन्तोदात्त होने से शेषनिघात होता है ॥ ३१ ॥

सिद्ध, शुष्क, पक्व और बन्ध ये उत्तरपद रहने पर सप्तम्यन्त पूर्वपद प्रकृतिस्वर वाला होता है यदि वह सप्तमी कालवाचक से न हुई हो तो । उदा०—साकाश्यसिद्धः, सांकाश्यसिद्धः । काम्पिल्यसिद्धः, काम्पिल्यसिद्धः । सांकाश्य और

---

१. कतिपयसंस्करणेषु 'बहुरत्नि' रिति पाठो दृश्यते स नोचितः, 'बह्वरत्निः' इति पाठ उदाहरणत्वेन एव यणादेशमूलक-स्वरस्य प्रवृत्तिसम्भवात्, न्यासेऽपि तथैव पाठस्यौचित्यात् च ।

**भवति । सांकाश्यसिद्धः सांकाश्यसिद्धः । काम्पिल्यसिद्धः काम्पिल्यशब्दः । सांकाश्य-काम्पिल्यशब्दौ ण्यप्रत्ययान्ता-वन्तोदात्तौ। फिषि तु 'सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानामन्तः पूर्वं वा' ( फि० सू० ६५ ) इति पठ्यते, तत्र पक्षे मध्योदात्तावपि भवतः ।**

**शुष्क—ऊकशुष्कः । निधनशुष्कः । ऊकशब्दो बहुलवचनादवतेः कक्प्रत्ययान्तोदात्तः । निधनशब्दो निधाञः क्युप्रत्यये मध्योदात्तः ।**

**पक्व—कुम्भीपक्वः । कलशीपक्वः[1] । भ्राष्ट्रपक्वः । कुम्भीकलशीशब्दौ ङीषन्तावान्तोदात्तौ । भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्त आद्युदात्तः ।**

**बन्ध—चक्रबन्धः । चारकबन्धः । चक्रशब्दोऽन्तोदात्तः । चारकशब्दो ण्वुलन्त आद्युदात्तः ।**

**न्यासः**

**साङ्काश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तत्वादिति ।** 'वुञ्छण्' इत्यादिना सङ्काशादिलक्षणं चातुरर्थिकप्रत्ययं विधाय व्युत्पादितत्वात् ।

**ऊकशब्द इत्यादि ।** 'कृदाधारार्चिकलिभ्यः कः' इत्यधिकृत्य 'सृवृभूशुषिमुषिभ्यः कक्' इति कक्प्रत्ययः किद् विधीयमानोऽवतेरपि भवतीति । तेनोकशब्दः कक्प्रत्ययान्तः । 'ज्वरत्वर' इत्यादिनावतेरूठ् । **निधनशब्दो निधाञः क्युप्रत्यये मध्योदात्त इति ।** निधनशब्दोऽयम् 'कृपृवृजिमन्दिनिधाञः क्युः' इति क्युप्रत्ययान्तो व्युत्पादितः । तेन 'गतिकारकोपदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरे कृते मध्योदात्तो भवति । क्वचित् क्युनिप्रत्ययान्त इति पाठः । सप्तम्येकवचने 'इकोऽचि विभक्तौ' इति नुमं कृत्वा शब्दरूपापेक्षया नपुंसकलिङ्गं वेदितव्यम् । क्युरित्येतस्मिन् शब्दरूपे प्रत्ययसंज्ञक इत्यर्थः । कुम्भीकलसीशब्दौ ङीषन्ताविति । तेनान्तोदात्ताविति भावः । ङीषन्तता तु 'जातेरस्त्रीविषयाद्' इत्यादिना विहितेन ङीषा वेदितव्या । **भ्राष्ट्रशब्दः ष्ट्रन् प्रत्ययान्त इति ।** 'ष्ट्रन्' इति वर्तमाने 'भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च' इति ष्ट्रन्प्रत्ययान्ततया व्युत्पादितत्वात् । **चक्रशब्दोऽन्तोदात्त**

**पदमञ्जरी**

कक्प्रत्ययः, 'ज्वरत्वर' इत्यादिनोठ्, ऊकः । कुम्भकलशशब्दाभ्यां जातिलक्षणो ङीष्, भ्राष्ट्रशब्दो भ्रस्जेष्ट्रनि वृद्धौ च व्युत्पादितः । चक्रशब्दः 'कृञः को द्वे च' ( द० उ० ६.१०३ ) ।

**भावबोधिनी**

काम्पिल्य शब्द ण्यप्रत्ययान्त अन्तोदात्त हैं । [ 'वुञ् छण्'' ( पा० सू० ४.२.८० ) से ण्य प्रत्यय होता है । ] परन्तु जब स्वतन्त्र प्रातिपदिक मानते हैं तब तो ''सांकाश्यकांपिल्यनासिकादार्वाघाटानामन्तः पूर्वं वा' ( फि० सू० ६५ ) यह पढ़ा जाता है । [ वैकल्पिक अन्तोदात्त होने से ] पक्ष में मध्योदात्त भी होते हैं । [ इस लिए एक पूर्वपद के अन्तोदात्त का और दूसरा मध्योदात्त का रूप समझना चाहिए ।

शुष्क—ऊकशुष्कः, निधनशुष्कः । ऊक शब्द बहुल वचन के कारण अव् धातु से कक् प्रत्यय [ और ऊठ् आदेश ] करने पर बना है ] अतः अन्तोदात्त है । निधन शब्द निपूर्वक धाञ् धातु से क्यु = अन प्रत्यय करने पर मध्योदात्त हैं । पूर्वपद के ये प्रकृतिस्वर होते हैं । ]

पक्व—कुम्भीपक्वः । कलशीपक्वः । भ्राष्ट्रपक्वः । कुम्भी और कलशी शब्द ङीषन्त होने से अन्तोदात्त हैं । भ्राष्ट्र शब्द ष्ट्रन् प्रत्ययान्त होने से आद्युदात्त है । [ अतः पूर्वपद के ये ही स्वर होते हैं । ]

बन्ध—चक्रबन्धः । चारकबन्धः । चक्र शब्द अन्तोदात्त है । चारक शब्द ण्वुल् प्रत्ययान्त [ लित् स्वर से ] आद्युदात्त है ।

---

१. 'विलासीपक्वः' इति पाठो न्यासपदमञ्जर्यसम्मतः ।

**अकालादिति किम्? पूर्वाह्णसिद्धः। अपराह्णसिद्धः।**

**सप्तमीस्वरः कृत्स्वरेण बाधितः पुनरयं विधीयते[1] ॥**

## २६९६. परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ३३ ॥ ( ३७६७ )

**परि, प्रति, उप, अप—इत्येते पूर्वपदभूता वर्ज्यमानवाचिनि अहरवयववाचिनि रात्र्यवयववाचिनि चोत्तरपदे प्रकृतिस्वरा भवन्ति। परित्रिगर्तं वृष्टो देवः। परिसौवीरम्। परिसार्वसेनि।**

**प्रति—प्रतिपूर्वाह्णम्। प्रत्यपराह्णम्। प्रतिपूर्वरात्रम्। प्रत्यपररात्रम्।**

**न्यासः**

**इति।** 'कृञः को द्वे च' इति कप्रत्ययान्तत्वेन व्युत्पादितत्वात्। **चारकशब्दो ण्वुलन्तः।** तेन लित्स्वरेणाद्युदात्तः। **सप्तमीस्वर इत्यादि।** 'तत्पुरुषे' इत्यादिना सप्तम्याः प्रकृतिभावेन यः स्वरो विधीयते स परत्वात् 'थाथघञ्' इत्यादिना विहितेन स्वरेणान्तोदात्तेन बाधितः, तेन पुनर्विधीयते ॥ ३२ ॥

**परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ परित्रिगर्तमिति।** अत्र त्रिगर्तशब्दो वर्ज्यमानमुत्तरपदं त्रिगर्त्तान् वर्जयित्वेत्यर्थः। 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयसंज्ञा। 'पञ्चम्यपाङ्परिभिः' इति तद्योगेन पञ्चमी। 'अपपरिबहिरञ्चवः पञ्चम्या' इति तदन्तेनाव्ययीभावः। **परिसार्वसेनीति।** सार्वसेनिशब्दे न समासः।

**पदमञ्जरी**

**सप्तमीस्वर इत्यादि।** 'तत्पुरुषे तुल्यार्थ' इत्यादिना सप्तम्यन्तस्य यः प्रकृतिभावः परत्वात्**थाथादिस्वरेण बाधित इति।** यत्र तु **कृत्स्वरेण बाधित इति** पाठः, तत्र कृदन्तस्य यः स्वरः थाथादिलक्षणस्तेनेत्यर्थः ॥ ३२ ॥

**परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु॥ परित्रिगर्त्तमिति।** त्रिगर्त्तान्वर्जयित्वेत्यर्थः। 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा, 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी। 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः। सौवीरादयोऽपि जनपदविशेषाः। **प्रतिपूर्वाह्णमिति।** 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। **उपपूर्वाह्ण-**

**भावबोधिनी**

कालवाचक से नहीं—इसका क्या फल है? पूर्वाह्णसिद्धः। अपराह्णसिद्धः। [ पूर्वाह्णे सिद्धः, अपराह्णे सिद्धः। यहाँ कालवाची पूर्वपद है। अतः पूर्वपद का प्रकृतिस्वर नहीं होता है। ]

कृत्स्वर से बाधित यह सप्तमीस्वर पुनः किया जाता है। [ "तत्पुरुषे तुल्यार्थ०" ६.२.२ से सप्तम्यन्त के प्रकृतिस्वर से जिस स्वर का विधान किया जाता है उसका बाध "थाथघञ्" आदि से विहित अन्तोदात्त स्वर के द्वारा किया जाता है पुनः उसी सप्तमीस्वर को किया जाता है यही सूत्र का विशेष प्रयोजन है। ] ॥ ३२ ॥

परि, प्रति, उप और अप—ये पूर्वपद—वर्ज्यमानवाचक, अहरवयववाचक और रात्र्यवयववाचक उत्तरपद परे होने पर—प्रकृतिस्वर वाले होते हैं। [ इसमें तीन प्रकार के अर्थों के वाचक शब्द उत्तरपद होने चाहिए। ] वर्ज्यमान-वाचक परे के उदा०—परित्रिगर्तं वृष्टो देवः। परिसौवीरम्। परिसार्वसेनि। [ यहाँ "अपपरी वर्जने" सूत्र से परि की कर्मप्रवचनीय संज्ञा होती है, "पञ्चम्यपाङ्परिभिः" से पञ्चमी और "अपपरिरञ्चवः पञ्चम्याः" से अव्ययीभाव समास होता है। पूर्वपद का प्रकृतिस्वर = आद्युदात्त होता है। ]

प्रति—प्रतिपूर्वाह्णम्। प्रत्यपराह्णम्। प्रतिपूर्वरात्रम्। प्रत्यपररात्रम्। [ यहाँ "लक्षणेनाभिप्रती आभिमुख्ये" सूत्र से अव्ययीभाव समास होता है। ]

---

१. 'प्रतिप्रसूयते' इति पाठा०।

उप—उपंपूर्वाह्णम् । उपांपराह्णम् । उपंपूर्वरात्रम् । उपांपररात्रम् ।

अप—अपंत्रिगर्त्तं वृष्टो देवः । अपंसौवीरम् । अपंसार्वसेनि ।

**'निपाता आद्युदात्ताः' ( फि० सू० ८० ) 'उपसर्गाश्चाभिवर्जम्' ( फि० सू० ८१ ) इति आद्युदात्तानि पूर्वपदानि ।**

**तत्पुरुषे बहुव्रीहौ च सिद्धत्वादव्ययीभावार्थोऽयमारम्भः तत्र 'अपपरी वर्जने' ( १.४.८८ ) वर्त्तेते इति तयोरेव वर्ज्यमानमुत्तरपदम्, नेतरयोः । अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्तीति न पृथगुदाह्रियते ।**

**न्यासः**

**पूर्वाह्णमिति** । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः ।

**उपपूर्वाह्णमिति** । 'अव्ययं विभक्ति' इत्यादिना सामीप्ये ।

**अपत्रिगर्तमिति** । परित्रिगर्तमित्यनेन तुल्यम् ।

**तत्पुरुषे बहुव्रीहौ चेत्यादि** । 'तत्पुरुषे तुल्यार्थ' इत्यादिना पर्यादीनामव्ययत्वात् सिद्धम् । बहुव्रीहौ 'बहुव्रीहौ प्रकृत्या' प्रकृत्यादिना, तेनाव्ययीभावे यथा स्यादित्येवमर्थोऽयमारम्भः । किं पुनः कारणमपपर्योरेव वर्ज्यमान उदाहरणम्, न तु प्रत्युपयोः ? इत्याह—**तत्रेत्यादि** । तत्र तेषु पर्यादिषु मध्येपपरिशब्दावेव वर्ज्यमाने वर्तेते । तेन तस्मात् तयोरेव वर्ज्यमानमुत्तरपदम् । अतस्तयोरेवात्रोदाहरणमुपन्यस्तमित्यभिप्रायः । अथाहोरात्रावयवा अपि तयोरेवापपर्योः कस्मान्नोदाह्रियन्ते ? इत्याह—**अहोरात्रावयवा अपीत्यादि** । वर्ज्यमानार्थयोरेवापपर्योः प्रयोग इति । यावत् किञ्चिदुत्तरपदं तेन सर्वेणैव बर्ज्यमानेन भवितव्यम्; अन्यथा तयोर्वर्ज्यमानार्थता न स्यात् । तस्मादहोरात्रावयवा अपि तयोर्वर्ज्यमानयोरेव भवन्ति । तेन त्रिगर्तादिभ्यो वर्ज्यमानेभ्यः पृथङ् नोदाह्रियन्ते ।

**पदमञ्जरी**

**मिति** । 'अव्ययं विभक्ति' इत्यादिना सामीप्ये । किं पुनः कारणमपपर्योरेव वर्ज्यमानमुदाहृतम्, नेतरयोः ? तत्राह—**तत्रेति** । अथाहोरात्रावयवा अपि इतरयोरपपर्योः कस्मान्नोदाह्रियन्ते ? अत आह—**अहोरात्रावयवा अपीति । परिवनमित्यत्रेति** । 'परिप्रत्युपापा' इत्यस्यावकाशः—परित्रिगर्तमिति, 'वनं समासे' इत्यस्यावकाशः—प्रवणमिति; परिवनमित्यत्र 'वनं समासे' इत्येतद्भवति विप्रतिषेधेन । अपवादत्वं चात्र हेतुः, न विप्रतिषेधः ।

**भावबोधिनी**

उप—उपपूर्वाह्णम् । उपापराह्णम् । उपपूर्वरात्रम् । उपापररात्रम् । [ इनमें सामीप्य अर्थ में "अव्ययं विभक्ति" आदि सूत्र से समास होता है । ]

अप—अपत्रिगर्त्तं वृष्टो देवः । अपसौवीरम् । अपसार्वसेनि । [ यहाँ परिके समान वर्जनार्थक में अव्ययीभाव है । ]

पूर्वोक्त सभी उदा०—में "निपाताः आद्युदात्ताः" "उपसर्गाश्चाभिवर्जम्" ( फि० सू० ८०-८१ ) से पूर्वपद आद्युदात्त होते हैं ।

[ "तत्पुरुषे तुल्यार्थ" ६.२.२ से ] तत्पुरुष में और "बहुव्रीहौ प्रकृत्या" ६.१.१ से ] बहुव्रीहि में पूर्वपद का प्रकृतिस्वर सिद्ध ही है अतः यह सूत्र इन शब्दों के अव्ययीभाव में पूर्वपद के प्रकृतिस्वर के लिए बनाया गया है । इन शब्दों में 'अप' और 'परि' वर्जन अर्थ में विद्यमान हैं, इन्हीं का वर्ज्यमान उत्तरपद होना चाहिये, शेष दो का नहीं । [ इसलिए इन्हीं के उदाहरण दिये गये । ] अहोरात्रावयव = दिन रात के अवयव भी वर्ज्यमान ही उनके [ अप, परि के ] होते हैं, इसलिए उनके उदाहरण अलग से नहीं दिये गए हैं । [ क्योंकि जो भी उत्तरपद हो वह वर्ज्यमानार्थक ही होना चाहिए । अतः त्रिगर्त आदि से भिन्न उदाहरण देने की आवश्यकता नहीं है । ]

वर्ज्यमानाहोरात्रावयवेष्विति किम् ? प्रत्यग्नि शलभाः पतन्ति। परिवनमित्यत्र 'वनं समासे' ( ६.२.१७८ ) इत्येतद्भवति ॥

## २६९७. राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ॥ ३४ ॥ ( ३७६८ )

**राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वोऽन्धकवृष्णिषु वर्त्तते तत्र पूर्वपदं प्रकृतिस्वरं भवति। 'श्वाफल्क चैत्रकाः। चैत्रत्रकरोधकाः। शिनिवासुदेवाः। श्वाफल्कशब्दः, चैत्रकशब्दश्च 'ऋष्यन्धकवृष्णि-कुरुभ्यश्च' ( ४.१.११४ ) इति अणन्तावन्तोदात्तौ। शिनिशब्द आद्युदात्तः, स तदपत्येष्वभेदेन वर्त्तते।**

**न्यासः**

**प्रत्यग्नीति**। पूर्ववदाभिमुख्येऽव्ययीभावः। **परिवनमित्यत्रेत्यादि**। 'परिपत्युपापा वर्ज्यमान' इत्यस्यावकाशः—परित्रिगर्तमिति, 'वनं समासे' इत्यस्यावकाशः—प्रवणमिति; परिवनमित्यत्र 'वनं समासे' इत्येतद् भवति विप्रतिषेधेन ॥ ३३ ॥

**राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु** ॥ राजन्यवाचीनि यान्यसमस्तानि बहुवचनान्तानि तदवयवको यो द्वन्द्वः स राजन्यबहुवचनद्वन्द्व इत्युक्तः। **श्वाफल्कचैत्रकरोधका इति**। श्वाफल्काश्च चैत्रकाश्च रोधकाश्चेति द्वन्द्वः। तत्र रोधकशब्दमपेक्ष्य चैत्रकशब्दस्य पूर्वपदत्वम्, चैत्रकशब्दमपेक्ष्य श्वाफल्कशब्दस्य, तयोरपि प्रकृतिभावः। अत एव तयोर्द्वयोरपि स्वरं दर्शयितुमाह—**श्वाफल्कशब्दश्चैत्रकशब्दश्चेत्यादि**। **शिनिशब्द आद्युदात्त इति**। स हि 'वीज्याज्वरिभ्यो निः' इति निप्रत्ययेऽनुवर्तमाने 'बहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति विधीयमाने शीङोऽपि भवति। बहुलवचनाद् ह्रस्वत्वञ्च तत एव। तेनाद्युदात्तो भविता नित्स्वरेण। **तदपत्येष्विति**। यस्य शिनेः क्षत्रियस्य यान्यपत्यानि तेष्वित्यर्थः। **अभेदेनेति**। उपचारेणेत्यर्थः।

**पदमञ्जरी**

**'समासस्य' इत्येव सिद्धे वनस्य पुनर्वचने एतत्प्रयोजनम्—येऽन्ये तदपवादास्तद्बाधनार्थम्। सर्वथैवाव्ययस्वरं बहुव्रीहिस्वरं च बाधते, एवमिदमपि बाधिष्यते ॥ ३३ ॥**

**राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु** ॥ **श्वाफल्कचैत्रकरोधका इति**। प्रमादपाठोऽयम्। अत्र त्रिपदे हि द्वन्द्वे यत्सर्वमपेक्ष्य पूर्वपदं तस्यैव भवति, ततश्च चैत्रकशब्दस्य स्वरवचनमनुपपन्नं स्यात्, तस्मात् **श्वाफल्कचैत्रकाश्चैत्रकरोधका** इति पाठः। एकस्तु चैत्रकशब्दो लेखकैः पुनरुक्तिशङ्कया त्यक्तः। **शिनिशब्द आद्युदात्त इति**।

**भावबोधिनी**

वर्ज्यमान, अहरवयव, राज्यवयव—ये परे हों—इसका क्या फल है ? प्रत्यग्नि शलभाः पतन्ति [ यहाँ आभिमुख्य में अव्ययीभावसमास होने से पूर्वपद का प्रकृतिस्वर नहीं होता है। ]

परिवनम्—यहाँ 'वनं समासे' ( ६.२.१७८ ) यह सूत्र विप्रतिषेध से होता है। [ अतः यहाँ अन्तोदात्त है।] ॥३३॥

राजन्यवाचक बहुवचनान्तों का जो द्वन्द्व समास अन्धक और वृष्णियों में होता है उसमें पूर्वपद प्रकृतिस्वर वाला होता है। उदा०–श्वाफल्क चैत्रकाः। चैत्रकरोधकाः। [श्वाफल्काश्च त्त्रकाश्च। चैत्रकाश्च, रोधकाश्च—इस विग्रह में द्वन्द्व है। ] शिनिवासुदेवाः। [ शिनयश्च वासुदेवाश्च—इसमें द्वन्द्व है। ] श्वाफल्क शब्द और चैत्रक शब्द "ऋष्यन्धकवृष्णि-कुरुभ्यश्च" ( ४.१.११४ ) इससे अण् प्रत्ययान्त अन्तोदात्त हैं। ये पूर्वपद के प्रकृतिस्वर होते हैं। ] शिनि शब्द [ नित् होने से ] आद्यदात्त है। यह शब्द इसके अपत्यों में अभेद से प्रयुक्त होता है। [ अतः शिनि क्षत्रिय के अपत्य अर्थ का बोधक है। बहुवचन करके द्वन्द्व होता है। ]

१. श्वाफल्कचैत्ररोधकाः—इति पाठो मूले न्यासे च प्रमादात् पठितः। द्र० पदमञ्जरी।

**राजन्य इति किम् ? द्वैप्यहैमायनाः[1] । द्वीपे भवा इति 'द्वीपादनुसमुद्रं यञ्' ( ४.३.१० ) । हैमेरपत्यं युवा हैमायनः । अन्धकवृष्णय एते, न तु राजन्याः । राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम् । एते च नाभिषिक्तवंश्याः ।**

**बहुवचनग्रहणं किम् ? सङ्कर्षणवासुदेवौ । द्वन्द्व इति किम् ? वृष्णीनां कुमारा वृष्णिकुमाराः । अन्धक-वृष्णिष्विति किम् ? कुरुपञ्चालाः ( तै० ब्रा० १.८.४.२ ) ॥**

**न्यासः**

**हैमायना इति** । 'यञिञोश्च' इति फक् । ननु च राजन्यशब्दोऽयं क्षत्रियजातिवचनः, तथा चोक्तम्—'राज्ञोऽपत्ये जातिग्रहणम्' इति राजन्यो भवति क्षत्रियश्चेत्' इति । यश्चान्धकवृष्णिषु वर्तते द्वन्द्वः स तु क्षत्रिय-वाचिनामेव भवति; अन्धकवृष्णीनां क्षत्रियत्वात् । ततश्च द्वैप्यहैमायना इत्ययुक्तं प्रत्युदाहरणम् । अयमपि हि राजन्यवाचिनामेव द्वन्द्वः; अन्धकवृष्णिषु वर्तमानत्वादित्यत आह—**अन्धकवृष्णय इत्यादि** । 'अन्धकवृष्णिषु' इत्येतावतैव क्षत्रियग्रहणे सिद्धे यद्राजन्यग्रहणं क्रियते, तस्यैतत् प्रयोजनम्—विशिष्टा येऽभिषिक्तवंश्यास्तेषां ग्रहणं यथा स्यादित्येवमर्थम् । विद्यया जन्मना वा प्राणिनामेकलक्षणः सन्तानः = वंशः, इह तु जन्मना य एकलक्षणः सोऽभिप्रेतः, तत्र भवो वंश्यः, दिगादित्वाद् यत् । तत्रैवत् स्यात् । द्वैप्यहैमायना अप्यभिषिक्तवंश्या एव क्षत्रियाः ? इत्यत आह—**एते चेत्यादि** ।

**सङ्कर्षणवासुदेवाविति** । सङ्कर्षणश्च वासुदेवश्चेत्येकवचनान्तयोरयं द्वन्द्वः । **वृष्णिकुमारा इति** । तत्पुरुषोऽयम् । **कुरुपञ्चाला इति** । अत्र सर्वमस्ति, तथाप्यन्धकवृष्णिग्रहणान्न भवति; तत्रावृत्तेः ॥ ३४ ॥

**पदमञ्जरी**

'शिङो निन् ह्रस्वश्च' ( द० उ० ३.५५ ) बहुलवचनात् । **तदपत्येष्विति** । यद्यपि शिनिशब्द इति प्रकृतम्, तथापि शब्दस्यापत्यास्यासम्भवाच्छिनेः क्षत्रियस्यैव यान्यपत्यानि तेष्वित्यर्थः । **अभेदेन** = अभेदोपचारेण ।

ननु च 'राज्ञोऽपत्ये जातिग्रहणम्' (कात्या० वा० २६-२६) इति वचनाद् राजन्यशब्दः क्षत्रियजातिवचनः, ततश्च द्वैप्यभैमायना इत्युक्तं प्रत्युदाहरणं नोपपद्यते, तेषामपि क्षत्रियत्वाद् ? अत आह—**राजन्यग्रहणमित्यादि** । अन्धकवृष्णीनां क्षत्रियत्वाव्यभिचाराद् राजन्यग्रहणमुक्तविशेषपरिग्रहार्थमिति भावः ॥ ३४ ॥

**भावबोधिनी**

राजन्यों का—इसका क्या फल है ? द्वैप्यहैमायनाः । 'द्वीप में भव = होने वाला—इस अर्थ में "द्वीपादनुसमुद्रं यञ्" ( ४.३.१० ) से [ यञ् प्रत्ययान्त है । ] हैमेः युवा अपत्यम्—हैमायनः । [ बहुवचनान्तों का द्वन्द्व है । ] ये अन्धक और वृष्णि हैं, राजन्य नहीं हैं । यहाँ 'राजन्य' का ग्रहण अभिषिक्त वंश्य क्षत्रियों का ग्रहण कराने के लिए है । और ये [ द्वैप्य, हैमायन ] अभिषिक्त वंश्य नहीं हैं । [ चूँकि अन्धक और वृष्णि भी क्षत्रिय हैं । अतः 'राजन्य' का उल्लेख विशेष अर्थ में है । जिनका वंश राज्याभिषेक प्राप्त करने वाला है उन्हीं का यहाँ ग्रहण है । ]

बहुवचन—किसलिए है ? सङ्कर्षण-वासुदेवौ [ यहाँ एकवचनान्तों का द्वन्द्व करके द्विवचनान्त है । ] द्वन्द्व में—इसका क्या फल है ? वृष्णीनां कुमाराः—वृष्णिकुमाराः । [ यहाँ षष्ठी-तत्पुरुष है । ] अन्धकों और वृष्णिओं में—इसका क्या फल है ? कुरुपञ्चालाः । [ ये उक्त वंशों के नहीं हैं । ] ॥ ३४ ॥

---

१. 'द्वैप्यभैमायनाः' इति पाठा० ।

## २६९८. संख्या ॥ ३५ ॥ ( ३७६९ )

द्वन्द्वसमासे संख्यावाचि पूर्वपदं प्रकृतिस्वरं भवति। एकादश ( तै० सं० ४.७.११.१ )। द्वादश। त्रयोदश। 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' ( उणादि० ३३० ) इति नित्त्वादाद्युदात्त एकशब्दः। त्रेस्त्रयस् आदेशोऽन्तोदात्तो निपात्यते—त्रयोदश ॥

## २६९९. आचार्योपसर्जनश्चान्तेवासी ॥ ३६ ॥ ( ३७७० )

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वस्तत्र पूर्वपदं प्रकृतिस्वरं भवति। आपिशलपाणिनीयाः। पाणिनीयरौढीयाः। रौढीयकाशकृत्स्नाः। अपिशलस्यापत्यमापिशलिराचार्यः, 'अत इञ्', ( ४.१.९५ ) 'तेन प्रोक्तम्'

**न्यासः**

**संख्या ॥ एकदश इति।** एकश्च दश चेति द्वन्द्वः। **द्वादश इति।** 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इत्यात्वम् ॥ ३५ ॥

**आचार्योपसर्जनश्चान्तेवासी ॥** आचार्य उपसर्जनं [1]प्रधानं यस्य स तथोक्तः। अन्ते वसतीत्यन्तेवासी। **गौणश्चायं निर्देशः।** द्वन्द्वस्य यान्यवयवभूतानि तान्याचार्योपसर्जनवाचीनि। तस्मादन्तेवासिवाचित्वाच्चाभिधेय उपचारेण तान्याचार्योपसर्जनान्तेवासिशब्दाभ्यामुच्यन्ते। तदवयवोऽपि द्वन्द्वावयवधर्मेणाचार्योपसर्जनान्तेवासीति चोच्यते। **अपिशालिराचार्य इति।** 'अत इञ्'। **आपिशलेरेव वा छात्रा आपिशला इति।** पूर्ववदण्। **उभयथेत्यादि।** उभयप्रकारेणापि व्युत्पत्तावाचार्योपसर्जनश्चन्तेवासी भवति। तथा हि—उभयत्र शिष्या एव

**पदमञ्जरी**

**सङ्ख्या ॥ एकादशेति।** 'सङ्ख्याया अल्पीयस्याः' ( कात्या० वा० १४१७ ) इत्येकशब्दस्य पूर्वनिपातः, 'प्रागेकादशभ्यो छन्दसि' इति निपातनाद्दीर्घः। **द्वादशेति।** 'द्व्यष्टनः सङ्ख्यायाम्' इत्यात्वम् ॥ ३५ ॥

**आचार्योपसर्जनश्चान्तेवासी ॥** आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः, अन्ते वसतीत्यन्तेवासी, **'शयवासवासिष्वकालाद्'** इत्यलुक्। **गौणश्चायं निर्देशः।** द्वन्द्वस्य यान्यवयवपदानि तान्याचार्योपसर्जनवचनत्वादन्तेवासिवाचित्वाच्च **तथोच्यन्ते।** तदवयवद्वन्द्वोऽप्यवयवधर्मेण तथोच्यते। पाणिनिशब्दादिञ् न भवतीति पूर्वमेवोक्तम्। रौढिशब्दादपि न भवति; 'न द्व्यचः प्राच्यभरतेषु' इदि निषेधात्।

**भावबोधिनी**

द्वन्द्व समास ये संख्यावाचक पूर्वपद प्रकृतिस्वर वाला होता है। उदा०—एकादश। द्वादश। त्रयोदश। "इण्भीकापाशल्यतिमर्चिभ्य कन्" ( उणादि ३३० ) इससे नित् होने से 'एक' शब्द आद्युदात्त है। [ द्वि शब्द प्रातिपदिक स्वर से अन्तोदात्त है। ] त्रि का त्रयस् आदेश अन्तोदात्त निपातित होता है। [ पूर्वपद के ये ही स्वर होते हैं। ] ॥ ३५ ॥

आचार्य जिनका उपसर्जन ( विशेषण ) है, ऐसे अन्तेवासियों का जो द्वन्द्व उसमें पूर्वपद प्रकृतिस्वरवाला होता है। उदा०—आपिशलपाणिनीयाः। पाणिनीयरौढीयाः। रौढीयकाशकृत्स्नाः। इनमें आपिशल का अपत्य—इस अर्थ में 'अत इञ्' ( ४.१.९५ ) से इञ् प्रत्यय करने पर 'आपिशलिः' बनता है, 'आपिशलिना प्रोक्तम्' ( ४.३.१० ) इस अर्थ में 'इञश्च' ( ४.२.१२ ) इससे अण् होता है ( आपिशलि + अण्, इलोप, आपिशलम् ), जो अन्तेवासी ( शिष्य ) आपिशल = आपशलिद्वारा प्रोक्त का अध्ययन करते हैं वे भी—'आपिशल' हैं क्योंकि 'अध्येता' अर्थ में विहित तद्धित प्रत्यय का 'प्रोक्ताल्लुक' ( ४.२.६४ ) से लुक् कर दिया जाता है। [ अतः आपिशलि द्वारा प्रोक्त = आपिशल, और उसका अध्ययन करने वाला भी 'आपिशल' होता है। ] अथवा 'आपिशलि के छात्र' भी आपिशल हैं, इस लिये दोनों प्रकार की व्युत्पत्तियों में अन्तेवासी का उपसर्जन ( आपिशलि ) आचार्य बनता है। [ अण् प्रत्ययान्त आपिशल प्रत्ययस्वर

---

१. अत्र 'अप्रधानम्' इति उचितं प्रसिद्धत्वाद् अग्रिम व्याख्यानाच्च।

**( ४.३.१०१ ) आपिशलम्, 'इञश्च' ( ४.२.११२ ) इत्यण्, तदधीयते येऽन्तेवासिनस्तेऽप्यापिशलाः, 'प्रोक्ताल्लुक्' ( ४.२.६४ ) इति तस्य तद्धितस्याध्येतरि विहितस्य लुक् क्रियते । आपिशलेर्वा छात्रा आपिशला इत्युभयथाप्याचार्योपसर्जनश्चान्तेवासी भवति ।**

**आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणार्थम्—सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत, इह मा भूत्—पाणिनीयदेवदत्तौ ।**

**आचार्योपसर्जन इति किम् ? छान्दसवैयाकरणाः । अन्तेवासीति किम् ? आपिशलपाणिनीये शास्त्रे ।।**

**न्यासः**

प्रधानभूता एवमुच्यन्ते, आचार्यस्तु तद्विशेषणत्वादुपसर्जनीभूतः । आपिशलशब्दोऽणन्तत्वात् प्रत्ययस्वरेणान्तोदात्तः । पाणिनिना प्रोक्तमिति 'वृद्धाच्छः', 'तदधीते' इत्यण्, तस्य लुक् । पाणिनीयशब्दः प्रत्ययस्वरेण मध्योदात्तः ।

**पाणिनीयरौढीया** इति । रोढस्यापत्यं रौढिः, 'अत इञ्', रौढेराचार्यस्यच्छात्रा इति 'इञश्च' इत्यणः प्राप्तस्य 'न द्व्यचः' इति प्रतिषेधे कृते 'वृद्धाच्छः' । अथ वा—रौढिना प्रोक्तं रौढीयम्, ततश्च 'तदधीते' इत्यण्, तस्य पूर्ववल्लुक्—रौढीयाः । रौढीयशब्दोऽपि पूर्ववन्मध्योदात्तः । काशकृत्स्नेन प्रोक्तमित्यण्, तदधीयते काशकृत्स्नाः, पूर्ववदणो लुक् ।

**छान्दसवैयाकरणा इति** । भवत्ययमन्तेवासिना द्वन्द्वः, त्वाचार्योपसर्जनः । अत्र ह्यन्तेवासिन एव छान्दसवैयाकरणाभ्यामुच्यन्ते, न त्वाचार्योपसर्जनीभूताः । छन्दोऽधीयतेच्छान्दसाः, व्याकरणमधीयत इति वैयाकरणाः । तत्र ते च यत आचार्यादधीयते तस्यान्तेवासिनः । **आपिशलपाणिनीये शास्त्र इति** । आपिशलिना प्रोक्तमापिशलम् । पाणिनिना प्रोक्तं पाणिनीयम् । यत्र शास्त्रं प्राधान्येनोच्येत तत्र प्रत्ययस्य विधानादाचार्यः प्रधानभूतः; तद्विशेषणत्वात् । आचार्यत्वं तस्येह शास्त्रापेक्षम् । न ह्याचार्यतान्तेवास्यपेक्षैव भवति, अपि तु शास्त्रापेक्षापि ॥ ३६ ॥

**पदमञ्जरी**

**आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणमिति** । न पूर्ववदविशेषणम् । **प्रथमा** तु सप्तम्यर्थे द्रष्टव्या । किमर्थं पुनर्द्वन्द्वविशेषणं विज्ञायते ? इत्याह—**सकलो द्वन्द्व इति** । **इह मा भूदिति** । पूर्वपदविशेषणे त्वत्रापि स्यात् ॥ ३६ ॥

**भावबोधिनी**

से अन्तोदात्त है अतः प्रकृतिस्वर यही रहता है। पाणिनीय—रौढीयाः—इसमें पाणिनि + छ = ईय होने से मध्योदात्त है, शेष का निघात होने पर अन्त्य अनुदात्त का स्वरित होता है अतः यहाँ पूर्वपद मध्योदात्त और स्वरितान्त है। रौढीयकाशकृत्स्नाः + रोढ का अपत्य–रौढि, रौढि आचार्यप्रोक्त का अध्ययन करने वाले, या उसके छात्र अर्थ में प्राप्त अण् का निषेध करने से 'छ' = ईय प्रत्यय होने से मध्योदात्त है शेषनिघात से आदि अनुदात्त और अन्त्य स्वरित है। ]

आचार्योपसर्जन का ग्रहण द्वन्द्व को विशेषित करने के लिए है—सम्पूर्ण द्वन्द्व आचार्योपसर्जन जिस प्रकार से समझा जा सके, अतः यहाँ न हो—पाणिनीयदेवदत्तौ । [ क्योंकि देवदत्त आचार्योपसर्जन नहीं है । ]

आचार्योपसर्जन—इसका क्या फल है ? छान्दसवैयाकरणाः । [ इसमें अन्तेवासियों का द्वन्द्व है किन्तु आचार्य का उपसर्जनत्वेन उल्लेख नहीं है । ] अन्तेवासी—इसका क्या फल है ? आपिशल-पाणिनीये शास्त्रे । [ यहाँ प्रोक्त अर्थ में शास्त्रों का द्वन्द्व है, अन्तेवासियों का नहीं । अतः उक्त सभी में अन्तोदात्त और शेषनिघात ही होता है । ] ॥ ३६ ॥

## २७००. कार्तकौजपादयश्च ॥ ३७ ॥ ( ३७७१ )

**कार्तकौजपादयो ये द्वन्द्वास्तेषु पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतिस्वरपूर्वपदाः कार्तकौजपादयो भवन्ति। विभक्त्यन्तानां पाठो वचनविवक्षार्थः। चकारो द्वन्द्वाधिकारानुवृत्त्यर्थः। कार्तकौजपौ। कृतस्यापत्यम्, कुजपस्यापत्यम्—इत्यणन्तावेतौ।**

**सार्वणिमाण्डूकेयौ। सार्वणिरिञन्तः।**

**अवन्त्यश्मकाः। अवन्तेरपत्यानि बहूनि तन्निवासो जनपदोऽवन्तयः। तथा अश्मकाः।**

**न्यासः**

**कार्तकौजपादयश्च इति॥ अणन्तावेताविति।** तेन प्रत्ययस्वरेणान्तोदात्ताविति भावः। उत्तरत्राप्यणन्तस्यान्तोदात्तता वेदितव्या।

**सौर्वणिरिञन्त इति।** ञ्स्वरेणाद्युदात्त इत्यभिप्रायः। एवमुत्तरत्रापीञन्तस्याद्युदात्तता वेदितव्या। माण्डूकेयशब्दः **'ढक् च मण्डूकात्'** इति ढगन्तः।

**अवन्तेरित्यादि।** अवन्तेरपत्यानि बहूनीति 'वृद्धेत्कोशलाजादाञ् ञ्यङ्' इति ञ्यङ्, तस्य 'तद्राजस्य' इत्यादिना लुक्। अवन्तीनां निवासो जनपदः 'तस्य निवासः' इति चातुरार्थिकोऽण्। तस्य 'जनपदे लुप्' इति लुप्। **अवन्तयः, तथाश्मका इति।** यथावन्तय इति कृतस्तथाश्मका इत्यत्रापि। अत्र क्षत्त्रियवाचिनो जनपदवाचिन शब्दा। तद्धितेऽपत्येषु यो बहुषूत्पद्यते तदन्ताच्च निवासे चातुर्थिकः। तस्य लुप् कृतः। तथाश्मका इत्यत्रापि। एतावन्मत्रमतिदिश्यते। अश्मकस्यापत्यानि बहूनि, 'साल्वावय' इत्यादिनेञ्, तस्य लुक् पूर्ववत्, तेषां निवासेऽण् तस्य पूर्वल्लुप्। अवन्तिशब्दो घृतादित्वादन्तोदात्त इत्येके। चित्स्वरेणेत्यपरे, ते हि 'भुवो झिच्' बहुलवचनादवतेरपि झिज् भवतीति वर्णयन्ति।

**पदमञ्जरी**

**कार्त्तकौजपादयश्च॥ प्रकृतिस्वरपूर्वपदा इति।** प्रकृतिशब्दः स्वाभाविके वर्त्तते, प्रकृतिः=स्वाभाविकः स्वरो येषां तानि प्रकृतिस्वराणि, एवंविधानि पूर्वपदानि येष्विति बहुव्रीहिः। **कृतस्यापत्यम्, कुजस्यापत्यमिति। अणन्तावेताविति।** ऋषिवाचित्वादाभ्यामण्। उत्तरपदस्य व्युत्पत्तिप्रदर्शनं प्रासङ्गिकम्, पूर्वपदस्यैव तु स्वरसिद्धये प्रदर्शनीयम्। माण्डूकेयशब्दः 'ढक्च मण्डूकात्' इति ढगन्तः।

**अवन्त्यश्मका इति।** अवन्तिशब्दोऽन्तोदात्तः, तस्मात् 'वृद्धेत्कोसलाजादाञ्ञ्यङ्', तस्य तद्राजत्वाद्बहुषु लुक्, अवन्तीनां निवासो जनपदः, चातुरर्थिकस्याणो जनपदे लुप्। अश्मकशब्दात् 'साल्वावयव' इत्यादिना इञ्, लुगादि पूर्ववत्।

**भावबोधिनी**

कार्त्तकौजपादि जो द्वन्द्व वाले हैं उनमें पूर्वपद प्रकृतिस्वर वाला होता है। कार्तकौजपादि पूर्वपद के प्रकृतिस्वर वाले होते हैं। विभक्त्यन्तों का पाठ [ प्रयुक्त ] वचनों की विवक्षा के लिए है। चकार द्वन्द्व के अधिकार की अनुवृत्ति के लिए है। उदा०—कार्तकौजपौ। कृतस्य अपत्यम्—कार्त्तः, कुजपस्य अपत्यम्—कौजपः—ये दोनों अण्-प्रत्ययान्त हैं। [ अतः पूर्वपद का प्रकृतिस्वर अन्तोदात्त रहता है। ]

सार्वणिमाण्डूकेयौ। [ सवर्णस्य अपत्यम्—अर्थ में ] सार्वणिः—यह इञ् प्रत्ययान्त [ होने से आद्युदात्त ] है। [ अतः शेषनिघात से अनुदात्त और अन्त स्वरित होता। न्यासकार 'सौर्वणि' मानते हैं। ]

अवन्त्यश्मकाः। अवन्ति के बहुत से अपत्य—इस अर्थ में ञ्य प्रत्यय है, उनका निवास जनपद—[ इस अर्थ में "तद्राजस्य" सूत्र से ञ्य का लुक् कर देने पर मूल प्रकृति ] 'अवन्तयः' शेष है। इसी प्रकार अश्मक [ से भी अपत्य अर्थ में इञ्, बहुवचन में लुक् जनपद अर्थ में विहित का लुक्—] 'अश्मका' है। [ अतः अवन्ति अन्तोदात्त है। ]

**पैलश्यापर्णेयाः । युवद्वन्द्वोऽयम् । पीलाया अपत्यं पैलः, तस्यापत्यं युवा ( ४.१.९२ ) इति 'अणो द्व्यचः' ( ४.१.१५६ ) इति विहितस्य फिञः 'पैलादिभ्यश्च' ( २.४.५९ ) इति लुक्। श्यापर्णशब्दो बिदादिः, तस्यापत्यं स्त्री श्यापर्णी, तदपत्यं युवा श्यापर्णेयः । बहुवचनमतन्त्रम्, तेन पैलश्यापर्णेयावित्यत्रापि भवति ।**

**कपिश्यापर्णेयाः । कपिरन्तोदात्तः, तस्यापत्यम्, बहुत्वे 'कपिबोधादाङ्गिरसे' ( ४.१.१०७ ) इत्युत्पन्नस्य यञः 'यञञोश्च' ( २.४.६४ ) इति लुक् , तेनात्र बहुत्वमाश्रीयत एव ।**

**शैतिकाक्षपाञ्चालेयाः । शितिकाक्षो नाम ऋषिः, तस्यापत्यमिति ऋष्यण्, तदपत्ये यूनि य इञ् तस्य 'ण्यक्षत्त्रियार्षञितो यूनि' ( २.४.५८ ) इति लुक्। पाञ्चालस्यापत्यं स्त्री पाञ्चाली, तदपत्यं युवा**

**न्यासः**

**युवद्वन्द्वोऽयमिति** । युवसंज्ञकप्रत्ययान्तयोरयं द्वन्द्व इत्यर्थः । **पैल इति** । 'पीलया वा' इत्यण् । **श्यापर्णशब्दो बिदादिरिति** । तेन ततोऽपत्यविवक्षायामञ् भवतीति भावः । **स्त्रीति** । 'शार्ङ्गरवाद् यञो ङीन्' । **श्यापर्णेय इति** 'स्त्रीभ्यो ढक्' । **बहुवचनमतन्त्रमिति** । अविवक्षितत्वात् । **तेनेत्यादिना** बहुवचनाविवक्षायाः फलं दर्शयति ।

**कपिरन्तोदात्त इति** । प्रातिपदिकस्वरेण । **तेनेत्यादि** । यस्मात् कपिशब्दोऽयं लुगन्तः, तेन बहुवचनमत्राश्रीयत एव । **ऋष्यणिति** । 'ऋष्यन्धक' इत्यादिना । **यूनि य इञिति** । 'अत इञ्' इत्यनेन । **पाञ्चालीति** । 'जनपदशब्दात् क्षत्रियादञ्' इत्यञ् । तदन्तात् पूर्ववन् ङीप् । **पाञ्चालेयीति** । पूर्ववड् ढक् । एवं वार्चलेयीत्यत्रापि ।

**शाकल्य इति** । गर्गादित्वाद् यञ् । शाकल्यशब्दो ञित्स्वरेणाद्युदात्तः ।

**शणकन्नाभ्रवा इति** । शणं करोतीति 'कै गै शब्दे' इत्यस्माद् धातोः 'आतोऽनुपसर्गे कः' तेन प्रत्ययस्वरेण

**पदमञ्जरी**

**श्यापर्णीति** । 'शार्ङ्गरवाद्यञो ङीन्' ।

**कपिरन्तोदात्त इति** । प्रातिपदिकस्वरेण ।[१]

**भावबोधिनी**

पैलश्यापर्णेयाः । यह युव-प्रत्ययान्तों का द्वन्द्व है । पीला का अपत्य—पैलः, इस पैल का युवा अपत्य—इस अर्थ में 'अणो द्व्यचः' ( ४.१.१५६ ) से विहित फिञ् प्रत्यय का 'पैलादिभ्यश्च' ( २.४.५९ ) से लुक् हो जाता है । [ अतः अण् प्रत्यय का स्वर अन्तोदात्त ही पूर्वपद का प्रकृतिस्वर रहता है । ] श्यापर्ण शब्द बिदादिगणीय है [ अतः अण् प्रत्यय होता है । ] श्यापर्ण की स्त्री—इस अर्थ में ङीन् करने पर श्यापर्णी बनता है, इस श्यापर्णी का युवा अपत्य—इस अर्थ में [ 'स्त्रीभ्यो ढक्' सूत्र से ढ = एय प्रत्यय—श्यापर्णेयः बनता है । ] इनमें बहुवचन तन्त्र = विवक्षित नहीं है । इसलिए 'पैलश्यापर्णेयौ' यह भी बनता है । [ यहाँ पूर्वपद का प्रकृतिस्वर अन्तोदात्त है । ]

कपिश्यापर्णेयाः । कपि शब्द [ प्रातिपदिकस्वर से ] अन्तोदात्त है । उसका अपत्य—इस अर्थ में बहुवचन में "कपिबोधादाङ्गिरसे" ( ४.१.१०७ ) से होने वाले यञ् प्रत्यय का 'यञञोश्च' ( २.४.६४ ) से लुक् हो जाता है । इस कारण यहाँ बहुवचन का आश्रय लिया ही जाता है । [ कपि शब्द से विहित प्रत्यय का लुक् होने से यह अन्तोदात्त ही है । शेषनिघात से 'क' अनुदात्त होता है । ]

शैतिकाक्षपाञ्चालेयाः । शितिकाक्ष नाम के ऋषि हैं, उनका अपत्य—इस अर्थ में 'ऋष्यन्धक' ( ४।१।११४ ) से अण् होता है, इसका युवा अपत्य इस अर्थ में [ 'अत इञ्' सूत्र से ] जो इञ् प्रत्यय होता है, उसका लुक् "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" ( २.४.५८ ) से होता है । [ अतः शैतिकाक्ष—यह अण्—प्रत्ययान्त अन्तोदात्त है, शेष अनुदात्त हैं । ] पाञ्चाल की अपत्य स्त्री पाञ्चाली, [ जनपदवाचक से अञ् और ङीन् होता है । ] इस पाञ्चाली का युवा अपत्य—इस

---

१. इतोऽग्रे प्रकाशितः पाठोऽत्र न सम्बद्धः, अग्रे योजन मेवोचितमिति बोध्यम् ।

**पाञ्चालेयः । अत्रापि बहुवचनमविवक्षितमिति शैतिकाक्षपाञ्चालेयावित्यत्रापि भवति ।**

**कटुकवार्चलेयाः । कटुकस्यापत्यमिति 'अत इञ्' ( ४.१.९५ ), तस्य 'बह्वच इञः प्राच्यभरतेषु' ( २.४.६६ ) इति बहुषु लुक् । वर्चलाया अपत्यं वार्चलेयः ।**

**शाकलशुनकाः । शकलस्यापत्यं शाकल्यः, तस्य छात्राः शाकलाः । 'कण्वादिभ्यो गोत्रे' ( ४.२.१११ ) इत्यण् । शुनकस्यापत्यमिति 'बिदादिभ्योऽञ्' ( ४.१.१०४ ) तस्य बहुषु लुक् । शाकलशणका इति केचित्पठन्ति । तेषां शणकशब्दादुत्पन्नस्येञः 'बह्वच इञः प्राच्यभरतेषु' ( २.४.६६ ) इति बहुषु लुक् ।**

**शुनकधात्रेयाः । धात्र्या अपत्यं धात्रेयः । शणकबाभ्रवाः । बभ्रोरपत्यं बाभ्रवः ।**

**आर्चाभिमौद्गलाः । ऋचाभेन प्रोक्तमधीयते आर्चाभिनः । वैशम्पायनान्तेवासित्वाद् णिनिः । मुद्गलः कण्वादिः, तदपत्यस्य छात्रा मौद्गलाः ।**

**कुन्तिसुराष्ट्राः । कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे वा जनपदे द्वन्द्वोऽयम् । कुन्तिचिन्तिशब्दावन्तोदात्तौ । चिन्तिसुराष्ट्राः । कुन्तिसुराष्ट्रवत् ।**

**न्यासः**

शणकशब्दोऽन्तोदात्तः । **बाभ्रव इति** । 'ओर्गुणः' ।

**आर्चाभिन इति** । प्रोक्तार्थे णिनिः, तस्मादध्येतर्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । एवमुत्तरत्रापि प्रोक्तप्रत्ययान्तादध्येतृप्रत्ययस्य लुग् वेदितव्यः । **मुद्गलः कण्वादिरिति** । गर्गाद्यन्तर्गणः । **तदपत्यस्येति** । 'मौद्गल्यस्य । **मौद्गला इति** । मौद्गल्यशब्दात् 'कण्वादिभ्यो गोत्रे' इत्यण्, 'यस्येति च' इत्यकारलोपः । आपत्यस्य च तद्धितेष्वनाति' इति यकारस्य । आर्चाभिशब्दः प्रत्ययस्वरेणान्तोदात्तः ।

**कुन्तेः सुराष्ट्रस्येत्यादि** । 'कमु कान्तौ' इत्यस्मात् पूर्ववत् क्तिच्, बहुलवचनादुत्वम्—कुन्तिः । शोभनं राष्ट्रमस्येति सुराष्ट्रः । कुन्तेरपत्यानि बहूनि 'वृद्धेत्कोशलाजादाञ्ञ्यङ्'; सुराष्ट्रस्यापत्यानि बहूनि, जनपदशब्दादिनाण्, तयोः 'तद्राजस्य' इत्यादिना बहुषु लुक् । ततः कुन्तीनां निवासो जनपदः, 'तस्य निवासः' इति चातुर्थि-

**पदमञ्जरी**

[ **कुन्तीति** ] 'कमु कान्तौ' ( धा० पा० ४४३ ) क्तिच्, पृषोदरादित्वादत उत्वम् । कुन्तिशब्दोऽन्तोदात्तः,

अवन्तिवत्कुन्तयः । शोभनं राष्ट्रमस्य सुराष्ट्रः, तस्यापत्यानि बहूनि 'जनपशब्दात्क्ष- क्षित्रियादञ्', लुगादि पूर्ववत् । 'चिति स्मृत्याम्', ( धा० पा० १५३५ ) क्तिच्, कुन्तिवाच्चिन्तयः ।

'तडि ताडने', ( धा० पा० २८० ) तण्डः, तस्मादेवावपूर्वाद्वतण्डः, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः । 'मदी हर्षे', ( धा० पा० ८१५ ) विपूर्वात् क्तः, 'न ध्याख्या' इत्यादिना नत्वाभावः, न विमत्तोऽविमत्तः ।

**भावबोधिनी**

अर्थ में [ ढक् = एय करने पर ] पाञ्चालेयः है । यहाँ भी बहुवचन अविवक्षित है, इसलिए 'शैतिकाक्षपाञ्चालेयौ' यहाँ भी पूर्वपद का प्रकृतिस्वर होता है ।

कटुकवार्चलेयाः । कटुक का अपत्य—इस अर्थ में 'अत इञ्' ( ५.१.९५ ) से इञ् होता है "बह्वच इञः प्राच्यभरतेषु" ( २.३.६६ ) सूत्र से उक्त प्रत्यय का बहुवचन में लुक् हो जाता है । [ अतः कटुक शब्द प्रातिपदिकस्वर से अन्तोदात्त, शेषनिघात ] । वर्चला का अपत्य—इस अर्थ में [ ढक् होकर ] वार्चलेयः बनता है ।

शाकलशुनकाः । शकल का अपत्य—[ गर्गादि मान कर यञ् प्रत्यय ] शाकल्य । उस शाकल्य के छात्र—इस अर्थ में—शाकलाः । 'कण्वादिभ्यो गोत्रे' ( ४.२.१११ ) सूत्र से अण् होता है । [ अलोप यलोप करने पर शाकल बनता है । ] शुनक का अपत्य—इस अर्थ में "विदादिभ्योऽञ्" सूत्र से अञ् प्रत्यय, बहुवचन में लुक् होता है । [ अतः पूर्वपद

तण्डवतण्डाः। पचाद्यच्प्रत्ययान्तावन्तोदात्तावेतौ गर्गादिषु पठ्येते। तत्रापत्यबहुत्वे यञो लुक् क्रियते।

गर्गवत्साः। अत्रापि अपत्यबहुत्वे यञो लुक्।

अविमत्तकामविद्धाः। अविमत्तशब्दो नञ्स्वरेणाद्युदात्तः। द्वयोरप्येतयोरपत्येषु बहुषु इञः 'बह्वच इञः प्राच्यभरतेषु' (२.४.६६) इति लुक् क्रियते।

**न्यासः**

कोऽण्, तस्य 'जनपदे लुप्' इति लुप्। कुन्तयश्च सुराष्ट्राश्च कुन्तिसुराष्ट्राः। एवं कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे जनपदद्वान्द्वादयं भवति। कुन्तिशब्दश्चित्स्वरेणान्तोदात्तः। चिन्तिसुराष्ट्रा इति। चिन्तिशब्दोऽप्यन्तोदात्त एव। सोऽपि 'चिति स्मृत्याम्' इत्यस्मात् क्तिच्प्रत्ययान्तः। केचिदवन्तिकुन्तिशब्दौ 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्प्रत्ययान्तौ व्युत्पादयन्ति।

पचाद्यच्प्रत्ययान्ताविति। 'तडि ताडने' इत्यस्मात् केवलादवपूर्वाच्च पचाद्यच्। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यवशब्दाकारस्य लोपः। यञो लुक् क्रियत इति। 'यञञोश्च' इति।

अविमत्तकामविद्धा इति। 'मदी हर्षे' इत्यस्माद्विपूर्वान्निष्ठा—विमत्तः, न विमत्तोऽविमत्त इति। 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्य प्रकृतिभावे कृते नञ्स्वरेणाद्युदात्तः। बह्वच इति। अनेन सूत्रैकदेशेन 'बह्वच इञ प्राच्यभरतेषु' इत्येतत् सूत्रमुपलक्षयति। शलङ्कु शलङ्कञ्चेति। नडादिष्वेतत् पठ्यते। अस्यायमर्थः—शलङ्कुशब्दः फकमुत्पादयति शलङ्क्वादेशञ्चापद्यत इति।

**पदमञ्जरी**

शलङ्कु शलङ्कं चेति। नडादिष्वेतत्पठ्यते। बभ्रोरपत्यं बाभ्रवः, अण्। दानाच्च्युतः, दानच्युतः, तदपत्यमपि दानच्युत एवः। कठशब्दः पचाद्यजन्तः, लोकोऽक्षि यस्य स लोकाक्षः, तस्यापत्यं लौकाक्षिः, तस्य छात्रा लौकाक्षाः। स्त्रीकुमारमिति। समाहारद्वन्द्वः।

**भावबोधिनी**

शाकल अन्तोदात्त और शेषनिघात है।] कुछ लोग— शाकल-शणकाः—ऐसा पढ़ते हैं। उनके अनुसार शणक शब्द से उत्पन्न इञ् प्रत्यय का बहुवचन में 'बह्वच इञ् प्राच्यभरतेषु' (२.४.६६) से लुक् हो जाता है।

शुनकधात्रेयाः। [शुनक की व्युत्पत्ति ऊपर को गई है] धात्री का अपत्य धात्रेयः। [ढक् प्रत्यय होने पर बना है।] शणकबाभ्रवाः। बभ्रु का अपत्य—बाभ्रवः। [शणक शब्द अन्तोदात्त है। प्रकृतिस्वर यही रहता है।]

आर्चाभिमौद्गलाः ऋचाभ द्वारा प्रोक्त का अध्ययन करने वाले—आर्चाभिनः। वैशम्पायनान्तेवासी होने से णिनि प्रत्यय होता है। मुद्गल कण्वादिगणीय हैं, उसके अपत्य के छात्र—मौद्गलाः। [आर्चाभि—शब्द प्रत्ययस्वर से अन्तोदात्त है शेषनिघात से अनुदात्त हैं।]

कुन्तिसुराष्ट्राः। कुन्ति और सुराष्ट्र के बहुत से अपत्य अर्थ में अथवा उनके निवास जनपद अर्थ में यह द्वन्द्व है। [अतः दोनों ही अर्थों में विहित प्रत्यय का लुक् हो जाता है। अतः चित्स्वर से अन्तोदात्त है।] कुन्ति और चिन्ति शब्द अन्तोदात्त हैं। [पूर्वपद के प्रकृतिस्वर में यही रहता है।] चिन्तिसुराष्ट्राः यह 'कुन्तिसुराष्ट्रा' के समान हैं। [पूर्वपद का अन्तोदात्त प्रकृतिस्वर रहता है।]

तण्ड-वतण्डाः। ये दोनों पचादि-अच्-प्रत्ययान्त अन्तोदात्त शब्द गर्गादिगण में पठित हैं। इनमें अपत्य बहुवचन में यञ् प्रत्यय का लुक् किया जाता है। [अतः पूर्वपद का अन्तोदात्त प्रकृतिस्वर होता है।]

गर्गवत्साः। इसमें भी अपत्य-बहुत्व में यञ् का लुक् होता है। [पूर्वपद अन्तोदात्त रहता है।]

अविमत्तकायविद्धाः। अविमत्त शब्द नञ्स्वर से [अव्यय मानकर "तत्पुरुषे तुल्यार्थ-तृतीया०" ६.२.२ सूत्र से] आद्युदात्त हैं। इन दोनों में अपत्यबहुत्व में "बह्वच इञः प्राच्यभरतेषु" (२।४।६६) सूत्र से इञ् का लुक् कर दिया जाता है। [अतः पूर्वपद आद्युदात्त ही रहता है।]

**बाभ्रवशालङ्कायनाः । बभ्रोरपत्यं बाभ्रवः 'शलङ्कु शलङ्कं च' ( ग० सू० ९४।१।९ ) इति शालङ्कायनः। बाभ्रवदानच्युताः । दानच्युतशब्दादिञः 'बह्वचः' ( २.४.६६ ) इति लुक् ।**

**कठकालापाः । कठेन प्रोक्तमधीयते कठाः, वैशम्पायनान्तेवासित्वाद् णिनिः, तस्य 'कठचरकाल्लुक्' ( ४.३.१०७ )। कलापिना प्रोक्तमधीयते कालापाः, 'कलापिनोऽण्' ( ४.३.१०८ ) इत्यण्प्रत्ययः, तस्मिन् 'इनण्यनपत्ये' ( ६.२.१६४ ) इति प्रकृतिभावे प्राप्ते 'नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पि' ( का० वा० ) इत्यादिनोपसंख्यानेन टिलोपः ।**

**कठकौथुमाः । कुथुमिना प्रोक्तमधीयते इति 'प्राग्दीव्यतोऽण्' ( ४.१.८३ ), तस्य पूर्ववत् टिलोपः ।**

**कौथुमलौकाक्षाः । लोकाक्षेण प्रोक्तमधीयते लौकाक्षाः, लोकाक्षस्य वाऽपत्यं लौकाक्षिः, तस्य छात्रा लौकाक्षाः ।**

**स्त्रीकुमारम् । स्त्रीशब्दोऽन्तोदात्तः ।**

**मौदपैप्पलादाः । मुदस्यापत्यं मौदिः, तस्य छात्रा मौदाः । तथा पैप्पलादाः । मौदपैप्पलादा इति द्विः**

**न्यासः**

**बाभ्रवदानच्युता इति ।** बभ्रोरपत्यं बाभ्रवः, अणन्तः । दानच्युतशब्दादिञो बह्वचो लुगिति पूर्ववत् । **कठकालपा इति ।** कठशब्दः पचाद्यचि व्युत्पादितत्वादन्तोदात्तः । लोकाक्षस्यापत्यं लौकाक्षिः । तस्यच्छात्रा लौकाक्षाः । **स्त्रीकुमारमिति ।** 'स्त्यायतेर्ड्रट्', तदन्तात् 'टिड्ढाणञ्' इति ङीप्, तत्र प्रत्ययस्वरेणान्तोदात्ताकारस्य 'यस्येति च' इति लोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वे कृते स्त्रीशब्दो ह्युदात्तः ।

**तस्य च्छात्रा मौदा इति ।** 'इञश्च' इत्यण् । **तथा पैप्पलादा इति ।** पिप्पलादस्यापत्यं पैप्पलादिः,

**पदमञ्जरी**

'मुद हर्षे', ( धा० पा० १६ ) इगुपधलक्षणः कः, मुदः; पिप्पलमत्तीति पिप्पलादः, 'कर्मण्यण्' । 'वदेः सः', वत्सः, ( द० उ० ९.२१ ) 'जीर्यतेरतृन्', जरन्, तयोः समाहारद्वन्द्वः ।

**भावबोधिनी**

बाभ्रवशालङ्कायनाः । बभ्रुका अपत्य-बाभ्रवः [ अण् प्रत्ययान्त है । ] शालङ्कायनः—यहाँ शलङ्कु का शलङ्क आदेश आदेश और फक् प्रत्यय होता है । बाभ्रव-दानच्यताः—दानच्युत से बहुवचन में "बह्वचः इञः" ( २।४।६६ ) से इञ् का लुक् होता है । [ पूर्वपद अन्तोदात्त है । ]

कठकालापाः । कठ द्वारा प्रोक्त का अध्ययन करने वाले—कठाः । वैशम्यायन का अन्तेवासी होने से णिनि होता है । "कठचरकाल्लुक्" ( ४।३।१०७ ) सूत्र से उसका लुक होता है । कलापी द्वारा प्रोक्त का अध्ययन करने वाले—कालापाः, "कलापिनोऽण्" ( ४।३।१०८ ) सूत्र से अण् प्रत्यय, इस अण् के परे रहते "इनण्यनपत्ये" ( ६।४।१६४ ) सूत्र से प्रकृतिभाव प्राप्त रहते "नान्तस्य टिलोपे सब्रह्मचारि०" इत्यादि वार्तिक से टि का लोप होता है । [ कठ शब्द अच्-प्रत्ययान्त होने से अन्तोदात्त है ]

कठकौथुमाः । 'कुथुमी द्वारा प्रोक्त का अध्ययन करने वाले'—इस में 'प्राग्दीव्यतोऽण्' ( ४।१।८३ ) से [ अण् होता है । प्रकृतिभाव प्राप्त रहते ] पूर्व के समान टि ( इन् ) का लोप होता है । [ पूर्वपद अन्तोदात्त हैं । ]

कौथुमलौकाक्षाः । लोकाक्ष द्वारा प्रोक्त का अध्ययन करने वाले—लौकाक्षाः, अथवा लोकाक्ष का अपत्य—लौकाक्षिः उसके छात्र—लौकाक्षाः । [ बहुवचन में इञ् का लुक् होता है । ] [ कौथुम पूर्वपद अन्तोदात्त है । ]

स्त्रीकुमारम् । [ यहाँ समाहार द्वन्द्व है । ] स्त्री शब्द अन्तोदात्त है । [ व्युत्पत्ति न्यास में देखें । ]

पठ्यते, तस्य प्रयोजनम्—पक्षे समासान्तोदात्तत्वमेव यथा स्यादिति।

वृत्सजरंत्। वत्सश्च जरच्च, वत्सशब्दोऽन्तोदात्तः।

सौश्रुतापर्थवाः। सुश्रुतस्य पृथोश्च छात्राः। 'प्राग्दीव्यतोऽण्' (४.१.८२)।

जरामृत्यू। याज्यानुवाक्ये। यजेर्ण्यत्। 'यजयाच' (७.३.६६) इति कुत्वाभावः। 'तित्स्वरितम्' (६.१.१८५) इत्यन्तस्वरितः। अनुवाक्येति वचेरनुपूर्वाद् ण्यत्।

आचार्योपसर्जनान्तेवासिनामिह पाठः प्रपञ्चार्थः॥

## २७०१. महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारत-हैलिहिलरौरवप्रवृद्धेषु॥ ३८॥ (३७७२)

'प्रकृत्या पूर्वपदम्' इति वर्त्तते, 'द्वन्द्वे', इति निवृत्तम्। महानित्येतत्पूर्वपदं व्रीहि, अपराह्ण, गृष्टि, इष्वास,

### न्यासः

तस्य च्छात्राः पैप्पालादाः।

वत्सजरदिति। 'वृतृवदिहनिकमिकषिभ्यः सः' इति वदेः सः, अनेन वत्सशब्दोऽन्तोदात्तः, 'जीर्यतेरतृन्'। जरत्, तयोर्द्वन्द्वः। सौश्रुतपार्थवा इति। सुश्रुतस्य छात्राः सौश्रुताः। पृथोश्छात्राः पार्थवा इति। उभयत्र 'तस्येदम्' इत्यण्।

जरामृत्यु इति। जृषित्येतस्मात् 'षिद्भिदादिभ्योऽङ्' इत्यङ्, जरा, तस्य प्रत्ययस्वरेणान्तोदात्तत्वम्। म्रियतेः 'भुजिमृङ्भ्यां युक्त्युकौ' इति त्युक्, मृत्युः॥ ३७॥

महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु॥ महच्छब्दोऽन्तोदात्त इति। 'वर्तमाने

### पदमञ्जरी

'षिद्भिदादिभ्योऽङ्', जरा। 'भुजिमृङ्भ्यां युक्त्युकौ', (द० उ० १.१३५) मृत्युः॥ ३७॥

महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु॥ महच्छब्दोऽन्तोदात्त इति।

### भावबोधिनी

मौदपैप्पलादाः। मुद का अपत्य—मौदिः, उसके छात्र—मौदाः। उसी प्रकार—पैप्पलादाः। [पिप्पलादस्य अपत्यम्—पैप्पलादिः, तस्य छात्राः—पैप्पलादाः, बहुवचन में इञ् का लुक् होता है। मौद शब्द अन्तोदात्त है।] मौदपैप्पलादाः—यह दो बार पठित है, इसका यह प्रयोजन है पक्ष में समास का अन्त ही उदात्त हो सके। [अतः पूर्वपद का प्रकृतिस्वर और समासान्त उदात्त दोनों होते हैं।]

वत्सजरत्। वत्सश्च जरत् च, यहाँ वत्सशब्द अन्तोदात्त है। [यहाँ समाहारद्वन्द्व है।]

सौश्रुतपार्थवाः। सुश्रुतस्य छात्राः, पृथोः च छात्राः—सौश्रुताः पार्थवाः च "प्राग् दीव्यतोऽण्" (४।१।८३) सूत्र से अण् है। [पूर्वपद अन्तोदात्त है।]

जरामृत्यु। [समाहारद्वन्द्व है। जरा शब्द अन्तोदात्त है।]

याज्यानुवाक्ये। यज् धातु से ण्यत् प्रत्यय है और 'यजयाच' (७।३।३६) सूत्र से कुत्व का निषेध होता है। "तित्स्वरितम्" से अन्त स्वरित है। अनुवाक्या—अनुपूर्वक वच् धातु से ण्यत् होता है। [पूर्वपद स्वरितान्त होता है।]

आचार्य जिनमें उपसर्जन है ऐसे अन्तेवासियों का पाठ यहाँ प्रपञ्च के लिए है। [क्योंकि उनमें तो "आचार्योपसर्जनश्चान्तेवासी" इसी पूर्वसूत्र से पूर्वपद का प्रकृतिस्वर होता है।]॥ ३७॥

"पूर्वपद प्रकृतिस्वर वाला होता है" इसकी अनुवृत्ति है और 'द्वन्द्व में' इस की निवृत्ति है। महान्—यह पूर्वपद—व्रीहि, अपराह्ण, गृष्टि, इष्वास, जाबाल, भार, भारत, हैलिहिल, रौरव, प्रवृद्ध—इनके उत्तरपद होने पर, प्रकृतिस्वर-वाला

**जाबाल, भार, भारत, हैलिहिल, रौरव, प्रवृद्ध—इत्येतेषूत्तरपदेषु प्रकृतिस्वरं भवति। महाव्री'हिः। महाप॑राह्णः। महागृ॑ष्टिः। महेष्वा॑सः। महाजा॑बालः। महाभा॑रः। महाभा॑रतः। महाहै'लिहिलः। महारौ'रवः। महाप्र॑वृद्धः।**

**महच्छब्दोऽन्तोदात्तः तस्य प्रतिपदोक्तो यः समासः 'सन्महत्परमोत्तमोत्कृष्टाः' ( २.१.६१ ) इति, तत्रैव स्वरः। तेनेषां षष्ठीसमासोऽन्तोदात्त एव भवति—महतो व्रीहिः महद्व्रीहिरिति।**

**'कर्मधारयेऽनिष्ठा' ( ६.२.४६ ) इत्ययमपि श्रेण्यादिसमासे विधिरिति प्रवृद्धशब्द इह पठ्यते॥**

## २७०२. क्षुल्लकश्च वैश्वदेवे॥ ३९॥ ( ३७७३ )

**'क्षुल्लक' इत्येतत्पूर्वपदम्, महांश्च, वैश्वदेव उत्तरपदे प्रकृतिस्वरं भवति। क्षुल्लकवै'श्वदेवम्। महावै'श्वदेवम्। क्षुधं लातीति क्षुल्लः। तस्मादज्ञातादिषु प्रागिवात्के ऽन्तोदात्तः क्षुल्लकशब्दः॥**

### न्यासः

पृषद्बृहन्महत्' इत्यन्तोदात्तस्य तस्योणादिषु निपातनात्। अथेह कस्मान्न भवति—महतो व्रीहिर्महद्व्रीहिः? इत्यत आह—**तस्येत्यादि**। एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। अथ किमर्थं प्रवृद्धशब्द इह पठ्यते, यावता निष्ठान्तोऽसौ, तत्र 'कर्मधारयेऽनिष्ठा' इति वक्ष्यमाणेनैव सिद्धम्? इत्यत आह—**कर्मधारयेऽनिष्ठेत्यादि**। तयैव हि परिभाषया 'श्रेण्यादयः कृतादिभिः' इति तेन प्रतिपदोक्तेनायं समासः। तत्र 'कर्मधारयेऽनिष्ठा' इत्यनेन प्रकृतिभावस्याविधिः। न च महाप्रवृद्ध इत्ययं प्रतिपदोक्तेन निष्ठान्तेन कर्मधारयः; तत्र यदि प्रवृद्ध-शब्दोऽत्र न पठ्यते, तत्र परतः प्रकृतिभावो न स्यात्। तस्मात् तस्येह पाठः क्रियते। योगश्चायं समास-स्वरस्यापवादः॥ ३८॥

**क्षुल्लकश्च वैश्वदेवे॥** क्षुधं लातीति क्षुल्ल इति। 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। 'तोर्लि' इति परसवर्णः॥ ३९॥

### पदमञ्जरी

'वर्तमाने पृषद्बृहन्महत्' ( द० उ० ६.५ ) इत्यत्र तथा निपातनात्। **तस्येत्यादि**। एतच्च लक्षणप्रतिपदोक्त-परिभाषया ( व्या० प० ३ ) लभ्यते।

यद्येवम्, प्रवृद्धग्रहणमनर्थकम्, 'कर्मधारयेऽनिष्ठा' इति वक्ष्यमाणेनैव सिद्धत्वात्, कृद्ग्रहणे गतिकारक-पूर्वस्यापि ग्रहणम्' इति प्रवृद्धशब्दस्यापि क्तान्तत्वाद्? अत आह—**कर्मधारयेऽनिष्ठेत्ययमपीति**। तत्रापि लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः कर्मधारयस्तस्य ग्रहणमित्यर्थः॥ ३८॥

**क्षुल्लकश्च वैश्वदेवे॥** क्षुधं लातीति क्षुल्लः। 'आतोऽनुपसर्गे कः', 'तोर्लि' इति परसवर्णः॥ ३९॥

### भावबोधिनी

होता है। उदा०—महाव्रीहिः। महापराह्णः। महागृष्टिः। महेष्वासः। महाजाबालः। महाभारः। महाभारतः। महाहैलिहिलः। महारौरवः। महाप्रवृद्धः।

महत् शब्द अन्तोदात्त है इसका जो प्रतिपदोक्त समास 'सन्महत्परमोत्कृष्टाः'' ( २.१.६१ ) से होता है, उसी में यह स्वर [ पूर्वपद का प्रकृतिस्वर अन्तोदात्त ] होता है। अतः इनके षष्ठीसमास में तो समास का अन्तोदात्त ही होता है—महतो व्रीहिः—महद्व्रीहिः। [ समानाधिकरण न होने से आत्व भी नहीं होता है। ]

''कर्मधारयेऽनिष्ठा'' ( ६.२.४६ ) यह भी विधि श्रेण्यादि के समास में प्रवृत्ति होती है, इसलिए यहाँ प्रवृद्ध शब्द का पाठ किया गया है। [ इसी लिए 'महाप्रवृद्धः' में यही पूर्वपद प्रकृतिस्वर करता है। ]॥ ३८॥

क्षुल्लक यह और महान् यह पूर्वपद वैश्वदेव उत्तरपद रहने पर प्रकृतिस्वर-वाला होता है। उदा०—क्षुल्लक-वैश्वदेवम्। महावैश्वदेवम्। क्षुध् = क्षुधा को लाति = देता है—क्षुल्ल है, [ ''आतोऽनुपसर्गे कः'' सूत्र से क = अ प्रत्यय,

**२७०३. उष्ट्रः सादिवाम्योः ॥ ४० ॥ ( ३७७४ )**

**उष्ट्रशब्दः पूर्वपदं सादिवाम्योरुत्तरपदयोः प्रकृतिस्वरं भवति । उष्ट्रसादि । उष्ट्रवामि । उष्ट्रशब्द 'उषेः ष्ट्रन्' ( उणादि० ४.१६२ ) प्रत्ययान्त आद्युदात्तः । कर्मधारयोऽयम्, षष्ठीसमासो वा ॥**

**२७०४. गौः सादसादिसारथिषु ॥ ४१ ॥ ( ३७७५ )**

**गोशब्दः पूर्वपदं साद, सादि, सारथि—इत्येतेषूत्तरपदेषु प्रकृतिस्वरं भवति । गोः सादः गोसादः । गां सादयतीति वा गोसादः । गोः गादिः गोसादिः । गोसारथिः ॥**

**२७०५. कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ ४२ ॥ ( ३७७६ )**

**कुरुगार्हपत, रिक्तगुरु, असूतजरती, अश्लीलदृढरूपा, पारेवडवा, तैतिलकद्रू, पण्यकम्बल—इत्येते**

**न्यासः**

**उष्ट्रः सादिवाम्योः ॥** 'सर्वधातुभ्यः ष्ट्रन्' इत्यस्मात् ष्ट्रन्नित्यनुवर्तमाने 'उषिखनिभ्यां कित्' इत्येवं व्युत्पादित्वात् ॥ ४० ॥

**गौः सादसादिसारथिषु ॥ गोः साद** इत्यनेन वाक्यशेषेण गोसादशब्दस्य षष्ठीसमासत्वं दर्शयति । **गां सादयतीति चेति ।** एतेनाप्युपपदसमासत्वम्; सदेर्विशरणार्थत्वात् गोशब्दे कर्मण्युपपदे कृते गोसाद इति भवति । गोशब्दः 'गमेर्डोस्' इति डोस्प्रत्ययान्तत्वात् प्रत्ययस्वरेणान्तोदात्तः ॥ ४१ ॥

**कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणाञ्च ॥** अत्र **कुरुगार्हपत** इत्येवमादयः पण्यकम्बलपर्यन्ताः समस्ताः । तत्र **कुरुगार्हपत-रिक्तगुरु**—इत्येतावविभक्तिकौ । इतरे

**पदमञ्जरी**

**उष्ट्रः सादिवाम्योः ॥ उष्ट्रशब्दः ष्ट्रन्प्रत्ययान्त इति ।** 'उष दाहे' ( धा० पा० ६९६ ) इत्येतस्मात् 'ष्ट्रन्' इति वर्तमाने 'उषिखनिभ्यां कित्' ( द० उ० ८.८२ ) इत्येवं व्युत्पादितत्वात् ॥ ४० ॥

**गौः सादसादिसारथिषु ॥ गोसाद इति ।** सदेर्घञ्, ततः षष्ठीसमासः । **गां सादयतीति वेति ।** सदेर्ण्यन्तात्कर्मण्यण्, तस्मादेव णिनिः—गोसादी । अत्र सादसादिनोः कृत्स्वरस्यापवादः, सारथौ तु समासस्वरस्य ॥४१॥

**कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥** अत्र कुरुगार्हपतेत्येवमादयः पण्यकम्बलपर्यन्ताः सप्त समासाः । तत्रादितो द्वावविभक्तिकौ, इतरे प्रथमैकवचनान्ताः ।

**भावबोधिनी**

धृ = द् का परसवर्ण—क्षुल्लः ] इस से अज्ञातादि अर्थों में "प्रागिवात् कः" से 'क' प्रत्यय करने पर क्षुल्लक शब्द अन्तोदात्त है । [ महत् भी अन्तोदात्त है, ऐसा पहले सूत्र में लिखा जा चुका है । ] ॥ ३९ ॥

उष्ट्र शब्द पूर्वपद सादि और वामि उत्तरपद रहते प्रकृतिस्वरवाला होता है । उदा०—उष्ट्रसादि । उष्ट्रवामि । उष्ट्रशब्द 'उष् धातु का ष्ट्रन् प्रत्ययान्त आद्युदात्त है, । यह कर्मधारय अथवा षष्ठी तत्पुरुष समास है ॥ ४० ॥

गो शब्द पूर्वपद साद, सादि, सारथि—ये उत्तरपद रहने पर प्रकृतिस्वरवाला होता है । उदा०—गोः सादः—गोसादः । अथवा गां सादयति—गोसादः । गोः सादिः—गोसादिः । गोः सारथिः—गोसारथिः [ गम् धातु से डो प्रत्ययान्त गो शब्द प्रत्ययस्वर से अन्तोदात्त है । प्रकृतिस्वर यही होता है । ] ॥ ४१ ॥

कुरुगार्हपत, रिक्तगुरु, असूतजरती, अश्लीलदृढरूपा, पारेवडवा, तैतिलकद्रू, पण्यकम्बल—ये समास इनका पूर्वपद और दासीभार आदि का पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—कुरूणां गार्हपतम्—कुरुगार्हपतम् 'कृग्रोरुच्च'

**समासास्तेषां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति। कुरूणां गार्हपतं कुरुगार्हपतम्। 'कृग्रोरुच्च' ( उणादि० २४ ) इति कुरुशब्दः कुप्रत्ययान्तोऽन्तोदात्तः।**

**❀ कुरुवृज्योर्गार्हपत इति वक्तव्यम् ❀ ( म० भा० वा० ६।२।४२।१ )। वृजीनां गार्हपतं वृजिगार्हपतम्। वृजिशब्द आद्युदात्तः।**

**रिक्तो गुरुः रिक्तगुरुः रिक्तगुरुः। 'रिक्ते विभाषा' ( ६.१.२०८ ) इति पूर्वपदमाद्युदात्तम्, अन्तोदात्तं वा।**

**असूता जरती असूतजरती। अश्लीला दृढरूपा अश्लीलदृढरूपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीर्यस्यास्ति तत् श्लीलम्, सिध्मादेराकृतिगणत्वाल्लच्। कपिलकादित्वाच्च लत्वम्। अश्लीलदृढरूपेति हि संस्थानमात्रेण शोभना निःश्रीका लावण्यविरहितोच्यते।**

**न्यासः**

तु **असूतजरतीत्येवमादयः** प्रथमैकवचनान्ताः। सा च प्रथमा सुब्व्यत्ययेन षष्ठ्याः स्थाने वेदितव्या। **दासीभाराणामिति** बहुवचनं गणस्य सूचनार्थम्। अत एवाह—**दासीभारादीनाञ्चेति**। **कुरुशब्दः कुप्रत्ययान्त इति**। 'कुर्भ्रश्च' इत्यतः 'कु' इत्यधिकृत्य 'कृग्रोरुच्च' इति कुप्रत्ययान्तत्वेन व्युत्पादितत्वात्।

**कुरुवृज्योर्गार्हपत इति वक्तव्यमिति**। कुरुवृजिशब्दयोर्गार्हपतशब्द उत्तरपदे प्रकृतिभावो भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—कुरुशब्दस्य तावत् कुरुगार्हपत इति सूत्र एवोपादानाद् भविष्यति। वृजिशब्दस्यापि चकारस्येहानुक्तसमुच्चयार्थत्वादिति। **वृजिशब्द आद्युदात्त इति**। वृजेरिन्। 'इगुपधात् किच्च' इत्येवं व्युत्पादितत्वात्।

**रिक्तगुरुरिति**। रिक्तगुरुशब्दस्य समानाधिकरणसमासतां दर्शयति। एवम् **असूता जरतीत्यनेनाप्यस्या**सूतजरतीशब्दस्य। **अश्लीला दृढरूपेत्यनेनाश्लीलदृढरूपशब्दस्य**। न सूतेत्यसूताशब्दोऽपि नञ्स्वरेणाद्युदात्तः।

**पदमञ्जरी**

सा च प्रथमा सुब्व्यत्ययेन षष्ठ्याः स्थाने द्रष्टव्या। **दासीभाराणामिति**। बहुवचननिर्देशादाद्यर्थो व्याख्यायते।

'कुर्भ्रश्च', ( द० उ० १.१०७ ) 'कृग्रो रुच्च' ( द० उ० १०९ )—कुरुः, 'वृजी वर्जने' (धा० पा० १८१२) निदित्यधिकारे इगुपधात्किः ( द० उ० १.४८ )—वृजिः, फिषि तु 'इगन्तानाञ्च द्व्यषाम्' ( फि० सू० २.२६ ) इति पक्षेऽन्तोदात्तः। तस्यार्थः—जनपदशब्दानामिति वर्तते, अन्तः पूर्वो वा' ( फि० सू० २.२५ ) इति च, जनपदवाचिनामिगन्तानां द्व्यचामादिरुदात्तो भवति अन्तो वा—काशयः, चेदयः। एतेन कुरुशब्दो व्याख्यातः।

रिक्त[1]पूर्वादयः कर्मधारयाः। श्रीर्यस्यास्तीति श्रीशब्दो लावण्यवचनः। **कपिलकादित्वाल्लत्वमिति**। 'कृपो रो लः' इत्यत्रैतद्वक्ष्यते।[2] **श्रीर्यस्यास्ति तच्छ्लीलशब्देनोच्यत इति**। एतदेवोपपादयति—**अश्लीलदृढरूपेति**

**भावबोधिनी**

( उणादि २४ ) से कुरुशब्द कु = उ-प्रत्ययान्त अन्तोदात्त है। [ पूर्वपद कुरु का यही प्रकृतिस्वर होता है। ] ❀ कुरु और वृज् का गार्हपत परे रहते प्रकृतिस्वर होता है—ऐसा कहना चाहिए। ❀ उदा०—वृजीनां गार्हपतम्—वृजिगार्हपतम्। वृजिशब्द आद्युदात्त है।

रिक्तो गुरुः—रिक्तगुरुः। "रिक्ते विभाषा" ( पा० सू० ६.१.२०८ ) से पूर्वपद रिक्त आद्युदात्त है अथवा पक्ष में अन्तोदात्त है।

असूता जरती—असूतजरती। अश्लीला दृढरूपा—अश्लीलदृढरूपा। [ असूत और ] अश्लील शब्द नञ्समास के कारण [ अव्यय मानकर ६.२.२ सूत्र से ] आद्युदात्त है। श्रीः जिसके पास वह—श्लील है, सिध्मादि को आकृतिगण मान कर लच् प्रत्यय होता है। और कपिलकादि होने से [ र का ] ल् होता है [—श्लीला, न श्लीला—अश्लीला ]

---

१. रिक्तगुर्वादय इति तूचितः पाठः। २. श्रीर्यस्यास्ति तत् श्लीलम्—इति काशिकापाठः।

**पारे वडवेव पारेवडवा। निपातनादिवार्थे समासो विभक्त्यलोपश्च। पारशब्दो घृतादित्वादन्तोदात्तः। तैतिलानां कद्रूः तैतिलकद्रूः। तितिलिनोऽपत्यं छात्रो वा तैतिल इत्यणन्तः।**

**पण्यकम्बलः। पण्यशब्दो यदन्तत्वादाद्युदात्तः।**

**॥ पण्यकम्बलः संज्ञायामिति वक्तव्यम् ॥ (का० वा० २)। अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव। प्रतिपदोक्ते हि कृत्यानां समासे 'द्वितीया कृत्या' (६.२.२) इत्येष विहितः स्वरितः।**

**न्यासः**

**एवमश्लीलाशब्दोऽपि।** न श्लीलाऽश्लीला। **सिध्मादेराकृतिगणत्वाल्लजिति।** 'सिध्मादिभ्यश्च' इति प्राणिस्थादातो लजन्यतरस्याम्' इत्यतो लजित्यस्यानुवृत्तेः। **कपिलकादित्वाच्च लत्वमिति।** 'कृपो रो लः' इत्यत्र 'कपिलकादीनाञ्चोपसंख्यानम्' इति लत्वस्योपसंख्यानात्। कथं पुनर्ज्ञायते—श्रीर्यस्यास्ति तच्छ्लीलशब्देनोच्यते? इत्याह—**अश्लीलदृढरूपेत्यादि।** न श्लीलमश्लीलमिति अश्लीलशब्दस्यार्थः प्रतिषिध्यते। तत्र यदि श्लीलशब्दस्य श्रीर्यस्यास्ति स इत्यर्थो न स्यादश्लीलदृढरूपेत्यत्र निःश्रीका नोच्येत, उच्यते च, ततो ज्ञायते श्रीमद्वस्तु श्लीलशब्देनोच्यत इति। **संस्थानमात्रेण शोभनेति।** दृढत्वाच्च संस्थानस्य। श्रीरहितत्वाच्च संस्थानमात्रेण शोभना। मात्रशब्दः श्रीमत्ताया व्यवच्छेदकः **लावण्यरहितेत्यनेन** निःश्रीकेत्यस्यार्थं विस्पष्टीकरोति।

**पारे वडवेव पारेवडवेति।** केन पुनरत्र समासः? न ह्यीवार्थे समासस्य किञ्चिल्लक्षणमस्ति। अथापि कथञ्चित् समासः स्याद्। एवमपि 'सुपो धातुप्रातिपदिकयोः' इति विभक्तिलोपः कस्मान्न भवति? इत्याह—**निपातनादेवेत्यादि। तितिलिनोऽपत्यमिति।** एतेनापत्यार्थे तितिलिन्शब्दात् तद्धितोत्पत्तिमिह दर्शयति। **छात्रो वेति।** तितिलिन इत्यपेक्षते। एतेनापि **'तस्येदम्'** इत्यत्रार्थे तैतिला इति। पूर्ववदुपसंख्यानाट्टिलोपः। **यदन्तत्वादिति।** 'अवद्यपण्य' इति यदन्तस्य निपातनात्। **आद्युदात्त इति।** 'यतोऽनावः' इत्यनेन।

**पण्यकम्बलः संज्ञायां वक्तव्यमिति।** पण्यकम्बलशब्दः संज्ञायां पूर्वपदप्रकृतिस्वरो भवतीत्येतदर्थरूपं

**पदमञ्जरी**

**ह्येति। संस्थानमात्रेण शोभनेति।** कुब्जत्वादीनामभावात्, दृढत्वाच्च संस्थानस्य। **मात्रशब्दव्यावर्त्यं दर्शयति—निःश्रीकेति।** अस्यैवार्थं विस्पष्टीकरोति—[1]**लावण्यरहितेति।**

**तितिलिनोऽपत्यमिति।** तिलशब्दान्मत्वर्थीय इनिः, पृषोदरादित्वात्तिशब्दस्य द्विर्वचनम्। तत्र यदापत्येऽर्थेऽण् तदा 'नस्तद्धिते' इति टिलोपः, यदा तु छात्रे तदा 'नान्तस्य टिलोपे' (का० व्या० वा० ४१८६) इत्यादिनोपसङ्ख्यानेन टिलोपः। ये तु तत्र तैतिलिशब्दं पठन्ति, तेऽत्रापि तैतिलिनोऽपत्यमिति विगृह्णन्ति, पृषोदरादित्वेनैव च रूपसिद्धिः। पण्यशब्दः 'अवद्यपण्य' इति यदन्तः 'यतोऽनावः' इत्याद्युदात्तः।

**पण्यकम्बलः संज्ञायामिति।** नियतप्रमाणस्य नियतमूल्यस्य कम्बलस्यैषा संज्ञा। **समासान्तोदात्तत्वमेवेति।**

**भावबोधिनी**

अश्लीलदृढरूपा—यह संस्थानमात्र से शोभना, निःश्रीका = लावण्यविरहिता—को कहा जाता है। [ दृढ शरीरवाली किन्तु सौन्दर्यहीन स्त्री के लिये यह शब्द है। पूर्वपद नञ्स्वर से आद्युदात्त है। ]

पारे वडवेव पारेवडवा। निपातन से इव के अर्थ में समास होता है और ( सप्तमी ) विभक्ति का लोप नहीं होता है। पारशब्द घृतादि होने से अन्तोदात्त है। तैतिलों की कद्रूः—तैतिलकद्रूः। तितिली का अपत्य अथवा उसका छात्र—तैतिलः यह अण् प्रत्ययान्त है। [ टि = इन् का लोप होता है। प्रत्ययस्वर से अन्तोदात्त है। ]

पण्यकम्बलः। पण्य शब्द यत् प्रत्ययान्त होने से आद्युदात्त है। ॥ पण्यकम्बल—यह संज्ञा में ही पूर्वपद प्रकृतिस्वर वाला होता है—ऐसा कहना चाहिए। ॥ अन्य अर्थ में पणितव्य = विक्रेतव्य कम्बल होने पर समास का अन्तोदात्त ही होता

---

१. लावण्यविरहिता—इति काशिकापाठः।

**दास्या भारो दासीभारः। देवहूतिः। देवजूतिः। देवसूतिः। देवनीतिः। अन्तोदात्तं पूर्वपदम्। वसुनीतिः। वसुशब्द आद्युदात्तः। 'शृस्वृस्निहित्रप्यसिवसि' ( उणादि० १० ) इत्यत्र हि 'धान्ये नित्' ( उणादि० ९ ) इति वर्तते। ओषधिः। ओषो धीयतेऽस्यामिति 'कर्मण्यधिकरणे च' ( ३.३.९३ ) इति किप्रत्ययः। ओषशब्दो घञन्तत्वादाद्युदात्तः। चन्द्रमा–'चन्द्रे मोऽसिः' (उणादि० ६७७) इत्यसिप्रत्ययान्तोऽयम्। चन्द्रशब्दस्तु रक्प्रत्ययान्तत्वादन्तोदात्तः।**

**न्यासः**

व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'पूगेष्वन्यतरस्याम्' इत्यतो मण्डूकप्लुतिन्यायेनान्यतरस्यांग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा। संज्ञायामेव पण्यकम्बलशब्दः पूर्वपदप्रकृतिस्वरो भवति, नान्यत्रेति। **अन्यत्र समासान्तोदात्तत्वमेवेति।** ननु च पण्यशब्दोऽयं कृत्यप्रत्ययान्तः, 'तत्पुरुषस्य' इत्यादिना त्वस्मिन् पणितव्ये पूर्वपदस्य प्रकृतिस्वरेणैव भवितव्यम्, तत् कथं समासान्तोदात्तत्वम्? इत्याह—**प्रतिपदोक्ते हीत्यादि।** 'कृत्यतुल्याख्या अजात्या' इति यः कृत्यसमासः प्रतिपदोक्तः, तत्र 'द्वितीया कृत्या' इति पूर्वपदस्य प्रकृतिभावो बिहितः। न चायं प्रतिपदोक्तः समासः। 'विशेषणं विशेष्येण' इति सामान्येन विहितत्वात्। कुत एतत्? कम्बलशब्दस्य जातिशब्दत्वाद्। **'द्वितीया कृत्या' इत्यनेन** सूत्रैकदेशेन 'तत्पुरुषे तुल्यार्थ' इत्यादिकं सूत्रमुपलक्षयति।

**दासीभार इति।** दासीशब्दः पूर्वमुक्तस्वरः। **देवहूतिरिति।** पचाद्यजन्तत्वादन्तोदात्तः। **ओषशब्दो घञन्तत्वादिति।** 'उष दाहे' इत्यस्य घञि व्युत्पादितत्वात्। चन्द्रे 'माङो डित्' इत्यसिप्रत्ययान्तोऽयम्। **'मिथुनेऽसिः पूर्ववच्च सर्वम्'** इति इत्यतोऽसिप्रत्ययस्यानुवृत्तेः। **चन्द्रशब्दस्तु रक्प्रत्ययान्तत्वादिति।** **'स्फायितञ्चि'**

**पदमञ्जरी**

ननु च पण्यशब्दस्य कृत्यप्रत्ययान्तत्वात् 'तत्पुरुषे तुल्यार्थ' इति पूर्वपदप्रकृतिस्वरेण भाव्यम्? अत आह—**प्रतिपदोक्ते हीति।** 'कृत्यतुल्याख्या अजात्या' इति यः कृत्यसमासः प्रतिपदोक्तः, तत्रैव स स्वरः। अयं तु 'विशेष्येण' इति सामान्यलक्षणविहितः; कम्बलशब्दस्य जातिशब्दत्वात्। 'कृत्यतुल्याख्या अजात्या' इत्येतद्धि गुणक्रियावाचिनामनियते पूर्वनिपातप्रसङ्गे कृत्यान्तस्य पूर्वनिपातार्थम्, न तु जातिप्रतिषेधार्थम्। अजात्येति तु वचनं न्यायसिद्धार्थानुवाद एवेति स्थितिः। 'चन्द्रे माङो डिच्च' ( द० उ० ९.८८ ) इति मिथुनेऽसिः, पूर्ववच्च सर्वम् ( द० उ० ९.८२ ) इत्यसिप्रत्ययः प्रकृतः। चन्द्रशब्द उपपदे 'माङ् माने ( धा० पा० १०८८ ) इत्यस्मादसि-प्रत्ययो भवति डिच्च, डित्वाट्टिलोपः, चन्द्रमिव मीयते चन्द्रमाः। चन्द्रमिति रजतम्, अमृतं च। चन्द्र इति वा मीयते चन्द्रमाः। चन्द्रशब्दस्तु 'स्फायितञ्चि' ( द० उ० ८.३१ ) इत्यादिना रक्प्रत्यान्तः।

**भावबोधिनी**

है। [ एक निश्चितमूल्यवाला कम्बल पण्यकम्बल कहा जाता है। ] क्योंकि कृत्य-प्रत्ययान्तो के प्रतिपदोक्त ( "कृत्यतुल्याख्या अजात्या" से विहित ) समास में 'द्वितीया कृत्या" ( ६.२.२ ) इससे स्वरित का विधान किया गया है। [ द्वितीया कृत्या' इसके द्वारा "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" ६.२.२ सूत्र समझना चाहिए। ]

दास्या मारः—दासीभारः। देवहूतिः। देवजूतिः। देवसूतिः। देवनीतिः। [ इन सभी का ] पूर्वपद अन्तोदात्त है। वसुनीतिः—वसु शब्द आद्युदात्त है। "शृ-स्वृ-स्निहित्रप्यसिवसि" ( उणादि १० ) इस सूत्र में "धान्ये नित्" ( उणादि ९ ) की अनुवृत्ति होती है। ओषधिः। ओषः धीयतेऽस्याम्—इस में "कर्मण्यधिकरणे च" ( ३.३.९३ ) से [ धा धातु से कि = इ प्रत्यय होता है। ओष—शब्द घञन्त होने से [ 'ञ्नित्यादिर्नित्यम्' सूत्र से ] आद्युदात्त है। यही पूर्वपद का स्वर होता है। ] चन्द्रमाः—'चन्द्रे मोऽसि' ( चन्द्रे यो डित् )" ( उणादि ६७७ ) से यह असि-प्रत्ययान्त है। चन्द्र शब्द तो रक्प्रत्ययान्त होने से अन्तोदात्त है। [ चन्द्र शब्द उपपद रहते मानार्थक 'मा' धातु से असि प्रत्यय, टिलोप

**यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते, न च विहितम्, स सर्वो दासीभारादिषु द्रष्टव्यः ॥**

## २७०६. चतुर्थी तदर्थे ॥ ४३ ॥ ( ३७७७ )

**चतुर्थ्यन्तं पूर्वपदं तदर्थे उत्तरपदे तदभिधेयार्थं यत्तद्वाचिन्युत्तरपदे प्रकृतिस्वरं भवति । तदिति चतुर्थ्यन्तस्यार्थः परामृश्यते । यूपदारु । कुण्डलहिरण्यम् । यूपशब्द आद्युदात्तः । 'कुसुयुभ्यश्च'[1] (उणादि० ३१४) इत्यत्र निदिति वर्त्तते । कुण्डलशब्दोऽपि 'वृषादिभ्यश्चित्' ( उणादि० ११२ ) इति कलप्रत्ययान्तोऽन्तोदात्तः । रथदारु । वल्लीहिरण्यम् । रथशब्द आद्युदात्तः । 'हनिकुषि' ( उणादि० १६७ ) इत्यादिना क्थन्प्रत्ययः । वल्लीशब्दो ङीषः स्वरेणान्तोदात्तः ।**

**तदर्थं इति किम् ? कुवेरबलिः । प्रकृतिविकारभावे स्वरोऽयमिष्यते ॥**

**न्यासः**

इत्यादिना सूत्रेण रक्प्रत्ययान्तत्वेन व्युत्पादित्वात् । **स सर्वो दासीभारादिषु द्रष्टव्य इति ।** दासीभारादेराकृतिगणत्वात् ॥ ४२ ॥

**चतुर्थी तदर्थे ॥ तदर्थं इति ।** तस्मै इदम्, चतुर्थ्यन्तम्, तस्य योऽर्थस्तदर्थ इत्यर्थः । कथं पुनर्यूपशब्द आद्युदात्तः ? इत्याह—**'कुयुभ्यामित्यादि ।** 'पानीविषिभ्यः पः' इत्यतः 'पः' इत्यनुवर्तमाने **'कुयुभ्याश्च'** इति यूपशब्दः पप्रत्ययान्तो व्युत्पाद्यते । तत्र 'सुशृभ्यां निच्च' इत्यतो निदिति वर्तते, तेनाद्युदात्तो भवति । दीर्घत्वं तु 'स्तुवो दीर्घश्च' इत्यतो दीर्घग्रहणानुवृत्तेः । **कलप्रत्ययान्त इति ।** 'वृषादिभ्यश्चित्' इत्यत 'कलस्तृपश्च' इत्यतः कलप्रत्ययानुवृत्तेः । **रथशब्द आद्युदात्त इति ।** 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति क्थन्प्रत्ययान्तत्वात् । **वल्लीशब्दो ङीषः स्वरेणान्तोदात्त इति ।** ङीष्प्रत्ययस्तु गौरादित्वाद् वेदितव्यः ।

**पदमञ्जरी**

**यस्य तत्पुरुषस्येत्यादिना** दासीभारादेराकृतिगणत्वं दर्शयति ॥ ४२ ॥

**चतुर्थी तदर्थे ॥** तस्मै इदं तदर्थम्, तच्छब्देन चतुर्थ्यन्तार्थ उच्यते, यदाह—**तदभिधेयार्थं यदिति ।** तस्य चतुर्थ्यन्तस्य यदभिधेयं तदर्थमित्यर्थः । रमन्तेऽस्मिन्स्थिता इति रथः, **'हनिकुषिनीरमिकशिभ्यः क्थन्',** 'अनुदात्तोपदेश' इत्यनुनासिकलोपः, वल्लीशब्दो गौरादिङीषन्तः ।

**तदर्थं इति किम्, कुबेरबलिरिति ।** अत्र तादर्थ्यस्य भावाद् गोसुखमिति प्रत्युदाहार्यं मन्यन्ते ।

**भावबोधिनी**

होता है—चन्द्रम् इव मीयते यह विग्रह है । चन्द्र = रजत अथवा अमृत है । अतः पूर्वपद चन्द्र रक्प्रत्ययान्त अन्तोदात्त है । आकृतिगण होने से ये सभी दासीभारादि में समझ लेने चाहिए । यही लिखा जा रहा है—]

जिस जिस तत्पुरुष के पूर्वपद का प्रकृतिस्वर करना इष्ट है, किन्तु किसी सूत्र से नहीं किया गया है, उस उस सभी को दासीभारादि के अन्तर्गत समझना चाहिए ॥ ४२ ॥

चतुर्थ्यन्त पूर्वपद, तदर्थ उत्तरपद रहने पर = उसका अभिधेयार्थ जो उसके वाचक उत्तरपद के रहने पर, प्रकृतिस्वरवाला होता हैं । सूत्र में 'तत्' इस सर्वनाम शब्द से चतुर्थ्यन्त के अर्थ का परामर्श होता हैं । उदा०—यूपदारु । कुण्डलहिरण्यम् । [ इनमें चतुर्थी प्रकृतिविकृतिभाव में है । ] यूप शब्द आद्युदात्त है । "कुसुयुभ्यश्च" ( उणादि ३१४ ) इसमें 'नित्' इसकी अनुवृत्ति होती है । [ अतः यूप आद्युदात है । ] कुण्डल शब्द भी 'वृषादिभ्यश्चित्' ( उणादि ३१२ ) इससे कलप्रत्ययान्त अन्तोदात्त है । रथदारु । वल्लीहिरण्यम् । रथ शब्द आद्युदात्त । "हनिकुषिनीरमिकाशिभ्यः क्थन्" ( उणादि १६७ ) से क्थन् प्रत्यय होता है । वल्ली शब्द ङीष् के स्वर से अन्तोदात्त है ।

---

१. १. पञ्चपाद्युणादिषु 'सुशृभ्यां निच्च' 'कुयुभ्यां च' इति न्याससम्मतं सूत्रद्वयमेव ।

## २७०७. अर्थे ॥ ४४ ॥ ( ३७७८ )

'चतुर्थी' इति वर्तते। अर्थशब्द उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति। मात्रे इदं मात्रर्थम्। पित्रर्थम्। देवतार्थम्। अतिथ्यर्थम्। मातृपितृशब्दावन्तोदात्तावुणादिषु निपातितौ। देवताशब्दो लित्स्वरेण मध्योदात्तः। अतिथिरिति 'अतेरिथिन्' इतीथिन्प्रत्ययान्तः।

तदर्थविशेषा एव दारुहिरण्यादयो भवन्ति, न त्वर्थशब्दवाच्यं सामान्यमित्यतदर्थार्थोऽयमारम्भः।

केचित्पुनराहुः—ज्ञापकार्थमिदम्, एतदनेन ज्ञाप्यते—पूर्वो विधिः प्रकृतिविकृत्योः समासे भवति।

**न्यासः**

**प्रकृतिविकारभाव इत्यादि**। कथं पुनः सामान्येनोच्यमानः प्रकृतिविकारभावे लभ्यते ? पूर्ववदन्यतरस्यांग्रहणानुवृत्तेः। तस्य च व्यवस्थितविभाषात्वाद् वक्ष्यमाणज्ञापकात् ॥ ४३ ॥

**अर्थे ॥ मातृपितृशब्दावन्तोदात्ताविति**। 'नप्तृनेष्टृ' इत्यादौ तृजन्तयोस्तयोर्निपातितत्वात्। **लित्स्वरेण मध्योदात्त इति**। 'देवात् तल्' इति तल्प्रत्ययान्तत्वात्। किमर्थं पुनरेतत्, न 'चतुर्थी तदर्थे' इत्येवं सिद्धम्, अर्थशब्दोऽपि तदर्थमेवोत्तरपदं भवति ? इत्याह—**तदर्थविशेषा एवेत्यादि**। एवं मन्यते—अर्थशब्दोऽपि वृत्तौ

**पदमञ्जरी**

**प्रकृतिविकारभावे स्वरोयमिष्यत इति**। समासप्रकरण एवैतत्सम्यगुपपादितम्, अत्रापि ज्ञापकं वक्ष्यति ॥ ४३ ॥

**अर्थे ॥ तदर्थविशेषा एव दारुहिरण्यादयो भवन्तीति**। दारुहिरण्यादयो विशेषा एवा तदर्था भवन्तीत्यर्थः। तादर्थ्यं हि तच्छेषभावः, स च विशेषाणामेव भवति, न सामान्यस्येति मन्यते।

**भावबोधिनी**

तदर्थ ( =उस विकृति के लिये। ) होने पर—इसका क्या फल है ? कुबेरबलिः। [ यहाँ नहीं होता है क्योंकि ] प्रकृतिविकृतिभाव में ही यह स्वर इष्ट है। [ दारु आदि प्रकृति से यूपादि विकृति बनाने की प्रतीति में ही पूर्वपद का प्रकृतिस्वर होता है। ] ॥ ४३ ॥

'चतुर्थी' इसकी अनुवृत्ति होती है। 'अर्थ' शब्द उत्तरपद रहने पर चतुर्थीविभक्त्यन्त पूर्वपद प्रकृतिस्वरवाला होता है। उदा०—मात्रे इदम्—मात्रर्थम्, पित्रे इदम्—पित्रर्थम्। देवतायै इदम्—देवतार्थम्। अतिथये इदम्—अतिथ्यर्थम्। मातृ और पितृ शब्द उणादि में अन्तोदात्त निपातित होते हैं। देवता शब्द लित् स्वर से मध्योदात्त है। [ देव + तल् + टाप् ] अतिथिशब्द 'अतेरिथिन्' ( उणादि० ) इससे इथिन् प्रत्ययान्त ( आद्युदात्त ) है।

दारु और हिरण्य आदि विशेष ही तदर्थ ( विकृत्यर्थ ) होते हैं, न कि अर्थशब्द का वाच्य सामान्य, इसलिए अतदर्थार्थ यह सूत्र बनाया गया है।

कुछ दूसरे विद्वान यह कहते हैं—यह सूत्र ज्ञापक है, इससे यह ज्ञापित होता है—प्रकृतिविकृतिसमास में पूर्ववर्त्ती सूत्र की प्रवृत्ति होती है। अतः 'अश्वघासः' श्वश्रूसुरम्, ( श्वश्रूसुखम् ) आदि में तादर्थ्य रहने पर भी यह सूत्र नहीं प्रवृत्त होता हैं।

**विमर्श**—यहाँ अन्य विद्वानों के मत का उल्लेख करते हुए काशिकाकार ने सम्भवतः अपना विचार प्रस्तुत किया है। इस ज्ञापन के द्वारा पूर्ववर्ती और प्रस्तुत सूत्रों का विषय निश्चित हो जाता है। जब कहीं प्रकृति का विकार

अश्वघासः [1]श्वश्रूसुरमित्यत्र सत्यपि तादर्थ्ये न भवति॥

## २७०८. क्ते च ॥ ४५ ॥ ( ३७७९ )

**क्तान्ते चोत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतस्वरं भवति। गोहितम्। अश्वहितम्। मनुष्यहितम्। गोरक्षितम्। अश्वरक्षितम्। वनं तापसरक्षितम्। अश्वशब्द आद्युदात्तः, मनुष्यशब्दोऽन्तस्वरितः, परिशिष्टपूर्वपदमन्तोदात्तम्। गोभ्यो रक्षितमिति 'सम्प्रदाने' चतुर्थी॥**

### न्यासः

विशेषवाची भवतीति। युक्तञ्चैतत्। तदा मात्रर्थमित्युक्ते मात्रादिभ्यो व्यावृत्तरूपं विशिष्टमेव मात्रर्थं वस्तु प्रतीयते। **अश्वघास**—इत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति॥ ४४॥

**क्ते च॥ अश्वशब्द आद्युदात्त इति।** क्वन्प्रत्ययान्तत्वात्। **मनुष्यशब्दोऽन्तस्वरित इति।** 'मनोर्धातावञ्यतौ षुक्च' इति यत्प्रत्ययान्तत्वात्। **परिशिष्टमन्तोदात्तमिति।** तत् पुनर्गोशब्दः, तापसशब्दश्च। तत्र 'गमेर्डोस्' इति डोस्प्रत्ययान्तत्वाद् गोशब्दः प्रत्ययस्वरेणान्तोदात्तः। तापसशब्दोऽप्यण्प्रत्ययान्तत्वात्। स हि 'तपःसहस्राभ्यां विनीनी', 'अण् च' इत्यण्प्रत्ययान्तो व्युत्पाद्यते। अथ **गोरक्षितमिति** कथमिदमस्योदाहरणम्, यावता गोभ्यो रक्षितमिति तादर्थ्ये चतुर्थी, तत्र हि योगत उत्तरपदेन भवितव्यम्? इत्यत आह—**गोभ्यो रक्षितमित्यादि।** न ह्यत्र गवार्थं रक्षित इत्येषोऽर्थो विवक्षितः, किं तर्हि? **गोभ्यो रक्षितं दीयते** इत्येतदध्याहार्यम्। तस्मात् सम्प्रदान एषा चतुर्थी, तत् कुतस्तादर्थ्यम्?॥ ४५॥

### पदमञ्जरी

**केचित्पुनरित्यादि।** त एवं मन्यते—'नेयं राजाज्ञा, विशेषा एव तदर्था इवि, तेन सामान्यवाचिन्यप्यर्थशब्दे पूर्वेणैव सिद्धम्' इति। **अश्वघास इति।** ननु च 'तदर्थेन प्रकृतिविकारभावे समासः' इत्युक्तम्, 'अश्वघासादयः षष्ठीसमासाः' इति च? एवं मन्यते–यदात्र प्रकृतिविकारभावे स्वर इति स्थितम्, तदाश्वघासादौ चतुर्थीसमासेऽपि न दोष इति।[2] **श्वश्रूश्वशुरमिति।** 'विभाषा सेना' इत्यादिना नपुंसकत्वम्॥ ४४॥

**क्ते च॥ गोभ्यो रक्षितं दीयत इति सम्प्रदाने चतुर्थीति।** अथ तादर्थ्ये चतुर्थ्यां को दोषः? चतुर्थी तदर्थे' इत्येव स्वरस्य सिद्धत्वात्। नैतदस्योदाहरणमुपपद्यते, कथम्? 'प्रकृतिविकारभावे स्वरः' इत्युक्तम्, न चात्र प्रकृतिविकारभावः? सत्यम्; समासविधौ तु रक्षितग्रहणस्येदं प्रयोजनं दर्शितम्॥ ४५॥

### भावबोधिनी

लक्षित करने के लिए तादर्थ्य है तब पूर्ववर्ती सूत्र ही लगता है। इसीलिए 'अश्वघासः' आदि में पूर्वपद का प्रकृतिस्वर नहीं होता है।

ज्ञापक का दूसरा प्रयोजन = उदाहरण पदमञ्जरीकार के अनुसार 'श्वश्रूश्वशुरम्' यह है किन्तु वहीं पर 'विभाषा सेनासुराच्छायाशालानिशानाम्" ( २।४।२५ ) सूत्र से नपुंसकत्व लिखा है। यह तभी हो सकता है जब 'श्वश्रूसुरम्' यह पाठ माना जाय—श्वश्रू के लिये सुरा। अतः 'श्वश्रूसुरम्' यही पाठ शुद्ध है, श्वश्रूसुखम् आदि प्रकाशित सभी पाठ अशुद्ध हैं। यदि पदमंजरीकार द्वारा निर्दिष्ट नपुंसकत्व न माना जाय तो 'श्वश्रूसुखम्' यह भी शुद्ध माना जा सकता है क्योंकि सुख शब्द नपुंसक लिङ्ग वाला है॥ ४४॥

क्तप्रत्ययान्त उत्तरपद रहने पर चतुर्थ्यन्त पूर्वपद प्रकृतिस्वरवाला होता है। उदा०—गोहितम्। अश्वहितम्। मनुष्यहितम्। गोरक्षितम्। अश्वरक्षितम्। वनं तापसरक्षितम्। [ क्त-प्रत्ययान्त उत्तर है। पूर्वपद गो शब्द अन्तोदात्त होता है ] अश्व शब्द आद्युदात्त है, मनुष्य शब्द अन्तस्वरित है, परिशिष्ट पूर्वपद ( गो और तापस ) अन्तोदात्त हैं। गोभ्यः रक्षितम्—यहाँ साम्प्रदान में चतुर्थी है, उसका समास है। [ तादर्थ्य नहीं है। ]॥ ४५॥

---

१. अयमेव शुद्धपाठः, श्वश्रूश्वसुरम्—इति प्रकाशितपाठोऽसङ्गतः नपुंसकत्वासंभवात्।—त्रिपाठी।

२. श्वश्रूश्वशुरम्—इत्यपपाठः वक्ष्यमाणनपुंसकत्वाप्राप्तेः 'श्वश्रूसुरम्' इत्यस्यैवोचितत्वाच्च।

## २७०९. कर्मधारयेऽनिष्ठा ॥ ४६ ॥ ( ३७८० )

**कर्मधारये समासे क्तान्त उत्तरपदेऽनिष्ठान्तं पूर्वपदं प्रकृतिस्वरं भवति । श्रेणिंकृताः । ऊकर्कृताः । पूगकृताः । निधनकृताः । श्रेणिशब्द आद्युदात्तः । ऊकपूगशब्दावन्तोदात्तौ । निधनशब्दोऽयं मध्योदात्तः ।**

**कर्मधारय इति किम् ? श्रेण्या कृतं श्रेणिकृतम् । अनिष्ठेति किम् ? कृताकृतम् ॥**

## २७१०. अहीने द्वितीया ॥ ४७ ॥ ( ३७८१ )

**अहीनवाचिनि समासे क्तान्त उत्तरपदे द्वितीयान्तं पूर्वपदं प्रकृतिस्वरं भवति । कष्टश्रितः । त्रिशकलपतितः । ग्रामगतः । कष्टशब्दोऽन्तोदात्तः । त्रीणि शकलान्यस्येति त्रिशकलः,[1] बहुव्रीहिस्वरेणाद्युदात्तः । ग्रामशब्दो नित्स्वरेणाद्युदात्तः ।**

**न्यासः**

**कर्मधारयेऽनिष्ठा ॥ श्रेणिकृता इत्यादि ।** 'श्रेण्यादयः कृतादिभिः' इति समासः । **श्रेणिशब्द आद्युदात्त इति ।** नित्स्वरेण । स हि 'वीज्याज्वरिभ्यो निः' इत्यतो निरिति वर्तमाने 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इत्येवं व्युत्पाद्यते, तेनाद्युदात्तः । **पूगशब्दोऽन्तोदात्त इति ।** 'मुदि ग्रोर्गग्गौ' इति बहुलवचनात् पूञोऽपि गक् । तेन प्रत्ययस्वरेणान्तोदात्तः ।

**कृताकृतमिति ।** कृतञ्च तदकृतं चेति 'क्तेन नञ्विशिष्टेनानञ्' इति समासः । एकदेशस्य कृतत्वात् कृतम्, तदेवैकदेशस्याकृतत्वादकृतम् ॥ ४६ ॥

**अहीने द्वितीया ॥** हीनम्—त्यक्तम्, न हीनमहीनम् । **कष्टशब्दोऽन्तोदात्त इति ।** क्तप्रत्ययान्तत्वात् प्रत्यय-

**पदमञ्जरी**

**कर्मधारयेऽनिष्ठा ॥** 'श्रिञ् सेवायाम्' ( धा० पा० ८९७ ) औणादिके निन्प्रत्यये श्रेणिः, 'मुदि ग्रो गग्गौ' ( द० उ० ३.६६ ) बहुलवचनात्पूङोऽपि गक्—पूगः । **कृताकृतमिति ।** 'क्तेन नञ्विशिष्टेनानञ्' इति समासः । अनिष्ठत्यनुच्यमानेऽत्रैव स्यात्, अयं हि क्तसंशब्दनेन विहितत्वाच्छ्रेण्यादिसमासादपि प्रतिपदोक्तः ॥ ४६ ॥

**अहीने द्वितीया ॥** हीनम् = त्यक्तम् । **अहीनवाचिनि समास इति ।** पूर्वपदद्वारेण समासस्याहीनवाचित्वम् ।

**भावबोधिनी**

कर्मधारयसमास में क्तान्त उत्तरपद रहने पर अनिष्ठान्त पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—श्रेणिकृताः । ऊककृताः । पूगकृताः । निधनकृताः । इनमें श्रेणिशब्द आद्युदात्त है । ऊक और पूग शब्द अन्तोदात्त हैं । निधन शब्द मध्योदात्त है ।

कर्मधारय में—इसका क्या फल है ? श्रेण्या कृतम्—श्रेणीकृतम् । [ यहाँ तृतीया तत्पुरुष है । ] निष्ठा पूर्वपद न हो—इसका क्या फल है ? कृताकृतम् । [ यहाँ निष्ठान्त कृत पूर्वपद है । अतः यह सूत्र लागू नहीं होता है । अन्तोदात्त होता है । ] ॥ ४६ ॥

अहीनवाची समास में क्तप्रत्ययान्त उत्तरपद परे रहते द्वितीयान्त पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—कष्टश्रितः । त्रिशकलपतितः । ग्रामगतः । इनमें कष्ट शब्द अन्तोदात्त है । त्रीणि शकलानि अस्य—इसमें त्रिशकलः, बहुव्रीहिस्वर से आद्युदात्त है । ग्राम शब्द नित्स्वर से आद्युदात्त है । [ त्रिशकलः—में 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' सूत्र से पूर्वपद त्रि का प्रकृतिस्वर अन्तोदात्त है बहुव्रीहि में पूर्वपद आद्युदात्त है । ]

**अहीन इति किम् ?** कान्तारातीतः । योजनातीतः[२] ।

❀ **द्वितीयानुपसर्ग इति वक्तव्यम्** ❀ ( का० वा० १ ) इह मा भूत्—सुखप्राप्तः, दुःखप्राप्तः । सुखापन्नः, दुःखापन्नः ।

'अन्तः' ( ६.२.१४३ ) 'थाथ' ( ४.२.१४४ ) इत्यस्यापवादोऽयम् ॥

## २७११. तृतीया कर्मणि ॥ ४८ ॥ ( ३७८२ )

**कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं भवति । अहिहतः । वज्रहतः[३] । महाराजहतः । नखनिर्भिन्ना । दात्रलूना[४] । 'आङि श्रिहनिभ्यां ह्रस्वश्च' ( उणादि ५८७ ) इति अहिरन्तोदात्तो व्युत्पादितः । केचिदाद्युदात्तमिच्छन्ति[अहिहतः] । वज्रो रक्प्रत्ययान्तः । महाराजष्टच्प्रत्ययान्तः । नास्य खमस्तीति**

**न्यासः**

स्वरेण । 'कृच्छ्रगहनयोः कषः' इतीट्प्रतिषेधः । **बहुव्रीहिस्वरेणाद्युदात्त इति ।** त्रिशब्दो हि प्रातिपदिकस्वरेणान्तोदात्तः । तत्र 'बहुव्रीहौ प्रकृत्या' इति प्रकृतिस्वरे कृते बहुव्रीहिस्वरेण त्रिशकलशब्द आद्युदात्तः । **ग्रामशब्दोऽपि आद्युदात्त एव ।** तथा ह्यसौ 'अतिस्तुसुहुसृधुक्षि' इत्यतो मन्प्रत्ययेऽनुवर्तमाने 'अवतेष्टिलोपश्च' 'ग्रसेरा च' इति मन्प्रत्ययान्तो व्युत्पाद्यते । **कान्तारातीत इति ।** कान्तारमतीतवान्, त्यक्तवानित्यर्थः । कान्तारातीतशब्दोऽत्र हीनशब्दवाची ।

**द्वितीयानुपसर्ग इति वक्तव्यमिति ।** द्वितीयान्तमनुपसर्गे क्तान्ते प्रकृतिस्वरं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं त्विहापि तस्यैवान्यतरस्यांग्रहणस्यानुवृत्तिं व्यवस्थितविभाषात्वं चाश्रित्य कर्तव्यम् ॥ ४७ ॥

**तृतीया कर्मणि ॥** 'तत्पुरुषे तुल्यार्थ' इत्येव सिद्धे पूर्वपदप्रकृतिस्वरे च कृत्स्वरेण थाथादिस्वरेण बाधिते तत्प्रतिपादनार्थं वचनम् । **अहिहत इति ।** 'कर्तृकरणे कृता बहुलम्' इति समासः । **अहिरन्तोदात्तो व्युत्पादित इति ।** आङ्पूर्वाद्धन्तेः 'जनिघसिभ्यामिण्' इति वर्तमाने 'वातेर्डिच्च' इति डिदिति च 'आङिश्रिहनिभ्यां ह्रस्वश्च'

**पदमञ्जरी**

**द्वितीयानुपसर्ग इति वक्तव्यमिति ।** अहीनग्रहणमपनीय अनुपसर्गग्रहणं कर्तव्यम्, व्यापकत्वादित्यर्थः । **इह मा भूदिति ।** इहापि मा भूदित्यर्थः । अनुपसर्गग्रहणे चेह क्रियमाणे प्रवृद्धादिषु खट्वारूढशब्दो न पाठ्यः; आरूढशब्दस्य सोपसर्गत्वात् । एतत्स्वराभावे थाथादिस्वरेणैवान्तोदात्तस्य सिद्धत्वात् ॥ ४७ ॥

**तृतीया कर्मणि ॥** अयमपि थाथादिस्वरापवादः । **अहिरन्तोदात्त इति ।** आङ्पूर्वाद्धनो डिप्रत्ययः, आङश्च

**भावबोधिनी**

अहीन—[ न छोड़ा हुआ ]—इसका क्या फल है ? कान्तारातीतः । योजनातीतः । [ कान्तारम्, योजनम् अतीतवान्—यह अर्थ होने से हीन=त्यागना अर्थ ही है । अतः यह सूत्र नहीं लागू होता है । ] ॥

❀ द्वितीयान्त का अनुपसर्ग में—ऐसा कहना चाहिए । ❀ यहाँ न होने लगे—सुखप्राप्तः, दुःखप्राप्तः । सुखापन्नः, दुःखापन्नः [ इनमें प्र और आङ् उपसर्ग होने से यह सूत्र नहीं लगता है समासान्त ही उदात्त होता है । ]

यह सूत्र 'अन्तः' ( ६.२. १४३ ) और "थाथ०" ( ६.२.१४४ ) इनका अपवाद है ॥ ४७ ॥

कर्मवाचक क्तान्त उत्तरपद रहने पर तृतीयान्त पूर्वपद प्रकृतिस्वरवाला होता है । उदा०—अहिहतः । वज्रहतः । महाराजहतः । नखनिर्भिन्ना । दात्रलूना ( दारुलूना ) । "आङि श्रिहनिभ्यां ह्रस्वश्च' ( उणादि ५८७ ) से 'अहि' शब्द अन्तोदात्त व्युत्पादित किया गया है । कुछ विद्वान् आद्युदात्त चाहते हैं अहिहतः । 'वज्र' शब्द रक् प्रत्ययान्त है । 'महाराज'

---

१. त्रिशकलशब्दः—इत्यधिकं क्वचिद् दृश्यते ।　२. 'हीनं त्यक्तं विभक्तमित्यनर्थान्तरम्'—इत्यधिकं पुस्तकान्तरे ।
३. 'रुद्रहतः'—इति पाठान्तरम् ।　४. दारुलूना—इति पाठान्तरम् ।

'बहुव्रीहौ नकुलनख' इति नखशब्दो निपातितः। तेन 'नञ्सुभ्याम्' ( ६.२.१७२ ) इत्यन्तोदात्तः। दात्रशब्दः 'दाम्नीशस' (३.२.१८२ ) इति ष्ट्रन्प्रत्ययान्तः।

कर्मणोति किम् ? रथेन यातो रथयातः। गत्यर्थत्वात्कर्तरि क्तः ॥

## १७१२. गतिरनन्तरः ॥ ४९ ॥ ( ३७८३ )

'क्ते', 'कर्मणि' इति वर्त्तते। कर्मवाचिनि क्तान्त उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतः। प्रहृतः।

### न्यासः

इत्यनेनाहिरिणन्तो व्युत्पादितः। केचिदाद्युदात्तमिच्छन्तीति। ते 'समाने ख्यः स चोदात्तः' इत्युदात्तग्रहणमप्यनुवर्तयन्ति। रक्प्रत्ययान्त इति। 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययान्तत्वेन व्युत्पादितत्वात्। महाराजष्टच्प्रत्ययान्त इति। 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययान्तत्वात्। दात्रलूना इति। 'धः कर्मणि ष्ट्रन्' इत्यनुवर्तमाने 'दाम्नीशस्' इत्यादिना ष्ट्रन्प्रत्ययान्तो दात्रशब्दो व्युत्पाद्यते, तेनाद्युदात्तः। सर्वत्र 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि क्तः ॥ ४८ ॥

गतिरनन्तरः ॥ प्रकृत इति। 'कुगतिप्रादयः' इति समासः। प्रादयोऽभिवर्जिता आद्युदात्तगणे निपात्यन्ते,

### पदमञ्जरी

ह्रस्वः। आहन्ति परान्, आहन्यते परैरिति वा अहिः। केचिदिति। ते तत्रोदात्तग्रहणमनुवर्तयन्ति, यथा च—'अहन्नहिम्' ( ऋ० १.३२.१ ) 'अहिरिव भोगै'रिति ( ऋ० ६.७५.१४ ) आद्युदात्तमधीयते ॥ ४८ ॥

गतिनन्तरः ॥ 'अनन्तरः' इति पुंल्लिङ्गनिर्देशाद् गतिशब्दः क्तिजन्तः, निपातनाच्चानुनासिकलोपः। प्रकृतः, प्रहृत इति। अत्र समासान्तोदात्तत्वम्, अव्ययपूर्वपदप्रकृतिस्वरत्वम्, कृत्स्वरः थाथादिस्वरः, इत्येतेषु प्राप्तेषु पूर्वपदप्रकृतिभावो विधीयते।

व्यवहितस्य गतेरयं स्वरो न भवतीति। ननु च निर्दिष्टग्रहणमानन्तर्यार्थम्, प्रत्ययग्रहणपरिभाषया च हृतशब्दस्क्तान्तः तत्कथं क्तान्ते परतो विधीयमानो व्यवहितस्य प्रसज्यते ? कृद्ग्रहणपरिभाषाया क्तान्तेऽनुप्रवेशादुच्छब्दस्य प्रसङ्ग इति चेत्, यद्येवम्, क्रियमाणेऽप्यनन्तरग्रहणे स्यात्, उद्धृतशब्दः क्तान्तस्तस्यानन्तर एव गतिरिति ? नैष दोषः, अनन्तरग्रहणसामर्थ्याद्धान्तोरनन्तरो गतिराश्रयिष्यते। नन्वेवमप्यत्र परत्वाद् 'गतिर्गतौ' इति निघातो भविष्यति, सति च तस्मिन् उदात्तस्वरितांधिकारादेव पूर्वपदप्रकृतिस्वरस्याप्रसङ्ग इति व्यवहितनिवृत्त्यर्थमनन्तरग्रहणं न कर्तव्यम् ? अनन्तरप्राप्त्यर्थं तु। तत्र च यत्रैक एव गतिस्तत्र नार्थोऽनेन। यत्र

### भावबोधिनी

शब्द टच् प्रत्ययान्त है। 'न अस्य खम् अस्ति' इस बहुव्रीहि में "बहुव्रीहौ नकुलनख" इस वचन से नख शब्द व्युत्पादित है, इसलिये "नञ्सुभ्याम्' ( ६.२.१७२ ) से 'नख' शब्द अन्तोदात्त है। दात्र शब्द "दाम्नीशस्" ( ३.२.१८२ ) से ष्ट्रन् प्रत्ययान्त है। [ आद्युदात्त है। ]

कर्म में—इसका क्या फल है ? रथेन यातः रथयातः। गत्यर्थक होने से कर्ता अर्थ में क्त प्रत्यय होता है। [ अतः प्रस्तुत सूत्र नहीं लगता है। ] ॥ ४८ ॥

'क्ते' 'कर्मणि' ( कर्म में क्तान्त रहने पर ) इनकी अनुवृत्ति होती है। कर्मवाचक क्तप्रत्ययान्त उत्तरपद रहने पर अनन्तर = अव्यवहित गतिसंज्ञक पूर्वपद प्रकृतिस्वरवाला होता है उदा०—प्रकृतः। प्रहृतः। [ 'उपसर्गाश्चाभिवर्जम्" से 'प्र' आद्युदात्त है। ]

**अनन्तर इति किम्? अभ्युद्धृतः। समुद्धृतः। समुदाहृतः। व्यवहितस्य गतेरयं स्वरो न भवति। अनन्तरे पुनरिष्यते।**

**कारकपूर्वस्य तु सति शिष्टत्वात् थाथादिस्वर एव भवति—दूरादागत इति।**

**न्यासः**

तेन प्रशब्द आद्युदात्तः। **अभ्युद्धृत इति।** अत्राभिशब्दस्यानन्तरस्य न भवति, अत्रोच्छब्दस्य क्तान्तेन समासं कृत्वा पश्चादभिशब्दस्योद्धृतशब्देन समासः कर्तव्यः। अथ वा—'कुगतिप्रादयः' इत्यत्र सुब्ग्रहणस्य निवर्तितत्वादनेकस्यापि समासो भवति। **समुदाहृत इति।** अत्रापि समुदोरन्तरयोर्न भवति।

**कारकपूर्वस्य त्वित्यादि।** दूरादागत इत्यत्राङो गतिसमासे कृते सत्यनेन प्रकृतिस्वरः, तत उदात्तो भवति। ततो दूरादागत इति 'स्तोकान्तिक' इत्यादिना पञ्चमीसमासः, तस्मिन् कृते 'गतिकारकोपपदात् कृत्'

**पदमञ्जरी**

त्वनेको गतिस्तत्रासौ न प्राप्नोति, तदनन्तर इत्यनेनानेकगतिसमवधानेऽनन्तरस्य प्राप्यते; अन्यथाऽभ्युद्धृतमित्यत्रोद्धृतशब्दस्य कृद्ग्रहणपरिभाषया क्तान्तत्वे सति समासान्तोदात्तत्वे तदपवादे च कृत्स्वरे तदपवादस्थाथादिस्वरः प्राप्नोति। ननु च यथा प्रथमे समासे गतिस्वरेण बाधितस्य थाथादिस्वरस्य पुनर्द्वितीये समासे प्राप्तिः, तथा तदपवादो गतिस्वरोऽप्यनेन पुनर्भविष्यति? नैतदेवम्; अपूर्वपदत्वात्। 'कुगतिप्रादयः' इत्यत्र निष्क्रान्तादौ पदकार्यप्रवृत्तये सुबित्यनुवर्तनीयम्, तत्रैकत्वस्य विवक्षितत्वात्सुबन्तसमुदायस्य चासुबन्तत्वान्न द्वयोर्युगपत्समासो लभ्यत इति क्रमेणासौ विधेयः। 'गतिकारकोपपदानाम्' (व्या० प० १३८) इत्यनेनाप्युत्तरपदस्य प्राक् सुबुत्पत्तेः समास उच्यते, न पूर्वपदस्यापि; निष्क्रान्तचर्मकारादौ पदकार्यस्यासिद्धिप्रसङ्गात्। अत उच्छब्दस्य पूर्वं समासः, पश्चादुद्धृतशब्देनाभिशब्दस्य, ततश्चाभिशब्द एव पूर्वपदं नोच्छब्द इति पूर्वपदस्य गतेः प्रकृतिस्वरो विधीयमानोऽपूर्वपदस्योदो न स्याद्। अतः कक्षान्तरप्राप्तमपि थाथादिस्वरं बाधित्वाऽपूर्वपदस्याप्यनन्तरस्य वाक्यभेदेन प्रकृतिभावो यथा स्यादित्येवमर्थमनन्तरग्रहणम्। तदाह—**अनन्तरे पुनरिष्यत इति।**

यद्येवम्, कारकपूर्वेऽतिप्रसङ्गः, दूरागतो प्राप्तो देवदत्तेनेत्यत्राप्यागतशब्देन 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासे कृते तस्यामवस्थायां थाथादिस्वर इष्यते, तमपि बाधित्वाऽपूर्वपदस्याप्युद एव स्वरः प्राप्नोति? नैष दोषः; थाथादिसूत्रे गतिग्रहणं निवर्तिष्यते, ततः किम्? प्रकृतमित्यादौ कृत्स्वरस्यैव प्राप्तत्वात्तस्यैव गतिस्वरापवादः, न तु थाथादिस्वरस्य प्रसङ्गः, तत्र स एव भविष्यति। अभ्युद्धृतमित्यादौ तु यत्र कक्षान्तरेऽपि कृत्स्वर एव प्राप्तस्तत्रापि स एव भविष्यतीति; ततश्चापूर्वपदार्थमनन्तरग्रहणमपि न कर्तव्यं भवन्ति। कथम्? उद्धृतशब्दे गतिस्वरे प्रवृत्ते पश्चादभिशब्दस्य समासे कृते 'गतिर्गतौ' इति इति निघाते चोदात्तस्वरिताधिकाराद् गतिरित्यस्य पूर्वपदप्रकृतिभावस्याप्रवृत्तौ समासस्वरापवादः कृत्स्वरो भवन् कृद्ग्रहणपरिभाषयोद्धृतशब्दस्य कृदन्तत्वात्तत्स्वर उच्छब्दोदात्तत्वमेव भविष्यति। यदि थाथादिसूत्रेण गतिग्रहणं निवर्त्तिष्यते, प्रभेद इत्यत्र कृत्स्वरेण घञो ञित्त्वाद्धातोरुदात्तत्वं स्याद्, अन्तोदात्तत्वं चेष्यते। एवं तर्ह्यनुवर्तते गतिग्रहणम्, क्तेन तु न सम्बद्ध्यते, तत्कथं थाथादिसूत्रात् क्तग्रहणमपनीय पृथक्कर्तव्यम्? तत्र च गतिग्रहणं निवर्त्तिष्यते।

एवमपि विशुष्क इत्यादौ यत्र कर्तरि क्तान्तमुत्तरपदम् 'शुष्कधृष्टौ' इत्यादिना चाद्युदात्तम्? तत्र कृत्स्वरे सत्युत्तरपदमाद्युदात्तं स्यादन्तोदात्तं चेष्यते। अतः कृद्ग्रहणेनापि गतिग्रहणमवश्यं सम्बन्धनीयम्, ततश्च

**भावबोधिनी**

अनन्तर्=अव्यवहित—यह किसलिए है? अभ्युद्धृतः। समुद्धृतः। समुदाहृतः। व्यवधान वाले गतिसंज्ञक का यह स्वर नहीं होता है। यह अव्यवहित का ही इष्ट है।

कारक जिसमें पूर्वपद है उसका तो सतिशिष्ट होने से 'थाथघञ्' से ही स्वर होता है—दूरादागतः।

**अनन्तरग्रहणसामर्थ्यादेव 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' ( व्या० परि० १२६ ) इत्येतन्नाश्रीयते ।**

**न्यासः**

इति वर्तमाने 'थाथघञ्' इत्यादिनोत्तरपदस्यान्तोदात्तत्वं विधीयते। स च गतिस्वरे सति विधीयत इति शिष्टत्वेन स एव भवति। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्।

अथ कथं समुद्धृत इत्यादि प्रत्युदाहरणमुपपद्यते, यावता 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति गतिरिह निष्ठाग्रहणेनैव गृह्यते, एवञ्चानन्तर एव समुद्धृत इत्यत्र सम्शब्दः, समुदाहृत इत्यत्रापि समुच्छब्दौ? इत्यत आह—**अनन्तरग्रहणसामर्थ्यादिति**। अनन्तरग्रहणेन ह्येवमर्थः क्रियते—**समुद्धृतमित्यादौ मा भूदिति**। यदि परिभाषेयमिहाश्रीयेत, तदा हि उद्धृत इत्यादौ गतिरनन्तर एवेति व्यावर्त्याभावादनन्तरग्रहणमपार्थकं स्यात्।

**पदमञ्जरी**

पूर्वोक्तदोषप्रसङ्गः, तत्राह—**कारकपूर्वस्य त्विति**। अयमभिप्रायः—अनन्तरशब्दोऽयमननन्तरमपेक्ष्य प्रवर्तते, तत्र च 'अनन्तरो गतिः' इत्युक्ते अननन्तरोऽपि गतिरेव प्रतीयते; सन्निधानात्। ततश्चापूर्वपदार्थमप्यनन्तरग्रहणं गतिद्वयसमवधान एवानन्तरस्य प्रकृतिस्वरत्वं प्रापयतीति दूरादागत इत्यादौ न दोष इति।

अथ वा—'कारकाद्दत्तश्रुतयोरेवाशिषि' इत्यत्र कारकादिति विभज्यते, तत्र च क्तग्रहणमनुवर्तते, 'अन्तोदात्तः' इति 'गतिः' इति च, कारकात्परं क्तान्तमुत्तरपदमन्तोदात्तं भवतीत्यर्थः। तत्र दूराद् गत इत्यादौ थाथादिसूत्रेणैवान्तोदात्तत्वस्य सिद्धत्वाद् दूरादागत इत्यादौ 'गतिरनन्तरः' इत्यनन्तरग्रहणेनैवापूर्वपदार्थेन प्राप्तस्य गतिस्वरस्यापवादः कारकादित्ययं योगो ज्ञायते। यद्येवम्, अनन्तरग्रहणं न कर्तव्यम्, कथम्? असत्यनन्तरग्रहणे दूरादागतः, अभ्युद्धृत इत्यादौ सर्वत्र द्वितीये समासे कृते सतिशिष्टस्थाथादिस्वर एव प्राप्तः, ततश्च कारकादित्ययं योगो नियमार्थो भवति। तत्र च गतिग्रहणमनुवर्तयितव्यम्, ततश्चात्रायमर्थः—कारकादेव परं सगतिकं क्तान्तमुत्तरपदमन्तोदात्तमिति। ततश्चाभ्युद्धृत इत्यादौ नियमेन थथादिस्वरे व्यावर्तिते कृत्स्वरो भवन् कृद्ग्रहणपरिभाषयोद्धृतादेः कृदन्तत्वात्तस्यैव यः स्वर आद्युदात्तत्वं स एव भविष्यति। ननु च विपरीतोऽपि नियमः सम्भाव्येत—कारकात्परं सगतिकमेवेति, ततश्च पूर्वाह्णशुष्क इत्यत्र थाथादिस्वरे कृत्स्वरेण 'शुष्कधृष्टौ' इत्याद्युदात्तत्वं श्रूयेत? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—न विपरीतो नियम इति, यदयम् 'दत्तश्रुतयोरेवाशिषि' इत्याह। न हि विपरीते नियमे कारकात्परयोर्दत्तश्रुतयोरन्यस्य वा क्तान्तस्योत्तरपदस्यान्तोदात्तत्वं प्रसक्तम्। अतो नार्थोऽपूर्वपदार्थेनान्तरग्रहणेन। एवं तर्हि व्यवहितनिवृत्त्यर्थमेवानन्तरग्रहणम्, ननु चोक्तम्—परत्वात् 'गतिर्गतौ' इति निघाते कृते उदात्तस्वरिताधिकारादेव प्रकृतिभावस्याप्रसङ्गः' इति? यत्र तर्हि 'गतिर्गतौ' इति निघातो नास्ति तत्र प्रसङ्गः। क्व चासौ नास्ति? पादादौ। वक्ष्यति हि 'आ पादपरिसमाप्तेरपादादावित्यधिकारः' इति, तथा च 'उपप्रेतकुशिकाश्चेतयध्वमिति' ( ऋ० ३.५३.११ ) पादादावुपशब्दं गतिपरमपि उदात्तमधीयते, तथाभ्युद्धृतमिति यदाभिशब्दः पादादौ वर्तते तदा निघाताभावादनेन व्यवहितस्यापि गतेः प्रकृतिभावः स्यात्? नैतदस्तिः यावता प्रत्ययग्रहणपरिभाषया हृतशब्दः क्तान्तः, नोद्धृतशब्दः। एवं तर्ह्येतद् ज्ञापयति—'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति' ( व्या० प० १२६ )।

ननु कृद्ग्रहणे गतिपूर्वस्य ग्रहणं ज्ञापितम्, कारकपूर्वस्य तु कथम्? उच्यते; पूर्वाचार्यैस्तावदेषा परिभाषा व्युत्पादिता, इहाप्यनन्तरग्रहणेनैकदेशद्वारेण कृत्स्न एव परिभाषार्थो ज्ञाप्यते। यदि 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवति', ( व्या० प० १२६ ) कथं समुद्धृत इति प्रत्युदाहरणम्, यावता उद्धृतशब्दः क्तान्तः, तस्य चानन्तर एव सम्? इत्यत आह—**अनन्तरग्रहणसामर्थ्यादिति**। इह व्यवहितनिवृत्तिफलेनानन्तरग्रहणेन परिभाषाया ज्ञापनादन्यत्रैतत्फललाभ इति भावः।

**भावबोधिनी**

अनन्तर—इसके ग्रहण-सामर्थ्य से कृद्ग्रहण में गतिपूर्वक और कारकपूर्वक का भी ग्रहण इष्ट है', यह नहीं माना

**कर्मणीत्येव—प्रकृतः कटं देवदत्तः। थाथादिस्वरापवादो योगः॥**

## २७१३. तादौ च निति कृत्यतौ ॥ ५० ॥ ( २७८४ )

**तकारादौ च तुशब्दवर्जिते निति कृति परतो गतिरनन्तरः प्रकृतिस्वरो भवति। प्रकर्ता। प्रकर्तुम्। प्रकृतिः। 'प्रकर्ता' इति तृन्नन्तः। कृत्स्वरबाधनार्थं वचनम्।**

**तादाविति किम्? प्रजल्पाकः। नितीति किम्? प्रकर्त्ता। तृजन्तः।**

**※ कृद्ग्रहणमुपदेशे ताद्यर्थम् ※ ( का० वा० २ ) इहापि यथा स्यात्—प्रलपिता, प्रलपितुमिति।**

**न्यासः**

**प्रकृतः कटं देवदत्त इति।** 'आदिकर्मणि क्तः कर्तरि च' इति कर्तरि हि क्तप्रत्ययः॥ ४९॥

**तादौ च निति कृत्यतौ॥ प्रकर्तुमिति।** तुमुन्। **प्रकर्तेति तृन्नन्त इति।** तृजन्ताशङ्कां निराकरोति। **कृत्स्वरबाधनार्थमित्यादि।** अव्ययस्वरापवादः 'गतिकारकोपपदात् कृत्' इति कृत्स्वरः प्राप्नोति, अतस्तद्बाधनार्थं वचनम्। **प्रजल्पाक इति।** 'जल्पभिक्ष' इत्यादिना षाकन्। **तृजन्त इति।** तृन्नन्ताशङ्कां निराकरोति।

अथ निद्ग्रहणं किमर्थम्? प्रकृष्टमृष्टमृत्तिका प्रमृत्तिका इत्यत्र मा भूदिति चेत्? नैतदस्ति; तथा हि—यत्क्रियायुक्ताः प्रादयः तं प्रति गत्युपसर्गसंज्ञा भवन्ति, मृत्तिकाशब्दश्चायं नामधेयत्वात् क्रियावाची न भवति, तेन

**पदमञ्जरी**

**प्रकृतः कटमिति।** 'आदिकर्मणि क्तः कर्तरि च' इति कर्तरि प्रत्ययः॥ ४९॥

**तादौ च निति कृत्यतौ॥ प्रजल्पाक इति।** 'जल्पभिक्ष' इति षाकन्। इह गतेः स्वरो विधीयते, क्रियायोगे च गतिसंज्ञा, धातुश्च क्रियावाची, धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च, तत्र तिङन्ते पूर्वपदस्यासम्भवात्कृदन्तादेव भविष्यति, नार्थः कृद्ग्रहणेन? इदं तर्हि प्रयोजनम्—यथा तादिग्रहणं कृद्विशेषणं विज्ञायेत तकारादौ निति कृतीति; अन्यथा नितीत्यनेन प्रत्ययग्रहणपरिभाषया तदन्तस्योपस्थानात्तस्यैवोत्तरपदस्य तकारादित्वं विशेषणं स्यात्। ततश्चेहैव स्यात्—प्रतरिता, प्रतरितमिति; इह न स्यात्—प्रकर्त्ता, प्रकर्त्तुम्।

नैतदस्ति प्रयोजनम्, क्रियमाणेऽपि कृद्ग्रहणे अनिष्टं शक्यं विज्ञातुम्—तकारादावुत्तरपदे निति कृतीति, अक्रियमाणेऽपि चेष्टम् निद्यस्तकारादिस्तदन्त उत्तरपदेति; ततश्च यथा 'उतश्च प्रत्ययात्' इत्यत्रासंयोगपूर्व-

**भावबोधिनी**

जाता है। [ क्योंकि ऐसा मान लेने पर 'अनन्तरः' का कोई फल नहीं रह जाता है। ]

कर्म में ही क्त प्रत्यान्त रहने पर—अतः 'प्रकृतः कटं देवदत्तः।' [ यहाँ नहीं होता है क्योंकि यहाँ कर्ता में क्त प्रत्यय है। ] यह सूत्र 'थाथघञ्' से प्राप्त स्वर का अपवाद है॥ ४९॥

तकारादि और तु शब्द को छोड़कर नित् ( न् की इत्संज्ञा वाले ) कृत् प्रत्यय परे रहते अव्यवहित गतिसंज्ञक शब्द प्रकृतिस्वर वाला होता है। उदा०—प्रकर्ता। प्रकर्तुम्। प्रकृतिः। प्रकर्त्ता—यह तृन् प्रत्ययान्त है। [ प्रकर्तुम्—तुमुन् प्रत्ययान्त और प्रकृतिः—यह क्तिन् प्रत्ययान्त है। अतः सभी में नित् कृत् प्रत्यय परे हैं। 'प्र' का प्रकृतिस्वर उदात्त होता है। ]

तकारादि में—इसका क्या फल है? प्रजल्पाकः। [ प्र + जल्प + षाकन् यह तादि नहीं है। ] नित् होने पर—इसका क्या फल है? प्रकर्त्ता। यह तृच् प्रत्ययान्त है। [ तृन् प्रत्ययान्त नहीं है। ]

※ कृति—इसका ग्रहण उपदेशकाल में तकारादि के लिए है। ※ जिससे यहाँ भी हो सके—प्रलपिता। प्रलपितुम्।

अताविति किम् ? आगन्तुः ॥

## २७१४. तवै चान्तश्च युगपत् ॥ ५१ ॥ ( ३७८९ )

तवैप्रत्ययस्यान्त उदात्तो भवति गतिश्चानन्तरः प्रकृतिस्वर इति एतदुभयं युगपद्भवति। अन्वे॑तवै ( तै० सं० १.४.४५.१ )। परि॑स्तरितवै। परि॑पातवै। तस्मादग्निचिन्नाभिचरितवै ( तै० सं० ५.६.३.१ )। उपसर्गा आद्युदात्ता अभिवर्जम् ( फि० सू० ८०-८१ ) इत्यभिरन्तोदात्तः।

कृत्स्वरापवादो योगः ॥

**न्यासः**

तं प्रत्युपसर्गसंज्ञा नास्त्येव ? इत्यत आह—**कृद्ग्रहणमित्यादि**। 'कृति' इत्यनेन संज्ञासम्बन्धकालो लक्ष्यते, तेन कृत्संज्ञावेलायां यस्तादिरित्येषोऽर्थः सम्पद्यत इति कृद्ग्रहणमुपदेशे ताद्यर्थं भवति; कृत्संज्ञाप्रतिपत्तिकालस्योपदेशकालत्वात्। तस्मात् पुनरुपदेशे यस्तादिस्तदर्थं यत्नः क्रियत इत्याह—**इहेत्यादि**। यदि तदुपदेशग्रहणं ताद्यर्थं न क्रियेत, तदा प्रलपितेत्यत्र न स्यात्; इटा तादिताया विहतत्वात्। यस्मिंश्च सत्युपदेश एव तादिर्भवतीति यद्यप्युत्तरकालं तादिता विहन्यते, तथापि भवत्येव। **आगन्तुरिति**। 'सितनिगमिमसि' इत्यादिना तुन्प्रत्ययः ॥ ५० ॥

**तवै चान्तश्च युगपत्** ॥ **अन्त उदात्तो भवतीति**। कथं पुनरुदात्तो भवतीत्येषो लभ्यते, नेहोदात्तग्रहणमस्ति ? न ह्यात्रापूर्व एव स्वरो विधीयते, किं तर्हि ? 'गतिकारकोपदात् कृत्' इति प्रकृतिभावेनादेर्यः स्वरः प्राप्नोति स एव, तत् कथं प्रकृत्येति वर्तते ? तत्रैवमभिसम्बन्धः क्रियते—तवैप्रत्ययान्तस्य यः प्राप्नोति सोऽन्त्यस्य भवतीति। स चोदात्त एवेति सामर्थ्यादुदात्तो लभ्यते। युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम्। **अन्वेतवा इति**। अनुपूर्वादेतेः 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति तवैप्रत्ययः, गुणः। **परिपातवा इति**। परिपूर्वात् पिबतेः। **अभिचरितवा इति**। अभिपूर्वाच्चरतेः। **अभिरन्तोदात्त इति**। प्रातिपदिकस्वरेण ॥ ५१ ॥

**पदमञ्जरी**

ग्रहणेनोकारो विशेष्यते न प्रत्ययः, तथेहापि नित एव विशेषणं तादिग्रहणं भविष्यतीति ? अत्राह—**कृद्ग्रहणमुपदेशे ताद्यर्थमिति**। अयमभिप्रायः—कृद्ग्रहणेन कृत्संज्ञाप्रवृत्तिकाले यस्तादिस्तत्रेति। किमेवं सति सिद्धं भवति ? तत्राह—**इहापीति**। असति कृद्ग्रहणे, तादिग्रहणेन स्वरप्रवृत्तिसमये यस्तादिस्तत्रेति विज्ञायेत, ततश्च प्रलपितेत्यादौ इडागमे कृते न स्यात्; सम्प्रत्यतादित्वात्, कृत्ग्रहणात्तु भवति।

आदिग्रहणं तुशक्यमकर्तुम्, 'यस्मिन्विधिस्तदादावल्ग्रहणे' ( व्या० प० १२७ ) ॥ ५० ॥

**तवै चान्तश्च युगपत्** ॥ **अन्त उदात्तो भवतीति**। कथं पुनरन्तरेणोदात्तग्रहणमुदात्तो भवतीत्ययमर्थो लभ्यते ? एवं मन्यते—प्रकृत्येति वर्तते, तत्रैवमभिसम्बन्ध, क्रियते—तवैप्रत्ययान्तस्य यः स्वरः प्रकृत्याश्रयः प्राप्तः सोऽन्तस्य भवतीति, स चोदात्त एवेति। **युगपदिति** पर्यायनिवृत्त्यर्थम् ॥ ५१ ॥

**भावबोधिनी**

[ यहाँ इट् होने से पहले तकारादि ही है। ]

तु को छोड़कर—इसका क्या फल है ? आगन्तुः। [ यहाँ आङ् + गम् + तुन् है, अतः 'तु' होने से यह सूत्र नहीं लगता है। ] ॥ ५० ॥

तवै प्रत्यय का अन्त उदात्त होता है और अव्यवहित पूर्ववर्ती गति प्रकृतिस्वर वाला—ये दोनों एक साथ ही होते हैं। उदा०—अन्वेतवै। परिस्तरितवै। परिपातवै। 'तस्मादग्निचिन्नाभिचरितवै। [ इनमें अनु, परि ये दो आद्युदात्त होते हैं। ] "उपसर्गा आद्युदात्ताः" "उपसर्गाश्चाभिवर्जम्" (फि० सू० ८०-८१) से अभि यह अन्तोदात्त है। [ तवै यह तुमुनर्थक वैदिक प्रत्यय भी साथ में अन्तोदात्त होता है। ]

यह कृत्स्वर का अपवाद सूत्र है ॥ ५१ ॥

## २७१९. अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ५२ ॥ ( ३७८६ )

**अनिगन्तो गतिः प्रकृतिस्वरो भवत्यञ्चतौ वप्रत्यये परतः। प्राङ्, प्राञ्चौ, प्राञ्चः। प्रांङ्, प्रांञ्चौ, प्रांञ्चः। 'स्वरितो वानुदात्तेऽपदादौ' ( ८.२.६ ) इत्ययमेकादेश उदात्तः स्वरितो वा। परांङ्, परांञ्चौ, परांञ्चः ( तै० सं० ३.१.१०.३ )।**

**अनिगन्त इति किम्? प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः। कृदुत्तरपदप्रकृतिस्वर इह भवति। वप्रत्यय इति किम्? उदञ्चनः।**

### न्यासः

**अनिगन्तोऽञ्चौ वप्रत्यये ॥ वप्रत्यय इति।** वकारः प्रत्ययो यस्य स तथोक्तः। **प्राङित्यादि।** प्राञ्चतीति 'ऋत्विक्' इत्यादिना क्विनप्रत्ययः, स च वकारमात्र एव; ककारादीनामनुवन्धत्वात्; तेषां चानैकान्तत्वात्। 'उगिदचाम्' इति नुम्, एकवचने हल्ङ्यादिसंयोगान्तलोपौ, 'क्विन्प्रत्ययस्य कुः' इति नकारस्य कुत्वं ङकारः। द्विवचनबहुवचनयोस्तु 'स्तोश्चुना श्चुः' इति श्चुत्वं ञकारः। उपसर्गाकारेण सह 'अकः सवर्णे दीर्घः'। **पराङित्यादि।** पराशब्द आद्युदात्तः। तेन 'स्वरितो वानुदात्तेऽपदादौ' इत्येष विधिर्न भवति।

**प्रत्यङिति।** अत्र प्रतिशब्दस्येगन्तत्वात् प्रकृतिभावो न भवति। ननु च यणादेशे कृते सोऽप्यनिगन्त एव? स्थानिवद्भावादिगन्तव्यपदेशः कृतेऽपि यणादेशे भविष्यतीत्यदोषः। स्वरविधौ स्थानिवद्भावः प्रतिषिध्यत इति चेत्? नैतदस्ति; 'स्वरदीर्घयलोपेषु लोपाजादेशौ न स्थानिवत्, अन्यस्तु स्थानिवदेव' इत्युक्तमेतत्। **उदञ्चन इति।**

### पदमञ्जरी

**अनिगन्तोऽञ्चतौ वप्रत्यये ॥ वप्रत्यये इति।** वकारः प्रत्ययो यस्य स तथोक्तः। **प्राङिति।** 'ऋत्विक्' इत्यादिना क्विन्। स च वकारमात्र एव, ककारादीनामनुबन्धत्वात्। 'उगिदचाम्' इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ। 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—चकारस्य ङकारः। **पराङिति।** पराशब्द आद्युदात्तः, तेनात्र 'स्वरितो वाऽनुदात्तेऽपदादौ' इत्येष विधिर्न भवति।

**प्रत्यङिति।** ननु चात्रान्तरङ्गत्वाद्यणादेशे कृते, अनिगन्तत्वात्प्रकृतिभावेन भवितव्यम्, 'अनिगन्तः' इत्यस्य तु प्रतीच इत्यादिरवकाशः, तत्र 'अचः' इत्यकारलोपाद्यणादेशाभावः। न च यणादेशस्य स्थानिवद्भावोऽस्ति; अपूर्वविधित्वात्, पूर्वपदस्य प्रकृतिस्वरविधानात्? यर्त्तहि न्यधीचेत्यधेः प्रकृतिभावं शास्ति, तज्ज्ञापयति—यण्विषयेऽयं स्वरो न भवतीति। यदि स्याद्, अध्यङित्यत्राप्यनेनैव सिद्धं स्यात्। नैतदस्ति ज्ञापकम्, अधीच इत्यादौ यत्र यण् नास्ति तदर्थमेतत्स्यात्? यर्त्तहि नेः प्रकृतिस्वरं शास्ति, निशब्दस्यैकाच्त्वाद्, नीच इत्यादावुत्तरस्य प्रकृतिस्वरस्य च विशेषो नास्ति। एतदपि न ज्ञापकम्, वचनसामर्थ्यादकृत एवान्तरङ्गे

### भावबोधिनी

अनिगन्त = इगन्त से भिन्न गति प्रकृतिस्वर वाला होता है वप्रत्ययवाले अञ्च् धातु के परे रहते। उदा०—प्राङ् प्राञ्चौ, प्राञ्चः। [ प्र + अञ्चति + क्विन् = प्राङ्, इसमें प्र उदात्त है अञ्च् अनुदात्त है दोनों का दीर्घरूप एकादेश ] "स्वरितो वाऽनुदात्ते पदादौ" ( पा० सू० ८।२।६ ) से यह एकादेश उदात्त अथवा स्वरित होता है। पराङ्, पराञ्चौ, पराञ्चः। [ पराशब्द आद्युदात्त है। अतः एकादेश में 'स्वरितो वाऽनुदात्ते पदादौ" यह सूत्र नहीं लगता है। ]

अनिगन्त = इगन्त न हो—इसका क्या फल है? प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः [ प्रति यह इगन्त है। अतः प्रस्तुत सूत्र नहीं लगता है। ] यहाँ कृदुत्तरपद प्रकृतिस्वर होता है।

'चोरनिगन्तोऽञ्चतौ वप्रत्यय' ( म० भा० ) इत्येष स्वरो भवति विप्रतिषेधेन । परा॑चः । परा॑चा ।।

**२७१६. न्यधी च ॥ ५३ ॥ ( ३७८७ )**

नि, अधि—इत्येतौ चाञ्चतौ वप्रत्यये परतः प्रकृतिस्वरौ भवतः । न्यं॑ङ्, न्यं॑ञ्चौ, न्यं॑ञ्चः । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( ८.२.४ ) इत्यञ्चतेरकारः स्वरितः । अध्यं॑ङ्, अध्यं॑ञ्चौ, अध्यं॑ञ्चः । अधी॑चः । अधी॑चा ॥

**न्यासः**

ल्युट् । अत्राप्युत्तरपदप्रकृतिस्वर एव भवति । **चोरनिगन्तोऽञ्चतावित्यादि** । चोरित्यनेन 'चौ' इत्यनेन यदन्तोदात्तत्वं विधीयते तदुपलक्षयति । चोरित्यस्यावकाशः—दधीचः, यत्र गतिर्न भवति; अनिगन्तस्वरस्यावकाशो यत्राञ्चतेरकारनकारौ न लुप्येते—पराङ्, पराञ्चाविति; इहोभयं प्राप्नोति—पराचः, पराचेति, अनिगन्तः स्वरो भवति विप्रतिषेधेन । प्रतिषेधशब्दस्तत्राध्याहार्यः ॥ ५२ ॥

**न्यधी च** ।। इगन्तार्थोऽयमारम्भः । **उदात्तस्वरितयोरित्यादि** । निरुदात्तः 'उपसर्गाश्चाभिवर्जम्' इति, तेन तदिकारस्थाने यो यणादेशः स उदात्तयण् । तेन 'उदात्तस्वरितयोः' इत्यादिना ततः परमञ्चतेरकारः स्वरितो भवति । **अध्यङित्यादौ** तु न भवति; आदेशाद्युदात्तत्वात्, यणादेश उदात्तयण् न भवतीति कृत्वा ॥ ५३ ॥

**पदमञ्जरी**

यणादेशे निशब्दस्य स्वरार्थमेतत्स्यात्, यणादेशे कृते स्वरभाजोऽभावात्; प्रत्यङादिषु तु यणादेश एवान्तरङ्गत्वात् प्राप्नोति, तस्माद्यण्विषये प्रतिषेधो वक्तव्यः ? न वक्तव्यः; स्थानिवद्भावात्सिद्धम् । ननु चोक्तम्—'पूर्वपदस्य प्रकृतिस्वरो न यणः पूर्वस्य' इति ? नैतदस्ति; उक्तमेतत्—'पूर्वपदशब्दः पूर्वपदस्योद उदात्ते स्वरिते वा वर्तते' इति ।

**चोरिति** । 'चौ' इति यत्पूर्वपदान्तोदात्तत्वं विधीयते तच्चुशब्देन लक्ष्यते । चोः=चुस्वरादित्यर्थः । **एष स्वरो भवतीति** । विप्रतिषेधेनेति भावः । चुस्वरस्यावकाशः—दधीचः, दधीचा, यत्र गतिर्नास्ति; अनिगन्तस्वरस्यावकाशः—पराङ्, पराञ्चौ, पराञ्चः, पराच इत्यादावुभयप्रसङ्गे परत्वादनिगन्तस्वर एव भवति । नायं युक्तो विप्रतिषेधः, चुस्वरः सतिशिष्टः, कथम् ? 'चौ' इत्युच्यते, यत्रास्यैतद्रूपम्, भसंज्ञानिमित्ते प्रत्यये, अल्लोपे च कृते सम्भवति ? एवं तर्हि नायं विप्रतिषेध उपन्यस्तः, किं तर्हि ? इष्टिरेषा—'चोरनिगन्तोऽञ्चतावप्रत्यय इत्येष स्वर इष्यते' इति ॥ ५२ ॥

**न्यधी च** ॥ **अधीच इति** । अत्रापि कृत्स्वरादयमेव स्वर इष्यत इति दर्शयति ॥ ५३ ॥

**भावबोधिनी**

वप्रत्यय ( वकारवाला प्रत्यय रहने पर )—इसका क्या फल है ? उदञ्चनः । [ इसमें उत् + अञ्च् + ल्युट् = अन है । वकारवाला प्रत्यय नहीं हैं । अतः इसमें भी उत्तरपद का प्रकृतिस्वर होता है । ]

"चुस्वर से अनिगन्त अञ्चति वप्रत्ययवाला परे रहने पर' यह स्वर विप्रतिषेध से होता है । उदा०—पराचः । पराचा ।

**विमर्श**—भाव यह है कि "चौ" ( ६.१.२२२ ) सूत्र से चु को मान कर होने वाले स्वर का अवकाश वहाँ है जहाँ कोई गतिसंज्ञक नहीं है, जैसे—दधीचः, दधीचा आदि । अनिगन्तस्वर का वहाँ अवकाश है जहाँ 'अञ्च' के अकार और नकार का लोप नहीं होता है—पराङ् पराञ्चौ आदि । परन्तु पराचः, पराचा आदि में 'चौ' ( ६।१।२२२ ) तथा प्रस्तुत सूत्र दोनों का प्रसङ्ग है । यहाँ विप्रतिषेध से अनिगन्त स्वर ही होता है । यहाँ विप्रतिषेध भाष्यकार की इष्टि है ॥ ५२ ॥

नि और अधि—ये दोनों, व प्रत्ययवाले अञ्च के परे रहते, प्रकृति-स्वर वाले होते हैं । उदा०—न्यङ्, न्यञ्चौ, न्यञ्चः । [ नि + अञ्च्, नि का इ उदात्त है, अञ्च् अनुदात्त है । यण् होता है । ] "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" ( पा० सू० ८।२।४ ) से अञ्चति का अकार स्वरित हो जाता है । अध्यङ्, अध्यञ्चौ, अध्यञ्चः । अधीचः, अधीचा ।

## २७१७. ईषदन्यतरस्याम् ॥ ५४ ॥ ( ३७८८ )

'ईषत्' इत्येतत्पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। ई॒षत्क॑डारः। ई॒ष॒त्क॒डा॒रः। ई॒षत्पि॑ङ्गलः ई॒ष॒त्पि॒ङ्ग॒लः। ईषदित्ययमन्तोदात्तः।

ई॒ष॒द्भे॑द इत्येवमादौ कृत्स्वर एव भवति॥

## २७१८. हिरण्यपरिमाणं धने॥ ५५ ॥ ( ३७८९ )

हिरण्यपरिमाणवाचि पूर्वपदं धनशब्द उत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। द्वि॒सु॒व॒र्णं॑धनम्

### न्यासः

**ईषदन्यतरस्याम्**॥ समासस्वरापवादोऽयं योगः। **ईषत्कडार इति**। 'ईषदकृता' इति समासः। यदायं प्रकृतिभावो न भवति, तदा समासान्तोदात्तत्वमेव भवति।

**ईषद्भेद इत्येवमादौ कृत्स्वर एव भवतीति**। परत्वादिति भावः। आदिशब्देन ईषत्कर इत्यादीनां ग्रहणम्। 'ईषद्दुःसुषु' इत्यादिना खल्॥ ५४॥

**हिरण्यपरिमाणं धने**॥ हिरण्यपरिमाणं परिमाणवद् हिरण्यमित्यर्थः। इह तु तद्वाचिशब्दरूपं गृह्यते। **द्विसुवर्णधनमिति**। सुवर्णशब्दो हिरण्यपरिमाणविशेषवाची। द्वे सुवर्णे परिमाणमस्येति 'तद्धितार्थ' इति समासः। 'तदस्य परिमाणम्' इति 'प्राग्वतेष्ठञ्', तस्य 'अध्यर्धपूर्व' इत्यादिना लुक्, ततो धनशब्देन सह कर्मधारयः।

### पदमञ्जरी

**ईषदन्यतरस्याम्**॥ **ईषद्भेद [1]इत्यादौ तु कृत्स्वर एव भवतीति**। परत्वात्। अपर आह—'ईषदकृता' इति प्रतिपदोक्तस्य समासस्य ग्रहणादुपपदसमासस्याप्रवृत्तिरिति॥ ५४॥

**हिरण्यपरिमाणं धने**॥ **हिरण्यपरिमाणवाचीति**। परिमाणविशिष्टहिरण्यवाचीत्यर्थः। तत्र सुवर्णशब्दः परिमाणे, उपपदादौ तत्परिच्छिन्ने हिरण्ये च वर्तते, यथा—प्रस्थादिशब्दो दार्वादिनिर्मिते परिमाणे तत्परिमिते च व्रीह्यादौ वर्तते। 'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश', 'पलं सुवर्णाश्चत्वारः', द्वयोः सुवर्णयोः समाहारो

### भावबोधिनी

[ इनमें अञ्च् का अकार स्वरित नहीं होता है क्योंकि अधि के आद्युदात्त होने से 'धि' अनुदात्त का यण् है। कृत्स्वर की अपेक्षा भी यही स्वर इष्ट है। इस को यह सूत्र सूचित करता है। ] ॥ ५३ ॥

'ईषत्' यह पूर्वपद विकल्प से प्रकृतिस्वर वाला होता है। उदा०—ईषत्कडारः। ईषत्पिङ्गलः। ईषत् यह अन्तोदात्त है। [ पक्ष में अन्तोदात्त होता है; अतः दो प्रकार के स्वर होते हैं। ]

ईषद्भेदः—इत्यादि में तो कृत्स्वर ही होता है। [ क्योंकि वह पर होने से बलवान् है। जहाँ कृदुत्तरपद नहीं है वहाँ यह सूत्र लगता है। ] ॥ ५४ ॥

हिरण्य का परिमाणवाचक पूर्वपद, धनशब्द उत्तरपद रहने पर विकल्प से प्रकृतिस्वरवाला होता है। उदा०—द्विसुवर्णधनम्। दो सुवर्ण परिमाण हैं इसके—वह द्विसुवर्णम् है, द्विसुवर्णमेव धनम्—यह कर्मधारय है। बहुव्रीहि ( द्विसुवर्णं धनम् अस्य—इस ) में भी परवर्त्ती होने से विकल्प ही होता है—द्विसुवर्णधनः। [ न कि 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इससे नित्य पूर्वपद का प्रकृतिस्वर होता है। पक्ष में समासान्त उदात्त होता है। ]

---

१. इत्येवमादौ—इति काशिकापाठः।

द्विसुवर्णधनम् । द्वौ सुवर्णौ परिमाणमस्य द्विसुवर्णं तदेव धनमिति कर्मधारयः । बहुव्रीहावपि परत्वाद्विकल्प एव भवति । द्विसुवर्णधनः, द्विसुवर्णधनः ।

हिरण्यग्रहणं किम् ? प्रस्थधनम् । परिमाणग्रहणं किम् ? काञ्चनधनम् । धन इति किम् ? निष्कमाला ।

## २७१९. प्रथमोऽचिरोपसम्पत्तौ ॥ ५६ ॥ ( ३७९० )

प्रथमशब्दः पूर्वपदमचिरोपसम्पत्तौ गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति । अचिरोपसम्पत्तिः = अचिरोपश्लेषः, अभिनवत्वम् । प्रथमवैयाकरणः, प्रथमवैयाकरणः । अभिनववैयाकरणः । सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दः 'प्रथेरमच्' ( उणादि० ७५७ ) इति चित्त्वादन्तोदात्तः ।

अचिरोपसंपत्ताविति किम् ? प्रथमवैयाकरणः । वैयाकरणानामाद्यो मुख्यो वा यः स नित्यमन्तोदात्त एव ॥

### न्यासः

द्विसुवर्णशब्दः समासस्वरेणान्तोदात्तः । बहुव्रीहावपीत्यादि । यद्वा—द्विसुवर्णं धनं यस्येति बहुव्रीहिः, तदापि परत्वाद् विकल्प एव भवति; न तु 'बहुव्रीहौ प्रकृत्या' इत्येष नित्यो विधिः ।

**प्रस्थधनमिति** । अयमपि कर्मधारयः । बहुव्रीहिर्वा । प्रस्थशब्दो भवति परिमाणम्, न तु हिरण्यस्य, किं तर्हि ? धान्यादेः । **काञ्चनधनमिति** । यदि परिमाणग्रहणं न क्रियेत, तदा 'हिरण्यम्' इत्येतावत्युच्यमान इहापि स्यात्; काञ्चनशब्दस्य हिरण्यवाचित्वात् । हिरण्यवाच्यपि परिमाणवाची न भवतीति न भवत्येष प्रसङ्गः । अयमपि समासस्वरापवादो योगः ॥ ५५ ॥

**प्रथमोऽचिरोपसम्पत्तौ** ॥ **अचिरोपश्लेष इति** । अचिरकालसम्बन्ध इत्यर्थः । अस्यैवार्थं प्रसिद्धतरार्थेन प्रदर्शयितुमाह **अभिनवत्वमिति** । **प्रथमवैयाकरण इति** । प्रथमश्च वैयाकरणश्चेति 'पूर्वापर' इत्यादिना समासः । तत्र यत्तद् वैयाकरणत्वं व्याकरणस्याध्येतृत्वम् । अनेनाचिरकालसम्बन्धोऽध्येतुर्गम्यते । अभिनववैयाकरणादिनाऽचिरकालोपसम्पत्तिमुदाहरणे दर्शयति ।

**आद्यो मुख्यो यः स इति** । अनेनापि प्रत्युदाहरणविषयस्य प्रथमशब्दस्यान्यार्थतां च पक्षेऽचिरोपसम्पत्तेरभावं च । अयमपि समासस्वरापवादो योगः । एवमुत्तरेऽपि ॥ ५६ ॥

### पदमञ्जरी

द्विसुवर्णं पात्रादि । **द्विसुवर्णपरिमाणमिति** । अत्र सुवर्णशब्द उपले वर्तते । **काञ्चनधनमिति** । परिमाणग्रहणमकृत्वा हिरण्यमित्युच्यमाने इहापि स्यात्, काञ्चनशब्दस्य हिरण्यवाचित्वात् । परिमाणवाची त्वेष न भवति ॥ ५५ ॥ ५६ ॥

### भावबोधिनी

हिरण्य का ग्रहण किस लिए है ? प्रस्थधनम् । परिमाण का ग्रहण किस लिए है ? काञ्चनधनम् [ काञ्चन परिमाणवाचक नहीं है । ] धन उत्तर पद में—इसका क्या फल है ? निष्कमाला ।

[ सुवर्णबिस्तौ हेम्नोऽक्षे—अमर २।९।८६ के अनुसार ८० रत्ती या १६ आने भर को सुवर्ण कहा जाता है । पदमञ्जरी में १६ माषे को सुवर्ण लिखा है । अतः यह सुवर्ण शब्द परिमाणवाचक भी है । ] ॥ ५५ ॥

प्रथम शब्द पूर्वपद, अचिरोपसम्पत्ति प्रतीयमान रहने पर, विकल्प से प्रकृतिस्वरवाला होता है । अचिरोपसम्पत्ति = अचिरोपश्लेष ( = कुछ ही पहले का सम्बन्ध ) = अभिनव होना । उदा०—प्रथमवैयाकरणः = अभिनववैयाकरण । अभी व्याकरण के अध्ययन में प्रवृत्त होने वाला—यह अर्थ है । 'प्रथम' शब्द 'प्रथेरमच्' ( उणादि ७५७ ) से ( अमच् प्रत्ययान्त ) चित् होने से अन्तोदात्त है । [ पूर्वपद का यही प्रकृतिस्वर होता है । पक्ष में समासान्त उदात्त होता है । ]

## २७२०. कतरकतमौ कर्मधारये ॥ ५७ ॥ ( ३७९१ )

कतरशब्दः कतमशब्दश्च पूर्वपदं कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। कतरकठः। कतरकठः। कतमकठः[1]। कतमकठः। कर्मधारयग्रहणमुत्तरार्थम्, इह तु प्रतिपदोक्तत्वादेव सिद्धम् ॥

## २७२१. आर्यो ब्राह्मणकुमारयोः ॥ ५८ ॥ ( ३७९२ )

आर्यशब्दः पूर्वपदं ब्राह्मणकुमारशब्दयोरुत्तरपदयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। आर्यब्राह्मणः आर्यब्राह्मणः। आर्यकुमारः आर्यकुमारः। आर्यशब्दो ण्यदन्तोऽन्तस्वरितः।

आर्य इति किम्? परमब्राह्मणः। परमकुमारः। ब्राह्मणकुमारयोरिति किम्? आर्यक्षत्रियः। कर्मधारये इत्येव—आर्यस्य ब्राह्मणः आर्यब्राह्मणः ॥

### न्यासः

**'कतरकतमौ कर्मधारये ॥** 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति कतरकतमशब्दौ व्युत्पद्येते, तेन तौ चित्स्वरेणान्तोदात्तौ। **कतरकठ इति।** 'कतरकतमौ जातिपरिप्रश्ने' इति समानाधिकरणसमासः। एतदर्थमपि कर्मधारयग्रहणं कस्मान्न भवति? इत्याह—**इह त्वित्यादि।** कतरकतमशब्दयोर्हि यः प्रतिपदसमासः स एव लक्षणप्रतिपदोक्तपरिभाषया विज्ञायते। स च कर्मधारय एव। तस्मात् प्रतिपदोक्तत्वादेवैतत्समासस्य कर्मधारयत्वम्। तस्मान्नैतदर्थं कर्मधारयग्रहणमुपपद्यते ॥ ५७ ॥

**आर्यो ब्राह्मणकुमारयोः ॥ आर्यब्राह्मण इति।** आर्यश्चासौ ब्राह्मणश्चेति विशेषणसमासः। **आर्यशब्दो ण्यदन्त इति।** 'ऋहलोर्ण्यत्' इति ण्यति व्युत्पादितत्वात्। **अन्तस्वरित इति।** तित्स्वरेण। **प्रत्युदाहरणे तु** समासान्तोदात्तत्वमेव भवति ॥ ५८ ॥

### पदमञ्जरी

**कतरकतमौ कर्मधारये ॥ इह त्वित्यादि।** 'कतरकतमौ जातिपरिप्रश्ने' इति प्रतिपदसमासः तस्येह ग्रहणम्, स कर्मधारय एव। तस्मान्नेहार्थं कर्मधारयग्रहणमिति भावः ॥ ५७ ॥ ५८ ॥

### भावबोधिनी

अचिरोपसम्पत्ति में—इसका क्या फल है? प्रथमवैयाकरणः। वैयाकरणों में आद्य अथवा मुख्य जो है वह नित्य अन्तोदात्त ही है। [ अभिनवत्व की प्रतीति में विकल्प से और अन्य अर्थ में नित्य अन्तोदात्त होता है। ] ॥ ५६ ॥

कतरशब्द और कतम शब्द पूर्वपद कर्मधारय समास में विकल्प से प्रकृतिस्वर वाला होता है। उदा०—कतरकठः। कतमकठः। [ 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्' सूत्र से किम् से डतरच् प्रत्यय और 'वा बहूनां जातिपरिप्रश्ने डतमच्" से किम् से डतमच् प्रत्यय होने से चित् होने के कारण दोनों अन्तोदात्त हैं। पक्ष में समासान्त उदात्त होता है। ]

कर्मधारये—इसका ग्रहण उत्तरवर्ती सूत्र के लिए है, क्योंकि यहाँ तो [ 'कतरकतमौ जातिपरिप्रश्ने' से ] प्रतिपदोक्त [ समास ] होने से ही कर्मधारय सिद्ध है ॥ ५७ ॥

आर्य शब्द पूर्वपद, ब्राह्मण तथा कुमार उत्तरपद रहने पर, कर्मधारय समास में, विकल्प से प्रकृतिस्वरवाला होता है। उदा०—आर्यब्राह्मणः। आर्यकुमारः। [ कर्मधारय समास है। ] आर्य शब्द ण्यदन्त [ तित् होने से ] स्वरित अन्त-वाला है। [ अतः पूर्वपद का अन्त स्वरित होता है। पक्ष में समास का अन्त उदात्त होता है। ]

आर्य—इसका क्या फल है? परमब्राह्मणः। परमकुमारः। [ आर्य न होने से पूर्वपद का प्रकृतिस्वर नहीं होता है। ] ब्राह्मण और कुमार उत्तरपद में—इसका क्या फल है? आर्यक्षत्रियः। [ यहाँ नहीं होता है। ] कर्मधारय में ही होता है—आर्यस्य ब्राह्मणः—आर्यब्राह्मणः। [ इस षष्ठी तत्पुरुष में नहीं होता है। समास का अन्तोदात्त होता है। ] ॥ ५८ ॥

---

१. कतरकलापः, कतमकलापः। कतरकतमशब्दौ अन्तोदात्तौ—इत्यधिकं पठ्यते क्वचित्।

## २७२२. राजा च ॥ ५९ ॥ ( ३७९३ )

राजा च पूर्वपदं ब्राह्मणकुमारयोरुत्तरपदयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। राजब्राह्मणः। राजब्राह्मणः। राजकुमारः। राजकुमारः।

कर्मधारय इत्येव—राज्ञो ब्राह्मणो राजब्राह्मणः। राजकुमारः।
पृथग्योगकरणमुत्तरार्थम् ॥

## २७२३. षष्ठी प्रत्येनसि ॥ ६० ॥ ( ३७९४ )

'राजा' इति वर्त्तते, 'अन्यतरस्याम्' इति च। षष्ठ्यन्तो राजशब्दः पूर्वपदं प्रत्येनस्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। राज्ञः प्रत्येनाः राजप्रत्येनाः राजप्रत्येनाः।

षष्ठीति किम्? राजा चासौ प्रत्येनाश्च राजप्रत्येनाः ॥

### न्यासः

राजा च ॥ राजब्राह्मणमिति। पूर्ववत् समासः। प्रत्युदाहरणेऽपि पूर्ववत् राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः।

पृथग्योगकरणमुत्तरार्थमिति। उत्तरो विधी राजशब्दस्यैव यथा स्यात्। आर्यशब्दस्य मा भूदिति ॥ ५९ ॥

षष्ठी प्रत्येनसि ॥ राज्ञः प्रत्येना इति। 'षष्ठ्या आक्रोशे' इति विभक्तेरलुक् ॥ ६० ॥

### पदमञ्जरी

राजा च ॥ राजब्राह्मण इति। राजशब्दो ब्राह्मणे ताद्धर्म्याद्वर्तत इति सामानाधिकरण्यात्कर्मधारयः, राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः।

पृथग्योगकरणमुत्तरार्थमिति। उत्तरो विधी राजशब्दस्यैव यथा स्यात्, आर्यशब्दस्य मा भूत। यथासङ्ख्याभावोऽपि पृथग्योगकरणस्य प्रयोजनम्, तत्तु नोक्तमित्येतावत् ॥ ५९ ॥

षष्ठी प्रत्येनसि ॥ राज्ञः प्रत्येना इति। 'षष्ठ्या आक्रोशे' इत्यलुक् ॥ ६० ॥

### भावबोधिनी

और राजा पूर्वपद, ब्राह्मण तथा कुमार शब्द उत्तरपद रहने पर, कर्मधारय समास में विकल्प से प्रकृतिस्वर वाला होता है। उदा०—राजब्राह्मणः। राजकुमारः। [ राजन् शब्द कनिन् प्रत्ययान्त होने से आद्युदात्त है। पक्ष में समास का अन्त उदात्त होता है। ]

कर्मधारय में ही—राज्ञः ब्राह्मणः—राजब्राह्मणः। राज्ञः कुमारः—राजकुमारः। [ षष्ठीतत्पुरुष में नहीं होता है। ] अग्रिम सूत्र में अनुवृत्ति के लिए अलग सूत्र बनाया गया है ॥ ५९ ॥

'राजा' इसकी और 'अन्यतरस्याम्' इसकी अनुवृत्ति होती है। षष्ठीविभक्त्यन्त राज शब्द पूर्वपद, प्रत्येनस् उत्तरपद रहने पर विकल्प से, प्रकृतिस्वरवाला होता है। उदा०—राज्ञः प्रत्येनाः—राजप्रत्येनाः। [ राजन् आद्युदात्त होता है। पक्ष में समास का अन्तोदात्त होता है। ]

षष्ठीविभक्त्यन्त—इसका क्या फल है? राजा चासौ प्रत्येनाश्च—राजप्रत्येनाः। [ कर्मधारय है। अतः सूत्र नहीं लगता है। नित्य अन्तोदात्त है। ] ॥ ६० ॥

## २७२४. क्ते नित्यार्थे ॥ ६१ ॥ ( ३७९९ )

**क्तान्त उत्तरपदे नित्यार्थे समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। नित्यप्रहसितः, नित्यप्रहसितः। सततप्रहसितः, सततप्रहसितः। 'कालाः' (२.१.२८) इति द्वितीयासमासोऽयम्। नित्यशब्दः 'त्यब्नेर्ध्रुवे' (का० वा०) इति त्यबन्त आद्युदात्तः। सततम् इति—यदा भावे क्तस्तदा थाथादिस्वरेणान्तोदात्तः।**

**नित्यार्थ इति किम्? मुहूर्तप्रहसितः॥**

### न्यासः

**क्ते नित्यार्थे ॥** नित्यशब्द आभीक्ष्ण्ये, न कूटस्थे। कुत एतत्? क्त इत्युच्यते, क्तश्च धातोर्विधीयते, धातुश्च क्रियावचनः, क्रियायाश्च कौटस्थ्यं नोपपद्यते; क्षणिकत्वात् क्रियायाः। तस्यास्तु पौनःपुन्याद्यपेक्षया युक्तमाभीक्ष्ण्यम्। **काला इति द्वितीयासमासोऽयमिति**। द्वितीया तु 'कालाध्वनोरत्यन्तसंयोगे' इति। अथ वा—कर्मण्येव। कर्मसंज्ञा तु 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' **इति वचनात्। नित्यशब्द इत्यादि। अनेन** 'ध्रुव उपसंख्यानम्' इति नेर्नित्यशब्दो व्युत्पाद्यते त्यबन्तः। ततश्च त्यपः पित्त्वेनानुदात्तत्वान्नेश्चोदात्तत्वादाद्युदात्तो भवति। 'सततमिति यदा कर्मणि क्तस्तदा थाथादिस्वरेणान्तोदात्तः' इति—अयुक्तोऽयं पाठः। यदा हि कर्मणि क्तस्तदा 'गतिरनन्तरः' इति गतेः प्रकृतिभावे सत्याद्युदात्तेन सततशब्देन भवितव्यम्। तस्मात्—**सततमिति यदा भावे क्तस्तदा थाथादिस्वरेणान्तोदात्त** इत्ययं तत्रानवद्यः पाठो वेदितव्यः। तथा हि सततशब्दोऽपि थाथादिस्वरेणान्तोदात्तः। भावे हीयं निष्ठेति गतिस्वरो न भवतीत्युक्तम्। यदा तु कर्मणि क्तस्तदा तु गतिस्वरेण सततशब्द आद्युदात्त एव भवति। 'समो वा हिततततयोः' इति समो मकारलोपः।

**मुहुर्तप्रहसित इति**। अत्र थाथादिस्वर एव भवति। प्रहसित इति हसेरकर्मकत्वात् कर्तरि क्तः। समासस्वरे द्वितीयापूर्वपदप्रकृतिस्वरेण बाधिते सति थाथादिस्वरः प्राप्नोति। अतस्तदपवादो योगः॥ ६१॥

### पदमञ्जरी

**क्ते नित्यार्थे ॥** नित्यशब्द आभीक्ष्ण्ये कौटस्थ्ये च वर्तते, इह त्वाभीक्ष्ण्ये। कुत एतत्? क्त इत्युच्यते, क्तश्च धातोर्विधीयते, धातुश्च क्रियावचनः, क्रियायाः क्षणिकत्वात्कौटस्थ्यं नोपपद्यते, तस्मादाभीक्ष्ण्ये नित्यशब्दः। **द्वितीयासमासोऽयमिति**। द्वितीया पुनरत्यन्तसंयोगे। अथ वा—कर्मणि, 'कालभावाध्वगतव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति। **सततम् इति भावे क्त इत्यादि**। यदा तु कर्मणि क्तः, तदा 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तो भवति। समासस्वरस्य द्वितीयापूर्वपदप्रकृतिस्वरो बाधकः, तस्य थाथादिस्वरः तस्यायमपवादः॥ ६१॥

### भावबोधिनी

क्तान्त उत्तरपद रहने पर नित्यार्थ में समास में पूर्वपद विकल्प से प्रकृतिस्वरवाला होता है। उदा०—नित्यप्रहसितः। सततप्रहसितः। यह "कालाः" (२।१।२८) से द्वितीयान्त का समास है। नित्य शब्द "त्यब्नेर्ध्रुवे" (वार्त्तिक) से त्यप् प्रत्ययान्त आद्युदात्त है। सततम्—यहाँ जब भाव अर्थ में क्त प्रत्यय है तब 'थाघघञ्' सूत्र से विहित-स्वर से अन्तोदात्त है। [ पूर्वपद का यही प्रकृतिस्वर रहता है। पक्ष में समास का अन्तोदात्त होता है। ]

नित्यार्थ में—इसका क्या फल है? मुहूर्तप्रहसितः। [ यहाँ यह सूत्र नहीं लगता है। समास का अन्तोदात्त होता है। ] ॥ ६१॥

**२७२५. ग्रामः शिल्पिनि ॥ ६२ ॥ ( ३७९६ )**

**ग्रामशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति । ग्रामनापितः, ग्रामनापितः । ग्रामकुलालः ग्रामकुलालः । ग्रामशब्द आद्युदात्तः ।**

**ग्राम इति किम् ? परमनापितः । शिल्पिनीति किम् ? ग्रामरथ्या ॥**

**२७२६. राजा च प्रशंसायाम् ॥ ६३ ॥ ( ३७९७ )**

**राजशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदे प्रशंसायां गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति । राजनापितः, राजनापितः । राजकुलालः, राजकुलालः । कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा । षष्ठीसमासे च राजयोग्यतया तस्य ।**

**राजेति किम् ? परमनापितः । प्रशंसायामिति किम् ? राजनापितः ।**

**शिल्पिनीत्येव—राजहस्ती ॥**

**न्यासः**

**ग्रामः शिल्पिनि ॥** सप्तमीनिर्दिष्टग्रहणमनुवर्तते । तेन शिल्पिनीत्यर्थग्रहणम् । ग्राम इति स्वरूपग्रहणमेव । **ग्रामनापित इति ।** षष्ठीसमासः । समासस्वरापवादो योगः । एवमुत्तरोऽपि ॥ ६२ ॥

**राजा च प्रशंसायाम् ॥ कर्मधारय इत्यादि । राजनापित इति ।** कर्मधारयोऽयं वा स्यात्, षष्ठीतत्पुरुषो वा ? तत्र यदा कर्मधारयस्तदा राजशब्दस्य नापित उपचारेण वृत्तिः । उपचारस्तु राजगुणारोपनिबन्धनः, अतस्तेनैवोत्तरपदस्य प्रशंसा भवति । कथं पुनर्नापितः षष्ठीसमासेन राजनापितशब्देनोच्यते ? इत्याह **राजयोग्यतया तस्येत्यादि ।** स हि स्वकर्मणि प्रवीणत्वाद् राजानं प्रति योग्यो भवति ! अतोऽपि राजनापित इति षष्ठीसमासेनोच्यते । अत्र पक्षे तस्यैव योग्यतयोत्तरपदस्य प्रशंसा वेदितव्या ॥ ६३ ॥

**पदमञ्जरी**

**ग्रामः शिल्पिनि ॥** ग्राम इति स्वरूपग्रहणम् ॥ ६२ ॥

**राजा च प्रशंसायाम् ॥ षष्ठीसमासे चेति ।** प्रशंसेत्यनुषङ्गः । **राजयोग्यतया तस्येति ।** स हि कर्मणि प्रवीणत्वाद्राजानं प्रति योग्यो भवति । राजार्ह इति चोक्ते प्रशंसा गम्यते ॥ ६३ ॥

**भावबोधिनी**

ग्राम शब्द पूर्वपद, शिल्पवाची उत्तरपद रहने पर, विकल्प से प्रकृतिस्वरवाला होता है । उदा०—ग्रामनापितः । ग्रामकुलालः । ग्राम शब्द आद्युदात्त है । [ पूर्वपद का यही स्वर रहता है । पक्ष में समास का अन्तोदात्त होता है । ]

ग्राम—यह किस लिए है ? परमनापितः । [ यहाँ नहीं होता है । ] शिल्पी हो—यह किस लिए है ! ग्रामरथ्या । [ रथ्या = गली है, शिल्पी नहीं । अतः समास का अन्तोदात्त होता है । ] ॥ ६२ ॥

राजन् शब्द पूर्वपद, शिल्पवाची उत्तरपद रहने पर प्रशंसा की प्रतीति होने पर, विकल्प से प्रकृतिस्वरवाला होता है । उदा०—राजनापितः । राजकुलालः । यहाँ कर्मधारय समास में राजा के ( प्रधानत्वादि ) गुणों के अध्यारोप से उत्तरपदार्थ की प्रशंसा होती है । और षष्ठी समास में राजा के प्रति योग्य होने से उस शिल्पी की प्रशंसा प्रतीत होती है । [ पक्ष में समासान्त उदात्त होता है । ]

राजा—इसका क्या फल है ? परमनापितः । [ यहाँ नहीं होता है । ] प्रशंसा में—इसका क्या फल है ? राजनापितः । [ यहाँ सामान्य कथन है । अतः यह सूत्र नहीं लगता । ] शिल्पी में ही—राजहस्ती । [ इसमें नहीं होता है । क्योंकि हाथी शिल्पी नहीं है । ] ॥ ६३ ॥

## २७२७. आदिरुदात्तः ॥ ६४ ॥ ( ३७९८ )

**'आदिरुदात्तः' इत्येतदधिकृतम्, इत उत्तरं यद्वक्ष्यामः, तत्र पूर्वपदस्यादिरुदात्तो भवतीत्येवं तद्वेदितव्यम् । वक्ष्यति—'सप्तमीहारिणौ धर्म्येऽहरणे' ( ६.२.६५ ) इति । स्तूपे'शाणः । मुकुटे'कार्षापणम् । याज्ञिकाश्वः । वैयाकरणहस्ती । दृषदिमाषकः ।**

**'आदिः' इति प्रागन्ताधिकारात् ( ६.२.१४३ ) । 'उदात्तः' इति 'प्रकृत्या भगालम्' ( ६.२.१३७ ) इति यावत् ॥**

## २७२८. सप्तमीहारिणौ धर्म्येऽहरणे ॥ ६५ ॥ ( ३७९९ )

**सप्तम्यन्तं हारिवाचि च पूर्वपदं धर्म्यवाचिनि हरणशब्दादन्यस्मिन्नुत्तरपदे आद्युदात्तं भवति । हारीति देयं यः स्वीकरोति सोऽभिधीयते । 'धर्म्यम्' इत्याचारनियतं देयमुच्यते । धर्मो ह्यनुवृत्त आचारः, तस्मादनपेतं तेन वा प्राप्यमिति । स्तूपे'शाणः । मुकुटे'कार्षापणम् । हले'द्विपदिका । हले'त्रिपदिका । दृषदिमाषकः ।**

**न्यासः**

**आदिरुदात्तः । आदिरित्यादिनाद्यधिकारस्यावधिं दर्शयति । उदात्त इत्यादिनाप्युदात्ताधिकारस्य ॥ ६४ ॥**

**सप्तमीहारिणौ धर्म्येऽहरणे ॥** हारीत्यावश्यके णिनिः । सप्तमीत्यनेन साहचर्याद् हारीति स्वरूपग्रहणं न भवति । अत एवाह—**हारिवाचि पूर्वपदमिति । धर्म्य** इत्यत्रापि स्वरूपग्रहणं न भवति, अहरण इति प्रतिषेधाद् । अत एवाह—**धर्म्यवाचिनीति । आचारनियतमिति ।** आचारे नियतमिति, ततोऽन्यत्राभावात् । आचारे नियतम्, आचारेण वा नियतमाचारनियतम् । यदाचारवशादवश्यकर्तव्यं तदाचारनियतं भवति । कथं पुनराचारनियतं धर्म्यमुच्यते ? इत्याह—**धर्मो ह्यनुवृत्त इत्यादि ।** अनुवृत्त इति व्यवस्थित इत्यर्थः । **तस्मादिति ।** धर्मादनपेतमिति । अनुगतमित्यर्थः । **तेनेति ।** धर्मेण । **प्राप्तमिति ।** लभ्यमित्यर्थः । उभयथाप्यर्थे 'नौवयोधर्म' इत्यादिना यत् । इति करणो हिशब्दश्च हेतौ । यस्मादाचारविशेषो धर्म उच्यते, यच्च तस्माद्धर्मादनपेतम् । यद्वा तेन

**पदमञ्जरी**

**आदिरुदात्तः ॥** पूर्वपदमित्यस्येहार्थात्षष्ठ्या विपरिणामः । सर्वत्र वात्र प्रकरणे पूर्वपदविषये षष्ठ्यर्थे प्रथमा ॥ ६४ ॥

**सप्तमीहारिणौ धर्म्येऽहरणे ॥ हारीत्यावश्यके णिनिः । धर्म्ये** इत्यर्थग्रहणम् । हरणप्रतिषेधात्तत्साहचर्याद्धारीत्यर्थग्रहणम् । **आचारनियतमिति ।** आचारेण नियतमाचारनियतम्, आचारवशादवश्यकर्तव्यमित्यर्थः । कथं पुनस्ताद्धर्म्यम् ? तत्राह—**धर्मो ह्यनुवृत्त आचार इति ।** जनपदे ग्रामे चरणे कुले वाऽनुवृत्तः परम्परायात इत्यर्थः ।

**भावबोधिनी**

'आदि उदात्त होता है'—इसका अधिकार है । इस सूत्र के आगे जो कहेंगे, उनमें आदि उदात्त होता है' ऐसा समझना चाहिए । कहेंगे—"सप्तमीहारिणौ धर्म्येऽहरणे' ( ६.२.६५ ) । स्तूपेशाणः । मुकुटेकार्षापणम् । याज्ञिकाश्वः । वैयाकरणहस्ती । दृषदिमाषकः [ इनमें पूर्वपद का आदि उदात्त होता है । ]

'आदिः' यह 'अन्तः' ( ६।२।१४३ ) इस अधिकार के पूर्व तक है, 'उदात्तः' यह 'प्रकृत्या भगालम्' ( ६।२।१३७ ) से पहले तक है ॥ ६४ ॥

सप्तम्यन्त और हारिवाची पूर्वपद, धर्म्यवाची हरण शब्द से भिन्न शब्द उत्तरपद होने पर आद्युदात्त स्वर वाला होता है । जो देय को स्वीकार करता है वह 'हारी' ऐसा कहा जाता है । आचार से नियत देय को 'धर्म्य' ऐसा कहा जाता है । क्योंकि अनुवृत्त आचार 'धर्म' ऐसा कहा जाता है [ गाँव, नगर या कुल में परम्परा से चला हुआ आचार 'धर्म' कहा जाता है। ] उस धर्म से अनपेत = अनुगत अथवा उस धर्म से प्राप्य = प्राप्त होने वाला—धर्म्य है । [ 'धर्मपथ्यर्थन्या-

**'संज्ञायाम्' ( २.१.४४ ) इति सप्तमीसमासः, 'कारनाम्नि च' ( ६.३.१० ) इति विभक्तेरलुक्। हारिणि— याज्ञिकाश्वः। वैयाकरणहस्ती। मातुलाश्वः। पितृव्यगवः।**

**क्वचिदयमाचारो व्यवस्थितः—स्तूपादिषु शाणादि दातव्यम्, याज्ञिकादीनामश्वादीति।**

**धर्म्य इति किम्? स्तम्बेरमः। कर्मकरवर्द्धितकः। अहरण इति किम्? वाडवहरणम्। वडवाया अयं**

**न्यासः**

प्राप्यं तद्धर्म्यम्। तेनाचारनियतं धर्म्यमित्युच्यते। **संज्ञायामिति** सप्तमीसमास इति। यद्येवम्, विभक्तेर्लुक् प्राप्नोति? इत्यत आह—**कारनाम्नि चेत्यादि। याज्ञिकाश्व** इत्यादौ तु षष्ठीसमासः।

**क्वचिदित्यादिना** स्तूपेशाण इत्याद्युदाहरणेषु शाणादेर्देयस्याचारनियततां दर्शयन् उत्तरपदस्य धर्म्यवाचित्वं दर्शयति—**याज्ञिकादीनामश्वादीति।** क्वचिदयमाचारे व्यवस्थित इत्यनेन दातव्यमित्यनेन च सम्बन्धः। याज्ञिकादयो हि हारिणः, ते देयमश्वादिकं स्वीकुर्वन्ति।

**स्तम्बेरम इति।** 'स्तम्बकर्णयो रमिजपोः' इत्यच्, उपपदसमासः, 'तत्पुरुषे कृति बहुलम्' इति विभक्तेरलुग् भवति। अत्र स्तम्बेरम इत्यत्र स्तम्ब इत्येतत् सप्तम्यन्तम्, न तु रमशब्दो धर्म्यवाचो। **कर्मकरवर्द्धितक इति।** अत्र कर्मकरो हारी भवति, स हि वर्द्धितकं स्वीकरोति। न तु वर्द्धितकशब्दो धर्म्यवाची। न हि क्वचिदयमाचारो व्यवस्थितः—'कर्मकराय वर्द्धितको दातव्य इति'। **वडवाया अयं वाडव इति।** 'तस्येदम्' इत्यण्। **बीजनिषेकादिति।** गर्भाधानम् = बीजनिषेकः। अत्र वाडवोऽश्वो हारी स हि हरणं देयं स्वीकरोति। हरणम् = देयं धर्म्यम्। क्वचिदयमाचारो व्यवस्थितः—येनाश्वेन वडवायां गर्भ आधीयते तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं योग्याशनादिकं दातव्यमिति। तेन हरणशब्दो धर्म्यवाची भवति। तथाप्यहरण इति प्रतिषेधाद् न भवति। ततश्च कृत्स्वरे प्राप्ते 'अनो भावकर्मवचनः' इत्युत्तरपदं ल्युडन्तमन्तोदात्तं भवति। ननु च परत्वादेवायं स्वरो भविष्यति, तत् किमहरण इति प्रतिषेधेन? इत्यत आह—**परोऽपीत्यादि। तेनेत्यादिना** ज्ञापनस्य

**पदमञ्जरी**

तस्मादनपेतं धर्म्यम्, 'धर्मपथ्यर्थ' इत्यादिना यत्। **तेन वा प्राप्यमिति।** 'नौवयोधर्म' इत्यादिना यत्। याज्ञिकाश्वादौ षष्ठीसमासः।

**क्वचिदित्यादिना** शाणादेर्देयस्याचारनियततां दर्शयति। **याज्ञिकादीनामश्वादीति।** दातव्यमित्यनुषङ्गः। **क्वचिदयमाचारो व्यवस्थित इति।** वर्द्धितको नाम=मूले स्थूलोऽग्रे सूक्ष्म ओदनापिण्डः, स कर्मकराय

**भावबोधिनी**

यादनपेते' इससे यत् होता है अथवा "नौवयोधर्म' आदि से। इसी लिए दो व्युत्पत्तियाँ लिखी गई हैं।] उदा०—स्तूपेशाणः। मुकुटेकार्षापणम्। हलेद्विपदिका। हलेत्रिपदिका। दृषदिमाषकः। 'संज्ञायाम्' ( २।१।४४ ) से समास है और 'कारनाम्नि च प्राचां हलादौ" ( ६।३।१० ) से विभक्ति का अलुक् होता है। हारी के उदा०—याज्ञिकाश्वः। वैयाकरणहस्ती। मातुलाश्वः। पितृव्यगवः।

[ उक्त उदाहरणों में धर्म्यत्व कैसे? इसका उत्तर है—] कहीं-कहीं यह आचार व्यवस्थित है—स्तूपादि में शाणादि देना चाहिए, याज्ञिकादि को अश्वादि देने चाहिए। [ इस लिए याज्ञिकादि हारी हैं क्योंकि वे देय अश्वादि को स्वीकार कर लेते हैं।]

धर्म्य—इसका क्या फल है? स्तम्बेरमः। कर्मकरवर्द्धितकः। [ सप्तम्यन्त पूर्वपद हैं किन्तु 'रम' धर्म्यवाचक नहीं है। नीचे मोटा चौड़ा और ऊपर पतला भात का पिण्ड जो काम करने वाले मजदूरों आदि को दिया जाता है वह 'वर्द्धितकर' कहा जाता है। वह तो उसकी मजदूरी है, धर्म्य नहीं है। अतः दोनों में पूर्वपद का आदि उदात्त नहीं होता है। ]

**वाडवः, तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते हरणमिति तदुच्यते। परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेन—इत्येतदहरण इत्यनेन ज्ञाप्यते, तेन वाडवहार्यमिति हारिस्वरः सिद्धो भवति ॥**

## २७२९. युक्ते च ॥ ६६ ॥ ( ३८०० )

**युक्तवाचिनि च समासे पूर्वपदमाद्युदात्तं भवति। गोबल्लवः। अश्वबल्लवः। गोमणिन्दः। अश्वमणिन्दः।**

**न्यासः**

प्रयोजनं दर्शयति। **वाडवहार्यमिति**। 'ऋहलोर्ण्यत्' इति हरतेर्ण्यद्—हार्यम्, तत् पुनस्तदेव ग्रहणम्। वाडवस्य हार्यं वाडवहार्यम्। तत्र यदि ज्ञापनार्थमनन्तरोक्तस्यार्थस्य हरणप्रतिषेधो न क्रियेत, तदा परत्वाद् 'गतिकारकोपपदात् कृत्' इति कृत्स्वरेणोत्तरपदस्यान्तस्वरितत्वं स्यात्। अस्मिंस्तु सत्ययमेव हारिस्वरो भवति। स्तूपेशाण इत्यादौ यत्र सप्तम्यन्तं पूर्वपदं तत्र 'समासस्य' इत्यस्यापवादे 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वरे प्राप्ते पूर्ववदाद्युदात्तमिदमुच्यते।

पूर्वपदानि च प्रायेणान्तोदात्तानि, तथा हि—स्तूपसमुच्छ्राय इत्यस्य चौरादिकस्य पचाद्यचि स्तूपशब्दो व्युत्पाद्यते, तेनासावन्तोदात्तः। सप्तम्या सहैकदेशे विकृतेऽन्तोदात्त एव भवति। 'एकादेश उदात्तेनोदात्तः' इति। 'मकि मण्डने' इत्येतस्माद् 'उणादयो बहुलम्' इत्युणादित्वम्, नलोपश्च, तेन मकुटशब्द आद्युदात्तः। 'हल विलेखने' इत्येतस्मात् 'खनो घ च' इति घित्करणेनान्यतोऽपि घो भवतीति ज्ञापितत्वाद् घप्रत्ययः। तेन हलशब्दोऽन्तोदात्तः। 'दृ विदारणे' इत्यस्माद् 'शॄ दृभसोऽदिः' इति 'दृणातेः षुग् ह्रस्वश्च' इति दृषच्छब्दो व्युत्पाद्यते, तेन सोऽप्यन्तोदात्तः।

**याज्ञिकाश्व इत्यादयः** षष्ठीसमासाः। तत्र समासस्वरे प्राप्ते हारिवाचिनः पूर्वपदस्याद्युदात्तत्वं यथा स्यादित्येवमर्थमिदम्। अत्र च पूर्वपदानामुत्तरपदानां चासमासावस्थायां यः स्वरः स नाऽऽख्यायते; समासे कृते तस्य प्रयोगसमवायित्वात्। नापि समासे कृते तस्य प्राप्तिरस्ति। स 'प्रकृतिभावेन तस्मिन् प्राप्ते सतीदमारभ्यते' इत्यस्यार्थस्य प्रदर्शनार्थमाख्यायते। अत एव च पूर्वत्रापि नाख्यातः ॥ ६५ ॥

**युक्ते च ॥** युक्तः=समाहितः, कार्ये तत्पर इत्युच्यते। **गोबल्लव इति**। अधिकारनाम, सोऽस्यास्तीति

**पदमञ्जरी**

दीयते, अन्यथा कर्म न कुर्यादिति, न त्वयं धर्मः। बीजावापः = **बीजनिषेकः**, गर्भाधानम्। **वाडवहरणमिति**। **क्वचिदयमाचारो** व्यवस्थितः—वाडवाय बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं योग्यमशनादि दातव्यमिति। हरणशब्दः कर्मसाधनः। अत्रास्मिन्स्वरे निवृत्ते कृत्स्वरे प्राप्ते 'अनो भावकर्मवचनः' इत्युत्तरपदान्तोदात्तत्वं भवति। ननु च परत्वादेवायं स्वरो भविष्यति, तत्किं हरणप्रतिषेधेन ? तत्राह—**परोऽपीत्यादि**। अत्र पूर्वपादानां स्वरो नाऽख्यानातः; अप्रयोजनत्वात् ॥ ६५ ॥

**युक्ते च ॥** वल्लवादयः शब्दा गवादीनां पालकवचनाः। मणिं ददातीति मणिन्दः पृषोदरादिः। **गा सञ्चष्टे,**

**भावबोधिनी**

अहरण में—इसका क्या फल है ? वाडवहरणम्। वडवा = घोड़ी का जो है वह—वाडवः, उसके बीजनिषेकादि के बाद शरीर की पुष्टता के लिए जो दिया जाता है वह 'हरण' ऐसा कहा जाता है। [ इसलिए वाडव हारी है, हरण अर्थ है, यह सूत्र नहीं लग सकता। ] 'परवर्त्ती भी कृत्स्वर विप्रतिषेध द्वारा हारीस्वर से बाधित कर दिया जाता है'—यह बात इस 'अहरणे' कथन से ज्ञापित होती है। इसलिए 'वाडवहार्यम्' यहाँ हारी स्वर सिद्ध होता है। [ अतः 'गतिकारकोपपदात् कृत्' को बाध कर यही सूत्र पूर्वपद का आदि उदात्त करता है। ] ॥ ६५ ॥

युक्तवाची समास में भी पूर्वपद आदि उदात्त होता है। [ युक्त = समाहित कार्य में लगा हुआ। ] उदा०—गोबल्लवः। अश्वबल्लवः। [ बल्लव शब्द पालकवाचक है। ] गोमणिन्दः। अश्वमणिन्दः [ मणिं ददाति—इसमें विभक्ति

**गोसंख्यः । अश्वसंख्यः । युक्त इति = समाहितः, कर्त्तव्ये तत्परो यः स उच्यते ॥**

**२७३०. विभाषाऽध्यक्षे ॥ ६७ ॥ ( ३८०१ )**

**अध्यक्षशब्द उत्तरपदे विभाषा पूर्वपदमाद्युदात्तं भवति । गवाध्यक्षः । गवाध्यक्षः । अश्वाध्यक्षः । अश्वाध्यक्षः ॥**

**२७३१. पापं च शिल्पिनि ॥ ६८ ॥ ( ३८०२ )**

**पापशब्दः शिल्पिवाचिन्युत्तरपदे विभाषाऽऽद्युदात्तो भवति । पापनापितः । पापनापितः । पापकुलालः पापकुलालः ।**

**न्यासः**

'वप्रकरणेऽन्येभ्योऽपि दृश्यते' इति वप्रत्ययः, गवां बल्लव इति षष्ठीसमासः । अत्रापि समासस्वर एव प्राप्ते पूर्वपदाद्युदात्तत्वं विधीयते ।, **गोमणिन्द इति** । मणिं ददातीति 'आतोऽनुपसर्गे कः', 'तत्पुरुषे कृति बहुलम्' इति विभक्तेरलुक्, ततो गवां मणिन्द इति षष्ठीसमासः । अत्रापि समासस्वर एव प्राप्तेऽयं विधिः । **गोसंख्य इति** । गां सञ्चष्ट इति 'समि ख्यः' इति कः, उपपदसमासः, 'गतिकारकोपपदात्' इति कृत्स्वरे प्राप्ते पूर्वपदस्योदात्तार्थमिहापि वचनम् । ननु च परत्वात् थाथादिस्वरः प्राप्नोति, तस्माद् गोवल्लवादौ कथमिदं वचनमिति, युक्तस्वरं कृत्स्वर एव बाधेत ? एवं तर्हि पूर्वविप्रतिषेधो वक्तव्यः; परशब्दस्येष्टवाचित्वात् ।

गोबल्लव इत्येवमादयः समासाः सर्वे युक्तवाचिन इति दर्शयन्नाह— **युक्त इति समाहित इत्यादि** । अनेन 'युज समाधौ' इत्यस्य निष्ठायां युक्त इत्येतद् दर्शयति ॥ ६६ ॥

**विभाषाऽध्यक्षे** ॥अध्यक्षशब्दोऽपि समासे युक्तवाच्येव, तत्र पूर्वेण नित्यमाद्युदात्तत्वे प्राप्ते विभाषेयमारभ्यते । आद्युदात्तत्वेन मुक्ते समासान्तोदात्तत्वमेव भवति । गवामध्यक्ष इति षष्ठीसमासः ॥ ६७ ॥

**पापञ्च शिल्पिनि** ॥ पापमिति स्वरूपग्रहणम् । शिल्पिनीत्यत्रार्थग्रहणम् । अर्थग्रहणं किमर्थम्, ग्रामशिल्पिनीत्यत्र शिल्पिग्रहणादर्थग्रहणं प्रसिद्धम्, अत इहाप्यर्थग्रहणं विज्ञायते ? नित्यं समासस्वरे प्राप्ते विकल्पेन

**पदमञ्जरी**

'समि ख्यः' इति कः, गोसंख्यः, उपपदसमासः । नन्वत्र परत्वात्थाथादिस्वरः प्राप्नोति, अस्य तु गोवल्लावादिरवकाशः ? सत्यम्; पूर्वविप्रतिषेधस्त्वत्र पठितव्यः चित्स्वराद्धारिस्वरः—पितृगवः, मातृगवः, कृत्स्वराच्च वाडवहार्यम् । युक्तस्वरश्च कृत्स्वरादित्येव, कृतो यः स्वरस्थाथादिसूत्रेण तस्माद्युक्तस्वरो भवति पूर्वप्रतिषेधेनेत्यर्थः । **युक्तः समाहित इति** । 'युज समाधौ' ( धा० पा० ११७७ ) इत्यस्यैतद्रूपमित्यर्थः ॥ ६६ ॥

**विभाषाऽध्यक्षे** ॥ अध्यक्षशब्दोऽपि समासे युक्तवाच्येवेति सूत्रे पूर्वेण नित्ये प्राप्ते विकल्पः ॥ ६७ ॥

**पापं च शिल्पिनि** ॥ पापमिति स्वरूपग्रहणम्, शिल्पिनीति चार्थग्रहणम्; व्याख्यानात् ॥ ६८ ॥

**भावबोधिनी**

का अलुक् अथवा पृषोदरादि मानकर नुमागम । गवां मणिन्दः—गोमणिन्दः । अश्वानां मणिन्दः—अश्वमणिन्दः । यह भी पालकार्थक है । ] गोसंख्यः । अश्वसंख्यः । [ गां सञ्चष्टे—इसमें सम् + ख्या + क = अ, संख्यः, गवां संख्यः—गोसंख्यः । यह भी पालकार्थक है । सभी में पूर्वपद का आदि उदात्त होता है । ]

युक्त—यह समाहित, अपने कर्तव्य में लगा हुआ जो पुरुष है वह कहा जाता है ॥ ६६ ॥

अध्यक्ष शब्द उत्तरपद रहने पर पूर्वपद विकल्प से आद्युदात्त होता है । उदा०—गवाध्यक्षः । अश्वाध्यक्षः । [ पक्ष में समास का अन्तोदात्त होता है । गो + अध्यक्षः में ओ का अवङ् होता है । ] ॥ ६७ ॥

शिल्पवाची उत्तरपद रहने पर पापशब्द पूर्वपद विकल्प से आदि उदात्त स्वरवाला होता है । उदा०—पापनापितः । पापकुलालः ।

**'पापाणके कुत्सितैः' ( २.१.५४ ) इति पापशब्दस्य प्रतिपदोक्तः समानाधिकरणसमास इति षष्ठीसमासे न भवति—पापस्य नापितः पापनापित इति ॥**

## २७३२. गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ ६९ ॥ ( ३८०३ )

**गोत्रवाचिन्यन्तेवासिवाचिनि चोत्तरपदे माणवब्राह्मणयोश्च क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । जङ्घावात्स्यः । यो जङ्घादानं ददान्यहमिति वात्स्यः सम्पद्यते स जङ्घावात्स्य इति क्षिप्यते । भार्यासौश्रुतः । सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः । वशाब्राह्मकृतेयः । ब्रह्मकृतशब्दः शुभ्रादिषु पठ्यते । गोत्र ।**

**न्यासः**

पूर्वपदस्याद्युदात्तत्वं विधीयते, तेन मुक्ते समासस्वर एव भवति । अथेह कस्मान्न भवति—पापस्य नापित इति? अत आह—**पापशब्दस्य प्रतिपदोक्त इति । तस्मात् षष्ठीसमासे न भवतीति** । प्रतिपदोक्ते हि समासे सति लक्षणप्रतिपदोक्तपरिषया तस्यैव ग्रहणं भविष्यति; नान्यस्य ॥ ६८ ॥

**गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे** ॥ 'गोत्राधिकारादन्यत्र गोत्रग्रहणे लौकिकं गोत्रं गृह्यते' इत्युक्तम्, लोके चापत्यमात्रे प्रसिद्धम्, तेनेह तस्यैव ग्रहणम्, न तु पारिभाषिकस्य । अन्तेवासी = शिष्यः । तत्रान्तेवासिग्रहणादर्थग्रहणं प्रसिद्धम् । अत इहाप्यर्थ एव गृह्यते, न स्वरूपम् । माणवब्राह्मणयोः स्वरूपमेव । मनोरयं माणवः, अस्मादेव निपातनाण्णत्वम् । 'अबाधकान्यपि निपातनानि भवन्ति' इति पक्षे मानव इत्यपि भवति । ब्रह्मणोऽयं ब्राह्मणः । यस्तु 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः' इति माणवकशब्दो व्युत्पाद्यते, यश्च ब्रह्मणोऽपत्यं ब्राह्मण इत्यर्थे ब्राह्मणशब्दः, तयोर्गोत्रग्रहणेनैव सिद्धम् । क्षेपः=निन्दा । **जङ्घावात्स्य इति** । 'सुप्सुपा' इति समासः । कथं पुनरत्र क्षेपः ? इत्याह—**यो जङ्घादानमित्यादि** । जङ्घादानं किमप्याचारनियतं देयमुच्यते, तद् ददान्यहमित्यतोऽभिप्रायेण वात्स्यः सम्पद्यते । वात्स्योऽहमित्यभ्युपगच्छति यः स जङ्घावात्स्य इत्येवं निन्द्यते । अवात्स्यस्यापि ततो जङ्घादानं प्रति वात्स्यत्वाभ्युपगमात् । वात्स्यशब्दोऽयं गर्गादिः । **भार्यासौश्रुत इति** । सुश्रुतोऽपत्यं सौश्रुत इत्यण्, भार्याप्रधानं सौश्रुतो भार्यासौश्रुतः । समानाधिकरणाधिकारे 'शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च' इति समासः । सुश्रुतस्य भार्याप्रधानतयेत्यनेन समानाधिकरणेनात्र समास इपि दर्शयति । सुश्रुतोऽपत्यमित्यनेनापि सौश्रुतस्याण्प्रत्ययान्तत्वम् । **वशाब्राह्मकृतेय इति** । तेनैवोपसंख्यानेन समासः । अत्रापि वशाप्रधानतया ब्रह्मकृतापत्यस्य क्षेपः ।

**पदमञ्जरी**

**गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे** ॥ गोत्रान्तेवासिनोरर्थग्रहणम्, इतरयोः स्वरूपग्रहणम् । अपत्याधिकारादन्यत्र लौकिकं गोत्रमित्यनेन लौकिकमपत्यमात्रं गोत्रं गृह्यते । **जङ्घादानमहं ददानीति** । जङ्घादानं करवाणीत्यर्थः, ओदनपाकं पचतीतिवत् । अत्र श्राद्धादौ वात्स्यानामेव पादप्रक्षालनं क्रियते, तत्रावात्स्यः सन्वात्स्योऽहमिति ब्रूते, तल्लाभाय स जङ्घावात्स्य इति क्षिप्यते । वत्सशब्दो गर्गादिः, 'सुप्सुपा' इति समासः, सुष्ठु शृणोतीति सुश्रुत्, तस्यापत्यं सौश्रुतः । **भार्याप्रधानतयेति** । शाकपार्थिवादित्वादुत्तरपदलोपी समास इति दर्शयति । **वशाब्राह्मकृतेय इति** । वशा=वन्ध्या भार्या, सौश्रुतवत्समासः । दक्षेण प्रोक्तं दाक्षम्, तदधीते दाक्षः,

**भावबोधिनी**

"पापाणके कुत्सिते" ( २।१।५४ ) से पाप शब्द का प्रतिपदोक्त समानाधिकरण ( कर्मधारय ) समास है, इसलिए षष्ठीसमास में नहीं होता है—पापस्य नापितः—पापनापितः ॥ ६८ ॥

गोत्रवाची और अन्तेवासिवाचक उत्तरपद रहने पर क्षेप = निन्दा के वाचक समास में माणव और ब्राह्मण का पूर्वपद आद्युदात्त होता है । उदा०—जङ्घावात्स्यः । 'मैं जंघादान दे दूँ यह कह कर जो वात्स्य ( वत्सगोत्रसम्बन्धी ) बनता है उसे 'जङ्घावात्स्यः' ऐसा कह कर निन्दत किया जाता है । 'भार्यासौश्रुतः'–सुश्रुत के अपत्य की 'भार्याप्रधानता के कारण

**अन्तेवासि—कुमारीदाक्षाः। कम्बलचारायणीयाः। घृतरौढीयाः। ओदनपाणिनीयाः। कुमार्यादिलाभकामा ये दक्षादिभिः प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त एवं क्षिप्यन्ते। अन्तेवासि।**

**माणव—भिक्षामाणवः। भिक्षां लप्स्येऽहमिति माणवो भवति। माणव।**

**ब्राह्मण—दासीब्राह्मणः। वृषलीब्राह्मणः। भयब्राह्मणः। यो भयेन ब्राह्मणः सम्पद्यते। अत्र यस्यान्यत् समासलक्षणं नास्ति, 'सुप्सुपा' इत्येव तत्र समासः कर्त्तव्यः।**

## न्यासः

**कुमारीदाक्षा इति**। 'सुप्सुप्पा' इति समासः। एवं **कम्बलचाराणीया** इत्यत्रापि। दाक्षिणाप्रे पोक्तं दाक्षं शास्त्रम्। **'इञश्च'** इत्यण्, दाक्षमधीते तद्वेत्तीति वा पुनरण्, तस्य **'प्रोक्ताल्लुक्'** इति लुक्। चरशब्दो नडादिः, चरस्यापत्यं चारायणः, तेन प्रोक्तं चारायणीयम्। 'वृद्धाच्छः', तदधीते' इति पूर्ववदण्। पाणिनिना प्रोक्तं पाणिनीयम्, ततः पूर्ववदध्येतर्यण्, तस्य च लुक्। **कुमार्यादिलाभकामा इति**। आदिशब्देन कम्बलौदनादीनां ग्रहणम्। अत्रापि 'सुप्सुपा' इति समासः। तेनैवोपसंख्यानेन वा कुमारीलाभकामाः कुमारीदाक्षाः।

**भिक्षामाणव** इति। पूर्ववत् समासः। भिक्षालाभकामो माणवो भिक्षामाणवः।

**दासीब्राह्मण** इति। दास्याः कामयिता ब्राह्मणो दासीब्रह्मणः। एवं **वृषलीब्राह्मणः, भयब्राह्मण इति**। 'कर्तृकरणे कृता बहुलम्' इति बहुलवचनादकृतापि समासः। 'तृतीया' इति योगविभागद्वा।

## पदमञ्जरी

दाक्षेश्छात्त्रो वा दाक्षः। चरशब्दो नडादिः, चारायणेन प्रोक्तमधीते तस्य वा शिष्यश्चारायणीयः। एवं पाणिनीयः। **कुमार्यादिलाभकामा इति**। तत्प्रोक्ते ग्रन्थे श्रद्धायामसत्यामपि ये कुमार्यादिलाभकामास्तत्र प्रवर्तन्ते त एवं क्षिप्यन्ते। पूर्ववत्समासः। माणवब्राह्मणयोरपत्यवाचित्वेन प्रसिद्ध्यभावात्पृथग्ग्रहणम्। अपर आह—'तस्येदम्' इत्यणन्तयोर्ग्रहणम्, निपातनाच्च माणवे णत्वमिति।

## भावबोधिनी

क्षेप = निन्दा होती है। 'वशाब्राह्मकृतेयः। [ वशा = वन्ध्या भार्या। ब्रह्मकृत शब्द से ढ = एय प्रत्यय होता है क्योंकि ] शुभ्रादिगण में ब्रह्मकृत शब्द का पाठ है। [ यहाँ वन्ध्या होने से निन्दा है। ]

अन्तेवासी—कुमारीदाक्षाः। [ दक्षेण प्रोक्तम् दाक्षम्, तदधीते दाक्षः, अथवा दाक्षेः छात्रः दाक्षः। अथवा दक्षिणा प्रोक्तं दाक्षम्, अण् होता है, तदधीते तद् वेत्ति वा—इसमें पुनः अण्, लुक्—दाक्षः। 'सुप्सुपा' से समास होता है। ] कम्बलचारायणीयाः। [ चर शब्द नडादिगणीय है, फ = आयन, प्रोक्तादि या शिष्य अर्थ में स्वर होता है। ] घृतरौढीयाः। ओदनपाणिनीयाः [ इनमें अन्तेवासियों की निन्दा कैसे प्रतीत होती है ? ] कुमारी आदि ( = कम्बल, घृत, ओदन ) के लाभ की इच्छा से जो लोग दक्ष आदि आचार्यों द्वारा प्रोक्त शास्त्रों का अध्ययन करते हैं अथवा उनका शिष्यत्व प्राप्त करते हैं, उनकी इस प्रकार से निन्दा की जाती है। अन्तेवासी के उदा०—समास। [ इनमें पूर्वपद का आदि उदात्त होता है। ]

माणव का उदा०—भिक्षामाणवः। 'मैं भीख प्राप्त कर लूँगा' इस भावना से जो माणव = ब्रह्मचारी बन जाता है। माणव के उदा० समास।

ब्राह्मण के उदा०—दासीब्राह्मणः। वृषलीब्राह्मणः। भयब्राह्मणः। [ दासी को चाहने वाला ब्राह्मण, शूद्री को चाहने वाला ब्राह्मण। ] जो भयवश ब्राह्मण बन जाता है—वह भयब्राह्मण है। यहाँ जिन उदा०—में समास करने वाला कोई दूसरा सूत्र नहीं है उनमें "सुप् सुपा" इसी सूत्र से समास करना चाहिए।

गोत्रादिष्विति किम् ? दासीश्रोत्रियः क्षेप । इति । किम् ? महाब्राह्मणः[1] ॥

## २७३३. अङ्गानि मैरेये ॥ ७० ॥ ( ३८०४ )

मैरेयशब्द उत्तरपदे तदङ्गवाचीनि पूर्वपदान्याद्युदात्तानि भवन्ति । गुडमैरेयः । मधुमैरेयः । मद्यविशेषो मैरेयः, तस्य गुडविकारस्य गुडोऽङ्गं भवति । मधुविकारस्य तस्य मधु मध्वङ्गम् ।

अङ्गानीति किम् ? परममैरेयः । मैरेय इति किम् ? पुष्पासवः । फलासवः ॥

## २७३४. भक्ताख्यास्तदर्थेषु ॥ ७१ ॥ ( ३८०५ )

भक्तम् = अन्नम्, तदाख्याः = तद्वाचिनः शब्दाः, तदर्थेषूत्तरपदेषु आद्युदात्ता भवन्ति । भिक्षाकंसः । श्राणाकंसः । भाजीकंसः । भिक्षादयोऽन्नवचनाः ।

**न्यासः**

दासीश्रोत्रिय इति । दासीब्राह्मण इत्यनेन तुल्यम् । समासस्वरापवादो योगः ॥ ६९ ॥

अङ्गानि मैरेये ॥ अङ्गशब्दोऽयं कारणवाची । आरम्भकं यत् तदङ्गमुच्यते । अङ्गानीति बहुवचनं स्वरूपविधिनिरासार्थम् । सुरावर्ज्यं मद्यम् = मैरेयमित्यभिधीयते । गुडमैरेयः, मधुमैरेय इति । षष्ठीसमासः । गुडविकारस्य मैरेयस्य गुडोऽङ्गमिति । तत्कारणत्वात् । अयमपि समासस्वरापवादो योगः ॥ ७० ॥

भक्ताख्यास्तदर्थेषु ॥ आख्याग्रहणं स्वरूपविधिनिरासार्थम् । ननु च बहुवचनादेव स्वरूपविधिर्न भविष्यति ?

**पदमञ्जरी**

भयब्राह्मण इति । यो ब्राह्मण एव सन् राजदण्डादिभयेन ब्राह्मणाचारं करोति न श्रद्धया, स एवं क्षिप्यते । 'कर्तृकरणे कृता बहुलम्' इति बहुलवचनादकृतापि समासः । दासीश्रोत्रियो दासीब्राह्मणवत् ॥ ६९ ॥

अङ्गानि मैरेये ॥ अङ्गम् = आरम्भकम्, बहुवचनं स्वरूपविधिनिरासार्थम् । सुराव्यतिरिक्तं मद्यम् = मैरेयम् । तदङ्गवाचिनीति । मैरेयशब्द इति प्रकृतम्, इह तु तच्छब्देन तदर्थः परामृश्यते । [2]पौष्पासव इति । आसवः = मद्यविशेषः, यत् पौष्पेण मधुना द्रव्यान्तरेण चारभ्यते तस्य पौष्पमङ्गं भवति । पुष्पासव इति तु युक्तः पाठः ॥ ७० ॥

भक्ताख्यास्तदर्थेषु ॥ बहुवचननिर्देशादेव स्वरूपविधिनिरासे सिद्धे आख्याग्रहणं भक्तविशेषवाचिनां

**भावबोधिनी**

गोत्रादि में—इसका क्या फल है ? दासीश्रोत्रियः । [ गोत्रादि नहीं है । ] क्षेप में—इसका क्या फल है ? महाब्राह्मणः । [ महत् शब्द निन्दार्थक नहीं है । वास्तव में 'ब्राह्मण आदि कुछ शब्दों के पूर्व महत् शब्द निन्दार्थक हो जाता है । अतः कोई दूसरा प्रत्युदाहरण देना चाहिए था । इसीलिए सिद्धान्तकौमुदी में 'परमब्राह्मणः' यह प्रत्युदाहरण दिया गया । संभव है काशिकाकार के समय 'महाब्राह्मणः' निन्दितार्थवाचक न रहा हो । ] ॥ ६९ ॥

मैरेय शब्द उत्तरपद रहने पर उसके अङ्गवाचक पूर्वपद आद्युदात्त होते हैं । उदा०—गुडमैरेयः । मधुमैरेयः । एक विशेष प्रकार की मद्य 'मैरेय' है उस गुड़विकार मैरेय का गुड़ भी अंग होता है, मधुविकार मैरय का अंग मधु भी होता है । [ अतः गुड और मधु पूर्वपद का आदि उदात्त हो जाता है । ]

अङ्ग हों—इसका क्या फल है ? परममैरेयः । [ यहाँ अंग की प्रतीति नहीं है । ] मैरेय—इसका क्या फल है ? पुष्पासवः । फलासवः । [ मद्यविशेष मैरेय नहीं है अतः यहाँ समासान्त ही उदात्त है । ] ॥ ७० ॥

भक्त = अन्न ( भात ) तदाख्या = उसके वाचक शब्द, तदर्थ ( उस भक्त = भक्षणीय अन्नादि के अर्थ ) उत्तरपद

---

१. अत्र 'परमब्राह्मण' इत्येव प्रत्युदाहार्यमुचितम्, 'महाब्राह्मण' इत्यनेनापि क्षेपार्थप्रतीतेः सर्वानुभवसिद्धत्वात् । त्रिपाठी ।

२. पुष्पासवः—इति काशिकापाठः ।

**भक्ताख्या इति किम् ? समाशशालयः। समशनं समाश इति क्रियामात्रमुच्यते, न द्रव्यम्। तदर्थेष्विति किम् ? भिक्षाप्रियः। बहुव्रीहिरयमत्र पूर्वपदमन्तोदात्तम् ॥**

**२७३५. गोबिडालसिंहसैन्धवेषूपमाने ॥ ७२ ॥ ( ३८०६ )**

**गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं भवति। धान्यंगवः। हिरण्यगवः। भिक्षाविडालः। तृणसिंहः। काष्ठसिंहः। सक्तुसैन्धवः। पानसैन्धवः। धान्यं गौरिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् 'उपमितं**

**न्यासः**

नैवदस्ति; बहुवचनं ह्येतदर्थस्यैव बहुत्वमाचक्षीत—बह्वर्थवृत्तिर्यो भक्तशब्द इति। अपि च बहुवचनेन स्वरूपविधौ बाधितेऽन्नादय एव ये भक्तशब्देन समासार्थपर्यायास्ते गृह्येरन्, न तु भक्तविशेषवाचिनो भिक्षादयः। आख्याग्रहणे तु स्वरूपविधौ बाधिते बहुवचनेन तद्विशेषाणां ग्रहणं सम्पद्यते। तस्मा इदं तदर्थम्। तच्छब्देन भक्ताख्यानामर्थो निर्दिश्यते। **भिक्षाकंस इत्येवमादयः** 'चतुर्थीतदर्थार्थ' इति चतुर्थीसमासाः। ननु च प्रकृति-विकृतिग्रहणं तत्र चोद्यते, न चेह प्रकृतिविकारभावः ? सत्यमेतत्; इदमेव तु वचनं ज्ञापकम्—भक्ताख्यायां तादर्थ्यमात्रे चतुर्थी समस्यत इति।

**समशनं समाश इति**। 'अश भोजने' इत्यस्मात् सम्पूर्वाद् भावे घञ्। **क्रियामात्रमुच्यत इति**। मात्रशब्देन भक्तव्यवच्छेदं करोति। **अत्र पूर्वपदमन्तोदात्तमिति**। भिक्षाशब्दः 'गुरोश्च हलः' इति भिक्षेरप्रत्ययं कृत्वा व्युत्पाद्यते, श्राणाशब्दोऽपि 'श्रै पाके' इत्यस्मात् क्तप्रत्ययम्। तेन द्वावपि प्रत्ययस्वरेणान्तोदात्तौ। 'बहुव्रीहौ प्रकृत्या' इति प्रकृतिभावेनान्तोदात्तावेव भवतः। समासस्वरापवादो योगः ॥ ७१ ॥

**गोविडालसिंहसैन्धवेषूपमाने** ॥ उपमानशब्दोऽयं गवादिभिः प्रत्येकमभिसम्बध्यते; अन्यथैकवचनान्तस्य बहुवचनान्तैः समानाधिकरणेन विशेष्यविशेषणभावो न स्यात्। अथ वा—सुब्व्यत्यये बहुवचनस्यैव स्थान इदमेकवचनं द्रष्टव्यम्। **धान्यगव इति**। 'गोरतद्धितलुकि' इति टच् समासान्तः। अत्र चित्स्वरे प्राप्ते पूर्वपदस्याद्युदात्तत्वं विधीयते। **भिक्षाविडाल इत्येवमादौ** समासस्वरे। **उपमानार्थोऽपीत्यादि**। योऽयमत्रोदाहरणे

**पदमञ्जरी**

भिक्षादीनां ग्रहणार्थम्; अन्यथा पर्यायाणामन्नादीनामेव ग्रहणं स्यात्। **भिक्षाकंसादयः षष्ठीसमासाः**, येषां प्रकृति-विकारभावे चतुर्थीसमास इति पक्षः। अन्येषां चतुर्थीसमासाः ॥ ७१ ॥

**गोविडालसिंहसैन्धवेषूपमाने** ॥ उपमानशब्दस्य सह गवादिभिः प्रत्येकं सम्बन्धादेकवचनम्। **उपमानार्थोऽपीति**। यो यत्रोदाहरणे उपमानार्थः सम्भवति स तत्र योजयितव्यः। [1]**यथाप्रसिद्धं चेति**।

**भावबोधिनी**

परे रहते आद्युदात्त होते हैं। उदा०—भिक्षाकंसः। श्राणाकंसः। भाजीकंसः। यहाँ भिक्षा आदि शब्द अन्नवाची हैं। [ ये आद्युदात्त होते हैं। ]

भक्ताख्या=भक्षणीयवाचक-इसका क्या फल है ? समाशशालयः। शमशनं=समाशः ( साथसाथ भोजन करना )—इससे केवल क्रिया कही जाती है भक्षणीय द्रव्य नहीं।

तदर्थवाले—इसका क्या फल है ? भिक्षाप्रियः। [ भिक्षा प्रिया यस्य सः तादृशः पुरुषः ] यहाँ यह बहुव्रीहि है, पूर्वपद अन्तोदात्त है। [ प्रिय शब्द भक्षणीय अर्थ के लिये नहीं है। भिक्षाकंसः=भीख के लिये कटोरा—उक्त उदाहरणों में कंस भक्त=अदनीय अन्नादि के लिए है अतः तदर्थ में होने से पूर्वपद आद्युदात्त होता है। ] ॥ ७१ ॥

गो आदि उपमानवाची उत्तरपद रहने पर पूर्वपद आद्युदात्त होता है। उदा०—धान्यगवः। हिरण्यगवः। भिक्षा-विडालः। तृणसिंहः। काष्ठसिंहः। सक्तुसैन्धवः। पानसैन्धवः। [ सभी में पूर्वपद आद्युदात्त होता है। ] इनमें धान्यं गौः

१. यथाप्रसिद्धि—इति काशिकापाठः।

व्याघ्रादिभिः' ( २.१.५६ ) इति समासः । उपमानार्थोऽपि यथासम्भवं यथाप्रसिद्धि च योजयितव्यः । गवाकृत्या सन्निवेशितं[1] धान्यगवशब्देनोच्यते ।

उपमान इति किम् ? परमसिंहः ॥

२७३६. अके जीविकार्थे ॥ ७३ ॥ ( ३८०७ )

अकप्रत्ययान्त उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । दन्तलेखकः । नखलेखकः । अवस्करशोधकः । रमणीयकारकः । दन्तलेखनादिभिर्येषां जीविका त एवमुच्यन्ते । 'नित्यं क्रीडाजीविकयोः' ( २.२.१७ ) इति समासः ।

**न्यासः**

उपमानार्थः सम्भवति, स तत्र योजयितव्यः । **यथाप्रसिद्धि चेति** । यस्योपमानस्यार्थस्य च लोके प्रसिद्धिः स तथा योजयितव्यः । तत्र दिङ्मात्रमुपमानार्थयोजनस्य दर्शयितुमाह—**गवाकृतिः**—गोसंस्थानम्, तया **सन्निवेशितं** गोर्यत्संस्थानं तेन सन्निवेशितं व्यवस्थापितं **धान्यगवशब्देनोच्यते**; तुल्याकृतित्वात् । एवमन्यत्रापि यत् किञ्चित् सादृश्यं योज्यम् । यथा गोरचनाविशेषावयवानामेवं यस्य हिरण्यस्य तद्धिरण्यं हिरण्यगवशब्देनोच्यते । यथा विडाला अल्पप्रमाणास्तथा हि भिक्षा, यथा वा विडालाः क्वचिद् भवन्ति न सर्वत्र तथा भिक्षापि । एवं श्वाणविडालयोः सादृश्यमेवज्ञातीयकं योजयितव्यम् । सिंहाकृत्या सन्निविष्टं तृणं तृणसिंहः । यथा सैन्धवं शुक्लमेवं सक्तुः सक्तुसैन्धवः । एवं पानसैन्धवः ॥ ७२ ॥

**अके जीविकार्थे** ॥ अक इति प्रत्ययग्रहणम् । तत्र प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं विज्ञायत इत्याह—**अकप्रत्ययान्त उत्तरपद इति** । **जीविकावाचिनीति** । जीविका = जीविकः, तद्वाचिनीत्यर्थः । जीविकाशब्दो ह्यर्शआदेराकृतिगणत्वाद् मत्वर्थीयाकारान्तः सूत्र उपात्तः । अत एव दन्तलेखनादिभिर्येषां जीविका एवमुच्यत इत्याह—**दन्तलेखक इति** । लिखेर्ण्वुल्, षष्ठीसमासः । षष्ठी पुनः 'कर्तृकर्मणोः कृति' इति कर्मणि । **अवस्करशोधक इति** । 'शुध शौचकर्मणि' इत्यस्माण्ण्यन्ताण्ण्वुल् । **रमणीयकारक** इत्यत्रापि करोतेः ।

**पदमञ्जरी**

यस्योदाहरणस्य च यथा लोके प्रसिद्धिः स तथा योजयितव्यः । तत्र दिङ्मात्रं दर्शयति—**गवाकृत्येत्यादि** । आकृतिः=संस्थानम्, संनिवेशितम्=व्यवस्थापितम् । एवमन्यत्रापि यत्किञ्चित् सादृश्यं योजनीयम् ॥ ७२ ॥

**अके जीविकार्थे** ॥ **जीविकावाचिनीति** । प्रवृत्तिनिमित्तकथनमेतत्, जीविकारूपप्रवृत्तिनिमित्त इत्यर्थः ।

**भावबोधिनी**

इव [ हिरण्यं गौरिव; भिक्षा विडाल इव, तृणं सिंह इव, काष्ठं सिंह इव, सक्तुः सैन्धव इव— ] इस प्रकार से विग्रह करके व्याघ्रादि को आकृतिगण मानकर 'उपमितं व्याघ्रादिभिः' ( २।१।५६ ) सूत्र से समास होता है । और उपमान का अर्थ भी यथासंभव और यथाप्रसिद्धि समझ लेना चाहिए । गाय की आकृति से रखा गया अन्न 'धान्यगव' शब्द से कहा जाता है । [ जब कोई व्यक्ति धान्य के ढेर को गाय की आकृति के समान बना देता है तब उसे 'धान्यगवः' कहते हैं । इसी प्रकार सभी में अर्थ समझना चाहिए । ]

उपमान रहने पर—इसका क्या फल है ? परमसिंहः । [ यहाँ नहीं होता है । ] ॥ ७२ ॥

अकप्रत्ययान्त उत्तरपद में जीविकार्थवाची समास में पूर्वपद आद्युदात्त होता है । उदा०—दन्तलेखकः । नखलेखकः । अवस्करशोधकः । रमणीयकारकः । दांतों पर लिखना = चित्रकारी आदि करना—के द्वारा जिनकी जीविका चलती है वे इस प्रकार के शब्दों से कहे जाते हैं । "नित्यं क्रीडाजीविकयोः' ( २।२।१७ ) से समास होता है ।

---

१. 'अवस्थितम्'—इति पाठा० ।

**अक इति किम् ? रमणीयकर्त्ता । जीविकार्थ इति किम् ? इक्षुभक्षिकां मे धारयसि ॥**

## २७३७. प्राचां क्रीडायाम् ॥ ७४ ॥ ( ३८०८ )

**प्राग्देशवर्त्तिनां या क्रीडा तद्वाचिनि समासेऽकप्रत्ययान्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति । उद्दा॑लकपुष्पभञ्जिका । वीर॑णपुष्पप्रचायिका । शाल॑भञ्जिका । ताल॑भञ्जिका । 'संज्ञायाम्' ( ३.३.१०९ ) इति ण्वुल्, 'नित्यं क्रीडाजीविकयोः' ( २.२.१७ ) इति षष्ठीसमासः ।**

**प्राचामिति किम् ? जीवपुत्रप्रचा॑यिका । इयमुदीचां क्रीडा ।**

**क्रीडायामिति किम् ? तव पुष्पप्रचा॑यिका । पर्याये ण्वुच्प्रत्ययो भवति ॥**

### न्यासः

**रमणीयकर्तेति** । पूर्ववत् समासः । अत्र 'गतिकारकोपपदात् कृत्' इति प्रकृतिभावेनोत्तरपदमन्तोदात्तम् । **इक्षुभक्षिकामित्यादि** । 'पर्यायार्हणोत्पत्तिषु ण्वुच्' इति भक्षयतेर्ण्वुच् । अत्र 'षष्ठी' इति समासलक्षणेनैव समासः । अत्रापि पूर्ववदुत्तरपदमन्तोदात्तम् । कृत्स्वरापवादो योगः । एवमुत्तरत्रापि योगाः ।

'युक्तारोह्यादयश्च' इत्यतः प्राक् कृत्स्वरापवादो वेदितव्यः ॥ ७३ ॥

**प्राचां क्रीडायाम्** ॥ **प्राग्देशवर्तिनां या क्रीडेति** । एतेन प्राग्ग्रहणमिह न विभाषार्थम्, किञ्च क्रियाविशेषणमिति दर्शयति । **उद्दालकपुष्पभञ्जिकेत्यादि** । उद्दालकपुष्पादिषु कृद्योगे कर्मणि षष्ठी । **जीवपुत्रप्रचायिकेति** । अत्रापि प्रपूर्वाच्चिनोतेः संज्ञायां ण्वुल् । पूर्ववत् समासः । लित्स्वरेणोत्तरपदं मध्योदात्तम् ।

**तव पुष्पप्रचायिकेति** । 'षष्ठी' इत्यनेनैवात्र समासः । चित्स्वरेणोत्तरपदं मध्योदात्तम् ॥ ७४ ॥

### पदमञ्जरी

पर्यवसानभूमिस्तु तद्वान्, तदाह—**दन्तलेखनादिभिर्येषामिति** । **रमणीयकर्तेति** । अत्रापि 'नित्यं क्रीडाजीविकयोः' इति समासः, क्रीडायामेव हि तृजन्तं सम्भवति, न पुनर्जीविकायामिति तत्रार्थः ॥ ७३ ॥

**प्राचां क्रीडायाम्** ॥ प्राचां क्रीडायामिति श्रुतयोरेवान्वयसम्भवान्मतैनेत्यध्याहारो न युक्त इति मत्वाऽऽह— **प्राग्देशवर्तिनां या क्रीडेति** ॥ ७४ ॥

### भावबोधिनी

अक होने पर—इसका क्या फल है ? रमणीयकर्त्ता । [ यहाँ ण्वुल्=अक नहीं है अपितु तृच् है । ] जीविकार्थ में—इसका क्या फल है ? इक्षु-भक्षिकां में धारयसि । [यहाँ अक प्रत्ययान्त है किन्तु जीविकानिर्वाह अर्थ नहीं है । अतः यहाँ आद्युदात्त न होकर समास का अन्तोदात्त ही होता है । ] ॥ ७३ ॥

पूर्वदेश-वर्त्तियों जो क्रीडा उसके वाचक समास में अक-प्रत्ययान्त उत्तरपद में पूर्वपद आद्युदात्त होता है । उद्दालकपुष्पभञ्जिका । वीरणपुष्प-प्रचायिका । शालभञ्जिका । तालभञ्जिका । 'संज्ञायाम्' ( ३।३।१०९ ) से ण्वुल् प्रत्यय और 'नित्यं क्रीडाजीविकयोः' ( २।२।१७ ) से षष्ठी समास होता है । [ समासादि की विशेष जानकारी उक्त समास-सूत्रों की व्याख्या से करें । ]

पूर्वदेशवर्त्तियों की—इसका क्या फल है ? जीवपुत्रप्रचायिका । यह उत्तरवर्त्ती देश के लोगों की क्रीडा है । [ अतः यहाँ नहीं होता है । ]

क्रीडा में—इसका क्या फल है ? तव पुष्पप्रचायिका । यहाँ पर्याय = पाली अर्थ में ण्वुच् होता है ॥ ७४ ॥

**२७३८. अणि नियुक्ते ॥ ७५ ॥ ( ३८०९ )**

अणन्त उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तं भवति। छत्त्रधारः। तूणीरधारः। कमण्डलुग्राहः। भृङ्गारधारः।

नियुक्तः = अधिकृतः, स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति 'नियुक्तः'[1] इत्यनेन सिध्यति।

नियुक्त इति किम्? काण्डलावः। शरलावः॥

**२७३९. शिल्पिनि चाकृञः ॥ ७६ ॥ ( ३८१० )**

शिल्पिवाचिनि समासेऽणन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति, स चेदण् कृञो न भवति। तन्तुवायः। तुन्नवायः। वालवायः।

शिल्पिनीति किम्। काण्डलावः। शरलावः। अकृञ इति किम्? कुम्भकारः। अयस्कारः॥

**न्यासः**

अणि नियुक्ते ॥ छत्त्रधार इति। 'कर्मण्यण्'।

किमर्थं पुनरिदम्, यावता युक्तोऽभिमतः, तद्वाची न भवति? नियुक्तोऽधिकृत इत्यादि। 'युक्ते च' इत्यनेन हि यः कर्तव्ये युक्तः समाहितः, तस्य पूर्वपदस्याद्युदात्तत्वम्, तेनाधिकृतवाचिनि न सिध्यति। तस्मादधिकृतच्छत्त्रादिषु यः सहनियुक्तोऽभिप्रेतः, स च कस्मिंश्चिच्छत्त्रधारणे तत्परो न भवति तेनच्छत्त्रधार इत्यादि समासो यादृशः 'युक्ते च' इत्यत्र युक्तोऽभिमतस्तद्वाची न भवति। नियुक्तोऽधिकृत इत्यनेन 'युजिर योगे' इत्यस्य निष्ठायां नियुक्त इत्येतद्रूपमिति दर्शयति।

काण्डलाव इति। अत्र काण्डलवनक्रियां प्रति कर्तृत्वमात्रं गम्यते, नाधिकृतत्वम्। तेनैष स्वरो न भवति ॥ ७५ ॥

शिल्पिनि चाकृञः ॥ अनियुक्तार्थं वचनम्। 'अकृञः' इति शिल्पिविशेषे प्रतिषेधं वक्ष्यामीत्येवमर्थञ्च। तन्तुवाय इति। 'वेञ् तन्तुसन्ताने' इति। तन्तून् वयतीति 'ह्वावामश्च' इत्यण्, 'आतो युक् चिण्कृतोः' इति युक्।

अयस्कार इति। 'अतः कृकमि' इत्यादिना विसर्जनीयस्य सकारः। प्रत्युदाहरणेषु कृत्स्वर एव भवति ॥ ७६ ॥

**पदमञ्जरी**

अणि नियुक्ते ॥ नियुक्त इति 'युजिर्योगे' ( धा० पा० १४४४ ) इत्यस्यैतद्रूपमित्याह—नियुक्तोऽधिकृत इति। स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति। कार्यान्तरेऽपि नियोगसम्भवात् ॥ ७५ ॥

शिल्पिनि चाकृञः ॥ 'युक्ते च' इत्येव सिद्धे कृञः प्रतिषेधार्थं वचनम्। तन्तुवाय इति। 'ह्वावामश्च'

**भावबोधिनी**

अणन्त उत्तरपद रहने पर नियुक्त वाचक समास में पूर्वपद का आद्युदात्त होता है। उदा०—छत्रधारः। तूणीरधारः। कमण्डलुग्राहः। भृङ्गारधारः। [ इनमें कर्म उपपद रहते धृ और ग्रह से अण् प्रत्यय होता है। अतः पूर्वपद आद्युदात्त होता है। ]

नियुक्त = अधिकृत, और वह किसी कार्य में तत्पर नहीं होता है [अन्य कार्य में भी लगा रह सकता] यह 'नियुक्त' इससे सिद्ध होता है। ] ॥ ७५ ॥

नियुक्त—यह किस लिए है? काण्डलावः। शरलावः। [ यहाँ केवल कर्तृत्व अर्थ की प्रतीति होती है। ] ॥ ७५ ॥

शिल्पिवाचक समास में अणन्त उत्तरपद रहने पर पूर्वपद आद्युदात्त होता है, यदि वह अण् कृञ् धातु से न हुआ हो। उदा०—तन्तुवायः। तुन्नवायः। वालवायः। [ तन्तु उपपद वेञ् से अण्, आत्व, और युक् आगम होता है। ]

शिल्पी अर्थ में—इसका क्या फल है? काण्डलावः। [ यहाँ नहीं होता है। ] कृञ् में नहीं—इसका क्या फल है?

---

१. 'युक्त' इति पाठान्तरम्।

## २७४०. संज्ञायां च ॥ ७७ ॥ ( ३८११ )

संज्ञायां विषयेऽणन्त उत्तरपदेऽकृञः पूर्वपदमाद्युदात्तं भवति। तन्तुवायो नाम कीटः। बालवायो नाम पर्वतः।

अकृञ इत्येव—रथकारो नाम ब्राह्मणः॥

## २७४१. गोतन्तियवं पाले ॥ ७८ ॥ ( ३८१२ )

गो, तन्ति, यव—इत्येतानि पूर्वपदानि पालशब्द उत्तरपदे आद्युदात्तानि भवन्ति। गोपालः। तन्तिपालः। यवपालः।

अनियुक्तार्थ आरम्भः।

गोतन्तियवमिति किम्? वत्सपालः। पाल इति किम्? गोरक्षः॥

## २७४२. णिनि ॥ ७९ ॥ ( ३८१३ )

णिनन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति। पुष्पहारी। फलहारी। पर्णहारी॥

**न्यासः**

संज्ञायाञ्च ॥ ७७ ॥ गोतन्तियवं पाले ॥ गोपाल इति। 'पा रक्षणे', पूर्ववदण्।

अनियुक्तार्थ आरम्भ इति। नियुक्ते 'अणि नियुक्ते' इत्यनेनैव सिद्धत्वात्।

गोरक्ष इति। 'रक्ष पालने' ॥ ७८ ॥

णिनि ॥ पुष्पहारीति। पुष्पाणि हरतीति 'हरतेर्व्रते', बहुलमाभीक्ष्ण्ये' इति वा णिनिः ॥ ७९ ॥

**पदमञ्जरी**

इत्यण्, 'आतो युक्'। अयस्कार इति। 'अतः कृकमि' इत्यादिना विसर्जनीयस्य सत्वम् ॥ ७६ ॥ ७७ ॥

गोतन्तियवं पाले ॥ 'तनु विस्तारे', (धा० पा० १४६३) क्तिच्, तन्तिः = वत्सानां बन्धनरज्जुः ॥ ७८॥७९॥

**भावबोधिनी**

कुम्भकारः। अयस्कारः। [ कृञ् होने से यहाँ नहीं होता है। ] ॥ ७६ ॥

संज्ञाविषय रहने पर अणन्त उत्तरपद में कृञ् से भिन्न का पूर्वपद आद्युदात्त होता है। उदा०—तन्तुवायो नाम कीटः। बालवायो नाम पर्वतः।

कृञ् से नहीं—रथकारो नाम ब्राह्मणः। [यहाँ कृञ् से ही अण् है। अतः सूत्र नहीं लगता है, समास का अन्तोदात्त ही होता है] ॥ ७७ ॥

गो, तन्ति, यव—ये पूर्वपद 'पाल' शब्द उत्तरपद रहने पर आद्युदात्त होते हैं। उदा०—गोपालः। तन्तिपालः। ( बछड़ों को बांधने वाली रस्सी को रखने वाला )। यवपालः। [ सभी में पूर्वपद का आदि उदात्त होता है। ]

अनियुक्त के लिए यह सूत्र है। [ क्योंकि नियुक्त अर्थ में सूत्र कहा ही जा चुका है। ]

गो-तन्ति-यव—इन पूर्वपदों का—इसका क्या फल है? वत्सपालः। [ यहाँ नहीं होता है। ] पाल उत्तर पद में—इसका क्या फल है? गोरक्षः। [ यहाँ 'रक्ष' है। अतः सूत्र नहीं लगता है। ] ॥ ७८ ॥

णिनन्त उत्तरपद रहने पर पूर्वपद आद्युदात्त होता है। उदा०—पुष्पहारी। फलहारी। पर्णहारी। [ सभी में पूर्वपद आद्युदात्त होता है। ] ॥ ७९ ॥

## २७४३. उपमानं शब्दार्थप्रकृतावेव ॥ ८० ॥ ( ३८१४ )

उपमानवाचि पूर्वपदं शब्दार्थप्रकृतावेव णिनन्त उत्तरपद आद्युदात्तं भवति। उपमानं नियम्यते। उष्ट्रक्रोशी। ध्वाङ्क्षरावी। खरनादी।

**उपमानग्रहणमस्य पूर्वस्य च योगस्य विषयविभागार्थम्।**

**शब्दार्थप्रकृताविति किम्? वृकवञ्ची। वृकप्रेक्षी। प्रकृतिग्रहणं किम्? प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्था भवति तत्रैव यथा स्याद्, इह मा भूद्—गर्दभोच्चारी, कोकिलाभिव्याहारीति।**

### न्यासः

**उपमानं शब्दार्थप्रकृतावेव॥ शब्दार्थप्रकृताविति।** शब्दार्थः प्रकृतिर्यस्मिन्निति बहुव्रीहिः। **उपमानं नियम्यत इति।** यत एवकारस्ततोऽन्यत्रावधारणं भवति। इह च शब्दार्थप्रकृतेरेवकारः, तस्मादुपमाननियमो भवति, अतस्तन्नियम्यते। **उष्ट्रक्रोशीति।** 'क्रुश आह्वाने' इत्यस्मात् 'कर्तर्युपमाने' इति णिनिः। णिनिनैव सादृश्यस्योक्तत्वाद् वृत्ताविवशब्दो न प्रयुज्यते। **ध्वाङ्क्षरावीति।** 'रु शब्दे', पूर्वलक्षणाण्णिनिः। **खरनादीति।** 'णद अव्यक्ते शब्दे'।

**उपमानग्रहणमित्यादि।** यद्युपमानग्रहणं न क्रियेत, तदा पूर्वस्य योगस्यास्य च विषयविभागो न ज्ञायेत। यदि योगविभागकरणसामर्थ्याद् विषयान्तरस्य कल्प्येत, तथापीष्टो विषयविभागो न ज्ञायेत। उपमानग्रहणे तु सति पूर्वस्य सामान्यं विषयः, अस्य तु विशेष उपमानमिति विषयविभागो निश्चीयेत। तेन विषयविभागार्थमुपमानग्रहणम्।

**वृकवञ्चीति।** 'वञ्चु प्रलम्भने'। **वृकप्रेक्षीति।** 'ईक्ष दर्शने' प्रपूर्वः। अत्र कृत्स्वर एव भवति। **प्रकृतिरेवेत्यादि।** यदि प्रकृतिग्रहणं न क्रियेत, तदा शब्दार्थात् परो यो णिनिस्तदन्त उत्तरपद इत्येवं विज्ञायेत; ततश्च गर्दभोच्चारी, कोकिलाभिव्याहारीत्यस्यापि स्यात्; भवति ह्यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात्

### पदमञ्जरी

**उपमानं शब्दार्थप्रकृतावेव॥ उष्ट्रक्रोशीत्यादौ** 'कर्तर्युपमाने' इति णिनिः। **उपमानग्रहणमित्यादि।** अन्यथा योगविभागेन नियमाश्रयणसामर्थ्याद्विशिष्टविषयो नियम इत्येतावद् गम्यते, न त्विष्टो विषयविभाग इति भावः।

**शब्दार्थप्रकृताविति किमिति।** सूत्रारम्भः किमर्थ इत्यर्थः। **वृकवञ्चीति।** कृत्स्वर एव भवति। **प्रकृतिरेवेत्यादि।** असति प्रकृतिग्रहणे शब्दार्थात्परो यो णिनिस्तदन्त उत्तरपद इति विज्ञायेत, ततश्च तत्रापि धातूपसर्गसमुदायात् शब्दार्थात्परो णिनिः, तत्रापि स्यात्; कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्' ( व्या० प० १२६ ) णिन्यन्तमेवोत्तरपदमिति कृत्वा। प्रकृतिग्रहणे तु न भवति।

### भावबोधिनी

उपमानवाचक पूर्वपद, शब्दरूपी अर्थवाचक प्रकृति में ही णिनन्त उत्तरपद रहने पर, आद्युदात्त होता है। इसमें उपमान का नियमन किया जाता है। उदा०—उष्ट्रक्रोशी। ध्वाङ्क्षरावी। खरनादी। [ इनमें पूर्वपद उपमान हैं। उत्तर पद शब्दार्थक हैं। णिनि प्रत्ययान्त है। पूर्वपद आद्युदात्त होता है।

उपमान का ग्रहण—इस सूत्र और पूर्वसूत्र के विषय का विभाजन करने के लिए है। [ अतः दोनों का क्षेत्र अलग-अलग निश्चित हो जाता है। ]

शब्दार्थक प्रकृति रहने पर ही—इसका क्या फल है? वृकवञ्ची। वृकप्रेक्षी। [ वञ्च और प्रेक्ष धातुएँ—शब्दार्थक नहीं हैं। ] प्रकृतिग्रहण का क्या फल है? जहाँ पर उपसर्ग की अपेक्षा किए बिना अकेली प्रकृति ही शब्दरूपी अर्थवाली होती

**एवकारकरणमुपमानावधारणार्थम् । शब्दार्थप्रकृतौ त्वनुपमानमुपमानं चाद्युदात्तं भवति । सिंहविनर्दी । पुष्कलजल्पी ॥**

**२७४४. युक्तारोह्यादयश्च ॥ ८१ ॥ ( ३८१९ )**

**युक्तारोह्यादयः समासा आद्युदात्ता भवन्ति । युक्तारोही । आगतरोही । आगतयोधी । आगतवञ्ची । आगतनर्दी । आगतप्रहारी । एते णिनन्ताः 'णिनि' इत्यस्यैवोदाहरणार्थं पठ्यन्ते ।**

**न्यासः**

परो णिनिः, अतस्तदन्तमुत्तरपदम् । तस्मादिह मा भूदिति प्रकृतिग्रहणं क्रियते, तेनेह न भवति । प्रकृतिग्रहणे यत्रोपसर्गनिरपेक्षा प्रकृतिरेव केवलः शब्दार्थस्तत्र भवितव्यम् । यश्चात्रधातुरूपसर्गात् परो नासौ शब्दार्थः; चरतेरुपसर्गनिरपेक्षस्य गत्यर्थत्वात्, हरतेश्च हरणार्थत्वात् । यद्वा—योऽत्र शब्दार्थो धातूपसर्गसमुदायः, न तस्माण्णिनेर्विधानम् ।

यदि पूर्वेणैव सिद्धे नियमार्थं वचनम्, एवं सिद्धे विधिरारभ्यमाणो नियमाय भवतीत्यनर्थकमेवकारकरणम् ? इत्याह—**एवकारकरणमित्यादि** । असति ह्येवकार उपमान एव शब्दार्थप्रकृताविर्त्येवमवधारणं स्यात्, ततश्च शब्दार्थप्रकृतिरेव नियम्येत—शब्दार्थप्रकृतौ यदि भवत्युपमान एव भवति, नानुपमान इति । ततश्चानुपमाने न स्यात् । तस्मादुपमानावधारणं यथा स्यादित्येवमर्थमेवकारः क्रियते । किं कारणम् ? इत्याह—**शब्दार्थप्रकृतौ त्वित्यादि** । तुशब्दो हेतौ । तस्मात् शब्दार्थप्रकृतावुपमानमनुपमानं चाद्युदात्तं भवति । तस्मादुपमानावधारणार्थमेवकारकरणम् । उपमाननियमे हि सति शब्दार्थप्रकृतेरनियतत्वात् तत्राविशेषेण सर्वस्याद्युदात्तत्वं लभ्यते । **सिंहविनर्दीति** । उपमानस्योदाहरणम् । **पुष्कलजल्पीति** । अनुपमानस्य । पुष्कलजल्पीत्यत्र 'व्रते', 'बहुलमाभीक्ष्ण्ये' इति वा णिनिः ॥ ८० ॥

**युक्तारोह्यादयश्च ॥ युक्तारोहीत्यादिषु** यत्र कृदन्तमुत्तरपदं तत्र कृत्स्वरापवादो योगः । अन्येषु तु

**पदमञ्जरी**

योऽत्र धातुर्नासौ शब्दार्थः, यश्च शब्दार्थो धातूपसर्गसमुदायो न ततो णिनिर्विहित इति, सिद्धे विधिरारभ्यमाणोन्तरेणाप्येवकारं नियमाय भवति, नार्थ एवाकारेण ? तत्राह—**एवकारकरणमित्यादि** । असति हि तस्मिन्विपरीतो नियमः स्यात्— शब्दार्थप्रकृतौ यदि भवति उपमान एवेति । एवं च प्रकृतिर्नियम्येत, नोपमानम् । तस्मादुपमानावधारणार्थमेवकारः क्रियते । किं पुनः कारणमुपमानावधारणमाश्रीयते ? अत आह—**शब्दार्थप्रकृताविति** । तुशब्दो हेतौ, उपमाननियमे हि शब्दार्थप्रकृतेरनियतत्वात्तत्राप्यविशेषेण सर्वस्याद्युदात्तत्वं लभ्यते, नान्यथा । किञ्च—प्रकृत्यवधारणेऽस्यानियतत्वाद् वृकवञ्चीत्यादावाद्युदात्तत्वप्रसङ्गः ॥ ८० ॥

**युक्तारोह्यादयश्च ॥[1] पूर्वोत्तरपदनियमार्थमिति** । यत्र युक्तादीन्येव पूर्वपदानि, आरोह्यादीन्येव चोत्तर-

**भावबोधिनी**

है वहीं पर यह सूत्र लगे, इनमें न लग सके—गर्दभोच्चारी, कोकिलाभिव्याहारी । [ यहाँ उत् के साथ चर् और अभि वि आङ् के साथ हृ का अर्थ—शब्द करना है, अकेले का नहीं । अत यह सूत्र नहीं लगता है । ]

एव—का ग्रहण उपमान को सुनिश्चित कराने के लिए है । शब्दार्थक प्रकृति रहने पर तो अनुमान और उपमान सभी पूर्वपद आद्युदात्त होत्त हैं—सिंहविनर्दी । पुष्कलजल्पी । [ सिंह के समान नर्दन करने वाला । यहाँ उपमानवाचक पूर्वपद है । और पुष्कजल्पी में उपमानवाचक नहीं है । किन्तु प्रकृति=धातु शब्दार्थक है । अतः यहाँ भी पूर्वपद आद्युदात्त होता ही है । ] ॥ ८० ॥

'युक्तरोही' आदि समास आद्दात्त होते हैं । उदा०—युक्तारोही । आगतरोही । आगतयोधी । आगतव्ची । आगत-

१. पूर्वोत्तरपदनियमार्था—इति काशिकापाठः ।

**पूर्वोत्तरपदनियमार्था इति केचित्। इह मा भूद्—वृक्षारोही, युक्ताध्यायीति।**

**आगतमत्स्या। क्षीरहोता। भगिनीभर्त्ता। याजकादित्वात् षष्ठीसमासावेतौ।**

**ग्रामगोधुक्। अश्वत्रिरात्रः। गर्गत्रिरात्रः। व्युष्टत्रिरात्रः। शणपादः। समपादः। षष्ठीसमासा एते।**

**एकशितिपात्। एकः शितिः पादोऽस्येति त्रिपदबहुव्रीहिः। तत्रैकशितिशब्दः 'तद्धितार्थोत्तरपद' इति तत्पुरुषसंज्ञः, तस्य निमित्तिस्वरबलीयस्त्वाद् अन्तोदात्त्वं प्राप्तमित्याद्युदात्तत्वं विधीयते।**

**न्यासः**

समासस्वरापवादः। युक्तारोहीत्येवमादिषु आगतप्रहारीत्येवम्पर्यन्तेषु 'रुह जन्मनि', 'युध संप्रहारे', 'वञ्चु प्रलम्भने', 'टुनदि समृद्धौ', हृञ् हरणे' प्रपूर्वः—इत्येतेभ्य धातुभ्यो यथायोगं युक्तागतपूर्वेभ्यः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः। यद्येते णिन्यन्तास्तत् किमर्थमिह पठ्यन्ते, यावता णिनीत्यनेनैव सिद्धम्? इत्यत आह—**णिनीत्यस्यैवोदाहरणार्थं पठ्यन्त इति।**

**पूर्वोत्तरपदेत्यादिना** केषाञ्चिन्मतेन तेषामिह पाठस्य प्रयोजनान्तरं दर्शयति। पूर्वोत्तरपदयोर्नियमोऽर्थो येषां ते तथोक्ताः। यत्र युक्तादीन्येव पूर्वपदान्यारोह्यादीन्येव चोत्तरपदानि तत्रैव यथा स्यादिति, इह मा भूत्—ध्वाङ्क्षारोही, **वृक्षारोहीति,** अत्रान्यत्पूर्वपदम्। **युक्ताध्यायीत्यत्रान्यदुत्तरपदम्।** **'इङ् अध्ययने'** इत्यस्माण्णिनिः। **आगतमत्स्या इति।** विशेषणसमासः। **क्षीरहोतेति।** क्षीरस्य होता। अस्मादेव निपातनात् षष्ठीसमासः। याजकादित्वाद्वा। 'हु' इत्येतस्मात् तृच्। **भगिनीभर्तेति।** अयमपि **पूर्ववत्** षष्ठीसमासः। **भृञस्तृच्।**

**ग्रामगोधुगिति।** दुहेः क्विप्, 'दादेर्धातोर्घः', 'एकाचो बशो भष्' इत्यादिना दकारस्य धकारः, 'झलां जशोऽन्ते' इति घकारस्य गकारः, तस्य 'वावसाने' इति चर्त्वम्—ककारः।

**त्रिरात्र इति।** तिस्रो रात्रयः समाहृता इति समाहारे द्विगुः। 'अहःसर्वैकदेश' इत्यादिनाऽच् समासान्तः।

**एकशितिपादिति।** 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यकारलोपः ननु। चैकशब्दोऽयम् 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। तत्रैकः शितिः पादोऽस्येति बहुव्रीहिः। तत्र कृते प्रकृतिभावेनैव सिद्धमिहाद्युदात्तत्वम्, ततो नार्थ इहास्य पाठेन? इत्यह आह—**एकः शितिः पादोऽस्येति।** द्विपदे बहुव्रीहावेष दोषः स्यात्, न चायं द्विपदः, किं तर्हि? त्रिपदः। अत्र पादशब्द उत्तरपदे परतः 'तद्धितार्थोत्तरपद'

**पदमञ्जरी**

पदानि—तत्रैव यथा स्यादित्यर्थः। आगतमत्स्यादिषु च बहुव्रीहिः, कर्मधारयो वा।

**एकशितिपादिति।** 'संख्यासुपूर्वस्य' इति पादशब्दाकारस्य लोपः, संख्यासुपूर्वस्य समासस्य योऽन्ते पादशब्दस्तस्य लोपो भवतीति तत्रार्थः। ननु चेह 'इण्भीकापाशल्यतिमर्च्चिभ्यः कन्' ( द० उ० ३.२१ ) इति

**भावबोधिनी**

नर्दी। आगतप्रहारी—ये णिनन्त हैं 'णिनि' ६।२।७९ इस सूत्र के ही उदाहरण के लिए पठित हैं।

कुछ विद्वान् यह मानते हैं कि—पूर्वपद और उत्तरपद दोनों का नियम करने के लिए हैं। यहाँ न होने लगे—वृक्षारोही। युक्ताध्यायी। [ इनमें पूर्वपद अथवा उत्तरपद निश्चित नहीं हैं। ]

आगतमत्स्या। क्षीरहोता। भगिनीभर्त्ता। याजकादि होने से इन दोनों में षष्ठी-समास है।

ग्रामगोधुक्। अश्वत्रिरात्रः। गर्गत्रिरात्रः। व्युष्टत्रिरात्रः। शणपादः। समपादः। ये षष्ठी-समास हैं।

एकशितिपात्। एकः शितिः पादः अस्य—यह त्रिपद बहुव्रीहि है। इसमें 'एकशिति' शब्द "तद्धितार्थोत्तरपद०" ( २।१।५१ ) से तत्पुरुषसंज्ञक है, उसका निमित्तिस्वर की बलवत्ता होने से अन्तोदात्तत्व प्राप्त है, इसलिए आद्युदात्तत्व का विधान किया गया है। [ यहाँ पहले बहुव्रीहि होने से सतिशिष्ट हो जाने के कारण द्विगु = समास का स्वर बलवत्तर है। वहाँ पूर्वपद का अन्तोदात्त प्राप्त है। उसको रोक कर आद्युदात्त होता है। ]

**एवमपि नार्थ एतेन, 'इगन्त० द्विगौ' ( ६.२.२९ ) इति सिद्धत्वात् ? एवं तर्हि ज्ञापनार्थम्, एतज् ज्ञापयति—शित्यन्तस्योत्तरपदे द्विगुस्वरो न भवतीति। तेन द्विशितिपादित्यत्र तिशब्द उदात्तो भवति। निमित्तिस्वरबलीयस्त्वस्याप्येकशितिपात्स्वरवचनमेव ज्ञापकं वर्णयन्ति।**

**न्यासः**

इति पूर्वपदयोरेकशितिशब्दयोस्तत्पुरुषसंज्ञा भवति। यद्येवम्, ततः किम् ? इत्यत आह—**तस्येत्यादि**। तस्येति तत्पुरुषसंज्ञकस्यैकशितिशब्दस्यान्तोदात्तत्वं प्राप्तमिति 'समासस्य' इत्यनेन। इतिकरणो हेतौ। यस्मात तस्यान्तोदात्तत्वं प्राप्तं तस्मात् तस्याद्युदात्तत्वं विधीयते। ततो नापार्थक एकशितिपाच्छब्दस्येह पाठ इत्यभिप्रायः। कस्मात् पुनस्तस्यान्तोदात्तत्वं प्राप्नोति, बहुव्रीहिस्वरेणैव हि परत्वादन्तोदात्तत्वं बाधित्वा युक्तं भवितुम् ? इत्याह—[1]**निमित्तस्वरबलीयस्त्वादिति**। निमित्तपदं द्विगोस्त्रिपदबहुव्रीहिः। तत्र हि कृते द्विगुरुत्तरपदे परतः पूर्वपदयोर्भवति। यच्च यस्मिन् सति भवति तत् तस्य निमित्तम्, तस्य निमित्तस्य बहुव्रीहिस्वरो निमित्तस्वरः, तस्माद् बलीयस्त्वं निमित्तस्वरबलीयस्त्वम्। 'पञ्चमी' इति योगविभागात् समासः। तदेतदुक्तं भवति—तस्माद् बहुव्रीहिस्वरात् समासान्तोदात्तत्वस्य बलीयस्त्वम्, तस्मात् तत् प्राप्नोतीति। बलीयस्त्वं तु तस्य सतिशिष्टत्वात्। तद्धि बहुव्रीहेराद्युदात्तत्वे सति भवति। तस्मात् सति शिष्टस्य बलीयस्त्वमुक्तम्। वक्ष्यमाणज्ञापकाद्वा निमित्तस्वरबलीयस्त्वम्।

**एवमपीत्यादि**। एवमपि त्रिपदे बहुव्रीहौ कल्प्यमानेऽपि। **नार्थ एतेनेति**। एकशितिपाच्छब्देनेह भवति नार्थः, कस्मात् ? इत्याह—**इगन्तेत्यादि**। त्रिपदे हि बहुव्रीहावेकशितिशब्दयोरुत्तरपदे यः समासः 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञः स इगन्तश्च भवति। ततश्च 'इगन्त० द्विगौ' इत्याद्युदात्तत्वं सिद्धम्, ततो नार्थ एतेन। **एवं तर्हीत्यादिनै**कशितिपाच्छब्दपाठस्य ज्ञापकत्वं दर्शयति। किं पुनस्तज्ज्ञापयति ? इत्याह—**एतदित्यादि**। **तेनेत्यादिना**। प्रयोजनं दर्शयति। यद्येषोऽर्थो न ज्ञाप्यते, तेन द्वौ शिती पादावस्येति त्रिपदे बहुव्रीहौ कृते, तत्र चोत्तरपदे परतः पूर्वपदयोर्द्विगौ सति 'इगन्त० द्विगौ' इति पूर्वपदप्रकृतिस्वरे कृते तिशब्दो द्विशितिपादित्यत्रोदात्तः स्यात्। अस्मिंस्त्वर्थे ज्ञापिते 'इगन्त० द्विगौ' इत्येष स्वरो न भवति। तस्मिंश्चासति समासस्वरेण तिशब्द उदात्तो भवति, निमित्तस्वरबलीयस्त्वं न स्यात्। ततश्च त्रिपदे हि बहुव्रीहौ परत्वात् समासस्वरं बाधित्वा बहुव्रीहिस्वर

**पदमञ्जरी**

कन्नन्त एकशब्द आद्युदात्तः, ततश्च 'बहुव्रीहौ प्रकृत्या' इत्येव सिद्धमाद्युदात्तत्वम् ? तत्राह—**एकः शिति पादोऽस्येति** [2]**त्रिपदो बहुव्रीहिरिति**। ततः किमित्याह—**तत्रेति**। यद्युत्तरपदे परत एकशितिशब्दस्तत्पुरुषः, ततोऽपि किम् ? इत्याह—**तस्येति**। तस्य तत्पुरुषसंज्ञकस्यैकशितिशब्दस्य समासान्तोदात्तत्वं प्राप्तम्। ननु समासस्वरापवादो बहुव्रीहिस्वरः ? तत्राह—**निमित्तिस्वरबलीयस्त्वादिति**। समासस्वरस्येति शेषः। निमित्तमुत्तरपदं द्विगोस्त्रिपदो बहुव्रीहिस्तस्य यः स्वरः, तस्मात्समासस्वरस्य बलीयस्त्वादित्यर्थः। **बलीयस्त्वं तु सतिशिष्टत्वात्**। सतिशिष्टत्वं तु बहुव्रीहौ सति पश्चात्तत्पुरुषे कृते प्राप्नोतीति।

**एवमपीत्यादि**। स्पष्टार्थम्। **निमित्तिस्वरबलीयस्त्वस्यापीत्यादि**। तथा च समर्थसूत्रे वार्त्तिकम्—

**भावबोधिनी**

ऐसा होने पर भी इस सूत्र का कोई प्रयोजन नहीं है क्योंकि "इगन्त० द्विगौ" ( ६।२।२९ ) से सिद्ध ही है ? यदि ऐसा है तब तो ज्ञापकार्थ है, यह ज्ञापित करता है—'शित्यन्त का उत्तरपद परे रहते द्विगु स्वर नहीं होता है।' इस कारण 'द्विशितिपाद्' यहाँ [ पूर्वपद का ] 'ति' शब्द उदात्त होता है। निमित्तिस्वर की बलवत्तरता का भी एकशितिपात्-स्वरवचन को ही ज्ञापक कहते हैं।

---

१. काशिकापदमञ्जर्योः पाठ 'समर्थ' (२।१।१) सूत्रभाष्यानुकूलः, न्यासस्य प्रकाशितपाठोऽसङ्गत इति विचार्य संशोधनीयः।

२. त्रिपदबहुव्रीहिः—इति काशिकापाठः।

'पात्रेसमितादयश्च' ( २.१.४८ ) युक्तारोह्यादयः, ततस्तेऽप्याद्युदात्ता भवन्ति ॥

**२७४५. दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ८२ ॥ ( ३८१६ )**

दीर्घान्तं पूर्वपदम्, काश, तुष, भ्राष्ट्र, वट—इत्येतानि च जे उत्तरपदे आद्युदात्तानि भवन्ति। कुटी'जः। शमी'जः। काशंजः। तुषंजः। भ्राष्ट्रंजः। वटंजः॥

**२७४६. अन्त्यात्पूर्वं बह्वचः ॥ ८३ ॥ ( ३८१७ )**

जे उत्तरपदे बह्वचः पूर्वपदस्यान्त्यात्पूर्वमुदात्तं भवति। उपसंरजः। मन्दुरंजः। आमलकी'जः। वडवांजः।

बह्वच इति किम्? दुग्धजानिं तृणानि॥

**२७४७. ग्रामेऽनिवसन्तः ॥ ८४ ॥ ( ३८१८ )**

ग्रामशब्द उत्तरपदे पूर्वपदमाद्युदात्तं भवति न चेन्निवसद्वाचि भवति। मल्लंग्रामः। वणिंग्ग्रामः। ग्रामशब्दोऽत्र समूहवाची। देवग्रामः। देवस्वामिक इत्यर्थः।

**न्यास**

एव भवति, ततस्तेनैव सिद्धत्वादेकशितिपाच्छब्दस्येह पाठो न क्रियेत, कृतश्च। तस्मात् स एव ज्ञापयति—निमित्तस्वरबलीस्त्वमिति ॥ ८१ ॥

**दीर्घकाशतुषभ्राष्ट्रवटं जे** ॥ कृत्स्वरापवादो योगः। **कुटीज इति**। कुट्यां जात इति 'सप्तम्यां जनेर्डः' इति डप्रत्ययः ॥ ८२ ॥

**अन्त्यात् पूर्वं बह्वचः** ॥ अयमपि कृत्स्वरापवादो योगः। **दग्धजानीति**। अत्र कृत्स्वर एव भवति ॥ ८३ ॥

**ग्रामेऽनिवसन्तः** ॥ निवसन्तशब्दोऽयमौणादिको गृह्यते। 'जॄविशिभ्यां झच्' इति वर्तमाने 'तॄभूवहिवसि-

**पदमञ्जरी**

'एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्य' इति। उभयमन्तरेणाप्यनुपपद्यमानमेकशितिपाद्ग्रहणमुभयमपि ज्ञापयति ॥ ८१ ॥

**दीर्घकाशतुषभ्राष्ट्रवटं जे** ॥ **कुटीज इति**। 'सप्तम्यां जनेर्डः' ॥ ८२

**अन्त्यात्पूर्वं बह्वचः** ॥ **आमलकीज इति**। दीर्घान्तेऽपि बह्वचि परत्वादयमेव स्वरो भवति ॥ ८३ ॥

**ग्रामेऽनिवसन्तः** ॥ निपूर्वाद्वसेरौणादिकोऽधिकरणे झच्, निवसन्त्यस्मिन्निति निवसन्तः। **देवग्राम इति**।

**भावबोधिनी**

और पात्रेसमितादि युक्तारोही आदि हैं, इसलिए वे भी पूर्वपद के आद्युदात्तस्वर वाले होते हैं ॥ ८१ ॥

दीर्घान्त पूर्वपद और काश, तुष, भ्राष्ट्र, वट—ये शब्द पूर्वपद 'ज' उत्तरपद परे रहते आद्युदात्त होते हैं। उदा० कुटीजः। शमीजः। [ इनमें दीर्घान्त पूर्वपद हैं। ] काशजः। तुषजः। भ्राष्ट्रजः। वटजः। [ इनमें पूर्वपद आद्युदात्त होते हैं। ] ॥ ८२ ॥

'ज' उत्तरपद रहने पर बहुत अचों वाले पूर्वपद का अन्त्य से पूर्ववर्ती उदात्त होता है। उदा०—उपसरजः। मन्दुरजः। आमलकीजः। वडवाजः। [ इनमें पूर्वपद के अन्त्य से पूर्व का उदात्त होता है। ]

बहुत अचों वाला—इसका क्या फल है? दग्धजानि तृणानि। [ यहाँ दो अचों वाला ही पूर्वपद है। अतः समास का अन्त उदात्त होता है। ] ॥ ८३ ॥

ग्राम शब्द उत्तरपद रहने पर पूर्वपद आद्युदात्त होता है यदि वह निवसद्वाची न हो तो। उदा०—मल्लग्रामः।

अनिवसन्त इति किम् ? दाक्षिग्रामः । माहकिग्रामः । दाक्ष्यादयो निवसन्ति यस्मिन्ग्रामे स तेषामिति व्यपदिश्यते ॥

२७४८. घोषादिषु च ॥ ८५ ॥ ( ३८१९ )

घोषादिषु चोत्तरपदेषु पूर्वपदमाद्युदात्तं भवति । दाक्षिघोषः । दाक्षिकटः । दाक्षिपल्वलः[1] । दाक्षिह्रदः । दाक्षिबदरी । दाक्षिपिङ्गलः । दाक्षिपिशङ्गः । दाक्षिशाला । दाक्षिरक्षा । दाक्षिशिल्पी । दाक्ष्यश्वत्थः । कुन्दतृणम् । दाक्षिशाल्मली । आश्रममुनिः । शाल्मलिमुनिः । दाक्षिप्रेक्षा । दाक्षिकूटः । यान्यत्र निवासनामधेयानि तेषु निवसद्वाचीन्यपि पूर्वपदान्याद्युदात्तानि भवन्ति ।

अनिवसन्त इति नानुवर्त्तयन्ति केचित् । अपरे पुनरनुवर्त्तयन्ति ॥

**न्यासः**

भासिसाधिगतिमण्डिजिनन्दिभ्यश्च' इति वसेर्निपूर्वाज् झच् । निवसतीति निवसन्तः । केचिच्छत्रन्तस्य वसच्छब्दस्य ग्रहणं वर्णयन्ति । **मल्लग्राम इति** । षष्ठीसमासः । **देवग्राम इति** । वाटकपरिक्षिप्ते गृहसमुदाये ग्रामशब्दो वर्तते । तस्माद् देवस्वामिक इत्यर्थः । एतेन स्वस्वामिभावसम्बन्धा या साऽत्र षष्ठी समस्यते, न तु क्रियावाससम्बन्धेति दर्शयति; अन्यथा देवशब्दः पूर्वपदं निवसन्तवाच्येव स्यादित्यभिप्रायः ।

**दाक्ष्यादयो निवसन्ति यस्मिन्नित्यादिना** प्रत्युदाहरणे पूर्वपदस्य निवसन्तवाचित्वं दर्शयति ॥ ८४ ॥

**घोषादिषु च** ॥ समासस्वरापवादो योगः । एवमुत्तरेऽपि । 'न भूताधिकसञ्जीव' इत्यादेः सूत्राद् ये योगास्ते समासस्वरापवादा द्रष्टव्याः । **दाक्षिघोष इत्येवमादयः** षष्ठीसमासाः । **यान्यत्रेत्यादि** । कथं पुनरेतल्लभ्यते, यावताऽनिवसन्त इति प्रकृतम् ? इत्यत आह— **अनिवसन्त इति** । **अपर इत्यादि** । तेषां मतेन यान्यत्र निवासनामधेयानि तेषु निवसद्वाचीन्यप्युदात्ता भवन्ति ॥ ८५ ॥

**पदमञ्जरी**

प्राचीनपरिक्षिप्तदेशोऽयं ग्रामशब्दः । यद्येवम्, निवसन्तवाची भवति ? तत्राह— **देवस्वामिक इति** । ततश्चायं न देवापेक्षया ग्रामो निवसन्त इति भावः ।

**दाक्ष्यादयो निवसन्ति यस्मिन्नित्यादि** । अन्ये निवसन्तु, तत्र मा वा वसन्, ते वावदवात्सुरित्येतावता तेषामिति व्यपदिश्यत इत्यर्थः ॥ ८४ ॥

**घोषादिषु च** ॥ **यान्यत्रेति** । घोषकुटादीनि । **अपरे पुनरिति** । येषां घोषकुटादिष्वपि शब्देषु तावद्भवति, न निवासनामधेयेषु ॥ ८५ ॥

**भावबोधिनी**

वणिग्ग्रामः । यहाँ ग्राम शब्द समूह-वाचक है । देवग्रामः । देव जिसका स्वामी है ऐसा ग्राम — यह अर्थ है ।

अनिवसन्तः— इसका क्या फल है ? दाक्षिग्रामः । माहकिग्रामः । दाक्षि आदि जिस गाँव में रहते हैं वह उनका गाँव है— ऐसा व्यवहार किया जाता है । [ अतः यहाँ यह सूत्र नहीं लगता है । मल्लग्राम आदि में ग्राम शब्द समूह अर्थ में है । अतः निवास की प्रतीति न होने से यह सूत्र लगता है । ] ॥ ८४ ॥

घोष आदि उत्तरपद रहने पर पूर्वपद आद्युदात्त होता है । उदा०— दाक्षिघोषः । दाक्षिकटः । दाक्षिपल्वलः । दाक्षिह्रदः । दाक्षिबदरी । दाक्षिपिङ्गलः । दाक्षिपिशङ्गः । दाक्षिशाला । दाक्षिरक्षा । दाक्षिशिल्पी । दाक्षिशाल्मली । आश्रममुनिः । शाल्मलिमुनिः । दाक्षिप्रेक्षा । दाक्षिकूटः । [ इनमें पूर्वपद आद्युदात्त होता है । ] यहाँ जो निवास के वाचक नाम हैं उनमें निवसद्वाची भी पूर्वपद आद्युदात्त होते हैं । [ इसीलिए उनका ग्रहण है । ]

कुछ लोग 'अनिवसन्तः' इसकी अनुवृत्ति नहीं करते हैं । दूसरे विद्वान् अनुवृत्ति करते हैं । [ अतः दोनों प्रकार की व्याख्यायें ठीक हैं । ] ॥ ८५ ॥

---

१. 'दाक्षिवल्लवः' इति पाठः ।

२७४९. छात्त्र्यादयः शालायाम् ॥ ८६ ॥ ( ३८२० )

शालायामुत्तरपदे छात्त्र्यादय आद्युदात्ता भवन्ति ।
छात्रिंशाला । [1]पेलिंशाला । भाण्डिंशाला ।
छात्त्रि । [2]पेलि । भाण्डि । व्याडि । आपिशलि । आखण्डि । आपारि । गोमि । छात्त्र्यादिः ।
यदा शालान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, तदापि 'तत्पुरुषे शालायां नपुंसके' (६.२.१२३) इत्येतस्मात्पूर्वविप्रतिषेधेन पूर्वपदमाद्युदात्तं भवति । छात्त्रिशालम् । पेलिंशालम् ॥

२७५०. प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ ८७ ॥ ( ३८२१ )

प्रस्थशब्द उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं भवति । इन्द्रंप्रस्थः । कुण्डंप्रस्थः । ह्रदंप्रस्थः । सुवर्णप्रस्थः ।

न्यासः

छात्त्र्यादयः शालायाम् ॥ यदा शालान्त इत्यादि । 'विभाषा सेनासुरा' इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम् ? इह च शालाशब्दस्य स्त्रीलिङ्गस्य ग्रहणम् । तत्र यथा समासो नपुंसकलिङ्गो न भवति, तथा 'तत्पुरुषे शालायां नपुंसके' इत्यनेन परत्वादुत्तरपदाद्युदात्तत्वेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तन्निरासाय—यदा शालान्त इत्यादेर्ग्रन्थस्योपन्यासः । यो नपुंसकलिङ्गः शालान्ततत्पुरुषो न भवति सोऽस्यावकाशः—छात्त्रिशाला, ऐलिशालेति । यस्तु नपुंसकलिङ्गो न छात्त्रादिपूर्वपदस्तत्पुरुषः स 'शालायां नपुंसके' इत्यस्यावकाशः—ब्राह्मणशालम्, क्षत्त्रियशालमिति; इहोभयं प्राप्नोति—छात्त्रिशालमिति; पूर्वविप्रतिषेधेनायमेव स्वरो भवति ॥ ८६ ॥

प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ प्रस्थशब्दो यदि व्युत्पाद्यते 'धञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्'

पदमञ्जरी

छात्त्र्यादयः शालायाम् ॥ यदा शालान्त इत्यादि । 'विभाषा सेनासुरा' इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम् । तत्रास्यावकाशो यो नपुंसकलिङ्गो न भवति—छात्त्रिशाला, गोशालेति; 'तत्पुरुषे शालायाम्' इत्यस्यावकाशो यश्छात्त्र्यादिपूर्वपदो न भवति—ब्राह्मणशालम्, क्षत्त्रियशालमिति; यश्छात्त्र्यादिपूर्वपदो नपुंसकलिङ्गश्च, तत्रैकदेशविकृतस्यानन्यत्वादयमपि प्राप्नोति, 'तत्पुरुषे शालायाम्' इत्ययं च; तत्र पूर्वविप्रतिषेधादयमेव भवति ॥ ८६ ॥

प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ 'मालादीनां च' इति वचनादवृद्धमिति पदच्छेदः । ( कात्या० वा० १५ )

भावबोधिनी

शाला उत्तरपद रहने पर छात्त्रि आदि पूर्वपद आद्‌दात्त होते हैं । उदा०—छात्त्रिशाला । पेलिशाला । भाण्डिशाला । [ इनमें पूर्वपद आद्‌युदात्त हैं । ]

छात्त्रि । पेलि । भाण्डि । व्याडि । आपिशलि । अखण्डि । आपारि । गोमि । ये छात्त्रि आदि हैं ।

जब शालाशब्दान्त तत्पुरुष नपुंसकलिङ्ग वाला होता है तब भी "तत्पुरुषे शालायां नपुंसके" (६।२।१२३) इस सूत्र से पूर्वविप्रतिषेध से पूर्वपद आद्‌युदात्त होता है—छात्त्रिशालम् । पेलिशालम् । [ चूँकि नपुंसकत्व वैकल्पिक है अतः दोनों प्रकार के स्वर हो सकते हैं । ] ॥ ८६ ॥

'प्रस्थ' शब्द उत्तरपद रहने पर कर्की आदि को छोड़कर अवृद्ध पूर्वपद आद्‌युदात्त होता है । उदा०—इन्द्रप्रस्थः । कुण्डप्रस्थः । ह्रदप्रस्थः । सुवर्णप्रस्थः ।

---

१. 'एलि' इति पाठा० ।

२. 'कवल' इति पाठा० ।

अवृद्धमिति किम् ? दाक्षिप्रस्थः । माह_किप्रस्थः ।
अकर्क्यादीनामिति किम् ? कर्कीप्रस्थः । मघीप्रस्थः ।
कर्की । मघी । मकरी । कर्कन्धू । शमी । करीर । कटुक । कुरल[1] । बदर । कर्क्यादिः ॥

## २७५१. मालादीनां च ॥ ८८ ॥ ( ३८२२ )

'प्रस्थे' इति वर्त्तते । प्रस्थ उत्तरपदे मालादीनामादिरुदात्तो भवति । मालाप्रस्थः । शालाप्रस्थः ।
माला । शाला । शोणा । द्राक्षा । क्षौमा । क्षामा । काञ्ची । एक । काम । मालादिः ।
वृद्धार्थ आरम्भः । एकशोणाशब्दयोः 'एङ् प्राचां देशे' ( १।१।७५ ) इति वृद्धसंज्ञा ॥

## २७५२. अमहन्नवं नगरेऽनुदीचाम् ॥ ८९ ॥ ( ३८२३ )

नगरशब्द उत्तरपदे महन्नवशब्दवर्जितं पूर्वपदमाद्युदात्तं भवति, तच्चेदुदीचां न भवति । सुंह्मनगरम् । पुण्ड्रनगरम्[1] ।

अमहन्नवमिति किम् ? महानगरम् । नवनगरम् । अनुदीचामिति किम् ? नदीनगरम् । कान्तीनगरम् ॥

**न्यासः**

इति, तदा थाथादिस्वरे प्राप्ते । अथ न व्युत्पाद्यते, तदा समासान्तोदात्तत्वे । इन्द्रप्रस्थ इत्यादयः षष्ठीसमासाः ॥ ८७ ॥

**मालादीनाञ्च ॥ ८८ ॥ अहमन्नवं नगरेऽनुदीचाम् ॥ सुह्मनगरमित्यादयो**ऽपि षष्ठीसमासा एव । किमर्थं प्राचामित्येवं नोच्येत, लघु हि प्राचामिति वचनमनुदीचामिति वचनात् ? नैवं शक्यम्; मध्यदेशनगरे विराटनगरमित्यत्र न स्यात् । पूर्वपदाद्युदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते, न समास एव भवति ॥ ८९ ॥

**पदमञ्जरी**

कर्क्यादिप्रतिषेधस्तु नामधेयार्थः स्यात्—'वा नामधेयस्य वृद्धसंज्ञा वक्तव्या' इति ॥ ८७ ॥ ८८-८९ ॥

**भावबोधिनी**

अवृद्ध—इसका क्या फल है ? दाक्षिप्रस्थः । माहकिप्रस्थः । [ नामधेय के कारण वृद्ध संज्ञा पक्ष में यह सूत्र नहीं लगता है । ]

कर्की आदि से भिन्न का—इसका क्या फल है ? कर्कीप्रस्थः । मघीप्रस्थः । [ इनमें नहीं होता है । ]

कर्की । मघी । मकरी । कर्कन्धू । शमी । करीर । कटुक । कुरल । बदर । ये कर्क्यादि हैं । [ इनको छोड़कर पूर्वपद आद्युदात्त होता है । ] ॥ ८७ ॥

'प्रस्थे' इसकी अनुवृत्ति होती है । प्रस्थ शब्द उत्तरपद रहने पर माला आदि पूर्वपदों का आदि उदात्त है । उदा०—मालाप्रस्थः । शालाप्रस्थः ।

माला । शाला । शोणा । द्राक्षा । क्षौमा । क्षामा । काञ्ची । एक । काम । ये मालादि हैं ।

वृद्धसञ्ज्ञक शब्दों के लिए यह सूत्र बनाया गया है । एक और शोणा शब्दों की वृद्धसंज्ञा 'एङ् प्राचां देशे' ( पा० सू० १।१।७५ ) सूत्र से होती है । [ अतः उनमें भी सूत्र लगता है । ] ॥ ८८ ॥

नगर शब्द उत्तरपद रहने पर महत् और नव शब्दों को छोड़कर पूर्वपद आद्युदात्त होता है, यदि वह उत्तरदेशवर्त्तियों का नहीं हो तो । उदा०—सुह्मनगरम् । पुण्ड्रनगरम् ।

महत् और नव को छोड़कर—इसका क्या फल है ? महानगरम् । नवनगरम् । [ इनमें अन्तोदात्त है । ] उत्तरवर्त्तियों का नहीं—इसका क्या फल है ? नदीनगरम् । कान्तीनगरम् । [ इनमें भी अन्तोदात्त ही होता है । ] ॥ ८९ ॥

१. 'विराटनगरम्' इति पुस्तकान्तरेऽधिकम् ।

**२७५३. अर्मे चावर्णं द्व्यच् त्र्यच् ॥ ९० ॥ ( ३८२४ )**

अर्मशब्द उत्तरपदे द्व्यच्त्र्यच् पूर्वपदमवर्णान्तमाद्युदात्तं भवति । दत्तार्मम् । गुप्तार्मम् । कुक्कुटार्मम् । वायसार्मम् ।

अवर्णमिति किम् ? बृहदर्मम् । द्व्यच्त्र्यजिति किम् ? कपिञ्जलार्मम् ।

अमहन्नवमित्येव—महार्मम् । नवार्मम् ॥

**२७५४. न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ ९१ ॥ ( ३८२५ )**

भूत, अधिक, सञ्जीव, मद्र, अश्मन्, कज्जल—इत्येतानि पूर्वपदानि अर्मशब्द उत्तरपदे नाद्युदात्तानि भवन्ति । भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् ।

मद्राश्मग्रहणं सङ्घातविगृहीतार्थम्—मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । कज्जलार्मम् । समासान्तोदात्तत्वमेवात्र भवति ।

न्यासः

अर्मे चावर्णं द्व्यच्त्र्यच् ॥ ९० ॥

न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ मद्राश्मग्रहणमित्यादि । उभयत्रापि द्व्यच् त्र्यजिति च प्राप्तिरस्ति । तस्मात् सङ्घातार्थं विगृहीतार्थञ्च वचनम् । कथं पुनः सङ्घातविगृहीतार्थत्वं लभ्यते ? एकशेषं कृत्वा मद्राश्म इति निर्देशात् । मद्राश्मा च मद्राश्मानौ चेत्येकशेषः । एकशेषे सति मद्रशब्दस्य अश्मशब्दस्य च केवलस्य, मद्राश्मशब्दस्य च सङ्घातस्य प्रतिषेध उपपद्यते ।

पदमञ्जरी

**अर्मे चावर्णं द्व्यच्त्र्यच् ॥ बृहदर्ममिति ।** 'स्वरविधौ व्यञ्जनमविद्यमानवत्' ( व्या० प० ३७ ) इत्येतदत्र नाश्रीयते; अनित्यत्वात् । **महार्ममिति ।** आत्वे कृतेऽवर्णान्तत्वादस्ति प्राप्तिः । **नवार्ममिति ।** नवशब्दः प्रत्यग्रवचनोऽकारान्तः ॥ ९० ॥

**न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ मद्राश्मग्रहणं सङ्घातविगृहीतार्थमिति ।** मद्रशब्दस्य केवलस्य मद्राश्मशब्दस्य च सङ्घातस्य प्रतिषेधार्थमित्यर्थः ।

भावबोधिनी

अर्म शब्द उत्तरपद रहने पर दो अचों वाला और तीन अचों वाला पूर्वपद जो अवर्णान्त है, आद्युदात्त होता है । उदा०—दत्तार्मम् । गुप्तार्मम् । कुक्कुटार्मम् । वायसार्मम् । [ इनमें पूर्वपद आद्युदात्त है । ]

अवर्णान्त न हो—इसका क्या फल है ? बृहदर्मम् ! [ बृहत् यह अकारान्त नहीं है । ] दो और तीन अचोंवाला—इसका क्या फल है ? कपिञ्जलार्मम् । [ इसमें चार अचोंवाला पूर्वपद है । ]

महत् और नव को छोड़कर ही—महार्मम् । नवार्मम् । [ यहाँ नहीं होता है । ] ॥ ९० ॥

भूत, अधिक, सञ्जीव, मद्र, अश्मन्, कज्जल—ये पूर्वपद, अर्म शब्द उत्तरपद रहने पर आद्युदात्त नहीं होते हैं । उदा० भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् । [ इनमें समास का अन्तोदात्त होता है । ]

मद्राश्म का ग्रहण—समुदाय का और पृथक्-पृथक् का ग्रहण कराने के लिए है—मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । [ सभी में निषेध होता है । ] कज्जलार्मम् । इनमें समास का अन्तोदात्त ही होता है ।

ॐ आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ॐ ( म० भा० )। दिवो॑दासाय गायत। वध्र्यश्वाय॑ दा॒शुषे॑ ॥ [दिवो॑दासं वध्र्यश्वाय॑ दा॒शुषे॑। ऋ० ६.६१.१]।

## २७५५. अन्तः ॥ ९२ ॥ ( ३८२६ )

'अन्तः' इत्यधिकृतम्, इत उत्तरं यद्वक्ष्यामस्तत्र पूर्वपदस्यान्त उदात्तो भवतीत्येवं वेदितव्यम्। वक्ष्यति—'सर्वं गुणकार्त्स्न्ये' ( ६.२.९३ ) सर्वश्वे॑तः। स॒र्वकृ॑ष्णः'।

प्राक् 'उत्तरपदादिः' ( ६.२.१११ ) इत्येतस्मादयमधिकारो वेदितव्यः ॥

## २७५६. सर्वं गुणकार्त्स्न्ये ॥ ९३ ॥ ( ३८२७ )

सर्वशब्दः पूर्वपदं गुणकार्त्स्न्ये वर्त्तमानमन्तोदात्तं भवति। स॒र्वश्वे॑तः। स॒र्वकृ॑ष्णः। स॒र्वम॑हान्।

### न्यासः

आद्युदात्तस्य प्रकरणमित्याद्युदात्तप्रकरणम्, प्रक्रान्तम्। तत्र दिवोदासादीनां छन्दस्याद्युदात्तो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु—'युक्ते च' इत्येवमादौ येऽस्मिन् प्रकरणे चकाराः, तेषामन्यतमस्यानुक्तसमुच्चयार्थतामाश्रित्य कर्तव्यम् ॥ ९१ ॥

**अन्तः** ॥ ९२ ॥ **सर्वं गुणकार्त्स्न्ये** ॥ **गुणकार्त्स्न्यं इति**। गुणकार्त्स्न्यं गुणस्य सर्वत्रभावः। **सर्वश्वेत इति**। 'पूर्वकालैक' इत्यादिना समानाधिकरणसमासः। अत्र समुदायगुणस्य सर्वत्र भावः। न तु तदवयवे तत्र सर्वशब्दो वर्तते इति गुणकार्त्स्न्यस्य वृत्तिर्भवति। **परमश्वेत इति**। कथं पुनरत्र गुणकार्त्स्न्ये परमशब्दो वर्तते, यावतासौ

### पदमञ्जरी

**मद्राश्मार्ममिति**। 'अनोऽश्मायःसरसां जातिसंज्ञयोः' इति समासान्ते सत्यवर्णान्तमेतद्भवति, तदेवम्—मद्रार्मम्, मद्राश्मार्ममिति द्वे एवोदाहरणे। प्रायेण तु **अश्मार्ममिति** तृतीयमप्युदाहरणं पठ्यते, तदयुक्तम्; अश्मशब्दस्य नकारान्तत्वात्। न च लोपे कृतेऽवर्णान्तत्वम्; स्वरविधौ नलोपस्यासिद्धत्वात्। तथा च वक्ष्यति—पञ्चार्मम्, दशार्ममित्यत्र 'अर्मे चावर्णं द्व्यच्त्र्यच्' इत्ययं स्वरो न भवतीति।

अपर आह—'मद्राश्मग्रहणं सङ्घातविगृहीतार्थम्' इत्यस्य भाष्येऽदर्शनादनार्षो वृत्तौ पाठ इति।

**दिवोदासायेति**। [ **दिवोदासमिति** ] 'दिवश्च दासे' ( का० वा० ७२६ ) इति षष्ठ्या अलुक् ॥ ९१ ॥

**अन्तः** ॥ अत्रापि प्रकरणे पूर्वपदविषया प्रथमा षष्ठ्यर्थे द्रष्टव्या ॥ ९२ ॥

**सर्वं गुणकार्त्स्न्ये** ॥ यत्र गुणान्तरस्याभावस्तत्र गुणकार्त्स्न्यं भवति। **सर्वश्वेत इति**। 'पूर्वकालैक' इत्यादिना कर्मधारयः। अत्र शुक्लेन गुणेन सर्वावयवानां व्याप्तिर्गम्यते।

### भावबोधिनी

ॐ आद्युदात्त के प्रकरण में दिवोदास आदि का वेद में उपसंख्यान करना चाहिए। ॐ "दिवोदासं वद्ध्र्यश्वाय दाशुषे।" [ पूर्वपद का आद्युदात्त होता है। ॥ ९१ ॥ ]

'अन्त' इसका अधिकार चलता है, यहाँ से आगे जिसे कहा जायगा उसमें पूर्वपद का अन्त उदात्त होता है—ऐसा समझना चाहिए। कहेंगे—"सर्वं गुणकार्त्स्न्ये" ( ६।२।३ ) सर्वश्वेतः। सर्वकृष्णः। [ पूर्वपद सर्व का अन्त उदात्त होता है। ]

'उत्तरपदादिः' ( ६।२।१११ ) इससे पहले तक 'अन्त' यह अधिकार समझना चाहिए ॥ ९२ ॥

गुण के कार्त्स्न्य अर्थ में वर्तमान सर्व शब्द पूर्वपद अन्तोदात्त होता है। उदा०—सर्वश्वेतः। सर्वकृष्णः। सर्वमहान् [ सर्व पूर्वपद का अन्त उदात्त होता है। ]

सर्वमिति किम् ? परमश्वेतः । आश्रयव्याप्त्या परमत्वं श्वेतत्वस्येति गुणकार्त्स्न्यं वर्तते । गुणग्रहणं किम् ? सर्वसौवर्णः । सर्वराजतः ।

कार्त्स्न्ये इति किम् ? सर्वेषां श्वेततरः सर्वश्वेतः । 'गुणात्तरेण समासस्तरलोपश्च वक्तव्यः' (का०वा० १) इत्येवमत्र समासः, तरब्लोपश्च ॥

**२७५७. संज्ञायां गिरिनिकाययोः ॥ ९४ ॥ ( ३८२८ )**

संज्ञायां विषये गिरि, निकाय—इत्येतयोरुत्तरपदयोः पूर्वपदमन्तोदात्तं भवति । अञ्जनागिरिः । निकाये—शापिण्डिनिकायः । मौण्डिनिकायः । चिखिल्लिनिकायः[1] ।

संज्ञायामिति किम् ? परमगिरिः । ब्राह्मणनिकायः ॥

**न्यासः**

प्रकर्षवाची, अन्यश्च प्रकर्षः, अन्यच्च गुणकार्त्स्न्यम् ? इत्यत आह—**आश्रयव्याप्त्येत्यादि** । इतिकरणो हेतौ । यस्मादाश्रयव्याप्त्या परमत्वमुत्कर्षे भवति, नान्यथा । एवं हि तस्योत्कर्ष उपपद्यते यदि सर्वमाश्रयं व्याप्नोति । तस्माद् गुणकार्त्स्न्यं इह परमशब्दो वर्तते । **सर्वसौवर्णः, सर्वराजत इति** । सुवर्णस्य विकारः सौवर्णः, रजतस्य विकारो राजतः—नात्र गुणकार्त्स्न्यम्, किं तर्हि ? जातियुक्तस्य विकारविषयं कार्त्स्न्यम् । सर्वं हि विकारद्रव्यं प्रकृतिभावेन व्याप्नोतीति द्रव्यकार्त्स्न्यमिह, तत्र च सर्वशब्दो वर्तते । **सर्वेषां श्वेततरः सर्वश्वेत इति** । अत्र गुणकार्त्स्न्ये । कथं पुनरत्र समासः, यावता 'पूरणगुणसुहित' इत्यादिना गुणवचनेन षष्ठीसमासः प्रतिषिद्धः ? अथापि कथञ्चित् समासः स्यात, एवमपि श्वेततरशब्देन समासे कृते सर्वश्वेततरमिति वक्तव्यम् ? इत्यत आह—**गुणात् तरेण समास इत्यादि** । औपसंख्यानिकाविह समासतरलोपाविति दर्शयति । समासस्वरापवादो योगः । एवमुत्तरेऽपि योगाः । 'न हास्तिनफलकमार्दयाः' इत्यतः प्राक् समासस्वरापवादो वेदितव्यः ॥ ९३ ॥

**संज्ञायां गिरिनिकाययोः** ॥ अञ्जनागिरिरित्येवमादयः षष्ठीसमासाः । अञ्जनभञ्जनशब्दयोः 'वनगिर्योः संज्ञायाम्' इति दीर्घत्वम् । शापिण्डिमौण्डिशब्दाविञन्तौ । चिखिल्लिशब्दो मत्वर्थीयेनिप्रत्ययान्तः ॥ ९४ ॥

**पदमञ्जरी**

**आश्रयव्याप्त्या परमत्वमिति** । यद्यप्यौज्ज्वल्यादिनापि परमत्वं सम्भवति, अत्र त्वेवंविधं परमत्वं विवक्षितमित्यर्थः । **सर्वसौवर्ण इति** । विकारविषयमत्र कार्त्स्न्यम् । **कार्त्स्न्ये इति किमिति** । गुणवाचिन्युत्तरपदे न सर्वशब्दस्य कार्त्स्न्यं व्यभिचरतीति प्रश्नः । **सर्वेषां श्वेततरः सर्वश्वेत इति** । गुणिकार्त्स्न्ये सर्वशब्दः, न गुणकार्त्स्न्ये । सर्वेषामिति च गुणसम्बन्धे षष्ठी, पटस्य शौक्ल्यमितिवद् । गुणवाचिन एव च प्रत्ययः, सर्वेषां पटानां द्रव्यान्तराधारो यः श्वेतगुणस्तदपेक्षया सातिशयः श्वेतो गुण इत्यर्थः ।

**गुणात्तरेणेति** । गुणाद्यस्तरप्प्रत्ययस्तदन्तेनेत्यर्थः । वचनमेवेदम्, तेन 'पूरणगुण' इति प्रतिषेधं बाधित्वा समासश्च भवति, तरब्लोपश्च ॥ ९३ ॥

**संज्ञायां गिरिनिकाययोः** ॥ **अञ्जनागिरिरिति** । 'वनगिर्योः संज्ञायाम्' इति दीर्घत्वम् ॥ ९४ ॥

**भावबोधिनी**

सर्व—इसका क्या फल है ? परमश्वेतः । आश्रय ( आधार ) की व्याप्ति के द्वारा श्वेतत्व का परमत्व है, इसलिए गुणकार्त्स्न्य है । गुणग्रहण किसलिए है ? सर्वसौवर्णः । सर्वराजतः । [ यहाँ द्रव्य है । ]

कार्त्स्न्य = सम्पूर्णता में—इसका क्या फल है ? सर्वेषां श्वेततरः—सर्वश्वेतः इसमें "गुणात्तरेण समासस्तरलोपश्च वक्तव्यः" इससे समास और तरप् प्रत्यय का लोप होता है । [ अतः इसमें कार्त्स्न्य अर्थ की प्रतीति नहीं है । ] ॥ ९३ ॥

संज्ञा-विषय होने पर गिरि और निकाय—ये उत्तरपद होने पर पूर्वपद अन्तोदात्त होता है । उदा०—अञ्जना-

---

१. चिक्खिल्लिनिकायः' इति पाठा० ।

## २७५८. कुमार्यां वयसि ॥ ९५ ॥ ( ३८२९ )

**कुमार्यामुत्तरपदे वयसि गम्यमाने पूर्वपदमन्तोदात्तं भवति । वृद्धकुमारी । जरत्कुमारी ।**

**कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिर्वयोविशेषवचनैः समानाधिकरणो भवति । तच्च वय इह गृह्यते, न कुमारत्वमेव ।**

**वयसीति किम् ? परमकुमारी ॥**

### न्यासः

**कुमार्यां वयसि ॥ वृद्धकुमारीति ।** 'विशेषणं विशेष्येण' इति समासः । **जरत्कुमारीति ।** जरती चासौ कुमारी चेति 'पूर्वकाल' इत्यादिना समासः । उभयत्र 'पुंवत् कर्मधारय' इत्यादिना पुंवद्भावः ।

ननु च कुमारीशब्दः प्रथमे वयसि वर्तते, तथा हि 'वयसि प्रथमे' इति ङीबत्र विहितः, वृद्धाजरतीशब्दौ चरमे वयसि वर्तेते, तत्कथमिह सामानाधिकरण्यम् ? इत्यत आह—**कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्त इति ।** असम्प्रयोगः—असम्बन्धः । तन्मात्रप्रवृत्तिनिवृत्तिसमुदायावयवः सामान्ये प्रवृत्तः । कुमारीशब्दो यथा वृद्धादिभिर्वयोविशेषवचनैर्विशेष्यते तदा तैः समानाधिकरणो भवति । वयोविशेषोऽन्त्यं वयः । कथं पुनर्विशेषवचनं सामान्ये वर्तते ? वयोग्रहणसामर्थ्यात् । यदि वृद्धकुमारीशब्दः प्रथमे वयसि वर्तते वयोग्रहणमनर्थकं स्यात् । यत्र कुमारीशब्दः प्रयुज्यते प्रथमवयोवाची, तत्र नियोगतो वयो गम्यत एवेति किं वयोग्रहणेन ? तस्माद् वयोग्रहणसामर्थ्याद् यथोक्तेन प्रकारेण वयःसामान्ये प्रवर्तते । वयोग्रहणेन हि तस्माद् विशेषादपनीयासौ

### पदमञ्जरी

**कुमार्यां वयसि ॥ वृद्धकुमारीति ।** विशेषणसमासः । **जरत्कुमारीति ।** जरती शब्दस्य 'पूर्वकालैक 'इत्यनेन, अत्रोभयत्र 'पुंवत्कर्मधारय' इत्यादिना पुंवद्भावः ।

ननु च कुमारीशब्दः प्रथमे वयसि वर्तते, तथा च 'वयसि प्रथमे' इति ङीबत्र विहितः, तस्य कथं चरमवयोवाचिभ्यां वृद्धाजरतीशब्दाभ्यां सामानाधिकरण्यम् ? अत आह—**कुमारीशब्द इत्यादि ।** कुमार्यां हि द्वयं दृष्टम्—प्रथमं वयः, पुंसा सहासम्प्रयोगश्च; तत्र प्रथमार्थप्रहाणेन द्वितीयमर्थमसम्प्रयोगमात्रमुपाददानस्य सम्भवति सामानधिकरण्यमित्यर्थः । **तच्चेति ।** वृद्धादिशब्दान्तराभिधेयमित्यर्थः । **कुमारत्वमेवेति ।** यदेतत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं न तद्वयो गृह्यत इत्यर्थः । एतच्च वयोग्रहणसामर्थ्याल्लभ्यते; अन्यथा कुमारीशब्दप्रयोगे नियमतः प्रथमवयो गम्यते इत्यनर्थकं तत्स्यात् ।

**परमकुमारीत्यत्र** कुमारत्वमेव प्रतीयते, न वयोऽन्तरमिति भवति प्रत्युदाहरणम् ॥ ९५ ॥

### भावबोधिनी

गिरिः । भञ्जनागिरिः । निकाय उत्तरपद होने पर—शापिण्डिनिकायः । मौण्डिनिकायः । चिखिल्लिनिकायः । [ इनमें पूर्व पद का अन्तोदात्त होता है । ]

संज्ञा-विषय रहने पर—इसका क्या फल है ? परमगिरिः । ब्राह्मणनिकायः । [ ये यौगिक हैं । अतः समासान्त उदात्त होता है ॥ ९४ ॥

कुमारी उत्तरपद रहने पर वयः = अवस्था गम्यमान रहने पर पूर्वपद अन्तोदात्त होता है । उदा०—वृद्धकुमारी । जरत्कुमारी ।

कुमारी शब्द पुरुष के साथ असम्प्रयोग मात्र प्रवृत्तिनिमित्त को लेकर प्रयुक्त होता हुआ वृद्ध आदि वयोविशेष के वाचक शब्दों का समानाधिकरण होता है । वही वयः इस सूत्र में ली जाती हैं, न कि कुमारत्व आदि ।

**२७५९. उदकेऽकेवले ॥ ९६ ॥ ( ३८३० )**

अकेवलम् = मिश्रम्, तद्वाचिनि समासे उदकशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति। गुडमिश्रमुदकम् गुडोदकम्। तिलोदकम्[1]।

स्वरे कृते एकादेशः 'स्वरितो वानुदात्ते पदादौ' ( ८.२.६ ) इति पक्षे स्वरितो भवति। गुडो'दकम्। तिलो'दकम्।

अकेवल इति किम्? शीतोदकम्। उष्णोदकम्॥

**२७६०. द्विगौ क्रतौ ॥ ९७ ॥ ( ३८३१ )**

द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं भवति। गर्गत्रिरात्रः। चरकत्रिरात्रः। कुसुरुविन्दसप्तरात्रः। गर्गाणां त्रिरात्रः गर्गत्रिरात्रः।

**न्यासः**

सामान्यवृत्तिराश्रीयते। **तच्च वय इह गृह्यत इति**। यत्र वर्तमानो विशेषवचनैः सह समानाधिकरणो भवति, तच्च वयो गृह्यते। चशब्दादन्यच्च यौवनाधीनकुमारत्वमेवेति, न प्रथमवय इत्यर्थः।

**परमकुमारीति**। अत्र समासात् पूज्यमानता; पूज्यमानत्वं तु दर्शनीयत्वात्। दर्शनीया कन्येत्यर्थः। न ह्यत्र समासो वयोऽभिधानपरः। नाप्युत्तरपदं वयःसामान्ये वर्तते॥ ९५॥

**उदकेऽकेवले**। **मिश्रमिति**। द्रव्यान्तरसम्पृक्तमित्यर्थः। **गुडमिश्रमिति**। शाकपार्थिवादित्वादुत्तरपदलोपिसमासः।

**शीतोदकमिति**। विशेषणसमासः। पूर्वपदमत्र गुणोपसर्जनमुदकं ब्रूते। उत्तरपदमपि जात्युपसर्जनम्। तथैव तेनैकमेव वस्तु जातिगुणाभ्यामुच्यत इति केवलोदकवाचिसमासः॥ ९६॥

**द्विगौ क्रतौ**॥ **गर्गत्रिरात्रादयः** षष्ठी-समासाः। तिसृणां रात्रीणां समाहारस्त्रिरात्रः। 'अहःसर्वैकदेश'

**पदमञ्जरी**

**उदकेऽकेवले**॥ असन्देहार्थम् 'केवल उदके' इत्यवचनाद् 'अकेवले' इति पदच्छेदः। मिश्रम् = द्रव्यान्तरसंयुक्तम्॥ ९६॥

**द्विगौ क्रतौ**॥ गर्गत्रिरात्रादयः षष्ठीसमासाः। तिसृणां रात्रीणां समाहारस्त्रिरात्रः, 'अहःसर्व' इत्यादिनाच्

**भावबोधिनी**

वयः में—इसका क्या फल है? परमकुमारी। [ इसमें नहीं होता है। ]॥ ९५॥

अकेवल = मिश्र ( मिला हुआ ), इसके वाचक समास में उदक शब्द उत्तरपद रहने पर पूर्वपद अन्तोदात्त होता है। उदा० गुडमिश्रम् उदकम्—गुडोदकम्। [ तिलमिश्रम् उदकम्—तिलोदकम्। ] [ पूर्वपद का अन्त उदात्त है। ] [ पूर्वपद के अन्त का उदात्त ] स्वर करने पर एकादेश 'स्वरितो वाऽनुदात्ते पदादौ' इस सूत्र से पक्ष में स्वरित भी होता है।

अकेवल = मिश्र होने पर—इसका क्या फल है? शीतोदकम्। उष्णोदकम्। [ यहाँ अकेला उदक है। अतः यह सूत्र नहीं लागू होता है। ]॥ ९६॥

द्विगु उत्तरपद होने पर क्रतुवाची समास में पूर्वपद अन्तोदात्त होता है। उदा०—गर्गत्रिरात्रः। चरकत्रिरात्रः। कुसुरविन्द-त्रिरात्रः। [ तिसृणां रात्रीणां समाहारः—में त्रिरात्रि से 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' सूत्र से अच् त्रिरात्रः बनाकर ] गर्गाणां त्रिरात्रः—गर्गत्रिरात्रः होता है। [ पूर्व पद गर्ग का अन्तोदात्त होता है। ]

---

१. 'तण्डुलोदकम्'—इत्यधिकं पुस्तकान्तरे।

**द्विगाविति किम् ? अतिरात्रः । अचश्चित्त्वादन्तोदात्तः । क्रताविति किम् ? बिल्वसप्तरात्रः । बिल्वशतस्य बिल्वहोमस्य वा सप्तरात्रो बिल्वसप्तरात्रः ॥**

## २७६१. सभायां नपुंसके ॥ ९८ ॥ ( ३८३२ )

**सभाशब्द उत्तरपदे नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तं भवति । गोपालसभम् । पशुपालसभम् । स्त्रीसभम् । दासीसभम् ।**

**सभायामिति किम् ? ब्राह्मणसेनम् ।**

**नपुंसकमिति किम् ? राजसभा । ब्राह्मणसभा ।**

**सभायां प्रतिपदोक्तमिह नपुंसकलिङ्गं गृह्यत इति रमणीयसभं ब्राह्मणकुलमित्यत्र न भवति ॥**

### न्यासः

इत्यादिनाच् समासान्तः । **अतिरात्र इति** । रात्रिमतिक्रान्त इति प्रादिसमासः ॥ ९७ ॥

**सभायां नपुंसके ॥ गोपालसभमित्येवमादयोऽपि** षष्ठीसमासाः 'सभाऽराजामनुष्यपूर्वा' इति नपुंसकत्वम् । **राजसभा, ब्राह्मणसभेत्यत्र** 'अमनुष्यपूर्वा' इति प्रतिषेधान्नपुंसकता न भवति ।

अथेह कस्मान्न भवति—रमणीया सभाऽस्य ब्राह्मणकुलस्य रमणीयसभम् ? इत्यत आह—**प्रतिपदोक्तमित्यादि** । लक्षणप्रतिपदोक्तपरिभाषया यत् प्रतिपदोक्तं नपुंसकं तदिह गृह्यते । न चेह तथाविधं नपुंसकत्वम् । अत्र त्वभिधेयवल्लिङ्गवचनानि भवन्तीति ब्राह्मणकुलस्याभिधेयस्य नपुंसकत्वात् न तत् प्रतिपदोक्तम् ॥ ९८ ॥

### पदमञ्जरी

समासान्तः । **अतिरात्र इति** । रात्रिमतिक्रान्त इति प्रादिसमासः ॥ ९७ ॥

**सभायां नपुंसके** ॥ गोपालसभादौ 'अशाला च' इति नपुंसकत्वम् ।

**रमणीयसभमिति** । अत्राभिधेयवशान्नपुंसकत्वम्, न प्रतिपदोक्तम् ॥ ९८ ॥

### भावबोधिनी

द्विगु में—इसका क्या फल है ? अतिरात्रः । अच् प्रत्यय चित् होने से यहाँ समास का अन्त उदात्त होता है । क्रतुवाचक होने पर—इसका क्या फल है । बिल्वसप्तरात्रः । बिल्वशतस्य बिल्वहोमस्य वा सप्तरात्रः—बिल्वसप्तरात्रः है । [ क्रतु नहीं है । ] ॥ ९७ ॥

सभा शब्द उत्तरपद रहने पर नपुंसकलिङ्ग समास में पूर्वपद अन्तोदात्त होता है । उदा०—गोपालसभम् । पशुपालसभम् । स्त्रीसभम् । दासीसभम् । [ इनमें षष्ठी-समास करने पर "सभाऽराजाऽमनुष्यपूर्वा" सूत्र से नपुंसक लिङ्ग होता है । ]

सभा उत्तरपद में—इसका क्या फल है ? ब्राह्मणसेनम् । [ यहाँ सभा नहीं है ]

नपुंसक—यह किसलिए है ? राजसभा । ब्राह्मणसभा । [ यहाँ राजा और मनुष्य पूर्व में होने से नपुंसकत्व नहीं है । अतः यह सूत्र नहीं लगता है । ]

सभा में प्रतिपदोक्त नपूंसकलिङ्ग लिया जाता है अतः—रमणीयसभं ब्राह्मणकुलम् इसमें नहीं होता है । [ क्योंकि ब्राह्मणकुल का विशेषण बनने से सभा शब्द नपुंसक है प्रतिपदोक्त नपुंसकता नहीं है । ] ॥ ९८ ॥

## २७६२. पुरे प्राचाम् ॥ ९९ ॥ ( ३८३३ )

पुरशब्द उत्तरपदे प्राचां देशे पूर्वपदमन्तोदात्तं भवति। ललाटपुरम्। काञ्चीपुरम्। शिवदत्तपुरम्। कार्णिपुरम्। नार्मपुरम्।

प्राचामिति किम् ? शिवपुरम् ॥

## २७६३. अरिष्टगौडपूर्वे च ॥ १०० ॥ ( ३८३४ )

अरिष्ट, गौड—इत्येवम्पूर्वे समासे पुरशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति। अरिष्टपुरम्। गौडपुरम्। पूर्वग्रहणं किम् ? इहापि यथा स्यात्—अरिष्टश्रितपुरम्। गौडभृत्यपुरम् ॥

## २७६४. न हास्तिनफलकमार्देयाः ॥ १०१ ॥ ( ३८३५ )

हास्तिन, फलक, मार्देय—इत्येतानि पूर्वपदानि पुरशब्द उत्तरपदे नान्तोदात्तानि भवन्ति। 'पुरे प्राचाम्'

**न्यासः**

**पुरे प्राचाम् ॥ ललाटपुरमित्येवमादयः षष्ठीसमासाः ॥ ९९ ॥**

**अरिष्टगौडपूर्वे च ॥ अरिष्टपुरम्, गौडपुरमिति।** एतावपि षष्ठीसमासावेव। पूर्वग्रहणं किमिति ? एवं मन्यते-अरिष्टगौडादयोरिति वक्तव्यम्, एवमप्युच्यमानेऽरिष्टगौडादयोः पुरशब्द उत्तरपदेऽन्तोदात्तत्वं सिध्यत्येवेति। **इहापि यथा स्यादिति।** यदि पूर्वग्रहणं न क्रियेत; तदारिष्टं श्रितस्तस्य पुरमरिष्टश्रितपुरमिति। गौडानां भृत्या गौडभृत्याः, तेषां पुरं गौडभृत्यपुरमित्यत्र न स्यात्। अत्र पूर्वपदमरिष्टश्रितशब्दो गौडभृत्यशब्दश्च, न त्वरिष्टगौडशब्दौ। पूर्वग्रहणे तु सति बहुव्रीहिर्लभ्यते—अरिष्टगौडादी पूर्वौ यस्मिन् समासे सोऽरिष्टगौडपूर्व इति। तेनारिष्टश्रितपुरम्, गौडभृत्यपुरमित्यत्रापि यदुत्तरपदं तस्याप्यन्तोदात्तत्वं भवत्येव। अत्रापि ह्यरिष्टशब्दो गौडशब्दश्च पूर्वः। पूर्वश्चायमवयववचनः ॥ १०० ॥

**न हास्तिनफलकमार्देयाः ॥ १०१ ॥ कुसूलकूपकुम्भशालं बिले ॥ कुसूलबिलमित्येवमादयः षष्ठीसमासाः।**

**पदमञ्जरी**

**अरिष्टगौडपूर्वे च ॥ पूर्वग्रहणं किमिति।** 'अरिष्टगौडयोरिति वक्तव्यम्' इति प्रश्नः। **इहापि यथा स्यादिति।** पूर्वग्रहणे हि सति बहुव्रीहिर्लभ्यते—अरिष्टगौडौ पूर्वौ यस्मिन्समास इति। तेनारिष्टाश्रितपुरम्, गौडभृत्यपुरमित्यत्रापि पूर्वपदमन्तोदात्तं भवति। असति तु पूर्वग्रहणे श्रित-भृत्यशब्दाभ्यां व्यवहितत्वादपूर्वपदत्वादरिष्टगौडयोस्तावन्न स्यात्; समुदाययोश्च सूत्रेऽनुपात्तत्वात् ॥ १०० ॥

**न हास्तिनफलकमार्देयाः ॥ मार्देय इति।** 'ढेलोपोऽकद्र्वाः' इत्युकारलोपः ॥ १०१ ॥ १०२ ॥

**भावबोधिनी**

पुर शब्द उत्तर पर रहने पर पूर्व के लोगों का देश होने पर पूर्वपद अन्तोदात्त होता है। उदा०—ललाटपुरम्। काञ्चीपुरम्। शिवदत्तपुरम्। कार्णिपुरम्। नार्मपुरम्। [ ये सभी पूर्ववर्त्ती देश हैं। अतः सूत्र पूर्वपद का अन्तोदात्त करता है। ] पूर्व के देश—इसका क्या फल है ? शिवपुरम्। [ यहाँ पूर्वभिन्न का देश है। ] ॥ ९९ ॥

अरिष्ट और गौड—ये पूर्व में रहने वाले समास में पुर शब्द उत्तरपद रहने पर पूर्वपद का अन्तोदात्त होता है। उदा० अरिष्टपुरम्। गौडपुरम्।

पूर्व में रहने पर—इसका क्या फल है ? यहाँ भी जिससे हो सके—अरिष्टश्रितपुरम्। गौडभृत्यपुरम्। [ अन्य शब्द के साथ भी अरिष्ट या गौड़ पूर्व में होने पर यह सूत्र लगे इसके लिये 'पूर्वे' का ग्रहण है। ] ॥ १०० ॥

हास्तिन, फलक, मार्देय—ये पूर्वपद, पुर शब्द उत्तरपद रहने पर अन्तोदात्त नहीं होते हैं। "पुरे प्राचाम्" इस

( ६.२.९९ ) इति प्राप्तिः प्रतिषिध्यते। हास्तिनपुरम्। फलकपुरम्। मार्देयपुरम्। मृदोरपत्यं मार्देयः। शुभ्रादित्वाद् ( ४.१. १२३ ) ढक्॥

२७६५. कुसूलकूपकुम्भशालं बिले ॥ १०२ ॥ ( ३८३६ )

कुसूल, कूप, कुम्भ, शाला—इत्येतानि पूर्वपदानि बिलशब्दे उत्तरपदेऽन्तोदात्तानि भवति। कुसूलबिलम्। कूपबिलम्। कुम्भबिलम्। शालाबिलम्।

कुसूलादिग्रहणं किम्? सर्पबिलम्। बिल इति किम्? कुसूलस्वामी॥

२७६६. दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥ १०३ ॥ ( ३८३७ )

दिक्शब्दाः पूर्वपदानि अन्तोदात्तानि भवन्ति ग्रामजनपदाख्यानवाचिषूत्तरपदेषु, चानराटशब्दे च। पूर्वेषुकामशमी। अपरेषुकामशमी। पूर्वकृष्णमृत्तिका। अपरकृष्णमृत्तिका। जनपद—पूर्वपञ्चालाः। अपर-

**न्यासः**

समासस्वरापवादो योगः। एवमुत्तरेऽपि 'बहुव्रीहौ विश्वं संज्ञायाम्' इत्यतः प्राग्योगाः समासस्वरापवादा वेदितव्याः॥ १०२॥

**दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु**॥ **पूर्वेषुकामशमीति**। 'दिक्संख्ये संज्ञायाम्' इति समासः। **एवमपरेषुकामशमीत्यत्रापि**। **पूर्वकृष्णमृत्तिकेति**। पूर्वा चासौ कृष्णमृत्तिका चेति 'पूर्वापर' इत्यादिना समासः।

**पदमञ्जरी**

**दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु**॥ चानराटे स्वरूपग्रहणम्, इतरेषु अर्थग्रहणम्। **पूर्वेषुकामशमीति**। 'दिक्संख्ये संज्ञायाम्' इति समासः। **पूर्वपञ्चाला इति**। 'समुदाये हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते'

**भावबोधिनी**

पूर्ववर्त्ती सूत्र से प्राप्ति का प्रतिषेध होता है। उदा० हास्तिनपुरम्। फलकपुरम्। मार्देयपुरम्। मृदु का अपत्य—मार्देय। शुभ्रादिगणीय मानकर ढक् [ मृदु + ढ = ए 'ढेलोपोऽकद्र्वाः' से उकार का लोप होता है। ] इनमें पूर्वपद के अन्तोदात्तत्व का प्रतिषेध होने से समास का अन्तोदात्त होता है। ] ॥ १०१ ॥

कुसूल, कूप, कुम्भ, शाला—ये पूर्वपद बिलशब्द उत्तरपद रहने पर अन्तोदात्त होते हैं। उदा०—कुसूलबिलम्। कूपबिलम्। कुम्भबिलम्। शालाबिलम्। [ यहाँ कुसूलादि पूर्वपदों का अन्त उदात्त है। ]

कुसूलादि का ग्रहण किस लिए है? सर्पबिलम्। यहाँ न हो। बिल रहने पर—इसका क्या महत्त्व है? कुसूल-स्वामी। [ इनके समास का अन्तोदात्त होता है। ] ॥ १०२ ॥

दिक्शब्द पूर्वपद अन्तोदात्त होते हैं, ग्राम, जनपद और आख्यान के वाचक शब्द उत्तरपद हों और चानराट शब्द उत्तरपद हो तो। उदा०—पूर्वेषुकामशमी। अपरेषुकामशमी। पूर्वकृष्णमृत्तिका। अपरकृष्णमृत्तिका। [ यहाँ ग्राम-वाचक शब्द उत्तरपद हैं। ] जनपदवाचक—पूर्वपञ्चालाः। अपरपञ्चाला। [ यहाँ जनपदवाचक उत्तरपद हैं। ] आख्यान—पूर्वाधिरामम्। पूर्वयायातम्। अपरयायातम्। अधिराम को अधिकृत करके=विषय बनाकर लिखा गया ग्रन्थ—आधिरामम् है। [ 'अधिकृत्य कृते ग्रन्थे' सूत्र से अण् होता है। इसी प्रकार आगे के उदाहरणों में भी समझना चाहिए। ] इसी प्रकार—यायातम्। [ ययाति को विषय बनाकर लिखा गया ग्रन्थ। ] चानराट शब्द रहने पर—पूर्वचानराटम्। अपरचानराटम्। [ चानराट का अर्थ सन्दिग्ध है। ]

पञ्चालाः । आख्यान—पूर्वाधिरामम्[1] । पूर्वयायातम् । अपरयायातम् । अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम् । तथा यायातम् । चानराट—पूर्वचानराटम् । अपरचानराटम् ।

**शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम् ॥**

**२७६७. आचार्योपसर्जनश्चान्तेवासिनि ॥ १०४ ॥ ( ३८३८ )**

**आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपदे दिक्शब्दा अन्तोदात्ता भवन्ति । पूर्वपाणिनीयाः । अपरपाणिनीयाः । पूर्वकाशकृत्स्नाः । अपरकाशकृत्स्नाः ।**

**न्यासः**

**एवमपरकृष्णमृत्तिकेत्येवमादावपि** । अधिराममधिकृत्य कृतो ग्रन्थ **आधिरामम्** 'अधिकृत्य कृते ग्रन्थे' इत्यण् । अथ यथा—चानराटे रूपग्रहणं तथा ग्रामादिष्वपि कस्मान्न भवति ? अर्थप्रधानत्वात् निर्देशस्य । शब्दप्रधाने हि निर्देशस्य स्वरूपग्रहणं भवतीत्युक्तम् । इह चानराट एव शब्दप्रधानो निर्देशः, ग्रामादिष्वर्थप्रधान एव ।

अथ शब्दग्रहणं किमर्थम्, न दिगित्येवोच्येत ? इत्यत आह—**शब्दग्रहणमित्यादि** । असति हि शब्दग्रहणे पूर्वाधिरामम्, पूर्वयायातमित्यत्र न स्यात् । कस्मात् ? इह कालवाची पूर्वशब्दः । दिग्वाचिशब्दग्रहणे सति दिक्शब्दमात्रग्रहणं भवति । तस्मात् कालवाचिनोऽपि दिक्शब्दस्य परिग्रहो यथा स्यादित्येवमर्थं शब्दग्रहणम् ॥१०३॥

**अचार्योपसर्जनश्चान्तेवासिनि** ॥ **आचार्योपसर्जनश्चेति** । सुपां सुर्भवतीति सप्तम्येकवचनस्य स्थाने प्रथमैकवचनम्, एतच्चान्तेवासिविशेषणम् । **आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपद इति** । आचार्य उपसर्जनम् = अप्रधानं यस्यान्तेवासिनः स तथोक्तः । आचार्योपसर्जनश्चासावन्तेवासी चाचार्योपसर्जनान्तेवासी, तं वक्तुं शीलं यस्योत्तरपदस्य तदाचार्योपर्जनान्तेवासिवाचि । **पूर्वपाणिनीया इति** । 'पूर्वापर' इत्यादिना समासः । पाणिनेराचार्यस्यान्तेवासिनः पाणिनीयाः, अत्रान्तेवासिनः प्राधान्येनोच्यन्ते प्रत्ययान्तेन; आचार्यस्तु तद्विशेषणत्वादुपसर्जन-

**पदमञ्जरी**

( व्या० प० ८५ ) इति पञ्चालैकदेशे पञ्चालशब्दः, ततः 'पूर्वापरप्रथम' इत्यादिना कर्मधारयः । **शब्दग्रहणमित्यादि** । दिशि दृष्टः शब्दो दिक्शब्द इत्युत्तरपदलोपी समासः, तेन कालवाचिनोऽपि ग्रहणात् पूर्वयायातमित्यादावपि भवति ॥ १०३ ॥

**आचार्योपसर्जनश्चान्तेवासिनि** ॥ आचार्योपसर्जनग्रहणमन्तेवासिनो विशेषणम्, सप्तम्यर्थे प्रथमा । **आचार्योपसर्जनान्तेवासिवाचिनीति** । आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः, स चासावन्तेवासी च आचार्योपसर्जनान्तेवासी, तद्वाचिनि । **पूर्वपाणिनीया इति** । पूर्ववत्समासः, पाणिनेश्छात्राः पाणिनीयाः, अत्रान्तेवासिनः प्रधानम्, आचार्यस्तूपसर्जनम् । काशकृत्स्निशब्दात् 'अतश्च' इत्यण् ।

**भावबोधिनी**

शब्द का ग्रहण कालवाचक भी दिक्शब्द का परिग्रहण कराने के लिए है । [ अत एव पूर्वयायातम् आदि में भी पूर्वपद अन्तोदात्त होता है । ] ॥ १०३ ॥

आचार्य जिसका उपसर्जन ( विशेषण ) है ऐसा अन्तेवासिवाचक उत्तरपद रहने पर दिक्शब्द अन्तोदात्त होते हैं । उदा०—पूर्वपाणिनीयाः । अपरपाणिनीयाः । पूर्वकाशकृत्स्नाः । अपरकाशकृत्स्नाः । [ इनमें पाणिनि और काशकृत्स्न उपसर्जन हैं । शिष्य अर्थ विशेष्य हैं । ]

---

१. 'पूर्वाधिरामकम्'—इत्यधिकमन्यत्र पुस्तके ।

आचार्योपसर्जन इति किम् ? पूर्वशिष्याः। अन्तेवासिनीति किम् ? पूर्वपाणिनीयं शास्त्रम् ॥

**२७६८. उत्तरपदवृद्धौ सर्वं च ॥ १०५ ॥ ( ३८३९ )**

**उत्तरपदस्य' ( ७.३.१० ) इत्येवमधिकृत्य या विहिता वृद्धिस्तद्वत्युत्तरपदे सर्वंशब्दो दिक्शब्दाश्चान्तोदात्ता भवन्ति। सर्वपाञ्चालकः। पूर्वपाञ्चालकः। उत्तरपाञ्चालकः।**

**सुसर्वार्धदिक्शब्देभ्यः 'जनपदस्य' इति तदन्तविधिना जनपदलक्षणो ( ४.२.१२३ ) वुञ्प्रत्ययः। 'सुसर्वार्द्धाज्जनपदस्य' ( ७.३.१२ ), 'दिशोऽमद्राणाम्' ( ७.३.१३ ) इति चोत्तरपदवृद्धिः।**

**न्यासः**

भावेनेत्याचार्योपसर्जनान्तेवासिवाच्युत्तरपदं भवति। **पूर्वकाशकृत्स्ना** इति। काशकृत्स्नस्येमे काशकृत्स्नाः, औत्सर्गिकोऽण्।

**पूर्वपाणिनीयं शास्त्रमिति**। पाणिनिना प्रोक्तं पाणिनीयम्, अत्राचार्योपसर्जनशास्त्रवाच्युत्तरपदम्, न त्वाचार्योपसर्जनान्तेवासिवाचि ॥ १०४ ॥

**उत्तरपदवृद्धौ सर्वञ्च** ॥ **उत्तरपदवृद्धाविति**। उत्तरपदाधिकारविहिता वृद्धिरुत्तरपदवृद्धिः, इह तु तद्वदुत्तरपदं गृह्यते। तमेवार्थं दर्शयितुमाह—**उत्तरपदस्येत्येवमित्यादि**। कथं पुनरुत्तरपदवृद्धावित्युच्यमान एषोऽर्थः शक्यते विज्ञातुम् ? तदुच्यते; उत्तरपदं स्वर्यते, स्वरितेनाधिकारो लक्ष्यते, तेनोत्तरपदस्येत्यधिकृत्य या विहिता वृद्धिस्तस्यास्तावद् ग्रहणं विज्ञायते। पूर्वपदस्येदमन्तोदात्तत्वं विधीयते। पूर्वपदञ्च सम्बन्धिशब्दत्वदुत्तर-पदमुपस्थापयति। न च वृद्धिमात्र उत्तरपदमुपपद्यत इति सामर्थ्याद् वृद्धिशब्दसाहचर्यादुत्तरपदं वृद्धिमुपलक्षयति। तेनोत्तरपदाधिकारे वृद्धिमत्युत्तरपद एष स्वरो भवतीति विज्ञायते। **सर्वपाञ्चालक इति**। 'पूर्वकालैक' इत्यादिना समासः। **पूर्वपाञ्चालक** इत्यादौ 'पूर्वापर' इत्यादिना।

**जनपदलक्षणो वुञ्प्रत्यय इति**। 'धन्वयोपधाद् वुञ्' इत्यनुवर्तमाने 'जनपदतदवध्योश्च' इत्यतो जनपद-ग्रहणे च 'अवृद्धादपि बहुवचनविषयात्' इत्यनेन वुञ्।

**सुसर्वार्द्धादित्यादि**। सर्वपाञ्चालक इति 'सुसर्वार्धाज्जनपदस्य' इत्युत्तरपदवृद्धिः। पूर्वपाञ्चलक इत्यादौ तु 'दिशोऽमद्राणाम्' इति। एषा चोत्तरपदाधिकारविहिता, तत्र चोत्तरपदस्येत्यनुवृत्तेः।

**पदमञ्जरी**

**पूर्वपाणिनीयं शास्त्रमिति**। पाणिनीयं शास्त्रं पूर्वम्, चिरन्तनमित्यर्थः ॥ १०४ ॥

**उत्तरपदवृद्धौ सर्वं च** ॥ 'वृद्धौ' इत्येतावतैव तद्वदुत्तरपदपरिग्रहे सिद्धे उत्तरपदग्रहणात्तदधिकारो लक्ष्यते ॥ १०५ ॥

**भावबोधिनी**

आचार्योपसर्जन हो—इसका क्या फल है ? पूर्वशिष्याः। [ इसमें किसी आचार्य का उपसर्जनत्वरूप से उल्लेख नहीं है। ] अन्तेवासी रहने पर—इसका क्या फल है ? पूर्वपाणिनीयं शास्त्रम्। [ शास्त्र अर्थ है। अतः इसमें यह सूत्र न लगकर समास का अन्तोदात्त होता है। ] ॥ १०४ ॥

'उत्तरपद की' यह अधिकार मानकर जो वृद्धि की गई है, उससे युक्त उत्तरपद रहने पर 'सर्व' शब्द और दिक्-शब्द पूर्वपद अन्तोदात्त होते हैं। उदा०—सर्वपाञ्चालकः। पूर्वपाञ्चालकः। उत्तरपाञ्चालकः।

सु, सर्व, अर्ध और दिक्शब्दों से जनपद की तदन्तविधि से जनपदलक्षण ("अवृद्धादपि बहुवचनविषयात्" ४।२।१२५) वुञ् प्रत्यय होता है। "सुसर्धाज्जनपदस्य" और "दिशोऽमद्राणाम्" ( ७।३।१२-१३ ) से उत्तरपद की वृद्धि होती है। [ तब यह सूत्र पूर्वपद का अन्तोदात्त करता है। ]

**अधिकारलक्षणादिह न भवति—सर्वभासः, सर्वकारक इति ॥**

## २७६९. बहुव्रीहौ विश्वं संज्ञायाम् ॥ १०६ ॥ ( ३८४० )

**बहुव्रीहौ समासे विश्वशब्दः पूर्वपदं संज्ञायां विषयेऽन्तोदात्तं भवति। विश्वदेवः। विश्वयशाः। विश्वमहान्। पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तम्।**

**बहुव्रीहाविति किम्? विश्वे च देवाः विश्वदेवाः। संज्ञायामिति किम्? विश्वे देवा अस्य विश्वदेवः। विश्वामित्रः, विश्वाजिन इत्यत्र 'संज्ञायां मित्राजिनयोः' ( ६.२.१६५ ) इत्येतद्भवति परत्वात्।**

**'बहुव्रीहौ' इत्येतदधिक्रियते प्रागव्ययीभावसंज्ञानात् ( ६.२.१२१ ) ॥**

### न्यासः

किं पुनः कारणमुत्तरपदाधिकार उत्तरपदग्रहणेन लक्ष्यत इत्येवं विज्ञायते? इत्याह—**अधिकारलक्षणादित्यादि**। यद्युत्तरपदग्रहणेनोत्तरपदाधिकारो लक्ष्येत, तदा वृद्धिमात्रवत्युत्तरपदे वैतद् वुञो ह्युदात्तत्वं भवतीत्युक्तं स्यात्। तथा च सर्वभासः, सर्वकारक इत्यत्रापि स्यात्। अधिकारलक्षणे तु न भवति, न ह्युत्तरपदाधिकारविहिता वृद्धिः। 'भासृ दीप्तौ', भासत इति भासः, पचाद्यच्। करोतीति कारकः ण्वुल्, 'अचो ञ्णिति' इति वृद्धिः, सा चोत्तरपदाधिकारविहिता न भवति ॥ १०५ ॥

**बहुव्रीहौ विश्वं संज्ञायाम्** ॥ **पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तमिति**। 'बहुव्रीहौ प्रकृत्या' इत्यादिना विश्वे च ते देवा विश्वदेवा इति विशेषणसमासः, तत्पुरुषोऽयम्। अत्र समासान्तोदात्तत्वमेव भवति। **विश्वदेव इति**। अत्र पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वमेव भवति। विश्वशब्दस्य क्वन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वम्।

**विश्वामित्र इति** ॥ 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तस्यावकाशः—विश्वदेवः, विश्वयशा इति। 'संज्ञायां मित्राजिनयोः' इत्युत्तरपदान्तोदात्तस्यावकाशः—कुलमित्रम्, कुलाजिनमिति। विश्वामित्रः, विश्वाजिन इत्यत्रोभयं प्राप्नोति, 'संज्ञायां मित्राजिनयोः इत्येतत्तु भवति विप्रतिषेधेन ॥ १०६ ॥

### पदमञ्जरी

**बहुव्रीहौ विश्वं संज्ञायाम्** ॥ विशेः क्वनि ( द० उ० ८. १२५ ) विश्वशब्द आद्युदात्तः। **विश्वामित्र इत्यादि**। अस्यावकाशः—विश्वदेवः, विश्वयशाः, 'संज्ञायां मित्राजिनयोः' इत्यस्यावकाशः—कुलमित्रः, कुलाजिनः; विश्वामित्रः, विश्वाजिन इत्यत्रोभयप्रसङ्गे 'संज्ञायां मित्राजिनयोः' इत्येतद्भवति विप्रतिषेधेन ॥ १०६ ॥

### भावबोधिनी

अधिकार-लक्षण के कारण यहाँ नहीं होता है—सर्वभासः। सर्वकारकः। [ भास् से अच् और कृ से ण्वुल् ऐसा न्यासकार ने लिखा है। किन्तु अच् में वृद्धि की सम्भावना नहीं है। अतः सर्वं भासयति—ऐसा णिजन्त मानकर अण् और णिलोप करके वृद्धि का लक्ष्य बनाकर प्रत्युदाहरण मानना चाहिए। अथवा अविहित स्वाभाविक वृद्धि है ऐसा मानकर अच् प्रत्यय भी ठीक है। ] ॥ १०५ ॥

बहुव्रीहि समास में विश्वशब्द पूर्वपद संज्ञा-विषय में अन्तोदात्त होता है। उदा०—विश्वदेवः। विश्वयशाः। विश्वमहान्। [ बहुव्रीहि में ] पूर्वपद को प्रकृतिस्वर होने से आद्युदात्तत्व प्राप्त है। [ वहाँ यह पूर्वपद का अन्तोदात्त करता है। ]

बहुव्रीहि में—इसका क्या फल है? विश्वे च ते देवाः—विश्वदेवाः। [ कर्मधारय में अन्तोदात्त ही होता है। ] संज्ञा-विषय में—इसका क्या फल है? विश्वे देवा अस्य सः—विश्वदेवः। [ यह यौगिक है। ] विश्वामित्रः, विश्वाजिनः—इनमें परवर्त्ती होने से 'संज्ञायां मित्राजिनयोः' ( ६।२।१६५ ) सूत्र से [ उत्तरपद का अन्तोदात्त ] होता है।

अव्ययीभाव—के कथन से पहले ( ६।२।१२० ) तक बहुव्रीहि का अधिकार चलता है ॥ १०६ ॥

## २७७०. उदराश्वेषुषु ॥ १०७ ॥ ( ३८४१ )

उदर, अश्व, इषु—इत्येतेषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति । वृकोदरः । दामोदरः । हर्यश्वः । यौवनाश्वः । सुवर्णपुङ्खेषुः । महेषुः ॥

## २७७१. क्षेपे ॥ १०८ ॥ ( ३८४२ )

क्षेपे गम्यमाने उदरादिषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति । कुण्डोदरः ।

### न्यासः

**उदराश्वेषुषु** ॥ वृकस्येवोदरमस्य **वृकोदरः** । दाम उदरे यस्येति **दामोदरः** । हरिरश्वो यस्येति हर्यश्वः । **यौवनमेवाश्वो यस्य स यौवनाश्वः** । शोभनो वर्णो येषां ते सुवर्णाः, सुवर्णाः पुङ्खा येषामिषूणां ते सुवर्णपुङ्खाः, सुवर्णपुङ्खा इषवो यस्य स **सुवर्णपुङ्खेषुः** । महान्त इषवो यस्य स **महेषुः** । 'आन्महतः' इत्यात्त्वम् । अत्र पूर्वपदानाम् 'बहुव्रीहौ प्रकृत्या' इति प्रकृतिभावः । यत्र स्वरे प्राप्तेऽयं विधिरारब्धः स आख्यायते । 'कृदाधारार्चिकलिभ्यः कः' इत्यतः 'कः' इत्यनुवर्तमाने 'अजिवृरीभ्यो निच्च' इत्यतो निद्ग्रहणे 'सृवृभूशुषिमुषिभ्यः कक्' इति कक्प्रत्ययान्तो वृकशब्दो व्युत्पाद्यते, तेनायमाद्युदात्तः । एवं दामन्शब्दोऽपि; मनिन्प्रत्ययान्तत्वात् । हृञित्येतस्मात् 'सर्वधातुभ्य इन्' इति हरिशब्द आद्युदात्तः ॥ १०७ ॥

**क्षेपे** ॥ **कुण्डोदर इति** । शकिशम्योर्नित्' इति वर्तमाने 'क्वादिभ्यः कित्' इत्यतः किद्ग्रहणे च 'कुडि

### पदमञ्जरी

**उदराश्वेषुषु**[1] ॥ अयमपि पूर्वपदप्रकृतिस्वरस्यापवादः । वृकशब्दः 'प्राणिनां च कुपूर्वाणाम्' ( फि० सू० २-७ ) इत्याद्युदात्तः, वृकस्येवोदरं यस्य **वृकोदरः** । दाम उदरे यस्य **दामोदरः**, दामशब्दो मनिन्प्रत्ययान्तः । हरतेः 'सर्वधातुभ्य इन्' ( द० उ० १-४६ ) इतीन्, हरिरश्वो यस्य हर्यश्वः । यौवनशब्दोऽव्युत्पन्नं प्रातिपदिकम्, 'लघावन्ते द्वयोश्च बह्वषो गुरुः' ( फि० सू० २,१९ ) इत्याद्युदात्तः । **यूनो भावो यौवनमिति** युवाद्यणन्तत्वे प्रत्ययस्वरेणान्तोदात्तत्वात् पूर्वपदप्रकृतिस्वरेणैव सिद्धम् । **सुवर्णपुङ्खेषुरिति** । शोभनो वर्णो येषां ते सुवर्णाः, 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम्, सुवर्णाः पुङ्खा येषां ते सुवर्णपुङ्खाः, पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वम्, पुनरिषुशब्देन बहुव्रीहिः । **महेषुरिति** । महच्छब्दोऽन्तोदात्त इति 'महान्व्रीह्यपराह्ण' इत्यत्रोक्तम् । तस्मात्तत्पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति तस्यान्यार्थं आरम्भः, अपवादत्वादनेनैवान्तोदात्तत्वं युक्तमित्यस्योपन्यासः ॥ १०७ ॥

**क्षेपे** ॥ कुण्डशब्दः 'नब्विषयस्यानिसन्तस्य' ( फि० सू० २-९ ) इत्याद्युदात्तः । । घटशब्दः पचाद्यजन्तः । महेषुवदस्योपन्यासः । कटुशब्दात्संज्ञायां कन् । स्पन्दितशब्दो निष्ठान्तः । निहन्यतेऽनेनेति निघातः, ततोऽन्यो-

### भावबोधिनी

उदर, अश्व, इषु—ये उत्तरपद रहने पर बहुव्रीहि समास में संज्ञा-विषय में पूर्वपद अन्तोदात्त होता है । उदाहरण—वृकोदरः । दामोदरः । हर्यश्वः । यौवनाश्वः । सुवर्णपुङ्खेषुः । महेषुः । [ वृक इव उदरं यस्य सः आदि बहुव्रीहि में पूर्वपद का अन्तोदात्त होता है । अतः पूर्वपद के अपने स्वर नहीं रहते हैं । ] ॥ १०७ ॥

क्षेप = निन्दा गम्यमान रहने पर उदर आदि उत्तरपद होने पर बहुव्रीहि समास में संज्ञाविषय में पूर्वपद अन्तोदात्त होता है । उदा०—कुण्डोदरः । घटोदरः । कटुकाश्वः । स्पन्दिताश्वः । अनिघातेषुः । चलाचलेषुः । [ इनमें पूर्वपद का अन्तोदात्त होता है । ]

---

१. 'उत्तरपदवृद्धौ सर्वं च'—इति मुद्रितपाठोऽपपाठः ।

घटो॑दरः । कटुकाश्वः । स्पन्दिताश्वः । अनिघातेषुः । चलाचलेषुः ।

अनुदरः, सूदर इत्यत्र 'नञ्सुभ्याम्' ( ६.२.१७२ ) इत्येतद्भवति विप्रतिषेधेन ॥

## २७७२. नदी बन्धुनि ॥ १०९ ॥ ( ३८४३ )

**बहुव्रीहौ समासे बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदमन्तोदात्तं भवति । गार्गीबन्धुः । वात्सीबन्धुः । नदीति किम् ? ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्तः । बन्धुनीति किम् ? गार्गीप्रियः ॥**

**न्यासः**

दाहे' इत्येतस्मात् 'ञमन्ताड्डः' इति डप्रत्यये कुण्डमाद्युदात्तम् । **घटोदर इति** । घटशब्दोऽयम् 'घट चेष्टायाम्' इत्यस्य पचाद्यचि व्युत्पादितत्वादन्तोदात्तः । तस्मात् पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति त्वस्यान्यार्थ आरम्भेऽपवादत्वाद् पचाद्यजन्तादनेनैवान्तोदात्तत्वं युक्तमिति मन्यमानो **वृत्तिकार** एतदप्युदाहरति । **कटुकाश्व इति** । कटुकोऽश्वो यस्य स कटुकाश्वः । कटुशब्दात् 'संज्ञायां कन्' इति कन्, तेन कटुकशब्द आद्युदात्तः । स्पन्दितोऽश्वोऽस्य स्पन्दिताश्वः । 'स्पदि किञ्चिच्चलने' इत्यस्मात् क्तः । तेन स्पन्दितशब्दः प्रत्ययस्वरेणान्तोदात्तः । अनिघात इषुरस्येति **अनिघातेषुः** । निहन्यतेऽनेनेति निघातः, 'हलश्च' इति घञ्, न निघातोऽनिघातः 'तत्पुरुषे तुल्यार्थ' इत्यादिनाऽव्ययप्रकृतिभावादनिघातशब्द आद्युदात्तः । चलाचल इषुरस्य **चलाचलेषुः** । 'चल कम्पने', तस्य पचाद्यचि 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य' इति द्विर्वचनम्, अभ्यासस्यागागमश्च । एतेन चलाचलशब्दोऽन्तोदात्तः ।

**अनुदर इत्यादि** । 'उदाराश्वेषुषु', 'क्षेपे' इत्यस्यावकाशः– कुण्डोदरः, घटोदर इति, 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तस्यावकाशः—अयवः, सुयव इति; इहोभयं प्राप्नोति—अनुदरः, सूदर इति । 'नञ्सुभ्याम्' इत्येतद् भवति विप्रतिषेधेन ॥ १०८ ॥

**नदी बन्धुनि** ॥ बन्धुनीति शब्दरूपापेक्षया नपुंसकलिङ्गनिर्देशः; अन्यथा बन्धुशब्दस्य पुंल्लिङ्गत्वाद् 'बन्धौ' इति निर्देशं कुर्यात् । **गार्गीबन्धुः, वात्सीबन्धुरिति** । गर्गवत्सशब्दाभ्यां गर्गादित्वात् यञ्, तदन्ताद् 'यञश्च'

**पदमञ्जरी**

ऽनिघातः, अतोऽव्ययपूर्वपदप्रकृतिस्वरत्वम्, 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य' (का० त्या० ६५८) चलाचलः ।

**अनुदर इत्यादि** । अस्यावकाशः—कुण्डोदर[1] इत्यादि, 'नञ्सुभ्याम्' इत्यस्यावकाशः—अयशाः, सुयशाः; एवं स्थिते विप्रतिषेधः ॥ १०८ ॥

**नदी बन्धुनि** ॥ 'बन्धुनि' इति शब्दरूपापेक्षया नपुंसकनिर्देशः, गर्गवत्सशब्दाभ्यां गर्गादियञन्तभ्याम्

**भावबोधिनी**

अनुदरः, सूदरः—इनमें "नञ्सुभ्याम्" (६।२।१७२) सूत्र से विप्रतिषेध से [ उत्तरपद अन्तोदात्त ] होता है ॥ १०८ ॥

बहुव्रीहि समास में बन्धु उत्तरपद रहने पर नद्यन्त पूर्वपद अन्तोदात्त होता है । उदा०—गार्गीबन्धुः । वात्सीबन्धुः । [ यञन्त से ङीप् करके यलोपादि के बाद गार्गी, वात्सी होते हैं । ]

नदीसंज्ञक—इसका क्या फल है ? ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्त है । बन्धु परे रहते—इसका क्या फल है ?

---

१. 'कृशोदरः, घटोदरः' इति पाठा० ।

## २७७३. निष्ठोपसर्गपूर्वमन्यतरस्याम् ॥ ११० ॥ ( ३८४४ )

**बहुव्रीहौ समासे निष्ठान्तमुपसर्गपूर्वं पूर्वपदमन्यतरस्यामन्तोदात्तं भवति । प्रधौतमुखः । प्रक्षालितपादः । यदि मुखशब्दः स्वाङ्गवाची, तदा पक्षे 'मुखं स्वाङ्गम्' ( ६.२ १६७ ) इत्येतद्भवति, न चेत्पूर्वपद-प्रकृतिस्वरत्वेन 'गतिरनन्तरः' ( ६.२.४९ ) इत्येतद्भवति । प्रधौतमुखः, प्रधौतमुखः । प्रक्षालितपादः ।**

**न्यासः**

इति ङीप् । गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ ।

**ब्रह्मबन्धुरिति** । अत्र प्रकृतिभाव एव भवति पूर्वपदस्य । ब्रह्मशब्दश्चायम् 'मनिन्' इत्यनुवर्तमाने 'बृहेर्नोऽच्च' इति मनिन्प्रत्ययान्तो व्युत्पाद्यते, तेनाद्युदात्तः । **गार्गीप्रिय इति** । गार्गीशब्दोऽपि प्रकृतिभावेनाद्युदात्त एव भवति ॥ १०९ ॥

**निष्ठोपसर्गपूर्वमन्यतरस्याम्** ॥ **प्रक्षालितपाद इति** । 'क्षल शौचकर्मणि' अस्माण्ण्यन्तात् क्तः । प्रक्षालित-शब्दः 'गतिरनन्तरः' इत्याद्युदात्तः । [1]**प्रधौतमुखमिति** । 'धावु गतिशुद्ध्योः', अस्मात् क्तः । 'च्छ्वोः शूडनुनासिके च' इत्यूठ्, 'एत्येधत्यूठ्सु' इति वृद्धिः ।

**यदि मुखशब्द इत्यादि** । मुखशब्दोऽयं स्वाङ्गवाच्यपि । तत्र यद्ययमिह स्वाङ्गवाची तदानेन पूर्वपदान्तो-दात्तत्वमेव । मुक्ते पक्षे 'मुखं स्वाङ्गम्' इत्युत्तरपदाद्युदात्तत्वं भवति । अत्र निष्ठोपसर्गपूर्वमन्यतरस्यांग्रहणानु-वृत्तेर्यदाऽन्तोदात्तत्वं भवति तदा 'गतिरनन्तरः' इत्येतत् । तेन स्वाङ्गवाचिनि मुखशब्दे त्रयः स्वरा भवन्ति । अनेन पूर्वपदान्तोदात्तत्वम्, 'मुखं स्वाङ्गम्' इत्यनेन नोत्तरपदान्तोदात्तत्वम्, 'गतिरनन्तर' इति प्रकृतिभावात् पूर्वपदस्याद्युदात्तत्वम् । **न चेदित्यादि** । यदि मुखशब्दोऽत्र स्वाङ्गवाची न भवति तदा 'मुखं स्वाङ्गम्' इत्यस्यायं विषयो न भवतीति 'गतिरनन्तरः' इति विधिना मुक्ते प्रवर्तते । तेन स्वाङ्गवाचिनि मुखशब्दे द्वौ स्वरौ भवतः— पूर्वपदस्याद्युदात्तत्वम्, अन्तोदात्तत्वञ्च ।

**पदमञ्जरी**

**'यञश्च'** इति ङीप्, **गार्गीवात्सीशब्दौ** ञित्स्वरेणाद्युदात्तौ । ब्रह्मशब्दो बृहेर्मनिन् ( द० उ० ६.७४ ) प्रत्यये निपातितः[2] ॥ १०९ ॥

**निष्ठोपसर्गपूर्वमन्यतरस्याम्** ॥ **प्रक्षालितपादः प्रधौतमुखः इति** । 'क्षल शौचकर्मणि' ( धा० पा० १५९७ ) चुरादिः, 'धावु गतिशुद्ध्योः' (धा० पा० ६०१) 'च्छ्वोः शूठ्' इत्यूठ्, 'एत्येधत्यूठ्सु' इति वृद्धिः, प्रक्षालितप्रधौत-शब्दौ गतिस्वरेणाद्युदात्तौ ।

**मुखं स्वाङ्गमित्येतद्भवतीति** । विकल्पितमुत्तरपदान्तोदात्तत्वम्, तेन स्वाङ्गवाचिनि मुखशब्दे स्वरत्रयं भवति—अनेन पूर्वपदान्तोदात्तत्वम्, 'मुखं स्वाङ्गम्' इत्येतत्, उभाभ्यां मुक्ते पूर्वपदप्रकृतिभावेन 'गतिरनन्तरः' इत्याद्युदात्तत्वं च । **न चेदिति** । स्वाङ्गवाचीति सम्बध्यते, यदि मुखशब्दः स्वाङ्गवाची न भवतीत्यर्थः ।

**भावबोधिनी**

गार्गीप्रियः । [ यहाँ पूर्वपद आद्युदात्त है । 'बन्धुनि' यह नपुंसकलिङ्ग का निर्देश इस शब्दस्वरूप के लिए है । अतः अर्थ नहीं लिया जाता है । ] ॥ १०९ ॥

बहुव्रीहि समास में जिस पूर्वपद के अन्त में निष्ठासंज्ञक प्रत्यय है, आदि में उपसर्ग है, वह विकल्प से अन्तोदात्त होता है । उदा०—प्रक्षालितमुखः । प्रक्षालितपादः । [ पूर्वपद का अन्तोदात्त न होने पर पूर्वपद का प्रकृतिस्वर होता है । ]

---

१. 'प्रधौतमुखः' इति काशिकापाठः ।

२. 'बृहेरम् नलोपश्चेति मन्प्रत्यये नलोपे अमागमे च निपातितः'—इति पाठा० ।

**निष्ठेति किम्? प्रसेचकमुखः। उपसर्गपूर्वमिति किम्? शुष्कमुखः॥**

## २७७४. उत्तरपदादिः ॥ १११ ॥ ( ३८४५ )

**'उत्तरपदादिः' इत्येतदधिकृतम्। यदित ऊर्ध्वमनुक्रमिष्याम उत्तरपदस्यादिरुदात्तो भवतीत्येवं तद्वेदितव्यम्। वक्ष्यति—'कर्णो वर्णलक्षणात्'। ( ६.२.११२ ) शुक्लकर्णः, कृष्णकर्णः।**

**'उत्तरपदस्य'—इत्येतद् आपादपरिसमाप्तेः। 'आदिः' इति 'प्रकृत्या भगालम्' ( ६.२.१२६ ) इति यावत्॥**

## २७७५. कर्णो वर्णलक्षणात् ॥ ११२ ॥ ( ३८४६ )

**बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च कर्णशब्द उत्तरपदमाद्युदात्तं भवति। शुक्लकर्णः।**

### न्यासः

प्रसेचकमुखमिति। अत्र पूर्वपदप्रकृतिस्वर एव भवति। प्रसिच्यत इति प्रसेचकः, 'कृत्यल्युटो बहुलम्' इति कर्मणि ण्वुल्, 'कुगतिप्रादयः' इति समासः, 'तत्पुरुषे तुल्यार्थ' इत्यादिनाऽव्ययप्रकृतिभावः। तेन प्रसेचकशब्द आद्युदात्त इति। शुष्कमुख इति। 'शुषः कः' इति निष्ठायां कादेशः। प्रत्ययस्वरेण शुष्कशब्दोऽन्तोदात्तः। बहुव्रीहौ प्रकृतिभावेन नित्यमेवान्तोदात्तो भवति॥ ११०॥

**उत्तरपदादिः** ॥ १११ ॥ **कर्णो वर्णलक्षणात्।** वर्णम्=शुक्लादि, लक्ष्यतेऽनेनेति लक्षणम्=चिह्नम्, वर्णञ्च लक्षणञ्च वर्णलक्षणम्। द्वन्द्व एकवद्भावः। अर्थग्रहणं चेह वर्णलक्षणयोः; अर्थप्रधानत्वान्निर्देशस्य। **श्वेतकर्णः**, कृष्णकर्ण इति। श्वेतकृष्णशब्दावन्तोदात्तौ। तथा हि—'श्विता वर्णे' इत्यस्मात् पचाद्यचि श्वेतशब्दो

### पदमञ्जरी

प्रसेचकशब्दः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः, शुष्कशब्दः 'शुष्कधृष्टौ' इत्याद्युदात्तः॥ ११०॥

**उत्तरपदादिः** ॥ उत्तरपदग्रहणमसमस्तं लुप्तषष्ठीकम्। अत्रापि प्रकरण उत्तरपदनिर्देशे षष्ठ्यर्थे प्रथमा॥ १११॥

**कर्णो वर्णलक्षणात्॥ दात्राकर्णः, शङ्कूकर्ण इति।** दात्रं कर्णे यस्य, शङ्कुः कर्णे यस्येति विग्रहः,

### भावबोधिनी

यदि मुख शब्द स्वाङ्गवाची है, तब उस पक्ष में 'मुखं स्वाङ्गम्' ( ६।२।१६७ ) यह लगता है, यदि ऐसा नहीं है तब पूर्वपद का प्रकृतिस्वर होने से 'गतिरनन्तरः' ( ६।२।४९ ) यह सूत्र लगता है। [ 'प्रधौतमुखः' के तीन स्वर हैं। ]

निष्ठा—यह किस लिए है? प्रसेचकमुखः। [ यहाँ ण्वुल् है निष्ठा नहीं है। ] उपसर्ग पूर्व में हो—इसका क्या फल है? शुष्कमुखः। [ यहाँ उपसर्ग नहीं है। अतः पूर्वपद का प्रकृतिस्वर होता है। ] ॥ ११०॥

'उत्तरपद का आदिः'—इसका अधिकार चलता है। इस सूत्र के आगे जो कहेंगे उनमें 'उत्तरपद का आदि उदात्त होता है'—ऐसा समझना चाहिए। कहेंगे "कर्णो वर्णलक्षणात्" ( ६।२।११२ )। शुक्लकर्णः। कृष्णकर्णः। [ उत्तरपद का आदि उदात्त होता है। ]

'उत्तरपद का'—यह अधिकार इस द्वितीय पाद की समाप्ति तक समझना चाहिए। और 'आदि उदात्त होता है' यह "प्रकृत्या भगालम्" ( ६।२।१२७ ) से पहले तक समझना चाहिए॥ १११॥

बहुव्रीहि समास में वर्णवाची और लक्षणवाची कर्णशब्द उत्तरपद आद्युदात्त होता है। उदा०—शुक्लकर्णः।

कृष्णकर्णः। लक्षणात्—दात्राकर्णः। शङ्कूकर्णः। 'लक्षणस्य' ( ६.३.११५ ) इति दीर्घत्वम्।

पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरूपकं कर्णादिषु चिह्नं यत् क्रियते तदिह लक्षणं गृह्यते, तेन स्थूलकर्ण इत्यत्र न भवति।

कर्ण इति किम् ? श्वेतपादः। कूटश्रृङ्गः। वर्णलक्षणादिति किम् ? शोभनकर्णः॥

**न्यासः**

व्युत्पाद्यते। कृष्णशब्दोऽपि 'इण्सिञ्जिदीङुष्यविभ्यो नक्' इत्यनुवर्तमाने 'कृषेर्वर्णे' इति नक्प्रत्यये। **दात्राकर्ण इति**। धः कर्मणि ष्ट्रन्' इति वर्तमाने 'दाम्नीशस्' इत्यादिना ष्ट्रन्प्रत्ययः, तेन दात्रशब्द आद्युदात्तः। **शङ्कूकर्ण इति**। 'कृग्रोरुच्च' इत्यनुवर्तमाने 'खरुशङ्कुपीयुनीलङ्गुलिगु' इति कुप्रत्ययान्तः शङ्कुशब्दोऽन्तोदात्तो निपात्यते। 'धापॄवस्यज्यतिभ्यो नः' इत्यधिकृत्य 'कॄवृच्छसिद्रुपन्यनिस्वपिभ्यो नित्' इति कर्णशब्दो व्युत्पाद्यते, तेनायमाद्युदात्तः। **लक्षणस्येति दीर्घत्वमिति**। लक्षणस्येत्यनेन सूत्रैकदेशेन 'कर्णे लक्षणस्याविशिष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य' इति सूत्रमुपलक्षयति।

**श्वेतपाद इत्यादि**। पूर्वपदस्य प्रकृतिस्वर एव भवति।

अथेह कस्मान्न भवति— स्थूलकर्ण इति, स्थूलेनापि हि कर्णेन लक्ष्यत एव, ततश्च लक्षणादित्येव सिद्धम् ? इत्यत आह—**पशूनां विभागज्ञापनार्थमित्यादि**। तेन स्थूलकर्ण इत्यत्र न भवतीति भावः। कथं पुनः सामान्येनोक्तौ विशेषस्य ग्रहणं लभ्यते ? वर्णग्रहणाज्ज्ञापकात्। यदि लक्षणमात्रस्येह ग्रहणमभिमतं स्याद् वर्णग्रहणं न क्रियेत, वर्णो हि लक्षणं भवत्येव। तेनापि लक्ष्यत इति कृत्वा, कृतश्च। तस्मात् तदेव ज्ञापयति— विशिष्टमिह लक्षणं गृह्यत इति। यत् पुनर्विशिष्टं व्याख्यानात् तद् विज्ञेयम्।

**श्वेतपाद इति**। 'श्विता वर्णे' इत्यस्मात् पचाद्यचि श्वेतशब्दो व्युत्पाद्यते, तेनान्तोदात्तोऽयम्। **कूटश्रृङ्ग इति**। 'कूट दाहे' इति, अस्मादिगुपधलक्षणः कः, तेन कूटशब्दोऽप्यन्तोदात्त एव। **शोभनकर्ण इति**। 'शुभ शुम्भ शोभार्थे' अस्माद् 'अनुदात्तेतश्च हलादेः' इति युच्। चित्स्वरेण शोभनशब्दोऽप्यन्तोदात्तः। पूर्वपदप्रकृतिस्वरापवादो योगः। एवमुत्तरेऽपि योगाः प्रागव्ययीभावसंशब्दनात्। तेन सर्वत्र प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरः प्रत्युदाहार्यः॥ ११२॥

**पदमञ्जरी**

सप्तम्याः पूर्वनिपाते 'गड्वादिभ्यः परवचनम्' (वा० ११५) इति परनिपातः। **कर्णे लक्षणस्याविष्टेत्यादिना दीर्घत्वम्**[1]। लक्ष्यते येन तल्लक्षणम्, ततश्च स्थूलकर्ण इत्यत्रापि प्राप्नोति, स्थौल्येनापि हि लक्षणीयत्वादत आह—**पशूनां विभागज्ञापनार्थमित्यादि**। एतच्च सामान्योक्तावपि वर्णग्रहणाल्लभ्यते; अन्यथा वर्णेनापि लक्ष्यमाणत्वा-

**भावबोधिनी**

कृष्णकर्णः। [ यहाँ वर्ण = रंगवाचक है। ] लक्षणवाचक—दात्राकर्णः। शङ्कूकर्णः। इनमें "लक्षणस्य" ( ६।३।११५ ) से दीर्घ होता है। [ उत्तरपद का आदि उदात्त होता है। ]

पशुओं के विभाग ( वर्ग ) को सूचित करने के लिए दात्र और शङ्कु के समान जो चिह्न कान आदि में बना दिया जाता है, उसी को यहाँ 'लक्षण' कहा जाता है, इसलिए 'स्थूलकर्णः' यहाँ नहीं होता हैं।

कर्ण उत्तरपद में—इसका क्या फल है ? श्वेतपादः। कूटश्रृङ्गः। [ यहाँ नहीं होता है। पूर्वपद का प्रकृतिस्वर होता है। ] वर्ण और लक्षणवाची—इसका क्या फल है ? शोभनकर्णः। [ यह सामान्य कथन है। अतः पूर्वपद का प्रकृतिस्वर ही होता है। ]॥ ११२॥

---

१. 'कर्णे लक्षणस्येति दीर्घत्वम्' इति मुद्रितपुस्तके पाठो न्यास-पदमञ्जर्यसंमतः।

## २७७६. संज्ञौपम्ययोश्च ॥ ११३ ॥ ( ३८४७ )

संज्ञायामौपम्ये च यो बहुव्रीहिर्वर्त्तते तत्र कर्णशब्द उत्तरपदमाद्युदात्तं भवति । संज्ञायाम्—कुञ्चिकर्णः । मणिकर्णः । औपम्ये—गोकर्णः । खरकर्णः ॥

## २७७७. कण्ठपृष्ठग्रीवाजङ्घं च ॥ ११४ ॥ ( ३८४८ )

कण्ठ, पृष्ठ, ग्रीवा, जङ्घा—इत्येतानि उत्तरपदानि बहुव्रीहौ समासे संज्ञौपम्ययोराद्युदात्तानि भवन्ति ।

कण्ठः संज्ञायाम्—शितिकण्ठः ( तै० सं० ४.५.११.१ ) । नीलकण्ठः । औपम्ये—खरकण्ठः । उष्ट्रकण्ठः ।

पृष्ठः संज्ञायाम्—काण्डपृष्ठः । नाकपृष्ठः । औपम्ये—गोपृष्ठः । अजपृष्ठः ।

### न्यासः

संज्ञौपम्ययोश्च ॥ कुञ्चिकर्णः, मणिकर्ण इति । 'कुचि शब्दे तारे', 'अण रण वण भण मण' इति मणिर्भ्वादौ पठ्यते । आभ्याम् 'सर्वधातुभ्य इन्', 'इगुपधात् कित्' इतीन्प्रत्ययः, किच्च । तेन कुञ्चिमणिशब्दावाद्युदात्तौ । गोकर्ण इति । गौरिव कर्णोऽस्येति विग्रहः । गोशब्द उक्तस्वरः । खरकर्ण इति । खरस्येत्यादि विग्रहः । खमस्यास्तीति 'रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्' इति रप्रत्ययः, तेन खरशब्दोऽन्तोदात्तः ॥ ११३ ॥

कण्ठपृष्ठग्रीवाजङ्घं च ॥ 'कणेष्ठः' इति ठप्रत्ययान्तत्वात् कण्ठशब्दोऽन्तोदात्तः । 'डित्थपृष्ठगूथयूथप्रोथाः' इति पृष्ठशब्दोऽन्तोदात्तो निपात्यते । 'इण्शीभ्यां वन्' इत्यतो वन्प्रत्ययेऽनुवर्तमाने 'शेवयह्वजिह्वाग्रीवाप्वमीवाः' इति ग्रीवाशब्दोऽन्तोदात्तो निपात्यते । अत्यन्तं हन्ति गच्छतीति हन्तेर्यङ्, द्विर्वचनम्, 'नुगतोऽनुनासिकान्तस्य' इति नुक् 'अभ्यासाच्च' इति कुत्वम्, जङ्घन्य इति स्थिते पचाद्यच्, 'यङोऽचि च' इति यङो लुक्; टाप्, चित्स्वरेण जङ्घाशब्दोऽन्तोदात्तः । अथ वा—'हन्तेरच् जङ्घ च' इति हन्तेरच्प्रत्ययो जङ्घ इत्ययमादेश इत्येवं वा जङ्घाशब्दो व्युत्पाद्यते । एषां कण्ठादीनां समाहारे द्वन्द्वः ।

शितिकण्ठ इति । 'सर्वधातुभ्य इन्' इति वर्तमाने 'क्रमितमिशडिस्तम्भामत इच्च' इति शितिशब्द आद्युदात्तः । नीलकण्ठ इति । 'नील वर्णे', अस्मात् घञ्, तेन नीलशब्दोऽप्याद्युदात्तः । खरकण्ठ इति । खरस्येव कण्ठोऽस्येति विग्रहः । खमस्यास्तीति रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानाद्रप्रत्ययः, तेन खरोऽन्तोदात्तः ।

### पदमञ्जरी

त्तदनर्थकं स्यात् । श्वेतपाद इति । 'श्विता वर्णे' (धा० वा० ७४२) पचाद्यच्, 'कूट दाहे' (धा० पा० १८९०), इगुपधलक्षणः कः, 'शुभ शुम्भ शोभार्थे' (धा० पा० ४३२–३३), 'अनुदात्तेतश्च हलादेः' इति युच्—शोभनः । प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वर एव भवति । कण्ठकरणादीनां समाहारद्वन्द्वे नपुंसकह्रस्वत्वम् ॥११२–११३॥

कण्ठपृष्ठग्रीवाजङ्घं च ॥ सुग्रीव इति । अत्र परत्वात् 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वेन भाव्यम्, अस्य तु

### भावबोधिनी

संज्ञा में और औपम्य में जो बहुव्रीहि है, उसमें 'कर्ण' शब्द उत्तरपद आद्युदात्त होता है । संज्ञा में उदा०—कुञ्चिकर्णः । मणिकर्णः । औपम्य में उदा०—गोकर्णः । खरकर्णः । [ उत्तरपद कर्ण का आदि उदात्त होता है । शेषनिघात से शेष अनुदात्त और उदात्त के बाद का अनुदात्त स्वरित होता है । ] ॥ ११३ ॥

बहुव्रीहि समास में कण्ठ, पृष्ठ, ग्रीवा, जङ्घा—ये उत्तरपद संज्ञा और औपम्य में आद्युदात्त होते हैं । उदा०—कण्ठ संज्ञा में—शितिकण्ठः । नीलकण्ठः । औपम्य में—खरकण्ठः । उष्ट्रकण्ठः । [ कण्ठ का आदि उदात्त होता है । ]

**ग्रीवा संज्ञायाम्—सुग्रीवः । नीलग्रीवः । दशग्रीवः । औपम्ये—गोग्रीवः । अश्वग्रीवः ।**

**जङ्घा संज्ञायाम्—नारीजङ्घः । तालजङ्घः । औपम्ये—गोजङ्घः । अश्वजङ्घः । एणीजङ्घः ।**

**२७७८. शृङ्गमवस्थायां च ॥ ११५ ॥ ( ३८४९ )**

**शृङ्गशब्द उत्तरपदमवस्थायां संज्ञौपम्ययोश्च बहुव्रीहौ आद्युदात्तं भवति । उद्गतशृङ्गः ।**

**न्यासः**

**उष्ट्रकण्ठ इति ।** उष्ट्रस्येव कण्ठोऽस्येति 'ष्ट्रन्' इति वर्तमाने 'उषिखनिभ्यां कित्' इति 'उष दाहे' इत्यस्मात् ष्ट्रन्, किच्च । तेनोष्ट्रशब्द आद्युदात्तः ।

**काण्डपृष्ठ इति ।** काण्डं पृष्ठमस्येति काण्डशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । **नाकपृष्ठमिति ।** नास्याकमस्तीति 'न भ्राट्' इत्यादिना प्रकृतिभावान्नलोपाभावः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तविधानान्नाकशब्दोऽन्तोदात्तः । **गोपृष्ठमिति** गोरिव पृष्ठमस्येति । गोशब्द उक्तस्वरः । **अजपृष्ठमिति** । अजस्येव पृष्ठमस्येति 'अज गतिक्षेपणयोः', अस्मात् पचाद्यच् । अजादिष्वजाशब्दस्य पाठाद् वीभावो न भवति । चित्स्वरेणाजशब्दोऽन्तोदात्तः ।

**सुग्रीव इति ।** शोभना ग्रीवास्येति 'निपाता आद्युदात्ताः' इति सुशब्द आद्युदात्तः । **नीलग्रीव इति ।** नीला ग्रीवास्येति 'नील वर्णे', अस्मात् घञ् । तेन नीलशब्द आद्युदात्तः । **दशग्रीव इति ।** दशग्रीवा अस्येति दशशब्दः 'न' संख्यायाः' इत्याद्युदात्तः । **अश्वग्रीव इति ।** अश्वस्येव ग्रीवास्येति गोशब्दोऽश्वशब्दश्चोक्तस्वरः ।

**नारीजङ्घ इति ।** नारी जङ्घा यस्येति । शार्ङ्गरवादिषु 'नृनरयोश्च' इति पठ्यन्ते, तेनाद्युदात्तः । **तालजङ्घ इति ।** तालो जङ्घास्येति 'तल प्रतिष्ठाकरणे' चुरादिः, तस्मात् पचाद्यच् । तेन तालशब्दोऽन्तोदात्तः । **गोजङ्घ इति ।** गोरिव जङ्घा यस्येति । **अश्वजङ्घ इति ।** अश्वस्येव जङ्घा यस्येति । **एणीजङ्घ इति ।** एण्या इव जङ्घा यस्येति एणीशब्दः 'जातेरस्त्रीविषयात्' इति ङीषन्तः । तेनान्तोदात्तः ॥ ११४ ॥

**शृङ्गमवस्थायाञ्च ॥ उद्गतशृङ्ग इति ।** 'गन्गम्यद्योः' इत्यधिकृत्य 'भृञः किन्नुट् च' इति च 'शृणातेर्ह्रस्वश्च' इति गन्प्रत्ययान्तः शृङ्गशब्दो व्युत्पाद्यते । तेनायमाद्युदात्तः । उद्गतशब्दस्थाथादिस्वरेणान्तोदात्तः । **द्व्यङ्गुलशृङ्ग इति ।** द्वे अङ्गुली प्रमाणमस्येति तद्धितार्थे द्विगुः 'प्रमाणे द्वयसच्' इत्यादिना विहितस्य मात्रच

**पदमञ्जरी**

दशग्रीवादिरवकाशः, यदि तु नेष्यते, चकारस्यैव विधेः समुच्चयार्थं इति व्याख्यातव्यम् । **[1]नाडीजङ्घ इति ।** नाड्याकारे जङ्घे यस्य नाडीजङ्घः ॥ ११४ ॥ ११५ ॥

**भावबोधिनी**

पृष्ठ संज्ञा में उदा०—काण्डपृष्ठः । नाकपृष्ठः । औपम्य में उदा०—गोपृष्ठः । अजपृष्ठः । [ पृष्ठ का आदि उदात्त होता है । ]

ग्रीवा संज्ञा में उदा०—सुग्रीवः । नीलग्रीवः । औपम्य में उदा०—गोग्रीवः । अश्वग्रीवः । [ग्रीवा का आदि उदात्त होता है । ]

जङ्घा संज्ञा में—नारीजङ्घः । तालजङ्घः । औपम्य में—गोजङ्घः । अश्वजङ्घः । एणीजङ्घः ; [ जङ्घा का आदि उदात्त होता है । शेष-निघात से अनुदात्त होता है । उदात्त के बाद वाला अनुदात्त स्वरित हो जाता है । ] ॥ ११४ ॥

शृङ्ग शब्द उत्तरपद अवस्था में, संज्ञा और औपम्य में बहुव्रीहि समास में आद्युदात्त होता है । उदा०—उद्गतशृङ्गः । द्व्यङ्गुलशृङ्गः । चतुरङ्गुलशृङ्गः । इनमें सींगों के निकलने आदि से सूचित की गयी गो आदि की वयः विशेष अवस्था है । [ सींगों की ऊँचाई आदि देखकर गाय और बैलों आदि की अवस्था ( उम्र ) का ज्ञान होता है ।

---

१. नारीजङ्घः इति काशिकायां न्यासे च ।

द्व्यङ्गुलशृङ्गः। त्र्यङ्गुलशृङ्गः। अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषः=अवस्था। संज्ञायाम्—ऋष्यशृङ्गः। औपम्ये—गोशृङ्गः। मेषशृङ्गः।

अवस्थादिष्विति किम्? स्थूलशृङ्गः॥

## २७७९. नञो जरमरमित्रमृताः॥ ११६॥ (३८५०)

नञ उत्तरे जरमरमित्रमृता बहुव्रीहौ समासे आद्युदात्ता भवन्ति। अजरः। अमरः। अमित्रः। अमृतः[1]।

नञ इति किम्? ब्राह्मणमित्रः। जरादय किम्? अशत्रुः। 'नञ्सुभ्याम्' (६.२.१७२) इति। उत्तरपदान्तोदात्तत्वमेवात्र भवति॥

### न्यासः

अगतस्य लोपः 'प्रमाणे लो द्विगोर्नित्यम्' इति। 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यच् समासान्तः। तेन द्व्यङ्गुलशब्दोऽन्तोदात्तः। द्व्यङ्गुलं शृङ्गमस्येति। त्र्यङ्गुलशृङ्ग इति। पूर्वेण तुल्यम्। अत्रेत्यादि। आदिशब्देन द्व्यङ्गुलादिग्रहणम्। ऋष्यशृङ्ग इति। ऋष्यं शृङ्गं यस्येति। 'अघ्न्यादयश्च' इत्याद्युदात्त ऋष्यशब्दो निपात्यते। मेषशृङ्ग इति। मेषस्येव शृङ्गो यस्येति 'मिष स्पर्द्धायाम्' अस्मात् पचाद्यच्। तेन मेषशब्दोऽन्तोदात्तः।

स्थूलशृङ्ग इति। स्थूलशब्दः प्रातिपदिकस्वरेणान्तोदात्तः॥ ११५॥

नञो जरमरमित्रमृताः॥ अजर इति। जरणं जरः, 'ऋदोरप्'। तेनायं धातुस्वरेणाद्युदात्तः। अविद्यमानो जरोऽस्येति। अमर इति। मरणं मरः, 'कृत्यल्युटो बहुलम्' इत्यप्। तेनायमपि पूर्ववदाद्युदात्तः। अमित्र इति। 'अमिचिमिदिशसिभ्यः क्त्रः' इति मिदेः क्त्रः। तेन मित्रशब्दोऽन्तोदात्तः। अमृत इति। 'मृङ् प्राणत्यागे', मरणम्—मृतम्। 'नपुंसके भावे क्तः'। तेन मृतशब्दोऽन्तोदात्तः।

ब्राह्मणमित्र इति। ब्राह्मणशब्दोऽणन्तत्वादन्तोदात्तः। अत्र पूर्वपदप्रकृतिस्वर एव भवति। अशत्रुरिति। 'रुशातिभ्यां क्रुन्' इति क्रुन्नन्तः शत्रुशब्द आद्युदात्तः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वापवादो योगः। एवमुत्तरेऽपि योगाः प्राक् 'कूलतीरतूला' इत्यतः द्रष्टव्याः॥ ११६॥

### पदमञ्जरी

नञो जरमरमित्रमृता॥ जरणं जरः, 'ऋदोरप्'। मरणं मरः, अस्मादेव निपातनादप्। 'ञिमिदा स्नेहने (धा० पा० ७४३)—अस्मात् क्त्रः, मित्रम्॥ ११६॥

### भावबोधिनी

अतः ये समास अवस्था अर्थ में हैं।] संज्ञा में उदा०—ऋष्यशृङ्गः। औपम्य में—गोशृङ्गः। अश्वशृङ्गः। [सभी में शृङ्ग का आदि उदात्त होता है। शेष-निघात से अनुदात्त और उदात्त के बाद वाला अनुदात्त स्वरित हो जाता है।]

अवस्था आदि अर्थों में—इसका क्या फल है? स्थूलशृङ्गः। [यहाँ पूर्वपद का प्रकृतिस्वर अन्तोदात्त ही होता है।]॥ ११५॥

नञ् से उत्तरवर्ती जर, मर, मित्र और मृत शब्द बहुव्रीहि समास में आद्युदात्त होते हैं। उदा०—अजरः। अमरः। अमित्रः। अमृतः। [इनमें जर आदि आद्युदात्त होते हैं।]

नञ् से परे—इसका क्या फल है? ब्राह्मणमित्रः [यहाँ पूर्वपद का प्रकृतिस्वर अन्तोदात्त ही होता है।] जर आदि—इसका क्या फल है? अशत्रुः। [यहाँ यह सूत्र नहीं लगता है।] "नञ् सुभ्याम्" (६।२।७२) से उत्तरपद का अन्तोदात्तत्व ही होता है।]॥ ११६॥

---

१. 'मरशब्दो अच्प्रत्ययान्त इष्यते—मरणं मरः' इति पुस्तकान्तरेऽधिकमत्र।

## २७८०. सोर्मनसी अलोमोषसी ॥ ११७ ॥ ( ३८५१ )

सोरुत्तरमनन्तमसन्तं च बहुव्रीहौ समासे आद्युदात्तं भवति लोमोषसी वर्जयित्वा। सुकर्मा। सुधर्मा। सुप्रथिमा। असन्तम्—सुपयाः। सुयशाः। सुस्रोताः। सुस्रत्। सुध्वत्।

सोरिति किम्? कृतकर्मा। कृतयशाः। मनसी इति किम्? सुराजा। सुतक्षा। अलोमोषसी इति किम्? सुलोमा। सूषा।

'अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च' (व्या० प० १२९) इत्यनर्थकयोरपि मनसोरिह ग्रहणम्। 'नञ्सुभ्याम्' (६.२.१७२) इत्यस्यायमपवादः।

**न्यासः**

**सोर्मनसी अलोमोषसी** ॥ **सुकर्मेति**। 'कृहचरिभ्यो मनिन्', 'सर्वनामस्थाने च' इति दीर्घः। **सुप्रथिमेति**। पृथोर्भावः प्रथिमा, 'पृथ्वादिभ्यः' इतीमनिच्। 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रेफः। **सुपया इति**। असुन्निति वर्तमाने 'पिबतेरिच्च' इति पयःशब्दो व्युत्पाद्यते। तेनायमाद्युदात्तः। 'अत्वसन्तस्य' इति दीर्घः। **सुयशा इति**। 'अशू भोजने', 'अशेर्देवने युट् च' इत्यसुन्येव यशःशब्दो व्युत्पाद्यते। तेनायमाद्युदात्तः, पूर्ववद्दीर्घः। **सुस्रोता इति**। 'सर्वधातुभ्योऽसुन्' इति वर्तमाने 'स्रुरिभ्यां तुट् च' इति। **सुस्रत्, सुध्वदिति**। स्रन्सुध्वन्सुभ्यां क्विप्, 'वसुस्रंसु' इत्यादिना दत्वम्, तस्यासिद्धत्वादत्र ासन्तत्वम्।

**सुराजा, सुतक्षेति**। राजन्, तक्षन्निति कनिन्नन्तः। **सुलोमेति**। लुनातेर्मनिनि लोमेति। **सूषेति**। 'उष दाहे', मिथुनेऽसिः' इति वर्तमाने 'उष कित्' इति कित्। अथ कथं सुप्रथिमेत्यत्र सुस्रोताः, सुस्रद्, सुध्वदित्येतेषु चोत्तरपदमाद्युदात्तं भवति, यावतार्थवतोर्मनसोरर्थवद्ग्रहणपरिभाषयेह ग्रहणम्, न चेह तावर्थवन्तौ? इत्यत आह—**अनिनस्मन्नित्यादि**। 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति'

**पदमञ्जरी**

**सोर्मनसी अलोमोषसी** ॥ मश्च अश्च मनसो। **सुप्रथिमेति**। पृथोर्भावः, 'पृथ्वादिभ्य इमनिच्', 'र ऋतो हलादेर्लघोः' इति रादेशः। पीयत इति पयः, 'पिबतेरिच्च' (द० उ० ९.५०) [1]इत्यसुन्। 'अशेर्देवने युट् च' (द० उ० ९.५१) इत्यसुन्, युडागमः, यशः। 'स्रुरिभ्यां तुट्' (द० उ० ९.६२) स्रोतः। **सुस्रत, सुध्वद इति**। स्रंसुध्वंसुभ्यां क्विप्, 'वसुस्रंसु' इत्यादिना दत्वम्, तस्यासिद्धत्वादत्रासन्तत्वम्।

राज-तक्षशब्दौ 'कनिन्युवृषि' (द० उ० ६.५१) इत्यादिना कनिप्रत्ययान्तौ। लुनातेर्मनिन्—लोम, 'उष दाहे' (धा० पा० ६९६) मिथुनेऽसिः (द० उ० ९.८२)इति वर्तमाने 'उषः कित्'।

**अनिनस्मन्ग्रहणानीति**। अन्, इन्, अस्, मन्—इत्येतानि गृह्यन्ते येषु सूत्रेषु तानि तथोक्तानि, तत्र

**भावबोधिनी**

बहुव्रीहि समास में सु से उत्तरवर्ती मनन्त और असन्त आद्युदात्त होते हैं लोमन् और उषस् को छोड़कर। उदा०—सुकर्मा। सुधर्मा। सुप्रथिमा। [ इनमें मन् अन्त में है। ] असन्त के उदा०—सुपयाः। सुयशाः। सुस्रोताः। सुस्रत्। सुध्वत्। [ सुस्रंस् सुध्वंस् में भी अस् अन्त में है। अतः ये भी उदा० हैं। इनमें उत्तरपद मनन्त, असन्त का आदि उदात्त होता है। शेष निघात से अनुदात्त और उदात्त के बाद वाला अनुदात्त स्वरित होता है। ]

सु से परे—इसका क्या फल है? कृतकर्मा। कृतयशाः। [ यहाँ सु से परे नहीं है, अतः पूर्वपद का प्रकृतिस्वर ही

---

१. पिबतेरि च—इति पाठान्तरम्।

**कपि तु परत्वात् 'कपि पूर्वम्' ( ६.२.१७३ ) इत्येतद्भवति । सुकर्मकः । सुस्रोतस्कः ॥**

## २७८१. क्रत्वादयश्च ॥ ११८ ॥ ( ३८५२ )

**क्रत्वादयः सोरुत्तरे बहुव्रीहौ समासे आद्युदात्ता भवन्ति । सुक्रतुः ( तै० सं० १.२.६.१ ) । सुदृशीकः । ( तै० सं० ३.४.११.१ ) ।**

**क्रतु । दृशीक । प्रतीक । प्रपूर्त्ति । हव्य । भग । क्रत्वादिः ॥**

**न्यासः**

इति ब्रुवता वाक्यकारेणानिनस्मन्प्रभृतीनामनर्थकानामपि ग्रहणं भवतीत्युक्तं भवति । अन्यथाप्येतत् तदन्तविधेः प्रदर्शनार्थं स्यात् ।

**कपि तु परत्वादित्यादि ।** 'सोर्मनसी' इति सूत्रस्यावकाशः—सुकर्माः, सुवयाः, 'कपि पूर्वम्' इत्यस्यावकाशः—अयवकः, सुयवक इति, 'शेषाद्विभाषा' इति कप् । इहोभयं प्राप्नोति— सुकर्मकः, सुस्रोतस्क इति, 'कपि पूर्वम्' इत्येतद् भवति विप्रतिषेधेन ॥ ११७ ॥

**क्रत्वादयश्च ॥** कृञः क्रतुः तेन नित्स्वरेण क्रतुराद्युदात्तः । दृशीकप्रतीकशब्दौ 'अर्ध्यादयश्च' इत्याद्युदात्तौ । सूपूर्वस्य त्वरतेः क्तिन्ः । 'तादौ च निति कृत्यतौ' इति गतिस्वरेण प्रतूर्तिशब्द आद्युदात्तः, 'ज्वरत्वर' इत्यादिनोठ् । जुहोतेः 'अचो यत्', 'यतोऽनावः' इत्याद्युदात्तो भवति हव्यशब्दः । 'भजेः खनो घ च' इति घः । अत्र हि घित्करणेन ज्ञापितम् —अन्येभ्योऽपि घो भवतीति । वृषादित्वाद् भगशब्द आद्युदात्तः ॥ ११८ ॥

**पदमञ्जरी**

तदन्तविधिं प्रयोजयन्तीति वचनादनर्थकानामप्यनिन्प्रभृतीनां ग्रहणं भवतीत्युक्तं भवति । तेन सुप्रथिमा, सुस्रत्, सुध्वदित्यादिकमप्युदाहरणमुपपद्यत इति भावः ।

**कपि परत्वादिति ।** 'सोर्मनसी' इत्यस्यावकाशः—सुकर्मा, सुशर्मा; 'कपि पूर्वम्' इत्यस्यावकाशः—[1]अयवकः, सुयवक इति; एकस्थले विप्रतिषेधः ॥ ११७ ॥ ११८ ॥

**भावबोधिनी**

होता है ! ] मनन्त और असन्त—इसका क्या फल है ? सुराजा । सुतक्षा । [ मनन्त नहीं, कनन्त हैं । ] लोमन् और उषस् को छोड़ कर—इसका क्या फल है ? सुलोमा । सूषा । [ इनमें पूर्वपद का प्रकृतिस्वर ही होता है । ]

'अन्, इन्, अस्, मन्—इनका जहाँ ग्रहण है, वहाँ अनर्थक भी अनादि तदन्तविधि का ग्रहण करते हैं ।' ( व्या० प० १२९ ) इस वचन से यहाँ अनर्थक मन् और अस् का भी ग्रहण होता है । यह सूत्र 'नञ् सुभ्याम्' ( ६।२।१७२ ) का अपवाद है ।

कप् परे होने पर तो परवर्ती होने से "कपि पूर्वम्" (२।२।१७२) इसकी प्रवृत्ति होती है । सुकर्मकः । सुस्रोतस्कः । [ अतः इनमें पूर्वपद का अन्तोदात्त ही होता है । उत्तरपद का आदि उदात्त नहीं होता है । ] ॥ ११७ ॥

बहुव्रीहि समास में सु से उत्तरवर्ती क्रतु आदि शब्द आद्युदात्त होते हैं । उदा०—सुक्रतुः । सुदृशीकः । [ उत्तरपद आद्युदात्त होने से शेषनिघात से अनुदात्त और उदात्त से परवर्ती अनुदात्त स्वरित हो जाता है । ]

क्रतु । दृशीक । प्रतीक । प्रपूर्ति । हव्य । भग । ये क्रत्वादि हैं ॥ ११८ ॥

---

१. इमौ शब्दौ काशिकायां दृश्येते ।

## २७८२. आद्युदात्तं द्व्यच्छन्दसि ॥ ११९ ॥ ( ३८५३ )

यदाद्युदात्तं द्व्यच् उत्तरपदं बहुव्रीहौ समासे सोरुत्तरं तदाद्युदात्तमेव भवति छन्दसि विषये। स्वश्वास्त्वा सुरथा मर्जयेम ( तै० सं० १.२.१४.४ )। नित्स्वरेणाश्वरथशब्दावाद्युदात्तौ।

आद्युदात्तमिति किम् ? या सुबाहुः स्वङ्गुरिः ( ऋक् २.३२.७ )। बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः। द्व्यजिति किम् ? सुगुरसत्। सुहिरण्यः[1]। 'नञ्सुभ्याम्' ( ६.१.१७२ ) इत्यस्यायमपवादः॥

## २७८३. वीरवीर्यौ च ॥ १२० ॥ ( ३८५४ )

वीर, वीर्य—इत्येतौ च शब्दौ सोरुत्तरौ बहुव्रीहौ समासे छन्दसि विषये आद्युदात्तौ भवतः। सुवीरेण ते [ सुवीरस्ते। ऋ० ४.१७.४ ]। सुवीर्यस्य पतयः स्याम ( तै० सं० १.७.१३.४ )।

### न्यासः

**आद्युदात्तं द्व्यच्छन्दसि॥ नित्स्वरेणाश्व-रथशब्दावाद्युदात्ताविति।** अश्वशब्दस्य 'अशिपुषि' इत्यादिना क्वन्प्रत्ययान्तस्य व्युत्पादितत्वात्। रथशब्दस्यापि 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति क्थन्प्रत्ययान्तस्य।

**बाहुशब्दः प्रत्ययस्वरेणान्तोदात्त इति।** 'कुर्भ्रश्च' इत्यतः कुरिति वर्तमाने 'अर्जिदृशिकम्यमिपशिबाधा-मृजिपसितुग्दीर्घहकाराश्च' इति कुप्रत्ययान्तस्य व्युत्पादितत्वात्। **सुहिरण्य इति।** हिरण्यशब्दः 'नब्विषयस्यानि-सन्तस्य' इत्याद्युदात्तः॥ ११९॥

**वीरवीर्यौ च॥** 'स्फायितञ्चि' इत्यादिनाऽजे रकिप्रत्यये वीरशब्दो व्युत्पाद्यते। तेनान्तोदात्तः। अथ वा—'वीर विक्रान्तौ' इत्यस्य पचाद्यचि व्युत्पादितत्वात्। **वीर्यमिति यत्प्रत्ययान्तमिति।** वीरे साधुः, 'तत्र साधुः' इति

### पदमञ्जरी

**आद्युदात्तं द्व्यच् छन्दसि॥** 'कुर्भ्रश्च' ( द० उ० १.१०७ ) इति वर्तमाने 'अर्जिदृशिकम्यमिपशिबाधा-मृजिपसितुग्धुग्दीर्घहकाराश्च' (द० उ० १.११२)। बाधते येन परानिति बाहुः॥ ११९॥

**वीरवीर्यौ च॥** 'वीर विक्रान्तौ' ( धा० पा० १.९०३ ) चुरादिः, ततः पचाद्यचि—वीरः, 'अचो

### भावबोधिनी

बहुव्रीहि समास में सु से उत्तरवर्त्ती द्व्यच् ( दो अचोंवाला ) आद्युदात्त जो उत्तरपद है वह वेद-विषय में आद्युदात्त ही रहता है। [ अन्तोदात्त नहीं होता है। ] उदा०—'स्वश्वास्त्वा सुरथा मर्जयेम' ( तै० सं० १।२।१४।४ )। यहाँ अश्व और रथ शब्द नित् स्वर से आद्युदात्त हैं। [ क्योंकि अश्व क्वन् प्रत्ययान्त और रथ क्थन् प्रत्ययान्त है। ]

आद्युदात्त—इसका क्या फल है ? या सुबाहुः स्वङ्गुरिः। बाहु शब्द [ कु = उ प्रत्यान्त होने से ] प्रत्यय स्वर से अन्तोदात्त है। [ अतः प्रस्तुत सूत्र नहीं लगता है। ] द्व्यच्—इसका क्या फल है ? सुगुरसत्। सुहिरण्यः। [ यहाँ सुगुः एक अच्वाला, या 'गुरसत' सुहिरण्यः—तीन अचोंवाला उत्तरपद है। अतः यह सूत्र नहीं लगता। कहीं-कहीं—'स्वश्वः' यह भी प्रत्युदाहरण के रूप में मिलता है किन्तु वह प्रामादिक है क्योंकि—'सु + अश्व' यह तो दो अचों वाला ही आद्युदात्त है। इसी लिये पहले उदाहरण के रूप में काशिकाकार ने लिखा है। ]

यह 'नञ् सुभ्याम्' ( ६।२।१७२ ) इसका अपवाद सूत्र है॥ ११९॥

बहुव्रीहि समास में सु से उत्तरवर्त्ती वीर और वीर्य—ये दोनों शब्द वेद-विषय में आद्युदात्त होते हैं। उदा०—

---

१. केषुचित् संस्करणेषु अत्र द्व्यचः प्रत्युदाहरणत्वेन 'स्वश्वः' इत्यपि दृश्यते, तत् प्रामादिकम्, अस्वशब्दस्य द्व्यच्कत्वेन उदाहरणतयैव प्रस्तुतत्वात् मूले—इति बोध्यम्।

वीर्यमिति यत्प्रत्ययान्तम्, तत्र 'यतोऽनावः' (६.१.१२३) इति आद्युदात्तत्वं न प्रवर्ततीत्येतदेव वीर्यग्रहणं ज्ञापकम्। तत्र हि सति पूर्वेणैव सिद्धं स्यात्॥

## २७८४. कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ १२१॥ ( ३८५९ )

कूल, तीर, तूल, मूल, शाला, अक्ष, सम—इत्येतानि उत्तरपदानि अव्ययीभावसमासे आद्युदात्तानि भवन्ति। परिकूलम्। उपकूलम्। परितीरम्। उपतीरम्। परितूलम्। उपतूलम्। परिमूलम्। उपमूलम्। परिशालम्। उपशालम्। उपाक्षम्। पर्यक्षम्। सषमम्। विषमम्। निषमम्। दःषमम्। तिष्ठद्गुप्रभृतिषु ( २.१.१७ ) एते पठ्यन्ते।

**न्यासः**

प्राग्घितीयो यत्। अथ वा—वीर इत्यस्माच्चौरादिकाद् अस्मादेव निपातनाद् 'अचो यत्', तेन वीर्यमिति यत्प्रत्ययान्तम्। एवं सति 'यतोऽनावः' इत्याद्युदात्तत्वम् प्राप्नोति ? इत्यत आह—तत्रेत्यादि। कथं पुनर्वीर्यग्रहणं ज्ञापकम् ? इत्याह—तत्र हीत्यादि। यद्याद्युदात्तं स्यात् तदा 'आद्युदात्तं द्व्यच्छन्दसि' इत्यनेनैव सिद्धं स्यात्। ततश्चेह वीर्यग्रहणं न कुर्यात्, कृतश्च; तस्मात् तदेव ज्ञापयति—वीर्यशब्दस्य यदन्तस्याप्याद्युदात्तत्वं न भवतीति। तस्मिन्नसति 'तित्स्वरितम्' इत्यन्तस्वरितमेव भवति॥ १२०॥

**कूलतीरतूलमूलशालाक्षसममव्ययीभावे**। 'कूल संवरणे', 'पार तीर कर्मसमाप्तौ', 'तूल निष्कर्षे', 'मूल प्रतिष्ठायाम्'—'एभ्यो घञ्, तेनैते कूलादय आद्युदात्ताः। 'शल हुल पत्ल गतौ'—अस्माद् घञ्। शालाप्याद्युदात्ता। स्त्रीत्वम् 'तत्पुरुषे शालायाम्' इति निपातनात्। 'तॄवदिहनिकमिकसिभ्यः सः' इति, 'अशेर्देवने' इति च सप्रत्ययान्तत्वादक्षशब्दोऽन्तोदात्तः। योऽपि 'अक्ष्णोऽदर्शनात्' इत्यचि समासान्ते कृतेऽक्षशब्दः सम्पद्यते, सोऽपि चित्स्वरेणान्तोदात्तः, तस्यापीह ग्रहणम्। 'षमु वैक्लव्ये'—अस्मात् पचाद्यच्, तेन समोऽन्तोदात्तः। यस्तु सर्वादिषु समशब्दः सोऽनुदात्तस्तत्रैव पठ्यते, तस्यापीह ग्रहणम्। **उपकूलमिति**। कूलस्य समीपमिति 'अव्ययं विभक्ति' इत्यादि-

**पदमञ्जरी**

यत्'—वीर्यम्, वीरेषु वा साधुरिति प्राग्घितीयो यत्। **तत्रेत्यादि**। कथं पुनरेतज्ज्ञापकम् ? इत्याह—**तत्र हि सतीति**। फिषि तु 'बिल्वभक्ष्यवीर्याणि छन्दसि' (फि० सू० ४.९) इति छन्दस्यन्तस्वरितत्वं भाषायां वाद्युदात्तत्वं शब्दस्य स्थितम्॥ १२०॥

**कूलतीरतूलमूलशालाक्षसममव्ययीभावे**॥ सुषममित्यादौ 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इति षत्वम्, तस्यासिद्धत्वात्समशब्द एवायम्। **तिष्ठद्गुप्रभृतिष्वेते पठ्यन्त इति**। तेनाव्ययीभावसंज्ञा। **पर्यादिभ्य इत्यादि**। 'परि-

**भावबोधिनी**

'सुवीरस्ते'। ( ऋक् ४।१७।४ ) "सुवीर्यस्य पतयः स्याम।" ( तै० सं० १।७।१३।४ ) [ वीर और वीर्य आद्युदात्त होते हैं। ]

वीर्यम्—यह यत् प्रत्ययान्त है, इसमें 'यतोऽनावः' ( ६।१।१२३ ) इससे आद्युदात्तत्व नहीं होता है—इसी को वीर्यग्रहण ज्ञापित करता है। यदि वह सूत्र लगता तब तो पूर्ववर्त्ती सूत्र से ही इसमें भी उदात्त सिद्ध हो जाता। [ अतः यही इसका फल समझना चाहिए। ]॥ १२०॥

कूल, तीर, तूल, मूल, शाला, अक्ष, सम—ये उत्तरपद अव्ययीभाव समास में आद्युदात्त होते हैं। उदा०—परिकूलम्। [ वर्जनार्थ में अव्ययीभाव है। ] उपकूलम्। [ सामीप्य में अव्ययीभाव है। ] परितीरम्। उपतीरम्। परितूलम्। उपतूलम्। परिमूलम्। उपमूलम्। परिशालम्। उपशालम्। उपाक्षम्। पर्यक्षम्। सुषमम्। विषमम्।

**कूलादिग्रहणं किम् ? उपकुम्भम् । अव्ययीभाव इति किम् ? परमकूलम् । उत्तमकूलम् । पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं विप्रतिषेधेन भवति । परिकूलम् । उपकूलम् ॥**

## २७८५. कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ॥ १२२ ॥ ( ३८५६ )

**कंस, मन्थ, शूर्प, पाय्य, काण्ड—इत्येतान्युत्तरपदानि द्विगौ समास आद्युदात्तानि भवन्ति । द्विकंसः । त्रिकंसः । द्विमन्थः । त्रिमन्थः । द्विशूर्पः । त्रिशूर्पः । द्विपाय्यः । त्रिपाय्यः । द्विकाण्डः । त्रिकाण्डः ।**

### न्यासः

नाव्ययीभावः । **परिकूलमिति** । 'अपपरी वर्जने' इति परिशब्दः कर्मप्रवचनीयसंज्ञः । तेन योगे 'पञ्चम्यपाङ्परिभिः' इति कुलात् पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । **सुषममित्यादौ** 'सुषामादिषु च' इति षत्वम्, तस्यासिद्धत्वात् समशब्द एवायम् । **तिष्ठद्गुप्रभृतिष्वेते पठ्यन्त इति** । तेन 'तिष्ठद्गुप्रभृतीनि च' इत्येतेऽव्ययीभावा इति दर्शयति ।

**उपकुम्भमिति** । अत्र समासान्तोदात्तत्वमेव । **परमकूलम्, उत्तमकूलमिति** । परमं कूलमस्योत्तमं कूलमस्येति बहुव्रीहिः । अत्र पूर्वपदप्रकृतिस्वर एव भवति । यौ तु तत्पुरुषौ परमकूलोत्तमकूलशब्दौ, तत्र बहुव्रीह्यधिकारादेव न भविष्यतीति तन्निवृत्त्यर्थमव्ययीभावग्रहणमयुक्तम् ।

**पर्यादिभ्य इत्यादि** । 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' इत्यस्यावकाशो यत्र कूलादयो न सन्ति—परित्रिगर्तमिति, कूलादीनामाद्युदात्तस्यावकाशो यत्र पर्यादयो विद्यन्ते—अपकूलमिति; परिकूलमित्यत्र तूभयं प्राप्नोति, तत्र विप्रतिषेधेनेदमेवाद्युदात्तत्वं भवति ।

समासस्वरापवादो योगः । एवमुत्तरेऽपि 'नाचार्यराज' इत्यादेः सूत्रात् प्राक् ॥ १२१ ॥

**कंसमन्थशूर्पपाय्यकाण्डं द्विगौ** ॥ 'वृतॄवदिहनिकमिकषिभ्यः सः' इति कमेः सः, तेन कंसोऽन्तोदात्तः । 'मन्थ विलोडने'—अस्माद् 'अकर्तरि च कारके संज्ञायाम्' इति घञ् तेन मन्थ आद्युदात्तः । 'पानीविषिभ्यः पः'

### पदमञ्जरी

प्रत्युपापा' इत्यस्यावकाशो यत्र कूलादयो न सन्ति—परित्रिगर्तमिति, कूलादीनामाद्युदात्तस्यावकाशो यत्र पर्यादयो न भवन्ति—अवकूलम्, अतिकूलमिति; पर्यादिभ्यः परेषु कूलादिषु विप्रतिषेधः ॥ १२१ ॥

**कंसमन्थशूर्पपाय्यकाण्डं द्विगौ** ॥ **द्विकंस इति** । द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः, 'कंसाट्टिठन्' इति टिठन्, तस्य 'अध्यर्धपूर्व' इति लुक् । **द्विमन्थ इति** । 'आर्हादगोपुच्छ' इत्यादिना ठक्, शेषं पूर्ववत् ।

### भावबोधिनी

निषमम् । दुःषमम् । "तिष्ठद्गुप्रभृतीनि" ( २।१।१७ ) के अन्तर्गत इन शब्दों का पाठ है । [ सभी में वर्जन, सामीप्य आदि अर्थों में अव्ययीभाव समझना चाहिए । उत्तरपद आद्युदात्त होते हैं । समास का अन्तोदात्त नहीं होता है । ]

कूलादि का ग्रहण किसलिए है ? उपकुम्भम् । [ यहाँ नहीं होता है । ] अव्ययीभाव में—इसका क्या फल है ? परमकूलम् । उत्तमकूलम् । [ कर्मधारय है । ]

परि आदि से परे कूलादि का आद्युदात्तत्व विप्रतिषेध से होता है । परिकूलम् । उपकूलम् । [ इनमें यही सूत्र आद्युदात्तत्व करता है । ] ॥ १२१ ॥

कंस, मन्थ, शूर्प, पाय्य, काण्ड—ये उत्तरपद द्विगु समास में आद्युदात्त होते हैं । उदा०—द्विकंसः । [ कंस शब्द प्रत्ययस्वर से अन्तोदात्त है किन्तु द्विगु में आद्युदात्त हो जाता है । ] त्रिकंसः । द्विमन्थः । त्रिमन्थः । [ इसमें क्रीत अर्थ में विहित ठक् का लुक् होता है । मन्थ आद्युदात्त रहता है । ] द्विशूर्पः, त्रिशूर्पः । [ इनमें क्रीतार्थ में अञ् होता है

**द्विगाविति किम् ? परमकंसः । उत्तमकंसः ॥**

## २७८६. तत्पुरुषे शालायां नपुंसके ॥ १२३ ॥ ( ३८५७ )

**शालाशब्दान्ते तत्पुरुषे समासे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तं भवति । ब्राह्मणशालम् । क्षत्त्रियशालम् । 'विभाषा सेनासुराच्छायाशालानिशानाम्' ( २.४.२५ ) इति नपुंसकलिङ्गता ।**

**तत्पुरुष इति किम् ? दृढशालं ब्राह्मणकुलम् । शालायामिति किम् ? ब्राह्मणसेनम् । नपुंसक इति किम् ?**

**न्यासः**

इति वर्तमाने 'सुशृभ्यां निच्च' इति शृणातेः पः, निच्च । बाहुलकादूत्वञ्च । अथ वा—'शूर्प माने'—अस्माद् घञ्, तेन शूर्पशब्द आद्युदात्तः । पाय्यशब्दो ण्यति 'पाय्यसान्नाय्य' इति निपात्यते, तेनायमन्तस्वरितः । कुण्डशब्दः पूर्वमेवोक्तस्वरः । **द्विकंस इति** । द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः, ततः प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात् 'कंसाट्टिठन्' इति टिठन्, तस्य चापि 'अध्यर्द्धपूर्व' इत्यादिना लुक् । **त्रिकंस इति** । पूर्वेण तुल्यम् । **द्विमन्थ इति** । 'आर्हादगोपुच्छ' इत्यादिना ठक् । शेषं समासादि पूर्ववत् । **द्विशूर्प इति** । 'शूर्पादन्यतरस्याम्' इत्यञ् । शेषं पूर्ववत् । **द्विपाय्य इति** । प्राग्वतीयष्ठञ् । शेषं पूर्ववत् । **द्विकाण्डमिति** । द्वे काण्डे प्रमाणमस्येति 'प्रमाणे द्वयसच्' इत्यादिना मात्रजादयः, तेषाम् 'प्रमाणे लो द्विगोर्नित्यम्' इति लोपः, समासः पूर्ववत् ।

**परमकंस इति** । अत्र समासस्वर एव भवति ॥ १२२ ॥

**तत्पुरुषे शालायां नपुंसके** । शालाशब्दः 'कूलतीर' इत्यत्रोक्तस्वरः । **ब्राह्मणशालम्, क्षत्त्रियशालमिति** । ब्राह्मणशब्दोऽणन्तत्वादन्तोदात्तः । क्षत्रियशब्दस्तु मध्योदात्तः, 'क्षत्राद् घः' इति घप्रत्ययान्तत्वात् । **दृढशालमिति** । बहुव्रीहिरयम्, तेन पूर्वपदप्रकृतिस्वर एव भवति । पूर्वपदञ्च निष्ठान्तत्वादन्तोदात्तम् । ननु च लक्षण-प्रतिपदोक्तपरिभाषया 'विभाषा सेना' इति प्रतिपदोक्ता या नपुंसलिङ्गता सैव ग्रहीष्यते । न हि दृढशालमित्र

**पदमञ्जरी**

[1]**द्विशूर्पमिति** । 'शूर्पादञन्यतरस्याम्' । [2]**द्विपाय्यमिति** । 'पाय्यसन्नाय्य' इत्यादिना परिमाणे निपातितः । 'प्राग्वतेष्ठञ्' । [3]**द्विकाण्डमिति** । द्वे काण्डे प्रमाणमस्य 'प्रमाणे द्वयसच्' इत्यादिना मात्रजादयः, तेषाम् 'प्रमाणे लो द्विगोर्नित्यम्' ( वा० ५५८-५९ ) इति लुक् ॥ १२२ ॥

**तत्पुरुषे शालायां नपुंसके ॥ दृढशालमिति** । बहुव्रीहिरयम् । तत्र पूर्वपदप्रकृतिस्वर एव भवति, पूर्वपदं

**भावबोधिनी**

उसका लुक् होता है । ] द्विपाय्यः, त्रियाय्यः । [ यहाँ परिमाणार्थ में विहित ठञ् का लुक् है । ] द्विकाण्डः, त्रिकाण्डः । [ यहाँ भी परिमाण अर्थ में मात्रच् आदि हैं, उनका लुक् होता है । ये सभी आद्युदात्त होते हैं । ]

द्विगु में ही—इसका क्या फल है ? परमकंसः, उत्तमकंसः । [ यहाँ कर्मधारय है अतः समास का अन्त उदात्त ही होता है । ] ॥ १२२ ॥

शालाशब्दान्त तत्पुरुष समास में नपुंसक लिङ्ग में उत्तरपद आद्युदात्त होता है । उदा०—ब्राह्मणशालम् । क्षत्त्रियशालम् । [ षष्ठीतत्पुरुष करने पर ] "विभाषा सेनासुराच्छायाशालानिशानाम्" (पा० सू० २।४।२५) सूत्र से वैकल्पिक नपुंसकलिङ्ग होता है ।

तत्पुरुष में ही—इसका क्या फल है ? दृढशालं ब्राह्मणकुलम् । [ दृढा शाला यस्य तत्—यह बहुव्रीहि है ।

---

१. 'द्विशूर्पः' इति काशिकायाम् । २. 'द्विपाय्यः' इति काशिकायाम् ।
३. 'द्विकाण्डः' इति काशिकायाम् ।

ब्राह्मणशाला ॥

## २७८७. कन्था च ॥ १२४ ॥ ( ३८५८ )

**तत्पुरुषे समासे नपुंसकलिङ्गे कन्थाशब्द उत्तरपदमाद्युदात्तं भवति। सौशमिकन्थम्। आह्वरकन्थम्। चप्पकन्थम्। 'संज्ञायां कन्थोशीनरेषु' (२.४.२०) इति नपुंसकलिङ्गता। षष्ठीसमासा एते।**

**नपुंसक इत्येव—दाक्षिकन्था ॥**

### न्यासः

प्रतिपदोक्ता नपुंसकता, किं तर्हि? अभिधेयवशेन लक्षणोक्ता—अभिधेयवल्लिङ्गवचनानि भवन्तीति। तत् किमेतन्निवृत्त्यर्थेन तत्पुरुषग्रहणेन? एवं तर्ह्युत्तरार्थं तत्पुरुषग्रहणम्। 'चेलखेटकटुककाण्डं गर्हायाम्' इत्यनेन दधि च तत् कटुकं चेति दधिकटुकमित्यत्रैव यथा स्यात्—दधिकटुकम्, उद्रश्वित्कटुकमिति। उत्तरार्थं तु तत्क्रियमाणं विस्पष्टार्थत्वमुपपादयतीत्येतदर्थमपि भवति। लक्षणप्रतिपदोक्तपरिभाषा चेह नाश्रयितव्या भवति—एतदर्थं तत्पुरुषग्रहणस्य दृढशालमित्येतत् प्रत्युदाहरणमुपन्यस्तम् ॥ १२३ ॥

**कन्था च ॥** 'कथि क्लेशने'—अस्माद् 'गुरोश्च हलः' इत्यकारः, तेन कन्थान्तोदात्ता। **सौशमिकन्थमिति।** शोभनः शमोऽस्य सुशमः, 'तस्यापत्यम्' इत्यत इञ्। तेनाद्युदात्तः सौशमिशब्दः। **आह्वरकन्थमिति।** आङ्पूर्वस्य ह्वयतेः 'आतोश्चोपसर्गे' इति कः, तेनाह्वरशब्दस्थाथादिस्वरेणान्तोदात्तः। **चप्पकथमिति।** 'चप सान्त्वने' अस्मात् 'पानीविषिभ्यः पः' इवि बहुलवचनाच्चपोऽपि भवति। तेन चप्पशब्दोऽन्तोदात्तः ॥ १२४ ॥

### पदमञ्जरी

च निष्ठान्तत्वादन्तोदात्तम्। ननु चात्र लक्षणप्रतिपदोक्तपरिभाषयैव भविष्यति? सत्यम्; उत्तरार्थं तत्पुरुषग्रहणमवश्यं कर्तव्यं तदिहैव क्रियते, परिभाषाया अनाश्रयणाय ॥ १२३ ॥

**कन्था च ।।** शोभनः शमो यस्य तस्यापत्यं सौशमिः। आङ्पूर्वात् ह्वयतेः 'आतश्चोपसर्गे' इति कः, 'चप सान्त्वने', ( धा० पा० ३९९ ) औणादिकः पः, बहुलवचनादिड्भावः—चप्पः ॥ १२४ ॥

### भावबोधिनी

कुल का विशेषण होने से नपुंसकलिङ्ग है किन्तु तत्पुरुष न होने से बहुव्रीहि का स्वर पूर्वपद 'दृढ' का ( निष्ठान्त ) अन्तोदात्त होता है। ]

शाला-शब्दान्त रहने पर—इसका क्या फल है? ब्राह्मणसेनम्। [ तत्पुरुष और नपुंसक होने पर भी शाला शब्दान्त नहीं है। अतः समास का अन्तोदात्त ही होता है। ]

नपुंसक में इसका क्या फल है? ब्राह्मणशाला। [ नपुंसकत्व वैकल्पिक है। अतः न होने पर यह रूप भी होता है। यहाँ समास का अन्तोदात्त होता है। ] ॥ १२३ ॥

तत्पुरुष समास में नपुंसक लिङ्ग में 'कन्था' शब्द उत्तरपद आद्युदात्त होता है। उदा०—सौशमिकन्थम्। आह्वरकन्थम्। चप्पकन्थम्। इनमें 'संज्ञायां कन्थोशीनरेषु' (पा० सू० २।४।२०) सूत्र से नपुंसकलिङ्ग होता है। ये षष्ठीतत्पुरुष हैं। [ कन्था शब्द अन्तोदात्त है किन्तु यहाँ आद्युदात्त हो जाता है। ]

नपुंसक में ही—दाक्षिकन्था। [ नपुंसक लिङ्ग न होते पर कन्था आद्युदात्त नहीं होता है। समास का अन्तोदात्त ही होता है। ] ॥ १२४ ॥

## २७८८. आदिश्चिहणादीनाम् ॥ १२५ ॥ ( ३८५९ )

**कन्थान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तो भवति । चिहणकन्थम् । मडरकन्थम् । 'मड्डर' इति केचित् पठन्ति । मड्डरकन्थम् ।**

**चिहण । मडर । मड्डर । वैतुल । पटत्क । चैत्तालिकर्णः । वैतालिकर्णिरित्यन्ये पठन्ति । कुक्कुट । चिक्कण । चित्कण इत्यपरे पठन्ति । चिहणादिः ।**

**'आदिः' इति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थम् ॥**

**न्यासः**

**आदिश्चिहणादीनाम् ॥** पूर्वेणोत्तरपदस्य सिद्धेऽयं पूर्वपदस्याद्युदात्तत्वार्थ आरम्भः । चिनोतेः क्विप् चित् । हन्तेः पचाद्यज् हनः । निपातनात् तलोपो णत्वं च—**चिहणः** । 'मल मल्ल धारणे'—आभ्यां रप्रत्ययः, लस्य निपातनात् डत्वम् । मडरमड्डरशब्दौ मध्योदात्तौ । विगता तुला यस्य स वितुलः, तस्यायं वैतुलः । अणन्तत्वादन्तोदात्तः । पटदिति कायतीति 'कै गै शब्दे' 'आतोऽनुपसर्गे कः' पटत्कोऽन्तोदात्तः । चित्तमादत्त इति 'ला आदाने'— इत्यस्मादाङ्पूर्वादस्मादेव निपातनात् कः—चित्तालः, तस्यापत्यमिति 'अत इञ्' चैत्तालिः, स कर्णावस्य **चैत्तालिकर्णः** । बहुव्रीहिरयं पूर्वपदप्रकृतिस्वरेणाद्युदात्तः । पूर्वपदं हि ञित्स्वरेणाद्युदात्तम् । अन्ये त्विञन्तं चैत्तालिकर्णिरिति समुदायमधीयते । 'कुक वृक आदाने' अस्मात् क्विप्—कुक्; 'कुट कौटिल्ये' इत्यस्मादिगुपधलक्षणः कः, कुटः, कुकः कुटः-कुक्कुटः । समासस्वरेणान्तोदात्तः । चिनोतेः क्विप्, चित्, कणतेः पचाद्यचि कणः, **चितः कणश्चिक्कणः**, तकारस्य ककारो निपातनात् । **चित्कण इत्यपरे पठन्ति** । चिहणादयश्चैते मनुष्यनामधेयानि **गोत्रनामधेयानि चेति स्मर्यते** ।

अथादिग्रहणं किमर्थम्, यावतादिरनुवर्तन एव? इत्याह—**आदिरिति वर्तमान इत्यादि** । पूर्वकं ह्यादिग्रहणमुत्तरपदाभिसम्बद्धम् । पूर्वपदानां चिहणादीनामाद्युदात्तत्वमिष्यते । तस्मात् पूर्वपदभूतानां

**पदमञ्जरी**

**आदिश्चिहणादीनाम् ॥** चिनोतेः क्विप् चित्, हन्तेः पचाद्यच्, हनः, चिहणम्—निपातनात्तलोपो णत्वं च । 'मल मल्ल धारणे', ( धा० पा० ४९३–९४ ) आभ्यां रप्रत्ययः, निपातनाम ल्लस्य डत्वम्—मडरः मड्डरः । विगततुलस्येदं वैतुलम् । पटदिति कायति—पटत्कः । 'कै गै रै शब्दे' ( धा० पा० ९१६, ९१७, ९०९ ) 'आतोऽनुपसर्गे कः' । बिडमादत्ते बिडालः । 'ला आदाने' ( धा० पा० १०५८ ) सोपसर्गादप्यस्मादेव निपातनात्कः, तस्यापत्यं बैडालिः, तस्येव कर्णावस्य बैडालिकर्णः । अपरे तु इकारान्तं पठन्ति—**बैडालिकर्णिरिति** । कुक्कु रटतीति कुक्कुटः, निपातनाद्रशब्दस्य लोपः, चिनोतेः क्विप्, चित्, कणतेरच्, कणः, चितः कणः-चिक्कणः, निपातनात्तकारस्य ककारः । तकारमेवान्ये पठन्ति । चिहणादयश्चैते **गोत्रनामधेयानि स्मर्यन्ते** ।

**आदिरिति वर्तमान इति** । पूर्वं ह्यादिग्रहणमुत्तरपदाभिसम्बद्धमिह पूर्वपदानां चिहणादीनामाद्युदात्तत्व-

**भावबोधिनी**

कन्थाशब्दान्त तत्पुरुष समास में नपुंसकलिङ्ग में चिहण आदि शब्दों का आदि उदात्त होता है । उदा०—चिहणकन्थम् । मडरकन्थम् । कुछ लोग 'मड्डर' यह पढ़ते हैं—मड्डरकन्थम् । [ नपुंसकलिङ्ग में चिहण आदि का आदि उदात्त होने से कन्था का स्वर नहीं होता है । शेष निघात होता है । ]

चिहण । मडर । मड्डर । वैतुल । पटत्क । चैत्तालिकर्ण । दूसरे लोग—वैतालिकर्णि—यह पढ़ते हैं । कुक्कुट । चिक्कण । दूसरे लोग—चित्कण यह पढ़ते हैं । यह चिहणादि है ।

'आदिः' इसकी अनुवृत्ति रहने पर भी पुनः 'आदिः' का ग्रहण पूर्वपद के आद्युदात्त को करने के लिये है ।

**२७८९. चेलखेटकटुककाण्डं गर्हायाम् ॥ १२६ ॥ ( ३८६० )**

**चेल, खेट, कटुक, काण्ड—इत्येतान्युत्तरपदानि तत्पुरुषे समासे गर्हायां गम्यमानायामाद्युदात्तानि भवन्ति । पुत्रचेलम् । भार्याचेलम् । उपानत्खेटम् । नगरखेटम् । दधिकटुकम् । उदश्वित्कटुकम् । भूतकाण्डम् । प्रजाकाण्डम् ।**

**चेलादीनां सादृश्येन पुत्रादीनां गर्हा, तत्र पुत्रश्चेलमिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभिः' ( २.१.५६ ) इति समासः ।**

**न्यासः**

तेषामाद्युदात्तत्वं यथा स्यादित्येवमर्थं पुनरादिग्रहणम् ॥ १२५ ॥

**चेलखेटकटुककाण्डं गर्हायाम्** ॥ 'वेलृ चेलृ केलृ चलने' अस्मात् संज्ञायां घञ्, चेलम् = वस्त्रमुच्यते । 'खिट उत्त्रासने' अस्मादपि भावे घञ्-खेटः = तृणनामैतत् । ञित्स्वरेण चेलखेटशब्दावाद्युदात्तौ । कटुशब्दात् संज्ञायां कन्, गुणवचनमेतदाद्युदात्तम् । काण्डमप्याद्युदात्तमेवेत्युक्तम् ।

**चेलादीनां सादृश्येन पुत्रादीनां गर्हेति** । यथा चेलमकुलीनेन तन्तुवायेनोपजनितमेवं पुत्रोऽप्यकुलीनजो यः स **पुत्रचेलमित्युच्यते** । यथा खेटमदृढमेवमुपानद् याऽदृढा **सोपानत्खेटम्** । यथा कटुकमस्वादु तथा दध्यपि यदस्वादु तद् **दधिकटुकम्** । यथा काण्डं सत्त्वपीडाकरमेवं भूतमपि । तत्र पुत्रशब्दः प्रत्ययस्वरेणान्तोदात्तः । स हि 'अमिचिमिदिशसिभ्यः क्त्रः' इत्यनुवर्तमाने 'पुरो ह्रस्वश्च' इति पुत्रशब्दः क्त्रप्रत्ययान्तो व्युत्पाद्यते । भार्याशब्दः 'ऋहलोर्ण्यत्' इति ण्यदन्तत्वादन्तस्वरितः । 'णह बन्धने', अस्मादुपपूर्वात् क्विप्, 'नहिवृति' इत्यादिना पूर्वपदस्य दीर्घत्वम्, 'नहो धः' इति नकारस्य धकारः, तस्य चर्त्वम्—तकारः । उपानच्छब्दः कृत्स्वरेणान्तोदात्तः । नगा अस्मिन् विद्यन्त इति 'नगरात् कुत्सनप्रावीण्ययो' इत्यस्मादेव निपातनाद्रप्रत्ययः, तेन नगरमन्तोदात्तम् । दधीति—'आदृगम' इत्यादिना क्विन्प्रत्ययान्तो दधातेर्व्युत्पादयते, तेनाद्युदात्तः । उदकेन श्वयत इत्युदश्वित्, क्विप् । 'क्विब्वचिप्रच्छि' इत्यादिना बहुलवचनाद् दीर्घोऽस्य न भवति । 'उदकस्योदः संज्ञायाम्' इत्युदभावः, कृत्स्वरे-

**पदमञ्जरी**

मिष्यते, अतस्तदर्थं पुनरादिग्रहणं कृतम् ॥ १२५ ॥

**चेलखेटकटुककाण्डं गर्हायाम्** ॥ **पुत्रचेलमिति** । चेलवत्तुच्छमित्यर्थः । 'खेट' इति तृणनाम, तद्वद् दुर्बला उपानत्खेटम् । कटुकम् = अस्वादु, तथा दध्यपि गतस्वादुकत्वात् कटुकम् । काण्डमिति शरनाम, तद् यथा सत्त्व-

**भावबोधिनी**

[ अनुवृत्त होने वाले 'आदि' का सम्बन्ध उत्तरपद के साथ है । अतः यहाँ 'आदि' का ग्रहण पूर्वपद का आदि उदात्त करने के लिए है । ] ॥ १२५ ॥

चेल, खेट, कटुक, काण्ड—ये उत्तरपद तत्पुरुष समास में, गर्हा गम्यमान होने पर आद्युदात्त हो जाते हैं । उदा०—पुत्रचेलम् । भार्याचेलम् । [ चेल = वस्त्र, इसके समान तुच्छ—अर्थ है । उत्तरपद आद्युदात्त हो जाता है । ] उपानत्-खेटम् नगरखेटम् । [ खेट = तिनका होता है । इसके समान कमजोर, दुर्बल—यह अर्थ है । उपमित समास है । ] दधिकटुकम् । उदश्वित्कटुकम् [ उदश्वित् = तक्र के समान कटुक = स्वादहीन ] भूतकाण्डम् । प्रजाकाण्डम् । [ काण्ड = वाण, यह जैसे पीडाकारक होता है इसी प्रकार भूत और प्रजा = सन्तान भी पीडा करने वाली होती है । ] सभी में उत्तरपद आद्युदात्त होता है । अन्तोदात्त नहीं होता है । ]

चेल आदि के सादृश्य से पुत्रादि की गर्हा ( निन्दा ) सूचित होती है । इसमें—पुत्रः चेलम् इव—यह विग्रह करके व्याघ्रादि-गण को आकृतिगण मानकर 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' ( २।१।५६ ) सूत्र से समास होता है । [ अतः चेल = वस्त्र के समान तुच्छ, त्याज्य पुत्र आदि यह अर्थ है । ]

गर्हायामिति किम् ? परमचेलम् ॥

२७९०. चीरमुपमानम् ॥ १२७ ॥ ( ३८६१ )

चीरमुत्तरपदमुपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति। वस्त्रं चीरमिव वस्त्रचीरम्। पटचीरम्। कम्बलचीरम्।

उपमानमिति किम् ? परमचीरम् ॥

२७९१. पललसूपशाकं मिश्रे ॥ १२८ ॥ ( ३८६२ )

पलल, सूप, शाक—इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तानि भवन्ति। गुडपललम्। घृतपललम्। घृतसूपः। मूलकसूपः। घृतशाकम्। मुद्गशाकम्। गुडेन मिश्रं पललं गुडपललम्। 'भक्ष्येण मिश्रीकरणम्' ( २.१.३५ ) इति समासः।

**न्यासः**

णान्तोदात्तः। भूतशब्दोऽपि निष्ठान्तत्वादन्तोदात्तः। प्रजाशब्दः 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययान्तः, तेन कृत्स्वरेणान्तोदात्तः।

**परमचेलमिति**। अत्र पूजा गम्यते, न गर्हा ॥ १२६ ॥

**चीरमुपमानम्** ॥ 'सुसूधागृधिभ्यः क्रन्' इति वर्तमाने 'शुसिचिमीनां दीर्घश्च' इति क्रन्प्रत्ययान्तश्चीरशब्दः, तेनाद्युदात्तः। **वस्त्रचीरमिति**। पूर्ववद् व्याघ्रादित्वात् समासः। वसेराच्छादनार्थात् ष्ट्रन् वस्त्रम्, तेनाद्युदात्तम्। **कम्बलचीरमिति**। 'घृतादीनाञ्च' इति कम्बलशब्दोऽन्तोदात्तः ॥ १२७ ॥

**पललसूपशाकं मिश्रे** ॥ 'पल रक्षणे', 'कलस्तृपश्च' इति वर्तमाने 'वृषादिभ्यश्चित्' इति कलप्रत्ययस्य चित्त्वात् पलशब्दोऽन्तोदात्तः। 'रोदेर्णिलुक् च' इति विद्यमाने 'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति बहुलवचनाण्णिलुक् च। 'पानीविषिभ्यः पः' इत्यधिकृत्य 'स्तुवो दीर्घश्च' इति च 'सुशृभ्यां निच्च' इति सूपशब्दः पप्रत्ययान्तो व्युत्पाद्यते, तेनाद्युदात्तः। 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति बहुलवचनात् 'शो तनूकरणे' इत्यस्मादपि भवति। तेन शाकशब्द आद्युदात्तः। **गुडपललमिति**। 'गुड घनत्वे', अस्मादिगुपधलक्षणः कः, तेन गुडशब्दोऽन्तो-

**पदमञ्जरी**

पीडाकरम्, एवं भूतमपि ॥ १२६ ॥

**चीरमुपमानम्** ॥ **वस्त्रचीरमिति**। वस्त्रं चीरमिवेति पूर्ववद्व्याघ्रादिसमासः ॥ १२७ ॥ १२८ ॥

**भावबोधिनी**

गर्हा गम्यमान रहने पर—इसका क्या फल है ? परमचेलम्। [ यहाँ कर्मधारय में प्रशंसा प्रतीत होती है, गर्हा नहीं है। अतः उत्तरपद का आद्युदात्त न होकर समास का अन्तोदात्त होता है। ] ॥ १२६ ॥

उपमानवाचक उत्तरपद 'चीर' तत्पुरुष समास में आद्युदात्त होता है। उदा०—वस्त्रं चीरमिव—वस्त्रचीरम्। पटचीरम्। कम्बलचीरम्। [ इनमें भी पूर्ववत् 'उपमितं व्याघ्रादिभिः' से उपमित समास है। वस्त्र सामान्यवाचक है और चीर एक विशेष प्रकार के वस्त्र का वाचक है। अतः भेद के कारण उपमिति हो जाती है। 'चीर' शब्द आद्युदात्त है। समास में भी उत्तरपद आद्युदात्त रहता है। अन्तोदात्त नहीं होता है। ]

उपमान हो—इसका क्या फल है ? परमचीरम्। [यहाँ विशेष्यविशेषणभाव है। अतः अन्तोदात्त ही होता है] ॥१२७॥

पलल, सूप, शाक—ये उत्तरपद, मिश्रवाची ( मिला हुआ—अर्थवाचक ) तत्पुरुष समास में आद्युदात्त होते हैं। उदा०—गुडपललम्। घृतपललम्। घृतसूपः। मूलकसूपः। घृतशाकम्। मुद्गशाकम्। इनमें गुड से मिश्र = मिला हुआ पलल = मांस—गुडपललम् है। 'भक्ष्येण मिश्रीकरणम्' ( २।१।३५ ) सूत्र से समास होता है।

मिश्र इति किम् ? परमपललम् ॥

२७९२. कूलसूदस्थलकर्षाः संज्ञायाम् ॥ १२९ ॥ ( ३८६३ )

कूल, सूद, स्थल, कर्ष—इत्येतान्युत्तरपदानि तत्पुरुषे समासे संज्ञायां विषये आद्युदात्तानि भवन्ति । दाक्षिकूलम् । माहकिकूलम् । देवसूदम् । भाजीसूदम् । दाण्डायनस्थली । माहकिस्थली । दाक्षिकर्षः । ग्रामनामधेयान्येतानि ।

स्थलग्रहणम्—लिङ्गविशिष्टत्वात्स्थलीशब्दोऽपि गृह्यते । 'जानपदकुण्ड' ( ४.१.४२ ) इत्यनेन ङीष् । संज्ञायामिति किम् ? परमकूलम् ॥

२७९३. अकर्मधारये राज्यम् ॥ १३० ॥ ( ३८६४ )

कर्मधारयवर्जिते तत्पुरुषे समासे 'राज्यम्' इत्येतदुत्तरपदमाद्युदात्तं भवति । ब्राह्मणराज्यम् । क्षत्रियराज्यम् ।

### न्यासः

दात्तः । 'घृ क्षरणे' इत्यस्माद् 'अञ्जिघृसिभ्यः क्त' इति क्तः, तेन घृतमन्तोदात्तम् । 'मुदिग्रोर्गग्गौ' इति मुदेर्गक्, तेन मुद्गोऽन्तोदात्तः ॥ १२८ ॥

**कूलसूदस्थलकर्षाः संज्ञायाम्** । कूलशब्द उक्तस्वरः, 'षूद क्षरणे' इत्यस्मादिगुपधात् कः, तेन सूदोऽन्तोदात्तः । 'स्थल स्थाने' इत्यस्माद् पचाद्यच्, तेन स्थलमन्तोदात्तम् । कर्षशब्दः 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यन्तोदात्तः । **दाक्षिकूलमित्यादि** । दाक्षिमाहकिशब्दाविञन्तायुदात्तौ । देवशब्दः पचाद्यजन्तत्वादाद्युदात्तः । भाजीशब्दो जानपदादिसूत्रेण ङीषन्तत्वादन्तोदात्तः । दाण्डायनशब्दो नडादित्वात् फगन्तः, तेन 'कितः' इत्यन्तोदात्तः ।

ननु च सूत्रे स्थलशब्द उपात्तः, तत्कथं स्थलीशब्द उत्तरपदमाद्युदात्तश्चोदाह्रियते ? इत्याह—**स्थलग्रहणमित्यादि** ॥ १२९ ॥

**अकर्मधारये राज्यम्** ॥ राज्ञो भावः कर्म वा राज्यम्, ष्यन्तत्वादाद्युदात्तम् । ब्राह्मणक्षत्रियशब्दौ उक्तस्वरौ ।

### पदमञ्जरी

**कूलसूदस्थलकर्षाः संज्ञायाम्** ॥ **भाजीसूदमिति** । भाजीशब्दो जानपदादिसूत्रेण ङीषन्तः ॥ १२९ ॥

**अकर्मधारये राज्यम्** ॥ **चेलराज्यादिस्वरादिति** । आदिशब्देन वर्ग्यादिस्वरपरिग्रहः, चेलराज्यादिस्वरस्या-

### भावबोधिनी

मिश्र ( = मिला हुआ)—इसका क्या प्रयोजन है ? परमपललम् । [ इसमें केवल उत्कृष्टता प्रतीत होती है । अतः यह स्वर न होकर समास का अन्तोदात्त ही होता है । ] ॥ १२८ ॥

कूल, सूद, स्थल, कर्ष—ये उत्तरपद, तत्पुरुष समास में, संज्ञा-विषय में आद्युदात्त होते हैं । उदा०—दाक्षिकूलम् । माहकिकूलम् । देवसूदम् । भाजीसूदम् । दाण्डायनस्थली । माहकिस्थली । दाक्षिकर्षः । ये सभी गाँवों के नाम ( संज्ञायें ) हैं । [ अतः उत्तरपद आद्युदात्त होते हैं । समास का अन्तोदात्त नहीं होता है । ]

स्थल-ग्रहण—लिङ्गविशिष्ट होने से स्थली [ ङीषन्त ] का भी ग्रहण होता है । "जानपदकुण्ड" ( ४।१।४२ ) सूत्र से ङीष् होता है ।

संज्ञा में—इसका क्या फल है ? परमकूलम् । [ यहाँ विशेष्यविशेषणभाव है । अतः यह स्वर न होकर समास का अन्तोदात्त ही होता है । ] १२९ ॥

कर्मधारय को छोड़कर शेष तत्पुरुष समास में 'राज्यम्' यह उत्तरपद आद्युदात्त होता है । उदा०—ब्राह्मणराज्यम् ।

अकर्मधारय इति किम् ? परमराज्यम् ।

'चेलराज्यादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन' ( म० भा० )—कुचे॑लम्, कुरा॑ज्यम् ॥

**२७९४. वर्ग्यादयश्च ॥ १३१ ॥ ( ३८६९ )**

**'वर्ग्य'**—इत्येवमादीन्युत्तरपदानि अकर्मधारये तत्पुरुषे समासे आद्युदात्तानि भवन्ति । वासुदेववर्ग्यः । वासुदेवपक्ष्यः । अर्जुनवर्ग्यः । अर्जुनपक्ष्यः ।

अकर्मधारय इत्येव --परमवर्ग्यः । वर्ग्यादयः प्रातिपदिकेषु न पठ्यन्ते ।

दिगादिषु ( ४.३.४५ ) तु—वर्ग, पूग, गण, पक्ष—इत्येवमादयो ये पठिताः, त एव यत्प्रत्ययान्ता वर्ग्यादय इह प्रतिपत्तव्याः ॥

**न्यासः**

**चेलराज्येत्यादि** । चेलराज्यस्वरस्यावकाशः—भार्याचेलम्, ब्राह्मणराज्यमिति, 'तत्पुरुषे तुल्यार्थ' इत्यादिना विहितस्य स्वरस्यावकाशः - निष्कौशाम्बिरिति; इहोभयं प्राप्नोति—कुचेलम्, कुराज्यमिति, अव्ययस्वरो भवति पूर्वंप्रतिषेधेन । आदिशब्देन वर्ग्यादिस्वरपरिग्रहः ॥ १३० ॥

**वर्ग्यादयश्च** ॥ वर्ग्यादयो दिगादियदन्ताः । तेषु ये द्व्यचस्ते 'यतोऽनावः' इत्याद्युदात्ताः । परिशिष्टास्तु 'तित् स्वरितम्' इत्यन्तस्वरिताः । वसुदेवस्यापत्यम् 'ऋष्यन्धक' इत्यादिनाण्, तेन वासुदेवशब्दोऽन्तोदात्तः । 'अर्ज अर्जने' इत्यस्माच्चुरादिणिजन्ताद् 'अर्जेणिलुक् च' इत्युनण्प्रत्ययः । तेनार्जुनो मध्योदात्तः । **इत्येवमादय इति** । आदिशब्देन पक्षशब्दात् परे ये पठ्यन्ते तेषां ग्रहणम् ॥ १३१ ॥

**पदमञ्जरी**

वकाशः—भार्याचेलम्, ब्राह्मणराज्यम्; 'तत्पुरुषे तुल्यार्थ' इत्यादिना विहितस्याव्ययस्वरस्यावकाशः—निष्कौशाम्बिः; कुचेलम्, कुराज्यमित्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः ।। १३० ॥ १३१ ॥

**भावबोधिनी**

क्षत्रियराज्यम् [ राज्यम्—ष्यञन्त होने से आद्युदात्त है षष्ठी तत्पुरुष में भी आद्युदात्त रहता है । समासान्त उदात्त नहीं होता है । ]

कर्मधारय को छोड़कर—इसका क्या फल है ? परमराज्यम् । [ यहाँ कर्मधारय ही है । अतः समासान्त उदात्त होता है । ]

चेल और राज्य आदि के स्वर की अपेक्षा पूर्वविप्रतिषेध से अव्ययस्वर ( "तत्पुरुषे तुल्यार्थ-तृतीयासप्तम्युपमानाव्यय-द्वितीयाकृत्याः" ६।२।२ ) होता है—कुचेलम्, कुराज्यम् । [ 'कु' अव्यय का प्रकृतिस्वर आद्युदात्त ही होता है । चेल और राज्य का आद्युदात्त नहीं होता है । और न समास का अन्तोदात्त ही होता है । ] ॥ १३० ॥

वर्ग्य आदि उत्तरपद कर्मधारय को छोड़कर तत्पुरुष समास में आद्युदात्त होते हैं । उदा०—वासुदेववर्ग्यः । वासुदेवपक्ष्यः । अर्जुनवर्ग्यः । अर्जुनपक्ष्यः । [ वर्ग और पक्ष में होने वाला—यह अर्थ है । तत्पुरुष में आद्युदात्त हो जाते हैं जब कि यत् प्रत्ययान्त होने से स्वरितान्त हैं । ]

कर्मधारय छोड़कर—इसका क्या फल है ? परमवर्ग्यः । [ यहाँ अन्तोदात्त होता है । ]

वर्ग्य आदि शब्द प्रातिपादिकों में पठित नहीं हैं । [ किसी गण में यत् प्रत्ययान्त वर्ग्य, पक्ष्य ऐसे नहीं पठित हैं । ]

परन्तु दिगादि में—वर्ग, पूण, गण, पक्ष ये शब्द पठित हैं, इन्हीं को यत् प्रत्ययान्त वर्ग्य आदि यहाँ समझ लेना चाहिए ।

[ चूँकि पाणिनि ने वर्ग्यादिगण नहीं पढ़ा है । और दिगादि में वर्ग आदि चार शब्द पढ़े हैं । अतः उन्हीं से यत् प्रत्यय करके वर्ग्य बनाकर यह स्वर चरितार्थ करना चाहिए । ] ॥ १३१ ॥

## २७९५. पुत्रः पुम्भ्यः ॥ १३२ ॥ ( ३८६६ )

**पुत्रशब्दः पुंशब्देभ्य उत्तरस्तत्पुरुषे आद्युदात्तो भवति । कौनटिपुत्रः । दामकपुत्रः । माहिषकपुत्रः ।**

**पुत्र इति किम् ? कौनटिमातुलः । पुम्भ्य इति किम् ? गार्गीपुत्रः । वात्सीपुत्रः ॥**

## २७९६. नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ १३३ ॥ ( ३८६७ )

**आचार्यः = उपाध्यायः । राजा = ईश्वरः । ऋत्विजः = याजकाः । संयुक्ताः = स्त्रीसम्बन्धिनः । श्यालादयः । ज्ञातयः = मातृपितृसम्बन्धिनो बान्धवाः । आचार्याद्याख्येभ्यः परः पुत्रशब्दो नाद्युदात्तो भवति । आख्याग्रहणात्स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणं भवति । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः ।**

### न्यासः

**पुत्रः पुम्भ्यः ॥ कौनटिपुत्र इति ।** पुत्रशब्द उक्तस्वरः । कुनटस्यापत्यं कौनटिः, तेनायमाद्युदात्तः । दामकमाहिषकशब्दावपि कन्नन्तावाद्युदात्तौ ।

**गार्गीपुत्रः, वात्सीपुत्र इति ।** गार्ग्यवात्स्यशब्दाभ्याम् 'यञश्च' इति ङीप् । तेन गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ ।

सर्वत्रास्मिस्तत्पुरुषाधिकारे प्रत्युदाहरणे 'समासस्य' इत्यन्तोदात्तत्वं वेदितव्यम् ॥ १३२ ॥

**नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥** पूर्वेणाचार्यादिभ्योऽपि परस्य पुत्रशब्दस्याद्युदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते । तथा च समासान्तोदात्तत्वमेव भवति । **आख्याग्रहणादित्यादि ।** आख्याग्रहणमाचार्यादिभिः प्रत्येकमभिसम्बध्यते । तथा चाख्याग्रहणेऽनिरस्ते तस्याचार्यादेः पर्यायाणां विशेषाणाञ्च ग्रहणं भवति । **आचार्यपुत्र इति** स्वरूपस्योदाहरणम् । **उपाध्यायपुत्र इति** पर्यायस्य । **शाकटायनपुत्र इति** विशेषस्य । **राजपुत्र इति** स्वरूपस्य । **ईश्वरपुत्र इति** पर्यायस्य । **नन्दपुत्र इति** विशेषस्य । **ऋत्विक्पुत्र इति** स्वरूपस्य । **याजकपुत्र इति** पर्यायस्य । **होतुःपुत्र इति** विशेषस्य । **संयुक्तपुत्र इति** स्वरूपस्य । **सम्बन्धिपुत्र इति** पर्यायस्य । **स्यालपुत्र इति** विशेषस्य । **ज्ञातिपुत्र इति** स्वरूपस्य । **भ्रातुष्पुत्र इति** विशेषस्य । 'कस्कादिषु च' इति षत्वम् । तत्राचार्यशब्दः कृत्स्वरेणान्तस्वरितः । स हि चरेराङ्पूर्वस्य ण्यति व्युत्पाद्यते । उपाध्यायशब्दोऽन्तोदात्तस्थाथादिस्वरेण, स 'इङश्च' इति

### पदमञ्जरी

**पुत्रः पुम्भ्यः ॥ कुनटस्यापत्यं कौनटिः । दामकमाहिषकशब्दौ** 'संज्ञायां कन्' इति कन्नन्तौ ॥ १३२ ॥

**नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ संयुक्ताः स्त्रीसम्बन्धिनः श्यालादय इति ।** योगरूढिरेषा तेषाम्,

### भावबोधिनी

पुंल्लिङ्गशब्दों से उत्तरवर्त्ती पुत्रशब्द तत्पुरुष समास में आद्युदात्त होता है। उदा०—कौनटिपुत्रः। दामकपुत्रः। माहिषकपुत्रः। [ पुत्र शब्द आद्युदात्त होता है। ]

पुत्र—इसका क्या फल है ? कौनटिमातुलः। [ पुत्र न होने से समास का अन्तोदात्त होता है। ]

पुंल्लिङ्ग से परे—इसका क्या फल है ? गार्गीपुत्रः। वात्सीपुत्रः। [ यहाँ स्त्रीलिङ्ग से परे होने सेआद्युदात्त न होकर समास का अन्तोदात्त होता हैं। ] ॥ १३२ ॥

आचार्य=उपाध्याय पढ़ानेवाला। राजा=ईश्वर। ऋत्विक्=याजक। संयुक्त=स्त्री (=पत्नी) के सम्बन्धी साले आदि। ज्ञाति=माता और पिता के सम्बन्धी बान्धव। आचार्य आदि के वाचक शब्दों से परे पुत्र शब्द आद्युदात्त नहीं होता है। 'आख्या' के ग्रहण से इन शब्दों के स्वरूप का पर्यायों का और विशेषों का ग्रहण होता है। उदा०—आचार्यपुत्रः।

राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतुःपुत्रः । भ्रातुष्पुत्रः । 'ऋतो विद्यायोनि-सम्बन्धेभ्यः' ( ६.३.२३ ) इति षष्ठ्या अलुक् । संयुक्तपुत्रः । सम्बन्धिपुत्रः । श्यालपुत्रः । ज्ञातिपुत्रः । पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्वमेव भवति ॥

## २७९७. चूर्णादीन्यप्राणिषष्ठ्याः ॥ १३४ ॥ ( ३८६८ )

'उत्तरपदादिः' इति वर्त्तते, 'तत्पुरुष' इति च । चूर्णादीन्युत्तरपदानि अप्राणिवाचिनः षष्ठ्यन्तात्पराणि

**न्यासः**

घञन्तो व्युत्पाद्यते । राजशब्द आद्युदात्तः; कनिन्प्रत्ययान्तत्वात् । ईश्वरशब्दोऽन्तोदात्तः; 'स्थेशभास' इत्यादिना वरच्प्रत्ययान्तत्वात् । नन्दशब्दोप्यन्तोदात्तः; अजन्तत्वात् । ऋत्विग्शब्दः 'ऋत्विग्दधृक्' इत्यादिना क्विन्प्रत्ययान्तः । कृत्स्वरेणान्तोदात्तः । याजकशब्दो ण्वुलन्तः, तेन लित्स्वरेणाद्युदात्तः । होतृशब्दस्तृन्नन्तत्वादाद्युदात्तः । संयुक्तशब्दः 'गतिरनन्तरः' इत्याद्युदात्तः 'स्यल वितर्के[1]'—अस्माच्चुरादिणिजन्तात पचाद्यचि स्यालशब्दोऽन्तोदात्तः । 'ज्ञा' इत्यस्मात् 'क्तिच्क्तौ च संज्ञायाम्' इति ज्ञातिशब्दोऽन्तोदात्त 'तृन्स्तृचौ शंसिक्षदादिभ्यः' इति प्रकृत्य भ्रातृशब्द-स्तृन्नन्तो व्युत्पाद्यते, तेनाद्युदात्तः । संयुक्तशब्दोऽयमस्त्येव रूढिशब्दो यो विवाहकृतेन सम्बन्धेन स्यालश्वशुरादिषु वर्तते, अस्ति क्रियाशब्दो यः सर्वत्र केनचित् सम्बन्धेन वर्तते; तत्रेह रूढिशब्दस्य ग्रहणम् । कुत एतत् ? आचार्या-दीनां पृथग्ग्रहणात् । यदि हि क्रियाशब्दस्य ग्रहणं स्यात्, तदा संयुक्तग्रहणेनेव निषिद्धत्वादाचार्यादीनां पृथग्ग्रहणं न कुर्यात् । तेऽपि हि विद्यादिकृतेन सम्बन्धेन संयुक्ता भवन्त्येव । तस्माद्रूढिशब्दस्य ग्रहणम् । तेन क्रियाशब्दो यः संयुक्तशब्दस्तस्मात् प्रतिषेधो न भवति ॥ १३३ ॥

**चूर्णादीन्यप्राणिषष्ठ्याः** ॥ 'चूरी दाहे', अस्मान्निष्ठा, तेन चूर्णमन्तोदात्तम् । करिणः पातीति 'आतोऽनुपसर्गे कः' पकारस्य पक्षे वकारो निपात्यते—करिपः, करिवः । कृत्स्वरेण थाथादिस्वरेण वान्तोदात्तः । 'महेरिनण् च'

**पदमञ्जरी**

यथा सम्बन्धिशब्दः । ज्ञातयो मातापितृसम्बन्धेन बान्धवा इति । पितृसम्बन्धिष्वेव तु ज्ञातिशब्दो लोके प्रसिद्धः । आख्याग्रहणमाचार्यादिभिः प्रत्येकमभिसम्बध्यते । भ्रातुष्पुत्र इति । कस्कादिषु पाठात् षत्वम् ॥ १३३ ॥

**चूर्णादीन्यप्राणिषष्ठ्याः** ॥ 'चूरी दाहे' ( धा० पा० ११५९ ) अस्मात् क्तः, चूर्णम् । 'वा[2] गतिगन्धनयोः' ( धा० पा० १०५० ), 'पा रक्षणे' ( धा० पा० १०५६ ) आभ्यां करिशब्द उपपदे 'आतोऽनुपसर्गे कः', करिवम्, करिपम्[2] । महेरिनण् ( द० उ० ५-१९ ), बहुलवचनात् शकेरपि भवति—शाकिनम्, 'शकादिभ्योऽटच्'

**भावबोधिनी**

उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः । ऋत्विक्पुत्र । याजकपुत्रः । होतुः पुत्रः । भ्रातुष्पुत्रः । इनमें "ऋतो विद्यायोनिसम्बन्धेभ्यः" ( ६।३।२३ ) सूत्र से षष्ठी का अलुक् होता है । संयुक्तपुत्रः सम्बन्धिपुत्रः श्यालपुत्रः । ज्ञातिपुत्रः । पुत्रस्वर = आद्युदात्त का प्रतिषेध हो जाने पर [ इन सभी में ] समास का अन्त उदात्तत्व ही होता है ।

[ इनमें आचार्य, राजा, ऋत्विक्—इनके ( १ ) स्वरूप, ( २ ) पर्याय और ( ३ ) विशेष—तीनों उदाहरण दिये गये हैं । संयुक्त और ज्ञाति में 'विशेष' के उदाहरण नहीं दिये गये हैं । ] ॥ १३३ ॥

'उत्तरपदादिः' और 'तत्पुरुषे' इनकी अनुवृत्ति होती है । चूर्ण आदि उत्तरपद जो अप्राणिवाचक से उत्तरपद हैं,

---

१. सम्प्रति समुपलभ्यमाने धातुपाठे धातोरस्यानुपलभ्यमानत्वाद् निरुक्तिरियं चिन्त्या ।
वस्तुतस्तु 'अत्र 'स्यम वितर्केऽन्तोदात्तः' इति पठितव्यम् । अत्र च प्रकाशितन्यासे 'पृषोदरादित्वान्मस्य लः' इत्यंशो भ्रष्टः । व्युत्पत्तिश्चेयं क्षीरस्वामिसम्मतेति प्राह रामाश्रमोऽमरकोष ( २।६।३२ ) टीकायाम्, संकेतश्चोपलभ्यते क्षीर-स्वामिकृतायाममरटीकायामपीति केचित् ।

२–२. "'पा गतिगन्धनयोः', करिणं वातीति करिवः । 'पा रक्षणे', अस्मादपि 'आतोऽनुपसर्गे कः', करिप" इति पाठा० ।

**तत्पुरुषे समासे आद्युदात्तानि भवन्ति । मुद्गचूर्णम् । मसूरचूर्णम् ।**

**अप्राणिषष्ठ्या इति किम् ? मत्स्यचूर्णम् । षष्ठ्या इति किम् ? परमचूर्णम् ।**

**चूर्ण । करिप । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम । दलप । चमसी । चक्कन । चौल । चूर्णादिः ।**

**'चूर्णादीन्यप्राण्युपग्रहात्' इति सूत्रस्य पाठान्तरम् । तत्र 'उपग्रह' इति षष्ठ्यन्तमेव पूर्वाचार्योपचारेण गृह्यते ॥**

**न्यासः**

बहुलवचनाच्छकेरपि भवति, **शाकिनम्**, प्रत्ययस्वरेण मध्योदात्तम् । 'शकादिभ्योऽटच्' शकटम् । तद्वहतीति शकटादण् **शाकटम्** । प्रत्ययस्वरेणान्तोदात्तः । द्राग् द्रुतं क्षीयत इति **द्राक्षा**, पृषोदरादित्वात् । अन्तोदात्तोऽयं शब्दः । 'तुस ह्रस ह्लस रस शब्दे', ततो बहुवचनाद् 'हसिमृग्रिणवामिदमिलूपूधुर्वीभ्यस्तन्' इति तन्, निपातनादीर्घश्च । तूस्तमाद्युदात्तम् । कुत्सितं दुनोतीति 'क्विब् वचिप्रच्छि' इत्यादौ सूत्रे क्विबिति योगविभागः । 'टुदु उपतापे' इत्यस्मादपि क्विप्, बहुलवचनादनित्यत्वाद्वागमशासनस्य तुगभावः, पूर्वपदस्य च बहुलवचनादेव मुम्—कुन्दु, तन्मिमीत इति 'माङ्माने' इत्यस्मात् कः, कुन्दुमोऽन्तोदात्तः । 'उषिकुटिदलिकचिखजिभ्यः कपन्' तेन दलप आद्युदात्तः । 'अत्यविचमितमिनमि इत्यादिना सच्- चमसः, ततो जातिलक्षणो ङीष् चमसी । 'चक तृप्तौ' इत्यस्मात् क्विप्, चक् । 'कनी दीप्तिकान्तिगतिषु' तस्मादच्, कनः । चक्कनः । चोलस्यापत्यं **चौलः**, **'द्व्यच्मगध'** इत्यादिनाण् । एते चूर्णादयः । **मुद्गचूर्णमिति** । 'मुदि ग्रोर्गग्गौ' इति मुद्गोऽन्तोदात्तः । **मसूरचूर्णमिति** । 'मसेरूरन्' मसूर आद्युदात्तः । **मत्स्यचूर्णमिति** । मत्स्यः प्रातिपदिकस्वरेणान्तोदात्त. ।

**तत्रोपग्रह इति षष्ठ्यन्तमेवेति** । अनेन तुल्यार्थतां सूत्रयोर्दर्शयति । कथं पुनरुपग्रहः षष्ठ्यन्तमेव गृह्यते ? इत्याह—**पूर्वाचार्योपचारेणेति** । पूर्वाचार्या हि षष्ठ्यन्तमुहग्रह इत्येवमुपचरन्ति स्म । तेनेह पूर्वाचार्य्योपचारेण **हेतुना** षष्ठ्यन्तमेवोपग्रह इति गृह्यते । समासस्वरापवादो योगः । एवमुत्तरेऽपि त्रयः ॥ १३४ ॥

**पदमञ्जरी**

**शकटम्,** तद्वहतीति शकटादण् शाकटम् । द्राक् क्षरति द्राक्षा, वृषोदरादिः । 'तुस शब्दे' ( धा० पा० ७१० ) ततो बहुलवचनात् क्तः, उपधादीर्घत्वं च । कुं दुनोति, कुत्सितं वा दुनोतीति, क्विप्, अस्मादेव निपातनात्तुगभावः, पूर्वपदस्य च मुम्—कुन्दुं मिमीते कुन्दुमः । 'दलेः कपन्' ( द० उ० ७.९ ) दलपः । 'चमेरसच् चमसः' ( द० उ० ९.४४ ) ततो जातिलक्षणो ङीष्—चमसी । 'कनी दीप्तिकान्तिगतिषु' ( धा० पा० ४६० )—अस्मात् पचाद्यच्, अस्मादेव निपातनाद् द्विर्वचनम्—चक्कनः । चक्वन इत्यन्ये पठन्ति, तत्रापि निपातनादेव रूपसिद्धिः । चोलस्यापत्यम् 'द्व्यचः' इत्यण्—चौलः । एते चूर्णादयः ।

**भावबोधिनी**

वे तत्पुरुष समास में आद्युदात्त होते हैं । उदा०—मुद्गचूर्णम् । मसूरचूर्णम् । [ मुद्ग = मूँग, मसूर दालों का चूर्ण । ये प्राणिवाचक नहीं है । 'चूर्ण' आद्युदात्त हो जाता है । ]

अप्राणि·षष्ठी = प्राणिभिन्न षष्ठ्यन्त से परे—इसका क्या फल है ? मत्स्यचूर्णम् । [ यहाँ प्राणी से परे है । अतः समासान्त उदात्त होता है । ]

षष्ठ्यन्त से परे—इसका क्या फल है ? परमचूर्णम् । [ यहाँ प्रथमान्त से परे है । ]

चूर्ण । करिप । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । दलप । चमसी । चक्कन । चौल । [ ये चूर्णादि हैं । ]

'चूर्णादीन्यप्राण्युपग्रहात्' यह सूत्र का पाठान्तर है । 'उपग्रह' यह पूर्ववर्त्ती आचार्यों के व्यवहार से षष्ठ्यन्त ही लिया जाता है । [ अतः पाठभेद में भी कोई अन्तर नहीं आता है । ] ॥ १३४ ॥

## २७९८. षट् च काण्डादीनि ॥ १३५ ॥ ( ३८६९ )

षट् पूर्वोक्तानि काण्डादीन्युत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तानि भवन्ति। 'काण्डं गर्हायाम्' (६।२।१२६) इत्युक्तम्, अगर्हायामपि भवति—दर्भकाण्डम्, शरकाण्डम्। 'चीरमुपमानम्' (६.२.१२७) इत्युक्तम्, अनुपमानमपि भवति—दर्भचीरम्, कुशचीरम्। 'पललसूपशाकं मिश्रे' (२.१.१२८) इत्युक्तम्, अमिश्रेऽपि भवति—तिलपललम्, मुद्गसूपः, मूलकशाकम्। 'कूलं संज्ञायाम्' (६.२.१२९) इत्युक्तम्, असंज्ञायामपि भवति—नदीकूलम्, समुद्रकूलम्।

षडिति किम्? राजसूदः[1] ॥

**न्यासः**

षट् च काण्डादीनि ॥ 'चेलखेटकटुककाण्डम्' इत्यादिषु चतुर्षु योगेषु सन्निविष्टानि काण्डादीनि षट् गृह्यन्ते। यद्येवं तैरेव योगैरेषामाद्युदात्तत्वं सिद्धम्, तत् किमर्थमिदम्? यत्र तैर्विहितं ततोऽन्यत्रापि यथा स्यात्, प्राणिषष्ठ्याश्च मा भूदित्येवमर्थञ्च। **दर्भकाण्डमिति**। 'दृदलिभ्यां भः' इति भप्रत्ययान्तो दर्भशब्दोऽन्तोदात्तः। 'तृणधान्यानाञ्च द्व्यषाम्' इति वा। **शरकाण्डमिति**। शरशब्दोऽप्यनन्तरेणैव 'द्व्यषाम्' इत्याद्युदात्तः एवं कुशशब्दोऽपि। तथा तिलशब्दोऽपि। पललमूलकशब्दावुक्तस्वरौ। नदडिति पचादिषु पठ्यते, तेन टित्वान्नदशब्दान् ङीप्, 'यस्येति च' इत्यकारलोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वम्। तेन नदीशब्दोऽन्तोदात्तः। 'पाटलापालङ्काम्बासागरार्थानाम्' इति फिषा समुद्रशब्दोऽन्तोदात्तः। **राजसूद इति**। सूदशब्दः षड्भ्यः परः पठ्यते। तेनात्र समासान्तोदात्तत्वमेव भवति। सर्वे च ते दर्भकाण्डादयः षष्ठीसमासाः ॥ १३५ ॥

**पदमञ्जरी**

**पूर्वाचार्योपचारेणेति**। उपचारः = प्रयोगः ॥ १३४ ॥ १३५ ॥

**भावबोधिनी**

अप्राणिषष्ठी = प्राणिवाचक से भिन्न से उत्तरपद जो पूर्वोक्त काण्ड आदि ( काण्ड, चीर, पलल, सूप, शाक, कूल ) छः शब्द हैं वे आद्युदात्त होते हैं। 'काण्ड गर्हा में आद्युदात्त होता है' ऐसा कहा गया है' ( ६।२।१२६ ) अब अगर्हा में भी उत्तरपद का आदि उदात्त होता है—कर्मकाण्डम्, शरकाण्डम्। 'चीर उपमान में आद्युदात्त होता है' ( ६।२।१२७ ) ऐसा कहा गया है, अनुपमान = उपमानभिन्न भी उत्तरपद आदि उदात्त होता है—दर्भचीरम्; कुशचीरम्। 'पलल, सूप, शाक ये मिश्रवाची तत्पुरुष में आद्युदात्त होते हैं' ( ६।२।१२८ ) ऐसा कहा गया है, अमिश्र में भी उत्तरपद आद्युदात्त होते हैं—तिलपललम्। [ तत्पुरुष करने के लिये तिल और पलल = मांस में किस विभक्ति का प्रयोग किया जाय, सन्दिग्ध है। यहाँ 'तिलसहितं पललम्' आदि किसी प्रकार मध्यम-पदलोपी तत्पुरुष मानना चाहिए। काशिका और सिद्धान्तकौमुदी दोनों में यही उदाहरण होने से इसकी अशुद्धता मानना उचित नहीं है। ] मुद्गसूपः। मूलकशाकम्। [ मूँग की दाल। मूली का शाक ] 'कूल संज्ञा में आद्युदात्त होता है' ( ६।२।१२९ ) ऐसा कहा गया है, असंज्ञा में भी होता है—नदीकूलम्, समुद्रकूलम्।

छः का ही आदि उदात्त होता है—इसका क्या फल है? राजसूदः। [ सूद उक्त छः में नहीं है। ] [ अप्राणिषष्ठ्यन्त से परे—इसका क्या फल है—देवदत्तकाण्डः। यहाँ प्राणी देवदत्त से परे है। अतः समासान्त उदात्त होता है। ] ॥ १३५ ॥

---

१. 'अप्राणिषष्ठ्या इति किम्? देवदत्तकाण्डः'—इत्यधिकं पुस्तकान्तरे।

## २७९९. कुण्डं वनम् ॥ १३६ ॥ ( ३८७० )

**'कुण्ड'—शब्दोऽत्र कुण्डसादृश्येन वने वर्त्तते । 'कुण्डम्' इत्येतदुत्तरपदं वनवाचि तत्पुरुषे समासे आद्युदात्तं भवति । दर्भकुण्डम् । शरकुण्डम् ।**

**वनमिति किम् ? मृत्कुण्डम् ॥**

## २८००. प्रकृत्या भगालम् ॥ १३७ ॥ ( ३८७१ )

**भगालवाच्युत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति । कुम्भीभगालम् । कुम्भीकपालम् । कुम्भीनदालम् । भगालादयो मध्योदात्ताः ।**

**'प्रकृत्या' इत्येतदधिकृतम् 'अन्तः' ( ६.२.१४३ ) इति यावद्वेदितव्यम् ॥**

**न्यासः**

**कुण्डं वनम् ॥ कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्तत इति ।** यथा कुण्डं कस्यचिदुदकादेराश्रयस्तथा वनमपि । अतः कुण्डसादृश्येनात्र कुण्डशब्दो वने वर्तते । भवति हि सादृश्येन ताच्छब्द्यं यथा—अग्निर्माणवक इति । **मृत्कुण्डमिति ।** अत्र कुण्ड आकारविशेषो मृद्विकारे वर्तते, न वने । तेन समासान्तोदात्तत्वमेव भवति ॥ १३६ ॥

**प्रकृत्या भगालम् ॥** भगालमित्यर्थग्रहणम्; अर्थप्रधानत्वान्निर्देशस्य । अर्थप्रधाने हि निर्देशे स्वरूपग्रहणं न भवतीत्युक्तम् । अर्थग्रहणे च सति तद्वाचिनामेतत् कार्यं विज्ञायते । अत एवाह—**भगालवाचीत्यादि । कुम्भीभगालमिति ।** कुम्भीशब्दः 'जातेरस्त्रीविषयादयोपधात्' इति ङीषन्तत्वादन्तोदात्तः । **भगालादयो मध्योदात्ता इति ।** 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति फिषेषामाकारस्योदात्तत्वविधानात् ॥ १३७ ॥

**पदमञ्जरी**

**कुण्डं वनम् ॥ कुण्डशब्दोऽत्रेत्यादि ।**[1] भाजनविशेषाभिधायी कुण्डशब्दस्तस्य नान्तरेण सादृश्यं ततोऽन्यत्र वने वृत्तिः सम्भवतीति भावः । अन्ये तु वनेऽपि मुख्य एव कुण्डशब्द इत्याहुः । तत्र वनशब्देन विशेषणेन भाजनविशेषवाची निवर्त्यते, समुदायवाची चात्र वनशब्दः, न तूदकवाची, आह हि—कुण्डाद्युदात्तत्वे तत्समुदायग्रहणमिति, तच्छब्देन पूर्वपदार्थः परामृश्यते । अपर आह—'वनसमुदाये इति वक्तव्यम्' न तु वने' इति, तेन शरवणसमुदायः शरकुण्डशब्देनोच्यत इति ॥ १३६ ॥

**प्रकृत्या भगालम् ॥** भगालमित्यर्थग्रहणमित्याह—**भगालवाचीति ।** अत्र च व्याख्यानमेव शरणम् । **भगालादयो मध्योदात्ता इति ।** 'लघावन्ते द्वयोश्च बह्वषो गुरुः' ( फि० सू० २.१२ ) इति वचनात् ॥ १३७ ॥

**भावबोधिनी**

'कुण्ड' शब्द यहाँ कुण्ड के सादृश्य से वन अर्थ में विद्यमान है । 'कुण्ड' यह उत्तरपद वनवाची है तो तत्पुरुष समास में आद्युदात्त होता है । उदा०—दर्भकुण्डम् । शरकुण्डम् । [ जिस प्रकार कुण्ड=कूड़ी जल, दूध आदि की आधार होती है उसी प्रकार वन भी दर्भ, कुशादि का आधार है इसलिये कुण्ड वनवाचक हो जाता है । ]

वन—इसका क्या फल है ? मृत्कुण्डम् । [ मिट्टी का कुण्ड । यह वनवाचक नहीं है । समास का अन्तोदात्त होता है । ] ॥ १३६ ॥

भगालवाचक उत्तरपद तत्पुरुष समास में प्रकृतिस्वरवाला होता है । उदा०—कुम्भीभगालम् । कुम्भीकपालम् । कुम्भीनदालम् । [ भगाल से भगालवाचक लिये जाते हैं—इसमें व्याख्यान ही आधार है भगाल=कपाल है । ] ये भगाल आदि मध्योदात्त हैं ।

'अन्तः'' ( ६।२।१४३ ) इस सूत्र तक 'प्रकृत्या' इस का अधिकार समझना चाहिए ॥ १३७ ॥

---

१. ''जनविशेषाभिधायी''—इति प्रकाशितपाठोऽशुद्धः । त्रिपाठी ।

## २८०१. शितेर्नित्याबह्वज् बहुव्रीहावभसत् ॥ १३८ ॥ ( ३८७२ )

**शितेरुत्तरपदं नित्यं यदबह्वज् भसच्छब्दवर्जितं बहुव्रीहौ समासे तत्प्रकृतिस्वरं भवति । शितिपादः । शित्यंसः । शित्योष्ठः ( तै० सं० ५.६ १४.१ ) । पादशब्दो वृषादित्वादाद्युदात्तः । अंसौष्ठशब्दौ च प्रत्ययस्य नित्वादाद्युदात्तौ ।**

**शितेरिति किम् ? दर्शनीयपादः । नित्यग्रहणं किम् ? शितिंककुत् ( तै० सं० ५.६.१४.१ ) । ककुदस्यावस्थायां लोपो विधीयते । तत्रावस्थाया अन्यत्र शितिंककुद इति बह्वजुत्तरपदं भवतीति तेन न नित्याबह्वच् । अबह्वजिति किम् ? शितिंललाटः । बहुव्रीहाविति किम् ? शितेः पादः शितिपादः । अभसदिति किम् ? शितिंभसत् ( तै० सं० ५.७.१४.१ ) । शितिशब्द आद्युदात्तः ।**

### न्यासः

**शितेर्नित्याबह्वज् बहुव्रीहावभसत् ॥ शितिपाद इति ।** शितिशब्दः 'वर्णानां तणतिनितान्तानाम्' इति फिषाद्युदात्त । **अंसौष्ठशब्दावित्यादि ।** 'अम रोगे' इत्यस्माद् 'अमः सन्' इति सन्प्रत्यान्तोंऽसशब्दो व्युत्पाद्यते । ओष्ठशब्दोऽपि 'उषिकुषिगार्त्तिभ्यस्थन्' इति थन्प्रत्ययान्तः । तेनैतौ प्रत्ययस्य नित्वादाद्युदात्तौ ।

**दर्शनीयपाद इति ।** दर्शनीयशब्दोऽनीयर्-प्रत्ययान्तः । तेन 'उपोत्तमं रिति' इति मध्योदात्तः । ततोऽत्र पूर्वपदस्य प्रकृतिस्वर एव भवति । एवमुत्तरेष्वपि प्रत्युदाहरणेषु । कथं पुनः ककुदशब्दो नित्यं बह्वज् न भवति ? इत्याह—**ककुदस्यावस्थायां लोप इत्यादि । शितिललाट इति ।** 'लल ईप्सायाम्', अस्माद् 'उणादयो बहुलम्' इत्याटप्रत्ययः, तेन ललाटशब्दो मध्योदात्तः । **शितिपाद इति ।** शितेः पाद इत्यत्र समासस्वर एव भवति ।

### पदमञ्जरी

**शितेर्नित्याबह्वज्बबहुव्रीहावभसत् ॥ अंसौष्ठशब्दावित्यादि ।** 'अम् 'रोगे' ( धा० पा० १७२० ) 'अमेः सन्' अंसः' ( द० उ० ९.२८ ), 'उष दाहे' ( धा० पा० ६९६ ), [1]'उषिकुषिगार्त्तिभभ्यस्थन्' ( द० उ० ६.२९ ), ओष्ठः । दर्शनीयशब्दोऽनीयर्-प्रत्ययान्तो मध्योदात्तः । शितिशब्दः 'वर्णानां तणविनितान्तानाम्'

### भावबोधिनी

शिति शब्द से उत्तरवर्त्ती जो नित्य अबह्वच्, भसत् शब्द को छोड़कर, वह बहुव्रीहि समास में प्रकृतिस्वरवाला होता है । उदा०—शितिपादः । शित्यंसः । शित्योष्ठः । पाद शब्द वृषादि ( ६।१।२०७ ) होने से आद्युदात्त है । अंस और ओष्ठ शब्द भी प्रत्यय ( सन्, थन् ) के नित् होने से आद्युदात्त हैं । [ प्रकृतिस्वर से यही स्वर रहता है समास का अन्तोदात्त नहीं होता है । ]

शिति से परे—इसका फल है ? दर्शनीयपादः । [ यहाँ शिति से परे नहीं है । अतः यह स्वर न होकर पूर्वपद का प्रकृतिस्वर होता है । अनीयर् प्रत्ययान्त दर्शनीय में 'उपोत्तमं रिति' से मध्योदात्त होता है । ]

नित्य का ग्रहण किस लिये है—शितिककुत् । ककुद का अवस्था अर्थ में लोप किया जाता है । इस में अवस्था से भिन्न में 'शितिपादः' यह बह्वच् ( बहुत अचों वाला ) उत्तरपद होता है, इस कारण नित्य अबह्वच् नहीं है ।

अबह्वच् = बहुत अचों वाला नहीं—इसका क्या फल है ? शितिललाटः । [ बहुत अचों वाला ही ललाट उत्तरपद है । ] बहुव्रीहि में—इसका क्या फल है ? शितेः पादः—शितिपादः । [ यहाँ षष्ठी तत्पुरुष होने से समास का अन्तोदात्त होता है । ]

भसत् को छोड़ कर—इसका क्या फल ? शितिभसत् । [ यहाँ भसत् शब्द ही है । अतः पूर्वपद का प्रकृतिस्वर होता है । पूर्वपद ] शिति शब्द आद्युदात्त है ।

---

१. ०र्गार्ति० इति उपादिपाठः ।

पूर्वपदप्रकृतिस्वरापवादो योगः ॥

## २८०२. गतिकारकोपपदात्कृत् ॥ १३९ ॥ ( ३८७३ )

**'तत्पुरुषे' इति वर्त्तते, न 'बहुव्रीहौ' इति। गतेः कारकादुपपदाच्च कृदन्तमुत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति। प्रकारकः। प्रकरणम्। प्रहारकः। प्रहरणम्। कारकात्— इध्मप्रव्रश्चनः। पलाशशातनः। श्मश्रुकल्पनः। उपपदात्—ईषत्करः। दुष्करः। सुकरः। सर्वत्रैवात्र लित्स्वरः।**

### न्यासः

**शितिभसदिति** 'शॄद्भसोऽदिः' इति भसच्छब्दो व्युत्पाद्यते। ततोऽयमन्तोदात्तः॥ १३८ ॥

**गतिकारकोपपदात् कृत्॥ प्रकारकः, प्रहारक इति।** ण्वुल्। **प्रकरणमित्यादिषु** ल्युट्। **ईषत्कर इत्यादिषु** 'ईषद्दुःसुषु' इति खल्। यदत्राव्ययपूर्वपदं तत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना प्राप्तेऽव्ययस्वरे तदपवादार्थवचनम्। अन्यत्र तु समासस्वरे प्राप्ते। प्रकारक इत्यादौ तु 'कुगतिप्रादयः' इति समासः। **कारकादिति**। षष्ठी तु 'कर्तृकर्मणोः कृति' इति कर्मणि करके वेदितव्या। इध्मादयो हि व्रश्चनक्रियाया व्याप्तुमिष्टतमत्वात् कर्मभावमनुभवन्ति। **ईषत्कर इत्यादौ** तु 'उपपदमतिङ्' इति समासः। तत्र प्रशब्दः 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तः। **इध्मशब्दो** हि 'इषियुधीन्धि' इत्यादिना मक्प्रत्ययान्तत्वादन्तोदात्तः। 'शो तनूकरणे', पलं श्यतीति 'आतोऽनुपसर्गे कः'। **पलाशः** कृत्स्वरेण थाथादिस्वरेण वान्तोदात्तः। शदेर्णिजन्तस्य 'शदेरगतौ तः' इति तकारे कृते ल्युटि **शातन** इति भवति। **'श्मनि श्रयतेर्डुन्'** इति नित्स्वरेण श्मश्रुशब्द आद्युदात्तः। 'कृपू सामर्थ्ये' इत्यस्य' ल्युटि 'कृपो रो लः' इति लत्वे कृते **कल्पन** इति भवति। ईषच्छब्दोऽन्तोदात्तः; स्वरादिषु तथाभूतेषु तथाभूतस्यैव पाठात्। सुदुरावाद्युदात्तौ; प्रादिषु तथाभूतयोः पाठात्। **सर्वत्रैवावात्र लित्स्वर इति**। स पुनः प्रत्ययात् पूर्वस्योदात्तत्वम्।

### पदमञ्जरी

( फि० सू० २.२१० ) इत्याद्युदात्तः॥ १३८ ॥

**गतिकारकोपपदात् कृत्॥ प्रकारक इत्यादौ** 'कुगतिप्रादयः' इति समासः। **इध्मप्रव्रश्चनादौ** कर्मणि षष्ठ्या समासः, करणे ल्युट्, इध्मं प्रवृश्च्यते येन सोऽत्र इध्मप्रव्रश्चनः, 'शद्लृ शातने' ( धा० पा० ८५५ ), णिच्, 'शदेरगतौ तः'। पलाशानि शात्यन्ते येन स दण्डः **पलाशशातनः**। श्मश्रु कल्प्यते येन स क्षुरादिः **श्मश्रुकल्पनः**। **'कृपू सामर्थ्ये'** ( धा० पा० ७६२ ) ण्यन्तः केवलो वा। **ईषत्कर इति**। एतदुपपदग्रहणस्य साक्षादुदाहरणम्। सुदुरोस्तु **गतित्वादपि सिद्धम्, स्तम्बेरमादौ च कारकत्वात्**। उच्चैःकृत्य, उच्चैःकारमित्यादिकमप्युपपदग्रहणस्यैवोदाहरणम्।

### भावबोधिनी

यह [ बहुव्रीहि में ] पूर्वपद के प्रकृतिस्वर का अपवाद है। ] ॥ १३८ ॥

'तत्पुरुषे' इसकी अनुवृत्ति होती है 'बहुव्रीहौ' इसकी नहीं। गति, कारक और उपपद से परे कृदन्त उत्तरपद तत्पुरुष समास में प्रकृतिस्वर वाला होता है। क्रमशः उदा०—प्रकारकः। प्रकरणम्। प्रहारकः। प्रहरणम्। [ इन में 'प्र' की गति संज्ञा होती है। ण्वुल् = अक, ल्युट् = अन ये लित् हैं अतः लित् स्वर होता है। "लिति" ६।१।१९३ से प्रत्यय से पूर्व उदात्त होता है। उक्त उदाहरणों में 'ह, क, हा, का' उदात्त होते हैं। (२) कारक से परे–उदा०—इध्मप्रव्रश्चनः। पलाशशातनः। श्मश्रुकल्पनः। [ इनमें पूर्वपदों में कर्म में षष्ठी है। उत्तर पदों में करण में ल्युट् = अन है। अतः कारक से परे उत्तरपद का प्रकृतिस्वर = प्रत्यय से पूर्व उदात्त होता है। ] (३) उपपद से परे उदा०—ईषत्करः। दुष्करः। सुकरः। [ इनमें ईषद्, दुस्, सु को उपपद मान कर कृच्छ्रादि अर्थों में खल् प्रत्यय होता है। ] सभी में लित् स्वर ( = प्रत्यय से पूर्व का उदात्त स्वर ) होता है। [ यहाँ समास का अन्तोदात्त नहीं होता है। ]

**गतिकारकोपपदादिति किम् ? देवदत्तस्य कारको देवदत्तकारकः । देवदत्तस्येति शेषलक्षणा षष्ठी । कृद्ग्रहणं विस्पष्टार्थम् । प्रपचतितराम्, प्रपचतितमाम्—इत्यत्र तरबाद्यन्तेन समासे कृते पश्चादाम्,**

**न्यासः**

**देवदत्तस्येति शेषलक्षणा षष्ठीति ।** कर्मणि षष्ठीत्वं निराकरोति । कर्मषष्ठ्यां ह्यस्यां कारकमेव देवदत्तः स्यात्, तथा च प्रत्युदाहरणं नोपपद्यते ।

अथ कारकग्रहणं किमर्थम्, निर्गतः कौशाम्ब्या निष्कोशाम्बिरित्यत्र मा भूदिति चेत् ? नैतदस्ति; तथा हि—यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति, न हि कौशम्बीशब्दः क्रियावाची, तत् कुतस्तं प्रति निसोऽत्र गतिसंज्ञा ? इत्यत आह—**कृद्ग्रहणं विस्पष्टार्थमिति ।** यदि तर्हि कृद्ग्रहणं क्रियते, प्रपचतितरामित्यत्र प्रकृतिस्वरो न प्राप्नोति । ततश्च समासस्वरं बाधित्वाव्ययस्वर एव स्यात् ? इत्यत आह—**प्रपचतितरामित्यादि ।** अत्र हि पचतिशब्दादतिशयविवक्षायां तरप्तमपौ । ततस्तरबाद्यन्ते 'कुगतिप्रादयः' इति प्रशब्दस्य समासः । समासे तु कृते पूर्वपदस्य 'तत्पुरुषे तुल्यार्थ' इत्यादिना प्रकृतिस्वरः । पश्चात् 'किमेत्तिङव्यय' इत्यादिनामुः । आमन्तस्य च 'आद्युदात्तश्च' इति प्रत्ययस्वरः प्राप्तः, सोऽव्ययस्वरे सति सतिशिष्टः, सितिशिष्टस्य च बलीयस्त्वमुक्तम् । तेन यद्यप्यनेनामन्तस्य कृद्ग्रहणे क्रियमाणे सति प्रकृतिस्वरो भवति, तथाप्याम्स्वरो भवत्येव; तस्य सतिशिष्टत्वात् । अथ कथं तरबाद्यन्तेन समासः ? कथञ्च न स्यात् ? 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इति वचनात् ? नैष दोषः; अत्र हि द्वे दर्शने गतिकारकोपदात् कृद्भिरेव समासो भवति, स च प्राक् सुबुत्पत्ते-रित्येकं दर्शनम्; गतिकारकोपपदानामविशेषेण समासो भवति, कृद्भिस्तु प्राक् सुबुत्पत्तेरिति द्वितीयम् । तत्र

**पदमञ्जरी**

**देवदत्तस्येति शेषलक्षणा षष्ठीति ।** न कर्मलक्षणा, तथा हि सति कारकमेव देवदत्तः स्यात्, 'तृजकाभ्यां कर्तरि च' इति समासप्रतिषेधप्रसङ्गश्च ।

अथ कृद्ग्रहणं किमर्थम् ? निर्गतः कौशाम्ब्याः निष्कौशाम्बिरित्यत्र मा भूत् । नैतदस्वि प्रयोजनम्, यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति, न च कौशाम्बीशब्दं प्रति क्रियायोगः, कारकमपि क्रियाया एव सम्भवति, उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते; तदेवं गत्यादिभिस्त्रिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते, धातुश्च क्रियावाची, धातोश्च द्वये प्रत्ययाः—कृतः, तिङश्च; तत्र तिङन्ते समासाभावात्कृदन्तमेव सम्भवतीति; अनुव्यचलदित्यत्र तु न गतित्वनिबन्धनः समासः, किं तर्हि ? सुबिति योगविभागनिबन्धनः ? धातुप्रत्ययसमुदायपरिग्रहार्थं तुः अन्यथा यत्क्रियायुक्तास्तं प्रतीति वचनाद्धातुमेव प्रति गतित्वाद्धातावेवोत्तरपदे स्वरः स्यात्—प्रणीः, उन्नीरिति; इह न स्यात्—प्रणायकः, उन्नायक इति ।

एतदपि नास्ति प्रयोजनम्; 'यत्क्रियायुक्ताः' इति नैवं विज्ञायते—यस्य क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रतीति, एवं विज्ञायमाने त्वन्वयव्यतिरेकाभ्यां धातोरेव क्रिया वाच्येति तमेव प्रति गत्युपसर्गसंज्ञाप्रसङ्गः । कथं तर्हि विज्ञायते ? या क्रिया यत्क्रिया तं क्रियालक्षणमर्थं प्रति गत्युपसर्गसंज्ञे भवतः, केवलायाश्च क्रियाया वाचकमुत्तरपदं नास्तीति क्रियाविशिष्टसाधनवाचिनि प्रणीः, प्रकारक इत्यादौ क्रियायां सिद्धताभिधायिनि,

**भावबोधिनी**

गति, कारक और उपपद से परे—इसका क्या फल है ? देवदत्तस्य कारकः—देवदत्तकारकः । यहाँ [ "शेषे षष्ठी" सूत्र से ] 'देवदत्तस्य' में शेष=सम्बन्ध अर्थवाली षष्ठी है । अतः यह सूत्र नहीं लगता है । कर्म में षष्ठी नहीं है । क्योंकि कर्मकारक होने से प्रत्युदाहरण ही नहीं होगा । और "तृजकाभ्यां कर्त्तरि च" से समास का निषेध भी हो जायगा । ]

कृद्ग्रहण विस्पष्टता के लिए है । प्रचतितराम् प्रपचतितमाम्—इनमें तो तरबाद्यन्त के साथ समास करने के बाद 'आम्' प्रत्यय होता है । इसमें तो सतिशिष्ट होने से आम् का ही स्वर ( प्रत्यय स्वर ) होता है—ऐसा कुछ लोग कहते हैं ।

**तत्र सतिशिष्टत्वादाम एव स्वरो भवतीत्येके ।**

**प्रपचतिदेश्याद्यर्थं तु कृद्ग्रहणं दृश्यत एव ॥**

**न्यासः**

द्वितीये दर्शने युज्यत एव तरबाद्यन्तेन समासः। तत्र कृद्ग्रहणं विस्पष्टार्थमित्यनेन सम्बद्धम्। एक आचार्याः कृद्ग्रहणं विस्पष्टार्थमित्येव व्याचक्षत इत्यर्थः।

**प्रपचतिदेश्याद्यर्थं त्वित्यादि**। तुशब्दः पूर्वस्माद् व्याख्यानाद् विशेषद्योतनाय। प्रपचतिदेश्य आदिर्यस्य स प्रपचतिदेश्यादिः। आदिशब्देन प्रपचतिदेशीय इत्यस्य ग्रहणम्। प्रपचतिदेश्यादावर्थः प्रयोजनं यस्य यत् प्रपचतिदेश्याद्यर्थम्। **कृद्ग्रहणं दृश्यत इति**। एवम् 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इत्यत्र 'तिङश्च' इत्यनुवृत्तेः प्रपचतिशब्दाद् देश्यदेशीयरौ। तदन्तेन च प्रशब्दस्य गतिसमासे कृद्ग्रहणं न क्रियते। तथा प्रपचतिदेश्यः, प्रपचतिदेशीय इत्यत्राप्युत्तरपदस्य प्रकृतिस्वरः स्यात्, न चेष्यते। तस्मादिह मा भूदित्येवमर्थं कृद्ग्रहणं दृश्यत एव। तस्मादेतन्न विस्पष्टार्थम्। तदपि तु प्रपचतिदेश्य इत्यादौ विषये मा भूदित्येवमर्थमित्यभिप्रायः॥ १३९ ॥

**पदमञ्जरी**

प्रभवनमित्यादौ च सर्वत्र भविष्यतीति नार्थ एतेन कृद्ग्रहणेन? अत आह—**कृद्ग्रहणं विस्पष्टार्थमिति**। य एवं प्रतिपत्तुमसमर्थस्तं प्रति विस्पष्टार्थं क्रियत इत्यर्थः।

यदि तर्हि विस्पष्टार्थमपि तावत्कृद्ग्रहणं क्रियते, आमन्ते तर्हि न प्राप्नोति—प्रपचतितराम्, प्रपचतितमामिति, ततश्च समासस्वरं बाधित्वाऽव्ययस्वर एव स्यात् इत्यत आह—**प्रपचतितरामित्यादि**। अत्र हि प्रशब्दस्य तरबन्तेन समासः, नामन्तेन कथम्? 'अन्तरङ्गत्वाद्धातुः पूर्वमुपसर्गेण युज्यते' ( सी० प० १२९ ), प्रपचित्यस्यामवस्थायां सुबभावात् समासो न कृत इत्येतावत्, ततस्तिङ्, तस्यामप्यवस्थायां सुबभावः, ततस्तरप्, तद्धितान्तत्वात्सुप्, तेन समासः, ततश्चाम्प्रत्ययः, तत आम्स्वरः सतिशिष्टः। कथं पुनस्तरबन्तेन समासः? कथं च न स्यात्? 'गतिकारकोपपदानां कृद्भिः सह समासवचनम्' ( व्या० प० १३८ ), इति वचनात्; नात्र कृद्भिरेव समास इति नियम्यते, किं तर्हि? यदि गत्यादीनां समासो भवति तेन तेन लक्षणेन, तदा कृद्भिः प्राक् सुदुत्पत्तेरिति; ननु चैवमपि तरबन्तेन समासो न लभ्यते, किं कारणम्? असुबन्तत्वात्; प्रातिपदिकाधिकाराद्धि तत एव 'किमेत्तिङव्ययघात्' इत्याम् भवति, न सुबन्तात्, न च गतिकारकोपपदानामित्येतदस्ति, अकृदन्तत्वात्? अत्राहुः—'घकालतनेषु' इति ज्ञापकात्सुबन्तादेव सर्वे तद्धिताः, ङ्याप्प्रातिपदिकग्रहणं तु वृद्धाद्यर्थमेवाधिक्रियते, ततश्चामुत्पत्तये यः सुप् तदन्तेन समास इति। अपर आह—'कुगतिप्रादयः' इत्यत्रातिङिति वक्ष्यमाणस्य प्रतिकर्षादुत्तरपदमसुबन्तमेव समस्यते, ततश्च तरबन्तेन समासो लभ्यत इति।

**इत्येक इति**। अस्य कृद्ग्रहणं विस्पष्टार्थम्, न चामन्ते दोषप्रसङ्ग इत्येवं केचिद्व्याचक्षते।

**प्रपचतिदेश्याद्यर्थं त्वित्यादि**। तुशब्दः पक्षं व्यावर्तयति। आदिशब्देन प्रपचतिकल्पम्, प्रपचतिदेशीयम्, प्रपचतिरूपमित्येतेषां ग्रहणम्। प्रपचतिदेश्यादावर्थः प्रयोजनं यस्य तत्तथोक्तम्। एतदुक्तं भवति—'न विस्पष्टार्थं कृद्ग्रहणम्, अपि तु प्रपचतिदेश्यादौ यत्र सतिशिष्टस्वरान्तरं नास्ति, तत्रायं स्वरो मा भूद्, अव्ययपूर्वपदप्रकृतिस्वर एव यथा स्यादित्येवं सप्रयोजनं दृश्यते' इति। इदं तु वक्तव्यम्– प्रपचतितरामित्यादौ तरबन्तेन

**भावबोधिनी**

प्रपचतिदेश्यः आदि [ में वारण ] के लिये कृद्ग्रहण दिखाई ही देता है।

**विमर्श**—यहाँ समासस्वर है। अतः उत्तरपद कृदन्त ही हो तो गति, कारक, उपपद से परे उसका प्रकृतिस्वर-विधान किया गया है। यहाँ कृद्ग्रहण का औचित्य विचारणीय है। निर्गतः कौशाम्ब्याः—निष्कौशाम्बिः—यहाँ न हो। परन्तु यहाँ प्राप्ति ही नहीं है क्योंकि 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा भवन्ति' इस नियम से कौशाम्बी के क्रियावाचक

## २८०३. उभे वनस्पत्यादिषु युगपत् ॥ १४० ॥ ( ३८७४ )

**'प्रकृत्या' इति वर्त्तते। वनस्पत्यादिषु समासेषु उभे पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः। वनस्पतिः ( तै० सं० २.६.२०.५ )। वन-पतिशब्दावाद्युदात्तौ, पारस्करप्रभृतित्वात् सुट्।**

**बृहस्पतिः ( तै० सं० ६.४.१०.१ )। बृहतां पतिः, 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' ( ग० सू० १६० ) इति सुट् तकारलोपश्च। बृहदित्येतदन्तोदात्तं निपातयन्ति। तस्य केचिदाद्युदात्तत्वं वर्णयन्ति।**

**न्यासः**

उभे **वनस्पत्यादिषु युगपत्**। वनशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः। पतिशब्दोऽपि प्रत्यय-स्वरेण। स हि 'पातेर्डतिः' इति डतिप्रत्ययान्तः। **बृहदित्यन्तोदात्तमित्यादि**। बृहच्छब्दः 'वर्त्तमाने पृषद्बृहन्महज्ज-गच्छतृवच्च' इति केवलमन्तोदात्तो यद्यपि निपात्यते, तथापि बृहस्पतिरित्यत्राद्युदात्तत्वं निपातयति।

**तनोतेरौणादिक ऊप्रत्यय इति**। 'कषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इत्यनेन तनूशब्दोऽन्तोदात्तः। न पाति न पालयतीत्यनेन 'पा रक्षणे' इत्यस्मान्नपादित्येतन्निपात्यत इति दर्शयति न पातयतीत्यनेनापि। 'नलोपो नञः' इति नलोपः प्राप्नोति, 'न भ्राण्नपात्' इत्यादिना प्रकृतिभावान्न भवति।

**पदमञ्जरी**

समासे पश्चादाम् भवन् प्रत्ययग्रहणपरिभाषया पचतितरशब्दस्यैव घान्तत्वात् तत एव स्यात्। तत्र को दोषः? सोपसर्गस्य सङ्घातस्यैकपद्याभावाद् आम्प्रपचतितरां देवदत्तेत्यादौ 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येष विधिर्न स्यात्; शेषनिघातश्च प्रशब्दस्य न स्यात्; भिन्नपदत्वात्। तस्मात् प्रशब्दस्यामन्तेन समासोऽङ्गीकर्तव्यः, न तरबन्तेन। तत्र समासत्वात् समुदायस्य प्रातिपदिकत्वे विभक्तावैकपद्यं भवति। स्वरे तु दोषप्रसङ्गात् कृद्ग्रहणमपि त्यक्तव्यमिति भाष्ये स्थितम्, प्रपचतिदेशीयादौ का गतिरिति न विद्मः ॥ १३९ ॥

**उभे वनस्पत्यादिषु युगपत्** ॥ वनशब्दः 'नब्विषयस्यानिसन्तस्य' ( फि० सू० २.३ ) इत्याद्युदात्तः, 'पातेर्डतिः' ( द० उ० १.२७ ) पतिः।

**भावबोधिनी**

न होने से उसके साथ 'निर्' की गति संज्ञा ही नहीं होती है। अतः गति के साथ कृदन्त ही मिलने पर प्राप्ति होती है। कारक भी क्रिया के योग में हीं होता है, समास में तिङन्त न होकर कृदन्त ही लिया जाता है। अतः इसके लिये भी कृदन्त स्वतः सिद्ध है, आवश्यक नहीं। उपपद भी धातु के अधिकार में सप्तमीनिर्दिष्ट प्रत्यय का निमित्त होता है। इस प्रकार गति आदि तीनों से क्रियावाची उत्तरपद आक्षिप्त होता है और धातु क्रियावाचक होता है। उस धातु से दो प्रत्यय होते हैं—कृत् और तिङ्। इनमें तिङन्त में समास ही नहीं होता है, तब कृदन्त ही बचता है। उसी का योग होगा—इस कारण अलग से 'कृत्' कहने का कोई विशेष प्रयोजन नहीं दिखाई देता है। अतः केवल स्पष्टता के लिये ही समझना चाहिए। यह कुछ विद्वान् मानते हैं।

दूसरे विद्वान् यह मानते हैं—प्रपचतिदेश्यः, प्रपचतिकल्पम्, प्रपचतिदेशीयः आदि में सतिशिष्ट दूसरा स्वर नहीं है, यहाँ यह स्वर न होने लग जाय, अपितु अव्ययपूर्वपदप्रकृतिस्वर ही हो—इसके लिये कृद्ग्रहण है। कृद्ग्रहण होने से उक्त उदाहरणों में यह सूत्र प्रवृत्त नहीं होता है। इस विषय में पदमंजरीकार हरदत्त के विचार दर्शनीय हैं ॥ १३९ ॥

'प्रकृत्या' इसकी अनुवृत्ति होती है। वनस्पति आदि समास शब्दों में पूर्व और उत्तर दोनों पद एक साथ प्रकृति-स्वरवाले हो जाते हैं। उदा०—वनस्पतिः। वन और पति दोनों आद्युदात्त है 'पारस्करप्रभृतीनि च' के अन्तर्गत होने से सुट्=स् आगम निपातित होता है।

बृहस्पतिः। बृहतां पतिः—इस विग्रह में "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इस वचन से सुट् होता

शचीपतिः। शचीशब्दः 'कृदिकारादक्तिनः' ( ग० सू० ५० ) इति ङीषन्तत्वादन्तोदात्तः। केचित्तु शार्ङ्गरवादिषु पठन्ति, तेषामाद्युदात्तः।

तनूनपात् ( तै० सं० ४.१.८.१ )। तनोतेरौणादिक ऊप्रत्ययः, तेन तनूशब्दोऽन्तोदात्तः। न पाति न पालयति वा नपात्, क्विबन्तः, 'नभ्राण्नपात्' ( ६.३.७५ ) इत्यादिनाऽऽद्युदात्तो निपातितः। तन्वा नपात्, तनूनपात्।

नराशंसः ( तै० सं० ४.१.८.१ )। नरा अस्मिन्नासीनाः शंसन्ति नरा एनं[1] शंसन्तीति वा नराशंसः। 'नॄ नये' ( धा० पा० ८१० ), अबन्तो नरशब्द आद्युदात्तः। शंसशब्दोऽपि घञन्तः, 'अन्येषामपि दृश्यते' ( ६.३.१६७ ) इति दीर्घत्वम्।

शुनःशेपः ( तै० सं० ५.२.१.३. )। शुन इव शेपोऽस्येति बहुव्रीहिः। तत्र 'शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्' ( ६.३.२१ वा० ) इति षष्ठ्या अलुक्। उभावाद्युदात्तौ।

### न्यासः

**नरा अस्मिन्नासीनाः शंसन्तीति।** एतेनाधिकरणसाधनं शंसशब्दं दर्शयति। एनं शंसन्तीत्यनेनापि कर्मसाधनम्। 'शंस स्तुतौ'—इत्यस्माद् 'अकर्त्तरि च कारके' इति घञ्। **अबन्त इति।** 'ऋदोरप्' इत्यनेन।

**शुनःशेप इति।** बहुव्रीहिरयम्। तेनात्र पूर्वपदस्य प्रकृतिभावे प्राप्ते वचनम्। **उभावाद्युदात्ताविति।** तत्र श्वन्शब्दः 'श्वन्नुक्षन्' इत्यादिना कनिन्प्रत्ययान्तो व्युत्पाद्यते। शेपशब्दो 'वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च' इत्यसुन्प्रत्ययान्तो व्युत्पाद्यते, तेन द्वावपि तावाद्युदात्तौ।

### पदमञ्जरी

**तनुशब्दोऽन्तोदात्त इति।** केचित्तु तस्याप्याद्युदात्तत्वमत्र निपातयन्ति, तथा च 'तनूनपादुच्यते गर्भ आसुरः' ( ऋ० ३.२९.११ ) इत्याद्युदात्तमधीयते।

**नरा अस्मिन्नित्यादि।** शंसेः 'अकर्तरि च कारके संज्ञायाम्' इत्यधिकरणे वा घञ्। **अबन्त इति।** 'कृत्यल्युटो बहुलम्' इति कर्तरि 'ऋदोरप्'।

**शुनःशेप इति।** बहुव्रीहिः। 'शुनः पुच्छशेपलाङ्गूलेषु' ( वा० ७२५ ) इत्यनेन षष्ठ्या अलुक्। **उभावाद्युदात्ताविति।** श्वन्शब्दः प्रातिपदिकस्वरेण, शेपशब्दः 'स्वाङ्गशिटामदन्तानाम्' इत्यनेन। 'शिट्' इति

### भावबोधिनी

है और तकार का लोप होता है। [—बृहस्पतिः बनता है। ] 'बृहद्' यह अन्तोदात्त निपातित किया जाता है। कुछ लोग इसको आद्युदात्त कहते हैं। [ पति शब्द पा + डति = अति, आलोप है, अतः प्रत्ययस्वर से आद्युदात्त है। ]

शचीपतिः—शचीशब्द 'कृदिकारादक्तिनः' इस वचन से ङीषन्त अन्तोदात्त है। कुछ लोग शार्ङ्गरवादि में पढ़ते हैं, उनके मतमें आद्युदात्त है। [ पति तो आद्युदात्त है ही। ]

तनूनपात्। 'तनु' धातु से औणादिक 'ऊ' प्रत्यय है, इससे 'तनू' शब्द अन्तोदात्त है। न पाति = न पालयति—इस अर्थ में—नपात् यह क्विबन्त, "न भ्राण् नपात्" ( ३।३।७५ ) सूत्र से आद्युदात्त निपातित है। तन्वा नपात् = तनूनपात् यह विग्रह और समास है। [ पूर्वपद अन्तोदात्त और उत्तरपद आद्युदात्त है। ]

नराशंसः। नरा अस्मिन् आसीनाः शंसन्ति अथवा नराः एनं शंसन्ति—यह विग्रह करने पर—नराशंसः बनता है। 'नॄ नये' धातु से अप् प्रत्ययान्त 'नर' शब्द आद्युदात्त है। शंस शब्द भी घञन्त [ आद्युदात्त ] है, 'अन्येषामपि' दृश्यते' ( ३।३।१२३ ) सूत्र से दीर्घ होता है। [ अतः 'आङ्' उपसर्ग की कल्पना नहीं करनी चाहिए। यहाँ दोनों पद आद्युदात्त हैं। नरा एवं शंसति-की अपेक्षा-नरा एनं शंसन्ति पाठ ही उचित है। ]

शुनःशेपः। शुनः इव शेपः अस्य सः—यह बहुव्रीहि है। इसमें 'शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्" इस वार्त्तिक से षष्ठी का अलुक् होता है। दोनों ही शब्द आद्युदात्त हैं।

---

१. अत्र कर्मसाधनत्वात् 'एनम्' इत्येवोचितं प्रतिभाति, 'एवम्' इत्ययपाठः।

[1]शण्डापर्कौ ( तै० सं० ६.४.१०.१ )। शण्ड-पर्कशब्दौ घञन्तत्वादाद्युदात्तौ। तयोर्द्वन्द्वे 'अन्येषामपि दृश्यते' ( ६.३.१६७ ) इति दीर्घत्वम्।

तृष्णावरूत्री। तृष्णाशब्द आद्युदात्तः, वरूत्रीशब्दो ग्रसितादि (७।२।३४) सूत्रे निपातितोऽन्तोदात्तः। तत्र द्वन्द्वे दीर्घत्वं पूर्ववत्।

'बम्बाविश्ववयसौ' ( तै० सं० ६.६.८४ ) बम्बशब्दोऽन्तोदात्तः। विश्ववयःशब्दोऽपि 'बहुव्रीहौ विश्वं संज्ञायाम्' ( ६.२.१०६ ) इति विश्वशब्दोऽन्तोदात्तः। तयोर्द्वन्द्वे दीर्घत्वं पूर्ववत्।

मर्मृत्युः। मर् इति मृङो विच्प्रत्ययः। मृत्युशब्दोऽन्तोदात्तः।

### न्यासः

**शण्डपर्कशब्दाविति**। 'शडि रुजायाम्' इत्यस्य घञि शण्ड इति भवति। 'पृची सम्पर्के' इत्यस्यापि तत्रैव पर्क इति भवति।

**तृष्णाशब्द आद्युदात्त इति**। स हि तृषेर्निष्ठायां व्युत्पाद्यते। तेन 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तः।

**वम्बशब्द इति**। 'लवि अवस्रन्सने', अस्य पचाद्यचि व्युत्पादित्वादस्मादेव निपातनाद्वत्वम्। **विश्ववयःशब्दः इति**। विश्वं वयो यस्येति बहुव्रीहिः। तत्र 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दोऽन्तोदात्तः। **तयोरिति**। वम्बविश्ववयःशब्दयोः।

**मृङो विच्प्रत्यय इति**। 'विजुपे छन्दसि' इत्यतो विजित्यनुवर्तमाने 'अन्येभ्योऽपि दृश्यते' इति विच्। **मृत्युशब्दोऽन्तोदात्त इति**। 'भुजिमृङ्भ्यां युक्त्युकौ' इति त्युक्प्रत्ययान्तत्वात्।

### पदमञ्जरी

सर्वादीनां संज्ञा, स्वाङ्गवाचिनां शिटामदन्तानां चादिरुदात्तो भवतीत्यर्थः। 'शडि रुजायाम्' ( धा० पा० २७९ ) पचाद्यच् शण्डः, ग्रामादित्वादाद्युदात्तः।

मर्चयतेः 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' ( द० उ० ३.२१ ) इति कन्, 'तितुत्र' इत्यादिना इट्प्रतिषेधः, कुत्वम् —मर्कशब्द आद्युदात्तः।

**तृष्णाशब्द इति**। तृषेर्निष्ठायामस्मादेव निपातनादिडभावः, 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तत्वम्।

'लबि अवस्रन्सने' ( धा० पा० ३७९ ) पचाद्यच्, अस्यादेव निपातनाल्लकारस्य बकारः, विश्वानि

### भावबोधिनी

शण्डामर्कौ ( शण्डापर्कौ )। शण्ड और मर्क ( पर्क ) शब्द घञन्त होने से आद्युदात्त हैं। इनके द्वन्द्व में "अन्येषामपि ( ६।३।१२३ ) से दीर्घ होता है। [ न्यासकार—'शण्डापर्कौ' और पदमंजरीकार 'शण्डामर्कौ' पाठ मानते हैं। ]

तृष्णावरूत्री। तृष्णा शब्द आद्युदात्त है। वरूत्री शब्द "ग्रसितादि०" ( पा० सू० ७।२।३४ ) सूत्र में अन्तोदात्त निपातित होता है। यहाँ द्वन्द्व में पूर्ववत् दीर्घ होता है। [ वास्तव में दीर्घ की कोई आवश्यकता नहीं है। ]

बम्बाविश्ववयसौ। बम्ब शब्द अन्तोदात्त है। विश्ववयः—शब्द भी "बहुव्रीहौ विश्वं संज्ञायाम्" ( ६।२।१०३ ) सूत्र से विश्व' शब्द अन्तोदात्त हैं। दोनों के द्वन्द्व समास में पूर्ववत् दीर्घ होता है।

मर्मृत्युः। मर्—यह 'मृङ्' धातु से विच् प्रत्यय है [ और सर्वापहारी लोप होता है। ] मृत्यु शब्द अन्तोदात्त है [ प्रत्ययस्वर से ]।

---

१. तै० सं० ६.४.१०.१ इत्यत्र 'शण्डामर्कौ' इत्येव पठ्यते। पदमञ्जरीकारोऽपि एवमेव मन्यते। किन्तु न्यासकारः 'शण्डपर्कौ' इत्येव पाठं स्वीकृत्य व्याख्यातवान्। त्रिपाठी।

**द्वन्द्वानामदेवताद्वन्द्वार्थः, अनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः ॥**

**२८०४. देवताद्वन्द्वे च ॥ १४१ ॥ ( ३८७९ )**

**देवतावाचिनां यो द्वन्द्वस्तत्र युगपदुभे पूर्वोत्तरपदे प्रकृतिस्वरे भवतः। इन्द्रासोमौ। इन्द्रावरुणौ। इन्द्राबृहस्पती। 'ऋज्रेन्द्राग्र' ( उणादि० १९६ ) इति इन्द्रशब्द आद्युदात्तो निपातितः। सोम इति मन्प्रत्ययान्तः[1]। वरुण उनन्प्रत्ययान्तः, तेनाद्युदात्तः। बृहस्पतिशब्दे वनस्पत्यादित्वाद् द्वावुदात्तौ, तेन इन्द्राबृहस्पती—इत्यत्र त्रय उदात्ता भवन्ति।**

**देवताग्रहणं किम्? प्लक्षन्यग्रोधौ। द्वन्द्वग्रहणं किम्? अग्निष्टोमः॥**

**न्यासः**

**द्वन्द्वानामित्यादि।** येऽत्र द्वन्द्वाः, तेषामदेवताद्वन्द्वार्थः पाठः। देवताद्वन्द्वे हि 'देवताद्वन्द्वे च' इत्यनेनैव सिद्धम्। **अनुदात्ताद्युत्तरपदार्थश्चेति।** द्वन्द्वानां पाठः। यदि हि तेषामिह पाठो न स्यात्, तदा 'नोत्तरपदेऽनुदात्तादौ' इति प्रतिषेधादन्तोदात्तत्वं स्यात् ॥ १४० ॥

**देवताद्वन्द्वे च ॥ इन्द्रासोमाविति।** 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ्। **ऋज्रेन्द्रेत्यादि।** 'वृधिवपिभ्यां रन्' इत्यतो रन्नित्यनुवर्त्तमाने 'ऋज्रेन्द्र' इतीन्द्रशब्दो रन्प्रत्ययान्तो निपात्यते, तेनाद्युदात्तः। **सोम इति मन्प्रत्ययान्त इति।** तेन सोऽप्याद्युदात्त एवेत्यभिप्रायः। मन्प्रत्ययान्तत्वं च तस्य 'षुञ् अभिषवे' इत्यस्माद् 'अर्त्तिस्तुसुहुसृ' इत्यादिना मन्प्रत्ययमुत्पाद्य व्युत्पादितत्वात्। **वरुण उनन्प्रत्ययान्त इति।** 'कृवृदारिभ्य उनन्' इति। बृहस्पतिशब्दो हि वनस्पत्यादिषु पठ्यते, तत्र च पूर्वोत्तरपदयोर्युगपदाद्युदात्तत्वं विधीयते, तेन द्वावुदात्तौ। **तेनेन्द्राबृहस्पती इत्यत्र त्रय उदात्ता इति।** इन्द्रशब्दादयः।

**प्लक्षन्यग्रोधाविति।** अत्र समासान्तोदात्तत्वमेव भवति। एवमग्निष्टोम इत्यत्रापि। षष्ठीसमासश्चायम्। **समासस्वरापवादो योगः ॥ १४१ ॥**

**पदमञ्जरी**

वयांस्यस्य विश्ववयाः, मृङः 'अन्येभ्योऽपि दृश्यते' इति विच्—**मरिति।** **'भुजिमृङ्भ्यां युक्त्युकौ'** ( द० उ० १.१३५ ) **मृत्युः** ॥ १४० ॥

**देवताद्वन्द्वे च ॥** उदाहरणेषु 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ्। **अत्र त्रय उदात्ता इति।** त्रयाणां पदानामादयः॥ १४१ ॥

**भावबोधिनी**

देवताभिन्नों का द्वन्द्व करने के लिए और अनुदात्तादि उत्तरपदार्थ के लिये वनस्पत्यादिगण में द्वन्द्वों का पाठ है। [ चूँकि देवताओं के द्वन्द्व में 'देवताद्वन्द्वे च' से सिद्ध है। और 'नोत्तरपदेऽनुदात्तादौ' इससे प्रतिषेध के कारण अन्तोदात्तत्व ही होने लगता। अतः दो कार्यों के लिए द्वन्द्व पठित हैं। ] ॥ १४० ॥

देवतावाची शब्दों का जो द्वन्द्व है उसमें पूर्व और उत्तरपद एक साथ प्रकृतिस्वर वाले होते हैं। उदा०—इन्द्रासोमौ। इन्द्रावरुणौ। इन्द्राबृहस्पती। 'इन्द्र' शब्द 'ऋज्रेन्द्राग्र'' ( उणादि २।१८६ ) से आद्युदात्त निपातित होता है। सोम—यह मन् प्रत्ययान्त है। वरुण—यह उनन् प्रत्ययान्त है, इसलिए आद्युदात्त है। बृहस्पति शब्द में वनस्पत्यादि होने से दोनों ( बृह पति ) आद्युदात्त हैं। इस कारण 'इन्द्राबृहस्पती'—इसमें तीनों उदात्त हैं।

देवताग्रहण किस लिए है? प्लक्षन्यग्रोधौ। [ यहाँ वृक्षवाची हैं। ] द्वन्द्वग्रहण किस लिये है? **अग्निष्टोमः**। [ यहाँ द्वन्द्व नहीं है। अतः यह सूत्र नहीं लगता है। ] ॥ १४१ ॥

---

१, 'नित्वादाद्युदात्तः' इत्यधिकं पुस्तकान्तरे।

## २८०५. नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥ १४२ ॥ ( ३८७६ )

**उत्तरपदेऽनुदात्तादौ पृथिवीरुद्रपूषमन्थिवर्जिते देवताद्वन्द्वे नोभे युगपत्प्रकृतिस्वरे भवतः। इन्द्राग्नी ( तै० सं० २.२.२.१ )। इन्द्रवायू ( तै० सं० ६.६ ८.३ )। अग्नि-वायुशब्दावन्तोदात्तौ।**

**उत्तरपदग्रहणम् 'अनुदात्तादौ' इत्युत्तरपदविशेषणं यथा स्याद्, द्वन्द्वविशेषणं मा भूदिति।**

**'अनुदात्तादौ' इति विधिप्रतिषेधयोर्विषयविभागार्थम्।**

### न्यासः

**नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥ अग्निवायुशब्दावन्तोदात्ताविति।** अग्निशब्दः 'वीज्याज्वरिभ्यो निः' इति वर्तमाने 'अङ्गेर्नलोपश्च' इति निप्रत्ययान्तः। वायुशब्दोऽपि 'कृवापाजि' इत्यादिनोण्प्रत्ययान्तः, तेन प्रत्ययस्वरेण द्वावप्यन्तोदात्तौ।

अथोत्तरपदग्रहणं किमर्थम्, यावता 'अनुदात्तादौ' इति सप्तम्येवात्रानुदात्तादेरपदत्वं बोधयिष्यति? इत्यत आह—**उत्तरपदग्रहणमित्यादि**। इह हि प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः, नोत्तरपदम्। तत्रानुदात्तादाविति सप्तमी द्वन्द्वस्यैव विशेषणमापद्यते—अनुदात्तादौ द्वन्द्वे स्वरोऽयं न भवतीति, ततश्चेह प्रतिषेधः स्यात्—चन्द्रसूर्याविति। चन्द्रशब्दस्यान्तोदात्तत्वादनुदात्तादिरयं द्वन्द्वः। उत्तरपदग्रहणे तु सति द्वन्द्वे सप्तम्यां विहितायामनुदात्तावित्येतदुत्तरपदस्य विशेषणं सम्पद्यते। तस्मादुत्तरपदविशेषणमेतद् यथा स्याद्, द्वन्द्वविशेषणं मा भूदित्येवमर्थमुत्तरपदग्रहणम्।

**अनुदात्तादाविति।** असत्येतस्मिन् विशेषणे विधिरपि देवताद्वन्द्व उच्यते, प्रतिषेधोऽपि, ततश्च तयोर्विषयविभागो न स्यात्; एवञ्च समानविषयत्वाद्विकल्पः प्रसज्येत। अनुदात्तादावित्यस्मिंस्तु सति यत्रानुदात्ताद्युत्तरपदो देवताद्वन्द्वस्तत्र प्रतिषेधः स्यात्, ततोऽन्यस्तु विधिरिति विधिप्रतिषेधयोर्विषयविभागो भवति। अतो विषयविभागार्थमनुदात्तादावित्युच्यते।

### पदमञ्जरी

**नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥** अग्निशब्दः 'अङ्गेर्निर्नलोपश्च' ( द० उ० १.२० ) इति निप्रत्ययान्तः। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' ( द० उ० १.८६ ) युक्, वायुः।

**उत्तरपदग्रहणमित्यादि।** अन्यथाऽस्मिन्प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः, नोत्तरपदम्; तत्र 'अनुदात्तादौ' इति सप्तम्यन्तं द्वन्द्वस्यैव विशेषणं स्यात्, ततश्चन्द्रसूर्यावित्यादौ प्रतिषेधः स्यात्। उत्तरपदग्रहणे तु सति तस्यैव श्रुतस्य 'अनुदात्तादौ' इत्येतद्विशेषणं भवति।

**अनुदात्तादावित्यादि।** अन्यथा विधिप्रतिषेधयोः समानविषयत्वाद्विकल्पः प्रसज्येत। 'प्रथेः षिवन्

### भावबोधिनी

पृथिवी, रुद्र, पूष और मन्थिन् को छोड़ कर अनुदात्तादि उत्तरपद देवताद्वन्द्व में दोनों एक साथ प्रकृतिस्वर वाले नहीं होते हैं। उदा०—इन्द्राग्नी। इन्द्रवायू। अग्नि और वायु शब्द अन्तोदात्त होते हैं।

उत्तरपदे—इसका ग्रहण इसलिये है कि 'अनुदात्तादौ' यह उत्तरपद का विशेषण बन सके, द्वन्द्व का विशेषण न हो जाय [—अनुदात्तादौ उत्तरपदे—यही बने। ]

'अनुदात्तादौ' यह विधि और प्रतिषेध के विषय-विभाग के लिए है। [ यह विशेषण न देने पर विधान भी देवताद्वन्द्व में है और निषेध भी उसी में कहा गया है। अतः इनका विषय अलग-अलग नहीं बन पाता। फलतः विकल्प होने लग जाता। 'अनुदात्तादौ' ऐसा रहने पर—जहाँ अनुदात्तादि उत्तरपदवाला देवताद्वन्द्व है वहाँ प्रतिषेध होगा इससे भिन्न में विधि होगी—इस प्रकार दोनों का विषय अलग-अलग बन जाता है। ]

अपृथिव्यादिष्विति किम् ? द्यावापृथिव्यौ ( तै० सं० २.६.९.५ )। द्यावाशब्द आद्युदात्तो निपातितः। पृथिवीशब्दो ङीष्प्रत्ययान्तत्वादन्तोदात्तः।

रुद्र— सोमारुद्रौ ( तै० सं० १.८.२२.५ )। 'रोदेर्णिलुक्च' ( उणादि १८९ ) इति रुद्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः।

पूषन्—इन्द्रापूषणौ। 'श्वन्नुक्षन्पूषन्' ( उणादि० १६५ ) इति पूषान्तोदात्तो निपात्यते।

मन्थिन्—शुक्रामन्थिनौ ( तै० सं० ६.४.१०.२१ )। मन्थोऽस्यास्तीति मन्थी, इन्नन्तत्वादन्तोदात्तः।

पृथिव्यादिषु तु उभे युगपत् प्रकृतिस्वरे भवत एव ॥

## २८०६. अन्तः ॥ १४३ ॥ ( ३८७७ )

'अन्तः' इत्यधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र समासस्योत्तरपदस्यान्त उदात्तो भवतीत्येवं तद्वेदितव्यम्। वक्ष्यति—'थाथघञ्क्ताजबित्रकाणाम्' ( ६.२.१४४ ) इति। सुनीथः। अवभृथः' ॥

### न्यासः

**पृथिवीशब्दो ङीष्प्रत्ययान्त इति।** गौरादिषु पाठात्।

**रोदेर्णिलुक् चेति।** 'रुदिर् अश्रुविमोचने' इत्यस्माण्ण्यन्तात् 'स्फायितञ्चि' इत्यादिसूत्राद्रगित्यनुवर्तमाने 'रोदेर्णिलुक्च' इति रक्, तेन रुद्रोऽन्तोदात्तः।

**शुक्रामन्थिनाविति।** शुक्रशब्दः 'ऋज्रेन्द्र' इत्यादिना रन्प्रत्ययान्तः, तेनाद्युदात्तः ॥ १४२ ॥

**अन्तः ॥ १४३ ॥**

### पदमञ्जरी

सम्प्रसारणं च' ( द० उ० ८.४६ )। शुक्रशब्दोऽयम् 'ऋज्रेन्द्राग्र' ( द० उ० ८.४६ ) इत्यादिना निपातितोऽन्तोदात्तः ॥ १४२ ॥

**अन्तः ॥ तत्र समासस्योत्तरपदस्येति।** क्वचित् समासस्यान्त उदात्तो भवति, क्वचिदुत्तरपदस्येत्यर्थः। विषयविभागमुत्तरत्र दर्शयिष्यति ॥ १४३ ॥

### भावबोधिनी

पृथिवी आदि छोड़कर—इसका क्या फल है ? द्यावापृथिवी। द्यावा-शब्द आद्युदात्त निपातित है। पृथिवी शब्द ङीष् प्रत्ययान्त होने से अन्तोदात्त है। [ इनके प्रकृतिस्वर युगपत् नहीं होते हैं। ]

रुद्र—सोमारुद्रौ। 'रोदेर्णिलुक् च' ( उणादि० ) इससे रुद्र शब्द रक् प्रत्ययान्त अन्तोदात्त है। [ सोम शब्द मन् प्रत्ययान्त अन्तोदात्त है। ]

पूषन्—इन्द्रापूषणौ। "श्वन्नुक्षन्पूषन्" (उणादि) सूत्र से पूषा शब्द अन्तोदात्त निपातित है।

मन्थिन्—शुक्रामन्थिनौ। मन्थः अस्य अस्ति—इस अर्थ में—मन्थी। इन्नन्त होने से अन्तोदात्त है।

पृथिव्यादि ( पूर्वोक्त ) में तो दोनों पद एकसाथ प्रकृतिस्वर वाले होते ही हैं ॥ १४२ ॥

'अन्तः' यह अधिकार है। यहाँ से आगे जिन्हें कहेंगे उनमें—समास के उत्तरपद का अन्त उदात्त होता है—ऐसा समझना चाहिए। कहेंगे—थाथघञ्क्ताजबित्रकाणाम्' ( ६।२।१४४ ) उदा०—सुनीथः अवभृथः। [ उत्तरपद का अन्त उदात्त होता है। ] ॥ १४३ ॥

## २८०७. थाथघञ्क्ताजबित्रकाणाम् ॥ १४४ ॥ ( ३८७८ )

थ, अथ, घञ्, क्त, अप्, इत्र, क—इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदात्परेषामन्त उदात्तो भवति। सुनीथः। अवभृथः ( तै० सं० १.७.५.३ )। 'हनिकुषिनीरमिकाशिभ्यः क्थन्' ( उणादि० १६७ ) इति 'अवे भृञः' ( उणादि० १६८ ) इति च क्थन्प्रत्ययान्तावेतौ। तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तमुत्तरपदं स्यात्।

अथ—आवसथः (तै० ब्रा० १.१.१.६)। उपवसथः। 'उपसर्गे वसेः' (उणादि० ४०३) इत्यथन्प्रत्ययः।

घञ्—प्रभेदः। काष्ठभेदः। रज्जुभेदः।

क्त—दूरादागतः। विशुष्कः। आतपशुष्कः।

**न्यास**

**थाथघञ्क्ताजबित्रकाणाम् ॥** अत्र कृदुत्तरपदप्रकृतिस्वरत्वेणाद्युदात्तमुत्तरपदं स्यादिति। यदीदं नारभ्येतेति भावः।

**उपसर्गे वसेरित्यथप्रत्यय इति।** तत्र 'शीङ्शपिरुगमिवञ्चि' इत्यादिना थप्रत्ययानुवृत्तेः कृदुत्तरपदप्रकृतिस्वरत्वेन मध्योदात्तमुत्तरपदं स्यात्।

**दूरादागत इति।** गमेः क्तः, 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपः, आगतशब्देन 'स्तोकान्तिकार्थ' इत्यादिना समासः, 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। **शुष्क इति।** 'शुषः कः' इति कादेशः। उभयत्रात्र कर्मणि निष्ठा। तत्र 'गतिरन्तरः' इति प्राप्ते तदपवाद उत्तरपदान्तोदात्तत्वं विधीयते। यदा तु कर्तरि क्तः, तदा तु कृत्स्वरेणोत्तरपदस्य प्रकृतिभावे सत्यन्तोदात्तत्वं सिद्धमेव। ननु च शुषिरकर्मकः, तस्य कुतः कर्मणि निष्ठा? अन्तर्भावितण्यर्थः सकर्मको भवतीत्यदोषः। **आतपशुष्कमिति**[1]। 'कर्तृकरणे कृता बहुलम्' इति समासः। अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदं पूर्वपदप्रकृतिस्वरं स्यात्। पूर्वपदं पुनरत्र पचाद्यजन्तत्वात् कृत्स्वरेणान्तोदात्तः।

**पदमञ्जरी**

**थाथघञ्क्ताजबित्रकाणाम् ॥** आद्युदात्तमुत्तरपदं स्यादिति। यदीदं नोच्येतेति भावः।

**दूरादागत इति।** अत्र कर्मणि क्तः, ग्रामादिरभिधेयः, कृता आङो गतिसमासे 'गतिरनन्तरः' इति प्रकृतिभावे चागत इत्याद्युदात्तम्, तेन 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः, 'पञ्चम्याः स्तोकादिभ्यः'

**भावबोधिनी**

थ, अथ, घञ्, क्त, अच्, अप्, इत्र, क—ये जिनके अन्त में हैं ऐसे उत्तरपद जो गति, कारक और उपपद से परे हैं, उनका 'अन्त' उदात्त होता है। उदा०—( १ ) सुनीथः। अवभृथः। [ गति सु, अव से परे थप्रत्ययान्त नीथ, भृथ हैं, अन्तोदात्त होता है। क्योंकि ] "हनिकुषि-नीरमिकाशिभ्यः क्थन्" ( उणादि ) और 'अवे भृञः' ( उणादि ) से ये दोनों क्थन् प्रत्ययान्त हैं। इनमें कृदुत्तरपद के प्रकृतिस्वर से उत्तरपद आद्युदात्त हो जाता। [ वहाँ यह सूत्र अन्त उदात्त करता है। ]

( २ ) अथ—आवसथः। उपवसथः। 'उपसर्गे वसः' ( उणादि ) से अथन् प्रत्यय होता है। [ अतः अथप्रत्ययान्त का अन्त उदात्त होता है। ]

---

१. मूले पदमञ्जर्यां च 'आतपशुष्कः' इति पठ्यते।

अच्—प्रक्षयः। प्रजयः। 'क्षयो निवासे' ( ६.१.२०१ ), 'जयः करणम्' ( ६.१.२०२ ) इति आद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः।

अप्—प्रलवः। प्रसवः ( तै० सं० १.१.४.२ )।

इत्र—प्रलवित्रम्। प्रसवित्रम्।

क—गोवृषः, खरीवृषः। गां वर्षति, खरीं वर्षतीति मूलविभुजादित्वात् ( का० वा० ) कप्रत्ययः।

प्रवृषः। प्रहृषः। 'इगुपध' (३.१.१३५) इति कप्रत्ययः। 'वृषादीनां च' (६.१.२०३) इति वृषशब्द आद्युदात्तः।

**न्यासः**

**प्रक्षयः, प्रजयः इति।** 'एरच्'। ननु च कृदुत्तरपदप्रकृतिस्वरत्वेनैवात्रोत्तरपदान्तोदात्तत्वं भविष्यति। इत्यत आह—**क्षयो निवास इत्यादि।** यदा 'क्षयो निवासे' 'जयः करणम्' इति चाद्युदात्तौ क्षयजयशब्दौ भवतः, तदा कृत्स्वरेण मध्योदात्तत्वं स्यात्।

**प्रलवित्रम्, प्रसवित्रमिति।** 'अर्तिलूधूसूखन्' इत्यादिनेत्रः। अत्र कृत्स्वरे सति प्रत्ययस्वरः स्यात्। तेनोत्तरपदं मध्योदात्तं स्यात्।

**गोवृष इति।** 'पृषु वृषु मृषु सेचने', अत्र 'उपपदमतिङ्' इति समासः, 'गतिकारकोपपदात् कृत्'

**पदमञ्जरी**

इत्यलुक्, तत्र कारकात्परमागतमित्येतत् कृदुत्तरपदप्रकृतिस्वरेणाद्युदात्तं स्यात्। **विशुष्क इति।** शुषेरकर्मकत्वात् कर्तरि क्तः, 'शुष्कधृष्टौ' इत्याद्युदात्तत्वम्, ततो गतिसमासः। **आतपशुष्क इति।** नायम् 'सिद्धशुष्क' इति सप्तमीसमासः; 'सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्' इति पूर्वपदप्रकृतिस्वरप्रसङ्गात्। तस्मात् 'कर्तृकरणे कृता बहुलम्' इति समासः।

**प्रक्षयः, प्रजय इति।** 'एरच्'। ननु च कृदुत्तरपदप्रकृतिस्वरेणैवात्रान्तोदात्तत्वं सिद्धम्? अत आह—**क्षयो निवास इत्यादि।**

**प्रलवः प्रसव इत्यादि।** 'ॠदोरप्'।

**प्रलवित्रमिति।** 'अर्त्तिलूधूसूखनसहचर इत्रः'।

**भावबोधिनी**

( ३ ) घञ्—प्रभेदः। काष्ठभेदः। रज्जुभेदः। [ गति, कारक और उपपद से परे घञन्त का अन्त उदात्त होता है। ]

( ४ ) क्त—दूरादागतः। विशुष्कः। आतपशुष्कः। [ 'शुषः कः' सूत्र से 'क्त' का 'क' आदेश होने पर शुष् + क = 'शुष्क' होता है। यहाँ भी तीनों से परे क्तान्त का अन्तोदात्त होता है। ]

( ५ ) अच्—प्रक्षयः। प्रजयः। [ "एरच्" से अच् प्रत्ययान्त है। ] 'क्षयो निवासे' ( ६।१।१०१ ) और "जयः करणम्" ( ६।१।२०२ ) से क्षय और जय शब्द आद्युदात्त हो जाते हैं।

( ६ ) अप्—प्रलवः। प्रसवः। [ ॠदोरप्' सूत्र से अप् प्रत्ययान्त उत्तरपद हैं। ]

( ७ ) इत्र— प्रलवित्रम्। प्रसवित्रम्। [ 'अर्तिलूधू०' सूत्र से इत्र-प्रत्ययान्त हैं। अन्तोदात्त होते हैं। ]

( ८ ) क —गोवृषः। खरीवृषः। गां वर्षति, खरीं वर्षति—इन अर्थो में "मूलविभुजादिभ्यः कः" वचन से 'क' ( अ ) प्रत्यय होता है। प्रवृषः, प्रहृषः। यहाँ 'इगुपध' सूत्र से 'क' प्रत्यय होता है। 'वृषादीनां च' सूत्र से वृष शब्द आद्युदात्त है। [ उक्त उदाहरणों में अन्तोदात्त हो जाता है।

**गतिकारकोपपदादित्येव—सुस्तुतं भवता।**
**कर्मप्रवचनीयेऽव्ययस्वर एव भवति॥**

**२८०८. सूपमानात् क्तः॥ १४५॥ (३८७९)**

**'सु' इत्येतस्मादुपमानाच्च परं क्तान्तमुत्तरपदमन्तोदात्तं भवति। सुकृतम् (तै० सं० ४.७.२.२) सुभुक्तम्। सुपीतम्। उपमानात्—वृकावलुप्तम्। शशप्लुतम्। सिंहविनर्दितम्। सुशब्दाद् 'गतिरनन्तरः' (६.२.४९) इति प्राप्ते उपमानादपि 'तृतीया कर्मणि' (६.२.४८) इति, अयमपवादः।**
**गतिकारकोपपदादित्येव—सुस्तुतं भवता॥**

**न्यासः**

इत्युत्तरपदाद्युदात्तत्वं स्यात्।

**सुस्तुतमिति।** 'सुः पूजायाम्', 'अतिरतिक्रमणे च' इति स्वती कर्मप्रवचीयसंज्ञौ। **अत्राव्ययस्वर एव भवतीति** 'तत्पुरुषे तुल्यार्थ' इत्यादिना॥ १४४॥

**सूपमानात् क्तः॥ सुपीतमिति।** 'घुमास्था' इत्यादिसूत्रेणेत्वम्। **वृकावलुप्तमिति।** 'लुप्लृ छेदने'। **शशप्लुतमिति।** 'च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ'। **सिंहविनर्दितमिति।** 'नर्द शब्दे'। सर्वत्र **'कर्तृकरणे कृता बहुलम्'** इति समासः। वृकैरिवावप्लुतमित्यादिर्विग्रहः॥ १४५॥

**पदमञ्जरी**

**गोवृष इति।** 'वृषु मृषु सेचने' (धा० पा० ७०६, ७०७)। **सुस्तुतमिति।** 'सुः पूजायाम्', 'अतिरतिक्रमणे च' इति कर्मप्रवचनीयसंज्ञा, 'स्वती पूजायाम्' इति प्रादिसमासः॥ १४४॥

**सूपमानात् क्तः॥ वृकावलुप्तमित्यादि।** 'लूञ् छेदने' (धा० पा० १४८६), 'च्युङ् प्रुङ् प्लुङ् गतौ' (धा० पा० ९५६-५८), 'नर्द गर्द शब्दे' (धा० पा० ५६-५७)—सर्वत्र 'कर्तृकरणे कृता बहुलम्' इति समासः। वृकैरिवावलुप्तमित्यादिविग्रहः। **उपमानादपीत्यादि।** अत्रेतिशब्दस्यानन्तरं प्राप्त इत्यस्यानुषङ्गः॥ १४५॥

**भावबोधिनी**

गति, कारक और उपपद से ही परे—इसका क्या फल है? सुस्तुतं भवता। अति स्तुतं भवता। [यहाँ 'सुः पूजायाम्' (१।४।९०) 'अतिरतिक्रमणे च' (१।४।९१) से 'सु' 'अति' की कर्मप्रवचनीय संज्ञा हो जाने पर उपसर्ग और गति का बाध हो जाता है।] कर्मप्रवचनीय में अव्यय स्वर (६।२।२) ही होता है। [अव्यय आद्युदात्त होते हैं।]॥ १४४॥

'सु' और उपमान से परे क्तप्रत्ययान्त उत्तरपद अन्तोदात्त होता है। उदा०—सुकृतम्। सुभुक्तम्। सुपीतम्। [सु से परे सभी अन्तोदात्त होते हैं।] उपमान से परे उदा०—वृकावलुप्तम्। [भेड़िये के समान गायब हो जाना।] शशप्लुतम्। सिंहविनर्दितम्। [खरगोश के समान भागना, सिंह के समान गर्जना। सभी में उत्तरपद अन्तोदात्त होता है।] 'सु' शब्द से 'गतिरनन्तरः' (६।२।४९) से पूर्वपद का प्रकृतिस्वर प्राप्त रहते और उपमानवाचक से 'तृतीया कर्मणि' (६।२।४८) से तृतीयान्त पूर्वपद का प्रकृतिस्वर प्राप्त रहते—यह अपवाद है।

गति, कारक और उपमान से ही परे होता है—सुस्तुतं भवता। [कर्मप्रवचनीय हो जाने से अव्ययस्वर आद्युदात्त ही होता है।]॥ १४५॥

## २८०९. संज्ञायामनाचितादीनाम् ॥ १४६ ॥ ( ३८८० )

**संज्ञायां विषये गतिकारकोपपदात् क्तान्तमुत्तरपदमन्तोदात्तं भवति आचितादीन्वर्जयित्वा । सम्भूतो रामायणः । उपहूतः शाकल्यः । परिजग्धः कौडिन्यः । सम्भूत इति प्राप्त्यर्थाद् भवतेः कर्मणि क्तः ।**

**'गतिरनन्तरः' ( ६.२.४९ ) इत्यत्र हि 'कर्मणि' इत्यनुवर्तते, तद्बाधनार्थं चेदम् । धनुष्खाता नदी ।**

**कुद्दालखाता नगरी[1] । हस्तिमृदिता भूमिः[2] । 'तृतीया कर्मणि' ( ६.२.४८ ) इति प्राप्तिरिह बाध्यते ।**

**न्यासः**

**संज्ञायामनाचितादीनाम् ॥ उपहूत इति ।** ह्वेञो निष्ठा, 'वचिस्वपि' इत्यादिना संप्रसारणम्, 'हलः' इति दीर्घः । **परिजग्ध इति ।** 'अदो जग्धिर्ल्यप्ति किति' इत्यदेर्जग्धिरादेशः । 'झषस्तथोर्धोऽधः' इति धत्वम् । **कर्मणि क्त इति ।** भवतेरकर्मकत्वात् कर्मनिष्ठा नोपपद्यत इति सम्भूत इति कर्तरीयं निष्ठेति कस्यचिद् भ्रमः स्यात्, अवस्तन्निराकरणायाह—**सम्भूत इति ।** अनेकार्थत्वाद्धातूनां भवतिरत्र प्राप्तौ वर्तते । ये च प्राप्त्यर्थास्ते नियोगतः प्राप्त्यैव कर्मणा सकर्मका भवन्ति । यथा—'णीञ् प्रापणे' इत्येवमादयः । तस्मात् प्राप्त्यर्थाद् भवतेः सम्भूत इत्यत्र कर्मणि क्तः ।

किं पुनः कारणं कर्मणि क्त इष्यते ? इत्याह—**गतिरनन्तर इत्यत्र कर्मणीत्यनुवर्तते ।** ततः किम् ? इत्याह—**तद्बाधनार्थं चेदमिति ।** 'गतिरनन्तरः' इत्यत्र हि कर्मणीत्यनुवर्तते, इदञ्च सूत्रम्, तद् 'गतिरनन्तरः' इत्यस्यैव बाधनार्थम्म् । एवं चैतद् गतिस्वरस्य बाधकं भवति, यदि कर्मणि क्तो विहितः । तदन्तस्योत्तरपदस्यानेनान्तोदात्तत्वं विधीयते, नान्यथा । तस्मात् सम्भूत इत्यत्र कर्मणि क्तो द्रष्टव्य इत्यभिप्रायः । **धनुष्खातेति ।** 'खनु अवदारणे', 'जनसनखनाम्' इत्यात्वम् । 'कर्तृकरणे कृता बहुम्' इति समासः । एवं **कुद्दालखातेत्येव**मादावपि । धनुशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । कुद्दालशब्दः 'लघावन्ते' इत्यादिना मध्योदात्तः । **हस्तिमृदितेति ।** 'मृद क्षोदे' हस्तिशब्दः 'हस्ताज्जातौ' इवीनिप्रत्ययान्तत्वादन्तोदात्तः ।

**पदमञ्जरी**

**संज्ञायामनाचितादीनाम् ॥** सम्भूतादयः शब्दा रामायणादीनां संज्ञाः, रामायणशब्दो नपुंसकलिङ्गः, प्रायेण तु पुंल्लिङ्गः पठ्यते । **उपहूत इति ।** 'ह्वेञो' ( धा० पा० १००८ ) निष्ठायां यजादित्वात् सम्प्रसारणम् । **परिजग्ध इति ।** अदो जग्धिरादेशः । **प्राप्त्यर्थाद्भवतेरिति ।** चुरादौ आधृषाद्वा' ( धा० पा० १८०५ अनन्तरम् ) इत्यधिकारे 'भू प्राप्तावात्मनेपदी' ( धा० पा० १८४४ ) इति पठ्यते ।

किं पुनः कारणं प्रयत्नेन कर्मणि क्त उपपाद्यते ? अत आह—**गतिरनन्तर इत्यत्र हीति । तद्बाधनार्थञ्चेदमिति ।** प्रकृतोदाहरणाभिप्रायमेतद्, न सूत्राभिप्रायम् । **धनुष्खातेति ।** 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम् ।

**भावबोधिनी**

संज्ञा-विषय में गति, कारक और उपपद से परे क्तान्त उत्तरपद अन्तोदात्त होता है आचित आदि को छोड़ कर । उदा०—सम्भूतो रामायणः । [ सामान्यतया रामायण शब्द नपुंसकलिङ्ग है किन्तु इससे कहीं-कहीं पुंल्लिङ्ग भी ज्ञात होता है । ] उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः । सम्भूतः—यहाँ प्राप्त्यर्थक भू धातु से कर्म अर्थ में 'क्त' प्रत्यय है ।

'गतिरनन्तरः' ( ६।२।४९ ) इसमें 'कर्मणि' इसकी अनुवृत्ति होती है । इसका बाध करने के लिये यह सूत्र है । उदा०—धनुष्खाता नदी । कुद्दालखाता नदी ( कुद्दालखातं नगरम् ) । हस्तिमृदिता भूमिः । इनमें 'तृतीया कर्मणि' ( ६।२।४८ ) इसकी प्राप्ति का यहाँ बाध होता है । [ अतः पूर्वपद का प्रकृतिस्वर न होकर उत्तरपद अन्तोदात्त होता है । ]

१. कुद्दालखातं नगरमिति पाठान्तरम् ।

२. 'कृषिः' इति पाठा० ।

अनाचितादीनामिति किम्? आचितम्। पर्याचितम्। आस्थापितम्। परिगृहीतम्। निरुक्तम्। प्रतिपन्नम्। प्रश्लिष्टम्। उपहतम्। उपस्थितम्॥

ॐ संहिताऽगवि ॐ ( ग० सू० १७१ )। संहिताशब्दो यदा गोरन्यस्य संज्ञा, तदाऽन्तोदात्तो न भवति। यदा तु गोः संज्ञा, तदाऽन्तोदात्त एव॥

## २८१०. प्रवृद्धादीनां च ॥ १४७ ॥ ( ३८८१ )

प्रवृद्धादीनां च क्तान्तमुत्तरपदमन्तोदात्तं भवति। प्रवृद्धं यानम्। प्रवृद्धो वृषलः। प्रयुक्ताः सक्तवः।

आकर्षेऽवहितः। अवहितो भोगेषु। खट्वारूढः। कविशस्तः ( तै० सं० २.५.९.२ )।

### न्यासः

आस्थापितमिति। तिष्ठतेर्णिच्, 'अर्त्तिह्री' इत्यादिना पुक्। परिगृहीतम्। 'ग्रहोऽलिटि दीर्घः'। निरुक्तम्। 'वच परिभाषणे', 'वचिस्वपि' इत्यादिना संप्रसारणम्, 'चोः कुः'। प्रतिपन्नमिति। 'पद गतौ', 'रदाभ्याम्' इति नत्वम्। प्रश्लिष्टमिति। 'श्लिष आलिङ्गने'। उपद्रुतमिति। 'दु द्रु गतौ'। उपस्थितमिति। 'द्यतिस्यति' इत्यादिनेत्त्वम्। संहितेति। दधातेर्हिरादेशः॥ १४६॥

प्रवृद्धादीनाञ्च॥ गतिस्वरे प्राप्त इदं वचनम्। प्रवृद्धमिति। 'वृधु वृद्धौ'। प्रयुता इति। 'यु मिश्रणे'। अवहितमिति। पूर्ववद्धातेर्हिरादेशः। खट्वारूढ इति। 'रुह बीजजन्मनि', झषस्तथोर्धोऽधः' 'ढो ढे लोपः', 'ढ्रलोपे पूर्वस्य दीर्घोऽणः', 'खट्वा क्षेपे' इति समासः। अस्य 'अहीने द्वितीया' इति पूर्वपदप्रकृतिस्वरे प्राप्त इह पाठः। कविशस्त इति। 'शसु हिंसायाम्', 'कर्तृकरणे कृता बहुलम्' इति समासः। अस्यापि 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वर एव।

### पदमञ्जरी

'चिञ् चयने', ( धा० पा० १२५१ ) 'ष्ठा गतिनिवृत्तौ', ( धा० पा० ९२८ ) ण्यन्तः केवलश्च, 'ग्रह उपदाने, ( धा० पा० १५३३ ) वच परिभाषणे', ( धा० पा० १०६३ ) 'पद गतौ', ( धा० पा० ११६९ ) 'श्लिष आलिङ्गने', ( धा० पा० ११८६ ) 'डुधाञ् धारणपोषणयोः', ( धा० पा० १०९२ )—सर्वत्र कर्मणि क्तः, एते आचितादयः।

संहिताऽगवीति गणसूत्रम्, तद् व्याचष्टे—यदा गोरन्यस्येति॥ १४६॥

प्रवृद्धादीनां च॥ 'वृधु वृद्धौ', ( धा० पा० ७५९ ) 'यु मिश्रणे', ( धा० पा० १०३३ ) 'डुधाञ् धारणे', ( धा० पा० १०९२ ) 'रुह बीजजन्मनि', ( धा० पा० ८५९ ) 'शसु हिंसायाम्' ( धा० पा० ७२७ )। खट्वारूढ

### भावबोधिनी

आचित आदि को छोड़कर—इसका क्या फल है? आचितम्। पर्याचितम्। आस्थापितम्। परिगृहीतम्। निरुक्तम्। प्रतिपन्नम्। प्रश्लिष्टम्। उपहतम्। उपस्थितम्।

ॐ संहिता जब गोभिन्न में हो ॐ संहिता शब्द जब गो से भिन्न अर्थ की संज्ञा होती है तब अन्तोदात्त नहीं होता है, परन्तु जब गो की संज्ञा होती है तब अन्तोदात्त ही होता है। [ इनमें उत्तरपद का अन्तोदात्त नहीं होता है। पूर्वपद का अव्ययस्वर होता है। ] ॥ १४६॥

प्रवृद्ध आदि का क्तान्त उत्तरपद अन्तोदात्त होता है। उदा०—प्रवृद्धं यानम्। प्रवृद्धो वृषलः। प्रयुक्ताः सक्तवः। आकर्षेऽवहितः। अवहितो भोगेषु। खट्कारूढः। कविशस्तः।

यानादीनामत्र गणे पाठः प्रायोवृत्तिप्रदर्शनार्थः, न विषयनियमार्थः। यानादिभ्योऽन्यत्रापि तेषामन्तोदात्तत्वं भवत्येव। विषयनियमार्थ एवेत्येके।

असंज्ञार्थोऽयमारम्भः।

आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्यः। तेन 'पुनरुत्स्यूतं वासो देयम्' ( मै० सं० १.७.२ ), 'पुनर्निष्कृतो रथः ( तै० सं० १.५.२.४ )—इत्येवमादि सिद्धं भवति॥

## २८११. कारकाद्दत्तश्रुतयोरेवाशिषि॥ १४८॥ ( ३८८२ )

'संज्ञायाम्' इति वर्त्तते, 'क्तः' इति च। संज्ञायां विषये आशिषि गम्यमानायां कारकादुत्तरयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो भवति। देवा एनं देयासुर्देवदत्तः। विष्णुरेनं श्रूयाद् विष्णुश्रुतः।

### न्यासः

**यानादीनामिति।** आदिशब्देन वृषादीनां ग्रहणम्। यानादीनामर्थानां य इह पाठः, स प्रवृद्धादीनां यानादिष्वर्थेषु प्रायो बाहुल्येन या वृत्तिस्तस्याः प्रदर्शनार्थम्। न तु प्रवृद्धस्य यानवृषलयोरेवार्थयोरन्तोदात्तत्वं भवति। प्रयुक्तशब्दस्य सक्तुष्वेवेतीत्येवमादिषु विषयनियमार्थः। तेन किं भविष्यति ? इत्याह **यानादिभ्योऽन्यत्रापीत्यादि। विषयनियमार्थ इत्येक इति।** तेषामनेन यानादिभ्योऽन्यत्र न भवितव्यम्।

**असंज्ञार्थोऽयमारम्भ इति।** संज्ञायां पूर्वेणैव सिद्धत्वात्।

**आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्य इति।** कुत एतत् ? आकृतिगणतां तस्य सूचयितुमनुक्तसमुच्चयार्थस्य चकारस्येह करणात् आकृतिगणत्वे यत् सिद्धं भवति, तद् दर्शयितुमाह—**पुनरुत्स्यूतं वास इत्यादि।** 'षिवु तन्तुसन्ताने', 'च्छ्वोः शूडनुनासिके च', इत्यूठ्, यणादेशः। **पुनर्निष्कृत इति।** 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम्॥ १४७॥

**कारकाद् दत्तश्रुतयोरेवाशिषि॥ देवदत्त इति।** 'आशिषि लिङ्लोटौ' इति वर्तमाने 'क्तिच् क्तौ च

### पदमञ्जरी

**इति।** 'खट्वा क्षेपे' इति समासः। नैतदिह पठितव्यमिति 'अहीने द्वितीया' इत्यत्रावोचाम। कविभिः शस्तः, 'तृतीया कर्मणि' इत्यस्यापवादः।

**प्रायोवृत्तिप्रदर्शनार्थ इति।** प्रायो बाहुल्येन या वृत्तिर्यानादिष्वर्थेषु तस्याः प्रदर्शनार्थ इत्यर्थः।

**पुनरुत्स्यूतमिति।** सीव्यतेः 'च्छ्वोः शूडनुनासिके' इति ऊठ्, 'पुनश्चनसोश्छन्दसि' ( वा० ७० ) इति गतिसंज्ञायां समासः॥ १४७॥

**कारकादत्तश्रुतयोरेवाशिषि॥** 'संज्ञायामनाचितादीनाम्' इति विहितमन्वोदात्तत्वमनेन नियम्यते, 'देवा

### भावबोधिनी

यहाँ गण में यान आदि का पाठ उन शब्दों के प्रायोवृत्ति ( प्रायिक अर्थ ) का प्रदर्शन करने के लिये है, विषय-नियम के लिये नहीं है। यानादि से भिन्न अर्थों में भी अन्तोदात्त होता ही है। कुछ लोग यह कहते हैं कि इनका उल्लेख विषयनियम के लिये ही है। [ अतः अन्य अर्थ में उत्तरपद अन्तोदात्त नहीं होता है। ]

संज्ञा से भिन्न अर्थ के लिये यह सूत्र बनाया गया है। [ क्योंकि संज्ञा अर्थ में तो पूर्ववर्ती सूत्र द्वारा ही सिद्ध है। ]

प्रवृद्धादि आकृतिगण समझना चाहिए। इस कारण—पुनरुत्स्यूतं वासो देयम्, पुनर्निष्कृतो रथः—इस प्रकार के प्रयोगों में भी उत्तरपद अन्तोदात्त सिद्ध हो जाता है॥ १४७॥

'संज्ञायाम्' और 'क्त' इनकी अनुवृत्ति होती है। संज्ञाविषय में आशीर्वाद गम्यमान रहने पर कारक से उत्तरवर्त्ती दत्त और श्रुत इन्हीं दो क्तान्तों का अन्त उदात्त होता है। उदा०—देवा एनं देयासुः—देवदत्तः। विष्णुः एनं श्रूयात्—

**कारकादिति किम्? कारकान्नियमो मा भूत्—सम्भूतो रामायणः। दत्तश्रुतयोरिति किम्? देवपालितः। एतस्मान्नियमादत्र 'संज्ञायामनाचितादीनाम्' (६.२.१४६) इत्यन्तोदात्तत्वं न भवति, 'तृतीया कर्मणि' (६.२.४८) इत्येवात्र भवति।**

**एवकारकरणं किम्? कारकावधारणं यथा स्याद्, दत्तश्रुतावधारणं मा भूत्। अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति—संश्रुतः, विश्रुतः।**

**न्यासः**

संज्ञायाम्' इति क्तः। 'दो दद् घोः' इति ददादेशः, पूर्ववत् तृतीयासमासः। देवशब्दः पचाद्यजन्तत्वाच्चित्-स्वरेणान्तोदात्तः। विष्णुशब्दोऽपि प्रातिपदिकस्वरेण। ब्रह्मशब्दो मनिन्प्रत्ययान्तत्वादाद्युदात्त इत्युक्तम्।

**सम्भूतो रामायण इति।** कारकादित्यनुच्यमाने 'गतिकारकोपपदात् कृत्' इत्यधिकाराद् यथैव कारकान्नियमो भवत्येवं गतेरपि स्यात्, कारकग्रहणे तु सति न भवति। तेन गतेः परस्य 'संज्ञायामनाचितादीनाम्' अन्तोदात्तत्वं भवेदेव। अस्मिंस्तूच्यमाने सत्येष विषयो न भवति; नियमेन व्यावर्त्तितत्वात्। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वर एव भवति।

**एवकारकरणं किमिति।** सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारकरणं नियमार्थो भविष्यतीत्यभिप्रायः। **कारकावधारणमित्यादि।** असति ह्येवकारे कारकादेवेत्येषोऽपि नियमः स्यात्। तथा चैवकारस्ततोऽन्यत्राव-धारणमिति दत्तश्रुतावधारणं स्यात्—कारकादेव दत्तश्रुतयोरिति। एवं च कारकाद् दत्तश्रुतयोरनन्तरं क्रियमाणे कारकावधारणमिष्टं भवति, न दत्तश्रुतावधारणमिष्टम्। तेनैवकारः कृतः। किं पुनः कारणं कारकावधारणमिष्यते, न दत्तश्रुतावधारणम्? इत्याह—**अकारकादपि** हीत्यादि। **देवैः खाता देवखातेति।**

**पदमञ्जरी**

'एनं देयासुः' इत्येवं प्रार्थितैर्देवैर्दत्तो देवदत्तः, 'आशिषि लिङ्लोटौ' इति वर्तमाने 'क्तिच् क्तौ च संज्ञायाम्' इति क्तः, 'दो दद्धोः'।

**सम्भूतो रामायण इति।** 'कारकात्' इत्यनुच्यमाने 'गतिकारकोपपदात्' इति त्रितयाधिकाराद्यथैव कारकान्नियमो भवति, तथा गतेरपि स्यात्।

**एवकारकरणं किमिति।** सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति प्रश्नः।

**भावबोधिनी**

विष्णुश्रुतः। [ यहाँ आशीः अर्थ में 'क्तिच्क्तौ च संज्ञायाम्' सूत्र से क्त प्रत्यय, दा का दत् करने पर 'दत्त' बना है। क्तान्त का अन्त उदात्त हो जाता है। ]

कारक से परे—इसका क्या फल है? कारक से नियम न होने लग जाय—सम्भूतो रामायणः। [ यहाँ कारक नहीं है। सूत्र में 'कारक' न रहने पर गति, कारक, उपपद—तीनों का नियम हो जाता। और गति से परे का भी वर्जन होने लगता है। जब 'कारक' है तो केवल उसी का नियम होता है। गति और उपपद का नहीं। अतः 'सम्भूतः' का उत्तरपद अन्तोदात्त हो जाता है। ]

दत्त और श्रुत का ही—इसका क्या लाभ है? देवपालितः। [ देवा एनं पालयासुः—अर्थ होने से आशीरर्थ है किन्तु 'दत्त' या श्रुत न होने से यह सूत्र नहीं लगता है। तब क्या होता है—यही लिख रहे हैं—] इस नियम के कारण इस उदाहरण में 'संज्ञायामनाचितादीनाम्' सूत्र से अन्तोदात्त नहीं होता है 'तृतीया कर्मणि' (६।२।४८) से [ पूर्वपद का स्वर ही ] होता है।

एवकारकरण का क्या प्रयोजन है? जिससे कारक का अवधारण हो सके, 'दत्त' और 'श्रुत' का अवधारण न

**आशिषीति किम् ? अनाशिषि नियमो मा भूत् ( म० भा० )। देवैः खाता देवखाता।**

**कारकाद्दत्तश्रुतयोराशिष्येव—इत्ययमप्यत्र नियम इष्यते, तेनाहतो नदति देवदत्त इत्यत्र न भवति। देवदत्त इति कस्यचित् शङ्खस्य नाम। तत्र 'तृतीया कर्मणि' (६ २.४८) इति पूर्वपदप्रकृतिस्वरत्वमेव भवति॥**

## २८१२. इत्थम्भूतेन कृतमिति च॥ १४९॥ ( ३८८३ )

**इमं प्रकारमापन्नः = इत्थम्भूतः। 'इत्थम्भूतेन कृतम्' इत्येतस्मिन्नर्थे यः समासो वर्त्तते तत्र क्तान्तमुत्तरपदमन्तोदात्तं भवति। सुप्तप्रलपितम्। उन्मत्तप्रलपितम्। प्रमत्तगीतम्। विपन्नश्रुतम्।**

### न्यासः

नात्राशीर्विद्यते, तेनाशिषीति वचनान्नियमो न भवति। ततश्च 'संज्ञायाम्' इत्यादिनान्तोदात्तत्वं भवत्येव।

**कारकाद् दत्तश्रुतयोराशिष्येवेत्ययमप्यत्र नियम इति।** कथं पुनरेकेन योगेन हि नियमद्वयं लभ्यते, एकः पुनरत्र योग इति? यथैव हि श्वेतो धावतीति कश्चित् तन्त्रेण वाक्यद्वयमुच्चारयति तथेहाप्याचार्यस्तन्त्रे वाक्यमुच्चारितवान्। तत्रैकेन योगेन कारकाद् दत्तश्रुतयोरेवाशिषीत्येव नियमो भवति, अपरेण तु कारकाद् दत्तश्रुतयोराशिष्येवेत्येषः। तेनाहतो नदति देवदत्त इत्यत्रानाशिषि न भवति। **देवदत्त इति कस्यचिच्छङ्खस्य नामेति।** यदृच्छाशब्दतां देवदत्तस्य दर्शयन्नाशीरिह न दत्त इति प्रकाशयति॥ १४८॥

**इत्थम्भूतेन कृतमिति च॥** इतिकरणोऽर्थनिर्देशार्थः। **आपन्न इति।** प्राप्त इत्यर्थः। **सुप्तप्रलपितमिति।** 'रप लप व्यक्तायां वाचि', अत्र सुप्तत्वं प्रकारमापन्नम्, तेन प्रलपितं कृतम्, तत्र समासो वर्तते। **उन्मत्तप्रलपितमिति।** अत्राप्युन्मत्तत्वं प्रकारमापन्नं तेन प्रलपितं कृतम्। **प्रमत्तगीतमिति।** अत्रापि प्रमत्तत्वं प्रकारमापन्नं तेन गीतं कृतम्। 'कै गै शब्दे', 'घुमास्था' इत्यादिसूत्रेणेत्वम्। **विपन्नश्रुतमिति।** अत्रापि विपन्नत्वं प्रकारमापन्नं

### पदमञ्जरी

**कारकावधारणमित्यादि।** असति ह्येवकारं विपरीतोऽपि नियमः स्यात्—कारकादेव दत्तश्रुतयोरिति। एवं चाकारकाद् दत्तश्रुतयोर्न स्यात्, इष्यते च, तथा कारकस्यानियतत्वाद् देवपालित इत्यादावन्तोदात्तप्रसङ्गः। अतः कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं मा भूदित्येवमर्थं [1]एवकारकरणमित्यर्थः। **अयमपि नियम इष्यत इति।** एतच्च तन्त्रेण सूत्रद्वयोच्चारणादेकसूत्रेऽपि आशिष्येवेति भिन्नक्रमत्वादेवकारस्य लभ्यते॥ १४८॥

**इत्थम्भूतेन कृतमिति च॥ सुप्तप्रलपितमित्यादि।** कथं पुनरेतान्युदाहरणानि, यावता कृतमित्युच्यते, न च प्रलपितादीनि कृतानि, अभूतप्रादुर्भाव एव हि करोतिर्वर्तते, ततश्च सुप्रकृतं सुप्रभाषितं सुप्रोत्पादितमित्यादि-

### भावबोधिनी

हो। कारकभिन्न से भी परे दत्त और श्रुत का अन्त उदात्त होता है—संश्रुतः, विश्रुतः। [ यहाँ गति से परे का अन्त उदात्त हो जाता है। ]

'आशीष में—इसका क्या लाभ है? अनाशीष = आशीर्भिन्न अर्थ में नियम न होने लगे—देवैः खाता—देवखाता। [ यहाँ 'संज्ञायाम्' पूर्व सूत्र से अन्तोदात्त होता ही है। ]

'कारक से परे दत्त और श्रुत का आशीः अर्थ में ही'—ऐसा नियम भी यहाँ इष्ट है। इस कारण—आहतो नदति देवदत्तः—यहाँ नहीं होता है। 'देवदत्त' यह किसी विशेष शंख की संज्ञा ( नाम ) है। [ आशीः अर्थ नहीं है। ] इसमें 'तृतीया कर्मणि' ( ६।२।४८ ) से पूर्वपद का प्रकृतिस्वर ( अन्तोदात्त ) होता है॥ १४८॥

इस प्रकार = विशेषण को प्राप्त = इत्थम्भूत। 'इत्थम्भूत द्वारा किया गया' अर्थ में जो समास है उसमें क्तान्त उत्तरपद अन्तोदात्त होता है। उदा०—सुप्तप्रलपितम्। उन्मत्त-प्रलपितम्। प्रमत्तगीतम्। विपन्नश्रुतम्। [ सुप्तत्वरूप प्रकार = विशेषण को प्राप्त पुरुष द्वारा प्रलपित। इसी प्रकार सभी में तत्तत् प्रकार को प्राप्त अर्थ बनाना चाहिए। ]

---

१. प्रकाशितपाठे 'एवकार' इत्यंशस्त्रुटितः प्रतिभाति।

'कृतम्' इति क्रियासामान्ये करोतिर्वर्त्तते, नाभूतप्रादुर्भाव एव; तेन प्रलपितादयपि कृतं भवति। 'तृतीया कर्मणि (६.२.४८) इत्यस्यायमपवादः।

भावे तु यदि प्रलपितादयः, तदा थाथादिस्वरेणैव (६.२.१४४) सिद्धमन्तोदात्तत्वं भवति॥

## ३८८३. अनो भावकर्मवचनः ॥ १५० ॥ ( १५० )

अनप्रत्ययान्तमुत्तरपदं भाववचनं कर्मवचनं च कारकात्परमन्तोदात्तं भवति। ओदनभोजनं सुखम्। पयःपानं सुखम्। चन्दनप्रियङ्गुकालेपनं सुखम्। कर्मवचनः—राजभोजनाः शालयः। राजाच्छादनानि वासांसि।

### न्यासः

तेन श्रुतं कृतम्। सर्वत्र 'कर्तृकरणे कृता बहुलम्' इति समासः। तत्र सुप्तशब्दः प्रत्ययस्वरेणान्तोदात्तः। प्रलपितशब्दो यदि कर्मणि निष्ठा, ततः 'गतिरनन्तरः' इति गतिस्वरेणाद्युदात्तः; अथ भावे, तदस्थाथादिस्वरेणान्तोदात्तः। एवमुत्पन्नप्रकारा आपन्नविपन्नादिशब्दा अपि थाथादिस्वरेणैवान्तोदात्ताः। 'गतिरनन्तरः' इत्येतत् त्विह न प्रवर्तते; तत्र कर्मणीत्यनुवृत्तेः। इहाकर्मकाद्धातोः कर्मणि क्तप्रत्ययस्यानुपपत्तेः। गीतश्रुतशब्दौ सुप्तशब्दवदन्तोदात्तौ। अथ कथमेतान्युदाहरणान्युपलभ्यन्ते, यावतेत्थम्भूतेन कृतमित्येतस्मिन्नर्थ एतत् कार्यमुच्यते, न चायमत्रार्थः सम्भवति, प्रलपितादीनामकृतार्थत्वात्? प्रकृते प्रलपनादौ करोतेरप्रवृत्तेः। अभूतप्रादुर्भाव एव हि करोतिर्वर्तते, न प्रलपनादौ।

कस्मान्न प्रलपनादिकृतम्? इत्येतच्चोद्यमपाकर्तुमाह—**कृतमिति क्रियासामान्यमित्यादि**। न हि करोतिरभूतप्रादुर्भाव एव वर्तते? किं तर्हि? **क्रियासामान्येऽपि**। तच्च क्रियासामान्यं प्रलपनादप्यस्ति। तेन प्रलपनाद्यपि कृतं भवति। **तृतीया कर्मणीत्यस्येति**। पूर्वपदप्रकृतिस्वरभाव इति।

**यदीत्यादिना** यदा भावे निष्ठा, तदास्य योगस्यानुपयोगं दर्शयति ॥ १४९ ॥

**अनो भावकर्मवचनः** ॥ 'कारकात्' इति वर्तते, 'अनः' प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं विज्ञायते? इत्याह—**अनप्रत्ययान्तमित्यादि**। **ओदनभोजनमित्यादौ** सर्वत्र षष्ठीसमासः। षष्ठी तु कृद्योगलक्षणा कर्मणि।

### पदमञ्जरी

कमेवोदाहर्तव्यम्? अत आह—**कृतमिति क्रियासामान्ये करोतिर्वर्तत इति**। ततश्च यथा 'क्रियावचनो धातुः', 'क्रियायां क्रियार्थायाम्' इत्यादौ विशेषाणामपि ग्रहणं भवति, तद्वदत्रापि। अभूतप्रादुर्भावः = निष्पादनम् ॥ १४९ ॥

**अनो भावकर्मवचनः** ॥ पयःपानादीनामुपपदसमासः। राजभोजनादौ षष्ठ्या समासः।

### भावबोधिनी

[ कृतम् = अविद्यमान को उत्पन्न किया—यह अर्थ होता है। परन्तु उदाहरणों में ऐसी प्रतीति नहीं है—] 'कृतम्' यहाँ 'कृ' धातु क्रियासामान्य अर्थ में विद्यमान है, अभूत के प्रादुर्भाव अर्थ में नहीं है, इस कारण प्रलपित आदि भी 'कृत' ( किये हुए ) हो जाते हैं। यह 'तृतीया कर्मणि' ( ६।२।४८ ) का अपवाद है। किन्तु भाव अर्थ में क्त-प्रत्ययान्त प्रलपित आदि यदि हैं तो उनमें 'थाथादि ( ६।४।१४४ ) स्वर से अन्तोदात्त सिद्ध ही है ॥ १४९ ॥

कारक से परे होने वाला अनप्रत्ययान्त उत्तरपद भाववचन और कर्मवचन ( भाव या कर्म में क्त प्रत्ययान्त ) दोनों अन्तोदात्त होते हैं। उदा० भाव में—ओदनभोजनं सुखम्। पयः पानं सुखम्। चन्दनप्रियङ्गुकालेपनं सुखम्। [ इनमें भाव अर्थ में ल्युट् = अन है। ] कर्मवचन में उदा०—राजभोजनाः शालयः। राजाच्छादनानि वासांसि। [ राज्ञा भुज्यन्ते, राज्ञा आच्छाद्यन्ते—इन अर्थों में कर्म में ल्युट् = अन है। ]

'कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्, ( ३.३.११६ ) इत्ययं योग उभयथा वर्ण्यते—कर्मण्युपपदे भावे ल्युड् भवति, कर्मण्यभिधेये ल्युड् भवतीति। तत्र पूर्वस्मिन् सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि।

अन इति किम् ? हस्तहार्यमुदश्वित्। भावकर्मवचन इति किम् ? दन्तधावनम्। करणे ल्युट्।

कारकादित्येव—निदर्शनम्। अवलेखनम्।
सर्वेषु प्रत्युदाहरणेषु प्रकृतिस्वरो भवति॥

## २८१४. मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः॥ १५१ ॥ ( ३८८५ )

मन्नन्तम्, क्तिन्नन्तम्, व्याख्यान, शयन, आसन, स्थान—इत्येतानि, याजकादयः, क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवति। मन्—रथवर्त्म, शकटवर्त्म। क्तिन्—प्राणिनिकृतिः, आपिशलिकृतिः। व्याख्यान–

**न्यासः**

राजभोजना इत्यादौ तु कर्तरि। ओदनशब्दः 'लघावन्ते' इत्याद्युदात्तः। भोजनमित्यादिकं तूत्तरपदं लित्स्वरेणाद्युदात्तम्। पयःशब्दः 'नब्विषयस्य' इत्याद्युदात्त एव। चन्दनप्रियङ्गुकाशब्दो द्वन्द्वः, तेन समासस्वरेणान्तोदात्तः। लेपनमिति। 'लिप उपदाहे' इत्यस्यैवं रूपम्। राजशब्द उक्तस्वरः। आच्छादनशब्दः 'छद अपवारणे' इत्यस्य रूपम्।

कर्मणि च येनेत्यादिनैकेनैव योगेन भाववचनः कर्मवचनश्च ल्युड् भवतीति दर्शयति।

हस्तहार्यमिति। हस्तशब्दः 'हसिमृग्रिण्वामिदमिपूधुर्वीभ्यस्तन्' इति स्तन्प्रत्ययान्तः, तेनाद्युदात्तः। हार्यशब्दस्तु 'ऋहलोर्ण्यत्' इति ण्यदन्तस्तित्स्वरेणान्तस्वरितः। दन्तधावनमिति। 'धावु गतिशुद्धयोः' इत्यस्मात् करणे ल्युट्। दन्तशब्दः 'स्वाङ्गशिटाम्' इत्याद्युदात्तः।

निदर्शनमिति। दृशेर्भावे ल्युट्। अवलेखनमिति। अत्रापि लिखेः।

सर्वेषु प्रत्युदाहरणेष्वित्यादि। एतेन 'गतिकारकोपपदानां कृत्' इत्यस्यायमपवाद इति दर्शयति॥१५०॥

मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः॥ मन्क्तिन्निति प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणपरि-

**पदमञ्जरी**

सर्वेषु प्रत्युदाहरणेष्वित्यादि। एतेन गतिकारकोपपदात्' इत्यस्यायमपवाद इति दर्शयति॥ १५०॥

मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः॥ रथवर्त्मेति। वृतेरधिकरणे मनिन्, कर्तरि षष्ठ्या

**भावबोधिनी**

"कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्" ( ३।३।११६ ) इस सूत्र की व्याख्या दोनों प्रकार से की जाती है—( १ ) कर्म उपपद रहते भाव में ल्युट् होता है। ( २ ) कर्म अभिधेय रहने पर ल्युट् होता है। इन में प्रथम सूत्रार्थ में भाववचन के उदाहरण हैं और द्वितीय अर्थ में कर्मवचन के उदाहरण हैं।

अन—इसका क्या फल है ? हस्तहार्यम् उदश्वित्। [ यहाँ ण्यत् है अन नहीं है। तित् स्वर से अन्तोदात्त होता है। ] भावकर्मवचन में—इसका क्या फल है ? दन्तधावनम्। करण में ल्युट् = अन है। [ दन्ताः धाव्यन्तेऽनेन यहाँ करण अर्थ है। ]

कारक से परे ही—निदर्शनम्। अवलेखनम्। [ यहाँ गति से परे हैं। अतः पूर्वपद का प्रकृतिस्वर होता है।

पूर्वोक्त सभी प्रत्युदाहरणों में प्रकृतिस्वर होता है॥ १५०॥

मन्नन्त, क्तिन्नन्त, व्याख्यान, शयन, आसन, स्थान—ये शब्द, याजकादिशब्द और क्रीत शब्द उत्तरपद अन्तोदात्त होते हैं। उदा०—(१) मन्—रथवर्त्म, शकटवर्त्म। [ वृत् से मनिन् = मन् = वर्त्मन्, अन्तोदात्त होता है। ] (२) क्तिन्—

ऋगयनव्याख्यानम्, छन्दोव्याख्यानम् । शयन—राजशयनम्, ब्राह्मणशयनम् । आसन—राजासनम् । ब्राह्मणासनम् । स्थान—गोस्थानम्, अश्वस्थानम् । याजकादिः—ब्राह्मणयाजकः । क्षत्त्रिययाजकः । ब्राह्मणपूजकः । क्षत्त्रियपूजकः । याजकादयो ये 'याजकादिभिश्च' ( २.२.९ ) इति षष्ठीसमासार्थाः पठ्यन्ते त एवेह गृह्यन्ते । क्रीत—गोक्रीतः । अश्वक्रीतः ।

कृत्स्वरापवादोऽयं योगः । क्रीतशब्दे तु 'तृतीया कर्मणि' ( ६.२.४८ ) इत्यस्यापवादः ।

व्याख्यानशयनासनस्थानानामभावकर्मार्थं ग्रहणम् ।

**न्यासः**

भाषया तदन्तस्य ग्रहणं विज्ञायते, इत्याह—**मन्नन्तं क्तिन्नन्तञ्चेति** । **रथवर्त्मेत्यादयः** षष्ठीसमासाः । रथशब्दः क्थन्प्रत्ययान्त आद्युदात्त इत्युक्तम् । 'वृतु वर्तने' इत्यस्मान्मनिन् । तेन वर्त्मशब्द आद्युदात्तः । शकटशब्दः पयःशब्दश्च नित्वादाद्युदात्तः । पाणिन्यापिशलिशब्दाविञन्तत्वात् । कृतिशब्दोऽपि क्तिन्नन्तत्वात् । करणसाधनश्चायं व्याख्यानशब्दो ल्युडन्तः कृत्स्वरेण मध्योदात्तः । छन्दःशब्दः 'सर्वधातुभ्योऽसुन्' इति प्रत्ययग्रहणम् । तत्र कृते 'चन्देरादेश्चच्छः' इत्यसुन्प्रत्ययान्तत्वादाद्युदात्तः । अयन्त्यनेनेत्ययनम्, ऋचामयनम् । ऋचामिति कर्मणि षष्ठी । ऋगयनशब्दः कृत्स्वरेण मध्योदात्तः । **राजशयनमित्यादि** । शेरतेऽस्मिन्निति शयनम्, आसतेऽस्मिन्नित्यासनम्, ताभ्यां राजब्राह्मणशब्दयोः षष्ठीसमासः । राजब्राह्मणशब्दावुक्तस्वरौ । शयनासनशब्दौ लित्स्वरेणाद्युदात्तौ । अत्र कृद्योगलक्षणा पूर्ववदेव कर्तरि षष्ठी । एवं **गोस्थानमश्वस्थानमित्यत्रापि** । गवाश्वशब्दावुक्तस्वरौ । तिष्ठत्यस्मिन्निति स्थानं लित्स्वरेणाद्युदात्तम् । **ब्राह्मणयाजक** इत्यादौ कृद्योगलक्षणा कर्मणि षष्ठी । याजकादिषु ये ण्वुलन्ताः पठ्यन्ते, तेषु येऽनुपसर्गाः—याजकपूजकस्नापका इति, त आद्युदात्ताः । ये तु सोपसर्गाः—परिवेषकाध्यापकोद्वर्तकोत्सादका इति, ते कृत्स्वरेण मध्योदात्ताः । होतृभर्तृशब्दौ तृन्नन्तौ प्रयोजयतः । यौ तु तृजन्तौ, तयोः कृत्स्वरेणान्तोदात्तत्वं सिद्धम् । **गोक्रीतः, अश्वक्रीत इत्यादि** । 'कर्तृकरणे कृता' इति समासावेतौ । क्रीतशब्दः प्रत्ययस्वरेणान्तोदात्तः ।

**कृत्स्वरापवादो योग इति** । क्रीतशब्दादन्येषु मन्क्तिन्व्याख्यानादिषु । क्रीतशब्दे तु 'तृतीया कर्मणि' इत्यस्येति पूर्वपदप्रकृतिस्वरस्य ।

**पदमञ्जरी**

समासः । **पाणिनिकृतिरिति** । कर्मणि क्तिन्, पूर्ववत्समासः । **व्याख्यानशब्दः** करणसाधनः, शयनासनस्थान-

**भावबोधिनी**

पाणिनिकृतिः, आपिशलिकृतिः । [ क्तिन्प्रत्ययान्त हैं । ] ( ३ ) व्याख्यान—ऋगयनव्याख्यानम्, छन्दोव्याख्यानम् । (४) शयन—राजशयनम्, ब्राह्मणशयनम् । (५) आसन—राजासनम्, ब्राह्मणासनम् । (६) स्थान—गोस्थानम्, अश्वस्थानम् । [ व्याख्यान में करण अर्थ में ल्युट् है, शयन, आसन, स्थान में अधिकरण में ल्युट्=अन हैं । ]

(७) याजकादि—ब्राह्मणयाजकः । क्षत्रिययाजकः । ब्राह्मणपूजकः । क्षत्रियपूजकः । [ यहाँ कर्ता में ण्वुल्=अक प्रत्ययान्त हैं । ] जो याजकादि शब्द 'याजकादिभिः' ( २।२।९ ) इससे षष्ठीसमास के लिये पठित हैं, वे ही यहाँ लिये जाते हैं ।

(८) क्रीत—गोक्रीतः । अश्वक्रीतः ।

कृत्स्वर का अपवाद यह सूत्र है । 'क्रीत' शब्द में तो 'तृतीया कर्मणि' (६।२।४८) इसका अपवाद है ।

व्याख्यान, शयन, आसन, स्थान—इनका भाव और कर्म से भिन्न अर्थ के लिये ग्रहण है [ क्योंकि भाव और कर्म

कारकादित्येव—प्रकृतिः । प्रहृतिः ।

## २८१५. सप्तम्याः पुण्यम् ॥ १५२ ॥ ( २८८६ )

सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं भवति । अध्ययने पुण्यम् अध्ययनपुण्यम् । वेदे पुण्यं वेदपुण्यम् । 'सप्तमी' ( २.१.४० ) इति योगविभागात्समासः । 'तत्पुरुषे तुल्यार्थ' ( ६.२.२ ) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमित्यन्तोदात्तत्वं विधीयते । उणादीनां तु व्युत्पत्तिपक्षे—कृत्स्वरेणाद्युदात्तः पुण्यशब्दः स्यादिति ।

सप्तम्या इति किम् ? वेदेन पुण्यं वेदपुण्यम् ॥

### न्यासः

व्याख्यानशयनस्थानानामभावकर्मार्थं ग्रहणमिति । भावकर्मवचनस्यानन्तस्य 'अनो भावकर्मवचनः' इत्यनेनैव सिद्धत्वात् । प्रकृतिः, प्रहृतिरिति । अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्य प्रकृतिस्वरत्वमेव भवति । गतिसमासावेतौ ॥ १५१ ॥

सप्तम्याः पुण्यम् ॥ अध्ययनपुण्यमित्यादि । अध्ययनशब्दो ल्युडन्तः कृत्स्वरेण मध्योदात्तः । पुण्यम् 'नब्विषयस्य' इत्याद्युदात्तम् । विद्यतेऽनेनेति वेदः, घञ् । तेन वेदशब्दश्चाद्युदात्तः ।

तत्पुरुषे तुल्यार्थेत्यादि । एतद् 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इत्येवं पक्षमाश्रित्योक्तम् । इदानीं व्युत्पत्तिलक्षणमाश्रित्याह—उणादीनां त्वित्यादि । व्युत्पत्तिपक्षे हि पुण्यशब्दः 'पूञो यण् णुग् ह्रस्वश्च' इति यत्प्रत्ययान्तो व्युत्पाद्यते । तत्र यदीदं नारभ्येत तदा 'गतिकारक' इति कृत्स्वरेणाद्युदात्तोऽध्ययनमित्यादौ पुण्यशब्दस्य स्यात् । तस्मात् तदपवादोऽयमन्तोदात्तविधिरित्यभिप्रायः ।

वेदेन पुण्यं वेदपुण्यमिति । व्युत्पत्तिपक्षे 'तृतीया' इति योगविभागात् समासः, पूर्वपदप्रकृतिस्वरत्वञ्च । अव्युत्पत्तिपक्षे 'कर्तृकरणे कृता' इति समासः, कृत्स्वरेण पुण्यशब्दस्याद्युदात्तत्वञ्च ॥ १५२ ॥

### पदमञ्जरी

शब्दा अधिकरणसाधनाः । प्रकृतिः, प्रहृतिरिति । 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वर एवात्र भवति ॥ १५१ ॥

सप्तम्याः पुण्यम् । उणादीनां त्विति । 'अतः कृकमिकंस' इत्यत्र कमिग्रहणेनैव सिद्धे कंसग्रहणादुणादिषु पाक्षिकव्युत्पत्तिकार्यमिति भावः । 'पूञो यत्, णुक् ह्रस्वश्च', ( द० उ० ८.१६ ) पुण्यम् । ह्रस्वविधानादगुणत्वम् । 'यतोऽनावः' इत्याद्युदात्तत्वम् ॥ १५२ ॥

### भावबोधिनी

अर्थ वाले का तो 'अनो भावकर्मवचनः' ( ६।२।१५० ) से ही सिद्ध है । ]

कारक से ही—प्रकृतिः । प्रहृतिः । [ इनमें गति से परे होने से अव्ययस्वर (६।२।२) ही होता है । ] ॥ १५१ ॥

सप्तम्यन्त से परे 'पुण्य' यह उत्तरपद अन्तोदात्त होता है । उदा०—अध्ययने पुण्यम् – अध्ययनपुण्यम् । वेदे पुण्यम्—वेदपुण्यम् । इनमें 'सप्तमी' इस योगविभाग से समास हो जाता है । ''तत्पुरुषे तुल्यार्थ' ( ६।२।२ ) से पूर्वपद का प्रकृतिस्वर प्राप्त रहते इस अन्तोदात्तत्व का विधान किया जा रहा है । उणादि के व्युत्पत्तिपक्ष में—कृत्स्वर से 'पुण्य' शब्द आद्युदात्त हो जाता । [ इससे अन्तोदात्त हो जाता है । ]

सप्तम्यन्त से परे—इसका क्या फल है ? वेदेन पुण्यम्—वेदपुण्यम् । [ यहाँ तृतीयान्त के साथ समास है । अतः कृत्स्वर से पुण्य शब्द आद्युदात्त होता है । ] ॥ १५२ ॥

२८१६. ऊनार्थकलहं तृतीयायाः ॥ १५३ ॥ ( ३८८७ )

ऊनार्थान्युत्तरपदानि, कलहशब्दश्च तृतीयान्तात् पराण्यन्तोदात्तानि भवन्ति । माषोनम् । कार्षापणोनम् । माषविकलम् । कार्षापणविकलम् । कलह—असिकलहः । वाक्कलहः ।

तृतीयापूर्वपदप्रकृतिस्वरापवादो योगः ।

अत्र केचिदर्थं इति स्वरूपग्रहणमिच्छन्ति । धान्येनार्थो धान्यार्थः ।

ऊनशब्देनैव त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव तृतीयासमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थम् ॥

**न्यासः**

**ऊनार्थकलहं तृतीयायाः ॥ माषोनमिति ।** 'पूर्वसदृश' इत्यादिना तृतीयासमासः । **एवं कार्षापणोनमि-** त्यादावपि । 'कष खष शिष जष झष वष मष' इत्यस्माद् घञ्, तेन माषशब्द आद्युदात्तः । 'इण्सिञ्जिदीङुष्यविभ्यो नक्' इति, तेनोनशब्दोऽन्तोदात्तः । कार्षस्यापणः कार्षापणः । कार्षापणशब्दः समासस्वरेणान्तोदात्तः । विगतः कलोऽस्येति विकलः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन विकलशब्द आद्युदात्तः । **असिकलह इति ।** 'अच इः' इति वर्तमाने 'खनिकष्यज्यसि' इत्यादिना सिरन्तोदात्तः । 'कल गतौ', अस्मात् पचाद्यच् । कलयतीति कलः, कलं हन्तीति 'अन्येष्वपि दृश्यते' इति डः । तेन कलहशब्दोऽन्तोदात्तः ।

**अत्र केचिदित्यादि ।** तर्ह्यर्थ इति स्वरूपग्रहणम् एवं सत्यूनशब्देऽपि स्वरूपग्रहणं प्रसज्येत, ततश्च तदर्थानामन्येषां ग्रहणं न स्यात् ? इत्यत आह—**ऊनशब्देनैवेत्यादि ।** ऊनशब्देऽन्यमतानां विशेषं दर्शयति । अन्ये हि—अर्थग्रहणे नानर्थकानां ग्रहणं भवतीति मन्यन्ते । केचित्तु—'ऊनशब्देनैवार्थनिर्देशार्थेनार्थनिर्देशः प्रयोजनं यस्य स तथोक्तः । शब्दप्रधाने हि निर्देशे स्वरूपं ग्रहणं भवतीत्युक्तम् । इह चोन इत्यर्थप्रधाननिर्देशः । तेनोन-शब्दोऽर्थनिर्देशार्थः' इत्याहुः । तस्मात् तेनैव तदर्थानां ग्रहणम् । इतिकरणो हेतौ । यस्मादूनशब्देनैवार्थनिर्देशार्थेन तदर्थानां ग्रहणम्, तस्मादत्र केचिदर्थ इति स्वरूपग्रहणमिच्छन्ति । **धान्यार्थ इति ।** 'तृतीया तत्कृतार्थेन' इति समासः । 'धने धान्ये'—अस्माण्ण्यत् । धान्यमन्तस्वरितम् । अथ धाने साधु धान्यम्, 'प्राग्घिताद्यत्', तेन 'यतोऽनावः' इति धान्यमाद्युदात्तम् । अत्रार्थशब्दः 'ग्रामादीनाञ्च' इत्याद्युदात्तः ।

तृतीयाग्रहणं किमर्थम् ? अनूनम्, अकलह इत्यत्र मा भूदिति चेत् ? नैतदस्ति; इह हि प्रतिपदोक्तपरि-भाषयोनार्थकलहादीनां प्रतिपदोक्तो यः समासः स एव परिगृह्यते । तत् किमनूमकलह इत्येतन्निवृत्त्यर्थेन तृतीयाग्रहणेन ? इत्यत आह—**प्रतिपदोक्तत्वादित्यादि ।** गतार्थम् ॥ १५३ ॥

**पदमञ्जरी**

**ऊनार्थकलहं तृतीयायाः ॥** उदाहरणेषु 'पूर्वसदृश' इति तृतीयासमासः ।

**अत्र केचिदित्यादि ।** नन्वेवमूनशब्दस्यापि स्वरूपग्रहणं प्रसज्येत, ततश्च तदर्थानामन्येषां ग्रहणं न स्यात् ? अत आह—**ऊनशब्देनैव त्विति ।** अर्थनिर्देशार्थत्वं तु व्याख्यानादवसेयम् ॥ १५३ ॥

**भावबोधिनी**

तृतीयान्त से परे ऊन ( कम ) अर्थवाले उत्तरपद और कलह शब्द अन्तोदात्त होते हैं । उदा०—माषोनम् । कार्षापणोनम् । माषविकलम् । कार्षापणविकलम् । [ माषेण ऊनम्—आदि तृतीयान्त के साथ समास होते हैं । ] कलह—असिकलहः । वाक्कलहः । [ असिना कलहः, वाचा कलहः—तृतीयान्त के साथ समास है । ऊन शब्द और कलह शब्द अन्तोदात्त ही हैं । पुनः यह सूत्र अन्तोदात्त ही करता है । क्योंकि ] तृतीयान्त पूर्वपद के प्रकृतिस्वर का अपवाद यह सूत्र है । यह न होता तो ६।२।२ से पूर्वपद का प्रकृतिस्वर हो जाता । ]

कुछ विद्वान् 'अर्थ' इस स्वरूप का ग्रहण करना चाहते हैं—धान्येन अर्थः—धान्यार्थः । [ अन्त उदात्त होता है । ]

## २८१७. मिश्रं चानुपसर्गमसन्धौ ॥ १५४ ॥ ( ३८८८ )

'तृतीया' इति वर्त्तते। 'मिश्र'—इत्येतदुत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तं भवत्यसन्धौ गम्यमाने। गुडमिश्राः। तिलमिश्राः। सर्पिर्मिश्राः।

मिश्रमिति किम्? गुडधानाः। अनुपसर्गमिति किम्? गुडसंम्मिश्राः।

इहानुपसर्गग्रहणं ज्ञापकम्—अन्यत्र मिश्रग्रहणे सोपसर्गग्रहणस्य। तेन 'मिश्रश्लक्ष्णैः' ( २.१.३१ ) इति सोपसर्गेणापि मिश्रशब्देन तृतीयासमासो भवति।

असन्धाविति किम्? ब्राह्मणमिश्रो राजा। ब्राह्मणैः सह संहितः=ऐकार्थ्यमापन्नः।

**न्यासः**

**मिश्रञ्चानुपसर्गमसन्धौ॥ गुडमिश्रा इति।** पूर्ववत् 'पूर्वसदृश' इत्यादिना समासः। गुडशब्दः 'इगुपध' इति 'गुड रक्षायाम्' इत्यस्मात् कः, तेनान्तोदात्तः। 'स्फायितञ्चि' इत्यादिना रग् विधीयमानो बहुलवचनान् मिशेरपि रग्भवति, तेन मिश्रशब्दोऽन्तोदात्तः। तिलशब्द 'तृणधान्यानाञ्च द्वयषाम्' इत्याद्युदात्तः।

प्रमिश्रम्, सन्मिश्रमित्यस्य प्राप्नोति, अतस्तन्निवृत्तयेऽनुपसर्गग्रहणं क्रियते? इत्याह—**इहेत्यादि।** अथ वा—मिश्रशब्देन तृतीयासमास उच्यमानः कथं सोपसर्गे लभ्यते? इत्याह-**इहेत्यादि।** यदि तदिहानुपसर्गग्रहणं क्रियते, तर्ह्यन्यत्र मिश्रशब्दग्रहणे सोपसर्गस्य ग्रहणं नास्तीतीहानुपसर्गग्रहणमनर्थकं स्यात्। **तेनेत्यादि।** ज्ञापनस्य प्रयोजनं दर्शयति।

**ब्राह्मणमिश्रो राजेति।** 'पूर्वसदृश' इत्यादिनैव समासः। **ब्राह्मणैः सह संहित** इत्यनेन प्रत्युदाहरणे सन्धि दर्शयति। **ऐकार्थ्यमापन्न इति।** अनन्तरोक्तमेवार्थं विस्पष्टीकरोति। एकः=अभिन्नोऽर्थो यस्य स एकार्थः, तद्भाव ऐकार्थ्यम्। तदापन्नः=प्राप्त इत्यर्थः।

**पदमञ्जरी**

**मिश्रं चानुपसर्गमसन्धौ॥** कथं पुनर्मिश्रशब्दस्य विधीयमानः सम्मिश्रशब्दस्य प्राप्नोति, कथं वा मिश्रशब्देन समास उच्यमानः सोपसर्गेण लभ्यते? अत आह—**इहेत्यादि।**

प्रत्युदाहरणे सन्धि दर्शयति—**ब्राह्मणैरिति।** एतदेव स्पष्टयति—**ऐकार्थ्यमापन्न इति।**

**भावबोधिनी**

अर्थनिर्देशार्थक ऊन शब्द से ही उस ( ऊन ) के अर्थवाले शब्दों का ग्रहण होता है, इसलिये प्रतिपदोक्त होने से ही तृतीया समास का परिग्रह सिद्ध है इस स्थिति में 'तृतीया' का ग्रहण केवल स्पष्टता के लिये है। [ क्योंकि अन्य विभक्त्यन्त के साथ समास नहीं होता है। ] ॥ १५३ ॥

'तृतीया' की अनुवृत्ति होती है। मिश्र—यह उत्तरपद, उपसर्ग से परे न होनेवाला हो, तृतीयान्त से परे हो, असन्धि प्रतीयमान हो तो, अन्तोदात्त होता है। उदा०—गुडमिश्राः। तिलमिश्राः। सर्पिर्मिश्राः। [ तृतीयान्त के साथ समास होने से अन्तोदात्त है। ]

मिश्र=मिला हुआ—इसका क्या लाभ है? गुडधानाः। [ मिश्र का प्रयोग नहीं है। ] उपसर्गरहित—इसका क्या फल है? गुडसम्मिश्राः। [ सम् उपसर्ग—है। अतः सूत्र नहीं लगता है। ]

इस सूत्र में अनुपसर्ग का ग्रहण ज्ञापक है—अन्यत्र मिश्र के ग्रहण में उपसर्गविशिष्ट का ग्रहण होता है। इसलिए "[ पूर्वसदृशसमोनार्थकलह-निपुण--] मिश्रश्लक्ष्णैः" ( २।१।३१ ) सूत्र द्वारा सोपसर्ग ( उपसर्गविशिष्ट ) भी मिश्र शब्द के साथ समास होता है। [ इसी लिये 'गुडसम्मिश्राः' में समास होता है। और प्रस्तुत सूत्र की प्रवृत्ति नहीं होती है।

**सन्धिरिति हि पणबन्धेनैकार्थ्यमुच्यते ।**

**केचित्पुनराहुः—गृह्यमाणविशेषा प्रत्यासत्तिः = सन्धिरिति, अत्र राज्ञो ब्राह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्त्तिविभागस्वरूपभेदो गृह्यत इति ब्राह्मणमिश्रो राजेति प्रत्युदाह्रियते ।**

**उदाहरणेष्वविभागापत्तिरेव—गुडमिश्रा इति ।**

**न्यासः**

कथं पुनर्ज्ञायते—सन्धिशब्दस्यायमर्थः ? इत्याह—**सन्धिरितीत्यादि** । पणबन्धः = परिभाषणम्—यदि मे भवानिदं कुर्यात् ततोऽहमपि भवत इदं करिष्यामीत्येवञ्जातीयकम् । तेन पणबन्धेन यदैकार्थ्यं तद् सन्धिरुच्यते । तस्मात् प्रत्युदाहरणे सन्धौ सति ब्राह्मणैः सह संहित ऐकार्थ्यमापन्नः—इत्येषोऽर्थो विज्ञायते । **केचित् पुनराहुरित्यादि** । गृह्यमाणो विशेषो यस्यां प्रत्यासत्तौ सा गृह्यमाणविशेषा सन्धिरिति केचिदेवमाहुः, तत्रैव स्यात् । एवंविधः सन्धिः प्रत्युदाहरणे नास्तीत्यत आह—**अत्र राज्ञो ब्राह्मणैः सहेत्यादि** । यद्यपि राज्ञो ब्राह्मणैः सह प्रत्यासत्तिः = देशसामीप्यमस्ति, तथापि सत्यामपि तस्यां मूर्तिविभागो मूर्तिविशेषो राज्ञो ब्राह्मणानाञ्च गृह्यत इत्येव । इति करणो हेतौ । यत एवम्, तेन ब्राह्मणैः सह मिश्रो राजेति प्रत्युदाह्रियते ।

**उदाहरणेष्वविभागापत्तिरेवेति** । एतेन गुडमिश्रा इत्यादौ तु सन्धेरभावं दर्शयति । यथा हि विलीनेन मिश्रा धानादयो भवन्ति, तथास्य गुडाः, तेषां च मूर्तिविभागो न गृह्यते; न तत्र सन्धेरविभागापत्तिरिति । न विभागोऽविभागः, तस्यापत्तिः प्राप्तिः । यदा पणबन्धेनैकार्थ्यं सन्धिस्तदोदाहरणेषु तस्याभावो वेदितव्यः । स हि परिभाषणविशेषणलक्षणः । न चासौ गुडमिश्रेषु धानास्वचेतनेषु विद्यते; तस्य प्राणिधर्मत्वात् ॥ १५४ ॥

**पदमञ्जरी**

कथं पुनः सन्धिशब्दस्यायमर्थः ? इत्याह—**सन्धिरिति** । पणबन्धः = परिभाषणम्—यदि मे भवानेवं कुर्यादहमपि ते इदं करिष्यामीत्येवंरूपः ।

**केचित्पुनरिति** । गृह्यमाणो विशेषो व्यावृत्तिर्यस्यां प्रत्यासत्तौ सा तथोक्ता । ततः किम् ? इत्याह—**तत्रेति** । यद्यपि राज्ञोऽपि ब्राह्मणैस्सह प्रत्यासत्तिरस्ति, तथापि सत्यामपि तस्यां परस्परमूर्तिविभागस्वरूपभेदो गृह्यत इति प्रत्युदाहरणोपपत्तिरित्यर्थः ।

उदाहरणेषु नैवमित्याह—**उदाहरणेष्विति** ॥ १५४ ॥

**भावबोधिनी**

असन्धि में—इसका क्या फल है ? ब्राह्मणमिश्रो राजा । ब्राह्मणों के साथ संहित=एकार्थता को प्राप्त [ यह अर्थ है । यहाँ सन्धि अर्थ है । अतः यह सूत्र नहीं लगता है । ]

क्योंकि पणबन्ध से ऐकार्थ्य सन्धि है [ तुम मेरा यह काम करो, मैं तुम्हारा यह काम कर दूँगा—इस प्रकार का आपस में वार्तालाप और इसी के समान आचरण करना 'सन्धि' है । ]

कुछ लोग यह कहते हैं—गृह्यमाण विशेष=व्यावृत्ति है जिस प्रत्यासत्ति में वह प्रत्यासत्ति सन्धि है । इसमें राजा की ब्राह्मणों के साथ देश की प्रत्यासत्ति रहने पर भी परस्परमूर्तिविभाग स्वरूप भेद अर्थात् अपने-अपने रूप से भेद गृहीत होता है, इसलिये ब्राह्मणमिश्रः राजा—यह प्रत्युदाहरण दिया जाता है ।

उदाहरणों में अविभाग की आपत्ति = प्राप्ति ही है—गुडमिश्राः । [ विभाग न प्राप्त होना ही है क्योंकि गुड इस तरह मिला दिया जाता है कि अलग करना कठिन है तथापि पणबन्धमूलक सन्धि नहीं है । ] ॥ १५४ ॥

## २८१८. नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ॥ १५५ ॥ ( ३७८९ )

**सम्पादि, अर्ह, हित, अलम्—इत्येवमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वर्त्तमानात् पराण्यन्तोदात्तानि भवन्ति। सम्पादि—कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकम्, न कार्णवेष्टकिकम् अकार्णवेष्टकिकम्। अर्ह—छेदमर्हति छैदिकः, न छैदिकः अच्छैदिकः। हित—वत्सेभ्यो हितो वत्सीयः, न वत्सीयः अवत्सीयः। अलमर्थ—सन्तापाय प्रभवति सान्तापिकः, न सान्तापिकः असान्तापिकः।**

**नञ इति किम्? गर्दभरथमर्हति गार्दभरथिकः। विगार्दभरथिकः। गुणप्रविषेध इति किम्?**

### न्यासः

**नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः॥ सम्पाद्याद्यर्थास्तद्धिता इति।** तद्धितप्रत्ययाः। तस्मात् प्रत्ययग्रहणपरिभाषया तदन्तविधिर्विज्ञायते। **गुणप्रतिषेधे इति।** यस्मिन् वाक्यार्थे तद्धित उत्पद्यते स तद्धितस्य प्रवृत्तिनिमित्तं विधीयते—यथोक्तम्—'उपकारि सिद्धमङ्गम्, साध्योऽनुपकारकस्त्वङ्गी' इति। अङ्गी, गुण इति पर्यायावेतौ। गुणस्य प्रतिषेधो गुणप्रतिषेधः। एतच्च नञो विशेषणम्, गुणप्रतिषेधे चेन्नञ्वर्तत इत्यर्थः। **कार्णवेष्टकिकमिति।** कर्णवेष्टकाभ्यां शोभत इत्यर्थः। 'सम्पादिनि' इति 'प्राग्वतेष्ठञ्', न कार्णवेष्टकिकमकार्णवेष्टकिकमिति। अत्र **कर्णवेष्टकाभ्यां सम्पद्यत इति** वाक्यार्थे तद्धितान्तस्य प्रवृत्तिनिमित्तं यो गुणस्तस्य प्रतिषेधे नञ्वर्तते। तत् पुनः प्रवृत्तिनिमित्तत्वम्। **छैदिक इति।** छेदमर्हतीति 'आर्हादगोपुच्छ' इत्यादिना ठक्। **वत्सीय इति।** 'प्राक् क्रीताच्छः'। **सान्तापिक इति।** 'तस्मै प्रभवति सन्तापादिभ्यः' इति 'प्राग्वतेष्ठञ्'। **विगार्दभरथिक इति।** 'तदर्हति' इत्यार्हीयष्ठञ्। विशब्देन प्रादिसमासः। विशब्दोऽयमिह गार्दभरथिक इत्यस्य गुणप्रतिषेधे वर्तते। अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्य प्रकृतिस्वर एव भवति। एवमुत्तरत्रापि। नञ्यसति,

### पदमञ्जरी

**नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः॥** सम्पादि = शोभनम्। **कार्णवेष्टकिकमिति।** 'सम्पादिनि' इति प्राग्वतेष्ठञ्। **छैदिक इति।** 'छेदादिभ्यो नित्यम्' इति 'आर्हादगोपुच्छ' इत्यादिना ठक्। **वत्सीय इति।** 'प्राक् क्रीताच्छः'। **सान्तापिक इति।** 'तस्मै प्रभवति सन्तापदिभ्यः' इति 'प्राग्वतेष्ठञ्'।

### भावबोधिनी

सम्पादि, अर्ह, हित, अलम्—इस प्रकार के अर्थ वाले जो तद्धित प्रत्यय, वे जिनके अन्त में हैं ऐसे उत्तरपद, गुणप्रतिषेध अर्थ में वर्तमान नञ् से परे रहने वाले, अन्तोदात्त होते हैं। उदा०—( १ ) सम्पादि—कर्णवेष्टकाभ्यां सम्पादि मुखम्—कार्णवेष्टकिकम्, न कार्णवेष्टकिकम्—इस अर्थ में—अकार्ण-वेष्टकिकम्। [ यहाँ 'प्राग्वतेष्ठञ्' ( ५।१।१८ ) के अन्तर्गत 'सम्पादिनि' ( ५।१।९९ ) से ठञ् = इक, आदि-वृद्धि भ संज्ञा, अलोप होता है। इसके बाद नञ् समास होता है। यहाँ कार्णवेष्टकिकत्व रूप गुण के प्रतिषेध में नञ् है। अतः नञ् से परे उत्तरपद अन्तोदात्त हो जाता है। सम्पादि = शोभित होना ] ( २ ) अर्ह—छेदम् अर्हति—छैदिकः, न छैदिकः—अच्छैदिकः। [ 'छेद' से 'छेदादिभ्यो नित्यम्' से ठक् = इक, आदि-वृद्धि, के बाद नञ् के साथ समास। ] ( ३ ) हित—वत्सेभ्यो हितः—वत्सीयः, न वत्सीयः—अवत्सीयः। [ जो बछड़े के लिये हित-कारक नहीं है। ] ( ४ ) अलमर्थ—सन्तापाय प्रभवति—सान्तापिकः, न सान्तापिकः—असान्तापिकः। [ "तस्मै प्रभवति सन्तापादिभ्यः" से ठञ् = इक आदि कार्य होता है। सभी में तत्तद् गुणों के निषेध की प्रतीति में नञ् है। अतः उत्तरपद अन्तोदात्त होते हैं। ]

नञ् से परे—इसका क्या फल है? गर्दभरथम् अर्हति—गार्दभरथिकः। विगार्दभरथिकः। [ नञ् से परे नहीं है। ६।२।२ से पूर्वपद अव्यय का प्रकृतिस्वर आदि उदात्त ही होता है। ]

**गार्दभरथिकादन्योऽगार्दभरथिकः । 'गुण' इति तद्धितार्थप्रवृत्तिनिमित्तं सम्पादित्वाद्युच्यते । तत्प्रतिषेधो यत्रोच्यते समासे तत्रायं विधिः—कर्णवेष्टकाभ्यां न सम्पादि मुखमिति ।**

**सम्पाद्यर्हहितालमर्था इति किम् ? पाणिनीयमधीते पाणिनीयः, न पाणिनीयोऽपाणिनीयः । तद्धिता इति किम् ? कन्यां वोढुमर्हति कन्यावोढा, न वोढा अवोढा—'अर्हे कृत्यतृचश्च' ( ३.३.१६९ ) इति तृच् ॥**

**न्यासः**

अस्मिन् प्रत्युदाहरणेऽपि यत् पूर्वपदं प्रकृतिस्वरः प्रत्युदाहार्यः । **गार्दभरथिकादन्योऽगार्दभरथिक इति ।** अत्र गार्दभरथिकादन्यत्र नञ् वर्तते, न तु गार्दभरथिकत्वस्य प्रतिषेधे; पर्युदासत्वादस्य । **गुण इति तद्धितार्थप्रवृत्तिनिमित्तमित्यादि ।** तद्धितार्थः—कर्णवेष्टकाभ्यां सम्पादीत्येवमादिवाक्यार्थः, तत्र यत् प्रवृत्तिनिमित्तं तद्धितान्तस्य शब्दस्य सम्पादित्वादि तद् गुण इत्युच्यते । आदिशब्देन तदर्हत्वादेर्ग्रहणम् । तद्धितान्तमलमर्थश्च परिगृह्यते । **तत्प्रतिषेध इत्यादि ।** तस्य प्रतिषेधो यत्र समास उच्यते तत्रायं विधिः । कथं तस्य गुणस्य प्रतिषेध उच्यते ? इत्याह—**कर्णवेष्टकाभ्यां न सम्पादि मुखमिति ।** एतेन सर्वेण प्रसज्यप्रतिषेधेऽयं विधिः, न पर्युदास इति दर्शयन्नगार्दभरथिक इत्यत्र प्रत्युदाहरणेऽस्य विधेरभावं दर्शयति ।

**पाणिनीयमिति ।** 'वृद्धाच्छः' । **अपाणिनीय इति ।** अत्राध्येतर्यर्थे यस्तद्धितस्तदन्तमुत्तरपदम् । न सम्पाद्यर्हहितालमर्था ये तद्धितास्तदन्तम् । **वोढेति ।** पूर्ववद् धत्वढत्वष्टुत्वढलोपा विधेयाः, 'सहिवहोरोदवर्णस्य' इत्वोत्त्वम् । **अवोढेति ।** अत्रार्हार्थो य कृदन्तः स उत्तरपदम् । तेन तद्धितग्रहणादन्तोदात्तत्वमुत्तरपदस्य न भवति, अव्ययपूर्वपदप्रकृतिस्वर एव भवति । पूर्वपदप्रकृतिस्वरापवादो योगः । एवमुत्तरेऽपि योगा द्रष्टव्याः; 'प्राग्बहुव्रीहाविदमेतद्' इत्यादियोगात् ॥ १५५ ॥

**पदमञ्जरी**

**नञ इति किमिति ।** प्रतिषेधे प्रायेण नञ एव प्रवृत्तिदर्शनात्प्रश्नः । **विगार्दभरथिक इति ।** अव्ययपूर्वपदप्रकृतिस्वर एवात्र भवति । **गार्दभरथिकादन्य इत्यादि ।** उदाहरणादस्य विशेषं प्रदर्शयितुम् 'गुणप्रतिषेधे' इति सूत्रावयवं व्याचष्टे—**गुण इति ।** तद्धितार्थः सम्पाद्यादि; तस्य यत्प्रवृत्तिनिमित्तं सम्पादित्वादि । आदिशब्देन तदर्हत्वादेर्ग्रहणम्, स गुण इत्युच्यते । उक्तं हि—

[1]संसर्गभेदकं यद्यत् सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् ॥ ( वा० प० ३.५.१ ) इति ।

कथं तस्य गुणस्य प्रतिषेध उच्यते ? इत्याह—**कर्णवेष्टकाभ्यां न सम्पादीति ।**

**वोढेति ।** अर्हार्थे तृच्, ढत्वधत्वष्टुत्वढलोपेषु **'सहिवहोरोदवर्णस्य' इत्योत्वम् ॥ १५५ ॥**

**भावबोधिनी**

गुणप्रतिषेध में— इसका क्या फल है ? गार्दभरथिकात् अन्यः— अगार्दभरथिकः । गुण—यह तद्धित प्रत्ययार्थ के प्रवृत्तिनिमित्त सम्पादित्व आदि को कहा जाता है । इसका प्रतिषेध जहाँ कहा जाता है वहीं समास में यह सूत्र लगता है, कर्णवेष्टकाभ्यां न सम्पादि मुखम् । [ अगार्दभरथिकः में गुण नहीं अपि तु गुणी पुरुष का प्रतिषेध है । अतः सूत्र नहीं लगता है । अव्यय पूर्वपद का प्रकृतिस्वर ही होता है । ]

सम्पादि, अर्ह, हित, अलमर्थ—ये ही हों—इसका क्या फल है ? पाणिनीयम् अधीते—पाणिनीयः । न पाणिनीयः—अपाणिनीयः । [ यहाँ अध्ययन का अभाव है । अतः यह सूत्र नहीं लगता है । ]

तद्धित हो—इसका क्या फल है ? कन्यां वोढुम् अर्हति—कन्यावोढा, न वोढा-अवोढा । [ यहाँ अर्ह अर्थ है किन्तु वह तद्धित का नहीं अपि तु कृत्प्रत्यय का है । √वह धातु से अर्ह अर्थ में तृच्—वह् + तृ, ढत्व, धत्व, ष्टुत्व, ढलोप के बाद 'सहिवहोरोदवर्णस्य' सूत्र से अ का ओ होने पर वोढृ=वोढा बनता है । यह सूत्र न लगने पर पूर्वपद अव्यय का प्रकृतिस्वर होता है । ] ॥ १५५ ॥

१. संसर्गि—इति पाठः शुद्धः ।

## २८१९. ययतोश्चातदर्थे ॥ १५६ ॥ ( ३८९० )

**य, यत् - इत्येतौ यौ तद्धितावतदर्थे वर्तेते तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति। पाशानां समूहः पाश्या, न पाश्या अपाश्या। अतृण्या। यत् – दन्तेषु भवं दन्त्यम्, न दन्त्यम् अदन्त्यम्। अकर्ण्यम्।**

**अतदर्थ इति किम् ? पादार्थमुदकं पाद्यम्, न पाद्यमपाद्यम्।**

**तद्धिता इत्येव —अदेयम्। गुणप्रतिषेध इत्येव —दन्त्यादन्यत् अदन्त्यम्।**

**निरनुबन्धकैकानुबन्धकयोर्ययतोर्ग्रहणादिह न भवति—'वामदेवाड्ड्यड्ड्यौ' ( ४.२.५ ) वामदेव्यम्, न वामदेव्यम् अवामदेव्यमिति।**

### न्यासः

**ययतोश्चातदर्थे ॥ पाश्येति।** प्रत्ययस्वरेणान्तोदात्तत्वम्। **अदन्त्यमिति।** 'यतोऽनावः' इत्याद्युदात्तत्वम्। **एवम्**—अकर्ण्यमित्येतदपि तद्वदेवाद्युदात्तम्।

**पाद्यमिति।** 'पादार्घाभ्याञ्च' इति यत्।

**दन्त्यादन्यददन्त्यमिति।** अत्र दन्त्यादन्यत्र नञ् वर्तते, न तु तदन्तस्य प्रतिषेधे। **अदेयमिति।** 'अर्हे कृत्यतृचश्च' इत्यत्राहार्थे यत्, 'ईद् यति' इतीत्वम्। अथेह कस्मान्न भवति—वामदेवेन दृष्टं साम वामदेव्यम् ? इत्यत आह– **निरनुबन्धकेत्यादि।** गतार्थम् ॥ १५६ ॥

### पदमञ्जरी

**ययतोश्चातदर्थे ॥** पाशतृणशब्दाभ्यां समूहे 'पाशादिभ्यो यः', दन्तकर्णशब्दाभ्यां भवार्थे 'दिगादिभ्यो यत्', 'शरीरावयवाच्च' इति यत्।

**पाद्यमिति।** 'पादार्घाभ्यां च' इति यत्। **अदेयमिति।** अर्हार्थे 'अचो यत्', 'ईद्यति' इतीत्वम्, गुणः। **निरनुबन्धकैकानुबन्धयोरिति।** एते च परिभाषे—'वामदेवाद् ड्यड्ड्यौ' इत्यत्र ज्ञापिते ॥ १५६ ॥

### भावबोधिनी

य, यत्—ये दो तद्धित प्रत्यय, जो कि अतदर्थ में हैं, तदर्थ में नहीं हैं, ये जिनके अन्त में है, ऐसा उत्तरपद गुणप्रतिषेध विषय वाले नञ् से परे है, उसका अन्त उदात्त होता है। उदा०—पाशानां समूहः—पाश्या, न पाश्या—अपाश्या। [ समूह अर्थ में 'पाशादिभ्यो यः' से य प्रत्यय है। उत्तरपद का अन्त उदात्त होता है। ] अतृण्या। [ तृणानां समूहः—तृण्या, न तृण्या—अतृण्या। यह भी 'य' प्रत्ययान्त है। ] यत् प्रत्ययान्त के उदा०—दन्तेषु भवम्—दन्त्यम्, न दन्त्यम्—अदन्त्यम्। [ कर्णेषु भवम्—कर्ण्यम्, न कर्ण्यम्—अकर्ण्यम्। इनमें 'शरीरावयवाच्च' सूत्र से यत् प्रत्यय है। आद्युदात्त है किन्तु नञ् के साथ समास में उत्तरपद अन्तोदात्त हो जाता है। ]

अतदर्थ में इसका क्या फल है ? पादार्थम् उदकम्—पाद्यम्, न पाद्यम्—अपाद्यम्। [ यहाँ "पादार्घाभ्याञ्च" से तदर्थ में ही यत् प्रत्यय होता है। ]

तद्धित प्रत्यय ही हो—अदेयम्। [ यहाँ अर्ह अर्थ है, किन्तु तद्धित प्रत्यय न होकर 'अचो यत्' सूत्र से कृत् प्रत्यय है। अतः इससे नहीं होता है। ]

गुणप्रतिषेध में ही इसका क्या फल है ? दन्त्यात् अन्यत्-अदन्त्यम्। [ यहाँ दाँतों में होने वाले का प्रतिषेध है। गुण का नहीं, गुणी का प्रतिषेध है। ]

निरनुबन्धक 'य' और एक त् अनुबन्ध वाले यत् का ग्रहण होने के कारण यहाँ नहीं होता है—'वामदेवाड्ड्यड्ड्यौ'से ड्यत् और ड्य प्रत्यय करने पर—वामदेव्यम्, न वामदेव्यम् अवामदेव्यम्। [ यहाँ 'य' है, किन्तु ड्य में ड् अनुबन्ध है, ड्यत् में दो अनुबन्ध हैं। अतः इसे लक्ष्यों में नहीं लिया जा सकता है। ] ॥ १५६ ॥

२७२०. अच्कावशक्तौ ॥ १५७ ॥ ( ३८९१ )

अच् , क — इत्येवमन्तमशक्तौ गम्यमानायामुत्तरपदं नञः परमन्तोदात्तं भवति। अपचो यः पक्तुं न शक्नोति। अजयः। कः खल्वपि—अविक्षिपः। अविलिखः।

अशक्ताविति किम् ? अपचः दीक्षितः। अपचः परिव्राजकः[1] ॥

२८२१. आक्रोशे च ॥ १५७ ॥ ( ३८९२ )

आक्रोशे च गम्यमाने नञ उत्तरमच्कान्तमन्तोदात्तं भवति। अपचोऽयं जाल्मः। अपठोऽयं जाल्मः। पक्तुं पठितुं शक्तोऽप्येवमाक्रुश्यते। अविक्षिपः। अविलिखः॥

२८२२. संज्ञायाम् ॥ १५९ ॥ ( ३८९३ )

आक्रोशे गम्यमाने नञः परमुत्तरपदं संज्ञायां वर्त्तमानमन्तोदात्तं भवति। अदेवदत्तः। अयज्ञदत्तः। अविष्णुमित्रः ॥

न्यासः

**अच्कावशक्तौ** ॥ अपच इति। पचाद्यच्। अविक्षिप इति। 'इगुपधज्ञाप्रीकिरः कः'। अपचोऽदीक्षित इत्यादि। दीक्षितपरिव्राजकौ शास्त्रे प्रतिषिद्धत्वान्न पचतः; न त्वशक्तत्वात्। तेनात्र व्रतं गम्यते, न त्वशक्तिः ॥ १५७ ॥

**आक्रोशे च** ॥ अत्राक्रोशे दोषवचनमाक्रोश। अगम्यमानायामप्यशक्तौ यथा स्यादिति वचनम् ॥ १५८ ॥

**संज्ञायाम्** ॥ अदेवदत्तोऽयज्ञदत्त इति। देवदत्तयज्ञदत्त-शब्दावन्तोदात्तौ प्रातिपदिकस्वरेण। यो देवदत्तः सन् तत् कार्यं न करोति स एवमाक्रुश्यते। एवमविष्णुमित्त्र इत्यत्रापि वेदितव्यम् ॥ १५९ ॥

पदमञ्जरी

**अच्कावशक्तौ** ॥ अविक्षिप इति। वक्ष्यमाणैः कृत्योकेष्णुज्भिः साहचर्यादच्कयोः कृतोरिदं ग्रहणम्, तेन कृद्ग्रहणपरिभाषया विक्षिपशब्दस्य कान्तत्वम्।

दीक्षितपरिव्राजकौ शास्त्रनिषेधान्न पचतः, न त्वशक्तत्वात्, तेन तत्र व्रतं गम्यते, न त्वशक्तिः ॥ १५७ ॥

**आक्रोशे च** अपचोऽयं जाल्म इति। लोभोऽत्र विवक्षितः, न त्वशक्तिः ॥ १५८ ॥

**संज्ञायाम्**। अदेवदत्त इति। यो देवदत्तः सन् तत्कार्यं न करोति, स एवमाक्रुश्यते ॥ १५९ ॥

भावबोधिनी

अच् और क —ये अन्त में हैं, अशक्ति गम्यमान है, नञ् से परे उत्तरपद अन्तोदात्त होता है। उदा०—अपचः—जो पका नहीं सकता। अजयः—जो जीत नहीं सकता। [ इनमें 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" सूत्र से अच् प्रत्यय है। ] 'क' का उदा०—अविक्षिपः। अविलिखः। [ यहाँ भी विक्षिपितुं न शक्नोति—अर्थ हैं। नञ् से उत्तरवर्त्ती अच् और क = अ प्रत्ययान्त उत्तरपद अन्तोदात्त होता है। ]

अशक्ति गम्यमान रहने पर—इसका क्या फल है ? अपचः दीक्षितः। अपचः परिव्राजकः। [ यहाँ पचाद् अन्यः—यह गुणी का प्रतिषेध होता है अशक्ति की प्रतीति नहीं है। किन्तु सूत्र गुणप्रतिषेध में ही उत्तपद का अन्त उदात्त करता है। अतः प्रत्युदाहरणों में पूर्वपदअव्यय का आद्युदात्त प्रकृतिस्वर होता है ] ॥ १५७ ॥

और आक्रोश गम्यमान रहने पर नञ् से उत्तरवर्त्ती अजन्त, कान्त अन्तोदात्त होता है। उदा०—अपचः अयं जाल्मः। अपठः अयं जाल्मः। पकाने और पढ़ने में समर्थ भी व्यक्ति इस प्रकार आक्रोश का विषय बनाया जाता है। अविक्षिपः। अविलिखः। [ इनमें क = अ प्रत्ययान्त उत्तरपद है। अन्तोदात्त हो जाता है। ] ॥ १५८ ॥

आक्रोश गम्यमान रहने पर नञ् से उत्तरवर्त्ती, संज्ञा में विद्यमान उत्तरपद अन्तोदात्त होता है। उदा०—अदेवदत्तः। अयज्ञदत्तः। अविष्णुमित्रः। ] [ इनमें संज्ञावाचक उत्तरपद अन्तोदात्त हो जाते हैं। ] ॥ १५९ ॥

---

१. 'गुणप्रतिषेध इत्येव, अन्यो यः पचादपचः'—इत्यधिकं पुस्तकान्तरे।

## २८२३. कृत्योकेष्णुच्चार्वादयश्च ॥ १६० ॥ ( ३८९४ )

**कृत्य, उक, इष्णुच्—इत्येवमन्ताश्चार्वादयश्च नञ उत्तरेऽन्तोदात्ता भवन्ति। कृत्य—अकर्त्तव्यम्। अकरणीयम्। उक—अनागामुकम्। अनपलाषुकम्। इष्णुच्—अनलङ्करिष्णुः। अनिराकरिष्णुः।**

**इष्णुज्ग्रहणे 'कर्त्तरि भुवः खिष्णुच्' ( ३.२.५७ ) इत्यस्य द्व्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्याद् भवति। अनाढ्यम्भविष्णुः। असुभगम्भविष्णुः।**

**चार्वादयः—अचारुः। असाधुः। अयौधिकः। अवदान्यः।**

**चारु। साधु। यौधिक। अनङ्गमेजय। अत्र द्वितीये नञ्समासेऽन्तोदात्तत्वम्। अननङ्गमेजयः। वदान्यः।**

### न्यासः

**कृत्योकेष्णुच्चार्वादयश्च ॥** कृत्य, उक, इष्णुजिति प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणपरिभाषया तदन्तोपस्थानं भवति। चार्वादीनि प्रातिपदिकान्येव। **अकर्त्तव्यमिति।** यदा तव्यदन्तस्तदा कर्तव्यशब्दोऽन्तस्वरितः। यदा तव्यान्तस्तदा मध्योदात्तः। **अकरणीयमिति।** अनीयर्-प्रत्ययान्तत्वाद् 'उपोत्तमं रिति' इति रित्स्वरेण मध्योदात्तः करणीयशब्दः। **अनागामुकम्, अनपलाषुकमिति।** 'लषपतपद' इत्यादिनोकञ्। आगामुकापलाषुकशब्दौ कृत्स्वरेण मध्योदात्तौ। **अनलङ्करिष्णुरिति।** 'अलंकृञ्' इत्यादिनेष्णुच्। अलङ्करिष्णुशब्दश्चित्स्वरेणान्तोदात्तः। एवं **निराकरिष्णुशब्दोऽपि।** एकानुबन्धकग्रहणपरिभाषयेष्णुज्ग्रहणे द्व्यनुबन्धकस्य खिष्णुचो ग्रहणेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**इष्णुज्ग्रहणे कर्त्तरि भुवः खिष्णुजित्यस्य द्व्यनुबन्धकस्यापि ग्रहणम्।** **भवतीति** वक्ष्यमाणेन सम्बन्धः। अत्रैव कारणमाह—**इकारादेर्विधानसामर्थ्यादिति।** खिष्णुच इकारादेर्विधानस्यैतदेव प्रयोजनम्—इह सूत्रे सामान्येन ग्रहणं यथा स्यात्, अन्यथा तदपार्थकं स्यात्, उदात्तत्वाद् भवते; ततः परस्य खिष्णुच इटैवेकारादित्वात्।

**अचारुरित्यादि।** 'दृसनिजनिचरिचटिभ्यो ञुण्' इति ञुण्। तेनाद्युदात्तश्चारुशब्दः। साधुशब्दोऽन्तोदात्तः; 'कृवापा' इत्यादिनोण्प्रत्ययान्तत्वात्। युधा चरति **यौधिकः**, 'प्राग्वहतेष्ठक्', 'कितः' इत्यन्तोदात्त। **अनङ्गमेजय इति।** अव्ययस्वरेणाद्युदात्तः। अत्र द्वितीये नञ्समासे **समासान्तोदात्तत्वमिति** नञ्समासः स्यात्। **अत्रापीत्यादि।**

### पदमञ्जरी

**कृत्योकेष्णुच्चार्वादयश्च ॥ द्व्यनुबन्धकस्यापि ग्रहणमिति।** भवतीति वक्ष्यमाणेन सम्बन्धः। अत्रैव हेतुः—**इकारादेर्विधानसामर्थ्यादिति।** भवतेरुदात्तत्वात्ततः परस्य खिष्णुच इटैवेकारादित्वे सिद्धे इकारादेर्विधानमिह सामान्यग्रहणार्थमेवेति भावः। **अचारुरित्यादि।**

### भावबोधिनी

कृत्य, उक, इष्णुच्—ये जिनके अन्त में हैं ऐसे चारु आदि शब्द जो नञ् से उत्तरवर्ती हैं, अन्तोदात्त होते हैं। उदा०—कृत्य-प्रत्ययान्त—अकर्त्तव्यम्। अकरणीयम् [ कृत्य = तव्य, तव्यत् में अन्तस्वरित और अनीयर् में मध्योदात्त होता है। यहाँ सभी अन्तोदात्त हो जाते हैं। ] उक—अनागामुकम्, अनपलाषुकम्। [ उकञ् प्रत्ययान्त हैं, मध्योदात्त को अन्तोदात्त कर दिया जाता है। ] इष्णुच्—अनलङ्करिष्णुः। अनिराकरिष्णुः। [ चित्स्वर से अन्तोदात्त है। ]

इष्णुच् के ग्रहण में 'कर्तरि भुवः खिष्णुच्' इससे होने वाले दो अनुबन्धों ( ख्, च् ) वाले खिष्णुच् का भी ग्रहण होता है क्योंकि इकारादि का विधान किया गया है। अनाढ्यम्भविष्णुः, असुभगम्भविष्णुः। [ खिष्णुच् में ख् की इत्संज्ञा, नुम् के लिये होती है। इट् आगम करने 'इ' श्रुति सम्भव ही थी। तब ख् लोप करने पर इकारादि = इष्णुच् करने का कोई लाभ नहीं है। अतः यही ज्ञापित करता है कि खिष्णुच् का भी इष्णुच्ग्रहण से ग्रहण होता है। इसी लिये आढ्यम्भविष्णुः में खिष्णुच् का भी ग्रहण हो जाने से—अनाढ्यम्भविष्णुः' में भी उत्तरपद अन्तोदात्त होता है। ]

चारु आदि—अचारुः। असाधुः। अयौधिकः। अवदान्यः। [ सभी में उत्तरपद अन्तोदात्त होता है। ]

अकस्मात्। अत्रापि द्वितीये नञ्समासेऽन्तोदात्तत्वम्—अनकस्मात्। ॐ वर्तमानवर्द्धमानत्वरमाणध्रियमाण-क्रियमाणरोचमानशोभमानाः संज्ञायाम् ॐ ( ग० सू० १७२ )। एते वर्तमानादयः संज्ञायां द्रष्टव्याः। ॐ विकारसदृशे व्यस्तसमस्ते ॐ ( ग० सू० १७३ )। अविकारः। असदृशः। अविकारसदृशः। गृहपति। गृहपतिकः। ॐ राजाह्नोश्छन्दसि ॐ ( ग० सू० १७४ )। अराजा। अनहः। भाषायां नञ्स्वर एव भवति। चार्वादिः॥

## २८२४. विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६१ ॥ ( ३८९५ )

तृन्नन्त, अन्न, तीक्ष्ण, शुचि—इत्येतेषु नञ उत्तरेषु विभाषाऽन्त उदात्तो भवति। अकर्त्ता, अकर्त्ता। अन्न—अनन्नम्, अनन्नम्। तीक्ष्ण—अतीक्ष्णम्, अतीक्ष्णम्। शुचि-अशुचिः। अशुचिः। पक्षे—अव्ययस्वर एव भवति॥

### न्यासः

कस्माच्छब्दस्य नञ उत्तरस्याद्युदात्तत्वविधानात्। अत्रापि द्वितीयेन नञ्समासेनान्तोदात्तत्वमिति। **वर्तमान, वर्धमान** —इत्येवमादयः शानजन्तत्वादन्तोदात्ताः। विकारसदृशशब्दः समासस्वरेणान्तोदात्तः। गृहपतिकशब्दः 'संज्ञायां कन्' इति कन्नन्तत्वादाद्युदात्तः। 'वदेरान्यः', वदान्यशब्दः प्रत्ययस्वरेण मध्योदात्तः॥ १६०॥

**विभाषा तृन्नन्नतीक्ष्णशुचिषु**॥ तृन्निति प्रत्ययग्रहणम्, तेन पूर्ववत् तदन्तस्योपस्थानम्। अन्नादीनि प्रातिपदिकानि। अकर्तेति। ताच्छीलिकस्तृन्। तेन नित्स्वरेणाद्युदात्तः कर्तृशब्दः। अन्नशब्दोऽपि 'नब्विषयस्य' इति। 'कृत्यशूभ्यां क्स्नः' इति 'तिजेर्दीर्घश्च' इति तीक्ष्णशब्दोऽन्तोदात्तः। 'इन्' इति वर्तमाने 'इगुपधात् कित्', तेन शुचिशब्द आद्युदात्तः॥ १६१॥

### पदमञ्जरी

'चरेर्ञुण्' ( द० उ० १.८८ ) चारुः। 'साधेरुण्' ( द० उ० १.८६ ) साधुः। युधा चरति यौधिकः। 'एजेः खश्' अङ्गमेजयः, ततोऽन्योऽनङ्गमेजयः। 'वदेरान्यः' ( द० उ० ८.९ )। न कस्मादकस्मात्। 'वृतु वर्तने', ( धा० पा० ७५८ ) 'वृधु वृद्धौ', ( धा० पा० ७५९ ) 'ञित्वरा सम्भ्रमे', ( धा० पा० ७७५ ) 'रुच दीप्तौ', ( धा० पा० ७४५ ) 'धृङ् अवस्थाने'—एते शानजन्ताः गृह्यते। संज्ञायां कन्—गृहपतिकः। गृहपतिरित्यन्ये पठन्ति॥ १६०॥ १६१॥

### भावबोधिनी

चारु। साधु। यौधिक। अनङ्गमेजय। यहाँ द्वितीय नञ् समास में अन्तोदात्त होता है—अनङ्गमेजयः। [ अङ्गम् एजयति—में खश् प्रत्यय, मुम् आगम आदि के बाद अङ्गमेजयः, न अङ्गमेजय—अनङ्गमेजयः, न अनङ्गमेजयः—अनङ्ग-मेजयः यह दूसरी बार नञ् समास होने पर अन्तोदात्त होता है। ] वदान्यः। अनकस्मात्। यहाँ भी द्वितीय नञ् समास में अन्त उदात्त होता है [ = न कस्मात्—अकस्मात्, न अकस्मात्, अनकस्मात् ]।

ॐ वर्त्तमान, वर्द्धमान, त्वरमाण, ध्रियमाण, क्रियमाण रोचमान और शोभमान ये संज्ञा में [ अन्तोदात्त होते हैं ]। ॐ इन वर्तमान आदि को संज्ञा में अन्तोदात्त देखना चाहिये।

ॐ विकार और सदृश शब्द व्यस्त और समस्त दोनों अन्तोदात्त होते हैं। ॐ अविकारः, असदृशः। [ ये व्यस्त = अलग-अलग हैं ] अविकारसदृशः। [ दोनों समस्त रूप में हैं। ]

गृहपति। गृहपतिक। ॐ राजा और अहन् वेद में अन्तोदात्त होते हैं। ॐ अराजा। अनहः। भाषा=लोक में नञ् अव्यय का स्वर ( आद्युदात्त ) ही होता है। ये चारु आदि हैं॥ १६०॥

तृन्नन्त, अन्न, तीक्ष्ण और शुचि—ये नञ् से उत्तरवर्त्ती हों तो विकल्प से अन्त उदात्त होता है। उदा०—अकर्त्ता। [ कर्त्ता—यह तृन्नन्त है। ] अन्न—अनन्नम्। तीक्ष्ण—अतीक्ष्णम्। शुचि—अशुचिः। [ इनमें नञ् से उत्तरपद विकल्प से अन्तोदात्त होता है। ] पक्ष में नञ् अव्यय का स्वर [ आद्युदात्त ] ही होता है॥ १६१॥

## २८२९. बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६२ ॥ ( ३८९६ )

**बहुव्रीहौ समासे इदम्, एतद्, तत्—इत्येतेभ्य उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणने वर्त्तमानस्यान्त उदात्तो भवति। इदं प्रथमं गमनं भोजनं वा यस्य स इदम्प्रथमः, इदन्द्वितीयः, इदन्तृतीयः। एतत्प्रथमः, एतद्द्वितीयः एतत्तृतीयः। तत्प्रथमः तद्द्वितीयः, तत्तृतीयः।**

**न्यासः**

**बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ प्रथमपूरणयोरिति।** प्रथमे स्वरूपग्रहणम्। पूरणग्रहणे पूरणेऽर्थे ये प्रत्यया विहितास्ते गृह्यन्ते; प्रथमसाहचर्यात्। अथ वा—पूरणग्रहणं स्वर्य्यते, स्वरितेन चाधिकारगतिर्भवति। तेन 'तस्य पूरणे डट्' इत्यधिकृत्य ये प्रत्यया विहितास्तेषां ग्रहणं भवति। **इदम्प्रथम इति।** प्रथमोऽन्तोदात्तः। 'प्रथेरमच्' इत्यमच्प्रत्ययान्तत्वात्। इदमादयस्त्यदादिष्वन्तोदात्ता निपात्यन्ते; **इदन्द्वितीयः, इदन्तृतीय इति।** 'द्वेस्तीयः', 'त्रेःसम्प्रसारणं च' इति तीयप्रत्ययान्तत्वाद् मध्योदात्तौ द्वितीयतृतीयशब्दौ।

**पदमञ्जरी**

**बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥** प्रथमेति स्वरूपग्रहणम्। पूरणशब्दस्य स्वरितत्वात्तदधिकारविहितानां प्रत्ययानां ग्रहणम्।

**भावबोधिनी**

बहुव्रीहिसमास में—इदम्, एतद्, तत्—इनसे परे रहने वाले प्रथम शब्द और पूरणप्रत्ययान्त जो क्रियागणन अर्थ में वर्तमान हैं उनका अन्त उदात्त होता है। उदा०—इदं प्रथमं गमनं भोजनं वा यस्य सः—इस अर्थ में—इदम्प्रथमः। [ इदम् से परे प्रथम का अन्त उदात्त होता है। इदं द्वितीयं गमनं भोजनं वा यस्य सः—] इदन्द्वितीयः। [ इदं तृतीयं गमनं भोजनं वा यस्य सः—] इन्दन्तृतीयः। [ इनमें पूरणप्रत्ययान्त द्वितीय, तृतीय अन्तोदात्त होते हैं। एतत् प्रथमं गमनं भोजनं वा यस्य सः—] एतत्प्रथमः। [ एतत् द्वितीयं गमनं भोजनं वा यस्य सः—] एतद्द्वितीयः। [ एतत् तृतीयं गमनं भोजनं वा यस्य सः—] एतत्तृतीयः। [ तत् गमनं भोजनं वा प्रथमं यस्य सः—] तत्प्रथमः। [ तत् गमनं भोजनं वा द्वितीयं यस्य सः—] तद्द्वितीयः। [ तद् गमनं भोजनं वा तृतीयं यस्य सः—] तत्तृतीयः।

[ इनमें भोजनादि क्रियाओं की गणना = आवृत्ति प्रतीत होती है। जिसकी जो क्रिया जितनी बार होती है उसी को बताना इष्ट है। ]

बहुव्रीहि में—इसका क्या फल है ? अनेन प्रथमः—इसमें—इदम्प्रथमः। 'तृतीया' इस योगविभाग से समास होता है। [ बहुव्रीहि न होने से "तत्पुरुषे तुल्यार्थ०" ( ६।२।२ ) से पूर्वपद का प्रकृतिस्वर होता है। ]

इदम्, एतत् और तत् से परे—इसका क्या फल है ? यत्प्रथमः। [ यत् गमनं भोजनं वा प्रथमं यस्य सः। यहाँ तीनों से भिन्न यत् है। अतः पूर्वपद का प्रकृतिस्वर होता है। ]

प्रथम और पूरणप्रत्ययान्तों का—इसका क्या फल है ? तानि बहूनि अस्य सः—तद्बहुः। [ यहाँ प्रथम या पूरण प्रत्ययान्त नहीं है। बहुव्रीहि में पूर्वपद का प्रकृतिस्वर होता है। ]

क्रियागणन में—इसका क्या फल है ? अयं देवदत्तादिः प्रथमः एषां ते—इदम्प्रथमाः। [ यहाँ क्रिया का नहीं ] व्यक्ति = द्रव्य का गणन है। [ अतः यह सूत्र नहीं लगता है। पूर्वपद का प्रकृतिस्वर होता है। ]

गणन = गिनना अर्थ में—इसका क्या फल है ? अयं पाकादिः प्रथमः येषां ते इदम्प्रथमः। [ यहाँ प्रथम शब्द प्रधान अर्थ में है, संख्या में नहीं है अतः ] इदम्प्रधान = यह है प्रधान जिनका ऐसे लोग—इस अर्थ की प्रतीति है। [ बहुव्रीहि में पूर्वपद का प्रकृतिस्वर होता है अन्तोदात्त नहीं। ]

**बहुव्रीहाविति किम् ? अनेन प्रथम इदम्प्रथमः । 'तृतीया' ( २.१.३० ) इति योगविभागात्समासः । इदमेतत्तद्भ्यः इति किम् ? यत्प्रथमः । प्रथमपूरणयोरिति किम् ? तानि बहून्यस्य तद्बहुः । क्रियागणन इति किम् ? अयं प्रथम एषां त इदम्प्रथमाः । द्रव्यगणनमेतत् । गणन इति किम् ? अयं प्रथम एषाम् ते इदम्प्रथमाः । इदम्प्रधाना इत्यर्थः ।**

**उत्तरपदस्य कार्यित्वात् कपि पूर्वम् ( ६.२.१७३ ) अन्तोदात्तं भवति । इदम्प्रथमकाः ।**

**'बहुव्रीहौ' इत्येतद् 'वनं समासे' ( ६.२.१७८ ) इति प्रागेतस्मादधिकृतं वेदितव्यम् ॥**

**न्यासः**

**अनेन प्रथम इदम्प्रथम इति ।** अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वर एव भवति । **यत्प्रथम इति ।** यत् प्रथममेषामिति बहुव्रीहिः । अत्र 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वर एव भवति । एवमुत्तरेष्वप्यस्मिन् बहुव्रीह्यधिकारे प्रत्युदाहरणेषु वेदितव्यम् । **इदम्प्रधाना इत्यर्थ इति ।** एतेनानन्तरोक्ते प्रत्युदाहरणे प्रथमशब्दः प्रधानवचनः, न त्वेकसंख्यावचन इति दर्शयन् गणनाभावं दर्शयति ।

**उत्तरपदस्येत्यादि ।** इह सूत्रे 'प्रथमपूरणयोः' इति त्वन्यविभक्त्योरुत्तरपदनिर्देशः कृतः, न बहुव्रीहिनिर्देशः कृतः । तेनोत्तरपदस्यैव कार्यित्वम्, न बहुव्रीहेः । ततश्च यदा कबुत्पद्यते तदा 'कपि पूर्वम्' अन्तोदात्तं भवति । कप्रत्ययो हि समासाधिकारे विहितत्वात् समासस्यैवान्तो भवति, नोत्तरपदस्य । न ह्युत्तरपदं समासः, तेन 'कबुत्तरपदक्रमेण गृह्यते' इत्युत्तरपदस्यान्तोदात्तत्वं विधीयमानं कपो न भवति, किं तर्हि ? पूर्वस्य । **इदम्प्रथमका इति ।** 'शेषाद्विभाषा' इति कप् । 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरापवादो योगः ।

**पदमञ्जरी**

**अनेन प्रथम इति ।** अत्र तृतीयापूर्वपदप्रकृतिस्वर एव भवति ।

[1]**यत्प्रथमा इति ।** यः प्रथम एषामिति बहुव्रीहिः । अत्रापि पूर्वपदप्रकृतिस्वर एव भवति ।

**इदम्प्रधाना इत्यर्थ इति ।** अनेन प्रधानवचनः प्रथमशब्दो न त्वेकसंख्यावचन इति दर्शयन् गणनाभावमाह ।

**उत्तरपदस्येत्यादि ।** सर्वत्रेह समासस्येति प्रकृतम्, 'उत्तरपदादिः' इत्यतः प्रभृति 'उत्तरपदस्य' इति च, तत्र

**भावबोधिनी**

उत्तरपद को कार्य होता है इस कारण उत्तरपद कार्यी है अतः कप् प्रत्यय परे उससे पूर्व ( जो प्रथम, या पूरण-प्रत्ययान्त है वह ) अन्तोदात्त होता है । इदम्प्रथमकाः । [ इसमें 'प्रथम' ही अन्तोदात्त होता है । ]

'बहुव्रीहौ' यह 'वनं समासे' ( ६।२।१७८ ) इस सूत्र से पहले तक अधिकृत समझना चाहिए, वहाँ तक बहुव्रीहि में स्वर होते हैं ।

**विमर्श**—यह सूत्र बहुव्रीहि समास में क्रिया की गणना बताने वाले प्रथम और पूरणप्रत्ययान्त शब्द जो कि नञ् से उत्तरवर्ती उत्तरपद हैं उनका अन्तोदात्त करता है । इसलिए—अयं = देवदत्तादिः प्रथमः येषां ते इदम्प्रथमाः—इसमें सूत्र नहीं लगता है क्योंकि यहाँ भोजनादि क्रिया की नहीं अपितु देवदत्त आदि द्रव्य का गणन हो रहा है । इसी प्रकार अयं = पाकादिः वा प्रथमः = प्रधानं येषां ते—इदम्प्रथमाः—यहाँ भी पाकादि क्रिया की गणना = आवृत्ति नहीं अपितु प्रधानता बताई जा रही है । अतः यह सूत्र नहीं लगता है । पूर्वपद का प्रकृतिस्वर होता है । ]

यहाँ के प्रकाशित पदमञ्जरीपाठों में कुछ अंश छूटा हुआ प्रतीत होता है क्योंकि—"**इदम्प्रधाना इत्यर्थ इति ।**" यह प्रतीक देने के बाद "अनेन प्रधानवचनः प्रथमशब्दो न त्वेकसंख्यावचन इति दर्शयन् गणनाभावमाह"—ऐसा लिखकर "—**उत्तरपदस्येत्यादि**" यह प्रतीक लिखा गया है । इन दोनों का सम्बध करना सम्भव नहीं है ।

अतः ऐसा लगता है कि यहाँ कुछ अंश छूट गया है । अथवा

"**इदम्प्रधाना इत्यर्थ** इति । अनेन प्रधानवचनः प्रथम-शब्दो न त्वेकसंख्यावचन इति दर्शयन् गणनाभावमाह ।"

---

१. बहुवचनान्तपाठोऽशुद्धः ।

**२८२६. संख्यायाः स्तनः ॥ १६३ ॥ ( ३८९७ )**

**संख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति । द्विस्तना । त्रिस्तना । चतुःस्तना । संख्याया इति किम् ? दर्शनीयस्तना । स्तन इति किम् ? द्विशिराः[1] ॥**

**२८२७. विभाषा छन्दसि ॥ १६४ ॥ ( ३८९८ )**

**छन्दसि विषये बहुव्रीहौ समासे संख्यायाः परः स्तनशब्दो विभाषाऽन्तोदात्तो भवति । द्विस्तनां कुर्याद्वामदेवः । द्विस्तनां करोति द्यावापृथिव्योर्दोहाय । चतुःस्तनां करोति पशूनां दोहायाष्टस्तनां करोति**

**न्यासः**

एवमुत्तरेऽपि बहुव्रीह्यधिकारेऽस्मिन् योगा द्रष्टव्याः ॥ १६२ ॥

**संख्यायाः स्तनः ॥ द्विस्तना, त्रिस्तनेति ।** द्वित्रिशब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ । 'स्तनगदी देवशब्दे', चुरादिरदन्तः, तस्माद् घञ् । तेन स्तनशब्द आद्युदात्तः । चतुस्तनेति । 'चतेरुरन्' इत्युरन्प्रत्ययान्तत्वाच्चतुःशब्द आद्युदात्तः ।

**दर्शनीयशब्दोऽनीयर्**—प्रत्ययान्तः 'उपोत्तमं रिति' इति मध्योदात्तः । **द्विशिरा इति ।** शिरःशब्दः 'नब्विषयस्य' इत्याद्युदात्तः ॥ १६३ ॥

**विभाषा छन्दसि ॥ १६४ ॥ संज्ञायां मित्राजिनयोः ॥ देवमित्रो ब्रह्ममित्र इति ।** देवब्रह्मशब्दावुक्तस्वरौ ।

**पदमञ्जरी**

चोत्तरपदं कार्यित्वेनाश्रीयते । तेन यदा कबुत्पद्यते तदा कपि परतो यत्पूर्वं प्रथमेति तदन्तोदात्तं भवति, न तु कबन्तम् । कप्प्रत्ययो हि समासस्यैवान्तः, नोत्तरपदस्य । यदा च समासार्थादुत्तरपदादकृत एव समासे समासान्त इति पक्षः, तदापि 'प्रथमपूरणयोः' इति विशिष्टरूपग्रहणात्, कपश्च तत्रानन्तर्भावादुपात्तयोरेव स्वरः । ननु यदत्रोत्तरपदं कबन्तं न तदुपात्तम्, यच्चोपात्तं न तदुत्तरपदम्, कपा सहोत्तरपदत्वादिति नात्र कपः स्वरप्रसङ्गः, नापि तत पूर्वपदस्य स्वरेण भवितव्यम् । तस्मादस्मिन् पक्षे उत्तरपदग्रहणमुपान्तस्योपलक्षणम् । प्रायेण हि तदुत्तरपदम्, उत्तरपदस्य कार्यित्वात् । कोऽर्थः ? प्रायेणोत्तरपदभूतयोः प्रथमपूरणयोः कार्यित्वादित्यर्थः ॥ १६२ ॥ १६३ ॥

**विभाषा छन्दसि ॥ द्विस्तना**—इत्यन्तोदात्तम् । **चतुःस्तना**—इत्याद्युदात्तम् ॥ १६४ ॥

**भावबोधिनी**

यहाँ तक पैराग्राफ समाप्त करके आगे का प्रतीक दूसरे पैराग्राफ से प्रारम्भ करें—

**उत्तरपदस्येत्यादि ।** सर्वत्रेह समासस्येति प्रकृतम्, 'उत्तरपदादिः' इत्यतः प्रभृति 'उत्तरपदस्य' इति च, तत्र चोत्तरपदं कार्यित्वेनाश्रीयते''''॥

इस असंगति को दूर करने के लिए न्यास का प्रकाशित पाठ सहायक है ॥ १६२ ॥

संख्यावाचक से परे स्तन शब्द बहुव्रीहि समास में अन्तोदात्त होता है । उदा०—द्विस्तना । त्रिस्तना । चतुःस्तना । [ इनमें पूर्वपद का प्रकृतिस्वर न होकर स्तन शब्द अन्तोदात्त होता है । ]

संख्यावचक से परे इसका क्या फल है ? दर्शनीयस्तना । [ संख्यावाचक से परे नहीं है । अतः पूर्वपद का प्रकृतिस्वर ही होता है । ] स्तन—इसका क्या फल है ? द्विशिराः । त्रिशिराः । [ संख्यावाचक है बहुव्रीहि है किन्तु स्तन शब्द नहीं है । अतः पूर्वपद का प्रकृतिस्वर ही होता है ॥ १६३ ॥

छन्दोविषय में बहुव्रीहि समास में संख्यावाचक से परे स्तन शब्द विकल्प से अन्तोदात्त होता है । उदा०—''द्विस्तनां कुर्याद् वामदेवः । द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुःस्तनां करोति पशूनां दोहायाष्टस्तनां करोति

१. 'त्रिशिरा' इत्यधिमन्यपुस्तके ।

छन्दसां दोहाय' ( तै० सं० ५.१.६.४ ) ।

## २८२८. संज्ञायां मित्राजिनयोः ॥ १६५ ॥ ( ३८९९ )

संज्ञायां विषये बहुव्रीहौ समासे मित्र, अजिन—इत्येतयोरुत्तरपदयोरन्त उदात्तो भवति । देवमित्रः । ब्रह्ममित्रः । वृकाजिनः । कूलाजिनः । कृष्णाजिनः ।

संज्ञायामिति किम् ? प्रियमित्रः । महाजिनः ।

❀ ऋषिप्रतिषेधो मित्रे ( का० वा० १ ) ❀ । विश्वामित्र ऋषिः ( तै० सं० ४.३.२.२ ) ॥

## २८२९. व्यवायिनोऽन्तरम् ॥ १६६ ॥ ( ३९०० )

व्यवायी = व्यवधाता, तद्वाचिनः परमन्तरं बहुव्रीहौ समासेऽन्तोदात्तं भवति । वस्त्रान्तरः । पटान्तरः ।

**न्यासः**

'अमिचिमिदिशसिभ्यः क्त्रः' इति मित्रशब्दोऽन्तोदात्तः । **वृकाजन इति** । प्रकृतिविकारयोर्भेदस्याविवक्षितत्वाद् वृकविकारे वृकशब्दोऽत्र वर्तते । वृकमजिनमस्य वृकाजिनः । वृकशब्दः 'प्राणिनां कुपूर्वाणाम्' इत्याद्युदात्तः । 'श्यास्त्याह्वेञविभ्य इनच्' इत्यधिकृत्य 'अजेरज च' इतीनजादेशश्च । तेनाजिनमन्तोदात्तम् । **कूलाजिन इति** । कु इति निपातः, तस्मिन्नुपपदे 'ला आदाने' इत्येतस्माद् 'अन्येष्वपि दृश्यते' इति डः; 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । तेन कूल इत्यन्तोदात्तः । **कृष्णाजिन इति** । 'इण्सिञ्जिदीङुष्यविभ्यो नक्' इत्यधिकृत्य 'कृषेर्वर्णे' इति नक् । तेन कृष्णोऽन्तोदात्तः ।

**प्रियमित्र इति** । प्रीणातीति प्रियः, 'इगुपध' इत्यादिना कः । तेन प्रियोऽन्तोदात्तः । **महाजिन इति** । 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' इति महच्छब्दोऽन्तोदात्तः ॥ १६५ ॥

**व्यवायिनोऽन्तरम्** ॥ १६६ ॥ **मुखं स्वाङ्गम्** ॥ **गौरमुख इति** । 'गुरी उद्यमने', एतस्मादच् । तदन्तादपि

**पदमञ्जरी**

**संज्ञायां मित्राजिनयोः** ॥ **विश्वामित्र इति** । 'मित्रे चर्षौ' इति दीर्घः, परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यते, ततः 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तं भवति ॥ १६५ ॥

**व्यवायिनोऽन्तरम्** ॥ उदाहरणे व्यवधानवाचिनोऽन्तराशब्दात् 'तत्करोति' ( वा० २०० ) इति णिचि

**भावबोधिनी**

छन्दसां दोहाय ।" ( तै० सं० ५।१।६।४ ) [ इनमें स्तन शब्द विकल्प से अन्तोदात्त होता है । पक्ष में पूर्वपद का प्रकृतिस्वर होता है ] ॥ १६४ ॥

संज्ञा विषय में बहुव्रीहि समास में मित्र और अजिन—इन उत्तरपदों का अन्त उदात्त होता है । उदा०—देवमित्रः । ब्रह्ममित्रः । वृकाजिनः । कूलाजिनः । कृष्णाजिनः [ मित्र और अजिन का अन्त उदात्त होता है—देवः मित्रं यस्य सः—यह बहुव्रीहि है । और संज्ञा = रूढ शब्द है । ]

संज्ञा में—इसका क्या फल ? प्रियमित्रः । महाजिनः । [ यहाँ यौगिक अर्थ है संज्ञा नहीं । अतः पूर्वपद का प्रकृतिस्वर होता है । ]

❀ मित्र परे ऋषि अर्थ में प्रतिषेध कहना चाहिए । ❀ विश्वामित्रः ऋषिः । [ 'मित्रे चर्षौ" सूत्र से दीर्घ होता है । प्रतिषेध के कारण अन्त उदात्त न होकर पूर्वपद का प्रकृतिस्वर होता है । ] ॥ १६५ ॥

व्यवायी = व्यवधान करने वाला, व्यवधान के वाचक से परे 'अन्तर' शब्द बहुव्रीहि समास में अन्तोदात्त होता है । उदा०—वस्त्रान्तरः । पटान्तरः । कम्बलान्तरः । वस्त्र है अन्तर = व्यवधायक जिसका वह वस्त्रान्तरः' । वस्त्र को व्यवधान करने वाला—यह अर्थ है ।

कम्बलान्तरः। वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः। वस्त्रव्यवधायक इत्यर्थः।

व्यवायिन इति किम्? आत्मान्तरः। आत्मा=स्वभावोऽन्तरः=अन्यो यस्यासावात्मान्तरः॥

## २८३०. मुखं स्वाङ्गम्॥ १६७॥ ( ३९०१ )

मुखमुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति। गौरमुखः। भद्रमुखः।

स्वाङ्गमिति किम्? दीर्घमुखा शाला। स्वाङ्गमद्रवादिलक्षणमिह गृह्यते।

## २८३१. नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः॥ १६८॥ ( ३९०२ )

अव्यय, दिक्शब्द, गो, महत्, स्थूल, मुष्टि, पृथु, वत्स—इत्येतेभ्य· परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे नान्तोदात्तं भवति। अव्यय—उच्चैर्मुखः। नीचैर्मुखः। दिक्शब्द—प्राङ्मुखः। प्रत्यङ्मुखः। गो—गोमुखः।

**न्यासः**

प्रज्ञादेराकृतिगणत्वात् 'प्रज्ञादिभ्यश्च' इत्यण्, तेन गौरोऽन्तोदात्तः। उदि दृणातेरजलौ पूर्वपदान्तलोपश्च इति प्रकृत्य 'डित् खनेर्मुट् स चोदात्तः' इति खनेरजलावित्येतौ प्रत्ययौ भवतः, तौ च डितौ, मुट् चोदात्तः। तेन मुखशब्द आद्युदात्तः। भद्रमुख इति। 'ऋज्रेन्द्र इत्यादिसूत्रेण भद्रशब्दो व्युत्पाद्यते। तेन भद्र इत्यन्तोदात्तः।

दीर्घमुखा शालेति। मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते। स्वाङ्गमद्रवलक्षणमिह गृह्यते इति। 'अद्रवं मूर्त्तिमत् स्वाङ्गम्' इत्यादि यत् परिभाषितं स्वाङ्गमद्रवादिलक्षणं तदिह गृह्यते। तेन दीर्घमुखा शालेत्यत्र न भवतीति भावः॥ १६७॥

नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः॥ पूर्वेण प्राप्तस्यान्तोदात्तत्वादयं प्रतिषेध उच्यते। उच्चैर्मुख इति। उच्चैरित्येते स्वरादौ पठ्यन्ते, तेऽन्तोदात्ता इति निपात्यन्ते। प्राङ्मुख इति। प्राङित्येत् क्विन्नन्तमाद्यु-

**पदमञ्जरी**

पचाद्यच्। प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः॥ १६६॥

मुखं स्वाङ्गम्॥ दीर्घमुखा शालेति। मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते। ननु च स्वमङ्गं स्वाङ्गम्, ततश्च भवितव्यमेवात्रापि? अत आह—स्वाङ्गमद्रवादिलक्षणं गृह्यत इति॥ १६७॥

नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः॥ उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तोदात्तौ। प्राक्शब्दः 'अनिगन्तोऽञ्चतौ' इत्याद्युदात्तः। प्रत्यङित्यत्र कृदुत्तरपदप्रकृतिस्वरः। गोमहतोरुक्तः स्वरः स्थूलशब्दः 'ऋज्रेन्द्र'

**भावबोधिनी**

व्यवधायी का वाचक—इसका क्या फल है? आत्मान्तरः। आत्मा=स्वभाव है अन्तरः=अन्य जिसका वह आत्मान्तर है। [ यहाँ अन्तर शब्द व्यवधानवाचक नहीं है। अतः यह सूत्र नहीं लगता है। पूर्वपद का प्रकृतिस्वर होता है। ]॥ १६६॥

स्वाङ्गवाचक मुख उत्तरपद बहुव्रीहि समास में अन्तोदात्त होता है। उदा०—गौरमुखः। भद्रमुखः।

स्वाङ्गवाचक—इसका क्या फल है? दीर्घमुखा शाला। [ यहाँ स्वाङ्गवाचक नहीं है। ] यहाँ स्वाङ्ग अद्रवादिलक्षण लिया जाता है। [ इसकी व्याख्या 'स्वाङ्गाच्चोपसर्जनात्' ४।१।५४ में देखें—

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतस्थं तत्र दृष्टं च तेन चेतत्तथा युतम् ]॥ १६७॥

अव्यय, दिक्शब्द, गो, महत, स्थूल, मुष्टि, पृथु और वत्स—इनसे परे स्वाङ्गवाची मुखशब्द बहुव्रीहि समास में अन्तोदात्त नहीं होता है। उदा०—अव्यय—उच्चैर्मुखः। नीचैर्मुखः। दिक्शब्द—प्राङ्मुखः। प्रत्यङ्मुखः। गोशब्द—

महत्—महामुखः। स्थूल—स्थूलमुखः। मुष्टि—मुष्टिमुखः। पृथु—पृथुमुखः। वत्स—वत्समुखः। पूर्वपद-प्रकृतिस्वरो यथायोगमेषु भवति। गोमुष्टिवत्सपूर्वस्योपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते॥

## २८३२. निष्ठोपमानादन्यतरस्याम्॥ १६९॥ ( ३९०३ )

**निष्ठान्तादुपमानवाचिनश्च मुखं स्वाङ्गमुत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति।** प्रक्षालितमुखः, प्रक्षालितमुखः, प्रक्षालितमुखः। यदैतदुत्तरपदान्तोदात्तत्वं न भवति, तदा 'निष्ठोपसर्ग-

### न्यासः

दात्तम्, तत्र 'अनिगन्तोऽञ्चतौ वप्रत्यये' इति पूर्वपदस्य प्रकृतिस्वरः। **प्रत्यङ्मुख इति।** अत्र कृदुत्तरपदप्रकृति-स्वरः। **गोमुखः, महामुख इति।** गोमहच्छब्दावन्तोदात्तावित्युक्तम्। **स्थूलमुख इति।** 'स्थूल परिबृंहणे'—चुरादिः, तस्मात् पचाद्यच्। तेन स्थूलशब्दोऽन्तोदात्तः। **मुष्टिमुख इति।** मुषेः क्तिच्। तेन मुष्टिशब्दोऽन्तोदात्तः। **पृथुमुख इति।** 'कुर्भ्रश्च' इत्यधिकृत्य 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' इति कुप्रत्ययः। तेन पृथुरन्तोदात्तः। **वत्समुख इति।** 'वृतॄवदिहनि' इत्यादिना सः। तेन वत्सोऽन्तोदात्तः। **गोमुष्टीत्यादि।** उत्तरसूत्रेण निष्ठादिपूर्व-पदस्योपमानलक्षणोऽपि यः प्राप्नोति सोऽप्यनेन बाध्यते। अस्य प्रतिषेधस्यावकाशे यत्र गवाद्युपमानं न—गौर्मुखमिव यस्य, मुष्टिमुखमिव यस्य, वत्सो मुखमिव यस्येति सर्वत्र गवाद्युपमेयम्, नोपमानम्। उत्तरसूत्रेण निष्ठादिपूर्वपदस्योपमानलक्षणस्य विकल्पस्यावकाशो यत्र गवादेरन्यदुपमानम्—सिंहमुखः, व्याघ्रमुख इति। यत्र गवाद्युपमानं तद् यत्र पूर्वपदं तत्रोभयप्राप्तावुपमानलक्षणं बाधित्वाऽयमेव प्रतिषेधो पूर्वविप्रतिषेधेन॥ १६८॥

**निष्ठोपमानादन्यतरस्याम्॥** 'मुखं स्वाङ्गम्' इति नित्ये प्राप्ते विकल्पवचनमेतत्। **यदैतदुत्तरपदान्तो-दात्तत्वमित्यादि।** अन्यतरस्यां ग्रहणाद्विकल्पेनैतदुत्तरपदान्तोदात्तत्वं विधीयते। तेन यदैतन्न भवति तदा 'निष्ठोपसर्गपूर्वपदस्यान्तरस्याम्' इति पक्षे पूर्वपदान्तोदात्तत्वं भवति। तस्यापि विकल्पेन विधानाद् यदास्या-भावस्तदा 'गतिरनन्तरः' इति पूर्वपदस्य प्रकृतिभावविधानाद् गतिस्वर एव। तेनाद्युदात्तत्वं भवति। यत एवं

### पदमञ्जरी

( द० उ० ८.४६ ) इत्यादौ निपातितः, अन्तोदात्तः। मुषेः क्तिच्—मुष्टिः। कुश्च, 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' ( द० उ० १.११३ ) इति **पृथुः।** 'वदेः सः', ( द० उ० ९.२१ ), **वत्सः।** **गोमुष्टिवत्सपूर्वस्येत्यादि।** अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न भवति—गौर्मुखमिव यस्य, मुष्टिर्मुखमिव यस्य, वत्सो मुखमिव यस्येति, सर्वत्र गवाद्युपमेयम्, नोपमानम्; विकल्पस्योत्तरस्यावकाशो यत्र गवादिपूर्वपदं न भवति—सिंहमुखः; व्याघ्रमुखः; गवादावुपमाने उभयप्रसंगेऽयमेव भवति प्रतिषेधः पूर्वविप्रतिषेधेन॥ १६८॥

**निष्ठोपमानादन्यतरस्याम्॥** हिंसेः पचाद्यच्, पृषोदरादित्वादाद्यन्तविपर्ययः—सिंहः। व्याजिघ्रतीति

### भावबोधिनी

गोमुखः। [ गो के समान मुखवाला ]। महत्—महामुखः। स्थूल—स्थूलमुखः। मुष्टि—मुष्टिमुखः। पृथु—पृथुमुखः। वत्स—वत्समुखः। [ इनमें पूर्वसूत्र से प्राप्त मुख के अन्तोदात्तत्व का प्रतिषेध हो जाता है। अतः ] इन उक्त शब्दों में यथायोग पूर्वपद के प्रकृतिस्वर होते हैं। गो, मुष्टि, वत्स—इनमें से कोई पूर्व में है ऐसे मुख का उपमानलक्षण विकल्प [जो अग्रिम सूत्र से प्राप्त होता है उस] का भी पूर्वविप्रतिषेध से बाध हो जाता है॥ १६८॥

निष्ठान्त से और उपमानवाचक से परे स्वाङ्गवाचक मुख शब्द उत्तरपद बहुव्रीहि समास में विकल्प से अन्तोदात्त होता है। उदा०—प्रक्षालितमुखः। [ निष्ठान्त से परे है। अन्तोदात्त होता है। ] जब यह उत्तरपद अन्तोदात्त नहीं होता है अब "निष्ठोपसर्गपूर्वमन्यतरस्याम्" ( ६।२।११० ) से पक्ष में पूर्वपद का अन्तोदात्तत्व होता है और इसके भी अभाव में

**पूर्वमन्यतरस्याम्' ( ६_२.११० ) इति पक्षे पूर्वपदान्तोदात्तत्वम्, तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वर इति त्रीण्युदाहरणानि भवन्ति । उपमानात्—सिंहमुखः सिंहमुखः । व्याघ्रमुखः व्याघ्रमुखः ॥**

## २८३३. जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ॥ १७० ॥ (३९०४)

**जातिवाचिन आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासेऽन्तोदात्तं भवति । साङ्गरजग्धः[1] । पलाण्डुभक्षितः । सुरापीतः । काल—मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः । सुखादिभ्यः—सुखजातः । दुखजातः । तृप्रजातः ।**

**न्यासः**

ततस्त्रीण्युदाहरणानि भवन्ति—एकमनेन सूत्रेणोत्तरपदस्यान्तोदात्तत्वविधानम्, द्वितीयम्, 'निष्ठोपसर्गपूर्वादन्यतरस्याम्' इत्यादिना पूर्वपदान्तोदात्तत्वविधानम्, तृतीयम् 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरविधानम् । **सिंहमुख इति ।** सिंहशब्दः पचाद्यजन्तत्वादन्तोदात्तः । 'तृहि हिसि हिंसायाम्', हिनस्तीति सिंहः—पृषोदरादित्वाद् वर्णव्यत्ययः । **व्याघ्रमुख इति ।** 'घ्रा गन्धोपादाने'—इत्यस्माद् व्याङ्पूर्वाद् 'आतश्चोपसर्गे कः', तेन व्याघ्रशब्दोऽप्यन्तोदात्त एव ॥ १६९ ॥

**जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ॥ शाङ्गरजग्ध इति ।** गृणातेर्गिरतेर्वा 'शमिधातोः संज्ञायाम्' इत्यच् शङ्गरः, ततोऽपि प्रज्ञादेराकृतिगणत्वादण् । तेन शाङ्गरशब्दोऽन्तोदात्तः । **पलाण्डुभक्षित इति ।** 'पल गतौ', 'उणादयो बहुलम्' इत्याण्डुप्रत्ययः । तेन पलाण्डुशब्दो मध्योदात्तः । **सुरापीत इति ।** 'सुसूधागृधिभ्यः क्रन्' इति सुराशब्द आद्युदात्तः । **मासजात इति ।** 'मसी परिमाणे'—

**पदमञ्जरी**

व्याघ्रः । 'आतश्चोपसर्गे' इति कः । 'पाघ्राध्माधेट्दृशः' इति शो न भवति; 'जिघ्रतेः संज्ञायां प्रतिषेधः' ( वा० २२३ ) इति वचनात् ॥ १६९ ॥

**जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ॥** ननूदाहरणेषु प्रत्युदाहरणेषु च निष्ठेति निष्ठान्तं पूर्वं प्रयोक्तव्यं स्यात् ? इत्यत आह—**एतेष्विति । प्रत्युदाहरणेष्वित्यादि ।** तत्र पुत्रशब्दोऽन्तोदात्तः ।

**भावबोधिनी**

पूर्वपद के प्रकृतिस्वर होने से गतिस्वर [ "गतिरनन्तरः" सूत्र से ] होता है, इस प्रकार तीन उदाहरण होते हैं । [ ( १ ) प्रक्षालितमुखः मुख का अन्तोदात्तत्व वाला । ( २ ) पूर्वपद के अन्तोदात्तत्व वाला प्रक्षालितमुखः । ( ३ ) गति स्वरवाला — प्रक्षालितमुखः । ] उपमान से—सिंहमुख । व्याघ्रमुखः । [ पक्ष में पूर्वपद सिंह का अन्तोदात्त और व्याघ्र का अन्तोदात्त—यह पूर्वपद का प्रकृतिस्वर होता है । ] ॥ १६९ ॥

आच्छादन = वस्त्र को छोड़कर जातिवाचक, कालवाचक और सुखादि से परे क्तान्त शब्द, कृत, मित, प्रतिपन्न को छोड़कर, बहुव्रीहि समास में अन्तोदात्त होता है । उदा०—जातिवाचक—साङ्गरजग्धः । पलाण्डुभक्षितः । सुरापीतः । [जातिवाचक से निष्ठान्त परे है । ] कालवाचक—मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः । [ मासः जातः अस्य—आदि विग्रह करने चाहिए । ] सुखादि से परे—सुखजातः । दुःखजातः । तृप्रजातः । [ इनमें क्तान्त का अन्त उदात्त होता है । ]

जात्यादि से परे—इसका क्या फल है ? पुत्रजातः । आहिताग्न्यादि होने से [जात निष्ठान्त का] परनिपात होता है ।

---

१. मुद्रिते तु सारङ्गजग्ध इति पाठः । तत्र शकन्ध्वादित्वात्पत्वम् । 'सारङ्गः पशुपक्षिणोः' इति । न्यासे 'शारङ्गजग्ध' इति ।

**जात्यादिभ्य इति किम्? पुत्रजातः। आहिताग्न्यादित्वात्परनिपातः। अनाच्छादनादिति किम्? वस्त्रच्छन्नः। वसनच्छन्नः। अकृतमितप्रतिपन्ना इति किम्? कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः।**

**न्यासः**

अस्माद् घञ्, तेन मास आद्युदात्तः। **संवत्सरजात इति**। 'अशेः सरः' इत्यधिकृत्य 'वसेश्च', 'सम्पूर्वाच्चित्' इति। तेन संवत्सरोऽन्तोदात्तः। **द्व्यहजातः, त्र्यहजात इति**। द्वित्रिशब्दावन्तोदात्तावित्युक्तम्। **सुखजात इति**। खनतेः सुपूर्वाद् 'अन्येष्वपि दृश्यते' इति डः[1]। तेन सुखशब्दोऽन्तोदात्तः। एवं दुःखशब्दोऽपि वेदितव्यः। अयं तु विशेषोऽत्र—'दुष्पूर्वात् खनेर्डः' इति। तृप्रे 'स्फायितञ्चि' इत्यादिना रप्रत्ययः। तेन तृप्रशब्दोऽन्तोदात्तः। **कृच्छ्रजात इति**। 'कृते च्छः क्रू च' इति' कृच्छ्रशब्दोऽन्तोदात्तः। 'असु क्षेपणे', अस्माद् 'बहुलमन्यत्रापि' इति रक्, तेनास्रमन्तोदात्तम्। 'वृतॄवदिहनिकमिकषिभ्यः सः' इति बहुलवचनादमेरपि भवति। अंसो वृषादित्वादाद्युदात्तः। **अलकमिति**। अलतेः 'पुंसि संज्ञायां घः प्रायेण', ततः कन्निति कन्नन्तोऽलकशब्दः। तेनाद्युदात्तः। 'कॄवृदारिभ्य उनन्', तेन करुणशब्द आद्युदात्तः। 'रञ्जेः क्युन्' इति बहुलवचनात् कृपेरपि भवति। तेन कृपणमाद्युदात्तम्। सोढ इति क्तान्तम्। तेनैतदन्तोदात्तम्। पूर्ववद् धत्वढत्वादयः कर्तव्याः। **प्रतीपमिति**। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। 'ऋक्पूः' इत्यादिनाऽकारः समासान्तः, 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीत्वम्। **पुत्रजात इति**। अत्र बहुव्रीहिस्वर एव भवति। 'अमिचिमिदिशसिभ्यः क्त्रः', 'पुवो ह्रस्वश्च'। तेन पुत्रशब्दोऽन्तोदात्तः।

कथं पुनर्जातशब्दस्य परनिपातः, यावता 'निष्ठा' इति पूर्वनिपातेनात्र भवितव्यम्? इत्यत आह—**आहिताग्न्यादित्वादित्यादि**। पुत्रजातशब्दोऽयमाहिताग्न्यादिषु पठ्यते, तेन वा 'आहिताग्न्यादिषु' इति जातादिशब्दस्य परनिपातः। **वस्त्रच्छन्न इति**। वस्त्रम्=आच्छादनम्, आच्छाद्यतेऽनेनेति कृत्वा। वस्त्रशब्द उक्तस्वरः। छन्नशब्दः 'छद अपवारणे' इत्यस्य ण्यन्तस्य निष्ठायाम् 'वा दान्तशान्त' इत्यादिना निपातितः। **वसनच्छन्न इति**। वसेराच्छादनार्थाल्ल्युट्। तेन वसनमाद्युदात्तम्। **कुण्डकृत इति**। कुण्डशब्दोऽयम् 'नब्विषयस्य' इत्याद्युदात्तः। **कुण्डमित इति**। 'माङ् माने', 'द्यतिस्यति' इत्यादिनेत्त्वम्।

**पदमञ्जरी**

'वसेष्ट्रन्' (द० उ० ८.७९)—वस्त्रम्, तस्यैव ल्युट्—वसनम्। कुण्डशब्दः 'नब्विषयस्यानिसन्तस्य'

**भावबोधिनी**

अनाच्छादन ( =वस्त्रादि को छोड़कर )—इसका क्या फल है? वस्त्रच्छन्नः। वसनच्छन्नः [ यहाँ बहुव्रीहि का विग्रह करना चाहिए तत्पुरुष का नहीं। ]

कृत, मित, प्रतिपन्न से भिन्न—इसका क्या फल है? कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। [ इनमें अन्तोदात्त न होकर पूर्वपद का प्रकृतिस्वर होता है। ]

इन पूर्वोक्त बहुव्रीहि के लक्ष्यों में निष्ठान्त का पूर्वनिपात नहीं होता है—इसमें यही ज्ञापक है। [ यदि पूर्वनिपात होता तो कृत मित प्रतिपन्न परे रहते ही नहीं, उनको छोड़ने की आवश्यकता नहीं थी। ] सभी प्रत्युदाहरणों में पूर्वपद का प्रकृतिस्वर लगाना चाहिए।

---

१. एवं क्रमशः सुखादयो व्युत्पाद्यन्ते। ते च यथा न्यासमतेन—
सुखदुःखतृप्रकृच्छ्राण्यस्रांसावलकं तथा।
करुणकृपणे सोढः प्रतीपञ्च सुखादयः॥ इति।

**एतेषु बहुव्रीहिषु निष्ठान्तस्य पूर्वनिपातो[1] न भवति; अस्मादेव ज्ञापकात्। प्रत्युदाहरणेषु पूर्वपद-प्रकृतिस्वरो योजयितव्यः।**

**सुखादयस्तृतीयेऽध्याये ( ३.१.१८ ) पठ्यन्ते[2] ॥**

## २८३४. वा जाते ॥ १७१ ॥ ( ३९०५ )

**जातशब्द उत्तरपदे वाऽन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः। दन्तजातः। दन्तजातः। स्तनजातः। स्तनजातः। कालात्—मासजातः। मासजातः। संवत्सरजातः। संवत्सरजातः। सुखादिभ्यः—सुखजातः। सुखजातः। दुःखजातः। दुःखजातः।**

### न्यासः

अथ कथमेतेषु बहुव्रीहिषु 'निष्ठा' इत्यनेन निष्ठान्तस्य पूर्वनिपातो न भवति ? इत्याह—**एतेष्वित्यादि। यस्मादेतत् कृतम्, तस्माज्जात्यादिभ्यः परस्यान्तोदात्तत्वविधानम्। एतस्मादेव ज्ञापकान्निष्ठान्तस्य पूर्वनिपातो न भवति;** अन्यथा ह्येतदन्तोदात्तत्वविधानं नोपपद्यते ॥ १७० ॥

**वा जाते ॥** जातशब्दोऽपि क्तान्त इति तस्यापि जात्यादिभ्यः **परस्य पूर्वेण नित्यमन्तोदात्तत्वे विकल्पोऽयमुच्यते। दन्तजात इति।** 'हसिमृग्रिणवामिदमि' इत्यादिना तन्—दन्तः। तेनायमाद्युदात्तः। **स्तनजात इति।** स्तनशब्द उक्तस्वरः ॥ १७१ ॥

### पदमञ्जरी

( फि० सू० २.३ ) इत्याद्युदात्तः ॥ १७० ॥

**वा जाते ॥ दन्तस्तनशब्दौ** 'स्वाङ्गशिटामदन्तानाम्' ( फि० सू० २.६ ) इत्याद्युदात्तौ। मासशब्दः 'ग्रामादीनां च' ( फि० सू० २.१५ ) इत्याद्युदात्तः। संवत्सरशब्दः 'बंहिष्ठवत्सरतिशत्थान्तानाम्' (फि० सू० १.७) इत्यन्तोदात्तः। अस्यार्थः—बंहिष्ठवत्सरतिशत्थ इत्येवमन्तानामन्त उदात्तो भवति—बंहिष्ठः, संवत्सरः, सप्ततिः, अशीतिः, त्रिंशत्, चत्वारिंशत्, गूथम्, पूथम्।

**सुखदुःखशब्दौ** 'खान्तस्याश्ममादेः' ( फि० सू० १.६ ) इत्यन्तोदात्तौ। अस्यार्थः—खान्तस्य शब्दस्याशकारमकारादेरन्त उदात्तो भवति, नखः, उखा। अश्मादेरिति किम् ? शिखा, मुखम्। तृपेः 'स्फायितञ्चि' ( द० उ० ८.३१ ) इत्यादिना रक्प्रत्ययः। 'कृतेश्छ्र च' ( द० उ० ८.३८ )—कृच्छ्रम्। असेर्बहुलवचनाद्रक्, अस्रम्। 'अम्बिकादयश्च' इति अम्बिकशब्द इकन्प्रत्ययान्तो निपातितः। प्रतिगता आपोऽत्र प्रतीपम्। 'कृवापाजिभ्य उण्' (द० उ० १.८६)—कारुः। कृपेः क्युन्'—कृपणः। सहेः क्ते सोढः। दश सुखादयः ॥ १७१ ॥

### भावबोधिनी

सुखादि शब्द तृतीय अध्याय में पठित है। [ "सुखादिभ्यः कर्तृवेदनायाम्' ३।१।१८ में इनका पाठ है—सुख। दुःख। तृप्त (तृस, तीव्र), गहन। कृच्छ्र। अस्र। अलीक। प्रतीप। करुण। कृपण। सोढ। न्यास में कुछ भेद है।]॥१७०॥

बहुव्रीहि समास में जातिवाचक, कालवाचक और सुखादि से परे जात शब्द उत्तरपद में विकल्प से अन्त उदात्त होता है। उदा०—दन्तजातः। स्तनजातः। [ दन्ताः जाताः=उत्पन्नाः यस्य स तादृशः वृषभादिः ] कालवाचक से—मासजातः। संवत्सरजातः। सुखादि से—सुखजातः। दुःखजातः। [ इन उदाहरणों में पूर्वसूत्र "जातिकाल-सुखादिभ्यः" ६।२।१७० से अन्तोदात्त नित्य प्राप्त है किन्तु प्रस्तुत सूत्र विकल्प से करता है। अतः इसके उदाहरणों में पूर्वपद का प्रकृति-स्वर भी होता है। अतः दन्त और स्तन का आद्युदात्त है। मास भी आद्युदात्त है। संवत्सर अन्तोदात्त है। सुख दुःख भी अन्तोदात्त हैं। पूर्वपद के ये स्वर हो जाते हैं। ] ॥ १७१ ॥

---

१. 'परनिपातो' इति पाठा०। २. ( ३.१.१८ ) सूत्रे पठिता इति भावः।

## २८३५. नञ्सुभ्याम् ॥ १७२ ॥ ( ३९०६ )

**नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति । अयवो देशः । अव्रीहिः । अमाषः । सुयवः । सुव्रीहिः । सुमाषः ।**

**❀ समासस्यैतदन्तोदात्तत्वमिष्यते ❀ । समासान्ताश्चावयवा भवन्तीति—अनृचः, बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति ।**

**न्यासः**

**नञ्सुभ्याम् ॥ अयवो देश इत्यादि ।** यवव्रीहिमाषा 'तृणधान्यानाञ्च द्व्यषाम्' इत्याद्युदात्ताः ।

**समासस्येत्यादि ।** इह समासः प्रकृत उत्तरपदं च । तत्र यद्युत्तरपदस्यैतदन्तोदात्तत्वं स्याद्, अनृचो बह्वृच इत्यत्र 'ऋक्पूरब्धूः' इत्यादिनाकारे समासान्ते कृते ततः पूर्वस्य ऋक्शब्दस्योत्तरपदस्यान्तोदात्तत्वं प्रसज्येत । समासस्य त्वन्तोदात्तत्वं विधीयमानमकारस्यैव भवति; तस्य समासावयवत्वात् । समासावयवत्वं तु 'समासान्ताः' इत्यधिकृत्य विधानात् । तस्मात् समासावयवस्यैतदन्तोदात्तत्वमिष्यते । कथं पुनरिष्यमाणमपि लभ्यते ? 'कपि पूर्वम्' इत्यत्र पूर्वग्रहणात् । तद्धि पूर्वग्रहणमनेन समासस्यान्तोदात्तत्वं विधीयमानम्—समासावयवस्य कप एव मा भूदित्येवमर्थं क्रियते । यदि तूभयपदस्यैतदन्तोदात्तत्वं स्यात्, तदान्तरेणापि कपिपूर्वग्रहणं कपिपूर्वस्योत्तरपदस्य स्यात्, न कपः; न हि कबुत्तरपदस्यावयवः, ततश्च पूर्वग्रहणमनर्थकम् । इदं तावत्—'समासान्ताः प्रत्ययाः समासस्यैवावयवाः, नोत्तरपदस्य' इत्येतद्दर्शनमङ्गीकृत्योक्तम् । इदानीम् 'उत्तरपदस्यापि तेऽवयवाः' इत्येवद् दर्शनमाश्रित्याह—**समासान्ताश्चेत्यादि ।** उत्तरपदं चेति शेषः । एतदन्तोदात्तत्वमिष्यत इति प्रकृतेन सम्बन्धः । इतिकरणो हेतौ । अथ वा—उत्तरपदस्यैवैतदन्तोदात्तत्वमिष्यते । कुतः ? समासान्ता उत्तरपदावयवा भवन्तीत्यतो हेतोः । तेनानृचः, बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति, तच्चोत्तरपदस्य भवेत् । तस्यैव समासान्तस्य भवति; तस्योत्तरपदावयवत्वादिति भावः । यदि हि समासान्ता उत्तरपदावयवा न स्युः, तत उत्तरपदावयवस्यान्तोदात्तत्वं विधीयमानं समासान्तस्य न स्यात् । उत्तरपदावयवत्वे हि समासान्तानां तस्यैव समासान्तस्य भवति । कथं पुनः समासान्तानामुत्तरपदावयवत्वम् ? समासार्थादुत्तरपदात् पूर्वं समासान्तं विधाय पश्चात् तदन्तेन समासविधानात् । तथा हि 'न कपि' इत्यत्र वक्ष्यति—'"गोस्त्रियोरुपसर्जनस्य" इत्ययमपि ह्रस्वः कपि न भवति । समासार्थे ह्युत्तरपदे कपि कृते पश्चात् कबन्तेन सह समासेन भवितव्यमिति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवति" इति ।

**पदमञ्जरी**

**नञ्सुभ्याम् ॥ समासस्यैतदित्यादि ।** यद्यपि समास उत्तरपदं चेति प्रकृतम्, तथाप्यत्र समासस्यैव कार्यित्वमिष्यते । एतच्च 'कपि पूर्वम्' इति वचनादवसीयते । यदि ह्यनेनोत्तरपदस्यान्तोदात्तत्वं स्यात्, ततोऽकुमारीक इत्यादावनेनैव सिद्धत्वात् 'कपि पूर्वम्' इति न वाच्यं स्यात् । **समासान्ताश्च समासावयवा भवन्तीति ।** समासान्ता इत्यत्रान्तग्रहणमेतदर्थम्—समासान्ताः समासग्रहणेन यथा गृह्येरन्निति, तेनानृच इत्यादौ कृते समासान्ते तस्यैव समासान्तस्योदात्तत्वं भवति । **बह्वृच इति ।** 'बहोर्नञ्वद्' इत्यतिदेशादिदमत्रोदाहृतम् । एतच्च 'समासान्ताः

**भावबोधिनी**

नञ् और सु—इनसे परे उत्तरपद बहुव्रीहि समास में अन्तोदात्त हो जाता है । उदा०—अयवो देशः । अव्रीहिः । अमाषः । [ अविद्यमाना यवा यस्मिन् स देशः । इसी प्रकार अन्य में भी विग्रह करना चाहिये । ] सुयवः । सुव्रीहिः । सुमाषः । [ शोभनाः यवाः यस्मिन् देशे सः—ऐसे विग्रह हैं । इनमें उत्तरपद का अन्त उदात्त होता है । ]

❀ यह अन्तोदात्तत्व समास का इष्ट है । ❀ और समासान्त समास के अवयव होते हैं—इसलिये 'अनृचः बह्वृचः'

## २८३६. कपि पूर्वम् ॥ १७३ ॥ ( ३९०७ )

नञ्सुभ्यां कपि परतः पूर्वमन्तोदात्तं भवति। अकुमारीको देशः। अवृषलीकः। अब्रह्मबन्धूकः। सुकुमारीकः। सुवृषलीकः। सुब्रह्मबन्धूकः॥

## २८३७. ह्रस्वाऽन्तेऽन्त्यात्पूर्वम् ॥ १७४ ॥ ( ३९०८ )

ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे। अयवको देशः। अव्रीहिकः। अमाषकः। सुयवकः। सुव्रीहिकः। सुमाषकः।

### न्यासः

समासान्तप्रत्ययान्तेन च पदेन यदि समासः क्रियते, तदा 'तन्मध्ये पतितास्तद्ग्रहणेन गृह्यन्ते' इति समासान्ताः प्रत्ययाः उत्तरपदावयवा भवन्ति। यद्येवम्, समासावयवत्वं तेषां नोपपद्यते? नैतदस्ति; अवयवावयवोऽपि हिं समुदायावयवो भवति, तथा हि—'देवदत्तायाः सर्वेऽवयवा अलङ्क्रियन्ताम्' इत्युक्ते देवदत्तावयवस्य येऽवयवा अङ्गुल्यादयस्तेऽप्यलङ्क्रियन्ते ॥ १७२ ॥

**कपि पूर्वम्** ॥ पूर्वेण कप एवान्तोदात्वे प्राप्ते कपि पूर्वस्योदात्तत्वमनेन विधीयते। **अकुमारी इत्यादि**। 'शेषाद्विभाषा' इति कप्। कुमारीशब्द उदात्तनिवृत्तिस्वरेणान्तोदात्तः। वृषलीशब्दोऽपि जातिलक्षणेन ङीषा। ब्रह्मबन्धूरप्यूङन्तत्वात् प्रत्ययस्वरेण ॥ १७३ ॥

**ह्रस्वान्तेऽन्त्यात् पूर्वम्** ॥ **ह्रस्वोऽन्तोऽस्येत्यादि**। अनेन ह्रस्वान्त इत्यस्यैव बहुव्रीहेरन्यपदार्थं उत्तरपदं

### पदमञ्जरी

समासस्यैवावयवाः, नोत्तरपदस्य' इत्याश्रित्योक्तम्। 'न कपि' इत्यत्र तु 'पूर्वं समासान्तेषु पश्चात्तदन्तेन समासः' इति वक्ष्यति ॥ १७२ ॥

**कपि पूर्वम्** ॥ पूर्वेण कप एवोदात्तत्वे प्राप्ते ततः पूर्वस्योदात्तत्वं विधीयते। ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति वचनादिह दीर्घान्ता एवोदाहृताः। 'नद्यृतश्च' इति कप् ॥ १७३ ॥

**ह्रस्वान्तेऽन्त्यात्पूर्वम्** ॥ 'ह्रस्वान्ते' इत्यस्य बहुव्रीहेरन्यपदार्थं उत्तरपदं समासो वेत्याह—**ह्रस्वोऽन्तो यस्येत्यादि**।

### भावबोधिनी

इनमें समासान्त [ "ऋक्पूरब्धूःपथामानक्षे" से अ प्रत्यय ] करने पर अन्तोदात्तत्व किया जाता है। [ इस प्रकार यह स्वर समासान्त का ही होता है। उत्तरपद का नहीं। ] ॥ १७२ ॥

नञ् और सु से परे कप् से पूर्ववर्त्ती अन्त उदात्त होता है। [ पूर्ववर्ती सूत्र उत्तरपद का अन्त उदात्त करता है। यह कप् को छोड़कर उससे पूर्व का जो अन्त है उसे उदात्त करता है। ] उदा०—अकुमारीकः देशः। [ अविद्यमाना कुमारी यस्मिन् देशे सः—इसमें 'अकुमारी' बनाकर 'शेषाद् विभाषा' सूत्र से वैकल्पिक 'कप्' होता है। अतः 'ई' उदात्त होता है। इसी प्रकार अन्य भी दीर्घ अन्त्य वर्ण उदात्त होते हैं। ] अवृषलीकः। अब्रह्मबन्धूकः। सुकुमारीकः। सुवृषलीकः। सुब्रह्मबन्धूकः ॥ १७३ ॥

ह्रस्व है अन्त जिसका ऐसा उत्तरपद अथवा समास—ह्रस्वान्त है, इसमें अन्त्य से पूर्व का उदात्त होता है कप् के परे रहते, नञ्, सु से परवर्ती बहुव्रीहि समास में। [ बहुव्रीहि समास में नञ्, सु से परे उत्तरपद हो, उससे कप् किया गया हो तो कप् से पूर्ववर्ती उत्तरपद के अन्त्य से पूर्व वाला उदात्त होता है। उदा०—अयवको देशः। [ नञ् से परे उत्तरपद 'यवक' है, इसमें कप् से पूर्ववर्ती वकार है, वकार से पूर्व यकार है, वही उदात्त होता है। इसी प्रकार अन्य में

**पूर्वमिति वर्त्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्—ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति। तेन अज्ञकः, सुज्ञकः इत्यत्र कबन्तस्यैवान्तोदात्तत्वं भवति ॥**

**न्यासः**

समासो वेति दर्शयति। **अयवको देश इति।** अत्र कपि परतो यव इत्येतद् ह्रस्वान्तमुत्तरपदम्, अयव इत्ययं वा समासः। तत्रान्त्याद् वकारात् पूर्वमक्षरं यकाराकार उदात्तो भवति। अनया दिशान्यत्रापि वेदितव्यम्।

अथ पूर्वग्रहणं किम्, यावता 'कपि पूर्वम्' इत्यतः पूर्वमिति वर्तत एव? इत्यत आह—**पूर्वमिति वर्तमान इत्यादि।** द्वितीये हि पूर्वग्रहणे क्रियमाणे वाक्यभेदेन प्रवृत्तिभेदो भवति; पूर्वग्रहणसामर्थ्यात्, अन्यथा हि तदपार्थकं स्यात्। तत्रैकया प्रवृत्या ह्रस्वान्तेऽन्त्यात् पूर्वमन्तोदात्तं विधीयते। अपरया तु ह्रस्वान्तेऽन्त्याद् पूर्वमन्तोदात्तं न भवतीति नियमः। तेन कपि पूर्वमन्तोदात्तं न भवति। **तेनेत्यादिना नियमेसति यदिष्टं सम्पद्यते** तद् दर्शयति। नास्य ज्ञो विद्यत इत्यज्ञकः। शोभनो ज्ञोऽस्येति **सुज्ञकः।** अत्र यद्येष नियमो न स्यात्, तदात्रान्त्यात् पूर्वं उदात्तभावी नास्तीति कपि पूर्वमन्तोदात्तं स्यात्। 'कपि पूर्वम्' इत्यनेन नियमे तु सति न भवति। तेन 'नञ्सुभ्याम्' इति कबन्तस्यैवान्तोदात्तत्वं भवति। यथा च स भवति तथात्रैवोपपादितम् ॥ १७४ ॥

**पदमञ्जरी**

अत्र च 'कपि परतः' इति पृथग्वचनात्तद्रहितमुत्तरपदं समासश्च गृह्यते, पूर्वग्रहणमनर्थकम्, कपि पूर्वमित्यनुवृत्तेः? इत्यत आह—**पूर्वमिति वर्तमाने इत्यादि।** द्वितीये पूर्वग्रहणे सति प्रवृत्तिभेदो भवति, तत्रैकया प्रवृत्त्या ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीगते, अपरया तु नियम्यते—ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न तु[1] कपि पूर्वमिति। तेन किं सिद्धं भवति? तत्राह—**तेनेति।** नास्त्यस्य ज्ञ इत्यज्ञकः, शोभनो ज्ञोऽस्येति सुज्ञकः। तत्र यद्येष नियमो न स्यात्, ततोऽन्त्यात्पूर्वं उदात्तभावी नास्तीति 'कपि पूर्वम्' इत्ययमेव स्वरः स्यात्। अस्मिंस्तु नियमे सति न भवति, 'नञ्सुभ्याम्' इति कबन्तस्यैव भवति। यथा च कबन्तस्य भवति तथा तत्रैव प्रतिपादितम्। व्यक्तिपक्षाश्रयणे चैतत्पूर्वग्रहणं कृतम्। जातिपक्षाश्रयणे तु यथा 'हलादिः शेषः' इत्यत्र क्वचिदपि वर्त्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति, (तथैव) 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इत्यत्रापि ह्रस्वजातेराश्रयणात्सर्वत्र ह्रस्वान्ते तक्रकौण्डिन्यन्यायेन 'कपि पूर्वम्' इत्यस्याप्रवृत्तिः सिध्यति ॥ १७४ ॥

**भावबोधिनी**

भी कप् से पूर्व जो ह्रस्व है, उससे पूर्व का उदात्त होता है। इसी प्रकार यहाँ के उदाहरणों में द्वितीय वर्ण उदात्त हो जाता है—] अव्रीहिकः। अमाषकः। सुयवकः। सुव्रीहिकः। सुमाषकः।

'पूर्वम्' इसकी [ "कपि पूर्वम्" ६।२।१७३ ] से अनुवृत्ति रहने पर भी पुनः 'पूर्वम्' इसका ग्रहण करना प्रवृत्ति-भेद से नियम समझाने के लिए है—ह्रस्वान्त में अन्त्य से ही पूर्व वाला उदात्त होता है, कप् से पूर्व वाला नहीं। इस कारण अज्ञकः, सुज्ञकः—इसमें कबन्त का ही अन्तोदात्तत्व होता है।

**विमर्श**—इस नियम के होने पर—न विद्यते ज्ञः अस्य—इसमें कप् करने पर—अज्ञकः होता है। यहाँ कप् से पूर्व नञ् से परे ह्रस्वान्त उत्तरपद 'ज्ञ' है, इससे पूर्व कोई ह्रस्व नहीं है, क्योंकि नञ् = अ तो पूर्वपद है। अतः यहाँ नियम के अनुसार यह सूत्र नहीं लगता है। 'नञ् सुभ्याम्' सूत्र से उत्तरपद = कबन्त का ही उदात्त होता है। यदि यह नियम न होता तो अन्त्य से पूर्ववर्ती न होने पर कप् से पूर्व का अर्थात् 'ज्ञ' ही उदात्त होने लग जाता। इसीलिए इस सूत्र की आवश्यकता है ॥ १७४ ॥

---

१. तु—शब्दो मूले नास्ति।

## २८३८. बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥ ( ३९०९ )

उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्त्तते तस्मान्नञ इव स्वरो भवति। 'नञ्सुभ्याम्' ( ६.२.१७२ ) इत्युक्तम्, बहोरपि तथा भवति—बहुयवो देशः, बहुव्रीहिः, बहुतिलः। 'कपि पूर्वम्' ( ६.२.१७३ ) इत्युक्तम्, बहोरपि तथा भवति—बहुकुमारीको देशः, बहुवृषलीकः, बहुब्रह्मबन्धूकः। ह्रस्वान्तेऽन्त्यात्पूर्वम्' ( ६.२.१७४ ) इत्युक्तम्, बहोरपि तथा भवति—बहुयवको देशः, बहुव्रीहिकः, बहुमाषकः। 'नञो जरमरमित्रमृताः' ( ६.२.११६ ) इत्युक्तम्, बहोरपि तथा भवति—बहुजरः। बहुमरः। बहुमित्त्रः। बहुमृतः।

उत्तरपदभूम्नीति किम्? बहुषु मनोऽस्य बहुमना अयम् ॥

### न्यासः

**बहोर्नञ्वदुत्तरपदभूम्नि** ॥ 'नञ्सुभ्याम्' इत्यादिभिर्योगैर्नञ उत्तरस्य यत् स्वरविधानं तद्बहोरपि यथा स्यादित्येवमर्थमिदम्। नञ इव **नञ्वत्**। **बहोर्भावो भूमा**, पृथ्वादित्वादिमनिच्, 'बहोर्लोपो भू च बहोः' इति भूभावः। उत्तरपदस्य भूमेति षष्ठीसमासः। अथातिदेशः किमर्थः, न 'नञ्सुबहुभ्य उत्तरपदभूम्नि' इत्येवोच्येत; न चैवं योगे क्रियमाणे नञ्स्वोरप्युत्तरपदभूम्नीत्येतद् विशेषणमापाद्यते; सम्भवापेक्षत्वादस्य, यथैव हि 'हल्ङ्याब्भ्यो दीर्घात्' इत्यत्र दीर्घग्रहणं सम्भवापेक्षं विशेषणं ङ्यापोरेव भवति न हलः, तथैतदपि बहोरेव भविष्यति न नञ्स्वोः, न हि तयोरुत्तरपदार्थबहुत्वे वृत्तिः सम्भवतीति? एवं तर्हि यदपि विदेशस्थं नञोपलक्षितं बहुव्रीहेः स्वरविधानम्, तदप्यस्मादतिदेशाद् यथा स्यादित्येवमर्थोऽयमतिदेशः क्रियते। तेन 'नञो जरमरमित्त्रमृताः'

### पदमञ्जरी

**बहोर्नञ्वदुत्तरपदभूम्नि** ॥ नञ इव नञ्वत्, अस्मादेव निपातनात्पञ्चमीसमर्थाद्वतिः। यद्वा—सम्बन्ध-सामान्ये षष्ठी, तया सर्वे विभक्त्यर्था संगृह्यन्त इति पञ्चम्यर्थेऽपि 'तत्र तस्येव' इति वतिः षष्ठ्यन्तादेव। बहूनां भावो भूमा, 'बहोर्लोपो भू च बहोः', उत्तरपदशब्देन तदर्थो गृह्यते; स्वरूपेणोत्तरपदस्य बहुत्वासम्भवात् तदाह—**उत्तरपदार्थबहुत्व इति**। किमर्थं पुनरतिदेश आश्रीयते, न 'नञ्सुबहुभ्य उत्तरपदभूम्नि' इत्युच्येत, एवमपि ह्युच्यमाने 'उत्तरपदभूम्नि' इत्येतत्सम्भवव्यभिचाराभ्यां बहोरेव विशेषणं भविष्यति, योऽपि 'न गुणादयोऽवयवाः' इति प्रतिषेधः, तत्राप्युत्तरपदभूम्नीत्यनुवृत्तेर्बहोरेव भविष्यति, न 'नञ्सुभ्याम्'—अगुणः, सगुणः इति? इदं तर्हि प्रयोजनम्—प्रकरणान्तरेऽपि यो नञाश्रयः स्वरस्तस्याप्यतिदेशो यथा स्यादिति। तद्दर्शयति **नञो जरमर-**

### भावबोधिनी

उत्तरपदार्थ के बहुत्व में जो 'बहु' शब्द है [ अर्थात् जहाँ उत्तरपद का बहुत्व रूप अर्थ बताने के लिए बहुशब्द का प्रयोग है वहाँ ] नञ् के समान स्वर होता है। ''नञ् सुभ्याम्'' ( ६।२।१७२ ) यह कहा गया है। यह 'बहु' से भी इसी प्रकार होता है—बहुयवः देशः, बहुव्रीहिः, बहुतिलः। [ बहवः यवाः यस्मिन् सः, बहवः व्रीहयः यस्मिन् सः, बहवः तिलाः यस्मिन् सः। [ नञ् के समान बहु से परे उत्तरपद उदात्त होता है। ] ''कपि पूर्वम्'' ( ६।२।११३ ) यह कहा है, 'बहु' से भी ऐसा होता है—बहुकुमारीकः देशः, बहुवृषलीकः, बहुब्रह्मबन्धूकः [ बह्व्यः कुमार्यः यस्मिन् देशे—इस अर्थ में समास करने पर कप् से पूर्ववर्ती उदात्त होता है। ] ''ह्रस्वान्तेऽन्त्यात् पूर्वम्'' ( ६।२।१७४ ) यह कहा है, 'बहु' से भी ऐसा होता है—बहुयवको देशः; बहुव्रीहिकः, बहुमाषकः। [ बहु से उत्तरपद; कप् से पूर्व अन्त्य ह्रस्व, उनसे पूर्व उदात्त होता है। इसलिए 'व्री' 'मा', 'य' उदात्त हो जाते हैं। [ ''नञो जरमरमित्रमृताः'' ( ६।२।११६ ) यह कहा गया है, बहु से भी ऐसा है—बहुजरः। बहुमरः। बहुमित्रः। बहुमृतः। [ बहवः जराः यस्मिन् सः—यह विग्रह है, 'नञो जरमरमित्रमृताः' सूत्र से बहु से उत्तरवर्ती 'जर' आद्युदात्त हो जाता है। इसी प्रकार सभी का आद्युदात्त होता है। ]

## २८३९. न गुणादयोऽवयवाः ॥ १७६ ॥ ( ३९१० )

गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति । बहुगुणा रज्जुः । बह्वक्षरं पदम् । बहुच्छन्दोमानम् । बहुसूक्तः । बह्वध्यायः ।

गुणादिराकृतिगणो द्रष्टव्यः ।

अवयवा इति किम् ? बहुगुणो ब्राह्मणः । अध्ययनश्रुतसदाचारादयोऽत्र गुणाः ॥

## २८४०. उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥ १७७ ॥ ( ३९११ )

उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे । प्रपृष्ठः । प्रोदरः । प्रललाटः ।

'ध्रुवम्' इत्येकरूपमुच्यते । ध्रुवमस्य शीतमिति यथा । सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठः ।

**न्यासः**

इत्युत्तरपदाद्युदात्तत्वमपि बहोरतिदिश्यते । **बहुमना इति** । अत्रोत्तरपदबहुत्वे बहुशब्दो न वर्तते ॥ १७५ ॥

**न गुणादयोऽवयवाः** ॥ पूर्वेणातिप्रसक्तोऽतिदेश इति गुणादिना प्रतिषिध्यते— **बहुगुणा रज्जुरिति** । बह्ववयवा इत्यर्थः । 'गुण आमन्त्रणे' चुरादिः, तस्माद् घञ् । तेन गुणशब्द आद्युदात्तः । 'अशेः सरः' इत्यनेनाक्षरशब्दोऽन्त्योदात्तः । छन्दो मीयतेऽनेनेति **च्छन्दोमानम्** । कृत्स्वरेण छन्दोमाने मानशब्द आद्युदात्तः, तस्य घञन्तत्वात् । शोभनमुक्तं **सूक्तम्** । प्रादिसमासः । थाथादिस्वरेण सूक्तशब्दोऽन्तोदात्तः । अधीयतेऽस्मादित्यध्यायः । 'इङश्च' इति घञ् । सूक्तवदध्यायोऽन्तोदात्तः ॥ १७६ ॥

**उपसर्गात् स्वाङ्गं ध्रुवमपर्शु** ॥ उपसर्गग्रहणं प्राद्युपलक्षणं वेदितव्यम्; स्वाङ्गं प्रति क्रियायोगाभावात् । प्रादिग्रहणमेव तु न कृतम्, वैचित्र्यार्थम् । ध्रुवशब्दोऽयमवयवेऽप्यस्ति, यथा—'ध्रुवमपायेऽपादानम्' इति; एकत्वरूपेऽप्यस्ति, यथा—ध्रुवमस्य शीलमिति; तदिहैकस्वरूपे वर्तमानो गृह्यत इति दर्शयितुमाह—**ध्रुवमित्येक-**

**पदमञ्जरी**

**मितत्रमृता इत्युक्तमित्यादि** ॥ १७५ ॥

**न गुणादयोऽवयवाः** ॥ 'गुण संख्याने' ( धा० पा० १८९४ ) चुरादेरदन्तादेरच् । 'अशेः सरः', ( द० उ० ८.५० ) अक्षरः । छन्दो मीयते येन **छन्दोमानम्** । वचेः सुपूर्वात् क्तः—**सूक्तम्** । अधीयतेऽस्मादिति **अध्यायः**, 'इङश्च' इति घञ् । एते गुणादयः ॥ १७६ ॥

**उपसर्गात् स्वाङ्गं ध्रुवमपर्शु** ॥ स्वाङ्गं प्रति क्रियायोगाभावाद् उपसर्गग्रहणं प्राद्युपलक्षणम् । **सततं**

**भावबोधिनी**

उत्तरपद बहुत्व अर्थ में हो—इसका क्या फल है ? बहुषु मनः अस्य सः अयम्—बहुमनाः । [ यहाँ उत्तर पदार्थ एक है, अतः यह सूत्र नहीं लगता है । पूर्वपद का प्रकृतिस्वर होता है । ] ॥ १७५ ॥

बहु से उत्तरवर्ती गुणादि जो अवयववाची हैं, बहुव्रीहि में अन्तोदात्त नहीं होते हैं । उदा०—बहुगुणा रज्जुः । बह्वक्षरं पदम् । बहुछन्दोमानम् । बहुसूक्तः । बह्वध्यायः । [ इनमें बहवः गुणाः=तन्तवः यत्र, बहूनि अक्षराणि यत्र—इस प्रकार के विग्रह में गुणादि अवयव हैं । अतः अन्तोदात्त नहीं होते हैं । ]

गुणादि आकृतिगण समझने चाहिये । [ अतः गणपाठ नहीं है । ]

अवयव—इसका क्या फल है ? बहुगुणो ब्राह्मणः । यहाँ अध्ययन, श्रवण और सदाचार आदि गुण हैं । [ अतः अवयववाचक न होने से यह सूत्र नहीं लगता है । पूर्वसूत्र से नञ् के समान स्वर होता है । ] ॥ १७६ ॥

उपसर्ग से परे स्वाङ्गवाचक, ध्रुव, पर्शु को छोड़कर, बहुव्रीहि समास में अन्तोदात्त होता है । उदा०—प्रपृष्ठः । प्रोदरः । प्रललाटः । [ यहाँ अङ्गवाचक, ध्रुव है, अतः अन्तोदात्त हो जाता है । ]

**उपसर्गादिति किम् ? दर्शनी'यललाटः। स्वाङ्गमिति किम् ? प्रशाखो वृक्षः। ध्रुवमिति किम् ? उद्बा'हुः क्रोशति। अपर्श्विति किम् ? उत्पर्शुः। विपर्शुः॥**

## २८४१. वनं समासे ॥ १७८ ॥ ( ३९१२ )

**समासमात्रे 'वनम्' इत्येतदुत्तरपदमुपसर्गात्परमन्तोदात्तं भवति। प्रवणे यष्टव्यम्। निर्वणे प्रणिधीयते। 'प्रनिरन्तः' ( ८.४.५ ) इति णत्वम्।**

**समासग्रहणं समासमात्रपरिग्रहार्थम्, बहुव्रीहावेव हि स्यात्॥**

### न्यासः

**रूपमुच्यत इत्यादि। सततमित्यादिना** ध्रुवत्वं पृष्ठस्य दर्शयतिमाह—पृष्ठशब्दोऽन्तोदात्तः। 'पृषु मृषु वृषु सेचन' इत्यस्य थकि व्युत्पादितत्वात्।

**दर्शनीयललाट इति।** दर्शनीयशब्दः 'उपोत्तमं रिति' इति मध्योदात्तः। 'लल ईप्सायाम्' इत्यस्माद् 'उणादयो बहुलम्' इत्याटप्रत्ययः। तेन ललाटशब्दो मध्योदात्तः। **प्रशाखो वृक्ष इति।** 'उणादयो बहुलम्' इति वचनात् 'शो तनूकरणे' इत्यस्मात् खः, टाप्, सवर्णदीर्घत्वम्, 'एकादेश उदात्तेनोदात्तः'। तेन शाखाशब्दोऽन्तोदात्तः। **उद्बाहुः क्रोशतीति।** अत्र बाहोरेकरूपता नास्तीत्यध्रुवत्वम्। न ह्यसौ नित्यमूर्ध्वबाहुरेव क्रोशति, अपि तु कदाचिदधोबाहुरपि। **उत्पर्शुरिति।** 'स्पृशेः श्वण् शुनो पृ च' इति शुन्प्रत्ययान्तः पर्शुः। तेनायमाद्युदात्तः॥१७७॥

**वनं समासे॥ समासमात्र इति।** मात्रग्रहणेन बहुव्रीहेर्निवृत्तिं सूचयति। **प्रवण इति।** यदायं बहुव्रीहिस्तदा प्रकृष्टं प्रकृतं वा वनमस्येति विग्रहः। यदा तु तत्पुरुषः, तदा प्रकृष्टं वनं प्रगतं वा वनमिति विग्रहः। **निर्वण इति।** अत्रापि यदा बहुव्रीहिः, तदा निर्गतं वनमस्येति विग्रहः। यदा तु तत्पुरुषस्तदा निर्गतो वनादिति। तत्पुरुषस्तु 'कुगतिप्रादयः' इति। किं पुनः स्याद् यदि समासमात्रपरिग्रहार्थं समासग्रहणं न क्रियेत्? इत्यत आह—**बहुव्रीहावेव हि स्यादिति।** 'रञ्जेः क्युन्'। बहुलवचनाद् 'वनु याचने' इत्यस्मादपि भवति। तेन वनमाद्युदात्तम्॥ १७८॥

### पदमञ्जरी

**यस्येत्यादिना** पृष्ठस्य ध्रुवत्वं दर्शयति। 'तीर्थपृष्ठगूढयूथ' ( द० उ० ६.३७ ) इति पृष्ठशब्दो निपातितः।

**उद्बाहुः क्रोशतीति।** अत्र क्रोशनसमय एवोद्बाहुत्वं न सर्वदेत्यध्रुवत्वम्। 'स्पृशेः श्वण्शुनौ पृ च'

### भावबोधिनी

'ध्रुवम्' इसके द्वारा एक रूप कहा जाता है। जैसा कि ध्रुवम् अस्य शीतम्—यह होता है। सतत=सदा प्रगत है पृष्ठ जिसकी वह—प्रपृष्ठः है।

उपसर्ग से परे—इसका क्या फल है ? दर्शनीयललाटः। [ उपसर्ग से परे नहीं है। ] स्वाङ्गवाची—इसका क्या फल है ? प्रशाखो वृक्षः। [ यहाँ शरीर का अवयव नहीं है। ] ध्रुव—इसका क्या फल है ? उद्बाहुः क्रोशति। [ हाथ ऊपर उठाये हुए कोसता है। यहाँ केवल कोसते समय ही हाथ ऊपर उठाता है। अतः ध्रुव नहीं है। पर्शु को छोड़कर इसका क्या फल है ? उत्पर्शुः। विपर्शुः। [ यहाँ पर्शुः=पञ्जर नामक अवयव है। अतः सूत्र नहीं लगता है। प्रत्युदाहरणों में प्रायः पूर्वपद का प्रकृतिस्वर होता है। ]॥ १७७॥

समासमात्र में 'वन' यह उत्तरपद उपसर्ग से परे होने पर अन्तोदात्त होता है। [ इसमें सभी समास लक्ष्य हैं। ] उदा०—प्रवणे यष्टव्यम्। निर्वणे प्रणिधीयते। [ प्रकृष्टं प्रकृतं वा वनम् अस्य—यह बहुव्रीहि है। जब तत्पुरुष होता है, तब प्रकृष्टं वनम्, प्रगतं वा वनम्—यह विग्रह है। इनमें ] "प्रनिरन्तः शरेक्षुप्लक्षाम्रकार्श्यखदिरपीरक्षाभ्योऽसंज्ञायामपि" ( ८।४।५ ) सूत्र से णत्व होता है।

स्वतन्त्र रूप से समास का ग्रहण समासमात्र का परिग्रहण कराने के लिए है, अन्यथा केवल बहुव्रीहि में यह अन्तोदात्तत्व हो पाता॥ १७८॥

**२८४२. अन्तः ॥ १७९ ॥ ( ३९१३ )**

अन्तश्शब्दादुत्तरं वनमन्तोदात्तं भवति। अन्तर्वणो देशः।
अनुपसर्गार्थ आरम्भः ॥

**२८४३. अन्तश्च ॥ १८० ॥ ( ३९१४ )**

अन्तश्शब्दश्चोत्तरपदमुपसर्गादन्तोदात्तं भवति। प्रान्तः। पर्यन्तः। बहुव्रीहिरयम्, प्रादिसमासो वा ॥

**२८४४. न निविभ्याम् ॥ १८१ ॥ ( ३९१५ )**

नि, वि—इत्येताभ्यामुत्तरोऽन्तशब्दो नान्तोदात्तो भवति। न्यन्तः। व्यन्तः (तै० ब्रा० २.१.३.१)। पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः। तत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४) इति स्वरितो भवति ॥

**२८४५. परेरभितोभावि मण्डलम् ॥ १८२ ॥ ( ३९१६ )**

परेरुत्तरमभितोभाविवचनं मण्डलं चान्तोदात्तं भवति। परिकूलम्। परितीरम्। परिमण्डलम्।

**न्यासः**

**अन्तः ॥** अन्तः इति स्वरादिष्वन्तोदात्तो निपात्यते। **अन्तर्वणो देश इति।** अन्तर्वनं यस्मिन्निति बहुव्रीहिः, 'वनेऽन्तः' इति शौण्डादिपाठात् सप्तमीसमासो वा। 'प्रनिरन्तरः' इत्यादिना णत्वम्।

**अनुपसर्गार्थ आरम्भ इति।** उपसर्गात् पूर्वेणैव सिद्धत्वात् ॥ १७९ ॥

**अन्तश्च ॥** अन्तःशब्दः 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' इति तन्प्रत्ययान्तत्वादाद्युदात्तः ॥ १८० ॥

**न निविभ्याम् ॥** पूर्वेण निविभ्यामप्युत्तरस्यान्तोदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते। **पूर्वपदप्रकृतिस्वरत्वे कृत इति।** यदा बहुव्रीहिस्तदा 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति प्रकृतिस्वरत्वम्। यदा तु तत्पुरुषस्तदा 'तत्पुरुषे तुल्यार्थ' इत्यादिना ॥ १८१ ॥

**परेरभितोभावि मण्डलम् ॥ परिकूलम्, परितीरमिति।** कूलतीरशब्दावुक्तस्वरौ 'कूलतीरतूलमूल'

**पदमञ्जरी**

( द० उ० १०.१३ ) स्पृशेर्धातोः श्वण्, शुन्—इत्येतौ प्रत्ययौ भवतः, धातोश्च पृ इत्यादेशः। बहुलवचनाच्छकारस्येत्संज्ञा न भवति, यथाक्रमं वृद्धिगुणौ—पार्श्वम्, पर्शुः ॥ १७७ ॥ १७८–१८१ ॥

**परेरभितोभावि मण्डलम् ॥ बहुव्रीहिरयमित्यादि।** यदा बहुव्रीहिस्तदा परितः कूलमस्येति विग्रहः।

**भावबोधिनी**

अन्तः शब्द से उत्तरवर्ती वन अन्तोदात्त होता है। उदा०—अन्तर्वणः देशः। [ यहाँ भी "प्रनिरन्तः शरेक्षु० ८।४।५ से णत्व होता है।] उपसर्ग से भिन्न [ से परे 'वन' के अन्तोदात्तत्व ] के लिए यह सूत्र बनाया गया है। क्योंकि उपसर्ग से परे 'वन' में पूर्ववर्त्ती सूत्र लगता है ] ॥ १७९ ॥

उपसर्ग से परे अन्तः शब्द उत्तरपद अन्तोदात्त होता है। उदा०—प्रान्तः। पर्यन्तः। यह बहुव्रीहि है अथवा प्रादि समास है। [ प्रकृष्टम् अन्तः यस्य सः, अथवा प्रकृष्टम् अन्तः—ऐसा है। दोनों सम्भव है। 'अन्तः' अन्तोदात्त हो जाता है। ] ॥ १८० ॥

नि और वि—इनसे उत्तरवर्त्ती 'अन्तः' शब्द अन्तोदात्त नहीं होता है। उदा०—न्यन्तः। व्यन्तः। पूर्वपद का प्रकृतिस्वर करने के बाद यणादेश होता है। इसमें "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" ( ८।२।४ ) इस सूत्र से स्वरित हो जाता है ॥ १८१ ॥

परि से उत्तरवर्त्ती अभितोभावी के वाचक और मण्डल दोनो अन्तोदात्त होते हैं। उदा०—परिकूलम्। परितीरम्।

**बहुव्रीहिरयम्, प्रादिसमासः, अव्ययीभावो वा । अव्ययीभावपक्षेऽपि हि 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' ( ६.२.३३ ) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमनेन बाध्यते ।**

**अभित इत्युभयतः, अभितो भावोऽस्यास्तीति तदभितोभावि । यच्चैवं स्वभावं कूलादि, तदभितोभावि-ग्रहणेन गृह्यते ॥**

## २८४६. प्रादस्वाङ्गं संज्ञायाम् ॥ १८३ ॥ ( ३९१७ )

**प्रादुत्तरपदमस्वाङ्गवाचि संज्ञायां विषयेऽन्तोदात्तं भवति । प्रकोष्ठम् । प्रगृहम् । प्रद्वारम् ।**

### न्यासः

इत्यादौ सूत्रे । **परिमण्डलमिति** । परितः = सर्वतो मण्डलं परिमण्डलम् । 'मणि भूषायाम्'—अस्मात् 'कलस्तृपश्च' इति बाहुलकात् कलप्रत्ययः, 'वृषादिभ्यश्चित्' इति च । तेन मण्डलमन्तोदात्तम् । **बहुव्रीहिरयमित्यादि** । यदा बहुव्रीहिस्तदा—परितः कूलमस्य, परितस्तीरमस्येति विग्रहः । यदा तु प्रादिसमासस्तदा—परिगतं कूलम्, परिगतं तीरमिति । यदा पुनरव्ययीभावस्तदा—परि कूलात्, परि तीरादिति । अव्ययीभावस्तु 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेन । परि कूलादिति पञ्चमी 'पञ्चम्यपाङ्परिभिः' इति कर्मप्रवचनीयत्वं तु परेः 'अपपरी वर्जने' इति । युक्तं यद् बहुव्रीहौ तत्पुरुषे चेदमन्तोदात्तत्वं विधीयते; तत्र हि समासान्तोदात्तत्वस्यापवादः पूर्वपदप्रकृति-स्वरः प्राप्नोति । अव्ययीभावे त्वयुक्तम्; तत्र हि समासान्तोदात्तत्वेनैव सिद्धम् । न हि तस्यापवादः पूर्वपदप्रकृति-स्वरः केनचित् प्राप्त इत्यत आह—**अव्ययीभावपक्षेऽपि हीत्यादि** । यदाप्यव्ययीभावपक्षः, तदापि 'परिप्रत्युपापा' इत्यादिना पूर्वपदप्रकृतिस्वरः प्राप्तोऽनेनान्तोदात्तत्वविधानेन बाध्यत इति किमत्रायुक्तम् । **यच्चैवंस्व-भावमित्यादि** । अभितो भवनं यस्य स्वभावस्तदभितोभाविग्रहणेन गृह्यते, न तु तद्विपरीतस्वभावम् ॥ १८२ ॥

**प्रादस्वाङ्गं संज्ञायाम्** ॥ **प्रकोष्ठमिति** । 'उषिकुषिगातिभ्यस्थन्' इति कुषेस्थन् । तेन कोष्ठशब्द आद्युदात्तः ।

### पदमञ्जरी

प्रादिसमासे तु परिगतं कूलमिति । यदा पुनरव्ययीभावस्तदा परिकूलादिति । **अव्ययीभावपक्षेऽपि हीत्यादि** । अव्ययीभावेऽप्ययमेव स्वर एषितव्यः, न समासस्वरेण सिद्धिरित्यर्थः । **अभितो भावोऽस्यास्तीत्यभितोभावीति** । लौकिके योगे लाघवस्यासार्वत्रिकत्वाद्बहुव्रीहिरेव नाश्रित इत्याह—**अभितोभावीति** । 'सुप्यजातौ' इति णिनिरिति । **यच्चैवंस्वभावमिति** । अभितोभवनस्वभावम् ॥ १८२ ॥

**प्रादस्वाङ्गं संज्ञायाम्** ॥ प्रकोष्ठादिषु प्रादिसमासः बहुव्रीहिर्वा ॥ १८३ ॥

### भावबोधिनी

परिमण्डलम् । यहाँ बहुव्रीहि है, प्रादि समास है अथवा अव्ययीभाव है । [ तीनों हो सकते हैं—(१) परितः कूलम् अस्य, (२) परिगतं कूलम्, (३) परि कूलात् । "अपपरिबहिरञ्चवः पञ्चम्याः" सूत्र से ] अव्ययीभाव है, उस पक्ष में "परि-प्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु" ( ६।२।३३ ) इससे पूर्वपद का प्रकृतिस्वरत्व प्राप्त है, प्रस्तुत सूत्र से बाध होता है ।

अभितः इसका अर्थ है—उभयतः = दोनों ओर; अभितः भावः अस्य अस्ति—तद् अभितोभावि ( जो दोनों ओर से होने वाला है वह । ) और जो कूल = तट आदि इस प्रकार के स्वभाव वाले होते हैं, उनका 'अभितोभावी' के ग्रहण से ग्रहण होता है । [ यहाँ अभितोभाविवाचक के उदा०—परिकूलम्, परितीरम् है । मण्डल का उदा०—परि-मण्डलम् है । कूल और तीर, तट के दोनों ओर होते हैं । अतः ऐसे शब्द ही अभितोभावी के वाचक होते हैं—यह ऊपर स्पष्ट लिखा ही जा चुका है । मण्डल = गोलाकार होता है । अतः परिमण्डल = सभी ओर से घिरा हुआ = गोलाकार होता है । ] ॥ १८२ ॥

प्र से उत्तरवर्त्ती अस्वाङ्गवाची शब्द संज्ञा-विषय में अन्तोदात्त होता है । उदा०—प्रकोष्ठम् । प्रगृहम् । प्रद्वारम् । [ यहाँ बहुव्रीहि अथवा प्रादिसमास है । ]

अस्वाङ्गमिति किम् ? प्रहस्तम् । प्रपदम् । संज्ञायामिति किम् ? प्रपीठम्[1] ॥

## २८४७. निरुदकादीनि च ॥ १८४ ॥ ( ३९१८ )

**निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति । निरुदकम् । निरुलपम् । निरुपलमित्यन्ये पठन्ति । निर्मक्षिकम् । निर्मशकम् । एषां प्रादिसमासः, बहुव्रीहिर्वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ।**

**निष्कालकः । निष्क्रान्तः कालकादिति कन्प्रत्ययान्तेन कालशब्देन प्रादिसमासः । निष्कालिकः—इत्यन्ये पठन्ति ।**

### न्यासः

**प्रगृहमिति** । 'गेहे कः' इति ग्रहेः कप्रत्ययः । तेन गृहमन्तोदात्तम् । **प्रद्वारमिति** । 'नब्विषयस्यानिसन्तस्य' इति द्वारमाद्युदात्तम् । **प्रपदमिति** । पदं द्वारवदेवाद्युदात्तम् । **प्रहस्तमिति** । 'हसिमृग्रिणवामिदमि' इत्यादिना हसेस्तन् । तेन हस्तशब्द आद्युदात्तः ॥ १८३ ॥

**निरुदकादीनि च** ॥ **निरुदकमिति** । निष्क्रान्तमुदकमस्मादिति बहुव्रीहिः, निष्क्रान्तमुदकादीति वा प्रादिसमासः । उदकं कायतीति 'आतोऽनुपसर्गे कः', 'उदकस्योदः संज्ञायाम्' इत्युदभावः । तेनोदकमन्तोदात्तम् । **निरुपलमिति** । 'विटपविष्टपविशिपोलपाः' इत्युलपशब्दोऽन्तोदात्तो निपात्यते । **निरुपलमित्यन्य इति** । उपपूर्वाल्लातेः 'आतश्चोपसर्गे' इति कः । तेनोपलशब्दस्थाथादिस्वरेणाद्युदात्तः । **निर्मक्षिकम्, निर्मशकमित्यादीनामिति** । मशकमक्षिकाशब्दावाद्युदात्तान्तोदात्तौ । तत्र हि अथादिः, प्राक् शकटेः; अथ द्वितीयः, प्रादीषादिति वर्तते । **एषामित्यादि** । यदि प्रादिसमासस्तदा—निर्गतमुदकं निर्गतं वोदकादिति विग्रहः । यदा तु बहुव्रीहिस्तदा—निर्गतमुदकमस्मादिति । अथाव्ययीभावोऽप्येषां कस्मान्न भवति ? इत्याह—**अव्ययीभावे त्वित्यादि** । बहुव्रीहिप्रादिसमासयोस्तु समासान्तोदात्तत्वेन न सिध्यति । तथा हि—'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति समासस्वरापवादः पूर्वपदप्रकृतिस्वरो बहुव्रीहावुक्तः । प्रादिसमासेऽपि 'तत्पुरुषे तुल्यार्थ' इत्यादिना ।

**निष्कालक इति** । कालकशब्दः कन्प्रत्ययान्तत्वादाद्युदात्तः । **निष्कालिक इति** । निष्क्रान्तः कालिकाया इति प्रादिसमासः । कालीति जनपदादिसूत्रेण ङीषन्तत्वादन्तोदात्तः, ततः स्वार्थिके कनि कृतेऽप्याद्युदात्त एव भवति ।

### पदमञ्जरी

**निरुदकादीनि च** ॥ **एषामित्यादि** । यदा प्रादिसमासस्तदा—निर्गतमुदकं निर्गतं वोदकादिति विग्रहः, बहुव्रीहौ—निर्गतमुदकमस्मादिति । अथाव्ययीभावार्थमप्येषां ग्रहणं कस्मान्न भवति ? अत आह - **अव्ययीभावे त्विति** । **निष्कालिक इति** । कालशब्दाज्जानपदादिसूत्रेण ङीष् , ततः स्वार्थे कन्, 'केऽणः' इति ह्रस्वः, कालिका; ततः प्रादिसमासः ।

### भावबोधिनी

अस्वाङ्गवाची—इसका क्या फल है ? प्रहस्तम् । प्रपदम् । [ यहाँ स्वाङ्गवाची ही हैं । ] संज्ञा में—इसका क्या फल है ? प्रपीठम् । [ संज्ञा नहीं है । ] ॥ १८३ ॥

और 'निरुदकादि' शब्दरूप अन्तोदात्त होते हैं । उदा०—निरुदकम् । निरुलपम् । दूसरे लोग—निरुपलम्—ऐसा पढ़ते हैं । निर्मक्षिकम् । निर्मशकम् । इनका प्रादि समास है अथवा बहुव्रीहि है । [ अव्ययीभाव क्यों नहीं है ? ] अव्ययीभाव में तो समास का अन्तोदात्त होने से ही [ सामान्य सूत्र से ] सिद्ध है । [ अप्राप्त का ही विधान होने से उक्त दो ही समास मानने चाहिए । ]

निष्कालकः । निष्क्रान्तः कालकात्—यह कन्प्रत्ययान्त काल शब्द के साथ प्रादि समास होता है । दूसरे लोग—निष्कालिकः—ऐसा पढ़ते हैं । [ इसमें 'जानपदकुण्ड-गोण'' ( ४।१।४२ ) सूत्र से ङीष् करके स्वार्थ में कन् होता है,

---

१. 'प्राक्षः' इति पाठा० ।

**निष्पेषः, दुस्तरीपः 'अवितृस्तृतन्त्रिभ्यः ईः ( उणादि ४४६ )—तरीः, तां पातीति तरीपः, कुत्सित-स्तरीपो दुस्तरीपः। निस्तरीप इति केचित् पठन्ति। अपरे—निस्तरीक इति। ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति।**

**निरजिनम्। उदजिनम्। उपाजिनम्।**

**❀ परेर्हस्तपादकेशकर्षाः ❀ ( ग० सू० १७५ )। परिहस्तः। परिपादः। परिकेशः। परिकर्षः। निरुदकादिराकृतिगणः॥**

## २८४८. अभेर्मुखम् ॥ १८५ ॥ ( ३९१९ )

**अभेरुत्तरं मुखमन्तोदात्तं भवति। अभिमुखः। बहुव्रीहिरयम्, प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्।**

**न्यासः**

**निष्पेष इति**। 'पिष्लृ सञ्चूर्णने'—अस्माद् घञ्। तेन पेषशब्द आद्युदात्तः। **तरीं पातीति**। 'आतोऽनुप-सर्गे कः' इति तरीपशब्दोऽन्तोदात्तः। कुत्सितस्तरीप इति कुत्सितग्रहणेन दुस्तरीपशब्दे दुःशब्दः कुत्सायां वर्तत इति दर्शयति। **निस्तरीप इति केचिदिति**। ते च निर्गतस्तरीप इति विगृह्य प्रादिसमासं कुर्वन्ति। **अपरे निस्तरीप इतीति**। पठन्तीति सम्बन्धः।

**निरजिनमित्यादि**। 'अजिनमन्तोदात्तम्' इत्युक्तम्।

**परेरित्यादि**। हस्तपादकेशाः 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्ताः। शिटाम् = सर्वनाम्नामित्यर्थः। कर्षशब्दः 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यन्तोदात्तः ॥ १८४॥

**अभेर्मुखम्॥ अभिमुख इति**। मुखशब्द उक्तस्वरः। अभिशब्दोऽन्तोदात्तः। **बहुव्रीहिरयमित्यादि**। यदा

**पदमञ्जरी**

**निष्पेष इति**। पिषेर्घञ्। **कुत्सितस्तरीप इति**। दुः कुत्सायां वर्तत इति दर्शयति। **अपरे निस्तरीक इति**। पठन्तीत्यनुषङ्गः, निष्पूर्वोऽजिनशब्दः। स एवोदुपपूर्वः।

**परेरित्यादि**। परेरुत्तरे हस्तादयोऽन्तोदात्ता भवन्ति। **परिहस्त इत्यादि**। [ [1]हरेरिव केशा यस्य **हरिकेशः**, कपेरिव **कपिकेशः** ? ] ॥ १८४ ॥

**अभेर्मुखम्॥ उपसर्गात्स्वाङ्गं ध्रुवमिति सिद्ध इति**। 'मुखं स्वाङ्गम्' इति न सिद्ध्यति, 'नाव्ययदिक्शब्द'

**भावबोधिनी**

"केऽणः" (७।४।१४) से ह्रस्व होने पर रूप बनता है—कालिका, कालिकायाः निष्क्रान्तः—यह विग्रह होता है। ऐसे लक्ष्यों में "निरादयः क्रान्ताद्यर्थे पञ्चम्याः" वार्तिक से समास होता है। ]

निष्पेषः। दुस्तरीपः। "अवितॄ-स्तॄ-तन्त्रीभ्य ईः" ( उणादि सू० ४४६ ) से ई प्रत्यय करने पर—तरीः, तां पाति—इस अर्थ में—तरीपः। [ "आतोऽनुपसर्गे कः" से क=अ प्रत्यय, आलोप, उपपद समास ] कुत्सितः तरीपः—दुस्तरीपः। कुछ लोग—निस्तरीपः—यह पढ़ते हैं। दूसरे लोग—निस्तरीकः यह पढ़ते हैं। ये लोग 'तरी' शब्दान्त बहुव्रीहि में 'कप्' करते है।

निरनिजम्। उदनिजम्। उपानिजम्। [ अन्तोदात्त होते हैं। ]

❀ परि से परे हस्त, पाद, केश और कर्ष रहने पर अन्तोदात्त होते हैं। ❀ उदा०—परिहस्तः। परिपादः। परिकेशः। परिकर्षः। [ सभी अन्तोदात्त हैं। ] निरुदकादि गण आकृतिगण है। [ अतः अन्य शब्द भी आ सकते हैं, वे भी अन्तोदात्त होने हैं। पदमञ्जरी में—हरिकेशः, कपिकेशः ये दो उदाहरण हैं। ये उचित नहीं हैं। ] ॥ १८४ ॥

अभि से उत्तरवर्ती 'मुख' अन्तोदात्त होता है। अभिमुखः। यह बहुव्रीहि है अथवा प्रादि समास है। [ अभिगतं

---

१. मूलेऽनयोर्न समुल्लेखः, तेनात्रोपन्यासः चिन्त्यः।

**'उपसर्गात्स्वाङ्गम्' ( ६.२.१७७ ) इति सिद्धे वचनमबहुव्रीह्यर्थम्, अध्रुवार्थम्, अस्वाङ्गार्थं च। अभिमुखा शाला ॥**

## २८४९. अपाच्च ॥ १८६ ॥ ( २९२० )

**अपाच्चोत्तरं मुखमन्तोदात्तं भवति। अपमुखः। अपमुखम्। अव्ययीभावोऽप्यत्र प्रयोजयति। तत्रापि हि परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' ( ६.२.३३ ) इत्युक्तम्।**

**योगविभाग उत्तरार्थः ॥**

**न्यासः**

बहुव्रीहिस्तदा—अभिगतं मुखमनेनेति विग्रहः। यदा तु प्रादिसमासस्तदा अभिगतो मुखम्, अभिगतो वा मुखेनेति। कस्मादयमव्ययीभावो न भवति ? इत्याह —**अव्ययीभावे त्वित्यादि।**

**वचनमिदमबहुव्रीह्यर्थमिति।** यदा मुखं ध्रुवं भवति तदाऽध्रुवार्थम्, अस्वाङ्गार्थञ्चेति। अध्रुवमस्वाङ्गञ्च मुखं बहुव्रीहावपि यदा भवति। **अभिमुखा शालेति।** अभिगतं मुखं यस्या इति बहुव्रीहिः। अत्र 'उपसर्गात् स्वाङ्गम्' इति न सिध्यति; मुखशब्दस्यास्वाङ्गवाचित्वात् ॥ १८५ ॥

**अपाच्च ॥ अव्ययीभावोऽप्यत्र प्रयोजयति।** न केवलं बहुव्रीहितत्पुरुषावित्यपिशब्दस्यार्थः। तत्र यदा बहुव्रीहिस्तदा—अपगतं मुखमस्मादिति विग्रहः। यदा तु प्रादिसमासस्तदा अपगतं मुखमिति। यदा पुनरव्ययीभावस्तदा—अपमुखादिति, मुखं वर्जयित्वेत्यर्थः। अव्ययीभावस्तु 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेन। कथं पुनरव्ययीभावः प्रयोजयति, यावता समासान्तोदात्तत्वेनैव सिद्धम् ? इत्याह—**तत्रापि हीत्यादि।** प्रकृतिस्वरत्वमित्यत्राध्याहार्यम्। तत्राप्यव्ययीभावे 'परिप्रत्युपापा' इत्यादिना पूर्वपदस्य प्रकृतिस्वरत्वमुक्तं समासस्वरापवादः। तस्मादव्ययीभावोऽपि प्रयोजयति।

**योगविभाग उत्तरार्थ इति।** उत्तरसूत्रेऽपादित्यस्यैवानुवृत्तिर्यथा स्यात्, अभेर्माभूत्। अव्ययपूर्वादपि प्रकृतिस्वरापवादो योग। एवमुत्तरेऽपि योगाः 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' इत्यतो योगात् प्राग्वेदितव्याः ॥ १८६ ॥

**पदमञ्जरी**

इति प्रतिषेधात् ॥ १८५ ॥

**अपाच्च ॥ अव्ययीभावोऽप्यत्र प्रयोजयतीति।** कुतः ? इत्याह-**तत्रापि हीति।** यस्मात्तत्रापि 'परिप्रत्युपापा' इति पूर्वपदप्रकृतिस्वरत्वमुक्तम्, तस्मात्सोऽपि प्रयोजयतीत्यर्थः।

**योगविभाग उत्तरार्थ इति।** उत्तरत्र 'अपात्' इत्यस्यैवानुवृत्तिर्यथा स्यात्, अभेर्मा भूत् ॥ १८६ ॥

**भावबोधिनी**

मुखम् अस्य सः, अभिगतं मुखम् वा ] क्योंकि अव्ययीभाव में तो समास के अन्तोदात्तत्व से ही सिद्ध है। [ अतः बहुव्रीहि या प्रादिसमास ही मानना चाहिए। ]

"उपसर्गात् स्वाङ्गम्" ( ६।२।१७७ ) सूत्र से ही सिद्ध रहते यह वचन=सूत्र—बहुव्रीहि से भिन्न के लिए, अध्रुव के लिए और अस्वाङ्गवाची के लिए है—अभिमुखा शाला। [ अभिगतं मुखम् अस्याः सा तादृशी शाला। यहाँ मुख शब्द स्वाङ्गवाचक नहीं है। अतः 'उपसर्गात् स्वाङ्गम्' सूत्र नहीं लग सकता। इसी सूत्र से अन्तोदात्त होता है। ] ॥ १८५ ॥

'अप' से परे भी 'मुख' शब्द अन्तोदात्त होता है। उदा०—अपमुखः, अपमुखम्। यहाँ अव्ययीभाव भी समास होता है। क्योंकि इसमें भी "परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु" ( ६।२।३३ ) यह कहा गया है। [ बहुव्रीहि में—अपगतं मुखम् अस्मात, प्रादिसमास में—अपगतं मुखम्, अव्ययीभाव में—अप मुखात्, मुखं वर्जयित्वा—यह अर्थ है। इसमें "परिप्रत्युप०" इत्यादिसूत्र से पूर्वपद का प्रकृतिस्वर कहा गया है। वहाँ भी अन्तोदात्तत्व करना इष्ट है। ]

योगविभाग अगले सूत्र में [ अप की ] अनुवृत्ति के लिए है ॥ १८६ ॥

## २८५०. स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च ।। १८७ ।। ( ३९२१ )

**स्फिग, पूत, वीणा, अञ्जस्, अध्वन्, कुक्षि—इत्येतान्युत्तरपदानि सीरनामानि च नामशब्दश्च अपादुत्तराण्यन्तोदात्तानि भवन्ति । अपस्फिगम् । अपपूतम् । अपवीणम् । अपाञ्जः । अपाध्वा ।**

**'उपसर्गादध्वनः' ( ५.४.८५ ) इति यदा समासान्तो नास्ति, तदाऽनेनान्तोदात्तत्वं भवति । तस्मिन् हि सत्यचप्रत्ययस्य चित्त्वादेव सिद्धम् । 'अनित्यश्च समासान्तः' इत्येतदेव ज्ञापकम् ।**

**अपकुक्षिः । अपसीरः । अपहलम् । अपलाङ्गलम् । अपनाम । सर्वत्र प्रादिसमासः, बहुव्रीहिः, अव्ययीभावो वा ।**

### न्यासः

**स्फिगपूतवीणाञ्जोऽध्वकुक्षसीरनाम नाम च ।।** स्फिगादीनां नामपर्यन्तानां समाहारे द्वन्द्वः । **सीरनामानि चेति** । हलादीनि । **अपस्फिगम् । अपपूतमिति** । प्रादिसमासः, बहुव्रीहिर्वा । स्फिगपूतशब्दौ 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तौ । केचित्तु स्फिगशब्दं घृतादित्वादन्तोदात्तमिच्छन्ति । 'रास्नासास्नास्थूणावीणाः' इति वीणाशब्द आद्युदात्तो निपात्यते । 'अन्जू' इत्येतस्मादसुन् । तेनाञ्ज आद्युदात्तः । 'शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वन्' इत्यधिकृत्य 'अदेर्ध च' इत्यध्वा । तेनायमाद्युदात्तः । उपसर्गादध्वनः' इति यदा समासान्तो नास्ति तदानेनान्तोदात्तत्वं भवति । अत्र कारणमाह—**तस्मिन् हि सतीत्यादि** । 'अच्प्रत्यन्ववपूर्वात् सामलोम्नः' इत्यतोऽज्ग्रहणेऽनुवर्तमाने 'उपसर्गादध्वनः' इत्यनेनाच् समासान्तो विधीयते । तेन तस्मिन् समासान्तेऽच्प्रत्ययस्य चित्त्वादेव सिद्धमन्तोदात्तत्वम् । ननु च नित्यः समासान्तः, तत् किमुच्यते—यदा समासान्तो नास्तीति ? अत आह—**अनित्यश्चेत्यादि** । यदि नित्यः समासान्तः स्यादध्वग्रहणमिह न कृतं स्यात्; अच्प्रत्ययस्य चित्त्वादेवान्तोदात्तस्य सिद्धत्वात्; कृतं च, तस्मादेतदेव ज्ञापयति—**समासान्तविधिरनित्य इति** । तेन 'तत्रोपासितलोकभर्तरि' इत्येवमादयः प्रयोगा उपपन्ना भवन्ति ।

'प्लुषिकुषिगुषिभ्यः क्सिः' इति कुक्षिः । तेन कुक्षिशब्दोऽन्तोदात्तः । हलसीरशब्दौ **'नब्विषयस्यानिसन्तस्य'**

### पदमञ्जरी

**स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च ।।** नामग्रहणं सीरशब्देनैव सम्बध्यते, न स्फिगादिभिः; स्फिगपूतकुक्षीणां पृथग्ग्रहणात् ।

**उपसर्गादध्वन इति यदा समासान्त इत्यादि** । अत्र कारणमाह **तस्मिन् हि सतीति । ननु च** 'उपसर्गादध्वनः' इत्यत्र तु न विकल्पः श्रुतः, नापि प्रकृतः, तत्किमुच्यते—यदा समासान्तो नास्तीति ? अत आह—**अनित्यश्चेति** । यदि नित्यः समासान्तः स्यादध्वग्रहणमिह न कर्तव्यं स्याद्, अच्प्रत्ययस्य चित्त्वादेवान्तोदात्तत्वस्य

### भावबोधिनी

स्फिग, पूत, वीणा, अञ्जस्, अध्वन् और कुक्षि—ये उत्तरपद तथा सीर के नाम, और 'नाम' शब्द—ये 'अप' से उत्तरवर्त्ती हों तो अन्तोदात्त होते हैं। उदा०—अपस्फिगम् । अपपूतम् । अपवीणम् । अपान्जः । अपाध्वा । [ उत्तरपद अन्तोदात्त हो जाते हैं । ]

"उपसर्गादध्वनः" ( ५।४।८५ ) इससे जब समासान्त प्रत्यय नहीं होता है तभी इस सूत्र से अन्तोदात्तत्व होता है क्योंकि अच् समासान्त प्रत्यय हो जाने पर तो चित् स्वर से ही अन्तोदात्तत्व सिद्ध है । और—'समासान्त प्रत्यय अनित्य होते हैं'—इसमें यही स्वर-विधान ज्ञापक है ।

अपकुक्षिः । अपसीरः । अपहलम् । अपलाङ्गलम् । अपनाम । इन सभी में प्रादिसमास है, या बहुव्रीहि है, या कर्मधारय है अर्थात् तीनों समास होते हैं ।

**स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थम्, अध्रुवार्थम्, ( म० भा० ) अस्वाङ्गार्थं च ॥**

**२८७१. अधेरुपरिस्थम् ॥ १८८ ॥ ( ३९२२ )**

**अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं भवति । अधिदन्तः । अधिकर्णः । अधिकेशः । अध्यारूढो दन्त इति प्रादिसमासः । अध्यारूढो वा दन्त इति समानाधिकरण उत्तरपदलोपी समासः ।**

**दन्तस्योपरि योऽन्यो दन्तो जायते स उच्यते = अधिदन्त इति ।**

**उपरिस्थमिति किम् ? अधिकरणम् ॥**

**न्यासः**

इत्याद्युदात्तौ । नामशब्दोऽपि 'नामन्सीमन्' इत्यादिनाऽऽद्युदात्तो निपात्यते ।

**स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थमिति ।** यदैतानि ध्रुववाचीनि भवन्ति । **अस्वाङ्गार्थञ्चेति ।** बहुव्रीहावपि यदाऽस्वाङ्गवाचीनि भवन्ति । यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति, बहुव्रीहिश्च समासः, तदा 'उपसर्गात् स्वाङ्गं ध्रुवमपर्शु' इत्येव सिद्धम् ॥ १८७ ॥

**अधेरुपरिस्थम् ॥ उपरिस्थमिति ।** उपरि तिष्ठतीति 'सुपि स्थः' इति कः । **अधिदन्त इत्यादि ।** दन्तादयः 'स्वाङ्गशिटाम्' इत्याद्युदात्ताः । **अध्यारूढो वा दन्त इति ।** वाशब्देन समानाधिकरणो वोत्तरपदलोपी समास इति सूचयति । स पुनः 'समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च' इत्युपसंख्यानेन वेदितव्यः ।

**दन्तस्योपरीत्यादि ।** एतेनोपरिस्थत्वं दर्शयति । एवं कर्णस्योपरि योऽन्यः कर्णो जायते स उच्यतेऽधिकर्ण इति । तथा केशस्योपरि योऽन्यः केशोऽधिकेशः स उच्यते ।

**उपरिस्थमिति किम् ? अधिकरणमिति ।** अत्राव्ययपूर्वपदप्रकृतिस्वर एव भवति ॥ १८८ ॥

**पदमञ्जरी**

सिद्धत्वात्; कृतं तु, ज्ञापयति—समासान्तविधिरनित्य इति ।

**स्फिगपूतकुक्षीणामित्यादि ।** यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति, बहुव्रीहिश्च समासः, तदा 'उपसर्गात्स्वाङ्गम्' इत्येव सिद्धम् ॥ १८७ ॥

**अधेरुपरिस्थम् ।** उपरि तिष्ठतीत्युपरिस्थम्, 'सुपि स्थः' कः ।

**दन्तस्योपरीत्यादिनोपरिस्थत्वं दर्शयति ।**

**अधिकरणमिति ।** अत्र कृदुत्तरपदप्रकृतिस्वरेण ककाराकार उदात्तः ॥ १८८ ॥

**भावबोधिनी**

स्फिग, पूत और कुक्षि—इनका ग्रहण—अबहुव्रीहि लिए, अध्रुव के लिए और अस्वाङ्गवाची के लिए है ॥ १८७ ॥

अधि से उत्तरवर्त्ती उपरिस्थवाचक अन्तोदात्त होता है । उदा०—अधिदन्तः । अधिकर्णः । अधिकेशः । अध्यारूढो दन्तः—इस विग्रह में [ "प्रादयो गताद्यर्थे प्रथमया" वार्त्तिक से ] प्रादिसमास है । अथवा अध्यारूढो दन्तः—यह समानाधिकरण उत्तरपदलोपी समास है । एक दाँत के ऊपर जो दूसरा दाँत निकल आता है उसे 'अधिदन्तः' कहते हैं ।

उपरिस्थ=ऊपर रहने वाला—इसका क्या फल है ? अधिकरणम् । [ इसमें नीचे रहने वाला आधार प्रतीत होता है—"आधारोऽधिकरणम्" सूत्र से आधार की अधिकरण संज्ञा होती है । अतः अव्ययपूर्वपद का प्रकृतिस्वर होता है । ] ॥ १८८ ॥

## २८९२. अनोरप्रधानकनीयसी ॥ १८९ ॥ ( ३९२३ )

**अनोरुत्तरमप्रधानवाचि कनीयश्चान्तोदात्तं भवति । अनुगतो ज्येष्ठमनुज्येष्ठः । अनुमध्यमः । पूर्वपदार्थप्रधानः प्रादिसमासोऽयम् । अनुगतः कनीयान् अनुकनीयान् । उत्तरपदार्थप्रधानोऽयम् । प्रधानार्थं च कनीयोग्रहणम् ।**

**अप्रधानकनीयसी इति किम् ? अनुगतो ज्येष्ठोऽनु'ज्येष्ठः ॥**

## २८९३. पुरुषश्चान्वादिष्टः ॥ १९० ॥ ( ३९२४ )

**पुरुषशब्दोऽन्वादिष्टवाची [1]चानोरुत्तरोऽन्तोदात्तो भवति । अन्वादिष्टः पुरुषः अनुपुरुषः । अन्वादिष्टः =**

### न्यासः

**अनोरप्रधानकनीयसी ॥ अनुज्येष्ठ इति ।** 'वृद्धस्य च' इतीष्ठनि परतो वृद्धस्य ज्यादेशः । ज्येष्ठशब्दो नित्स्वरेणाद्युदात्तः । **अनुमध्यम इति ।** 'मध्यान्मः' इति मध्यमः, प्रत्ययस्वरेणान्तोदात्तः । **पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति ।** अत्र हि योऽसौ ज्येष्ठमनुगतो मध्यमश्च स प्राधान्येन प्रादिसमासेनोच्यते, ज्येष्ठमध्यमौ तु गुणभावेन। तस्मात् पूर्वपदार्थप्रधानोऽयम् । **अनुकनीयानिति ।** ईयसुनि परतो युवशब्दस्य 'युवाल्पयोः कनन्यतरस्याम्' इति कनादेशः । कनीयःशब्दो नित्स्वरेणाद्युदात्तः ।

**अनुगतो ज्येष्ठोऽनुज्येष्ठ इति ।** उत्तरपदार्थप्रधानोऽयम् । तेन प्रधानवाचित्वं ज्येष्ठशब्दस्यास्ति ॥ १८९ ॥

**पुरुषश्चान्वादिष्टः ॥** 'पॄ पालनपूरणयोः'—अस्मात् 'पुरः कुषन्' इति कुषन् प्रत्ययः । तेन पुरुषशब्द आद्युदात्तः । **अन्वादिष्टोऽवचित इति ।** अप्रधानशिष्ट इत्यर्थः । यथा— भिक्षामट गाश्चानयेत्यत्र गोरानयनम्, यथा वा—'कर्तुः क्यङ् सलोपश्च' इत्यत्र सलोपः । **कथितानुकथितो वेति ।** यः कथितात् पश्चात् कथितः स कथितानुकथितः । यो वा किञ्चित् प्राक् कथयित्वा पश्चात् कथ्यते स कथितानुकथित इत्युच्यते ।

### पदमञ्जरी

**अनोरप्रधानकनीयसी ॥** उदाहरणे उत्तरपदार्थस्याप्राधान्यं दर्शति । **पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति । प्रधानार्थं च कनीयोग्रहणमिति ।** अन्यत्राप्रधानग्रहणेनैव सिद्धत्वात् ।

**अनुगतो ज्येष्ठ इति ।** विग्रहविशेषेण प्रधानवाचित्वं ज्येष्ठशब्दस्य दर्शयति ॥ १८९ ॥

**पुरुषश्चान्वादिष्टः ॥** अन्वादिष्टः=अप्रधानशिष्टः, यथा भिक्षामट गां चानयेति गोरानयनम् । **कथितानु-**

### भावबोधिनी

'अनु' से उत्तरवर्ती अप्रधानवाची और 'कनीयः' शब्द अन्तोदात्त होता है । उदा०—अनुगतः ज्येष्ठम्—इस अर्थ में—अनुज्येष्ठः । अनुगतः मध्यमम्—इस अर्थ में—अनुमध्यमः । यहाँ पूर्वपदार्थप्रधान प्रादिसमास है । अनुगतः कनीयान् अनुकनीयान् । यह उत्तरपदार्थप्रधान है । और प्रधान अर्थ के लिए 'कनीयः' का ग्रहण है । [ इनमें अप्रधानवाचक और 'कनीयः' अन्तोदात्त होते हैं । ]

अप्रधान और कनीयः—इनके ग्रहण का क्या फल है ? अनुगतः ज्येष्ठः—अनुज्येष्ठः । [ यहाँ ज्येष्ठ शब्द प्रधानवाची है, उत्तरपदार्थप्रधान समास है । अतः अव्यय पूर्वपद का प्रकृतिस्वर आद्युदात्त होता है । ] ॥ १८९ ॥

अनु से उत्तरवर्त्ती अन्वादिष्टवाची पुरुष शब्द अन्तोदात्त होता है । उदा०—अन्वादिष्टः पुरुषः - अनुपुरुषः । अन्वादिष्ट = अप्रधानशिष्ट, या कथितानुकथित । [ पहले किसी से कहने के बाद दुबारा जिस पुरुष से कहा जाता है वह कथितानुकथित, अन्वादिष्ट होता है । अथवा जिससे पहले कुछ कहने के बाद पुनः दूसरा कुछ कहा जाता है वह—कथितानुकथित है । ऐसा पुरुष होने पर अन्तोदात्त होता है । ]

---

१. अन्वादिष्टवाची पुरुषशब्दश्च-इत्येवमन्वय उचितः । मूलोक्तस्तु चिन्त्यः, परस्परं विशेष्यविशेषणभावात् ।

अन्वाचितः, कथितानुकथितो वा। अन्वादिष्ट इति किम् ? अनुगतः पुरुषोऽनु॑पुरुषः ॥

२८५४. अतेरकृत्पदे ॥ १९१ ॥ ( ३९२५ )

अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तो भवति। अत्यङ्कुशो नागः। अतिकशोऽश्वः। पदशब्दः खल्वपि—अतिपदा शक्वरी।

अकृत्पदे इति किम् ? अतिंकारकः।

❀ अतेर्धातुलोप इति वक्तव्यम् ❀ ( का० वा० १ )। इह मा भूत्—शोभनो गार्ग्यः अंतिगार्ग्यः। इह च यथा स्यात्—अतिक्रान्तः कारकादतिकारक इति ॥

**न्यासः**

**अनुगतः पुरुषोऽनुपुरुषः इति**। यः पश्चाद्भवः पुरुष स एवमुच्यते ॥ १९० ॥

**अतेरकृत्पदे** ॥ **अकृत्पद इति**। अकृच्च पदं चाकृत्पदे—प्रथमाद्विवचनान्तमेतत्। **अत्यङ्कुशो नाग इति**। अङ्कुशशब्दः 'सानसिपर्णसि' इत्यादिना 'अकि लक्षणे'—इत्यस्मादुशच्प्रत्ययेनान्तोदात्तो निपात्यते। **अतिकशोऽश्व इति**। 'कश गतिशासनयोः'—अस्मात् पचाद्यच्, टाप्, 'एकादेश उदात्तेनोदात्तः'। तेन कशान्तोदात्ता। **अतिपदा शक्वरीति**। 'खनो घ च' इति पदेर्घः। घित्करणेन हि ज्ञापितम्—तत्र घोऽन्यस्मादपि भवतीति। तेन पदमन्तोदात्तम्।

**अतिकारक इति**। करोतेर्ण्वुल्। अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्याव्ययस्वरो भवति।

**अतेर्धातुलोप इति**। यत्र धातोर्लोपस्तत्रातेरुत्तरपदमन्तोदात्तं भवतीति वक्तव्यम्। किमर्थम्? इत्याह—**इहेत्यादि**। यद्यतेर्धातुलोप इति नोच्येत, तदिहापि स्यात्—शोभनो गार्ग्योऽतिगार्ग्य इति। भवति ह्यत्रातेरुत्तरपदमकृदन्तम्। इह च न स्याद्—अतिक्रान्तः कारकादतिकारक इति। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति

**पदमञ्जरी**

**कथितो वेति**। कस्मिंश्चित्प्राक्कथिते योऽन्यः पश्चात्कथ्यते स कथितानुकथितः। अनुगतः=पश्चाद्गतः ॥१९०॥

**अतेरकृत्पदे** ॥ अकृच्च पदञ्च अकृत्पदे ॥ **अतिकारक इति**। शोभनः कारकः, 'स्वती पूजायाम्' इति प्रादिसमासः।

**अतेर्धातुलोप इति वक्तव्यमिति**। अत्यङ्कुश इत्यादौ वृत्तिविषयेऽतिशब्दोऽतिक्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एव धातुलोपः। **अतिगार्ग्य इति**। यथान्यासे त्वत्रापि प्राप्नोति; गार्ग्यशब्दस्याकृदन्तत्वात्। **अतिकारक इति**।

**भावबोधिनी**

अन्वादिष्ट—इसका क्या फल है ? अनुगतः पुरुषः—अनुपुरुषः। [ जो पीछे जाने वाला है, बाद में जाने वाला है वह अनुपुरुष है। यहाँ अन्वादिष्ट अर्थ नहीं है। अतः अव्यय पूर्वपद का प्रकृतिस्वर होता है। सूत्र-वृत्ति में 'च' शब्द अनावश्यक है। ] ॥ १९० ॥

'अति' से परे अकृदन्त और पद शब्द अन्तोदात्त होता है। उदा०—अत्यङ्कुशः नागः। अतिकशः अश्वः। [ अतिक्रान्तः अङ्कुशात्। अतिक्रान्तः कशायाः यहाँ 'निरादयः क्रान्ताद्यर्थे'' वचन से समास है। अङ्कुश और अश्व अन्त उदात्त हो जाते हैं। ]

पद का उदा०—अतिपदा गायत्री। [ पद अन्तोदात्त हो जाता है। ]

अकृदन्त और पद—इनके ग्रहण का क्या फल है ? अतिकारकः। [ शोभनः कारकः—इस अर्थ में ''स्वती पूजायाम्'' सूत्र से कर्मप्रवचनीयसंज्ञा होती है। पूर्वपद अव्यय का प्रकृतिस्वर होता है। ]

❀अति से परे धातुलोप में उत्तरपद अन्तोदात्त होता है—ऐसा कहना चाहिए।❀ जिससे यहाँ न होने लगे—शोभनः गार्ग्यः—अतिगार्ग्यः। और यहाँ हो जाय—अतिक्रान्तः कारकात्—अतिकारकः। [ यदि 'अकृत्पदे' यह रहता है

## २८५९. नेरनिधाने ॥ १९२ ॥ ( ३९२६ )

**नेः परमुत्तरपदमन्तोदात्तं भवत्यनिधाने । निधानम् = अप्रकाशता, [ तद्भिन्नमनिधानम् = प्रकाशनम् । ] निमूलम् । न्यक्षम् । नितृणम् । बहुव्रीहिरयम्, प्रादिसमासो वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ।**

**अनिधान इति किम् ? निवाग्वृषलः । निदण्डः । निहितवाक्, निहितदण्ड इत्यर्थः । निशब्दोऽत्र निधानार्थं ब्रवीति । प्रादयो हि वृत्तिविषये ससाधनां क्रियामाहुः ॥**

**न्यासः**

प्रादिसमासः । अत्र हि कृदन्तः कारकशब्दः उत्तरपदम् । तत्र यद्यतेर्धातुलोप इति नोच्यते तदिहापि न स्यात् । एवं तूच्यमान इहापि भवति, अस्ति ह्यत्र क्रमेर्धातोर्लोपः । लोपः पुनस्तस्य समासे गम्यमानार्थत्वादप्रयुज्यमानस्यादर्शनम् ॥ १९१ ॥

**नेरनिधाने ॥ निधानमप्रकाशतेति** । न निधानमनिधानम् । **निमूलम्, न्यक्षमिति** । 'मूल प्रतिष्ठायाम्'—अस्मात् पचाद्यच् । तस्मान् मूलशब्दोऽन्तोदात्तः । 'वृतॄवदिहनिकमिकषिभ्यः सः' इत्यधिकृत्य 'अशेर्देवने' इति सप्रत्ययान्तत्वादक्षशब्दोऽप्यन्तोदात्तः । **नितृणमिति** । 'नब्विषयस्य' इति तृणमाद्युदात्तम् । **बहुव्रीहिरयमित्यादि** । यदा बहुव्रीहिस्तदा—निगतानि मूलान्यस्येति विग्रहः । यदा प्रादिसमासस्तदा निगतं मूलमिति । अव्ययीभावः कस्मादयं न भवति ? इत्याह—**अव्ययीभावे त्वित्यादि** । बहुव्रीहौ तु समासान्तोदात्तत्वापवादः 'बहुव्रीहौ प्रकृत्या' इत्यादिना पूर्वपदस्य प्रकृतिस्वर उक्तः । तत्पुरुषेऽपि 'तत्पुरुषे तुल्यार्थ' इत्यादिना तेन तयोर्विनाऽनेन वचनेनान्तोदात्तत्वं न सिध्यति । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्, न हि तत्र तस्यापवाद उक्तः ।

**निवाग् वृषलः, निदण्ड इति** । अत्र पूर्वपदस्य प्रकृतिस्वर एव भवति । वाक्शब्दः 'क्विब्वचिप्रच्छि' इत्यादिना क्विबन्तो व्युत्पादित आद्युदात्तः । दमु उपशमे'—अस्मात् 'ञमन्ताड्डः' इति । तेन दण्डशब्दोऽप्यन्तोदात्तः । **निशब्दोऽत्र निधानार्थं ब्रवीतीति** । अप्रकाशतां ब्रवीतीत्यर्थः । कथं पुनरत्र निशब्दो निधानार्थं ब्रवीति ? इत्याह—**प्रादयो हीत्यादि** । वृत्तिशब्देनेह समासवृत्त्यादिर्गृह्यते । प्रादयो हि स्वभावेनैव वृत्तिविषये ससाधनां क्रियामाहुः । तस्मादिह समासवृत्तौ विषये यासावप्रकाशनात्मिका क्रिया निधानशब्दवाच्या वाक्साधना, दण्डसाधना च तां निशब्दो ब्रवीति ॥ १९२ ॥

**पदमञ्जरी**

यथान्यासे त्वत्र न स्यात्, कारकशब्दस्य कृदन्तत्वात् । तस्मादव्याप्त्यतिव्याप्तिपरिहारार्थमकृतपदे इत्यपनीय 'अतेर्धातुलोपः' इति वक्तव्यम् ॥ १९१ ॥

**नेरनिधाने** ॥ **निधानमप्रकाशतेति** । न निधानमनिधानम् । निर्गतं मूलमस्य निर्गतं वा मूलन्निमूलम् ।

**निधानार्थं ब्रवीतीति** । अप्रकाशतां ब्रवीतीत्यर्थः । कथं पुनर्निशब्दस्यायमर्थः ? इत्याह—**प्रादयो हीति** ॥ १९२

**भावबोधिनी**

तो 'अतिगार्ग्यः' में वारण करना संभव नहीं है । अतः इनके स्थान पर 'धातुलोपे' पढ़ना चाहिए । 'अतिकारकः' आदि में 'क्रान्त' का लोप है । 'अतेः' यह सत्र समासान्तोदात्त करता है । ] ॥ १९१ ॥

'नि' से परे उत्तरपद अनिधान अर्थ में अन्तोदात्त होता है । निधान = अप्रकाशता । इससे भिन्न अनिधान = प्रकाशन । उदा०—निमूलम् । न्यक्षम् । नितृणम् । [ निगतं मूलम् अस्य तत् अथवा निगतं मूलम् । पदमंजरीकार के अनुसार निर्गतं मूलम् अस्य, निर्गतं वा मूलम् । ] यह बहुव्रीहि है अथवा प्रादिसमास है । अव्ययीभाव में तो समासान्त के उदात्तत्व से ही अन्तोदात्तत्व सिद्ध है ।

अनिधान में—इसका क्या फल है ? निवाग् वृषलः । निदण्डः । निहितवाक् = निवाक्, निहितदण्डः = निदण्डः —यह

## २८५६. प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥ ( ३१२७ )

**प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ता भवन्ति। प्रतिगतोऽंशुः प्रत्यंशुः। प्रतिजनः। प्रतिराजा।**

**राजशब्दः समासान्तस्यानित्यत्वाद्यदा टज नास्ति तदा प्रयोजयति। तस्मिन्हि सति चित्वादेवान्तोदात्तत्वं सिद्धम्।**

**तत्पुरुष इति किम्? प्रतिगता अंशवोऽस्य प्रत्यंशुरयमुष्ट्रः।**

**अंशु। जन। राजन्। उष्ट्र। खेटक। अजिर। आर्द्रा। श्रवण। कृत्तिका। अर्द्ध। पुर। अंश्वादि॥**

**न्यासः**

**प्रतेरंश्वादयस्तत्पुरुषे॥** पूर्वपदप्रकृतिस्वरापवादो योगः। **प्रत्यंशुरिति**। प्रादिसमासः। 'कुर्भ्रश्च' इत्यधिकृत्य 'मृगय्वादयश्च' इत्यंशुशब्दो निपातितः। तेनान्तोदात्तः जनेर्घञ्। तेन जन आद्युदात्तः। राजञ्शब्दोऽपि कनिन्प्रत्ययान्तत्वात्। **राजशब्द इत्यादि**। 'राजाहःसखिभ्यष्टच्' इति यदाऽनित्यत्वाट् टज् नास्ति, तदा राजशब्द इह पाठे प्रयोजयति। अथ तस्मिन् समासान्ते सति कस्मान् न प्रयोजयति? इत्याह—**तस्मिन् हि सतीत्यादि**। अनित्यत्वं तु समासान्तविधेः पूर्वमेव ज्ञापितम्। राजशब्दस्य चेह पाठः समासान्तविधेरनित्यत्वं ज्ञापयति। 'उष दाहे'—इत्यस्मात् ष्ट्रन्। तेन उष्ट्रशब्द आद्युदात्तः। 'खिट सन्तापे'—अस्माण्ण्वुल्। तेन खेटकशब्दोऽप्याद्युदात्तः। अजिरशिशिर' इत्यादिना किरच्प्रत्ययान्तोऽजिरशब्दो निपातितः। तेनान्तोदात्तः। 'द्रा कुत्सायां गतौ'—अस्मादाङ्पूर्वाद् 'आतश्चोपसर्गे' इत्यङ्, निपातनात् पूर्वपदस्य रेफान्तता। ततश्चाव्ययरूपहानादसत्यस्मात् पूर्वपदप्रकृतिस्वरत्वे आर्द्रेत्यन्तोदात्ता भवति। 'श्रु श्रवणे' इत्यस्माल्ल्युट्। तेन श्रवणशब्दो लित्स्वरेणाद्युदात्तः। 'वृतेस्तिकन्' इति प्रकृते 'कृतिभिदिलतिभ्यः कित्' इति तिकन्, टाप्। तेन कृत्तिकाशब्द आद्युदात्तः। 'ऋध'—इत्येतस्मादच्, घञ् वा। तेनार्धशब्दोऽन्तोदात्तः, आद्युदात्तो वा। 'पुर अग्रगमने'—अस्मादिगुपधलक्षणः कः। तेन पुरशब्दोऽन्तोदात्तः।

**प्रतिगता अंशवोऽस्येत्यादि**। अत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरो भवति॥ १९३॥

**पदमञ्जरी**

**प्रतेरंश्वादयस्तत्पुरुषे॥** अंशुशब्दः 'कुश्च' ( द० उ० १.११७ ) इति वर्तमाने 'मृगय्वादयश्च' ( द० उ० १.२१ ) इति निपातितः। राजतेः कनिन्' ( द० उ० ६.५१ ) **राजन्**। 'उष दाहे', ( धा० पा० ६९६ ) **ष्ट्रन्—उष्ट्रः**। खिट्, ( धा० पा० ३०२ ) ण्वुल्—**खेटकः**। अजिरशिशिर' ( द० उ० ८.२७ ) इति किरच्—**अजिरम्**। द्रातेराङ्पूर्वाद् 'आतश्चोपसर्गे' इत्यङ् अस्मादेव निपातनादाङो रगागमः—**आर्द्रा**। शृणोतेर्ल्युट्—**श्रवणम्**। 'कृतिभिदिलतिभ्यः कित्' ( द० उ० ३.२९ ) तिकन् प्रकृतः—**कृत्तिका**। ऋधेः पचाद्यच्—**अर्धः**। **'पुर अग्रगमने'** ( धा० पा० १३४६ ) इगुपधात्कः—**पुरम्**। एते अंश्वादयः॥ १९३॥

**भावबोधिनी**

अर्थ है। इनमें 'नि' शब्द निधान=अप्रकाश अर्थ को कहता है। अर्थात् अप्रकटता को सूचित करता है। प्रादि शब्द वृत्तिविषय में साधनविशिष्ट क्रिया को कहते हैं। [ अतः केवल 'नि' शब्द से 'निहित' इतना अर्थ प्रतीत हो जाता है। इनमें पूर्वपद का प्रकृतिस्वर ही होता हैं। ]॥ १९२॥

'प्रति' से परे अंशु आदि शब्द तत्पुरुष समास में अन्तोदात्त होते हैं। उदा०—प्रतिगतः अंशुः—प्रत्यंशुः। [ प्रतिगतः जनः—] प्रतिजनः। [ प्रतिगतः राजा—] प्रतिराजा।

समासान्त प्रत्ययों के अनित्य होने के कारण जब टच् नहीं होता है तब राजन् शब्द इस स्वर को करवाता है। क्योंकि टच् होने पर तो चित् होने के कारण ही अन्तोदात्तत्व सिद्ध है।

**२८९७. उपाद् द्व्यजजिनमगौरादयः ॥ १९४ ॥ ( ३९२८ )**

**उपादुत्तरं द्व्यजजिनं चान्तोदात्तं भवति तत्पुरुषे समासे गौरादीन् वर्जयित्वा । उपगतो देवमुपदेवः । उपसोमः । उपेन्द्रः । उपहोडः । अजिन—उपाजिनम् ।**

**अगौरादय इति किम् ? उपगौरः । उपतैषः ।**

**तत्पुरुष इत्येव—उपगतः सोमोऽस्य उपसोमः ।**

**गौर । तैष । नैष । तैट । लेट । लोट । जिह्वा । कृष्णा । कन्या । गुड । कल्य । वाह[1] । गौरादिः[2] ॥**

**न्यासः**

**उपाद् द्व्यजजिनमगौरादयः ॥ उपदेव इति ।** प्रादिसमासोऽयम् । देवशब्दः पचाद्यजन्तत्वादन्तोदात्तः । **उपसोम इति ।** 'अर्तिस्तुसुहुसृ' इत्यादिना मन् । तेन सोमशब्द आद्युदात्तः । 'हुडृ हूडृ गतौ'—अस्मात् पचाद्यच् । तेन होडशब्दोऽन्तोदात्तः । अजिनमन्तोदात्तमित्युक्तम्, अद्व्यजर्थं चास्य ग्रहणम् ।

गौरशब्दः प्रज्ञाद्यणन्तत्वादाद्युदात्तः । तिष्येण युक्तः कालस्तैषः, 'प्राग्दीव्यतोऽण्' । 'सूर्यतिष्य' इति यलोपः । नैषतैटावणन्तौ । तेनान्तोदात्तौ । 'रट परिभाषणे'—अस्मादच् । रलयोरेकत्वाद्रेफस्य लकारः । लटः । 'लुट विलोडने'—अस्मात् पचाद्यच् । तेन लटलोटावप्यन्तोदात्तौ । 'शेवयह्वजिह्वाग्रीवाप्वमीवाः' इति जिह्वान्तोदात्ता निपात्यते । 'इण्सिञ्जि' इत्यधिकृत्य 'कृषेर्वर्णे' इति कृषेर्नक्, टाप्, सवर्णदीर्घत्वम्, 'एकादेश उदात्तेनोदात्तः' । तेन कृष्णाशब्दोऽन्तोदात्तः । 'अघ्न्यादयश्च' इति कन्याशब्दोऽन्तस्वरितो निपात्यते । 'गुड धनत्वे—अस्मादिगुपलक्षणः कः । तेन गुडोऽन्तोदात्तः । कल्यवाहशब्दौ वृषादित्वादन्तोदात्तौ ॥ १९४ ॥

**पदमञ्जरी**

**उपाद् द्व्यजजिनमगौरादयः ॥** 'गुरी उद्यमने', ( धा० पा० १३९६ ) पचाद्यजन्तात्प्रज्ञाद्यण्, **गौरम्** । तिष्येण **युक्तः** कालस्तैषः । **लेट लोट इति** । कण्ड्वादिपठिताभ्यां पचाद्यच्, लेटलोटौ । 'लहेर्जिह्वा' ( द० उ० ८.१२८ ) उणादिः । **'कृषेर्वर्णे'** ( द० उ० ५.३७ ) इति नक्, टाप्—**कृष्णा** । **कन्याशब्दः** 'अघ्न्यादयश्च' ( द० उ० ८.१४ ) इति निपातितः । 'गुध धनत्वे', ( धा० पा० ११२० ) इगुपधात्कः—**गुधः** । क्लृपिपदिभ्यां घञ्—**कल्पः, पाद** ॥ १९४ ॥

**भावबोधिनी**

तत्पुरुष में—इसका क्या फल है ? प्रतिगता अंशवः अस्य —प्रत्यंशुः अयम् उष्ट्रः । [ यह बहुव्रीहि है । अतः पूर्वपद 'प्रति' का आद्युदात्त प्रकृतिस्वर ही होता है । ]

अंशु । जन । राजन् । उष्ट्र । खेटक । अजिर । आर्द्रा । श्रवण । कृत्तिका । अर्द्ध । पुर । ये अंश्वादि हैं ॥ १९३ ॥

'उप' से उत्तरवर्त्ती द्व्यच् ( दो अचों वाला ) और अजिन शब्द अन्तोदात्त होता है तत्पुरुष समास में गौरादि को छोड़कर । उदा०—उपगतः देवम्—उपदेवः । [ उपगतः सोमम् ] उपसोमः । [ उपगतः इन्द्रम् ] उपेन्द्रः । [ उपगतः होडम् ] उपहोडः । अजिन का उदा०—उपाजिनम् [ उपगतम् अजिनम् ] ।

अगौर आदि—इसका क्या फल है ? उपगौरः । उपतैषः । [ इनमें पूर्वपद का प्रकृतिस्वर ही होता है । ]

तत्पुरुष में—इसी में होता है । उपगतः सोमः अस्य । [ इस बहुव्रीहि में नहीं होता है । पूर्वपद पद का प्रकृति स्वर ही होता है । ]

गौर । तैष । नैष । तैट । लट । लोट । जिह्वा । कृष्णा । कन्या । गुड । कल्प । पाद । ये गौरादि हैं ॥ १९४ ॥

---

१. मुद्रितकाशिकायामत्र 'नैष, टैल, लेट, कल्प, पाद' इति गणे पाठः ।

२. पूर्वसूत्रेऽस्मिन् सूत्रे च 'तत्पुरुष इति किम् ?....' 'तत्पुरुष इत्येवं,....' एवं गणपाठानन्तरं प्रकाशितः; तन्नोचितम् गणपाठात् पूर्वमेव युक्तत्वात् ।

## २८५८. सोरवक्षेपणे ।। १९५ ।। ( ३९२९ )

**सुशब्दात्परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने। अवक्षेपणम्=निन्दा। इह खल्विदानीं सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्यवसितः। सुशब्दोऽत्र पूजायामेव। वाक्यार्थस्तु अवक्षेपणम्, असूयया तथाभिधानात्।**

**सोरिति किम्? कुब्राह्मणः। अवक्षेपण इति किम्? शोभनेषु तृणेषु सुतृणेषु ॥**

## २८५९. विभाषोत्पुच्छे ।। १९६ ।। ( ३९३० )

**उत्पुच्छशब्दे तत्पुरुषे विभाषाऽन्त उदात्तो भवति। उत्क्रान्तः पुच्छाद् उत्पुच्छः, उत्पुच्छः।**

**यदा तु पुच्छमुदस्यति उत्पुच्छयति, उत्पुच्छयतेरच् उत्पुच्छः, तदा थाथादिसूत्रेण (६.२.१४४) नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयमिति सेयमुभयत्र विभाषा भवति।**

### न्यासः

**सोरवक्षेपणे। सुस्थण्डिल इति।** स्थानं स्थिरमस्मिन्निति स्थण्डिलम्। पृषोदरादित्वात् आद्युदात्तः। **सुस्फिगाभ्यामिति।** स्फिगशब्द आद्युदात्तः। **सुप्रत्यवसित इति।** प्रत्ययवसितशब्दस्थाथादिस्वरेणान्तोदात्तः। ननु च सुशब्देनापि सह समासे कृते थाथादिस्वरेणैवान्तोदात्तत्वं भविष्यति, तत् किमर्थमुदाहृतम्? एवं मन्यते—सत्यन्यार्थेऽस्यारम्भे परत्वादनेनैवात्राप्यन्तोदात्तत्वं युक्तमिति। यदि सुशब्दोऽत्र पूजायामेव वर्तते, अवक्षेपणं तर्हि कस्यार्थः? इत्याह—**वाक्यार्थस्त्ववक्षेपणमिति।** अत्रैव कारणमाह—**असूयया तथाभिधानादिति।** इह खल्विदानीम् 'आस्व सुस्थण्डिल!' इत्येवम्प्रकारं वाक्यं यस्मादसूयया प्रयुज्यते, तस्माद् वाक्यार्थस्यैवावक्षेपणम्। **सुतृणेष्विति।** अत्र गुणोद्भावनेच्छयाभिधानम्, नासूयया। तेनावक्षेपणं नास्ति, पूजैव तु विद्यते ॥ १९५ ॥

**विभाषोत्पुच्छे ॥ उत्पुच्छ इति।** पुच्छशब्दः 'नब्विषयस्य' इत्याद्युदात्तः।

**सेयमुभयत्र विभाषा भवतीति।** यदोत्पुच्छशब्दोऽच्प्रत्ययान्तो न भवति तदा समासान्तोदात्तत्वम्। यदा समासान्तोदात्तत्वापवादः 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्याव्ययस्य प्रकृतिस्वरः, तदा तेनाप्राप्तेऽस्मिन्नन्तोदात्तत्वे विभाषेयम्। यदा तु पुच्छमुदस्यतीत्यस्यार्थस्य विवक्षायाम् 'पुच्छभाण्डचीवराण्णिङ्' इति

### पदमञ्जरी

**सोरवक्षेपणे ॥** उदाहरणे तु 'स्वती पूजायाम्' इति कर्मप्रवचनीयस्य समासः। तेन सुप्रत्यवसिते थाथादिस्वरेण सिद्धिर्नाशङ्क्या। यदि सुशब्दोऽत्र पूजायामेव वर्तते, कथं तर्हि क्षेपो गम्यते? इत्याह—**वाक्यार्थस्त्विति।** कथम्? इत्याह—**असूयया तथाभिधानादिति।** यः खल्वनर्थ उपस्थिते सुखायाम [ सुखमय ] आस्ते तं प्रकृत्यैवमुक्ते क्षेपो गम्यते ॥ १९५ ॥

**विभाषोत्पुच्छे ॥ सेयमुभयत्र विभाषेति।** आद्यप्रवृत्तावव्ययपूर्वपदप्रकृतिस्वरेण बाधितत्वात् समासस्यान्तो-

### भावबोधिनी

अवक्षेपण प्रतीयमान रहने पर तत्पुरुष समास में 'सु' से परे उत्तरपद अन्तोदात्त होता है। अवक्षेपण = निन्दा। उदा०—इह खलु इदानीं सुस्थण्डिले, सुस्फिगाभ्यां सुप्रत्यवसितः। यहाँ 'सु' पूजा = प्रशंसा अर्थ में ही है। किन्तु वाक्यार्थ निन्दा है क्योंकि असूया के कारण वैसा कहा गया है। [ अतः अवक्षेपण गम्यमान है। ]

'सु' से परे—इसका क्या फल है? कुब्राह्मणः। [ अवक्षेपण है किन्तु 'सु' से परे नहीं है। ] अवक्षेपण में—इसका क्या फल है? शोभनेषु तृणेषु—सुतृणेषु। [ यहाँ प्रशंसा की प्रतीति है। अतः पूर्वपद अव्यय का स्वर होता। ] ॥ १९५ ॥

तत्पुरुष समास में उत्पुच्छ शब्द में विकल्प से अन्त उदात्त होता है। उदा०—उत्क्रान्तः पुच्छाद् उत्पुच्छः।

परन्तु जब पुच्छम् उदस्यति—इस अर्थ में उत्पुच्छयति, उत्पुच्छयति से अच् करके—'उत्पुच्छः' बनता है तब तो

तत्पुरुष इत्येव – उदस्तं पुच्छमस्य उत्पुच्छः ॥

## २८६०. द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ १९७ ॥ ( ३९३१ )

द्वि, त्रि – इत्येताभ्यामुत्तरेषु पाद्, दत्, मूर्धन्—इत्येषूत्तरपदेषु यो बहुव्रीहिस्तत्र विभाषाऽन्त उदात्तो भवति। द्वौ पादावस्य द्विपात् ( मै० सं० २.६.८ ३ ) द्विपात्। त्रिपात्, त्रिपात्। द्विदन् द्विदन्। त्रिदन् त्रिदन्। द्विमूर्धा द्विमूर्धा। त्रिमूर्धा त्रिमूर्धा। पादिति कृताकारलोपः पादशब्दो गृह्यते। ददिति कृतददादेशो दन्तशब्दः।

मूर्धन्निति त्वकृतसमासान्तो नान्त एव मून्शब्दः। तस्यैतत्प्रयोजनम्—असत्यपि समासान्तेऽन्तोदात्तत्वं

**न्यासः**

णिङं विधाय तदन्तादुत्पुच्छयतेः पचाद्यचि कृते उत्पुच्छ इत्येतच्छब्दरूपं भवति, तदा थाथादिस्वरेण नित्यमन्तोदात्तत्वे प्राप्तेऽयं विकल्पः। तेन प्राप्ते विभाषेयम्।

उदस्तं पुच्छमस्योत्पुच्छ इति। बहुव्रीहिप्रकृतिस्वर एव भवति ॥ १९६ ॥

**द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ द्वित्रिभ्यामिति।** दिग्योगलक्षणा पञ्चमी। **पाद्दन्मूर्धस्विति।** 'यस्य च भावेन भावलक्षणम्' इति भावलक्षणा सप्तमी। **द्विपात्, त्रिपादिति।** 'पादस्य लोपोऽहस्त्यादिभ्यः', 'सङ्ख्यासुपूर्वस्य' इत्यकारलोपः। पादशब्दो घञन्तत्वादाद्युदात्त इति पाच्छब्दश्चाद्युदात्त एव भवति। **द्विदन्निति।** 'वयसि दन्तस्य' इति दत्रादेशः। दन्तशब्द आद्युदात्त इत्युक्तम्। तेन दत्रादेशोऽपि स्थानिवद्भावेनाद्युदात्त एव भवति। **द्विमूर्धेति।** मूर्धन्शब्दः 'श्वन्नुक्षन्पूषन्प्लीहन्' इत्यादिना रन् प्रत्ययान्तो निपात्यते। तेनाद्युदात्तः। **मूर्धन्नित्यादि।** 'द्वित्रिभ्यां षो मूर्ध्नः' इति षः समासान्तः प्राप्नोति, स न कृतः। तेनात्र नान्त एव मूर्धशब्दः। किं पुनः कारणमकृतसमासान्त एव मूर्धञ्शब्द उपात्तः? इत्यत आह—**तस्येत्यादि।** यदि कृतसमासान्त उपादीयेत तदा सत्येव समासान्तेऽन्तोदात्तत्वं स्यात्, असति न स्यात्। तस्मादसत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यादित्येतत् प्रयोजनमकृतसमासान्तनिर्देशस्य। ननु च नित्यमेव समासान्तेन

**पदमञ्जरी**

दात्तत्वमप्राप्तम्, द्वितीयायां तु थाथादिस्वरेण नित्यं प्राप्तमिति कृत्वा ॥ १९६ ॥

**द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ ॥** 'द्वित्रिभ्याम्' इति दिग्योगलक्षणा पञ्चमी, 'पाद्दन्मूर्द्धसु' इति सत्सप्तमी, बहुव्रीहिः कार्यीति, तदेतदाह—**द्वि त्रि इत्येताभ्यामिति। द्विपादिति।** 'संख्या सुपूर्वस्य' इत्यकारलोपः समासान्तः। **दन्निति।** 'वयसि दन्तस्य दतृ'।

**भावबोधिनी**

'थाथघञ्' ( ६।२।१४४ ) सूत्र से [ अजन्त मानकर ] नित्य अन्तोदात्तत्व प्राप्त रहते यह विकल्प कहा जा रहा है, इस प्रकार यह उभयत्र विभाषा ( प्राप्ताप्राप्तविभाषा ) हो जाता है।

तत्पुरुष में ही—उदस्तं पुच्छम् अस्य —उत्पुच्छः। [ यहाँ बहुव्रीहि में पूर्वपद का प्रकृतिस्वर होता है। ] ॥१९६॥

द्वि और त्रि से उत्तरवर्ती पाद्, दत्, मूर्धन्—ये उत्तरपद होने पर जो बहुव्रीहि समास होता है उसमें विकल्प से अन्तोदात्त होता है। उदा०—द्वौ पादौ अस्य—द्विपात्। त्रयः पादाः अस्य—त्रिपात्। [ समास करने पर पाद के अन्त्य अ का लोप हो जाता है। ] द्विदन्। त्रिदन्। [ द्वौ दन्तौ अस्य, त्रयः दन्ता अस्य —इसमें "वयसि दन्तस्य दतृ" सूत्र से दतृ आदेश होता है। ] द्विमूर्धा। त्रिमूर्धा। पात्—यह किये गये अकारलोप वाले पाद का ग्रहण है। दत्—यह किये गये दत् आदेश वाला 'दन्त' गृहीत है।

परन्तु 'मूर्धन्' यह तो अकृतसमासान्तप्रत्यय नान्त अर्थात् जिससे समासान्त 'ष' प्रत्यय नहीं किया गया है ऐसे 'मूर्धन्' का ही ग्रहण है। इसका यह प्रयोजन है—समासान्त के न होने पर भी यह अन्तोदात्तत्व हो सके। यह भी

**यथा स्यात् । एतदेव ज्ञापकम्—अनित्यः समासान्तो भवतीति ।**

**यदापि समान्तः क्रियते, तदापि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं पक्षे भवत्येव—द्विमूर्धः, त्रिमूर्धः ।**

**द्वित्रिभ्यामिति किम् ? कल्याणमूर्धा । पादादिष्विति किम् ? द्विहस्तम् । बहुव्रीहाविति किम् ? द्वयोर्मूर्धा द्विमूर्धा ॥**

**न्यासः**

भवितव्यम्, तत् कुतस्तस्यासत्त्वम् ? इत्यत आह—**एतदेवेत्यादि** । यदिदमस्य प्रयोजनस्य सम्पादनार्थम-कृतसमासान्तस्य मूर्धन्-शब्दस्योपादानम्, एतदेव ज्ञापकम्—अनित्यः समासान्तो भवतीति । तेन द्विमूर्धेत्यादि-प्रयोग उपपन्नो भवति । यदि तर्ह्यकृतसमासान्त इह मूर्धन्-शब्द उपात्तः, एवं सति यदा समासान्तः क्रियते तदान्तोदात्तेन न भवितव्यम् । कृतसमासान्तस्य शब्दान्तरत्वादित्यत आह—**यद्यपीत्यादि** । इह हि बहुव्रीहिः कार्यी, तदेकदेशित्वञ्च समासान्तस्य । एकदेशोऽस्यास्तीत्येकदेशी, स बहुव्रीहिरेकदेशी यस्य समासान्तस्य स तदेकदेशी, तद्भावस्तदेकदेशित्वम् । एतेन बहुव्रीह्यवयवत्वं समासान्तस्य दर्शयन् कृतसमासान्तस्य शब्दान्तरत्वं निरस्यति । तदेवं यस्मादिह बहुव्रीहिः कार्यी तदेकदेशित्वञ्च समासान्तस्य, तस्माद् यदापि समासान्तः क्रियते तदापि पक्षेऽन्तोदात्तत्वं भवत्येव । **कल्याणमूर्धेति** । कल्याणशब्दः 'नब्विषयस्य' इत्याद्युदात्तः । **द्वयोर्मूर्धेति** ।

**पदमञ्जरी**

**मूर्द्धन्नित्यादि**[1] । न[2] ह्यकृतसमासान्तस्य सम्भवः ? अत आह—**एतदेवेति** ।

यदि तर्ह्यकृतसमासान्तस्योपादानम्, एवं सति यदि समासान्तः क्रियते, तदा न प्राप्नोति; तस्य शब्दान्तर-त्वादित्यत आह—**यदापीति** । इह हि बहुव्रीहिः कार्यित्वेनोपात्तः, न मूर्द्धशब्दः । **तदेकदेशत्वाच्चेति** । तस्य बहुव्रीहेरेकदेशोऽवयवः समासान्तस्तद्भावस्तत्त्वम्, तस्मादित्यर्थः । **तदेकदेशित्वादिति** पाठे स बहुव्रीहिरेकदेशी अवयवी यस्य स तदेकदेशी, तस्य भावस्तत्त्वम्, तस्मादिति स एवार्थः । तदेवं बहुव्रीहेः कार्यित्वात्तदेकदेशत्वाच्च समासान्तस्य यदापि समासान्तः क्रियते, तदाप्ययं विधिर्भवत्येव ।

अपर आह—यदाप्युत्तरपदस्य कार्यित्वं तदापि परत्वादन्तोदात्तत्वे कृते पश्चात्समासान्तः, तत्र टिलोपे सति उदात्तनिवृत्तिस्वरेणैव षप्रत्ययस्य सिद्धमुदात्तत्वमिति । **कल्याणमूर्द्धेति** । पूर्वपदप्रकृतिस्वर एवात्र भवति ।

**भावबोधिनी**

ज्ञापक है कि समासान्त प्रत्यय अनित्य होता है । [ और भी ज्ञापक हैं अतः यहाँ 'एव' शब्द 'अपि' के अर्थ में समझना चाहिए । देखें सूत्र १८७ में 'अनित्यश्च समासान्तः' इत्येतदेव ज्ञापकम् ।' यहाँ भी 'एव' 'अपि' के अर्थ में है । ]

जब समासान्त किया जाता है तब भी बहुव्रीहि कार्यी है और समासान्त उस बहुव्रीहि का एक-देश है इसलिए पक्ष में अन्तोदात्तत्व होता ही है—द्विमूर्धः । त्रिमूर्धः । [ अतः यह शंका नहीं करनी चाहिए कि सूत्र में अकृतसमासान्त है अतः समासान्त करने पर प्राप्ति ही नहीं है । ]

द्वि और त्रि से परे—इसका क्या फल है ? कल्याणमूर्धा । [ द्वि, त्रि न होने से प्राप्त नहीं है । ]

पादादि परे हों—इसका क्या फल है ? द्विहस्तम् । [ पाद आदि नहीं है । ]

---

१. 'अकृतसमासान्त एव मूर्धन्शब्द इति' । एतच्च मूर्धस्विति निर्देशादेवासीयते । अन्यथा मूर्धेष्विति निर्देश्यं स्यात् । किमर्थं तर्ह्यकृतसमासान्त एव निर्दिष्टः ? इत्याह—तस्येति । कृतसमासान्तस्य निर्देशे सत्येव समासान्तेऽन्तोदात्तत्वं स्यात्, असति न स्यात्—इति पाठा० ।

२-२. 'ननु च द्वित्रिभ्यां ष मूर्ध्नः—इत्यत्र न विकल्पः श्रुतः, तत्कथमसमान्तसम्भवः ?'—इति पाठा० ।

## २८६१. सक्थं चाक्रान्तात् ॥ १९८ ॥ ( ३९३२ )

**सक्थमिति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते, सोऽक्रान्तात्परो विभाषान्तोदात्तो भवति। गौरसक्थः गौरसक्थः। श्लक्ष्णसक्थः श्लक्ष्णसक्थः।**

**न्यासः**

अत्र नित्यमेव समासान्तोदात्तत्वं भवति[1] ॥ १९७ ॥

**पदमञ्जरी**

कल्याणशब्दः 'लघावन्ते' ( फि० सू० २.१९ ) इति मध्योदात्तः ॥ १९७ ॥

**सक्थं चाक्रान्तात्** ॥ 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति समासान्ते कृते यः सक्थशब्दः सोऽत्र गृह्यते। क्रशब्दोऽन्तो यस्य स क्रान्तः, ततोऽन्योऽक्रान्त इति। **गौरसक्थ इति**। गौरशब्दः प्रज्ञाद्यणन्तत्वादन्तोदात्तः। 'श्लिषेरच्चोपधायाः' ( द० उ० ५.५१ ) इति श्लक्ष्णशब्दोऽन्तोदात्तः।

**भावबोधिनी**

बहुव्रीहि में—इसका क्या फल है ? द्वयोर्मूर्धा—द्विमूर्धा। [ यहाँ समासान्त उदात्त होता है। ] ॥ १९७ ॥

यहाँ 'सक्थ' यह कृतसमासान्त-प्रत्यय 'सक्थि' का ग्रहण है। यह 'क्रान्त' से परे न होने पर विकल्प से अन्तोदात्त होता है। उदा०—गौरसक्थः। श्लक्ष्णसक्थः। [ गौरं सक्थि यस्य सः—इस अर्थ में बहुव्रीहि करने पर ''बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्'' सूत्र से षच् = अ प्रत्यय होता है, इलोप करने पर 'सक्थ' बनता है। ]

---

१. अस्य सूत्रस्य अन्यमातृकायामित्थमपि व्याख्यानमुपलभ्यते—

''**द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ** ॥ **द्वित्रिभ्यामिति**। दिग्योगलक्षणा पञ्चमी। **पाद्दन्मूर्धस्विति**। 'यस्य च भावेन भावलक्षणम्' इति भावलक्षणा सप्तमी। बहुव्रीहिः कार्यी। अत आह—**द्वित्रि इत्येताभ्यामित्यादि**। **द्विपात्, त्रिपादीति**। 'संख्यासुपूर्वस्य' इत्यकारलोपः समासान्तः। **द्विदन् त्रिदन्निति**। 'वयसि दन्तस्य दतृ' इति ददादेशः। **द्विमूर्धा, त्रिमूर्धेति**।

नन्वत्र 'द्वित्रिभ्यां षो मूर्ध्नः' इति समासान्तेन षप्रत्ययेन भवितव्यम्, तेन द्विमूर्धः, त्रिमूर्ध इत्येव स्यात्, कथं द्विमूर्धा, त्रिमूर्धा ? इत्याह—**मूर्धन्नित्यादि**। अकृतसमासान्तस्य नान्तस्यैव निर्देशस्तु मूर्धस्वित्यनेनैव ज्ञायते, अन्यथा मूर्धष्विति ब्रूयात्। न ह्यकृतसमासान्तस्य सम्भवः, इत्यत आह—**तस्यैतत् प्रयोजनमित्यादि**। कृतसमासान्तस्य निर्देशे सत्येव समासान्तेऽन्तोदात्तत्वं स्यात्, असति न स्यात्। तस्माद् असत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात्, तदर्थोऽयं निर्देशोऽकृतसमासान्तस्य। ननु च नित्यमेव समासान्तेन भवितव्यतया यदिदमस्य प्रयोजनस्य सम्पादनार्थमकृतसमासान्तस्योपादानम्, तज् ज्ञापकम्—अनित्यः समासान्तो भवतीति। तेन द्विमूर्धेत्यादिः प्रयोग उपपद्यते।

यदि तर्ह्यकृतसमासान्त इह मूर्धशब्द उपात्तः, एवं सति यदि समासान्तः क्रियते तदान्तोदात्तत्वेन न भवितव्यमिति, कृतसमासान्तस्य शब्दान्तरत्वात् ? इत्यत आह—**यदापीत्यादि**। बहुव्रीहिरत्र कार्यी। तदेकदेशत्वञ्च समासान्तस्य। एकदेशोऽस्यास्तीत्येकदेशी, स बहुव्रीहिरेकदेशो अवयवी यस्य समासान्तस्य स तदेकदेशी तद्भावस्तदेकदेशित्वम्। एतेन समासान्तस्य बहुव्रीह्यवयवत्वं दर्शयन् कृतसमासान्तस्य शब्दान्तरत्वं निरस्यति। तदेवं यस्मादेतन्न शब्दान्तरं बहुव्रीहिः कार्यी तदेकदेशित्वं च समासान्तस्य, तस्माद् यदापि समासान्तः क्रियते तदापि पक्षे तस्यान्तोदात्तत्वं भवत्येव।

**कल्याणमूर्धेति**। कल्याणशब्दः 'नब्विषयस्य' इत्याद्युदात्तः। अत्र पूर्वपदप्रकृतिस्वर एव—**द्वयोर्मूर्धा द्विमूर्धेति**। अनेन नित्यमेव समासान्तोदात्तत्वमाह ॥''

**अक्रान्तादिति किम् ? चक्रसक्थः । षचश्चित्त्वान्नित्यमन्तोदात्तत्वं भवति ॥**

**२८६२. परादिश्छन्दसि बहुलम् ॥ १९९ ॥ ( ३९३३ )**

**छन्दसि विषये परादिरुदात्तो भवति बहुलम् । परशब्देनात्र सक्थशब्द एव गृह्यते । अञ्जिसक्थमालभेत । त्वाष्ट्रौ लोमशसक्थौ' ( तै० सं० ५.५.२३.१ ) । ऋजुबाहुः । वाक्पतिः । चित्पतिः ।**

**परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।**
**पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः[1] ॥ ( म० भा० )**

**न्यासः**

**सक्थं चाक्रान्तात् ॥ सक्थमितीति ।** 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इत्यनेन षच् समासान्तो यस्य स सक्थिशब्दोऽत्र गृह्यते । **अक्रान्तादिति ।** क्रशब्दोऽन्तो यस्य स क्रान्तः, न क्रान्तोऽक्रान्तः । **गौरसक्थ इति ।** गौरशब्दः प्रज्ञाद्यणन्तत्वादन्तोदात्तः । **श्लक्ष्णसक्थ इति ।** 'कृत्यशूभ्यां क्स्नः' इति प्रकृते 'श्लिषेरच्चोपधायाः' इति क्स्नप्रत्ययान्तः श्लक्ष्णशब्दः । तेनान्तोदात्तः ।

**चक्रसक्थ इति ।** 'करोतेः किन् द्वे च' इति चक्रशब्द आद्युदात्तः ॥ १९८ ॥

**परादिश्छन्दसि बहुलम् ॥ परशब्देनात्र सक्थशब्द एव गृह्यत इति ।** प्रत्यासत्तेः स हि पूर्वसूत्रे सन्निहितत्वात् प्रत्यासन्नः । यद्येवम्, परशब्दग्रहणमनर्थकम्, सक्थशब्द एव ह्यत्रानुवर्त्तिष्यते ? नैतदस्ति; बहुव्रीहिग्रहणमप्यत्रानुवर्त्तत इति तस्याप्याद्युदात्तत्वमाशङ्क्येत । **अञ्जिसक्थमिति ।** अञ्जिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । अथाप्यञ्जशब्दान् मत्वर्थे इनिः क्रियते, एवमप्यन्तोदात्त एव । **लोमशसक्थमिति ।** 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इति शप्रत्ययान्तत्वाल्लोमशशब्दोऽन्तोदात्तः । **ऋजुबाहुरिति ।** 'कुर्भ्रश्च' इत्यधिकृत्य 'अर्जिदशिकम्यमिपशिबाधामृजिपसितुग्धुग्दीर्घहकाराश्च' इति कुप्रत्ययान्तौ ऋजुबाहुशब्दौ । तेनान्तोदात्तौ । **वाक्पतिश्चित्पतिरिति ।** षष्ठीसमासावेतौ । अत्रोत्तरपदमाद्युदात्तं भवति; बहुलग्रहणात् । विभाषाग्रहणे हि प्रकृते बहुलग्रहणेन यत् सिध्यति तद्दर्शनार्थमुपन्यस्तः ।

**व्यत्ययो बहुलं तत इति ।** यत एवं बहुलग्रहणेनानेन कार्यं सिध्यति, तेन व्यत्ययो बहुलं भवति । ननु च पूर्वमेव स्वराणां व्यत्ययो विहितः ? सत्यमेतत्; तस्यैव तु प्रपञ्चोऽयम् । **परादिरुदाहृत इति ।**

**पदमञ्जरी**

**षचश्चित्त्वादिति ।** एतेन चित्स्वरस्यायमपवादः, प्राप्तविभाषेयमिमिति दर्शयति ॥ १९८ ॥

**परादिश्छन्दसि बहुलम् ॥ परादिरिति । परशब्देनात्र सक्थशब्द एव गृह्यत इति ।** तस्यैव पूर्वसूत्रे सन्निहितत्वात् । यद्येवम्, परग्रहणमनर्थकम्, प्रकृतो हि सक्थशब्दोऽनुवर्तिष्यते ? नैतदस्ति; बहुव्रीहेरपि प्रकृतस्यानुवृत्तिः स्यात्, तस्याद्युदात्तत्वं शङ्क्येत, विभाषाग्रहणे प्रकृते बहुलग्रहणस्य प्रयोजनमन्यदपि यथा स्यादिति ।

**भावबोधिनी**

क्रान्त से परे न हो—इसका क्या फल है ? चक्रसक्थः । [ यहाँ 'क्र' से परे ही सक्थ है । अतः यह सूत्र नहीं लगता है । ] षच् समासान्त प्रत्यय चित् है अतः नित्य अन्तोदात्तत्व होता है । [ अन्यत्र विकल्प से अन्तोदात्त और पक्ष में पूर्वपद का प्रकृतिस्वर होता है । ] ॥ १९८ ॥

वेद-विषय में परादि = सक्थादि बहुल रूप से उदात्त होता है । यहाँ 'पर' शब्द से 'सक्थ' शब्द ही लिया जाता है । [ इसी का आदि उदात्त होता है । ] उदा०—अञ्जिसक्थम् आलभेत । त्वाष्ट्रौ लोमशसक्थौ । [ परादि = सक्थादि से अन्य उदा०—] ऋजुबाहुः । वाक्पतिः । चित्पतिः ।

---

१. भाष्ये तु—'व्यत्ययो बहुलं स्मृतः' इति हि श्लोकस्य चरमः पादः । तत्र 'बहुलग्रहणलभ्यः स्वरव्यत्ययः' इति कैयटः ।

**परादिरुदाहृतः ।**

**परान्तश्च—❀ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम् ❀ ( म० भा० ) । त्रिबन्धुरे'ण त्रिवृता रथे'न त्रिचक्रेण ( ऋ० १.११८.२ ) ।**

**पूर्वान्तः—❀ पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसंख्यानम् ❀ । मरुद्वृद्धः ।**

**पूर्वादिः—❀ पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् । ❀ 'दिवो'दासाय सामगाय**

**न्यासः**

वाक्पतिश्चित्पतिरिति । अत्र च परग्रहणेनोत्तरपदमुक्तम् ।

**अन्तोदात्तप्रकरण इति ।** 'अन्तः', 'थाथघञ्क्ताजबित्रकाणाम्' इत्यादौ । **पूर्वपदान्तोदात्तप्रकरण इति ।** 'अन्तः', 'सर्वं गुणकार्त्स्न्ये' इत्यादौ ।

**पूर्वपदाद्युदात्तप्रकरण इति ।** आदिरुदात्तः—'सप्तमीहारिणौ धर्म्येऽहरणे' इत्यादौ । **एवमादि सर्वं संगृहीतं भवतीति । बहुलग्रहणेन ।** यतस्तेन विभाषाग्रहणे प्रकृते बहुलग्रहणं कृतमित्यभिप्रायः । त्रिचक्रादीनां पूर्वमेव पूर्वोत्तरपदस्वर उक्त इति पुनरिह नोच्यते ॥ १९९ ॥

**पदमञ्जरी**

**ऋजुबाहुरिति ।** बहुव्रीहिः । **वाक्पतिश्चित्पतिरिति ।** षष्ठीसमासौ । अत्र भाषाविषये 'पत्यावैश्वर्ये' इत्यस्य 'न भूवाक्चिद्दिधिषु' इति प्रतिषेधे समासान्तोदात्तत्वं भवति ।

बहुलग्रहणसिद्धमर्थं श्लोकेन दर्शयति—**परादिश्च परान्तश्चेति ।** पूर्वपरशब्दाभ्यां पूर्वोत्तरपदयोर्ग्रहणम् । यत एवं परादिप्रभृतिरुदात्तश्छन्दसि दृश्यते, ततो हेतोर्बहुलं स्वरव्यत्यय उक्तः । स्वरव्यत्ययार्थं बहुलग्रहणं कृतमित्यर्थः ॥ १९९ ॥

**भावबोधिनी**

परादि, परान्त, और पूर्वान्त उदात्त देखा जाता है । और पूर्वादि भी उदात्त देखे जाते हैं इसलिए व्यत्यय बहुलरूप से ( अनेक प्रकार का ) होता है । ( श्लोकवार्त्तिक है । )

( १ ) परादि के उदाहरण दिये जा चुके हैं ।

( २ ) परान्त—❀ अन्तोदात्त के प्रकरण में वेदविषय में त्रिचक्र आदि का उपसंख्यान करना चाहिए । ❀ त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण । [ यहाँ तीनों में अन्त उदात्त होता है । ]

( ३ ) पूर्वान्त— ❀ पूर्वपद के अन्तोदात्त-प्रकरण में वेदविषय में मरुद्वृद्ध आदि का उपसंख्यान करना चाहिए । ❀ उदा०—मरुद्वृद्धः । [ मरुद् पूर्वपद का अन्तोदात्त होता है । ]

( ४ ) पूर्वादि—❀ पूर्वपद के आद्युदात्त-प्रकरण में वेदविषय में दिवोदास आदि का उपसंख्यान करना चाहिए । ❀ उदा०—'दिवोदासाय सामगाय ते' । इस प्रकार के सभी लक्ष्य संगृहीत हो जाते हैं ।

**विमर्श**—पाणिनि ने यहाँ तक स्वरसम्बन्धी अनेक नियम प्रस्तुत किये और आगे भी करेंगे । परन्तु वैदिक लक्ष्यों में सभी का संकलन करना अत्यन्त कठिन है । अतः उणादि प्रत्ययों के समान यहाँ भी विपुलता देखकर 'परादिश्च बहुलम्' लिख दिया । वार्त्तिककार ने बहुल की व्याख्या करने के लिए उक्त वार्त्तिक लिखा है । इसका आशय यही है कि वैदिक शब्दों में लक्ष्यानुसार उत्तरपद का आदि या अन्त उदात्त समझ लेना चाहिए । इसीलिये प्रस्तुत सूत्रवार्त्तिक पर कैयट ने

**ते' इत्येवमादि सर्वं संगृहीतं भवति[1] ॥**

**॥ इति श्रीवामनविरचितायां काशिकावृत्तौ षष्ठाध्यायस्य द्वितीयः पादः ॥ २ ॥**

——:०:——

**न्यासः**

**॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां षष्ठस्याध्यायस्य द्वितीयः पादः ॥**

——:०:——

**पदमञ्जरी**

**॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां षष्ठस्याध्यायस्य द्वितीयः पादः ॥**

——:०:——

**भावबोधिनी**

लिखा है— '**व्यत्ययो बहुलं स्मृतः** इति । बहुलग्रहणलभ्यः स्वरव्यत्यय-इत्यर्थः ।" उद्द्योतकार नागेश ने लिखा है—"**स्वर-व्यत्यय इति** । स एव वार्त्तिककृता दर्शित इत्यर्थः" ॥ १९९ ॥

**॥ इस प्रकार श्री वामन-विरचित काशिकावृत्ति में षष्ठ-अध्याय का द्वितीयपाद समाप्त हुआ ॥**

**॥ 'इस प्रकार जयशङ्करलाल त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति में षष्ठ-अध्याय का द्वितीय पाद समाप्त हुआ ॥**

दुःशकं स्वर-विज्ञानं योजनञ्चातिदुष्करम् । तस्माद्दोषा न द्रष्टव्या ग्राह्यं हितकरं च यत् ॥ १ ॥
कृपया विश्वनाथस्य गुरु-पितृ-प्रसादतः । षष्ठे द्वितीयं व्याचष्ट त्रिपाठी जयशङ्करः ॥ २ ॥

——:०:——

---

१. अस्य सूत्रस्यान्यमातृकायामिदमपि व्याख्यानमुपलभ्यते—

"**परादिश्छन्दसि बहुलम्** ॥ **परशब्देनात्र सक्थशब्द एव गृह्यत इति** । प्रत्यासत्तेः । स हि पूर्वसूत्रे सन्निहितत्वाद् प्रत्यासन्नः । यद्येवम्, परशब्दग्रहणमनर्थकम्, सक्थशब्द एव ह्यत्रानुवर्तिष्यते ? नैतदस्ति; अत्र यथा सक्थशब्दस्तथा बहुव्रीहिरपि प्रकृतः । एवं बहुव्रीहेरप्यनुवृत्तिः स्यात् । ततस्तस्याद्युदात्तत्वं शङ्कनीयं स्यात् । ननु विभाषाग्रहणमत्र प्रकृतम्, कथं पुनर्बहुलं गृह्यते ? तस्य प्रयोजनमन्यदपि यथा स्यादिति । अतः पदान्तरे समासान्तरे च परादिरुदात्तो भवतीति दर्शयति—**ऋजुबाहुरित्यादि** । ऋजुबाहुरिति बहुव्रीहिः । **वाक्पतिश्चित्पतिरिति** षष्ठीसमासौ ।

एवञ्च बहुलग्रहणसिद्धमर्थं **परादिश्च परान्तश्चेत्यादि**श्लोकेन दर्शयन्नाह—**व्यत्ययो बहुलं तत इति** । यत एवं बहुलग्रहणात् परादौ परान्तादौ च स्वरव्यत्ययो भवति । ननु पूर्वमेव स्वराणां व्यत्ययो विहितः ? सत्यमेतत्; भाषाविषये तु 'पत्यावैश्वर्ये' इत्यस्य 'न भूवाक्चिद्दिधिषु' इति प्रतिषेधे समासान्तोदात्तत्वं भवति । अत्र तु बहुलग्रहणेन व्यत्यय इति । **वाक्पतिश्चित्पतिरिति** । अत्र परग्रहणेन सक्थान्तमुदाहरणम् । बहुलग्रहणेनान्यत् । एवञ्च परान्त उदात्तः—'थाथघञ्क्ताजबित्रकाणाम्' इत्यादौ । पूर्वपदमन्तोदात्तम्—'सर्वं गुणकार्त्स्न्ये' इत्यादौ । पूर्वपदाद्युदात्तत्वम्—'**सप्तमीहारिणौ धर्म्येऽहरणे**' इत्यादौ । **एवमादि सर्वं संगृहीतं भवति** । बहुलग्रहणेन । विभाषा-ग्रहणे प्रकृते स्वरव्यत्ययार्थं बहुलग्रहणं कृतमित्यभिप्रायः । त्रिचक्रादीनां बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वर उक्त इति, पुनरिह 'छन्दसि बहुलम्' इति स्वरव्यत्ययस्तेषामन्तोदात्तत्वप्रदर्शनार्थामुक्तः ॥"

# पाणिनीय-सूत्र-सूची

# शुद्धाशुद्धपत्रम्

| पृ० | पं० | अशुद्धः | शुद्धः |
|---|---|---|---|
| ७ | १९ | अत्त | अत्र |
| ९ | २१ | सिषेचति | सिषेचेति |
| १८ | टि० | मपादं | मपरं |
| २४ | १६ | अनभ्यास्य | अनभ्यासस्य |
| २८ | २४ | योडनादि० | योऽनादि० |
| ३४ | ६ | अतिकारीषगन्ध्यात्र | अतिकारीषगन्ध्यापुत्र |
| ३८ | ८ | युक्तयुक्तम् | युक्तमुक्तम् |
| ४२ | २ | रा० १८ | वा० १८ |
| ४५ | ६ | ०णाप्येद् | ०णाप्येतद् |
| ५१ | १४ | सोऽमि० | सोऽयमि० |
| ५५ | १५ | प्रयोज्यके | प्रयोजके |
| ६० | ९ | 'हः सम्प्र० | 'ह्वः सम्प्र० |
| ७१ | १६ | काङ्यचो | काङ्युचो |
| ७२ | ८ | प्रा व | प्रागेव |
| ७७ | ७ | दैवादिस्यायं | दैवादिकस्यायं |
| ८३ | २२ | अण् द्रप्सा | यण्—द्रप्सा |
| ८८ | १० | उदान् | उद्न |
| ८८ | १८ | ( पादु + ता = आ ) | ( पाद + टा = आ ) |
| ९० | ३ | यदि वर्ण० | यति वर्ण० |
| ९१ | १० | तेषां तर्हि | केषां तर्हि |
| ९३ | ५ | क्यजान्तः | क्यजाद्यन्तः |
| ९४ | ८ | ०नाधृनृवर्जम्[1] | नाधृनृ[1] वर्जम् |
| ९४ | १० | न नये | नृ नये |
| ९४ | टि० | चास्योपलब्ध्या | च नृ इत्यस्योपलब्ध्या |
| ९७ | २० | देदिविति | देदिवीति |
| ९९ | १० | सम्भवाव्यभि० | सम्भवव्यभि० |

| पृ० | पं० | अशुद्धः | शुद्धः |
|---|---|---|---|
| १०३ | ८ | पदत्वादम्भावे | परत्वादम्भावे |
| १०६ | २३ | छकारे ऽकार | छकारेऽकार |
| १११ | १८ | पदविविधिर्मा | पदविधिर्मा |
| ११८ | १७ | प्रकृत्यश्च | प्रकृत्यर्थश्च |
| १२० | २४ | सप्तम्याःषष्ठी | सप्तम्याः षष्ठीं |
| १२७ | १६ | साद्दयम् | सादृश्यम् |
| १३३ | २२ | ईरिग्रहम० | ईरिग्रहणम० |
| १३५ | ९ | निष्ठाक्तिन्नन्तौ | निष्ठाक्तिन्नन्तौ |
| १३५ | २२ | ऋण और देश | ऋण और दश |
| १३८ | १८ | ख्यापिपियितुं | ख्यापयितुं |
| १३९ | १५ | सशा | शसा |
| १४२ | २८ | [ घुण ] | [ गुण ] |
| १४४ | ११ | आप | आह |
| १४४ | २९ | अपच/अपचे | अपचे/अयजे |
| १५७ | २४ | [ खट्+औ ] | [ खट्वा+औ ] |
| १५८ | १२ | वाराहीरिति | वाराहीति |
| १५९ | ६ | इति चेहानु० | इति नेहानु० |
| १६३ | १५ | तत्सम्बन्धिन्यतिः | तत्सम्बन्धिन्यति; |
| १६५ | १३ | प्रयोजमिति | प्रयोजनमिति |
| १७७ | ६ | इन्द्रशब्दस्थावयवः | इन्द्रशब्दस्यावयवः |
| १८५ | ६ | तस्यव | तस्यैव |
| १८५ | १२ | तपकरणेन | तपरकरणेन |
| १९३ | २८ | सस्श्चकरुः | सश्चस्करुः |
| १९८ | १५ | 'सम्प्ररिभ्यां | 'सम्परिभ्यां |
| २११ | ९ | कास्करो | कारस्करो |
| २१५ | ६ | पदभिहाभिमतम् | पदमिहाभिमतम् |
| २१६ | ९ | शतिशिष्टत्वमेव | सतिशिष्टत्वमेव |
| २१९ | १९ | कृतेशेषु | कृतेषु |
| २१९ | २ | तेनैन | तेनैव |
| २२२ | ५ | पदमेकरवर्जम् | पदमेकवर्जम् |

| पृ० | पं० | अशुद्धः | शुद्धः |
|---|---|---|---|
| २३४ | ६ | भविष्ययीत्यत | भविष्यतीत्यत |
| २४६ | १७ | तस्यान्नलोप० | तस्मान्नलोप० |
| २४८ | ५ | मभिञ्जतीनाम् | अभिभञ्जतीनाम् |
| २५५ | १३ | कार्यंमदिश्यते | कार्यमतिदिश्यते |
| २६१ | ३ | जिह्वेति | जिह्लेति |
| २६१ | ४ | ण्लु० | श्लुः |
| २६१ | १४ | परत्वाकार० | परत्वादकार० |
| २६३ | ३ | आम्रेडिताब्दनुत्तत्वे | आम्रेडितानुदात्तत्वे |
| २६४ | ९ | पुनरकर्मकर्ता | पुनः कर्मकर्ता ( उचितम् ) |
| २७१ | २० | इहाद्याक्तः | इहाद्यात्तः |
| २७३ | ८ | क्ति इति | रिक्त इति |
| २८१ | ३ | मीनवर्ती | मुनीवती |
| २८३ | १ | हलन्तेष्वयन्तोदात्तत्वं | हलन्तेष्वप्यन्तोदात्तत्वं |
| २८७ | ६ | न्यास की प्रथमपंक्ति "मनुष्य—' इत्यादि को अन्त में ( छठीं पंक्ति ) समझें। | |
| २९० | १५ | इत्य कुमुद्वान् | इत्यत्र कुमुद्वान् |
| २९१ | १३ | भवतीत्येदर्थ | भवतीत्येतदर्थ० |
| ३०५ | ६ | राजप्रयिम् | राजप्रियम् |
| ३०६ | ८ | ८ वीं पंक्ति मूल की नहीं है, उसे न्यास की प्रथम पंक्ति समझें। | |
| ३०८ | ११ | परमतूर्वः | परमपूर्वः |
| ३०८ | १५ | प्रत्युदारणम् | प्रत्युदाहरणम् |
| ३११ | २० | [ · · · स्पृश्+त | [ · · · स्पश्+क्त |
| ३१२ | ११ | श्रज्यावमकन्या० | श्रज्यावमकन्या० |
| ३२१ | ११ | प्रकृत्यादिना | इत्यादिना |
| ३२४ | २१ | समास ये | समास में |
| ३२५ | १२ | त्वाचार्योप० | न त्वाचार्योप० |
| ३२७ | १० | अविवक्षित्वात् | अविवक्षितत्वात् |
| ३३० | १६ | "इङश्च" | "इञश्च" |
| ३३९ | ८ | "मनोर्धातावञ्यतौ" | मनोर्जातावञ्यतौ |
| ३४५ | २२ | प्रत्यान्त | प्रत्ययान्त |

| पृ० | पं० | अशुद्धः | शुद्धः |
|---|---|---|---|
| ३५४ | २० | ाजार्ह | राजार्ह |
| ३६२ | २६ | शमशनम् | समशनम् |
| ३७३ | १७ | घञर्ये | घञर्थे |
| ३८४ | १४ | सम्बन्धिशब्दत्यदु० | सम्बन्धिशब्दत्वादु० |
| ३८४ | १९ | बहुवचनविषययात् | बहुवचनविषयात् |
| ३८८ | २२ | 'च्छ्वोः झुठ्' | 'च्छ्वोः शूठ्' |
| ३९५ | टि० | दृश्येते | न दृश्येते |
| ३९५ | ५, २८ | प्रपूर्ति | प्रतूर्ति |
| ४०१ | २० | निपातनाम ल्लस्य | निपातनाल्लस्य |
| ४१२ | १५ | सर्वंत्रैवावात्र | सर्वत्रैवात्र |
| ४१४ | २० | सुदुत्पत्तेः | सुबुत्पत्तेः |
| ४१७ | २२ | अस्यादेव | अस्मादेव |
| ४१८ | ९ | यहि | यदि |
| ४२४ | १४ | बाधनार्थमृम् | बाधनार्थम् |
| ४२५ | ३० | खट्कारूढः | खट्वारूढः |
| ४२६ | ११ | सक्तुष्वेवेतीत्येव. | सक्तुष्वेवेतीत्येव० |
| ४२८ | १७ | ह्वेवकारम् | ह्येवकारम् |
| ४३९ | १९ | आक्रोशे च अपचोऽयम् । | आक्रोशे च ॥ अपचोऽयम् |
| ४४१ | २२ | अनङ्गमेजयः | —अननङ्गमेजयः |
| ४४२ | टि० | बहुवचन्तान्त० | बहुवचनान्त० |
| ४४४ | १६ | उपात्तरयो० | उपात्तयो० |
| ४४५ | ९ | वृकाजनः | वृकाजिनः |
| ४५६ | ७ | दर्शयतियाह | दर्शयितुमाह |
| ४६९ | ११ | ध्रत्ययवसित० | प्रत्यवसित० |
| ४७० | ५ | द्विमूर्धा, द्विमूर्षा | द्विमूर्धा द्विमूर्धा । |
| ४७१ | ९ | समान्तः | समासान्तः |